THE

# KASHI SANSKRIT SERIES

*( HARIDĀS SANSKRIT GRANTHAMĀLĀ )*

## NO. 110.

( Yoga S'āstra Section, No. 3. )




THE

# Sāmga Yogadars'ana

Or

# YOGA DARS'ANA OF PATAÑJALI

## WITH THE SCHOLIUM OF VYĀSA

and

THE COMMENTARIES—

**TATTVA VAIS'ĀRDI, PĀTAÑJALA RAHASYA**

**YOGAVĀRTIKA AND BHĀSVATĪ**

*of*

*Vācaspati Mis'ra, Rāghavānanda Sarasvatī,*
*Vijñāna Bhikṣu & Hariharānanda Āraṇya.*

*Edited with Introduction, Notes, Index, Appendices etc.,*

By

DĀRS'ANIK SĀRVABHAUMA
SAHITYADARS'ANĀDYĀCHĀRYA TARKARATNA NYĀYARATNA

**S'RI GOSVĀMĪ DĀMODARA S'ASTRĪ**



BENARES,

**JAI KRISHNADAS-HARIDAS GUPTA**

*The Chowkhamba Sanskrit Series Office.*

1935.

हरिदाससंस्कृतग्रन्थमालासमाख्य—
काशीसंस्कृतसीरिजपुस्तकमालायाः—
११०
योगविभागे (३) तृतीयं पुष्पम्।

॥ श्रीः ॥

# साङ्गं योगदर्शनम्

अर्थात्—

## पातञ्जलदर्शनम्

भगवत्पतञ्जलिविरचितं राघवानन्दसरस्वतीकृत "पातञ्जलरहस्या"ख्य-
टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रविरचितया
"तत्त्ववैशारद्या" व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित-
"योगवार्त्तिक" समुल्लासितेन सांख्ययोगाचार्यश्री
हरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन
भगवच्छ्रीकृष्णद्वैपायनोपज्ञ "सांख्यप्रवचन" भाष्येणोद्द्योतितं प्रदेश-
विशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शना-
द्याचार्य्यतर्करत्नन्यायरत्नगोस्वामिदामोदरशास्त्रिणा
टिप्पन्याऽलंकृत्य संशोध्य सम्पादितम्,

भास्वतीकृतः सटीकयोगकारिकाभिः सानुक्रमाभ्यां योगसूत्रपाठ-
पञ्चशिखादिसूत्रपाठाभ्यां पारिभाषिकशब्दविषयसूचिभ्यां-
शुद्धिपत्रैर्भूमिकया च संयोजितम्।

प्रकाशकः—
जयकृष्णदास हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस,
बनारस।
१९३५

॥ श्रीः ॥

पातञ्जलप्रभाऽऽख्या—

# भूमिका—

श्रीमद्धनुमद्भीमप्रमध्वान्तर्यामिरामकृष्णवेदव्यासात्मकसच्चिदानन्दविग्रह-
पूर्णतमाह्लादिनीशक्त्यभिन्नीकृतस्वरूपप्रेमावतार-
भगवच्छ्रीगौरकृष्णः शरणम् ।

पतञ्जलिमुनेरुक्तिः काऽप्यपूर्वा जयत्यसौ ।
पुम्प्रकृत्योर्वियोगोऽपि योग इत्युच्यते यया ॥

इह किल चेतनाचेतनात्मकत्वेन परिचीयमाने वैरिञ्चे प्रपञ्चे चेतनस्यै-ष्टावेप्सयाऽनिष्टनिरसिसिषया च साक्षात्परम्परासाधारण्येनाचेतनप्रवर्त्त-कताऽऽजानिकतयाऽऽनुभविकीत्यत्र न कस्यापि विप्रतिपत्तिः,

किन्तु चेतनप्रवृत्तेः स्वार्थकारुण्यान्यतरव्याप्यत्वनियमेन प्रवृत्तिं प्रति कारणत्वेन क्लृप्तज्ञानस्येष्टसाधनत्वविषयकतायामप्यविवादादावश्यके प्रव-र्त्तकज्ञानीयविषयताऽऽपन्नेष्टस्य प्रवर्त्तमानप्रयोजनस्वरूपत्वे फलस्य चेच्छा-ऽन्तरानधीनेच्छाविषयत्वेच्छाऽन्तराधीनेच्छाविषयत्वाभ्यां मुख्यगौणभेदतो-द्वैविध्यात् सुखतत्साधनरूपस्य पुनरपि नित्यत्वानित्यत्वाभ्यां मुख्यस्य दृष्ट-त्वादृष्टत्वाभ्यां च गौणस्य प्रत्येकं द्विरूपतया तत्रादृष्टगौणस्य धर्मत्वेन दृष्ट-गौणस्यार्थत्वेनानित्यमुख्यस्य कामत्वेन नित्यमुख्यस्य मोक्षत्वेन व्यवहा-राद् धर्मार्थकाममोक्षाख्यपुमर्थत्वेन चातुर्विध्यं पर्यवस्यति,

यद्यपि नितान्तसम्पाद्यसर्वसमन्वयसिद्धान्तदिशोक्तैव सरणिः श्रेयसित-मेति निर्विचिकित्सं ; तथाऽप्यान्तरालिकप्रस्थानभेदभिन्नप्रतितन्त्रसिद्धान्ता-नुयायिनामस्ति मोक्षस्वरूपमवलम्ब्य महान् मतभेदः—

तथा हि-मोक्षाध्वनीनानामस्ति तावत् सार्थद्वयी केचिन्मोक्षं भावा-त्मकमाचक्षते, परे त्वेनमभावरूपमाहुः,

प्रथमेष्वपि केचनाखण्डसच्चिदानन्दात्मकब्रह्मणि सायुज्यमेवायमिति सङ्गिरन्ते, परे तु मुमुक्षोः स्वरूपघटकोऽप्यानन्दोऽनादिकालादनभिव्यक्तो-ऽपि स्वाभिव्यञ्जकनिबन्धनानन्तकालावच्छिन्नाभिव्यक्तिरूप एवैष इति वद-न्ति, अपरे पुनरप्राकृतसच्चिदानन्तविग्रहस्य भगवतोऽनन्तसमयस्थायिसा-मीप्यादिकमसाविति सिद्धान्तयन्ति,

एतास्वेव तिसृषु विधासु तद्भावत्वमभिप्रयत्स्वन्तर्भवन्तोऽन्येऽपि गतार्थाः, चरमेषु चेतरे किलात्मत्वेनोपगतस्य कायस्य करणनिकरस्य चेतसो-

ऽन्यस्य वा कस्य चनोच्छेद एव स इति मन्यन्ते, तादृशा एवावरणराहित्य-मेनमास्थिषत, तद्देशीयाः पुनर्ज्ञानात्मोच्छेदं तत्स्वरूपं रोचयन्ते,

एवमभावेष्वपि यावद्दुःखप्रागभावमेके, तादृशदुःखात्यन्ताभावमन्ये, निखिलदुःखध्वंसरूपं च मोक्षं बहवः प्रतिजानते,

परे पुनः—

"नासतो विद्यते भावो नाभावो विद्यते सत-"

इति सिद्धान्तमनुसृत्य ; ध्वंसप्रागभावावनुपगम्य ; तत्पदाभिषिक्ते अ-नागतत्वातीतत्वे कृत्वा दुःखमात्रस्य निवृत्तितिरोभावपर्य्यायकमतीतत्वरूपं-मोक्षं व्यवस्थापयन्तीमे हि कापिलाः पातञ्जलाश्च,

एवमदसीयामभावात्मकतां कथयतामपि सन्ति तादृशोऽवान्तरभेदा-येऽमीष्वेव स्वन्तर्भावा नातस्ते शृङ्गग्राहितयोपादर्शिषत,

इत्थमेतानि सर्वाण्येव मतानि "यत्परः शब्दः स शब्दार्थ" इति नयमुप-जीवन्ति समञ्जसतामेव जिहते, कथमन्यथाऽधिगतार्थाधिगमयितृत्वेन प्रा-माण्यपदवीतश्च्यवमाजानात्मनो दधीरन्निति नातीव तिरोहितमभिरू-परूपाणां—

परन्तु शेषसमन्वयसोपानसमारोहतोऽर्वाग्दिशा प्रतिशास्त्रात्मकमहा-वाक्यार्थबोधेऽपि तादृशसमारुरुक्षुर्विश्रमयितव्य एवेति सर्वेषां प्रातिस्वि-कप्रस्थानानुसारिणी सरणिरपि नासङ्गच्छमानाऽस्ति,

यथा तु स्वप्रतिपिपादयिषितव्यसंमुखीनत्वेऽपि व्याकरणमीमांसा-ऽऽन्वीक्षिकीशास्त्राणां पदवाक्यप्रमाणतत्त्वनिर्णायकत्वेन परेषामुपजीव्यता गृहप्रकाशितदीपस्य रथ्यायायिनामिव तथैव पातञ्जलविद्याऽपि कर्मज्ञानभ-क्तिपथिकानां निदिध्यासनसौकर्य्याढ्यंकरणी भवन्ती चैतन्यस्वरूपावस्था-पनरूपमुख्यकैवल्यं सम्पादयित्री निरन्तरध्यानधाराऽऽत्मके निदिध्यासनरूपे स्वविषयेऽपि जागरूका विजयते,

अयं भावः—वस्तुमात्रेऽपि लोकानां भवन्ति त्रयो दोषाः-असम्भावना विपरीतभावना पारोक्ष्यं चेति, सुतरां दुःखात्यन्तनिवृत्तये प्रयतमानेन त-दुपायमन्विच्छता "तरति शोकमात्मवित्" "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाये"त्यादिश्रुतिभ्यो भगवतीभ्य आत्ममात्रज्ञानं ता-दृशमुपायं श्रुत्वाऽपि तदितरदेव लोकसिद्धाहंप्रत्ययास्पदं शरीरादिकं-तत्त्वेन प्रतिपद्य भ्रमकवलितो विविधोपपत्तिभिस्तता निवृत्तोऽपि न सर्वथा-ऽलातचक्रन्यायेनात्मयाथार्थ्यमवगन्तुं शक्नोति, असाक्षाद्भूतश्चात्मा नैव स्वविषयकापरोक्षविपर्य्ययनिरसनाय प्रभवेत्, प्रत्यक्षभ्रमे दुर्बलाप्रत्यक्षप्र-माभिरप्रामाण्यस्य विधातुमशक्यत्वाद्,

एवं च तथाविधपारोक्ष्यनिराकृतयेऽपेक्षणीयेऽवितथसाक्षात्कारे निदि-

भ्यासनमुपयुज्यते, आम्नातं च—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" अर्थात् श्रवणमनननिदिध्यासनैरात्मसाक्षात्कारात्मकं दर्शनं भावयेत् , कथमित्याकाङ्क्षायामभियुक्तैरुक्तं—

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः" ॥

तथा च श्रवणेनासम्भावनां मननेन विपरीतभावनां निदिध्यासनेन पारोक्ष्यं विधूयात्मनि साक्षात्कृते तदज्ञाननिबन्धनदुःखस्यात्यन्तिको निवृत्तिर्मुक्तिरप्रत्यूहा,

इत्थमेव मोक्षस्याभावरूपतावादिभिर्बहुभिर्मन्यते, पातञ्जलं तु कैवल्यंपरमपुमर्थव्यपदेश्यताभागितोऽपि परस्तात् ; यत्र ह्यात्मसाक्षात्कृतिरूपाऽपि वृत्तिर्मानसी गुणत्वेन हेयैव ; सा किलासम्प्रज्ञातसमाध्यवस्थाऽत्रैवात्मनः स्वरूपमात्रावस्थितिरात्यन्तिकी,

एवं स्थितौ—यत्तु केनापि काश्यां मुद्रितचरस्य सभाष्यादिकपातञ्जलदर्शनभूमिकायामद्वैतसिद्धान्तमुक्त्या सममेतदीयाया मुक्तेरभेदसुसूचयिषयाऽदभ्रमतनि प्रयासः सोऽपसिद्धान्त एव प्रकृतदर्शनमपेक्ष्य,

यद्यपि शाङ्करदर्शनेऽपि साक्षात्कारस्याविद्यिकतया हेयतैव ; तथाऽपि तत्र ब्रह्माद्वैतमिह तु तादृशता नास्ति ब्रह्मत्वेन परैः प्रसेधितस्य,

यस्त्वस्ति षड्विंशः पदार्थ ईश्वरस्तत्र च सर्वज्ञताऽनुकम्पताऽऽदयो वास्तवाः शाश्वतिका अप्राकृतसत्त्वरूपाः सन्ति,

न त्वेवमद्वैतप्रस्थाने; यत्रेश्वरत्वमपि कल्पितमत एव सम्भावितबाध्यत्वं,-
किं चात्रेश्वरेण न सायुज्यं शेषपुमर्थो न वा सम्भवत्यपि तत् ; केवलं तदीयाभिध्यानस्यापि योगसम्पादकत्वमित्येव,

एवं तत्रैव भूमिकायां प्रकृतयोगशब्दस्य पर्यायतां संयोगशब्दे कल्पयित्वा स्वाभीष्टसाधनाय यत् प्रयतितं तदपि शास्त्रविरुद्धत्वादुपेक्षणीयमेव,

यतोऽत्रत्यो योगशब्दः समाध्यर्थकयुज्धातुनिष्पन्नः,

"संयोगो योग इत्युक्तो जीवात्मपरमात्मनोरि"—

त्यादियोगियाज्ञवल्क्यादिवचनघटकयोगशब्दस्य संयोगार्थकयुजिर्धातुनिष्पन्नत्वाद्,

न हि समानानुपूर्वीकत्वेन पर्यायता भवेदपि तु समानशक्यताऽवच्छेदकत्वे सति विभिन्नानुपूर्वीकत्वेन, प्रकृते च समाधित्वं योगशब्दशक्यताऽवच्छेदकं तत्र तु संयोगत्वं तद् ; अतो नानाऽर्थकतैव योगशब्दस्योपगन्तव्या, भिन्नशक्यताऽवच्छेदकत्वे सति समानानुपूर्वीकत्वस्यैव तत्त्वाद् ,

यत्तु-तत्रैव संयोगार्थकयोगपदार्थस्य तदेवार्थमात्रनिर्भासेत्यादिसौत्र-

लक्षणकसमाधेश्च समानत्वमुक्तं तदपि मन्दम्—

"समाधिः समताऽवस्था जीवात्मपरमात्मनोरि"

ति याज्ञवल्क्योक्तसमाधेः सूत्रोक्तसमाधेर्भिन्नत्वेन समाधिपदस्यापि नानाऽर्थतायामविवादात्,

एवं च सर्वथैव भिन्नेऽत्र दर्शने चतुर्षु पादेषु समाहितचित्तस्योपयुक्तं योगं प्रतिपिपादयिषुः प्रथमे पादे शास्त्रकारो योगशास्त्रारम्भं प्रतिज्ञाय योगलक्षणमुदित्वा योगे चितेः स्वरूपस्थितिमन्यदा वृत्तिसारूप्यमभिधाय वृत्तीनां क्लिष्टाक्लिष्टत्वकथनपूर्वकमुद्देशविभागलक्षणानि प्रदर्श्य निरोधोपाययोरभ्यासवैराग्ययोः सलक्षणावान्तरविशेषकथनपुरस्सरं योगविशेषयोः सम्प्रज्ञातासंप्रज्ञातयोः स्वरूपमुक्त्वा तदधिकार्य्यधिकारानुरूपफललाभसमयतारतम्यमुपपाद्य प्रसङ्गादीश्वरं तदीयलक्षणप्रमाणस्वरूपवाचकोपासना निरूप्य ततोऽन्तरायान् तन्निरासकं चित्तप्रसादकांश्च कथयित्वा तदानीं योगिनो योग्यतां सवितर्कानिर्वितर्कासविचारानिर्विचाराः समापत्तीः प्रतिपाद्य तासां सबीजत्वं निर्विचारोत्कर्षफलमृतम्भरां तद्वैशिष्ट्यं तन्निरोधतो निर्बीजसमाधिमाभाष्यैकपञ्चाशता सूत्रैः समाधिनामकमादिमं पादं समापिपत् ।

द्वितीयस्मिन् साधनाख्ये पादे तु क्रियायोगं तत्फलं क्लेशानामुद्देशविभागलक्षणानि प्रदर्श्य तन्निरसनोपायं कर्माशयस्वरूपविपाकफलान्यवगमय्य हेयतद्धेतुदृश्यप्रयोजनानि गदित्वाऽविद्यां सोपायं कैवल्यं च निरूप्य प्रज्ञासाप्तविध्यज्ञानदीप्ती उपवर्ण्य प्रासङ्गिकवितर्ककथनगर्भं सफलकौ यमनियमौ भणित्वा सोपायफलमासनं सविभागोपेयं प्राणायामं च सङ्कीर्त्य सप्रयोजनं प्रत्याहारं लक्षयित्वैनं पादं पञ्चपञ्चाशता सूत्रैर्व्युत्थितचित्तानुगुणमपूरयत् ।

तार्त्तीयीकेऽस्मिन् विभूत्यभिधे च संयमपरिभाषितैकविषयकधारणाध्यानसमाधिसमष्टि लक्षणैः प्रदर्श्य निरोधसमाध्येकाग्रतापरिणामाँश्चेत्तान्निरूप्यातिदिश्य चैनान् भूतेन्द्रियेषु धर्मिस्वभावं परिणामभेदहेतुं चाख्याय ततोऽतीतानागतज्ञानसर्वभूतरुतज्ञानपूर्वजातिज्ञानपरचित्तज्ञानान्तर्धानापरान्तज्ञानमैत्र्यादिबलहस्तिबलादिसूक्ष्मव्यवहितविप्रकृष्टज्ञानं तथा भुवनताराव्यूहज्ञानं क्षुत्पिपासानिवृत्तिस्थैर्य्यसिद्धदर्शनचित्तसंवित्पुरुषज्ञानं च दिव्यानां मानसश्रावणत्वाचादर्शास्वादगन्धानां प्रत्यक्षं परपुरप्रवेशजलकण्टकाद्यसङ्गज्वलनाकाशगमनप्रकाशावरणक्षयभूतजयाणिमादिलाभकायसम्पदिन्द्रियजयप्रधानजयसर्वज्ञत्वानि व्युत्पाद्य विवेकजज्ञानस्य संसारतारकत्वाखिलविषयकत्वं व्यवस्थाप्य कैवल्यावाप्तिमाचक्षाणः पञ्चपञ्चाशता सूत्रैः पादमवासाययत्,

तुरीये चान्तिमे पादे सिद्धीनां पाञ्चविध्यं निगद्य जात्यन्तरपरिणतौ हेतुं दर्शयित्वा नवीनचित्तनिर्माणक्षमतां तेषां प्रवर्त्तकत्वं च प्राक्तनचित्तस्य; सूक्ष्मस्यास्यावासनत्वमुपवर्ण्यानुषङ्गिकं वासनास्वरूपं चोक्त्वा धर्माणां त्रै-

कालिकसत्तामास्थाप्य प्रसङ्गतः सौगतसमयं निराकृत्य चित्तवृत्तीनां सदा ज्ञातत्वं वस्त्वन्तरस्य ज्ञाताज्ञातत्वमाख्याय चित्तसंसृष्टं विविधविचारं विधाय धर्ममेघसमाधिं तत्प्रभावमवबोध्य क्रमस्वरूपं विविच्य शास्त्रमुख्याभिधेयं परमपुरुषार्थं कैवल्यं लक्षयित्वा चतुस्त्रिंशता सूत्रैः पादेन समं शास्त्रमुपसमहार्षीद् भगवान् पतञ्जलिः ।

एवमिह—पातञ्जलसूत्रवैयासिकभाष्यवाचस्पत्यतत्त्ववैशारदीविज्ञानभिक्षुयोगवार्त्तिकराघवानन्दीयपातञ्जलरहस्यहरिहरानन्दारण्यकृतभास्वतीनिबन्धेषु पूर्वेषां चतुर्णां मुमुद्रयिषा काशीस्थविद्याविलासयन्त्रालयाधिपतेश्चिररूढैवासीत् किन्तु तत्त्ववैशारद्याष्टीकात्वेन ख्यापितस्य पातञ्जलरहस्यनामकस्य क्षोदिष्टपुस्तकस्यैकैव प्रतिलिपिरनेकसंस्कृतग्रन्थसञ्जिघृक्षामात्ररसिकेन काशिकेष्वन्यतमाढ्येन बाबूगोविन्ददासगुप्तेन प्रतिपङ्क्ति पञ्चषाशुद्धिसहिता कुतोऽप्यासाद्य मुद्रणाय दत्तोक्ताधिपतेः संग्रहेऽवर्त्ततादभ्रसमयात्,

प्राप्ते च मुद्रणावसरे निर्दिष्टसमष्टेरिदमपि संपिपादयिषुणा प्रकाशकेनानुरोरुध्यमानोऽहं जानन्नप्युक्तपुस्तकस्य नितान्ताकर्मण्यतां तदीयदाक्षिण्यवशंवदतयैनत् समावीविशम्,

भास्वती तु मुद्रणायाधिकाशि तत्कर्त्तृप्रहितशिष्यैः सङ्कतेन प्रकाशकेन योगसम्बद्धतया प्रविविक्षुच्छात्राणामुपचिकीर्षया चात्र समयोजि,

एवमेकत्र षड्निबन्धीं सम्पादयितुमुपक्रममाणमेव मां प्रकाशकः ' क्वचित् क्व चित् परिचिष्कोषितव्यविषये टिप्पन्यपीह भवेन्नूनमहं कृतकृत्यंमन्यः स्यामिति व्यजिज्ञपद्" मयाऽपि तदुदिनमुचितं मन्वानेन साधनपादान्तं तथयितुमयतिः परस्तान्नानाविधान्तरायैर्विदेशयातायातशरीरासुस्थताऽऽदिजातीयैः कथमपि मुद्रणकार्यं समाप्नुयादितिमनीषैवानिशमजागरीदतो नाग्रन्थान्तमटिप्पनयं, यथा वाञ्छितं तथा नीतं च पूर्णतां भगवत्कृपया सकुशलमेतद् महत् कार्य्यम्,

अवशिष्टवक्तव्यमेतद् बहुग्रन्थघटितत्वेनास्य पुस्तकस्य बृहदाकारे सति पठतां पाठयतां परिशीलयतामसुविधा भवेदतोऽनेकग्रन्थानां मुद्रणं सूक्ष्माक्षरैः कृतं किन्तु तेषामतिलघुत्वाद् प्रदिम्नाऽऽशु घृष्टत्वाद् विकृतावयवत्वेन प्रायो रेफानुस्वारेकारैकारौकारादीनामयथात्वनिबन्धनास्तथा मानुष्यकनान्तरीयकानवधानजाश्च त्रुटीरुभेदय कलहंसनिसर्गाः परिडता एकत्र साङ्ख्यागदर्शन.वेक्षणावाप्तसम्मदाः फलेग्रहितामश्नुवीरंस्तदा सर्वेऽपि वयं सम्पादकप्रकाशकादयः सफलश्रमा भवेम; अन्यादृशाशुद्धिज्ञानाय च शेषे शुद्धिपत्रमपि समावेशि ततोऽपि शुद्ध्यशुद्धिविवेकः सुकरो भावी,

ग्रन्थान्ते दिदृक्षुसौकर्य्याय कतिपयपरिशिष्टानि निवेशितानि तेषु चाद्यं भास्वतीकारेण रचिता सरलटीकयाऽन्विता योगकारिका, द्वितीयं पातञ्जल-

सूत्रपाठः, तृतीयं त्विदमाय एवाकाराद्यनुक्रमः, तुरीयं पाञ्चशिखसूत्रम्, एतद्धि सांख्यप्रवचनभाष्ये बहुत्रोद्धृतम्, पञ्चमं चैतदीयाकाराद्यनुक्रमः, षष्ठं च पातञ्जलशास्त्रे समागतानां पारिभाषिकादिशब्दानां सूचना,

इदमीयसम्पादने वस्तिमण्डलाभिजनेन काशीमधिवसता सरयूपारीणभूसुरपङ्क्तिपावनान्वयिना स्नेहास्पदेन मदीयशिष्येण साहित्यशास्त्रिणा श्रीब्रह्मशङ्करशर्ममिश्रेण पुस्तकपाठसंवादप्रभृतिनैकविधव्यापारेण यादृशं साहाय्यकमाचरितं नास्य कतिपयाक्षरलेखमात्रेण व्यक्तता कर्त्तुं सुशका, जगदीश्वरोऽनुकम्पयैनं सर्वपथीनैर्भेवुकैर्युज्यादित्याशिषं वितरन्नेतस्तुष्यति,

विशेषतस्तु धन्यवादसध्रीचीनाशीर्वादार्हो यन्त्रालयाध्यक्षः सुभ्रातृत्रयेण सहितो बाबूश्रीजयकृष्णदासगुप्तो यो हि स्वतातप्रवर्त्तितां चौखम्भाग्रन्थमालामुदित्वरसौरभैर्बहुविधग्रन्थप्रसूनैरुन्नमयन् सत्पुत्रतामादर्शयन् सर्वथा भगवतीं भारतीं भजति विपुलार्थव्ययेन,

एतत्साङ्ख्ययोगदर्शने सूत्रभाष्यादिपरिचयेतिवृत्तमनतिप्रयोजनकमपीतिह्यसमात्रोदित्वरजिज्ञासाजुषां तत्संस्तवैकापूर्वपाण्डित्यमानिनामाधुनिकशिक्षाविशेषरञ्जितधियां कृते समाविवेशयिषितमपि प्रमितनदितिहासानुपलम्भादुपलब्धस्य चादभ्रभ्रमाकुलत्वेन नितरां प्रेक्षावदश्रद्धेयतया नोद्लेख्यस्माभिः, याथार्थ्येन तदुपलब्धौ यथाऽवसरं तदीयप्रकाशने यतिष्यामहे;

इत्थमयं संग्रहः, परिनिष्ठितः, प्रीयतां चैतेन कार्येण सर्वान्तर्यामी भगवान् श्रीगौरकृष्ण इति प्रार्थ्यते—

| | |
|---|---|
| वै० सं० १९९१ वसन्तपञ्चम्याम्—<br>अधिकाशि । | श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौम-<br>साहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न—<br>**गोस्वामिदामोदरशास्त्री ।** |

# पातञ्जलदर्शनविषयसूची।

इति ।

श्रीः ।

भास्वतीसरहस्यतत्त्ववैशारदीवार्त्तिकसहितभाष्योपेतं—
सर्वत्रत्यापेक्षितांशटिप्पनीयुक्तं च

# पातञ्जलदर्शनम् ।

## तत्र प्रथमः समाधिपादः

भास्वती ।

मैत्रीद्रवान्तःकरणाच्छरण्यं कृपाप्रतिष्ठाकृतसौम्यमूर्त्तिम् ।।
तथा प्रशान्तं मुदिताप्रतिष्ठं तं भाष्यकृद्व्यासमुनिं नमामि ॥ १ ॥
अयोगिनां दुरूहं यद् योगिनामिष्टकामधुक् ॥
महोज्ज्वलमणिस्तूपो यच्छ्रेयः सत्यसंविदाम् ॥ २ ॥
रत्नाकरः प्रवादानां भाष्यं व्यासविनिर्मितम् ॥
शिष्याणां सुखबोधार्थं टीकेयं तत्र भास्वती ॥ ३ ॥
उपोद्घातप्रधानेयं सङ्क्षिप्ता पदबोधिनी ॥
शङ्काविकल्पहीनाऽस्तु मुदायै योगिनां सताम् ॥ ४ ॥

इह खलु भगवान् हिरण्यगर्भो योगस्यादिमो वक्ता,
स्मर्यते च—"हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इति,
हिरण्यगर्भोऽत्र परमर्षेः कपिलस्य संज्ञाभेदः, यथोक्तं—

"विद्यासहायवन्तमादित्यस्थं समाहितम् ।
कपिलं प्राहुराचार्याः साङ्ख्यनिश्चितनिश्चिताः ॥
हिरण्यगर्भो भगवानेष च्छन्दसि सुस्तुतः" । इति,

हिरण्यम् = अत्युज्ज्वलं प्रकाशशीलं ज्ञानं; गर्भः = अन्तःसारो यस्य स हिरण्यगर्भः पूर्वसिद्धो विद्याधीशः, भगवतः कपिलस्यापि धर्मज्ञानादीनां सहजातत्वात् स श्रद्धावद्भिर्ऋषिभिर्हिरण्यगर्भाख्यया पूजित इति तस्यापि हिरण्यगर्भसंज्ञा, भगवता कपिलेनैव प्रवर्त्तितः सांख्ययोगः, तत्र साङ्ख्ये पञ्चविंशतिस्तत्त्वानि सम्यग् विवृतानि, योगे च तत्त्वानामुपलब्ध्युपायो विवृतः, अत उक्तं—

"साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः" इति ।

कालक्रमेण बहुसंवादादिषु वर्त्तमाना योगविद्या दुरधिगमा बभूव ततः परमकारुणिको भगवान् पतञ्जलिर्योगविद्यां सूत्रोपनिबद्धां कृत्वा सुगमां चकार,

सूत्रलक्षणं यथा—

"स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः" ।। इति ।

एवंलक्षणानि पातञ्जलयोगसूत्राणि भगवान् व्यासो गम्भीरोदारेण सारप्रवादमयेन साङ्ख्यप्रवचनभाष्येण व्याचष्टे,

# अथ योगानुशासनम् ॥ १ ॥

**अथेत्ययमधिका(१)रार्थः,**

भास्वती।

उक्तञ्च—

"गङ्गाऽऽद्याः सरितो यद्वदब्धेरंशेषु संस्थिताः।
साङ्ख्यादिदर्शनान्येव अस्यैवांशेषु कृत्स्नशः" ॥ इति।

तत्र प्रारिप्सितस्य योगशास्त्रस्य प्रथमं सूत्रम्—"अथ योगानुशासनमि"ति, शिष्टस्य शासनमनुशासनम्, अथेतिशब्दोऽधिकारार्थः=आरम्भणार्थः, योगानुशासनं-

तत्त्ववैशारदी।

नमामि जगदुत्पत्तिहेतवे वृषकेतवे।
क्लेशकर्मविपाकादिरहिताय हिताय (२)च ॥ १ ॥

पातञ्जलरहस्यम्।

नत्वा हरेः पादरजांसि शम्भोः शौरेर्गणेशस्य महाविभूतेः॥
पतञ्जलेर्व्यासमुनेश्च वक्ष्ये वाचस्पतेर्न्यून(३)समर्पणाय ॥ १ ॥
योगेनाष्टाङ्गयुक्तेन समाध्यन्तेन स्थायिना(४) ॥
आद्ये पादे महेशाय दीयते सुदृढासनम् ॥ २ ॥

आशीर्वादव्याजेन शास्त्रार्थं कथयति—य इति। विश्वाधारोऽनन्तः पतञ्जलिरूपेण लोकानुग्रहार्थमवतीर्णः सन् यो योगशास्त्रस्यानुकर्ता स वस्तच्छास्त्रश्रोतॄन् पात्वित्यन्वयः, ऋषिमूर्तावघटमानान्येकादश(५) विशेषणानि भूतपूर्वगत्या नेयानि, अन्यथा दृष्टविरोधात्, प्रक्षीणाः क्लेशादिविपाकान्ता यस्य स तथोक्तः, प्रक्षीणक्लेशराशिरिति, देवाकृतित्वे सति फणावत्त्वं विषमविषधरत्वम्, अत एव बहुवक्त्रत्वं सुभोगित्वञ्च, सर्वेषां जीवानां ज्ञानस्य प्रसूतिर्जन्म यस्मादसौ सर्वज्ञानप्रसूतिः, भुजगा एव परिकरः स्त्र्यादिस्थानीयो यस्य स तथोक्तः, सिता शुभ्रा विमला तनुर्यस्य स सितविमलतनुः ॥ १ ॥

"तुमर्थाच्च भाववचनादि"त्यनुशासनाद् वृषकेतुं प्रसादयितुमित्यर्थे नमामि वृषकेतव इतिः

वार्त्तिकम्।

यश्चिन्मात्ररसोऽपि नित्यविमलोपाधेर्गुणैरीश्वरो-
हेयैः क्लेशमुखैर्गुणैर्विरहितो मुक्तः सदा निर्गुणः।
सोऽस्मान् बुद्धिगुणैः स्वयं निगडितान् स्वांशान् कृपासागरो-
दीनान्मोचयतु प्रभुर्गुणमयं पाशं दहल्ँलीलया ॥ १ ॥

---

श्रीगौरकृष्णचरणौ नत्वा गुरुणोपदिष्टमादृत्य।
साङ्गपतञ्जलिदर्शनविषमस्थानेषु टिप्पनी क्रियते ॥

(१) निपातानां द्योतकत्व आरभ्यत इत्यध्याहार्यम्, पक्षान्तरे चारम्भार्थकताऽथशब्दस्य।

(२) हितायेत्यनेनोक्तहेतुत्वं वृषकेतोः करुणाप्रयुक्तमिति सूच्यते।

(३) एवमुक्तिश्च ग्रन्थकर्त्तुर्विस्मृतस्वरूपत्वनिबन्धनस्मयविजृम्भितैव; कथमन्यथा प्रदर्शितव्याख्याकौशलेनोन्नायितयोग्यतो द्वादशदर्शनीस्वयंवृतानां वाचस्पतिमिश्राणां न्यूनतापुपूर्षासाहसी भवेद्।

(४) अत्रानुष्टुब्जातीयश्लोकवृत्ते पादचतुष्टयेऽप्यनुशिष्टं पञ्चमवर्णस्य लघुत्वमनादृत्य; श्रोतॄणामश्रव्यतां संपाद्य; साध्वी छान्दसता प्रादर्शि श्लोकेन।

(५) इह तत्पदार्थस्य विशेष्यत्वेन स्फुटेऽपि विशेषणानां द्वादशत्वे तेषामेकादशतां संगिरमाणो न ज्ञायते कतमाय क्रुद्धो गणनाचणस्तत्पदाच्च्यावयितुमीहते।

तत्त्ववैशारदी।

नत्वा पतञ्जलिमृषिं वेद(१)व्यासेन भाषिते ।
सङ्क्षिप्तस्पष्टबह्वर्था (२)भाष्ये व्याख्या विधास्यते ॥ २ ॥

इह हि भगवान् पतञ्जलिः प्रारिप्सितस्य शास्त्रस्य सङ्क्षेपतस्तात्पर्य्यार्थं प्रेक्षावत्प्रवृत्त्यङ्गं(३)श्रोतुश्च सुखावबोधार्थमाचिख्यासुरिदं सूत्रं रचयाञ्चकार—

"अथ योगानुशासनम्", तत्र प्रथमावयवमथशब्दं व्याचष्टे—"अथेत्ययमधिका-

पातञ्जलरहस्यम् ।

फलेभ्यो व्रजतीतिवत्,

(४)"संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्" इत्युक्तेः

तत्राधिकारसूत्रम्—"अथ योगानुशासनम्" इति,

तद् व्याचष्टे—संक्षिप्तेति । सङ्क्षिप्तो ग्रन्थपरिमाणेन, स्पष्ट उपनागरादिशब्दैः, बह्वर्थता सूत्राद्यर्थवत्त्वेन,

"सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरि"ति भाष्यलक्षणम्,
"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपस्य समाधानं व्याख्या पञ्चविधा स्मृता" ॥ २–३ ॥

युक्तिमाश्रित्याह—अथेति । क्वाप्यधिकारार्थोऽथशब्दो न दृष्ट इति चेत् तत्राह—वेदे

वार्त्तिकम् ।

श्रीपातञ्जलभाष्यदुग्धजलधिर्विज्ञानरत्नाकरो-
वेदव्यासमुनीन्द्रबुद्धिखनितो योगीन्द्रपेयामृतः ।
भूदेवैरमृतं तदत्र मथितुं विज्ञानविज्ञैरिह
श्रीमद्वार्त्तिकमन्दरो गुरुतरो मन्थानदण्डोऽर्प्यते ॥ २ ॥
सर्ववेदार्थसारोऽत्र वेदव्यासेन भाषितः ।
योगभाष्यमिषेणातो मुमुक्षूणामिदं गतिः ॥ ३ ॥
गङ्गाऽऽद्याः सरितो यद्वदब्धेरंशेषु संस्थिताः ।
सांख्यादिदर्शनान्येवमस्यैवांशेषु कृत्स्नशः ॥ ४ ॥

---

(१) नामोल्लेखतः परमाप्तोक्तत्वेनोपादेयतमतोट्टङ्किता,

(२) यत्तु ब्रह्मसूत्रेण योगनिराकृतेरेतद्भाष्यमपि न तदीयमिति, तत्तुच्छम्, तत्र प्रधानकारणतावादस्यैव तात्पर्याविषयत्वेन तन्मात्रनिरासोऽभिमतोऽत एव तत्रत्यभामत्या "नानेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्वथा प्रामाण्यं निराक्रियत' इति समर्थितम्,

एतेन—

"व्यासो निराचष्ट न भावनाऽऽख्यं योगं स्वय निर्मितब्रह्मसूत्रै"रिति
नारायणतीर्थीयोक्तिर्व्याख्याता ।

(३) हानोपादानविवेकमतिप्रवृत्त्यङ्गम् = शास्त्रविषयकप्रवृत्तिजनकज्ञानविषयात्मकानुबन्धचतुष्टयरूपम्, अवान्तरफलयोगप्रतिपादनसहितमुख्यप्रयोजनकैवल्येन योगस्य साध्यसाधनता; व्युत्पाद्यसाधनफलोपेतयोगरूपविषयेण शास्त्रस्य प्रतिपाद्यप्रतिपादकता, सुतरा तद्बुभुत्सुरधिकारीति ।

(४) अत्र शक्तिनियामकत्वं = संज्ञासूत्रत्वम्, विधिशास्त्रैकवाक्यतया बोधजनकत्वं = परिभाषात्वम्, मानान्तरानधिगतार्थप्रापकत्वं = विधित्वम्, अन्यनिवृत्तिफलकत्वे सति सिद्धार्थप्रतिपादकत्वं = नियमत्वम्, वक्रिच्छाजन्यज्ञानबोधकत्वम् = अतिदेशत्वम्, स्वदेशे प्रयोजनशून्यत्वे सत्येव विधिशास्त्रैकवाक्यत्वेन बोधकत्वम् = अधिकारत्वम्, इति विवेचनीयम्,

तत्त्ववैशारदी ।

रार्थे" इति, "अथैष ज्योतिरितिवद्" न त्वान(१)न्तर्य्यार्थः, अनुशासनमिति हि शास्त्र-माहानुशिष्यतेऽनेनेति व्युत्पत्त्या, न चास्य शमाद्यनन्तरप्रवृत्तिरपि तु तत्त्वज्ञानचिख्यापयिषाऽनन्तरं, जिज्ञासाज्ञानयोस्तु स्याद्, (२)यथाऽऽम्नायते-"तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येद्" इत्यादि,

शिष्यप्रश्नतपश्चरणरसायनाद्युपयोगानन्तर्य्यस्य च सम्भवेऽपि नाभिधानं; शिष्यप्रतीतिप्रवृत्त्योरनुपयोगात्, प्रामाणिकत्वे योगानुशासनस्य तदभा(३)वेऽप्युपेयत्वाद्, अप्रामाणिकत्वे च तद्भावेऽपि हेयत्वाद्, एतेन(४) तत्त्वज्ञानचिख्यापयिषयोरानन्तर्य्याभिधानं परास्तम्, अधिकारार्थत्वे तु शास्त्रेणाधिक्रियमाणस्य योगस्याभिधानात् सकलशास्त्रतात्पर्यार्थव्याख्यानेन शिष्यः सुखेनैव बोधितश्च प्रवर्त्तितश्च भवतीति, निःश्रेयसस्य हेतुः(५) समाधिरिति हि श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धः,

ननु किं सर्वसन्दर्भगतोऽथशब्दोऽधिकारार्थस्तथा सति "अथातो ब्रह्मजिज्ञासा" इत्यादावपि प्रसङ्ग इत्यत आह—"अयम्" इति । ननु "हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातन" इति योगियाज्ञवल्क्यस्मृतेः कथं पतञ्जलेर्योगशास्त्रवक्तृत्वमित्याशङ्क्य सूत्रकारेणो-

पातञ्जलरहस्यम् ।

तावदथैष ज्योतिरिति, "अथैष ज्योतिः, अथ सर्वज्योतिः, अथ विश्वज्योतिः", एतेन सहस्रदक्षिणेन यजेते"ति, ज्योतिष्टोमादियागान्तराण्यधिक्रियन्त इत्यर्थः, अधिकारार्थे नियन्तुमानन्तर्यार्थं निराकरोति—"न त्वित्यादि-प्रामाणिकत्व" इत्येतदन्तेन,

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि",
यच्छेन्निरुन्ध्याद्, "यद्योगेनात्मदर्शनं,"
"त्रिरुन्नतं स्थाप्य समं शरीरमि"त्यादि,
"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ।
अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः", ॥

इति न्यायेनाह—तदभावेऽपीति । शान्त्यादिसमाध्यन्तानां षण्णामभावेऽपि, षण्णां-भावेऽपि वा क्षणिकनिरात्मनो बौद्धादिशास्त्रादावप्रवृत्तेः, अयमिति । अधिकारार्थे सतीत्यर्थः,

वार्त्तिकम् ।

निर्विघ्नग्रन्थसमाप्तये योगप्रवर्त्तकमनन्तमीश्वरं स्मरन् शिष्याणां शास्त्रग्रहणानुष्ठानादावप्य-

---

(१) न तु धर्मब्रह्मजिज्ञासापरसूत्रघटकाथशब्दवदानन्तर्य्यार्थकतेति भावः ।
(२) शमाद्यनन्तरं प्रवृत्तिरिति शेषः ।
(३) शिष्यप्रश्नाद्यानन्तर्य्याभावेऽपि ।
(४) प्रमाणसिद्धत्वस्यैव प्रवृत्तावुपयोगेन ।
(५) "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति"
"तत्कारणं साङ्ख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपापै—"
रित्यादिश्रुत्या;
"स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा"
"अयं तु परमो धर्मो यद् योगेनात्मदर्शनम्" इत्यादिस्मृत्या;
"नास्ति योगसमं बलम्"
"तत्र योगी निरालम्बे निरातङ्के निरामये ।
षडङ्गयोगविधिना परे ब्रह्मणि लीयत"—
इत्यादिपुराणेन च योगस्य निःश्रेयसकारणत्वं प्रसेधितम् ।

वार्त्तिकम् ।

प्रतिबन्धं तत एव प्रार्थयते-(१)यस्त्यक्त्वेति । यः स्वस्याद्यरूपं शेषाख्यं त्यक्त्वा स्वांशैस्ततो विभक्तो भूत्वा लोकानुग्रहार्थं बलरामादिरूपेणाविर्भवति स वो युष्मान् शिष्यान् पालयेत् शास्त्रार्थग्रहणादिप्रतिबन्धं निवारयत्वित्यर्थः, शेषं सुगमम् ।

"अध्यात्मयोगाधिगमेन मत्वा देवं धीरो हर्षशोकौ जहाति"
"यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।
यतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा"
"तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तर" इत्यादिश्रुतिषु,
"मुक्तिकर्मा(?)तथा योगः सम्यग्ज्ञानान्महीयते"
"तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिक"—

इत्यादिस्मृतिषु च योगो मोक्षहेतुतया विहितः, तत्र योगः किंस्वरूपः किमुपायः केन वा द्वारेण ज्ञानमोक्षयोः कारणमित्यादिकं मुमुक्षूणां विविदिषितं भवति, ब्रह्ममीमांसासांख्यादिषु च ज्ञानमेव विचारितं बाहुल्येन ज्ञानसाधनमात्रस्तु योगः सङ्क्षेपतः, ज्ञानजन्ययोगस्तु सङ्क्षेपतोऽपि तेषु नोक्तोऽतोऽतिविस्तरेण द्विविधं योगं प्रतिपिपादयिषुर्भगवान्

---

(१) इह किल तावत्प्राचीनतमेषु योगभाष्यपुस्तकेषु "यस्त्यक्त्वे"तिमङ्गलपरपद्यस्यानुपलम्भादेव द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रैस्तत्त्ववैशारद्यां लेशतोऽपि नासूच्यैतद्, ततोऽनु केनाप्यर्वाचीनेन योगसूत्रकृद्वक्तंमन्येन वैयासिकभाष्यारम्भे प्राक्षेपि; सुतरां तत्पराचीनेन विज्ञानभिक्षुणा योगवार्त्तिके व्याचचक्षे चैतद्, न च तावतैतदीया योगाभाष्यघटकता भवति प्रामाणिकी दर्शितयुक्तेरस्य प्रकृतभाष्यकृदकृतत्वप्रमितेः, न च श्रुतिस्मृतिसदाचारानुमोदितत्वेन ग्रन्थारम्भे मङ्गलाचरणस्यैतद्रूपत्वादस्याप्यौचित्यमेवायातीति शङ्क्यम् ?

अल्पज्ञस्य भविष्यदनाकलनेन प्रारब्धग्रन्थसमाप्तिप्रतिबन्धकान्तरायसंभावनया तत्तिरोभावाय तदावश्यकत्वेऽपि त्रिकालज्ञानां तदनभिव्यक्तिनिश्चये तदाचरणानावश्यकत्वात्,

न च लोकशिक्षार्थं तदनुष्ठेयता दुर्निवारेति सांप्रतम्,

तस्याः प्रारब्धग्रन्थादिमाथपदेनापि लाभाद्, व्यक्तश्चायमर्थस्तत्त्ववैशारद्याम् "अधिकारार्थस्य चेत्यादिना, तस्मात्पद्यस्यास्य प्रक्षिप्ततेति निर्विवादम्, अत एवास्माभिर्मा नाम लोका विप्रलब्धास्थुरिति भाष्यस्थत्वेन न व्यवेश्यदः, पूर्णं च पद्यमित्थम्—

"यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोऽनेकधाऽनुग्रहाय
प्रक्षीणक्लेशराशिर्विषमविषधरोऽनेकवक्त्रः सुभोगी ।
सर्वज्ञानप्रसूतिर्भुजगपरिकरः प्रीतये यस्य नित्यं
देवोऽहीशः स वोऽव्यात्सितविमलतनुर्योगदो योगयुक्तः" ॥

एतेन पातञ्जलरहस्येऽपि तदुल्लेखो निर्युक्तिक एव, तत्कर्त्तुरपि पद्यप्रक्षेपादर्वाचीनत्वाद्,

यत्त्वेनेन तत्र तत्त्ववैशारदी व्याख्यातुकामेन तदीयत्वेन तद्व्याख्यायोत्थेय महाँस्तद्भ्रमः, तत्र हि "नमामी"त्याद्येव मङ्गलाद्यपद्यं सर्वतत्पुस्तकेषु तथोपलम्भाद्,

न च रहस्याद्यवृत्ते "व्यासमुने"रित्युक्त्या भाष्यीयतायामपि तस्य व्याख्यानं संभवदुक्तिकमिति शङ्कनीयम् ?

सर्वज्ञत्वाद् व्यासादेर्न्यूनतैव नास्ति, तत्पूर्त्तेस्त्वल्पज्ञद्वारा दुराशा सुदूरपराहता, वस्तुतस्तु व्यासमुनिपदार्थस्य न्यूनार्थेनान्वय एव नास्ति किन्तु पतञ्जलेर्व्यासमुनेरित्युभयोरपि- "वाचस्पते" रित्येतस्यादिमस्त्वेनोपस्करणीयस्य "निबन्धयोर्व्याख्यातु"रीदृशांशस्य घटकीभूतनिबन्धार्थेनैवान्वयस्यौचित्यात् , पादरजांसीत्यत्रैवैनयोरप्यन्वयं इति कश्चिदित्यलम् ।

योगानुशासनं शास्त्रमधिकृतं वेदितव्यम् , योगः=समाधिः, स च सा-

भास्वती।

नाम योगशास्त्रं तद्द्वारा योगोऽपीत्यर्थः, अधिकृतम्=आरब्धमिति वेदितव्यम् , योगः= समाधिः, न च संयोगाद्यर्थकोऽयं योगः "युज-समाधौ" इति शाब्दिकाः, तेषाञ्च समाधिश्चित्तसमाधानार्थकः, न च तदेवार्थमात्रादिसूत्रलक्षितः पारिभाषिकः समाधिः, सम्यगाधानमेव शाब्दिकानां समाधानमेतद् , युज्धातुनिष्पन्नोऽयं योगशब्दः, स च योगः=समा-

तत्त्ववैशारदी।

कम्—"अनुशासनम्" इति, शिष्टस्य शासनमनुशासनमित्यर्थः, "

यदाऽयमथशब्दोऽधिकारार्थस्तदैष वाक्यार्थः सम्पद्यत इत्याह—"योगानुशासनं शास्त्रमधिकृतम्" इति,

ननु व्युत्पाद्यमानतया योगोऽत्राधिकृतो न तु शास्त्रमित्यत आह—"वेदितव्यम्" इति, सत्यं व्युत्पाद्यमानतया योगः प्रस्तुतः, स तु तद्विषयेण शास्त्रेण करणेन व्युत्पाद्यः करणगोचरश्च व्युत्पादकस्य व्यापारो, न कर्मगोचर इति कर्तृव्यापारविवक्षया योगविषयस्य शास्त्रस्याधिकृतत्वं वेदितव्यम्, शास्त्रव्यापारगोचरतया तु योग एवाधिकृत इति भावः, अधिकारार्थस्य चाथशब्दस्यान्यार्थं नीयमानोदकुम्भदर्शनमिव श्रवणं मङ्गलायोपकल्पत इति मन्तव्यम् , शब्दसन्देहनिमित्तमर्थसन्देहमपनयति—"योगः(१) समाधिरिति, "युज समाधावि"त्यस्माद् व्युत्पन्नः समाध्यर्थो; न तु "युजिर् योग" इत्यस्मात् संयोगाथ इत्यर्थः,

ननु समाधिरपि वक्ष्यमाणस्याङ्गिनो योगस्याङ्गं, न चाङ्गमेवाङ्गीत्यत आह—"स च"

पातञ्जलरहस्यम्।

अन्यथा-"अथैष ज्योतिः", "अथ शब्दानुशासनम्" इत्याद्यसिद्धिः, अतस्तदुपलक्षणमयमिति, शिष्टस्येति। शिष्यहिताय हिरण्यगर्भादिना शासितस्य, तमनुसृतवानिति, यत्तक्षादेः कुठारादौ हस्तव्यापारो न तु च्छिदादौ फल इत्याह-"सत्यमित्यादिना भाव" इत्यन्तेन, मङ्गलार्थता त्वार्थीत्याह—अधिकारार्थस्येति,

"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्वा विनिर्यातौ तेन माङ्गलिकावुभावि"ति,

दध्यादिदर्शनवन्मङ्गलप्रयोजनकौ, न तु मङ्गलवाचकाविति वेदितव्यमिति ध्वनिः, शब्द-

वार्त्तिकम्।

पतञ्जलिः शिष्यावधानायादौ योगानुशासनं शास्त्रमारभ्यतया प्रतिज्ञातवान्—

"अथ योगानुशासनम्", तदिदं सूत्रमारभ्य समग्रं शास्त्रं सर्वलोकहिताय भगवान् बादरायणो व्याचष्टे-"अथेत्ययमधिकारार्थ"इत्यादिना, अधिकारशब्दो योगरूढतया आरम्भणएव मुख्य इति शास्त्रस्याधिकार्यत्वं मुख्यमेवास्ति, यत्र चार्थस्याधिकार्यत्वमुच्यते यथा-"अथैष ज्योतिरि"त्यादौ तत्राधिकार्यशास्त्रविषयतया गौणं तदित्याशयः, एतेन शास्त्रस्यानधिकार्यत्वमनिरूप्यत्वादित्यपास्तं प्रकृतभाष्यविरोधादिति, प्रश्नाद्यर्थकत्वमथशब्दस्य किं कुत्रापि नास्तीत्याशङ्कानिरासायोक्तमयमिति, अधिकारार्थोऽधिकारवाचक इत्यर्थः, अथ शब्दस्य चोच्चारणमात्रेण मङ्गलत्वमपि बोध्यम् , शिष्टस्य शासनमनुशासनं तेन शास्त्रस्य गुरुमूलकतया सूत्रकारेण प्रामाण्यं दर्शितं-

"हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातन" इति—

योगियाज्ञवल्क्येन हिरण्यगर्भस्यादिगुरुत्वबोधनादिति, सूत्रवाक्यार्थमुपसंहरति-योगस्यानुशासनं शास्त्रमधिकृतं वेदितव्यमिति, शिष्यैरिति शेषः, वेदितव्यमितिपूरणेन सूत्रस्य शिष्या-

(१) ननु—"संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः"

र्वभौमश्चित्तस्य धर्मः,

क्षिप्तं, मूढं, विक्षिप्तम्, एकाग्रं, निरुद्धम्, इति चित्तभूमयः,

मालती ।

धानम्, सार्वभौमः = वक्ष्यमाणक्षिप्ताऽऽदिसर्वभूमिसाधारणश्चित्तधर्मः, क्षिप्तमिति । चित्त-

तत्त्ववैशारदी ।

इति, वस्त्वर्थोऽङ्गादङ्गिनं भिनत्ति, सार्वभौमः = भूमयोऽवस्था वक्ष्यमाणाः—मधुमती-मधुप्रतीका-विशोका-संस्कारशेषास्ताश्चित्तस्य; तासु सर्वासु विदितः सार्वभौमश्चित्तनिरोधलक्षणो-योगः, तदङ्गन्तु समाधिर्नैवम्भूतः, व्युत्पत्तिनिमित्तमात्राभिधानं चैतद्—"योगः समाधिः" इति; अङ्गाङ्गिनोरभेदविवक्षामात्रेण, प्रवृत्तिनिमित्तं तु योगशब्दस्य चित्तवृत्तिनिरोध एवेति परमार्थः, वृत्तयो ज्ञानान्यात्माश्रयाण्यतस्तन्निरोधोऽप्यात्माश्रय एवेति ये पश्यन्ति तन्निरासायाह—"चित्तस्य धर्म" इति, चित्तशब्देनान्तःकरणं बुद्धिमुपलक्षयति, न हि कूटस्थनित्या चितिशक्तिरपरिणामिनी ज्ञानधर्मा भवितुमर्हति, बुद्धिस्तु भवेदिति भावः, स्यादेतत्—सार्वभौमश्चेद् योगो हन्त भोः क्षिप्तमूढविक्षिप्ता अपि चित्तभूमयः, अस्ति च परस्परापेक्षया वृत्तिनिरोधोऽप्यास्विति तत्रापि योगप्रसङ्ग इत्याशङ्क्य हेयोपादेयभूमीरुपन्यस्यति—"क्षिप्तम्" इत्यादि, क्षिप्तं = सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणमत्यन्तमस्थिरम्, मूढं तु तमःसमुद्रेकान्निद्रावृत्तिमद्, विक्षिप्तं क्षिप्ताद्विशिष्टम्; विशेषोऽस्थेमबहुलस्य कादाचित्कः स्थेमा, सा चास्यास्थेमबहुलता सांसिद्धिकी वा वक्ष्यमाणव्याधिस्त्यानाद्यन्तरायजनिता वा, एकाग्रम् = एकतानम्, निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धम्, तत्र क्षिप्तमूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्य्येणापि निःश्रेयसहेतुभावाभावात् तदुपघातक-

पातञ्जलरहस्यम् ।

संदेह इति। वर्णानुपूर्व्याः समानत्वात्, संपूर्वाङ्पूर्वस्य दधाते रूपम्, "उपसर्गे घोः किः" इति धाधातोः किप्रत्ययात् समाधिरिति, अङ्गं संप्रज्ञातसमाधिः, अङ्ग्यसंप्रज्ञातसमाधिः, तत्र मधुमत्यादिचतुष्टये वर्त्तत इति सार्वभौमः, तासु वृत्तेर्विद्यमानत्वाद्, ज्ञानाश्रय आत्मेति नैयायिकादयः, निर्गुणश्चेति श्रुतिमाश्रित्य तान्निराह—चित्तस्य धर्म इति। यस्मिन् परिणममाने तदेवेदमिति बुद्धिर्न विहन्यते तत्परिणामिनित्यं यथा पृथिव्यादीति, भेदमाश्रित्याह—कूटस्थनित्येति । विपरिणममानधर्मानाश्रय इत्यर्थः, अस्थेमा = चाञ्चल्यम्, सांसिद्धिकी = स्वाभाविकी, तर्हि कदा चिद् व्युत्थानं न स्याद्? अत्राह—संस्कारेति। क्षिप्तत्वम् = उद्दिष्टविषयातिरिक्तविषयत्वम्, मूढत्वं = विषयमात्रग्राहकत्वम्, सत्यपीति । तदधिकारे चेतसीति शेषः,

वार्त्तिकम् ।

बधानार्थकत्वं सूचितं, योगस्य च फलं सूत्रभाष्ययोः स्थाने स्थाने वक्ष्यमाणं, मयोत्तरसूत्रावतारिकायामपि सङ्क्षेपाद्वक्ष्यते, योगलक्षणपरतया द्वितीयसूत्रमवतारयिष्यति, तत्र युज समाधाविति योगलक्षणस्य प्रसिद्धत्वाल्लक्षणान्तराकाङ्क्षैव नास्तीत्याशङ्क्य तस्यातिव्याप्तत्वेनादावपाकरोति-"योगः समाधिः स च सार्वभौमश्चित्तस्य धर्म" इति, युज समाधावित्यनुशासनतः प्रसिद्धो-योगः समाधिः चित्तवृत्तिनिरोधः, स च सार्वभौमः सर्वासु वक्ष्यमाणासु क्षिप्ताद्यवस्थासु साधा-

परेण ब्रह्मणा साधर्म्येकत्वं यन्नृपात्मनः ।
स एव योगो विख्यातः"
"जलसैन्धवयोः साम्यं यथा भवति योगतः ।
तथाऽऽत्ममनसोरैक्यं समाधिरिह भण्यते"—

इत्याद्यार्षवचनैर्जीवपरयोर्योगस्य साध्यत्वमात्ममनसोरैक्यात्मकसमाधेः साधनत्वमुक्तमतश्च योगसमाध्योः स्पष्टभेदप्रतीतेः कथं तादात्म्येन निर्देश इति चेद्? न—औपचारिक ईदृशव्यवहारे बाधकाभावाद् ।

**तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्त्तते,**

भास्वती।

भूमयः = चित्तस्य सहजा अवस्थाः, संस्कारवशाद् यस्यामवस्थायां चित्तं प्रायशः सन्तिष्ठते सैव चित्तभूमिः, पञ्चविधाश्चित्तभूमयः-क्षिप्ता मूढा विक्षिप्ता एकाग्रा निरुद्धा चेति, क्षिप्तं चित्तं क्षिप्ता भूमिः, तथा मूढाऽऽदयः, तत्र यदा संस्कारप्रत्ययधर्मकं चित्तं तत्त्वसमाधानचिकीर्षाहीनं सदैवास्थिरं भ्रमति तदाऽस्य क्षिप्ता भूमिः, तादृशस्यापि च प्रबलरागादिमोहवशस्य चित्तस्य या मूढाऽवस्था सा मूढा भूमिः, क्षिप्ताद्विशिष्टं विक्षिप्तभूमिकं चित्तम्, तत्र कादाचित्कं चित्तसमाधानं, समाधानचिकीर्षा च तत्त्वज्ञानसमाधानञ्च दृश्यते, अभीष्टविषये सदैव स्थितिशीला चित्तावस्था एकाग्रभूमिः, सर्ववृत्तिनिरोधप्राया चित्तावस्था निरुद्धभूमिः, चित्तसमाधानमेव योगः, तस्य सार्वभौमत्वात् पञ्चस्वपि भूमिषु योगसम्भवः स्यात् तत्र प्रबललोभमोहादिवशात् कदा चित् क्षिप्तमूढयोर्भूम्योः कियच्चित्तसमाधानं भवति, न च तत् कैवल्याय भवति, यथा-जयद्रथस्य प्रबलद्वेषाधीनस्य, यस्तु विक्षिप्ते विक्षिप्तभूमिष्ठे चेतसि जातो विक्षेपोपसर्जनीभूत उपसर्जनभावेन = गौणभावेनोदित्वरसंस्काररूपेण यत्रागन्तो विक्षेपसंस्कारः स्थितः; तादृशस्य चित्तस्य विक्षिप्तभूमिकस्य समाधिरपि न सम्यग् योगपक्षे = कैवल्यपक्षे वर्त्तते, विक्षिप्तभूमिकस्य समाधानं सोपप्लवं, ततश्च तादृशः साधको यदा विक्षेपाभिभूतो भवति तदा प्रमत्तस्तत्त्वज्ञानहीनः पृथग्जन इवाचरति,

तत्त्ववैशारदी।

त्वाच्च योगपक्षाद् दूरोत्सारितत्वमिति न तयोर्योगत्वं निषिद्धम्, विक्षिप्तस्य तु कादाचित्कसद्भूतविषयस्थेमशालिनः सम्भाव्येत योगत्वमिति निषेधति—"तत्र" इति। विक्षिप्ते चेतसि समाधिः = कादाचित्कः सद्भूतविषयस्य चित्तस्य स्थेमा न योगपक्षे वर्त्तते, कस्माद्? यतस्तद्विपक्षविक्षेपोपसर्जनीभूतः, विपक्षवर्गान्तर्गतस्य स्वरूपमेव दुर्लभं प्रागेव कार्य्यकरणम्, न खलु दहनान्तर्गतं बीजं त्रिचतुरक्षणावस्थितमुप्तमप्यङ्कुराय कल्पत इति भावः, यदि विक्षेपा-

पातञ्जलरहस्यम्।

उपघातकत्वात् = एकाग्रनिरोधयोर्नाशकत्वाद्, उपसर्जनीभूतता = विक्षेपबहुलता, न खल्विति।

वार्त्तिकम्।

रणश्चित्तस्य धर्मः स्वाभाविको जलस्य द्रवत्ववत् क्षिप्ताद्यवस्थायामपि हि यत्किंचिद्वृत्तिनिरोधोऽस्त्येवेति तथा चालक्ष्यास्ववस्थासु तल्लक्षणमतिव्याप्तमिति शेषः, कास्ताः सर्वाः चित्तभूमय इत्याकाङ्क्षायामाह—क्षिप्तमित्यादि।

क्षिप्तं रजसा विषयेष्वेव वृत्तिमद्, मूढं तमसा निद्राऽऽदिवृत्तिमत्, क्षिप्ताद्विशिष्टं विक्षिप्तं सत्त्वाधिक्येन समादधदपि चित्तं रजोमात्रयाऽन्तराऽन्तरा विषयान्तरवृत्तिमद्, एकस्मिन्नेव विषयेऽग्रं शिखा यस्य चित्तदीपस्येत्येकाग्रं विशुद्धसत्त्वतयैकस्मिन्नेव विषये वक्ष्यमाणावधीकृतकालपर्यन्तमचञ्चलं निवातस्थदीपवत्, तथा च क्षिप्तादित्रयेऽपि किंचिदैकाग्र्यसत्त्वेऽपि तत्र नातिप्रसङ्गः, निरुद्धं च निरुद्धसकलवृत्तिकं संस्कारमात्रशेषमित्यर्थः, रजोधर्मस्य रागादेः प्रतिघातादेव लोकानां तमोधर्मो विषादादिर्दृश्यत इति क्षिप्तात्पूर्वत्र मूढस्योपन्यासः, उक्तातिव्याप्तिं प्रतिपादयितुमुक्तभूमिषु लक्ष्यालक्ष्यविभागं करोति-तत्र विक्षिप्त इत्यादिना, तत्र तासु पञ्चसु मध्ये विक्षिप्ते चेतसि वर्त्तमानः समाधिरल्पो बहुलविक्षेपशेषीभूतत्वान्न योगपक्षे योगमध्ये प्रविशति क्लेशहान्यहेतुत्वात् सुतरां तु क्षिप्तमूढयोश्चित्तयोर्वर्त्तमानौ समाध्यभ्यासाविल्याशयः, अतो न क्षिप्तमूढभूम्योरलक्ष्यत्वाप्रतिपादनेन न्यूनतेति, विक्षिप्तमुखेनान्यभूमित्र-

**यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति, स सम्प्रज्ञातो योग इत्याख्यायते,**

भास्वती।

यस्त्विति। एकाग्रभूमिके चेतसि जातः समाधिः सद्भूतमर्थं=पारमार्थिकं तत्त्वं प्रद्योतयति=प्रख्यापयति, यत्प्रज्ञया पारमार्थिकहानोपादानविषयेऽव्यर्थाध्यवसायो जायत इत्यर्थः, तथा च क्षिणोति क्लेशान्=तत्त्वज्ञानस्य चेतस्युपस्थानादविद्याऽऽदीन् क्लेशान्, स योगः क्रमतो वन्ध्यप्रसवान् करोति, क्लेशमूलानाञ्च कर्मणां निवर्त्त्यमानत्वात् कर्मबन्धनं श्लथयति, किञ्च—निरोधं सर्ववृत्तिहीनतामभिमुखं करोति; एष सम्प्रज्ञातो योगः—एकाग्रभूमिकस्य चेतसस्तत्त्वविषयिणी प्रज्ञा सम्प्रज्ञानम्, तदा ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता भवति, तादृशसम्प्रज्ञानवान् योगः सम्प्रज्ञात इत्यर्थः।

तत्त्ववैशारदी।

पसर्जनीभूतः समाधिर्न योगः कस्तर्हीत्यत आह—"यस्त्वेकाग्रे चेतसि" इति, "भूतम्" इति समारोपितमर्थं निवर्त्तयति, निद्रावृत्तिरपि स्वालम्बने तमसि भूते भवत्येकाग्रेत्यत उक्तं—"सद्" इति, शोभनं नितान्ताविर्भूतसत्त्वम्, तमःसमुद्रेकस्त्वशोभनस्तस्य क्लेशहेतुत्वादिति, द्योतनं हि तत्त्वज्ञानमागमाद्वाऽनुमानाद्वा भवदपि परोक्षरूपतया न साक्षात्कारवतीमविद्यामुच्छिनत्ति, द्विचन्द्रदिङ्मोहादिष्वनुच्छेदकत्वादत आह—"प्रे"ति, प्रशब्दो हि प्रकर्षं द्योतयन् साक्षात्कारं सूचयति, अविद्यामूलत्वादस्मिताऽऽदीनां क्लेशानां, विद्यायाश्चाविद्योच्छेदरूपत्वाद्विद्योदये चाविद्याऽऽदिक्लेशसमुच्छेदो विरोधित्वात् कारणविनाशाच्चेत्याह—"क्षिणोति च" इति, अत एव कर्मरूपाणि बन्धनानि श्लथयति, कर्म चात्रापूर्वमभिमतं, कार्ये कारणोपचारात्, श्लथयति=स्वकार्य्यादवसादयति, वक्ष्यति हि—"सति मूले तद्विपाक" इति, किंच, निरोधमभिमुखं करोति=अभिमुखीकरोति।

पातञ्जलरहस्यम्।

दग्धवेत्रबीजस्य यत्कदलीकाण्डजनकत्वमुदाहरणं तद् दाहसहकृतभूविकारः स न वेत्रबीजविकारः, तद्गतरसाद्यप्रत्यभिज्ञानाद्, भूते=पारमार्थिक तमस्येवः न विवर्त्त इत्यर्थः, एकाग्रम्=एकमीशमासमन्ताद् गच्छद्रमते निश्चलीभवति, एकतत्त्वाभ्यासादिति वक्ष्यते, कार्ये=अपूर्वे, कारणं=यागादिः, तत्र योगशब्दप्रयोगात्,

"श्रुतार्थापत्तिरेवैका प्रमाणं तस्य चेष्यते।
शब्दैकदेशभावात्तु स्वार्थेऽप्यागम एव च", इति भट्टोक्तेः,

अपूर्वं श्रुतार्थापत्तिगम्यम्, एवं "सति मूले" अपूर्वे सति, तद्विपाकाः=जात्यायुर्भोगाः,

वार्त्तिकम्।

यस्यालक्ष्यत्वमुक्त्वाऽन्त्यभूमिद्वयमेव लक्ष्यमित्याह—यस्त्वेकाग्र इति। यस्तु समाधिरेकाग्रे चेतसि वर्त्तमानोऽर्थं ध्येयं वस्तु सद्भूतं परमार्थभूतं प्रकर्षेण द्योतयति साक्षात्कारयति ततश्च क्लेशानविद्याऽऽदीन् पञ्च क्षिणोति ततोऽपि च कारणोच्छेदाद्धर्माधर्मरूपाणि बन्धनानि बुद्धिपुरुषयोर्बन्धकारणानि श्लथयति=अदृष्टोत्पादनाक्षमाणि करोति तथा निरोधमसंप्रज्ञातयोगमभिमुखं प्रत्यासन्नं करोति परवैराग्यजननेनेति शेषः, स समाधिः संप्रज्ञातो योग इति कथ्यत इत्यर्थः, सम्यक् प्रज्ञायते साक्षात्क्रियते ध्येयमस्मिन्निरोधविशेषरूपे योग इति संप्रज्ञातो योगः, यद्यपि समाधिशब्देनैकाग्रताऽतिशयरूपं निरोधद्वयरूपयोगद्वयस्याङ्गमेव परिभाषिष्यते तथाऽपि योगद्वयमङ्गाङ्गिनोरभेदविवक्षयैव समाधिशब्देनोक्तमेवमुत्तरोत्तरसूत्रेऽपि बोध्यम्, स च संप्रज्ञातश्चतु-

**स च वितर्कानुगतो, विचारानुगत, आनन्दानुगतोऽस्मितानुगत, इत्युपरिष्टात्प्रवेदयिष्यामः, सर्ववृत्तिनिरोधे त्वसम्प्रज्ञातः समाधिः ॥ १ ॥**

भास्वती ।

स इति । वक्ष्यमाणलक्षणकवितर्कादिपदार्थानुगतः सम्प्रज्ञात इत्युपरिष्टात् प्रवेदयिष्यामः = वक्ष्यामः,

सर्वेति—सम्प्रज्ञातसिद्धौ सम्प्रज्ञानस्यापि निरोधे यः सर्ववृत्तिनिरोधः स ह्यसम्प्रज्ञातो-योग इति ॥ १ ॥

तत्त्ववैशारदी ।

स च सम्प्रज्ञातश्चतुष्प्रकार इत्याह—"स च" इति । असम्प्रज्ञातमाह-"सर्ववृत्ति" इति । रजस्तमोमयी किल प्रमाणादिवृत्तिः, सात्त्विकीं वृत्तिमुपादाय सम्प्रज्ञाते निरुद्धा, असम्प्रज्ञाते तु सर्वासामेव निरोध इत्यर्थः, तदिह भूमिद्वये समाप्ता या मधुमत्यादयो भूमयस्ताः सर्वास्तासु विदितः सार्वभौम इति,सिद्धम् ॥ १ ॥

पातञ्जलरहस्यम् ।

निरुद्धेति कृत्वा संप्रज्ञातोऽप्युपादेयो, भूमिद्वये = संप्रज्ञातासंप्रज्ञातरूपे, या इति प्रथमाबहुवचनम् ॥ १ ॥

वार्त्तिकम् ।

विध इत्याह—स चेति । न च वितर्कानुगतादित्रिके साक्षात्कारजनकत्वादिकं साक्षान्नास्त्यविद्यालेशसंपर्कादिति वाच्यम् ? सवितर्कादिक्रमेणैव साक्षात्कारवृद्ध्या चरमभूमिकायामृतम्भरप्रज्ञोदयेन भूमिकाचतुष्टय एव साक्षात्कारसंबन्धादिति, निरुद्धभूमेरपि लक्ष्यत्वमाह—सर्ववृत्तीति । सम्प्रज्ञातकालीना साक्षात्काररूपिणी या वृत्तिः तस्या अपि वक्ष्यमाणपरवैराग्येण निरोधे जायमाने त्वसम्प्रज्ञातयोग।इत्यर्थः, वृत्तिनिरोधश्च चित्तस्य वृत्तिसंस्कारशेषावस्था, अभावस्याधिकरणावस्थाविशेषमात्ररूपत्वाद् , निरुध्यन्तेऽस्यामवस्थायामिति व्युत्पत्तेर्वा, सा चावस्था संस्कारमात्रैः परिणामधारा निरोधकाले संस्कारतारतम्यरूपस्यैव चित्तपरिमाणस्य सूत्रभाष्याभ्यां वक्ष्यमाणत्वादिति,

ननु वृत्तिनिरोधो वृत्त्यभावमात्रमेकाग्रताविशेषो वा ? निरोधस्याभावमात्रत्वे वक्ष्यमाणसंस्कारजनकत्वानुपपत्तेरेकाग्रतामात्ररूपत्वे समाधिरूपादङ्गात् सम्प्रज्ञाताच्च भेदानुपपत्तेः,

"उल्काहस्तो यथा कश्चिद् द्रव्यमालोक्य तास्त्यजेत् ।
बोधेन ज्ञानमालोक्य तथा बोधं परित्यजे—"

दित्यादिस्मृतिषु 'यावद्धृदि गतं क्षय'मिति पूर्वोक्तश्रुतौ चासम्प्रज्ञातस्य सकलवृत्तिशून्यत्वश्रवणाच्च,

ननु सम्प्रज्ञातासम्प्रज्ञातयोर्योगयोर्निरोधरूपयोः किं प्रयोजनं "योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्याते"रितिसूत्रेण योगाङ्गस्यैव ज्ञानहेतुताया वक्ष्यमाणत्वात् संप्रज्ञातयोगकाले ज्ञानस्योत्पत्तेरेव शास्त्रेष्ववगमाद् न तु तद्धेतुताया एककालकत्वेन हेतुहेतुमद्भावासम्भवाच्च, अस्तु वा विषयान्तरसंचाराख्यप्रतिबन्धनिवृत्तिरूपतया ज्ञानहेतुत्त्वं सम्प्रज्ञातयोगस्य "क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्ति"रित्यागामिसूत्राच्च, न त्वसम्प्रज्ञातयोगस्यापि तस्य ज्ञानजन्यत्वाद्, न च ज्ञानोत्पत्त्यनन्तरं मोक्षायान्यत्साधनमपेक्षणीयं "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य" इत्यादिश्रुतिभिरन्यनिरपेक्षज्ञानस्य मोक्षहेतुत्वसिद्धेरविद्याकामकर्मादिनिवृत्तौ हेत्वभावेन पुनः संसारानुपपत्तेश्च,

अत्रोच्यते—ज्ञाने जातेऽपि प्रारब्धकर्मणा देहधारणस्यावश्यकत्वेन तदानीमपि बाह्याभ्यन्तरवृत्तिभिर्यद् दुःखं न जायत एतदप्यन्ततो योगद्वयस्य फलमस्ति, तथा हि वक्ष्यति भाष्य-

तस्य लक्षणाभिधित्सयेदं सूत्रं प्रववृते—

## योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

भास्वती।

तस्येति—अभिधित्सया = अभिधानेच्छया, "योगश्चित्तवृत्तिनिरोधः" इति योगलक्ष-

तत्त्ववैशारदी।

द्वितीयं सूत्रमवतारयति। "तस्य लक्षणेति। "तस्य" इति पूर्वसूत्रोपात्तं द्विविधं योगं परामृषति—"योगश्चित्तवृत्तिनिरोधः", निरुध्यन्ते यस्मिन् प्रमाणादिवृत्तयोऽवस्थाविशेषे चित्तस्य सोऽवस्थाविशेषो योगः, ननु सम्प्रज्ञातस्य योगस्याव्यापकत्वादलक्षणमिदम्, अनिरुद्धा हि तत्र सात्त्विकी चित्तवृत्तिरित्यत आह—"सर्वशब्दाग्रहणाद्"। इति, यदि सर्ववृत्तिनिरोधो योग इत्युच्येत भवेदव्यापकं सम्प्रज्ञातस्य, क्लेशकर्माशयपरिपन्थी चित्तवृत्तिनिरोधस्तु तमपि सङ्गृह्णाति, तत्रापि राजसतामसचित्तवृत्तिनिरोधात् तस्य चातद्भावादित्यर्थः,

कुतः पुनरेकस्य चित्तस्य क्षिप्तादिभूमिसम्बन्धः? किमर्थं चैवमवस्थस्य चित्तस्य वृत्तयो-

पातञ्जलरहस्यम्।

तमपि = संप्रज्ञातमपि, संगृह्णाति परिपन्थित्वाविशेषात्,

"प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।

वार्त्तिकम्।

कारः—"सर्वाश्चेता वृत्तयः सुखदुःखमोहात्मिका अत एताः सर्वा वृत्तयो निरोद्धव्या" इति, किंच ज्ञानस्य यथा कर्मक्षयहेतुत्वमस्ति तथा योगस्यापि;

"विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिराद्"

इत्यादिवाक्यशतेभ्यः, तथा च कर्मक्षयद्वारा ज्ञानस्येवासंप्रज्ञातयोगस्यापि मोक्षहेतुत्वं सिद्धं, तत्र चासंप्रज्ञातयोगेनाखिलसंस्कारदाहकेन प्रारब्धकर्माप्यतिक्रम्यत इति ज्ञानाद्विशेषः, ज्ञानस्य हि प्रारब्धनाशकत्वे बाधिकाऽस्ति "तस्य तावदेव चिर"मित्यादिश्रुतिर्जीवन्मुक्तिश्रुतिस्मृतयश्च, योगस्य प्रारब्धनाशकत्वे बाधकं नास्ति प्रत्युत "दग्धकर्मचयोऽचिरादि"त्येव स्मर्यते, अतः प्रारब्धमपि कर्म कर्मविपाकोक्तप्रायश्चित्तादिवदेवातिक्रम्य झटिति मोचनमेव योगस्य फलम्, अन्यच्च योगद्वयेनाखिलसंस्कारक्षये भोगसंस्काराख्यसहकार्यभावात् प्रारब्धं कर्मापि यत्फलाक्षमं भवति; इदमपि योगफलम्, तदुक्तं मोक्षधर्मे—

"नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलमि"ति, ।

बलं प्रारब्धस्याप्यतिक्रमेण स्वेच्छया शीघ्रमोक्षहेतुः, अपि च वृत्तिनिरोधात्मको योग एव दुःखनिवृत्त्यात्मकमोक्षे साक्षाद्धेतुः पुरुषे दुःखस्य चित्तवृत्त्यौपाधिकत्वाद्, उपाधिनिवृत्तिश्चौपाधिकनिवृत्तौ चरमकारणमतो ज्ञानेन न योगस्यान्यथासिद्धिः, ज्ञानवैराग्यकर्मक्षयादीनां वृत्तिनिरोधाख्यचरमकारणद्वारैव दुःखात्यन्तोच्छेदहेतुत्वाद्, वृत्त्यत्यन्तनिरोधस्तु चरमासंप्रज्ञाते भवति, यत्र संस्कारस्यात्यन्तक्षयेण चित्तस्य विलयान्मोक्षो भवति, तथा च द्वारद्वारिभावेनापि ज्ञानस्येव संप्रज्ञातयोगस्यापि मोक्षहेतुत्वं सिद्धम्, असंप्रज्ञातयोगस्य च साक्षान्मोक्षहेतुत्वं "तदा द्रष्टुः स्वरूपेऽवस्थान"मिति सूत्रकारः स्वयं वक्ष्यति,

"मुक्तिर्हित्वाऽन्यथाभावं स्वरूपेण व्यवस्थिति"-

रित्यादिवाक्यैरात्यन्तिकस्य स्वरूपावस्थानस्यैव मोक्षत्वादिति दिक् ॥१॥

तदेवं चित्तभूमिषु लक्ष्यालक्ष्यविवेकपूर्वकं प्रसिद्धस्य योगलक्षणस्यातिव्याप्तिं प्रदर्श्य योगलक्षणाकाङ्क्षोत्पादिता, अतः परं लक्षणपरतयोत्तरसूत्रमवतारयति—"तस्य लक्षणाभिधित्सये"ति। तस्य द्विविधस्य योगस्य, उक्तातिव्याप्तिनिराकरणान्यथाऽनुपपत्त्या सूत्रद्वयेनैव लक्ष-

(१) सर्वशब्दाग्रहणात् संप्रज्ञातोऽपि योग इत्याऽऽख्यायते, चित्तं हि

भास्वती।

णम् , अव्याप्त्यतिव्याप्तिदोषहीनं न्याय्यम्=अनवद्यम् प्रस्फुटञ्च, सर्वेति—सर्वशब्दाग्र-हणात् = सर्वचित्तवृत्तिनिरोधो योग इत्यकथनात् सम्प्रज्ञातोऽप्युक्तयोगलक्षणान्तर्गतो भव-ति, सम्प्रज्ञाते योगे तत्त्वज्ञानरूपा वृत्तिर्न निरुद्धा भवेत्, तदन्याश्च निरुद्धा भवन्तीति, चित्तमिति-प्रख्याः = प्रकाशस्वभावाः प्रकाशाधिकाः सर्वे बोधाः, सा सत्त्वगुणस्य लि-ङ्गम् , प्रवृत्तिः = इच्छाऽऽदयः सर्वाश्चेष्टाः, सा च क्रियाशीलस्य रजसो लिङ्गम् , स्थितिः = आवृतस्वरूपाः सर्वे संस्काराः, सा हि स्थितिशीलस्य तमसः स्वालक्षण्यम् , चित्त एतेषां-

तत्त्ववैशारदी।

निरोद्धव्याः ? इत्याशङ्क्य प्रथमं तावदवस्थासम्बन्धे हेतुमुपन्यस्यति—"चित्तं हि" इति। प्र-ख्याशीलत्वात् सत्त्वगुणं, प्रवृत्तिशीलत्वाद्रजोगुणं, स्थितिशीलत्वात् तमोगुणम् , प्रख्याग्रह-णमुपलक्षणार्थं, तेनान्येऽपि सात्त्विकाः प्रसादलाघवप्रीत्यादयः सूच्यन्ते, प्रवृत्त्या च परिताप-शोकादयो राजसाः, प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिः, स्थितिग्रहणाद् गौरवावरणदैन्याद-य उपलक्ष्यन्ते,

एतदुक्तं भवति—एकमपि चित्तं त्रिगुणनिमित्ततया गुणानां च वैषम्येण परस्परविमर्दवै-चित्र्याद्विचित्रपरिणामं सदनेकावस्थामुपपद्यत इति क्षिप्ताद्या एव चित्तस्य भूमीर्यथासम्भ-

पातञ्जलरहस्यम्।

अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः-

इति सांख्यसिद्धान्तमाह—

वार्त्तिकम्।

णसमाधिर्भविष्यतीति सूचयितुमभिधित्सयेत्युक्तमन्यथा हि तस्य लक्षणसूत्रं प्रवृत्त इत्येताव-न्मात्रमुच्येत,

"योगश्चित्तवृत्तिनिरोधः", चित्तमन्तःकरणसामान्यमेकस्यैवान्तःकरणस्य वृत्तिभेदमात्रेण चतुर्धाऽत्र दर्शने विभागात्, तस्य यावल्लक्ष्यमाणा वृत्तयस्तासां निरोधस्तासां लयाख्योऽधि-करणस्यैवावस्थाविशेषोऽभावस्यास्मन्मतेऽधिकरणावस्थाविशेषरूपत्वात्, स योग इत्यर्थः,

नन्विदं लक्षणं संप्रज्ञातस्याव्यापकं तत्र ध्येयाकारवृत्तिसत्त्वादित्याशङ्क्य भाष्यकार आह-"सर्वशब्दे"ति। सर्ववृत्तिनिरोध इत्यवचनादित्यर्थः,

नन्वेवं पूर्वोक्तातिव्याप्तिः-क्षिप्तादिष्वपि यत्किंचिद्वृत्तिनिरोधादिति चेद् ? न-"तदा द्रष्टुः स्वरूपेऽवस्थानमि"ति वक्ष्यमाणसूत्रसाहित्येनैवास्य लक्षणत्वात्, तथा च द्रष्टृस्वरूपावस्थि-तिहेतुश्चित्तवृत्तिनिरोधः क्षिप्ताद्यवस्थासु नास्तीति नातिव्याप्तिः, संप्रज्ञातस्य च स्वरूपाव-स्थितिहेतुत्वमसंप्रज्ञातद्वाराऽस्त्येवेति,

परे तु क्षिणोति च क्लेशानिति पूर्वभाष्यानुसारेण क्लेशकर्मादिपरिपन्थित्वं निरोधविशेषणंपू-रणीयं, तथा च क्लेशकर्मादिपरिपन्थित्वे सति चित्तवृत्तिनिरोधत्वं योगद्वयसाधारणं लक्षणमित्याहुः,

अस्य च लक्षणस्य क्षिप्तादिभूमित्रयेऽतिव्याप्तिर्नास्तीत्यत्र हेतुं क्रमेण प्रतिपादयति, चित्तंही-त्यादिना। प्रख्या = तत्त्वज्ञानम्, अनेन सर्वे सात्त्विका गुणा उपलक्षिताः, प्रवृत्तिः = कर्म, अनेन सर्वे राजसा गुणा ग्राह्याः, स्थितिः = वृत्त्याद्यगतिशून्यता निद्रेति यावद्, अनेन सर्वे तामसा गु-णा ग्राह्याः, एते क्रमात् सत्त्वरजस्तमआख्यानां द्रव्याणां धर्माः पराश्रितत्वाद् रूपादिवद् गुणा इत्युच्यन्ते, तदाश्रयास्तु सत्त्वादिद्रव्याणि रज्ज्वारम्भकतन्तुवदेव गुणा इत्युच्यन्ते, तथा च प्र-ख्यादिस्वभावकत्वाच् चित्तं त्रिगुणं सत्त्वादिगुणत्रयनिर्मितं रज्जुवदित्यर्थः, ततः किमित्यत-

(१) तथा च क्लेशादिपरिपन्थित्वे सति चित्तवृत्तिनिरोधत्वं योगत्वमिति निर्दुष्टं लक्षणं बोद्धव्यम्।

प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणम्, प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्य्यविषयप्रियं भवति,

तदेव तमसाऽनुविद्धमधर्माज्ञानावैराग्यानैश्वर्य्योपगं भवति, तदेव

भास्वती ।

त्रिविधगुणधर्माणां लाभाच्चित्तं त्रिगुणम्, प्रख्येति । प्रख्यारूपं चित्तसत्त्वं चित्तरूपेण परिणतं सत्त्वं यदा रजस्तमोभ्यां संसृष्टं = सम्प्रयुक्तं विक्षेपमोहबहुलमित्यर्थः भवति; तदा तच्चित्तमैश्वर्यविषयप्रियम्, ऐश्वर्यं लौकिकी प्रभुता तच्च शब्दादिर्विषयश्च प्रियो यस्य तादृशं भवति, तदिति । चित्तसत्त्वं यदा तमसाऽनुविद्धं = तामसकर्मसंस्काराभिभूतं भवति तदाऽधर्मादीनाम् उपगम् = उपगतम्, अधर्मादीनां संस्कारविपाकवदित्यर्थः भवति, तदेव चित्तसत्त्वं यदा प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानं सम्प्रज्ञातवदित्यर्थः, तथा च रजोमात्रया रजसो मात्रा = कार्यकरं परिमाणं तयाऽनुविद्धं चित्तसत्त्वं धर्मज्ञानवैराग्यैश्वर्योपगं

तत्त्ववैशारदी ।

वमवान्तरावस्थाभेदवतीरादर्शयति—"प्रख्यारूपं हि" इति । चित्तरूपेण परिणतं सत्त्वं चित्तसत्त्वम्, तदेवं प्रख्यारूपतया सत्त्वप्राधान्यं चित्तस्य दर्शितम्, तत्र चित्ते सत्त्वात् किंचिदूने रजस्तमसी यदा मिथः समे च भवतस्तदैश्वर्य्यञ्च विषयाश्च शब्दादयस्तान्येव प्रियाणि यस्य तत्तथोक्तं सत्त्वप्राधान्यात् खलु चित्तं तत्त्वं प्रणिधित्सदपि तत्त्वस्य तमसाऽपिहितत्वादणिमादिकमैश्वर्य्यमेव तत्त्वमभिमन्यमानं तत्प्रणिधित्सति, प्रणिधत्ते च क्षणमथ रजसा क्षिप्यमाणं तत्राप्यलब्धस्थिति तत्प्रियमात्रं भवति, शब्दादिषु पुनरस्य स्वरसवाही प्रेमा निरूढ एव, तदनेन विक्षिप्तं चित्तमुक्तम्, क्षिप्तं चित्तं दर्शयन् मूढमपि सूचयति—"तदेव तमसा" इति । यदा हि तमो रजो विजित्य प्रसृतं तदा चित्तसत्त्वावरकतमःसमुत्सारणेऽशक्तत्वाद्रजसस्तमःस्थगितं चित्तमधर्माद्युपगच्छति, अज्ञानं च विपर्य्ययज्ञानमभावप्रत्ययालम्बनं च निद्राज्ञानमुक्तम्, ततश्च मूढाऽवस्थाऽपि सूचितेति, अनैश्वर्य्यं सर्वत्रेच्छाप्रतीघातः, अधर्मादिव्याप्तं चित्तं भवतीत्यर्थः, यदा तु तदेव चित्तसत्त्वमाविर्भूतसत्त्वमपगततमःपटलं सरजस्कं भवति

पातञ्जलरहस्यम् ।

चित्तं हीति । प्रख्या = प्रकाशः, ऐश्वर्यम् = अणिमादि, स्वरसवाही = जलस्येव निम्नगामिता, अज्ञानञ्च ज्ञानाभाव इति मतं निराह–विपर्यययज्ञानमिति । सत्प्रतियोगिकाभावकल्पनाद् वरं भावकल्पनं।लब्धित्यसुरामित्रादिवद्,

"भावान्तरमभावो हि कया चित्तु व्यपेक्षया"

इति भट्टोक्तेश्च, अपगततमःपटलम् = अनावरकम्, विशेषाः = शान्तघोरमूढशब्दाद्यन्विताः पृथिव्यादयः, तत्र शान्तो विरञ्च्यादिशब्दः, घोरो व्याघ्रादिशब्दः, मूढो मेघादिध्वनिः, एवं स्पर्शः पुत्रवह्निपवनादिषु, एवं रूपं चन्द्रसूर्यस्त्र्यादिषु, एवं रसो मधुरकटुकषायादिषु, एवं गन्धः कर्पूरलशुनकस्तूरिकाऽऽदिषूह्नेयम्, अविशेषास्तन्मात्राणि भूतमात्राणि भूतमात्रतामा-

वार्त्तिकम् ।

आह—"प्रख्यारूपं ही"ति । हिशब्दो वाक्यालङ्कारेऽवधारणे वा, चित्तसत्त्वमिति चित्तस्य सत्त्वप्राधान्यप्रतिपादनाय पुनरुक्तं, प्रख्यारूपमिति च तेजःसत्त्वव्यावर्त्तनायोक्तं, तथा च प्रख्यास्वभावं चित्तरूपं सत्त्वं स्वोपसर्जनभूताभ्यां रजस्तमोभ्यां संसर्गेण क्षिप्तावस्थायामणिमाद्यैश्वर्ये शब्दादिविषये चानुरक्तं भवतीत्यर्थः, अतः क्षिप्तावस्थस्य वृत्तिनिरोधस्य स्वरूपावस्थानाहेतुत्वाद् रागादिक्लेशपरिपन्थित्वाद्वा न तत्रातिव्याप्तिरिति भावः, क्षिप्तावस्थायामतिव्याप्तिं परिहृत्य मूढावस्थायामपि तां परिहरति—तदेव तमसेति । उपगमुन्मुखं तत्प्रियमि-

**प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यै-श्वर्य्योपगं भवति, तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्याति-मात्रं धर्ममेघध्यानोपगं भवति, तत्परं प्रसङ्ख्यानमित्याचक्षते ध्यायिनः,**

भास्वती।

भवति, धर्मः = अहिंसाऽऽदिः, ज्ञानं = योगजा प्रज्ञा, वैराग्यं = वशीकाराख्यम्, ऐश्वर्यं = विभूतिः, एतद्धर्मकं भवति चित्तम्, तदेव चित्तसत्त्वं रजोलेशमलापेतं = रजोलेशकृताद् मलाद् विक्षेपरूपाद् अपेतं = निर्मुक्तम्, न हि त्रिगुणं चित्तं कदाऽपि रजोगुणहीनं भवति, तस्माद् मलस्यैवापगमनं विवक्षितं न रजस इति, रजस्तु तदा सदृशप्रवाहरूपं विवेकख्यातिगतवि-कारं जनयति, न च तदन्यां विषयख्यातिमुत्पाद्य सत्त्वस्य विकारं मालिन्यञ्च सङ्घटयतीति विवेच्यम्, स्वरूपप्रतिष्ठं = सत्त्वमात्रप्रतिष्ठम्, सत्त्वस्योत्कर्षकाष्ठेव विवेकख्यातिस्त-न्मात्रप्रतिष्ठत्वाद् रजोमालिन्यहीनत्वाच्च सत्त्वं स्वरूपप्रतिष्ठमित्यर्थः, एवम् बुद्धिस-

तत्त्ववैशारदी।

तदा धर्मज्ञानवैराग्यैश्वर्य्याण्युपगच्छतीत्याह—"प्रक्षीण" इत्यादि, मोहस्तमस्तदेव चावरणं प्रकर्षेण क्षीणं यस्य तत्तथोक्तम्, अत एव सर्वतो (१)विशेषाविशेषलिङ्गमात्रालिङ्गपुरुषेषु प्र-द्योतमानम्, तथाऽपि न धर्माद्यैश्वर्य्याय च कल्पते, प्रवृत्त्यभावादित्यत आह—"अनुविद्धं-रजोमात्रया" इति, रजसः प्रवर्त्तकत्वादस्ति धर्मादिरित्यर्थः, तदनेन सम्प्रज्ञातसमाधिसम्प-न्नयोर्मधुभूमिकप्रज्ञाज्योतिषोर्मध्यमयोर्योगिनोश्चित्तसत्त्वं सङ्गृहीतम्, सम्प्रत्यतिक्रान्तभा-वनीयस्य ध्यायिनश्चतुर्थस्य चित्तावस्थामाह—"तदेवे"ति। चित्तं रजोलेशान्मलादपेतमत एव स्वरूपप्रतिष्ठम्, अभ्यासवैराग्यपुटपाकप्रबन्धविधूतरजस्तमोमलस्य हि बुद्धिसत्त्वतपनीयस्य स्वरूपप्रतिष्ठायां विषयेन्द्रियप्रत्याहृतस्यानवसिताधिकारतया च कार्य्यकारिणी विवेक-ख्यातिः परं कार्य्यमवशिष्यत इत्याह—"सत्त्व" इति। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं-धर्ममेघध्यानोपगं भवति, धर्ममेघश्च वक्ष्यते, अत्रैव योगिजनप्रसिद्धिमाह—"तत्परम्" इति।

पातञ्जलरहस्यम्।

पन्नानीत्यर्थः, लिङ्गमात्राः महदादिमनोऽन्ताः त्रयोदश प्रकृतौ लीनत्वाद्, अलिङ्गं प्रकृतिः कुत्रापि लयरहितत्वात्, प्रज्ञाज्योतिरिति विशोकाया नामान्तरम्, अतिक्रान्तभावनीय-स्य = जीवन्मुक्तस्य,

अनवसिताधिकारतयेति। जन्मरहितत्वेन, धर्ममेघः = परं वैराग्यम्, धर्मः प्रसङ्ख्यानादिः,

वार्त्तिकम्।

त्यर्थः, भावस्तु पूर्ववद्, विक्षिप्तावस्थायामतिव्याप्तिं परिहरति—तदेव प्रक्षीणेति। मोहस्तमो-द्रव्यं कार्यकारणाभेदात्, तदेव दर्पणस्य मलवच्चित्तसत्त्वस्यावरणं प्रक्षीणं यत्र तत्प्रक्षीणमो-हावरणं सर्वतः प्रद्योतमानं सर्वविषयाकारवृत्तिमद्, एवंभूतं हिरण्यगर्भादीनां चित्तं रजोलेशेन संभेदाद्विक्षिप्तं सद् धर्मादिचतुष्टयप्रियं भवतीत्यर्थः, अत्रापि भावः पूर्ववदेव बोध्यः, अवस्था-त्रयेऽतिव्याप्तिं परिहृत्यैकाग्रनिरुद्धावस्थयोर्लक्ष्ययोर्लक्षणं क्रमेण योजयति—तदेव रजोलेशेनेत्या-दिना। विक्षेपहेतुना रजोलेशेनापि मलेनापेतमत एव स्वरूपप्रतिष्ठं स्वाभाविकेन रूपेण प्रसादा-दिना सम्यगवस्थितं निर्मलदर्पणवद्, अतश्च सत्त्वपुरुषयोर्बुद्ध्यात्मनोर्विवेकख्यातिमात्रं तन्मा-त्रवृत्तिकं सद् धर्ममेघध्यानमात्रप्रियं भवति न तु क्लेशप्रियमैश्वर्यप्रियमित्यर्थः, धर्ममेघध्यानं-किमित्याकाङ्क्षायामाह—तत्परमिति। तद्धर्ममेघाख्यं ध्यानं परमं प्रसंख्यानं तत्त्वज्ञानं विवे-

(१) विशेषेषु = महाभूतपञ्चकस्थूलसूक्ष्मशरीरघटादिषु, अविशेषेषु = पञ्चतन्मात्राहंकारेषु, लिङ्गमात्रे = महति, अलिङ्गे = प्रधाने, पुरुषेषु = चेतनेषु।

चितिशक्तिरपरिणामिन्यप्रतिसङ्क्रमा दर्शितविषया शुद्धा चानन्ता च,

भास्वती।

स्वपुरुषान्यताख्यातिमात्रं चित्तसत्त्वं धर्ममेघध्यानोपगं भवति, तत् परं प्रसङ्ख्यानमित्याख्यायते योगिभिः, विवेकजसिद्धिस्तु–अपरं प्रसङ्ख्यानम्,

बुद्धिपुरुषयोर्विवेकस्य स्वरूपमाह–चितीति। चितिशक्तिः = पौरुषचैतन्यम्, अपरिणामिनी = सर्वविकाररहीना, अप्रतिसङ्क्रमा = कार्यजननाय प्रतिसञ्चाररहीना, दर्शितवि-

तत्त्ववैशारदी।

सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघपर्यन्तं परं (१)प्रसङ्ख्यानमित्याचक्षते ध्यायिनः, चित्तसामानाधिकरण्यं च धर्मधर्मिणोरभेदविवक्षया द्रष्टव्यम्, विवेकख्यातेर्हानहेतुं चितिशक्तेश्चोपादानहेतुं निरोधसमाधिमवतारयितुं चितिशक्तेः साधुतामसाधुताञ्च विवेकख्यातेर्दर्शयति—"चितिशक्तिरि"त्यादिना। सुखदुःखमोहात्मकत्वमशुद्धिः, सुखमोहावपि हि विवेकिनं दुःखाकुरुतोऽतो दुःखवद् हेयौ, तथा चातिसुन्दरमप्यन्तवद् दुनोति, तेन तदपि हेयमेव विवेकिनः, सेयमशुद्धिरन्तश्च चितिशक्तौ पुरुषे न स्त इत्यत उक्तं—"शुद्धा चानन्ता च" इति, ननु सुखदुःखमोहात्मकशब्दादीनियं चेतयमाना तदाकारापन्ना कथं विशुद्धा? तदाकारपरिग्रहपरिवर्जने च कुर्वती कथमनन्तेत्यत उक्तं—"दर्शितविषया" इति, दर्शितो विषयः शब्दादिर्यस्यै सा तथोक्ता, भवेदेतदेवं यदि बुद्धिवच्चितिशक्तिर्विषयाकारतामापद्येत, किन्तु बुद्धिरेव विषयाकारेण परिणता सती अतदाकारायै चितिशक्तयै विषयमादर्शयति; ततः पुरुषश्चेतयत इत्युच्यते, ननु विषयाकारां बुद्धिमनारूढायाश्चितिशक्तेः कथं विषयवेदनं विषयारोहे वा कथं न तदाकारापत्तिरित्यत उक्तम्–अप्रतिसंक्रमेति।"प्रतिसङ्क्रमः = संचारः स चितेर्नास्तीत्यर्थः, स एव कुतोऽस्या नास्तीत्यत उक्तम्—"अपरिणामिनी" इति। न चितेस्त्रिविधोऽपि धर्मलक्षणावस्थालक्षणः परिणामोऽस्ति येन क्रियारूपेण परि-

पातञ्जलरहस्यम्।

धर्मि चित्तम्, प्रसङ्ख्यानं वैराग्यम्, अतिसुन्दरं स्वर्गादिसुखम्, "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इत्यादिश्रुतेः स्वर्गादेरन्तवत्त्वश्रवणाद्, "यजन्यं तदनित्यम्" इति व्याप्तेश्च, "अपाम सोमम्" इत्यादि किञ्चित्कालस्थपरम्, शुद्धा = क्लेशकर्मादिधर्मात्यन्ताभावाधिकरणम्, अनन्ता = प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगिनी, अशुद्धिरन्तश्च पुरुषे नास्तीति,

"पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति श्रुतेः, तस्यामपीति।

"त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज।

उभे सत्यानृते त्यक्त्वा येन त्यजसि तत् त्यजे"—

ति श्रुतेः, उक्तं त्यक्त्वा ज्ञानमपि त्यजेत्यर्थः, त्रिविधेति। धर्मपरिणामो नाम मृत्सुवर्णादेर्घ-

वार्त्तिकम्।

ख्यातेरेव परा काष्ठेति योगिनो वदन्तीत्यर्थः, तथा चेयमेकाग्रता सत्त्वपुरुषान्यताख्यातिरूपिणी द्रष्टृस्वरूपावस्थाने हेतुः क्लेशकर्मादिपरिपन्थिनी चेति योगलक्षणाक्रान्तेति भावः, धर्ममेघसमाधिश्च सूत्रकारेणैव वक्ष्यते, यद्यप्यस्मिताऽनुगत एव संप्रज्ञातयोगे सत्त्वपुरुषान्यताख्यातिरस्ति न वितर्कानुगतादौ तथाऽप्यनेनैव तेऽप्युपलक्षणीया एतदङ्गभूतत्वात्तेषामिति, निरुद्धावस्थायामपि लक्षणं योजयन्नेव सकारणस्य निरोधस्यस्वरूपमाह–चितिशक्तिरित्यादिना। संप्रज्ञातकाले संसारहेतुत्वादिदोषदर्शनादेवेतरवृत्तिनिरोधो जातस्तस्माच्च सिद्धायां विवेकख्यातिनिष्ठायां विवेकख्यातेरप्यनात्मत्वसाक्षात्करणात् तत्फलसिद्धेश्च तत्रापि वैराग्यं भवति ततः सर्ववृत्तिनिरोध इति प्रक्रिया, तत्र यादृशी विवेकख्यातिनिष्ठा विवेकख्यातिवैराग्ये हेतुस्ता-

(१) "प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिरिति" ४ पा० २९ सूत्रेण।

सत्त्वगुणात्मिका चेयमतो विपरीता विवेकख्यातिरिति अतस्तस्यां विरक्तं-चित्तं तामपि ख्यातिं निरुणद्धि, तदवस्थं चित्तं संस्कारोपगं भवति, स-

भास्वती।

षया = दर्शितः सदा ज्ञातो बुद्धिरूपः प्रकाश्यविषयो यया सा, शुद्धा = गुणमलरहिता, अनन्ता = अन्तत्वारोपणायोग्या च, इयं = विवेकख्यातिः सत्त्वगुणात्मिका, सत्त्वं प्रकाशशीलं-तच्च चितोऽवभासोपग्रहणयोग्यं न तु स्वप्रकाशम्, तद्रूपा विवेकख्यातिः परिणामिनी जडा चेति, अतश्चितो विपरीता हेयेति, परेण वैराग्येण तामपि ख्यातिं निरुणद्धि चित्तम्, तदवस्थं हि चित्तं संस्कारोपगं = संस्कारमात्रशेषं प्रत्ययहीनम् भवति, सोपप्लवे तु निरोधे

तत्त्ववैशारदी।

णता सती बुद्धिसंयोगेन परिणमेत चितिशक्तिः, असङ्क्रान्ताया अपि विषयसंवेदनमुपपादयिष्यते, तत्सिद्धं चितिशक्तिः शोभनेति, विवेकख्यातिस्तु बुद्धिसत्त्वात्मिकाऽशोभनेत्युक्तम्, "अतः" - चितिशक्तेः, "विपरीता" इति । यदा च विवेकख्यातिरपि हेया तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानामिति भावः, ततस्तद्धेतोर्निरोधसमाधेरवतारो युज्यत इत्याह-"अतस्तस्याम्" इति । ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः, अथ निरुद्धाशेषवृत्ति चित्तं कीदृशमित्यत आह—"तदवस्थम्" इत्यादि । स—

पातञ्जलरहस्यम्।

टाद्याकारापत्तिः, लक्षणपरिणामो नामातीतप्रत्युदिताव्यपदेश्यरूपो वक्ष्यते, अवस्थापरिणामो नाम नूतननूतनतरनूतनतमत्वादि, परेणेति। कृतकृत्यरूपेण बीजे सत्यसति प्रतिबन्धेऽवश्यं का-

वार्त्तिकम्।

मादौ दर्शयति—ख्यातिरितीत्यन्तेन, चितिशक्तिः पुरुषाख्या न परिणामिनी पूर्वधर्मापाये धर्मान्तरोत्पत्तिः परिणामस्तद्रहिता कूटस्थनित्या परमार्थसत्येति यावत्, लोकेऽर्थप्रकाशनरूपे फल एव चैतन्यशब्दः प्रयुज्यते, चैतन्यफलोपधानं च न सर्वदा सर्वपुरुषेऽस्तीत्याशयेन शक्तिपदोपादानं, तथा च शक्तिरूपेणावस्थिता चितिरित्यर्थः, चितिश्च न गुणः किं तु प्रकाशस्वरूपं द्रव्यमिति "द्रष्टा दृशिमात्र"-इति सूत्रे विस्तरतः प्रतिपादयिष्यामः, यतोऽपरिणामिनी अत एव चितिशक्तिरप्रतिसंक्रमाऽसंचारा, यथा बुद्धिर्विषयं गच्छति तद्ग्रहणार्थं नैवं चितिरक्रियत्वात्, अथ वा नास्ति प्रतिसंक्रमः सङ्गो विषयेषु यस्या इत्यप्रतिसंक्रमा निर्लेपेति यावद्,

नन्वपरिणामित्वे चात्मनो विषयाकारत्वाभावात् कथं विषयस्फुरणं? तत्राह—दर्शितविषया, दर्शितो बुद्ध्या निवेदितो विषयो यस्या इति विग्रहः, विषयैः सह बुद्धिवृत्तिश्चितौ प्रतिबिम्बिता सती भासत इति भावः, "वृत्तिसारूप्यमितरत्रे"ति सूत्रे चैतद्व्यक्तं भविष्यति, यतोऽपरिणामिनी अत एव शुद्धाऽनन्ता च सुखदुःखमोहाद्यात्मकाशुद्धिरहिता पूर्णा च, उक्ताशुद्धेः परिणामरूपत्वात् सक्रियस्यैव परिच्छिन्नत्वाच्चेति, इयं = विवेकख्यातिः, धर्मधर्म्यभेदात्तद्वती वृत्तिः सत्त्वगुणात्मिका सत्त्वगुणस्य कार्या, अतश्चितिशक्तितो विपरीता परिणामिनी स्वयमेव विवेकाकारिणी प्रतिसंक्रमवती दीपशिखावद् विषयेषु सर्पणात्तथा जडा तथा सुखदुःखाद्यशुद्धिमती परिच्छिन्ना चेत्यतोऽनात्मत्वादिदोषदर्शनात् तत्फलसिद्धेश्च विवेकख्यात्यां विरक्तं प्रत्युत्पन्नालंप्रत्ययं चित्तं-तामपि ख्यातिं निरुणद्धि = आवृणोति विलापयतीति यावत्, परवैराग्येण हेतुना चित्तस्य सा वृत्तिः स्वयमेव विलीयते यथा निद्रादोषेण सुषुप्तौ जाग्रदादिवृत्तिरिति शर्करास्वादेनेव गुडदोषा अभिव्यज्यन्त इत्यतो विवेकख्यातेर्दोषदर्शने पुरुषगुणदर्शनमुपयुज्यत इति भावः, तथा यावद् वृत्तिदोषालिप्तत्वेन वृत्तिवैधर्म्येण वृत्तिभेदत आत्मा न दृश्यते तावद्दोषदर्शनेऽप्यात्मत्वभ्रमाद् वृत्तिवैराग्यं न घटते; आत्मत्वेनैव परमप्रियत्वाद्; अत आत्मवृत्त्योरुभयोरेव गुणदोषाभ्यां विविच्य दर्शनं वृत्तिवैराग्ये हेतुरित्याशयः, तदवस्थं निरोधावस्थं चित्तं संस्कारोपगं-

**निर्बीजः समाधिः, न तत्र किञ्चित् सम्प्रज्ञायत इत्यसम्प्रज्ञातः, द्विविधः स योगश्चित्तवृत्तिनिरोध इति ॥ २ ॥**

**तदवस्थे चेतसि विषयाभावाद् बुद्धिबोधात्मा(१) पुरुषः किंस्वभावः(२) ? इति–**

भास्वती ।

व्युत्थानसंस्कारास्तिष्ठन्ति, तत एव निरोधभङ्गः, तस्माद् निरोधावस्थायां प्रत्ययहीनत्वेऽपि चेतः संस्कारमात्रेणावतिष्ठते, कैवल्ये तु सर्वसंस्काराणां प्रविलयस्तदा चित्तं स्वकारणे प्रधाने विलीयते न च पुनरावर्त्तते, सम्प्रज्ञानं लब्ध्वा तदपि निरुध्य यदा प्रत्ययहीना निरुद्धावस्थाऽधिगम्यते तदा सोऽसम्प्रज्ञातयोग इति, ध्येयविषयरूपस्य बीजस्याभावाद् निरोधः समाधिर्निर्बीज इत्युच्यते ॥ २ ॥

तदिति—सूत्रमवतारयितुं पृच्छति, तदवस्थे = सर्ववृत्तिनिरूद्ध इत्यर्थः, चेतसि सति

तत्त्ववैशारदी ।

निरोधोऽवस्था यस्य तत्तथोक्तम्, निरोधस्य स्वरूपमाह—"स निर्बीज" इति । क्लेशसहितः कर्माशयो जात्यायुर्भोगा बीजं तस्मान्निर्गत इति निर्बीजः, अस्यैव योगिजनप्रसिद्धामन्वर्थां सञ्ज्ञामादर्शयति—"न तत्र" इति । उपसंहरति—"द्विविधः स योगश्चित्तवृत्तिनिरोध-इती" ति ॥ २ ॥

सम्प्रत्युत्तरसूत्रमवतारयँश्चोदयति—"तदवस्थे चेतसि" इति । किमाक्षेपे, तत्तदाकारपरि-

पातञ्जलरहस्यम् ।

यें स्यादिति सूचितम्, अन्वर्था = अनुगतार्था, न तु शब्दमात्रम् ॥ २ ॥

वार्त्तिकम् ।

संकारमात्रानुसारि संस्कारमात्ररूपेण प्रशान्तवाहि भवति, सेयं प्रशान्तवाहिता स पूर्वोक्तो-निर्बीजः समाधिः निरोधयोगो न किञ्चित्तत्र योगे ज्ञायत इति विग्रहेणासंप्रज्ञातनामा चेति वाक्यार्थः, असंप्रज्ञातयोगे चित्तबीजस्य संस्कारस्य तत्त्वज्ञानजन्यपर्यन्तस्याशेषतो दाहान्निर्बीजसंज्ञा तस्येति भावः, बीजदाहादेव चास्य निरोधस्य स्वरूपावस्थितिहेतुतया क्लेशकर्यादिपरिपन्थितया च लक्षणसङ्गतिरित्याशयः, सुषुप्तौ च निद्राऽऽख्यचित्तवृत्तिमत्त्वान्न संप्रज्ञातलक्षणातिव्याप्तिस्तत्कालीननिरोधस्य क्लेशादिपरिपन्थित्वाभावाच्च,

एतेन यदाधुनिकवेदान्तिब्रुवा असंप्रज्ञातेऽपि निर्विकल्पमात्मज्ञानं स्वरूपसद्बुद्धिवृत्तिरूपं तिष्ठतीति वदन्तिः तदप्रामाणिकत्वेनैतद्भाष्यविरोधेन चोपेक्षणीयम्,

"युञ्जीत योगी निर्जित्य त्रीन् गुणान् परमात्मनि ।
तन्मयश्चात्मतो भूत्वा चिद्वृत्तिमपि संत्यजेद्"

इति मार्कण्डेयपुराणादावैश्वरयोगेऽपि वृत्तिशून्यत्वावगमाच्च, निर्विकल्पं त्वात्मज्ञानं संप्रज्ञातकाल एव भवति शब्दार्थज्ञानविकल्पशून्यस्य संप्रज्ञातकालीनज्ञानस्यैव निर्विकल्पकस्य लयस्य मानत्वाद्, योगद्वयमुपसंहरति—द्विविध इति ॥ २ ॥

ननु चित्तवृत्तिनिरोधे कः पुरुषार्थ इत्याकाङ्क्षया योगलक्षणपूरणाय च प्रवर्तमानं योगस्य फलप्रतिपादकं सूत्रमधिकप्रश्नमुखेनोत्थापयति प्रसङ्गादात्मनः कौटस्थ्यमपि प्रतिपादयितुम्—तदवस्थ इति ।

---

( १ ) बुद्धिवृत्त्यवगाहिबोधस्वरूपः ।

( २ ) व्युत्थाने सविषयबुद्धिप्रतिबिम्बाश्रयत्वेन चेतनो निरोधे तदभावेन चैतन्यशून्यो, यद्वा बुद्धिवृत्त्युपाधिनाऽविवेकाद् बोद्धृत्वम्, अन्यदा तदसंपर्कादात्मप्रकाशमात्रेऽवस्थित इति संदेहः ।

## (१)तदा द्रष्टुः स्वरूपेऽवस्थानम्॥ ३ ॥

स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये, व्युत्थानचित्ते तु सति

भास्वती।

विषयाभावात् = पुरुषविषयरूपात्मबुद्धेरप्यभावाद्, बुद्धिबोधात्मा = आत्मबुद्धेर्बोद्धेत्यर्थः, पुरुषः किंस्वभावः? उत्तरं—तदेति सूत्रम्, तदा निर्बीजसमाधौ चितिशक्तिः स्वरूपप्रति-

तत्त्ववैशारदी।

णतबुद्धिबोधात्मा खल्वयं पुरुषः सदाऽनुभूयते, न बुद्धिबोधरहितोऽतोऽस्य पुरुषस्य बुद्धिबोधः स्वभावः सवितुरिव प्रकाशः, न च संस्कारशेषे चेतसि सोऽस्ति, न च स्वंभावमपहाय भावो- वर्त्तितुमर्हति,

स्यादेतत्—संस्कारशेषामपि बुद्धिं कस्मात् पुरुषो न बुध्यत इत्यत आह—"विषयाभा- वाद्" इति। न बुद्धिमात्रं पुरुषस्य विषयोऽपि तु पुरुषार्थवती बुद्धिः, विवेकख्यातिविषय भोगौ च पुरुषार्थौ तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषयाभावः, सूत्रेण परिहरति— "तदा द्रष्टुः स्वरूपेऽवस्थानम्",

स्वरूप इत्यारोपितं शान्तघोरमूढस्वरूपं निवर्त्तयति, पुरुषस्य हि चैतन्यं स्वरूपमनौपा- धिकं, न तु बुद्धिबोधः शान्तादिरूपः, औपाधिको हि सः, स्फटिकस्येव स्वभावस्वच्छधवलस्य जपाकुसुमसन्निधानोपाधिररुणिमा, न चोपाधिनिवृत्तावुपहितनिवृत्तिरतिप्रसङ्गादिति भावः, स्वरूपस्य चाभेदेऽपि विकल्प्याधिकरणभाव उक्त इति, अयमेवार्थो भाष्यकृता द्योत्यते-"स्व- रूपप्रतिष्ठा" इति, तदानीं = निरोधावस्थायां न व्युत्थानावस्थायामिति भावः, स्यादेतद्— व्युत्थानावस्थायामप्रतिष्ठिता स्वरूपे चितिशक्तिर्निरोधावस्थायां प्रतितिष्ठन्ती परिणामिनी स्याद्, व्युत्थाने वा स्वरूपप्रतिष्ठाने व्युत्थाननिरोधयोरविशेष इत्यत आह—"व्युत्थानचित्ते

पातञ्जलरहस्यम्।

सवितुरिति व्यतिरेकदृष्टान्तः, तस्य परिणामित्वात् पुंसस्तदनधिकरणत्वात्,

"सदृशादृष्टसंस्काराः स्मृतिबीजस्य हेतवः"

इत्युक्तिमाश्रित्याह—न चेति। आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः, कार्यान्वेयत्वात्तेषां, निरधिकारे चेतसि सोऽकिञ्चित्करः, भावो धर्मी स्वभावं धर्मं विना वर्तितुं नार्हतीति, यथा वह्निरौष्ण्यप्रकाशं विना, बुद्धिस्थमर्थं पुरुषबुद्धिश्चेतयते न तु बुद्धिमा- त्रम्, यथा—"पोटा स्त्रीपुंसलक्षणा" इत्यभिधानात्, स्वरूप इति आरोपितरूपं निषेधति,

वार्त्तिकम्।

नन्वसंप्रज्ञातावस्थे चेतसि सति बुद्धिबोधात्मा बुद्धिविषयकबोधस्वरूपो बुद्धिसाक्षी पुरुषः किंस्वभावः केन रूपेण तिष्ठति किं व्युत्थान इव तदानीमपि प्रकाशरूप एव तिष्ठति वृ- त्त्याख्यदृश्याभावादेव तु न पश्यति अथ वा काष्ठवदप्रकाशरूप एव आत्मा तदा तिष्ठति, व्यु- त्थानकाले तु निमित्तविशेषात् प्रकाशरूपेण परिणमते किं वा दशाक्षये दीपवन्नश्यतीत्यर्थः, एतेष्वाद्यपक्षं सूत्रेण सिद्धान्तयति—

"तदा द्रष्टुः स्वरूपेऽवस्थानम्",

तदाऽसंप्रज्ञातयोगकाले द्रष्टुः चितिशक्तेः पुरुषस्य स्वरूपे निर्विषयचैतन्यमात्रेऽवस्थान- मित्यर्थः, यथा जपापाये स्फटिकस्यालोहिते स्वस्वरूपेऽवस्थानं तथा वृत्त्यपाये पुरुषस्य वृत्ति- प्रतिबिम्बशून्ये स्वस्वरूपेऽवस्थानमिति भावः, यथा च तदा संस्कारशेषबुद्धेर्भानं न भवति तथोत्तरसूत्रे वक्ष्यामः, तथा च कूटस्थ एव पुरुषो व्युत्थान इव तदानीमपि प्रकाशस्वरूप एव तिष्ठति, योगलक्षणमप्येतद्धेतुनिरोधत्वमेव, तत्र च वृत्त्यात्मकदुःखाभावः पुरुषार्थ इति भावः,

---

(१) द्वितीयकोटिं सिद्धान्तयति—तदेति।

तथाऽपि भवन्ती न तथा ॥ ३ ॥

कथं तर्हि ?

दर्शितविषयत्वात्—

**वृत्तिसारूप्यमितरत्र ॥ ४ ॥**

भास्वती ।

छा—औपचारिकवैरूप्यहीना भवति यथा कैवल्ये=चित्तस्य पुनरुत्थानहीनलये, निर्विकारत्वयाश्रितिशक्तेः कथं पुनः स्वरूपप्रतिष्ठेत्याह—व्युत्थिते चित्ते सति स्वरूपप्रतिष्ठाऽपि चितिर्न तथेति प्रतीयते ॥ ३ ॥

कथं चितिशक्तिः स्वरूपाप्रतिष्ठेव प्रतिभासते ? दर्शितविषयत्वाद् "वृत्तिसारूप्यमितरत्र", पुरुषविषया बुद्धिवृत्तयः पौरुषप्रकाशेन प्रकाशिता भवन्ति, एवं दर्शितविषयत्वाद् वृत्तिस्वरूप इव प्रतीयते, व्युत्थान इति । व्युत्थाने=अनिरुद्धचित्ततायां या वृत्तयः तद्विशिष्टवृत्तिः, ताभिर्वृत्तिभिः सहाविशिष्टा=एकवत् प्रतीयमाना वृत्तिः सत्ता यस्य

तत्त्ववैशारदी ।

त्वि" ति, न जातु कूटस्थनित्या चितिशक्तिः स्वरूपाच्च्यवते, तेन यथा निरोधे तथैव व्युत्थानेऽपि, न खलु शुक्तिकायाः प्रमाणविपर्य्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवतः, प्रतिपत्ता तु तथाभूतमप्यतथात्वेनाभिमन्यते, निरोधसमाधिमपेक्ष्य सम्प्रज्ञातोऽपि व्युत्थानमेवेति ॥ ३ ॥

सूत्रान्तरमवतारयितुं पृच्छति—"कथन्तर्हि" इति । यदि तथाऽपि भवन्ती न तथा, केन तर्हि प्रकारेण प्रकाशत इत्यर्थः ? हेतुपदमध्याहृत्य सूत्रं पठति—दर्शितविषयत्वाद् "वृत्तिसारूप्यमितरत्र",

इतरत्र व्युत्थाने याश्चित्तवृत्तयः=शान्तघोरमूढास्ता एवाविशिष्टा=अभिन्ना वृत्तयो यस्य पुरुषस्य स तथोक्तः, "सारूप्यम्" इत्यत्र स शब्द एकपर्य्यायः, एतदुक्तं भवति—जपाकुसुमस्फटिकयोरिव बुद्धिपुरुषयोः संनिधानादभेदग्रहे बुद्धिवृत्तीः पुरुषे समारोप्य शान्तोऽस्मि दुःखितोऽस्मि मूढोऽस्मीत्यध्यवस्यति, यथा मलिने दर्पणतले प्रतिबिम्बितं मुखं मलिनमारोप्य शोचत्यात्मानं मलिनोऽस्मीति, यद्यपि पुरुषसमारोपोऽपि शब्दादिविज्ञानवद् बुद्धिवृत्तिर्यद्यपि

पातञ्जलरहस्यम् ।

तत्र श्रुतिः—"स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति", निरूपादानस्य द्रव्यस्याकाशवदाश्रयाश्रयिभावप्रतिपत्तौ भ्रान्तवृत्तिमत्त्वाविशेषाद् व्युत्थानमेवेति ॥ ३ ॥

तथा भवन्ती कैवल्यरूपाऽपि व्युत्थाने न तथा भेदेनानाभासमानत्वादेकरूपेव, सादृश्यस्य भेदघटितत्वादिति भावः, मुखे दर्पणगतमालिन्यमारोप्योक्तं मलिनमिति, शोचत्या-

वार्त्तिकम्

सोऽयं पुरुषार्थो भाष्यकारेण सूचितो—"यथा कैवल्य" इत्यनेन, कैवल्ये हि दुःखनिवृत्तिरेव पुरुषार्थ इति वक्ष्यति "हेयं दुःखमनागत"मिति सूत्रेणेति, क्रमेण चरमासंप्रज्ञातेऽशेषसंस्कारक्षयात् चित्तेन सह वृत्तीनामात्यन्तिकनिरोधे सत्यात्यन्तिकं स्वरूपावस्थानं मोक्षाख्यमिति,

ननु तदानीं दुःखाभावेऽन्यदा दुःखमस्तीत्यायातं तथा चापरिणामित्वानुपपत्तिरित्याशङ्कां परिहरति भाष्यकारः—व्युत्थानेति । व्युत्थानचित्तदशायां तु चितिस्तथाऽपि स्वरूपेण तिष्ठन्ती न तथा नासंप्रज्ञातस्य कैवल्यस्य च समानरूपेत्यर्थः ॥ ३ ॥

सूत्रान्तरमवतारयितुं पृच्छति—कथं तर्हीति । कूटस्थाऽपि चितिः केन प्रकारेण तर्हि व्युत्थाने तिष्ठतीत्यर्थः, असंप्रज्ञातापेक्षया संप्रज्ञातोऽप्यत्र व्युत्थानं बोध्यम्, अत्र प्रत्युत्तरंसूत्रं हेतुपदमध्याहृत्य पठति, दर्शितविषयत्वादिति ।

व्युत्थाने याश्चित्तवृत्तयस्तदविशिष्टवृत्तिः पुरुषः,(१) तथा च सूत्रम्—"एकमेव दर्शनं ख्यातिरेव दर्शनमि(२)ति",

भास्वती।

तादृशो भवति पुरुषः, अत्रेदं पञ्चशिखाचार्यसूत्रम्—"एकमेव दर्शनं चैतन्यं ख्यातिर्बुद्धि-रेव दर्शनमिति, चिद्रूपं पुरुषोपदर्शनं तथा बुद्धिरूपा ख्यातिश्च, एकमविभागापन्नं वस्त्वि-

तत्त्ववैशारदी।

च प्राकृतत्वेनाचिद्रूपतयाऽनुभाव्यस्तथाऽपि बुद्धेः पुरुषत्वमापादयन् पुरुषवृत्तिरिवानुभव इवा-वभासते, तथा चायमविपर्य्ययोऽप्यात्मा विपर्य्ययवानिवाभोक्ताऽपि भोक्तेव विवेकख्याति-रहितोऽपि तत्सहित इवाविवेकख्यात्यां प्रकाशते, एतच्च "चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" पा०४सू० २२ इत्यत्र "सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोग"—३ पा० ३५ सू० इत्यत्र चोपपादयिष्यते, एतच्च मतान्तरेऽपि सिद्धमित्याह—"तथा च"(३) इति। पञ्चशिखाचार्य्यस्य सूत्रम्—"एकमेव दर्शनं ख्यातिरेव दर्शनम्" इति।

ननु कथमेकं दर्शनं यावता बुद्धेः शब्दादिविषया विवेकविषया च वृत्तिः प्राकृततया जड-त्वेनानुभाव्या दर्शनं, ततोऽन्यत् पुरुषस्य चैतन्यमनुभवो दर्शनमित्यत आह—"ख्यातिरेव दर्शनम्" इति।

उदयव्ययधर्मिणीं वृत्तिं ख्यातिं लौकिकीमभिप्रेत्यैतदुक्तम्—"एकमेव" इति। चैतन्यन्तु पुरुषस्य स्वभावो न ख्यातिः, चैतन्यं तु न लोकप्रत्यक्षगोचरोऽपि त्वागमानुमानगोचर इत्यर्थः, तदनेन व्युत्थानावस्थायां मूलकारणमविद्यां दर्शयता तद्धेतुकः संयोगो भोगहेतुः स्वस्वामि-

पातञ्जलरहस्यम्।

त्वानमिति। समारोपोऽपि बुद्धिवृत्तिश्चेतःपरिणामित्वादिति भावः, पुंप्रकृत्योर्जलदुग्धयोरि-

वार्त्तिकम्।

"वृत्तिसारूप्यमितरत्र" इतरत्र व्युत्थाने चित्तेन सह द्रष्टुर्वृत्तौ सारूप्यमित्यर्थः, व्युत्थाने हि बिम्बप्रतिबिम्बरूपयोर्बुद्धिपुरुषवृत्त्योः सारूप्यं, तदेतद्व्याचष्टे—व्युत्थानेति। इतरत्र व्यु-त्थाने याश्चित्तस्य वृत्तयो दीपस्य शिखा इव द्रव्यरूपा भङ्गुरा अवस्थापरिणामाः मूषानिषि-क्तद्रुतताम्रवत् स्वसंयुक्तार्थाकारास्त्रिगुणकार्यत्वात् सुखदुःखमोहाश्रयतया शान्तघोरमूढाख्या-भवन्ति ताभिरविशिष्टा अविलक्षणा वृत्तयो यस्य पुरुषस्य स तथा, वृत्तिश्च गुणो न भवति 'भागगुणाभ्यां तत्त्वान्तरं वृत्तिः संबन्धार्थं सर्पती'ति सांख्यसूत्राद्, भागो विभक्तांशोऽ-ग्निविस्फुलिङ्गवदिति, कुतः पुनरपरिणामिनो वृत्तिस्तत्रोक्तं—दर्शितविषयत्वादित्यर्थः, बुद्ध्या निवेदितविषयत्वादित्यर्थः, निवेदनं च स्वारूढविषयस्य प्रतिबिम्बरूपेण चित्याधानम्,

"गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति।
अन्तःकरणरूपाय तस्मै विश्वात्मने नम"—

इति विष्णुपुराणादिभ्यः,

एतदुक्तं भवति—यद्यपि पुरुषश्चिन्मात्रोऽविकारी तथाऽपि बुद्धेर्विषयाकारवृत्तीनां पुरुषे यानि प्रतिबिम्बानि तान्येव पुरुषस्य वृत्तयः, न च ताभिरवस्तुभूताभिः परिणामित्वं, स्फटिकस्ये-वातस्वतोऽन्यथाभावादिति, तदुक्तं साङ्ख्ये,—जपास्फटिकयोरिव नोपरागः किं त्वभिमान—"

(१) अत्रायंभावः—वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वाद् योगलक्षणसूत्रघटकचित्तवृत्तिनिरोधे ज्ञातव्ये चित्तज्ञानस्यावश्यकत्वेन तल्लक्षणपरत्वं राजमार्त्तण्डे तृतीयतुरीयसूत्रयोरुक्तं—यस्मिन्नेकाग्रतया-ऽप्यपरिणतेऽर्थोनिरुद्धे चितेः स्वरूपावस्थितिः, व्युत्थिते च सा तच्छायां भजते तच्चित्तमिति तात्पर्य्यकेण-ग्रन्थेन (२) वार्त्तिके सूत्रघटकतेतिपदस्योक्ता।

(३) ईश्वरानभ्युपगममतेऽपि।

चित्तमयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेन स्वं भवति

भास्वती।

व प्रतीयत इत्यर्थः, चित्तमिति । अयस्कान्तमणिर्यथा सांनिध्यादसंस्पृश्याप्युपकरोति तथा चित्तं सान्निध्यादेव पुरुषस्य योगापवर्गावाचरति, सांनिध्यमत्रैकप्रत्ययगतत्वं, न च

तत्त्ववैशारदी।

भावोऽपि सूचित इति, तमुपपादयन्नाह-"चित्तम्" इति । चित्तं स्वं भवति पुरुषस्य स्वाभिन इति संबन्धः,

ननु चित्तजनितमुपकारं भजमानो हि चेतनश्चित्तस्येशिता, न चास्य तज्जनितोपकारसंभवस्तदसंबन्धादनुपकार्य्यत्वात्, तत्संयोगतदुपकारभागित्वे च परिणामित्वप्रसङ्गादित्यत आह-"अयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेन" इति, न पुरुषसंयुक्तं चित्तमपि तु तत्संनिहितं, संनिधिश्च पुरुषस्य न देशतः कालतो वा तदसंयोगात्, किन्तु योग्यतालक्षणः, अस्ति च पुरुषस्य भोक्तृशक्तिश्चित्तस्य भोग्यशक्तिस्तदुक्तं—"दृश्यत्वेन" इति। शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः, भोगश्च यद्यपि शब्दाद्याकारा वृत्तिश्चित्तस्य धर्मस्तथाऽपि चित्तचैतन्ययोरभेदसमारोपाद् वृत्तिसारूप्यात् पुरुषस्येत्युक्तम्, तस्माच्चित्तेनासंयोगेऽपि तज्जनितोपकारभागिता

पातञ्जलरहस्यम्।

वात्यन्तसङ्कीर्णत्वादेकमिव दर्शनं भवति, अनुभाव्या दर्शनमिति दृश्यते पुरुषेणेति व्युत्पत्त्या, अनादिरिति,

वार्त्तिकम्।

इति, सूत्रकारोऽपि वक्ष्यति-"चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदन"मिति,

एतेन सुखदुःखमोहगुणकवृत्तिसारूप्याद् व्युत्थाने चितिरपि दुःखादिमतीव यद्भवति तदेव चितेर्दुःखभोगो दुःखाभ्यवहरणरूपः, प्रतिबिम्बरूपदुःखहानमेव चासंप्रज्ञातस्य फलमिति सूत्रद्वयेन सिद्धम्,

ये त्वहं सुखीदुःखीत्यादिप्रत्ययादात्मन एव पारमार्थिकीं वृत्तिमिच्छन्ति त एवं प्रत्याख्येयाः, स्वत एव चेदात्मनः परिणामास्तर्हि सर्वावयवावच्छेदेन सर्वदा वृत्तिप्रसङ्गादनिर्मोक्षादिप्रसङ्गः, यदि मनःसंयोगो निमित्तं तर्हि लाघवादेकेन मनस्त्वेनैव हेतुताऽस्तु; आत्ममनस्तत्संयोगानां त्रयाणां हेतुत्वे गौरवाद्, अनुमानं चार्थाकारपरिणामसुखादिकमन्तःकरणोपादानकं बाधकाभावे सति तदन्वयव्यतिरेकानुविधायित्वाद् मनःसंयोगवदिति, भोगे व्यभिचारवारणाय सत्यन्तं, बुद्धेः स्वभोक्तृत्वे च बाधकं कर्तृकर्मविरोधं सूत्रकारो वक्ष्यति, अहं कर्त्ता सुखीत्यादि प्रत्ययास्तु—अहं गौर इत्यादिभ्रमशतान्तःपातित्वेनाप्रामाण्यज्ञानास्कन्दितामोक्तानुमानस्य बाधकाः, प्रत्युत—

"प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथाऽऽत्मानमकर्त्तारं स पश्यति"

इत्यादि स्मृत्युपोद्बलितेनोक्तानुमानेनैव बाध्यन्ते देहभिन्नात्मसाधकैरनुमानैरहं गौर इत्यादिप्रत्ययवदिति दिक्,

स्वोक्ते बुद्धिपुरुषयोर्वृत्तिसारूप्ये पञ्चशिखाचार्यसूत्रं प्रमाणयति—तथा च सूत्रमिति, ख्यातिर्बुद्धिर्दर्शनं पुरुषस्य, इत्यन्तं च सूत्रम्, तथा च ख्यातिरेव दर्शनमित्येकमेवैकाकारमेव दर्शनंभ्रमो लोकानामिति सूत्रार्थः, इतिशब्दश्चान्यो भाष्ययोजनार्थे पूरणीयः,

ननु सविषयवृत्तेः स्फुरणं चेतनसंयोगादेव भवतु यथा सजलघटादिप्रकाशः सूर्यसंबन्धात्, अतः किमर्थं चैतन्ये वृत्तिप्रतिबिम्बं वृत्तौ वा वक्ष्यमाणचैतन्यप्रतिबिम्बं कल्प्यते, सुख्यहं जानामीति बुद्धिपुरुषयोरेकताभ्रमस्तु परस्परप्रतिबिम्बं विनाऽपि दूरस्थवनस्पत्योरिव दोषवशादेव संभवति तत्कथं बुद्धिपुरुषयोर्वृत्तिसारूप्यसिद्धिरिति ?

वार्त्तिकम् ।

अत्रोच्यते—

चेतने तावद् बुद्धिप्रतिबिम्बमवश्यं स्वीकार्यम्, अन्यथा कूटस्थनित्यविभुचैतन्यस्य सर्वसंबन्धात्सदैव सर्वं वस्तु सर्वैर्ज्ञायेत न हि सूर्यसंबन्धे सति घटाद्यप्रकाशो दृष्ट इति,

न चाज्ञानाख्यं ज्ञानप्रतिबन्धकं चैतन्ये कल्पनीयं, नित्यज्ञानस्य प्रतिबन्धासंभवात्,

"दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मन"—

इत्यादिभिरात्मन्यज्ञानप्रतिषेधाच्च, अतोऽर्थभानस्य कादाचित्कत्वाद्युपपत्तयेऽर्थाकारतैवार्थग्रहणं वाच्यं बुद्धौ तथा दृष्टत्वाद्, बुद्धावपि हि संयोगमात्रस्यार्थग्रहणत्वेऽतीन्द्रियस्याप्यर्थस्य बुद्धिग्राह्यत्वप्रसङ्गात्, सा चार्थाकारता बुद्धौ परिणामरूपा स्वप्नादौ विषयाभावेन तत्प्रतिबिम्बासंभवात्, पुरुषे च प्रतिबिम्बरूपा, विद्यमानवृत्तिमात्रग्राहके पुंसि प्रतिबिम्बेनैवोपपत्तेरिति, न केवलं तर्कादेव चिति बुद्धेः प्रतिबिम्बं कल्प्यते; किंतु—

"तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥
यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः ।
रञ्जकाद्युपधानेन तद्वत्परमपूरुष—"

इत्यादिस्मृतिशतैरपीति—

न चैवं संस्कारशेषा बुद्धिः पुरुषे प्रतिबिम्बिता भायादित्यसंप्रज्ञातयोगानुपपत्तिरिति—वाच्यम् ?

परमाणोरिव वृत्त्यतिरिक्तानां प्रतिबिम्बसमर्पणासामर्थ्यस्य फलबलेन कल्पनाद् अनादिस्वस्वामिभावस्यैव प्रतिबिम्बनियामकतया वक्ष्यमाणत्वात्तु न परबुद्धिवृत्तेर्भानम्, अत एव पुरुषार्थवत्येव बुद्धिः पुरुषस्य विषय इति सांख्यसिद्धान्तो विवेकख्यातिविषयभोगौ च पुरुषार्थाविति, यथा च चिति बुद्धेः प्रतिबिम्बमेवं बुद्धावपि चित्प्रतिबिम्बं स्वीकार्यमन्यथा चैतन्यस्य भानानुपपत्तेः स्वयं साक्षात्स्वदर्शने कर्मकर्तृविरोधेन बुद्ध्यारूढतयैवात्मनो घटादिवज्ज्ञेयत्वाभ्युपगमात्,

तथा च वक्ष्यति सूत्रकारो—"द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थमि"ति, बुद्धावात्मप्रतिबिम्बमेव च तान्त्रिका बुद्धेश्चिच्छायाऽऽपत्तिरित्यात्माकारतेति प्राहुः,

प्रतिबिम्बोपाधौ बिम्बाकारो बुद्धेः परिणाम एव स च साक्षिभास्य इति,

एतेन नीरूपत्वाद् बुद्धिपुरुषयोरन्योन्यं प्रतिबिम्बनं न सम्भवतीत्यपास्तम्,

उभयत्रोभयाकारबुद्धिपरिणामस्यैव प्रतिबिम्बशब्देनात्र विवक्षितत्वाद् जलादावपि सूर्याद्याकारबुद्धिपरिणामस्यैव सूर्यादिप्रतिबिम्बितत्वाच्च, तदेवं बुद्ध्यात्मनोः परस्परप्रतिबिम्बरूपाद्दोषादेवैकताभ्रमोऽहं कर्त्ता सुखी जानामीत्यादिरूप इति, तदेतत्परस्परं प्रतिबिम्बं साङ्ख्यकारिकायामिवशब्दाभ्यामुक्तं—

"तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीन"—

इति दिक्,

यच्चैतच्चैतन्ये बुद्धिवृत्तिसारूप्यमुक्तं चैतन्यस्य वृत्त्याकारतारूपम् इदमेव चैतन्यस्यार्थोपरक्तं वृत्तिभानं तस्य चाकारोऽयं घट इत्यादिरूप एव, अन्यथा वृत्तिसारूप्यानुपपत्तेः, न तु वृत्तिबोधस्य पृथगाकारोऽस्ति घटमहं जानामि दुःखितोऽहमित्यादिकं तु बुद्धेरेवाकारान्तरं पुरुषस्यापरिणामित्वाद् अभ्रान्तत्वाच्चेति, तथा च सूत्रकारो वक्ष्यति—"चित्तेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदन"मिति,

ननु वृत्तितद्बोधौ यदि घटदीपाविवात्यन्तभिन्नौ न तु चिज्जडात्मकमविभक्तमेकं वस्तु मणिकान्तिवत् तर्हि तत्तच्चित्तवृत्तीनां प्रतिनियततत्तत्पुरुषमात्रबोध्यत्वे किं नियामकमित्याका-

पुरुषस्य स्वामिनः, (१)तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिसम्बन्धो हेतुः ॥४॥

भास्वती ।

दैशिकं सांनिध्यं, देशकालातीतत्वात् पुरुषस्य प्रधानस्य च, तच्च चित्तं दृश्यत्वेन स्वभावेन पुरुषस्य स्वामिनः स्वं भवति, मम बुद्धिरित्यवबोध एव तत्स्वभावावधारणे प्रधानम्, द्रष्टृत्वदृश्यत्वे एव मौलिकस्वभावौ ततो न तयोर्हेतुरस्ति तत्स्वाभाव्याद् द्रष्ट्रा सह दृश्या बुद्धिः संयुज्येत, पुम्प्रधानयोर्नित्यत्वात् संयोगोऽनादिः, स च संयोगः प्रवाहरूपत्वाद् हेतुमानित्युपरिष्टाद् वक्ष्यति ॥ ४ ॥

तत्त्ववैशारदी ।

पुरुषस्यापरिणामिता चेति सिद्धम्,

ननु स्वस्वामिसंबन्धो भोगहेतुरविद्यानिमित्तोऽविद्या तु किन्निमित्ता? न खलु निर्निमित्तं कार्य्यमुत्पद्यते, यथाऽऽहुः "स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता" इति शङ्कामुपसंहारव्याजेनोद्धरति—"तस्माच्चित्तवृत्तिबोध" इति । शान्तघोरमूढाकारचित्तवृत्त्युपभोगेऽनाद्यविद्यानिमित्तत्वादनादिसंयोगो हेतुः, अविद्यावासनयोश्च सन्तानो बीजाङ्कुरवदनादिरिति भावः ॥४॥

पातञ्जलरहस्यम् ।

"तदाकृत्युपरक्तानां व्यक्तीनामेकया विना ।
अनादिकाला वृत्तिर्या सा कार्यानादिता मता" इत्युक्तेरिति ॥ ४ ॥

वार्त्तिकम् ।

छायां प्रतिनियतयोरेव चित्तात्मनोरनादिः स्वस्वामिभावसंबन्धस्तन्नियामक इति प्रतिपादयति—"चित्तमयस्कान्तेत्यादिना सम्बन्धो हेतुरि"त्यन्तेन, तत्राप्यादावनादिं स्वस्वामिभावं युक्त्योपपादयति—चित्तमिति । यथाऽयस्कान्तमणिः स्वस्मिन्नेवायःसंनिधिकरणमात्रात् शल्यनिष्कर्षणाख्यमुपकारं कुर्वन् स्वामिनः स्वं भवति भोगसाधनत्वात्; तथैव चित्तमप्ययःसदृशविषयजातस्य स्वस्मिन् संनिधीकरणमात्राद् दृश्यत्वरूपमुपकारं कुर्वत् पुरुषस्य स्वामिनः स्वं भवति भोगसाधनत्वाद् अतश्चित्तपुरुषयोरनादिः स्वस्वामिभावः सम्बन्ध इति शेषः,

ततः किमित्यत आह—तस्मादिति । तस्मात् स्वस्वामिभावस्य सिद्धत्वात्, स एवानादिसम्बन्धः पुरुषस्य चित्तवृत्तिदर्शने हेतुरित्यर्थः; अतो न परचित्तेन परस्य वृत्तिसारूप्यं भवति, कदाऽपि तद्वृत्त्यवबोधेन तयोः स्वस्वामिसम्बन्धाभावाद्,

ननु स्वस्वामिभावस्य कथमनादित्वं स हि भोग्यभोक्तृभावरूपतया प्रलये न तिष्ठतीति ?

मैवम्—अभुज्यमानधनेऽपि सुषुप्तस्य स्वस्वामिभावेन स्वत्वस्वामित्वयोरतिरिक्तपदार्थत्वात् स्वरूपसंबन्धविशेषत्वाद्वा प्रतियोग्यनुयोगिभाववद्,

अथ वा स्वभुक्तवृत्तिवासनावत्त्वमेव बुद्धौ पुरुषस्य स्वत्वमीदृशो भोग्यभोक्तृभाव एव च तान्त्रिकैर्भोग्यभोक्तृयोग्यतेत्युच्यते, "चिदवसानो भोग" इति सांख्यसूत्रोक्तस्य सुखदुःखानुभवरूपभोगस्य पुरुषधर्मत्वादिति, स च स्वस्वामिभावश्चित्तपुरुषयोरनादिरेव स्वीक्रियते,

न च महत्तत्त्वरूपस्य चित्तस्य कार्यतया कथं तद्धर्मस्यानादित्वमिति वाच्यम् ?

अन्तःकरणस्य वृक्षवत् कार्यावस्थायामेव महत्तत्त्वपरिभाषास्वीकाराद् बीजावस्था तु प्रकृत्यंशत्वरूपा नित्यैव, अन्यथा धर्माधर्मसंस्कारादीनामाश्रयं विना प्रलयेऽवस्थानानुपपत्तेः प्रकृतिमात्रस्य तदाश्रयत्वे तत्कार्यभोगस्मृत्यादेरपि तन्निष्ठत्वस्यैवौचित्याद् अन्तःकरणकल्पनाऽनर्थक्यम्, "अन्तःकरणधर्मत्वं धर्मादीनामि"ति सांख्यसूत्रस्य यथाश्रुतार्थानुपपत्तिश्चेति,

अथैवं बुद्धितत्कारणयोरुभयोर्धर्मादिकल्पने गौरवमिति चेद् ? दृष्टानुसारितयाऽस्य गौरवस्य

---

(१) एतेनोक्तार्थनिरासाय यत्केन चिदुक्तोऽक्षरमर्यादाविरोधः स न समञ्जसः, शक्यार्थतात्पर्यार्थद्वयस्याप्यक्षरमर्यादान्तर्गतत्वाद्, राजमार्त्तण्डस्थात्रत्यग्रन्थेऽपरिणत इतिच्छेदादर्थप्राप्तापिशब्दसंबन्धाच्चेति ।

ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य—

वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥

भास्वती ।

ता इति । वृत्तयः पञ्चतय्यः = पञ्चविधाः, तथा च ताः क्लिष्टास्तथा अक्लिष्टा इति द्विधा, क्लेशेति । क्लेशहेतुकाः क्लेशाः=अविद्याऽऽदयः, ये विपर्यस्तप्रत्ययाः क्लिश्नन्ति ते क्लेशाः, तन्मयास्तन्मूलाश्च वृत्तयः क्लिष्टाः, ताश्च कर्मसंस्कारसञ्चयस्य क्षेत्रीभूतास्तद्विपरीता अक्लिष्टा-वृत्तयो विवेकख्यातिविषयाः, विवेकेन चित्तस्य निवृत्तिस्ततस्तादृशा वृत्तयो गुणाधिकार-विरोधिन्यो गुणप्रवृत्तेरेव क्लेशाः, अतो गुणनिवर्त्तिकाः ख्यातिविषया वृत्तयोऽक्लिष्टाः, विवेक-विषया मुख्या अक्लिष्टा वृत्तयः, विवेकस्य निर्वर्त्तिका अन्या अपि वृत्तयोऽक्लिष्टाः, ताश्च क्लिष्टप्रवाहपतिताः, अभ्यासवैराग्याभ्यां विच्छिन्ने क्लेशप्रवाहे परमार्थविषया वृत्तयो जा-यन्त इत्यर्थः, तथाऽक्लिष्टच्छिद्रेष्वपि क्लिष्टा वृत्तय उत्पद्यन्ते, यथोक्तं—"तच्छिद्रेषु प्रत्य-यान्तराणि संस्कारेभ्य" इति,

तत्त्ववैशारदी ।

स्यादेतत्—पुरुषो हि शक्य उपदिश्यते, न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यो, न च सहस्रेणापि पुरुषायुषैरलमिमाः कश्चित् परिगणयितुम्, असङ्ख्याताश्च कथं निरोद्धव्या इत्या-शङ्क्य तासामियत्तास्वरूपप्रतिपादनपरं सूत्रमवतारयति—"ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य" इति, "वृत्तयः पञ्चतय्यः क्लिष्टाः", वृत्तिरूपोऽवयव्येकस्तस्य प्रमाणादयोऽवयवाः पञ्च ततस्तदवयवा पञ्चतयी पञ्चावयवा वृत्तिर्भवति, ताश्च वृत्तयश्चैत्रमैत्रादिचित्तभेदाद् बह्व्य इति बहुवचनमुपपन्नम्, एतदुक्तं भवति—चैत्रो वा मैत्रो वा ऽन्यो वा कश्चित् सर्वेषामेव तेषां वृत्तयः पञ्चतय्य एव, नाधिका इति, "चित्तस्य" इति चैकवचनं जात्यभिप्रायम्, चित्ता-नामिति तु द्रष्टव्यम्, तासामवान्तरविशेषमनुष्ठानोपयोगिनं दर्शयति—"क्लिष्टाऽक्लिष्टा" इति ।

पातञ्जलरहस्यम् ।

"तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञकः ।
अविद्या पञ्चपर्वा सा प्रादुर्भूता महात्मनः" ॥

इति विष्णुपुराणोक्तमाश्रित्याह—तासामिति। अविद्याऽऽदयः पञ्च पर्वाणीव पर्वाणि यस्याः, लम्बकर्णवत् तद्गुणसंविज्ञानो बहुव्रीहिः; ते पञ्च, क्लेशा इति परिभाषा प्राणिनां क्लेशहेतुत्वाद्वा,

वार्त्तिकम् ।

प्रामाणिकत्वाद्, यथा हि परमाणुपर्यन्तमेव घटे पाकेन रूपं जायते तद्घटभङ्गे च तैरणुभिर्घ-टान्तरं तद्रूपकं भवति तथैव प्रकृतिपर्यन्तमेव बुद्धौ धर्मादिकमुत्पद्यते तद्बुद्धिनाशे च तत्प्रकृ-तिभिः तादृशधर्मादिमदेव बुद्ध्यन्तरमुत्पाद्यते कारणगुणप्रक्रमादिति दिक् ॥ ४ ॥

कृत्यादिलक्षणा अपि वृत्तयः सन्तीत्यागामिसूत्रस्य न्यूनतां परिहर्तुं चित्तस्येत्यन्तं पूर-यित्वोत्तरसूत्रमवतारयति—ताः पुनरिति । चित्तस्य बहुवृत्तिकत्वे सत्यपि ता निरोद्धव्या वृत्तयः क्लिष्टाऽक्लिष्टरूपा वक्ष्यमाणाः पञ्चतय्य एवेति सूत्रेण सहान्वयः, प्रमाणादिरूपवक्ष्यमाणवृत्तिप-ञ्चकनिरोधेनैव तत्कार्याणामन्यवृत्तीनां निरोधसिद्धिरिति भावः,

"वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः", यैः प्रमाणादिलक्षणव्यापारैः चित्तं जीवति ते तद्वृत्त-य उच्यन्ते द्विजादीनां याजनादिवत्, क्लिष्टाश्चाक्लिष्टाश्च क्लिष्टाऽक्लिष्टा निरोद्धव्या वृत्तयः क्लिष्टा-वा अक्लिष्टा वा भवन्तु वक्ष्यमाणाः पञ्चतय्यः पञ्चप्रकारा एवेति सूत्रार्थः, वृत्तीनामसंख्यव्य-क्तितयाऽवयवाघकत्वानुपपत्त्या तयपो लक्षणयाऽत्र प्रकारवाचित्वं "ताः पञ्चधा वृत्तय" इत्या-गामिभाष्यादिति, क्लिष्टावदक्लिष्टाया अपि हेयत्वप्रतिपादनाय क्लिष्टाऽक्लिष्टाविभागप्रदर्शनं, तत्र चायं क्रमोऽक्लिष्टा उपादाय क्लिष्टा निरोद्धव्यास्ततस्ता अपि परवैराग्येणेति,

क्लेशहेतुकाः कर्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः, ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः, क्लिष्ट(१)प्रवाहपतिता अप्यक्लिष्टाः, क्लिष्टच्छि-

तत्त्ववैशारदी ।

अस्य व्याख्यानमाह—"क्लेशहेतुका" इति । क्लेशाः = अस्मिताऽऽदयो हेतवः = प्रवृत्तिकारणं यासां वृत्तीनां तास्तथोक्ताः, यद्वा पुरुषार्थप्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेशकारित्वेन क्लेशायैव प्रवृत्तिः, क्लेशः = क्लिष्टं तदासामस्तीति क्लिष्टा इति, यत एव क्लेशोपार्जनार्थममूषां प्रवृत्तिरत एव कर्माशयप्रचयक्षेत्रीभूताः, प्रमाणादिना खल्वयं प्रतिपत्ताऽर्थमवसाय तत्र सक्तो द्विष्टो वा कर्माशयमाचिनोतीति भवन्ति धर्माधर्मप्रसवभूमयो वृत्तयः क्लिष्टा इति । अक्लिष्टां व्याचष्टे—"ख्यातिविषया" इति । विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिः, तया विषयिण्या तद्विषयं सत्त्वपुरुषविवेकमुपलक्षयति, तेन सत्त्वपुरुषविवेकविषया यतोऽत एव गुणाधिकारविरोधिन्यः, कार्य्यारम्भणं हि गुणानामधिकारो विवेकख्यातिपर्य्यवसानं च तदिति चरिताधिकाराणां गुणानामधिकारं निरुन्धन्तीत्यतस्ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः,

स्यादेतद्—वीतरागजन्मादर्शनात् क्लिष्टवृत्तय एव सर्वे प्राणभृतः, न च क्लिष्टवृत्तिप्रवाहे भवितुमर्हन्त्यक्लिष्टा वृत्तयो, न चामूषां भावेऽपि कार्य्यकारिता ; विरोधिमध्यपातित्वात्, तस्मात् क्लिष्टाना मक्लिष्टाभिर्निरोधस्तासां च वैराग्येण परेणेति मनोरथमात्रमित्यत आह—"क्लिष्टप्रवाह" इति । आगमानुमानाचार्य्योपदेशपरिशीलनलब्धजन्मनी अभ्यासवैराग्ये क्लिष्टच्छिद्रम् = अन्तरं, तत्र पतिताः स्वयमक्लिष्टा एव यद्यपि क्लिष्टप्रवाहपतिताः, न खलु

पातञ्जलरहस्यम् ।

प्रतिपत्ता = अधिकारी, स च मनुष्याधिकारत्वाच्छास्त्रस्य ; सक्तो रागी, चिनोति रागद्वेषप्रयुक्तास्तत्कर्माणि करोतीत्यर्थः, ख्यातिरिति । सत्त्वपुरुषान्यताज्ञानं सत्त्वपुरुषविवेकमिति पुरुषप्रतियोगिकसत्त्वानुयोगिकभेदज्ञानं स्तम्भः पिशाचो नेतिवत्, पुरुषसाक्षात्काराभावेऽपि भेदधीः "प्रकृतिपुरुषसंयोगा नित्यानुमेयाः" इति सिद्धान्ताद्, "वीतरागजन्मादर्शनादि"ति न्या-

वार्त्तिकम् ।

"सत्त्वेनान्यतमे हन्यात्सत्त्वं सत्त्वेन चैव ही"—

ति स्मरणात, क्लिष्टा व्याचष्टे-क्लेशहेतुका इति । त्रिगुणात्मकतया सर्वासामेव वृत्तीनां क्लेशवत्त्वेन क्लिष्टाऽक्लिष्टाविभागो नोपपद्यत इत्यतः क्लेशसंबन्धविशेषपरतयेत्थं व्याख्यायते, अत्र च हेतुः प्रयोजनं, क्लेशश्चात्र मुख्य एव ग्राह्यो दुःखाख्यः, तथा च क्लेशहेतुकाः दुःखैकफलिकाविषयाकारवृत्तय इत्यर्थः, क्लेशजनकत्वे हेतुः—कर्मेत्यादि । कर्माशयप्रचयानां धर्माधर्मवासनासमूहानां क्षेत्रीभूता आलम्बनीभूताः क्लिष्टा इत्यर्थः, विषयाकारवृत्तिजन्यतृष्णाऽऽद्यभिहतस्तद्धानार्हं यतमानः परपीडाऽनुग्रहाभ्यां धर्माधर्मावुपचिनोति, ततश्च दुःखधारा भवतीति भावः, अक्लिष्टा व्याचष्टे—ख्यातीति । अक्लिष्टा अक्लेशफलिकाः, ताश्च गुणाधिकारविरोधिन्यः गुणानां सत्त्वादीनामधिकारः कार्यारम्भणं तद्विरोधिन्योऽविद्याकामकर्मादिरूपकारणनाशकत्वात्, ख्यातिविषया विवेकख्यातिसंबद्धा इत्यर्थः, ख्यातिसाधनस्यापि संग्रहाय विषयपदमिति,

ननु सूत्रकारेण तामसीनां सात्त्विकीनां च द्विविधानामेव वृत्तीनां निरोद्धव्यत्वमुक्तं न तु राजसीनां क्लिष्टाक्लिष्टरूपमिश्रवृत्तीनामिति न्यूनतेत्याशङ्क्य मिश्रवृत्तीनामुक्तास्वेवान्तर्भावमाह—क्लिष्टप्रवाहेति । क्लिष्टशेषीभूता अपि अक्लिष्टरूपास्तदंशाः, यद्यपि क्लिष्टच्छिद्रेषु सन्ति

(१) अत्र यत्त्वित्यादिना योगवार्त्तिककारोक्तं केनाप्याक्षिप्तं तदेव न सम्यक्, साधारणदर्शिनामापाततः सात्त्विकतामसवृत्तिनिरोधोक्तिदर्शनेन राजसवृत्तेरनिरोध्यताभ्रमो मा भूदित्येतदर्थं वार्त्तिककृता तथोक्तं न त्ववधार्य्यं, विजातीयप्रवाहघटिका वृत्तयः पर्य्युदस्ताः, किंच क्लेशसंभेदात्तु न राजस्य एव केवलं क्लिष्टाः प्रत्युत सात्त्विकीनामपि वृत्तीना तथात्वं दुर्निवारं, परिणामतापेत्यादिसूत्रेण तथैवोपपादनादिति ।

द्रेष्वप्यक्लिष्टा भवन्ति, अक्लिष्टच्छिद्रेषु क्लिष्टा इति,

तथाजातीयकाः संस्कारा वृत्तिभिरेव क्रियन्ते संस्कारैश्च वृत्तय इत्येवं वृत्तिसंस्कारचक्रमनिशमावर्त्तते, तदेवम्भूतं चित्तमवसिता(१)धिकारमात्मकल्पेन व्यवतिष्ठते प्रलयं वा गच्छतीति, ताः क्लिष्टाश्चाक्लिष्टाश्च पञ्चधा वृत्तयः॥५॥

भास्वती।

तथेति। तथाजातीयकाः=क्लिष्टजातीया अक्लिष्टजातीया वा संस्कारा वृत्तिभिरेव क्रियन्ते, वृत्तीनामपरिदृष्टावस्था संस्कारः, संस्कारस्य च उद्बुद्धभावः स्मृतिवृत्तिः, तथा च प्रमाणादिवृत्तीनामपि निष्पादकाः संस्काराः, एवमिति। वृत्तिभिः संस्काराः, संस्कारेभ्यश्च वृत्तय इत्येवं वृत्तिसंस्कारचक्रं निरन्तरमावर्त्तते, तदिति। अवसिताधिकारं=निष्पन्नकृत्यं चित्तसत्त्वं, शेषं दलद्वयं प्राग्व्याख्यातम्, धर्ममेघध्याने सत्त्वमात्मकल्पेन व्यवतिष्ठते, कैवल्ये च प्रलयं गच्छतीति ॥ ५ ॥

तत्त्ववैशारदी।

शालग्रामे किरातशतसङ्कीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति, अक्लिष्टच्छिद्रेष्विति निदर्शनं, क्लिष्टाऽन्तर्वर्त्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टाः स्वसंस्कारपरिपाकक्रमेण क्लिष्टा एव तावदभिभवन्तीत्याह--"तथाजातीयका" इति। अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाः संस्कारा इत्यर्थः, तदिदं वृत्तिसंस्कारचक्रमनिशमावर्त्तत आनिरोधसमाधेः, तदेवम्भूतं चित्तं निरोधावस्थं संस्कारशेषं भूत्वाऽऽत्मकल्पेन व्यवतिष्ठत इत्यापाततः, प्रलयं वा गच्छतीति परमार्थतः, पिण्डीकृत्य सूत्रार्थमाह—"ताः" इति। पञ्चधेत्यर्थकथनमात्रं न तु शब्दवृत्तिव्याख्यानम्, तयपः प्रकारेऽस्मरणात्॥ ५ ॥

पातञ्जलरहस्यम्।

यसूत्रम्, वीतरागाः क्लेशाद्यनधिकारिणः, तेषां निरधिकारत्वाज्जन्माभाव इति सूत्रार्थः, आगम इति। आगम इत्यनेन श्रवणम्, अनुमानं=मननम्, आचार्योपदेशो ब्रह्मनिष्ठोपदेशः,

"उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः"

इति स्मृतेर्निदिध्यासनं वा परिशीलनमसकृदावृत्तिः, तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति न्यायमन्यथयति—न खल्विति ॥ ५ ॥

वार्त्तिकम्।

तथाऽप्यक्लिष्टा एवाक्लिष्टशब्देन गृहीता भवन्तिः एवमक्लिष्टच्छिद्रेष्वपि क्लिष्टाः क्लिष्टशब्देन गृहीता इत्यर्थः, तथा च राजस्या मिश्रवृत्तेरंशाभ्यामंशिन्योः प्रवेश इति न न्यूनता,

इदानीं वृत्तिनिरोधस्य फलं वक्तुमादौ संसारानर्थबीजं संस्कारं दर्शयति—तथाजातीयका इति। क्लिष्टाक्लिष्टजातीयकाः संस्कारा इत्यर्थः,अस्य जीवभ्रामकस्य वृत्तिसंस्कारचक्रस्य स्तम्भने प्रलये च निरोध एवोपाय इत्याह—तदेवंभूतमिति। तद्=वृत्तिसंस्कारचक्रात्मकं चित्तम्,एवंभूतं=निरोधावस्थम् अवसिताधिकारं=क्रमेण समाप्यमानाधिकारं सदात्मकल्पेनात्माविभागेन निर्दुःखतया तिष्ठति व्युत्थानपर्यन्तम्, अथ वाऽभ्यासपाटवेनाखिलसंस्कारक्षये सति प्रलयमात्यन्तिकलयमेव गच्छति विदेहकैवल्यं प्राप्नोतीत्यर्थः, निरोधसमाधेः पुनरनुत्थानमेव योगिनां मुक्तिरितिभावः ॥ ५ ॥

---

(१) अवसिताधिकारम्=संपादितविवेकख्याति, आत्मकल्पेनेति, भावप्राधान्यात् तत्तुल्यत्वेनेत्यर्थः, कल्पबादीनां फलतस्तुल्यत्वे पर्यवसानात्—तत्त्वं च निर्दुःखत्वादिनेति विवक्षितम्, एतेन चित्तस्य तिरोभवदवस्था सूचिताऽत एव मिश्रैरापातत इति विवृतम्,

"विवेकख्यातिपर्यन्तं याति प्रकृतिचेष्टितमि"ति

सांख्यसमयाद्, वस्तुस्थितिमाह—फलयं वेति।

**प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥**

तत्र—

**प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥**

इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यवि-

भास्वती ।

"प्रमाणविपर्ययविकल्पनिद्रास्मृतय" इति पञ्च वृत्तयः क्लिष्टा भवन्ति, अक्लिष्टा-वा भवन्ति, चित्तस्य प्रवर्त्तकनिवर्त्तकत्वस्वभावाद्, यथा-रक्तं क्लिष्टं वा प्रमाणं क्लिष्टं,-रागद्वेशनिवर्त्तकं प्रमाणमक्लिष्टम् ॥ ६ ॥

इन्द्रियेति । चित्तस्य बाह्यवस्तूपरागाद् = इन्द्रियबाह्यवस्तुभिः कृतादुपरागात्, त-

तत्त्ववैशारदी ।

ताः स्वसञ्ज्ञाभिरुद्दिशति—"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः",

निर्देशे यथावचनं विग्रहः, चार्थे द्वन्द्वः समास इतरेतरयोगः, यथा—"अनित्याशुचिदुः-खानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इत्युक्तेऽपि न दिङ्मोहालातचक्रादिविभ्रमा-व्युदस्यन्त एवमिहापि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरसद्भावशङ्का न व्युदस्येतेति तन्निरा-साय वक्तव्यं—"५ वृतय्य" इति । एतावत्य एव वृत्तयो नापराः सन्तीति दर्शितं भवति ॥६॥

तत्र प्रमाणवृत्तिं विभजन् सामान्यलक्षणमाह—"प्रत्यक्षानुमानागमाः प्रमाणानि", अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुः प्रमा, तत्करणं प्रमाणम्, विभागवचनं च न्यूना-धिकसङ्ख्याव्यवच्छेदार्थम्, तत्र सकलप्रमाणमूलत्वात् प्रथमतः प्रत्यक्षं लक्षयति—"इन्द्रिये"-ति । "अर्थस्य" इति समारोपितत्वं निषेधति, "तद्विषया" इति बाह्यगोचरतया ज्ञानाकारगो-चरत्वं वारयति, चित्तवर्त्तिनो ज्ञानाकारस्य बाह्यज्ञेयसंबन्धं दर्शयति—"बाह्यवस्तूपरागाद्" इति । व्यवहितस्य तदुपरागे हेतुमाह—"इन्द्रियप्रणालिकया" इति । सामान्यमात्रमर्थं-इत्येके, विशेषा एवेत्यन्ये, सामान्यविशेषतद्वत्त्वेत्यपरे वादिनः प्रतिपन्नास्तन्निरासायाह—"सामान्यविशेषात्मन" इति । न तद्वत्ता, किन्तु तादात्म्यमर्थस्य, एतच्च "एकान्तानभ्युप-गमाद्" इत्यत्र प्रतिपादयिष्यते, अनुमानागमविषयात् प्रत्यक्षविषयं व्यवच्छिनत्ति—

पातञ्जलरहस्यम् ।

निर्देश इति । लक्षणसूत्रा उत्तरे, तत्र यथावचनं यथासंख्यं यथालिङ्गं च विग्रहः, तेन प्रमा-णानि च विपर्ययश्च विकल्पश्च निद्रा च स्मृतिश्चेति समासः, अविद्येति । अयोगव्यवच्छेदः, तेनालातचक्रादीनां ग्रहणम् ॥ ६ ॥

प्रकृतिकार्याणां प्रमाणप्रमेयादीनां जडत्वेन हानोपादानादिव्यवहाराश्चिदधीना इत्याह—अनधिगतेत्यादि-प्रमेत्यन्तेन, तत्करणं तद्व्यञ्जकम्, "त्रिविधं प्रमाणमाख्यातमि"त्युक्तियोजना-याह—विभागवचनमिति । सामान्यमित्येके = भाट्टादयः, यद्यपि त्वक्चक्षुषोर्द्रव्यग्राहकत्वात् सामान्यमात्रं न गृह्यते तथाऽपि द्रव्यतादात्म्येन ग्रहणम्, आकृतिस्तु "क्रियाऽर्थत्वाद्" इति सूत्रे निर्णीतम्, विशेषा एवेत्यन्ये = बौद्धाः, तेषां क्षणिकस्वलक्षणमात्रस्वीकाराज्जातेरस्वीकृतिः; असकृत् क्षणान्तरक्षणावर्तित्वं क्षणिकत्वं, सामान्यविशेषतद्वत्ता इत्यपरे = नैयायिकाः "जा-त्याकृतिव्यक्तयः पदार्थ" इति स्वीकृतेः, स्वमतमाह—तच्चेति । तादात्म्यमिति । भेदानुपमर्दं-

वार्त्तिकम् ।

पूर्वसूत्रेण सह योजनार्थं ताः क्लिष्टाश्चाक्लिष्टाश्च पञ्चधा वृत्तय इति पूरयित्वोत्तरं सूत्रं पठति—

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः, सुगमं सूत्रम् ॥ ६ ॥

तत्रेति पूरयित्वोत्तरसूत्रमवतारयति-तत्र, तासु वृत्तिषु मध्ये—

प्रत्यक्षानुमानागमाः प्रमाणानि, अनधिगततत्त्वबोधः प्रमा; तत्करणं प्रमाणमिति प्रमाण-सामान्यलक्षणं सुगमत्वादकृत्वैव विभागः कृतः, परोक्तानि चेतराणि प्रमाणान्येष्वेवान्त-

शेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्,
फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः, बुद्धेः प्रतिसंवेदी पुरुष इत्यु-

भास्वती।

द्विषया = बाह्यवस्तुविषया, बाह्यज्ञानाकारेत्यर्थः, इन्द्रियप्रणालिकयेति। इन्द्रियव्यवहितस्यार्थापीन्द्रियप्रणालिक एवोपराग इत्यर्थः, या वृत्तिरुत्पद्यते तत् प्रत्यक्षं प्रमाणम्, सा हि प्रत्यक्षवृत्तिः सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना, सामान्यं = शब्दादिभिः कृतसङ्केतो जात्यादिर्बहुव्यक्तिसमवेतभूतो मानसो गुणवाचिपदार्थः, विशेषः = प्रतिव्यक्तिगतो वास्तवो गुणः, सामान्यपदार्थः शब्दादिसङ्केतमात्रगम्यः, विशेषस्तु—शब्दादिसङ्केतं विनाऽपि गम्यते, अर्थस्तु—सामान्यविशेषात्मा तादृशगुणसमवेतभूतं बाह्यं वस्त्वेव, तथाभूतस्यार्थस्य या विशेषावधारणप्रधाना वृत्तिस्तत् प्रत्यक्षं प्रमाणम्, प्रत्यक्षेण वास्तवगुणा एव प्रधानतो गृह्यन्ते, जातिमत्ताऽऽदिसामान्यगुणप्रतिपत्तीनां तत्राप्राधान्यमित्यर्थः, फलमिति। प्रमाणव्यापारस्य फलम्, द्रष्ट्रा सह, अविशिष्टः = अविविक्तः, "अहं बोद्धा"

तत्त्ववैशारदी।

"विशेषावधारणप्रधाना" इति। यद्यपि सामान्यमपि प्रत्यक्षे प्रतिभासते तथाऽपि विशेषं प्रत्युपसर्जनीभूतमित्यर्थः, एतच्च साक्षात्कारोपलक्षणपरम्, तथा च विवेकख्यातिरपि लक्षिता भवति, फलविप्रतिपत्तिं निराकरोति—"फलं पौरुषेयश्चित्तवृत्तिबोध"(१) इति। ननु पुरुषवर्त्ती

पातञ्जलरहस्यम्।

नाभेदधीहेतुस्तादात्म्यम्, यथा घटघटत्वयोः अयं घट इति च प्रतीतेः, बुद्ध्यात्मकमिति। बुद्धिश्चित्तवृत्तिस्तदविनाभूतम्, तथा च केनेऽपि तच्छ्रुतिः-प्रतिबोधविदितमिति, बुध्यते ऽनेनेतिवद्,

वार्त्तिकम्।

भाव्याणीत्याशय इति, प्रत्यक्षं व्याचष्टे—इन्द्रियेति। इन्द्रियाण्येव नाडी चित्तसंचरणमार्गः तैः संयुज्य तद्गोलकद्वारा बाह्यवस्तूपरक्तस्य चित्तस्येन्द्रियसाहित्येनैवार्थाकारः परिणामो भवति न केवलस्य चित्तस्य शङ्खपैत्याद्याकारतायां नयनादिगतपित्ताद्यन्वयव्यतिरेकाभ्यामतो रूपादिवृत्तिषु चक्षुरादीनामपि कारणत्वं शास्त्रेषूच्यते, अत्रोपरागादित्यन्तेन बाह्यवृत्तेः कारणमात्रं दर्शितं न तु तल्लक्षणे प्रवेशनीयम्, आत्मादिप्रत्यक्षाव्यापनादीश्वरप्रत्यक्षाव्यापनाच्च, तस्याजन्यत्वाद्, अर्थस्येत्यनेन समारोपितत्वप्रतिषेधान्न विपर्ययेऽतिव्याप्तिः, विशेषावधारणप्रधानेति विशेषणादनुमानागमयोर्व्यावृत्तिः, स्मृतिव्यावर्त्तनाय-तद्विषयेति। उपरक्तवस्तुविषयेत्यर्थः, सामान्यविशेषाभ्यामत्यन्तभिन्न एवार्थ इत्येतन्निरासायोक्तं सामान्यविशेषात्मन इति। अनेन चावयवी न निराकृतः किं त्ववयविनि सामान्यविशेषयोरविभागलक्षणं तादात्म्यमुक्तं पश्चादवयविव्यवस्थापनादिति,

"अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि";

"बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्"-

इत्यादिस्मृतिभ्यो रश्मिशाखादितुल्यतालाभाद्, वृत्तिः प्रभावद् द्रव्यमेवेति प्रागेवोक्तम्, सा वृत्तिरेव दीपप्रभावद् बाह्यार्थमुपसृत्य चक्षुराद्येकीभावेन घटाद्याकारा भवति, स्वप्नध्यानादौ घटाद्याकारतया चित्तवृत्तेरनुभूयमानत्वाद् बाह्येऽपि ज्ञानाकारः सिध्यति, अत्रांशे बौद्धानामस्माकं चैकवाक्यत्वेऽपि न साम्यम्, अस्माभिर्बाह्यार्थस्यापि स्वीकारादिति,

प्रत्यक्षस्य लक्षणं कृतमिदानीं तस्य प्रमाकरणत्वेन प्रमाणत्वमुपपादयति—फलमिति। वृ-

(१) चित्तवृत्तिबोध इति। यः किल परतः प्रामाण्यनयेऽनुव्यवसायत्वेन व्यवह्रियते, बुद्धौ प्रतिबिम्बनात्तत्तादात्म्याभिमानात् पुरुषस्य तद्धर्त्वोपचारेण पौरुषेयोक्तिः, परिणामित्वभ्रान्तिनिरासाय "अविशिष्टः" इति।

परिष्टादुपपादयिष्यामः,

भास्वती ।

इत्यात्मक इत्यर्थः, पौरुषेयः = पुरुषप्रकाश्यश्चित्तवृत्तिबोधः, यतः पुरुषो बुद्धेः प्रतिसंवेदी = प्रतिसंवेदनहेतुः, तत एवासङ्कीर्णेनापि पुरुषेण बुद्धिबोधः, पुरुषस्य प्रतिसंवेदित्वमुपरिष्टाद् द्वितीये पादे प्रतिपादयिष्यामः,

तत्त्ववैशारदी।

बोधः कथं चित्तगताया वृत्तेः फलं, न हि खदिरगोचरव्यापारेण परशुना पलाशे छिदा क्रियत- इत्यत आह—"अविशिष्ट" इति । न हि पुरुषगतो बोधो जन्यतेऽपि तु चैतन्यमेव बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्त्याऽर्थाकारया तदाकारतामापद्यमानं फलम्,

(१)तच्च तथाभूतं बुद्धेरविशिष्टं = बुद्ध्यात्मकं, वृत्तिश्च बुद्ध्यात्मिकेति सामानाधिरण्याद् युक्तः प्रमाणफलभाव इत्यर्थः, एतच्चोपपादयिष्याम इत्याह—"बुद्धेः प्रतिसंवेदी" इति ।

प्रत्यक्षानन्तरं प्रवृत्त्यादिलिङ्गकश्रोतृबुद्ध्यनुमानप्रभवसंबन्धदर्शनसमुत्थतयाऽऽगमस्या-

पातञ्जलरहस्यम् ।

व्यक्तिं विना जातेः चित्तवृत्तिं विना फलचैतन्याग्रहाद् , अनुमानोपजीवित्वादागमस्य प्रत्यक्षानन्तरमिति संगतिमाह—प्रवृत्यादीति ।

अयमर्थः—गामानय शुक्लां दण्डेनेत्युत्तमवृद्धेनोक्ते मध्यमवृद्धस्य गवानयने प्रवृत्तिं दृष्ट्वा व्युत्पित्सुर्बालोऽनुमिनोति–अस्यैषा प्रवृत्तिरिष्टसाधनादिज्ञानपुरःसरा प्रवृत्तित्वाद् मदीयप्रवृत्तिवद् गामानयेति शब्दं विनाऽन्यत् कारणमनुपलभमानस्तादृशपदकदम्बमेव कारणत्वेन जानाति, न जानाति किं पदं कुत्र शक्तमिति ततोऽश्वमानय गां बधानेति शब्दं शृणोति, ततश्चावापोद्वापाभ्यां प्रतिपदं व्युत्पन्नो भवति–गोपदं गवि शक्तमिति, आनयपदमानयने शक्तमिति,

वार्त्तिकम् ।

त्रिरूपस्य करणस्य फलं पुरुषनिष्ठश्चित्तवृत्तिविषयको बोधः, पुरुषार्थमेव करणानां प्रवृत्तेः. अयं च बोधो विषयदेश एव भवति विभुत्वाद् ,

नन्वयं घट इति वृत्तेर्बोधो घटमहं जानामीतिरूपस्तस्य च पौरुषेयत्वे पुरुषस्य स्वतन्त्राकारेण परिणामित्त्वापत्तिरिति ? तत्राह—अविशिष्ट इति । स च बोधश्चित्तवृत्त्या सहाविशिष्ट इति वृत्तिसारूप्यसूत्र उपपादित इत्यथः, अयं घट इत्याकारा बिम्बरूपा वृत्तिः कारणं तस्या एव वृत्तेश्चैतन्ये प्रतिबिम्बनाच्चैतन्यमप्ययं घट इत्याकारमिव सद्बोधाख्यं फलं भवतीति नात्र विशेषः शब्देन वक्तुं शक्यते, विवेकिभिरेवेक्षुक्षीरादिमाधुर्यस्येव स्वयं विशेषोऽनुभूयत दृग्दृश्यादिवैधर्म्यादिति भावः, पौरुषेयो बोध इत्याधाराधेयभावश्च गगने श्रोत्रमितिवद्विशिष्टाविशिष्टभेदेनोपपादनीयः, करणलक्षणं चात्र फलायोगव्यवच्छिन्नकारणत्वमिति,

ननु रूपादिषु चक्षुरादीनामेव करणत्वं श्रुतिस्मृत्योरवगम्यत इति चेत् ? सत्यं; किं तु बुद्धिवृत्त्याख्यप्रमाऽन्तरं प्रत्येव तेषां करणत्वं न तु पौरुषेयबोधरूपां मुख्यप्रमां प्रति, प्रमाद्वयं च साङ्ख्ये सूत्रितं—'द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमे'ति, चक्षुरादीनां च वृत्तौ करणत्वं व्यापारवत्कारणत्वरूपं कुठारादाविवेति शेषः,

ननु विषयाकारतैव विषयग्रहणं चित्तस्थले दृष्टं पुरुषस्तु कूटस्थो न वृत्त्याकारतां भजतेऽतः कथं पुरुषश्चित्तवृत्तिसाक्षी स्यात् कथं वाऽविशिष्टः पौरुषेयो बोध इत्याशङ्कायामाह—प्रतिसंवेदीति । संवेदिन्या बुद्धेः प्रतिसंवेदी तत्समानाकारः पुरुष इत्येतच्चतुर्थपादे "चितेरप्र-

(१) तच्चेति । अत्रायं भावः–अनुभवसिद्धं सर्वसंमतं कार्यकारणयोः सामनाधिकारण्यं मिश्रैः प्रदर्शितं,-प्रकृतोक्त्या तथैव प्रतीतेः, भिक्षुणा तु तादृशमिश्रग्रन्थदर्शनाद् कश्चिदतात्पर्यज्ञः पुरुषसंबन्धेऽप्रयोजकतैवेति भ्राम्येदित्याशङ्क्यैव तन्नेत्यादिकमवतारितमिति न कोऽपि तयोर्विरोधोऽस्ति यत्परः शब्दः स शब्दार्थ इति नयेन, एतेन यः कैश्चिद् मिथो विरोध उद्भावितः सोऽनालम्ब एवेति निरपेक्षा विदाङ्कुर्वन्तु ।

अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः संबन्धो-

भास्वती।

अनुमेयस्येति । जिज्ञासितोऽगृह्यमाणो हेतुगम्यो विषयोऽनुमेयः, तस्य तुल्यजातीये-

तत्त्ववैशारदी।

नुमानजत्वादनुमितस्य चागमेनान्वाख्यानाद् आगमात्प्रागनुमानं लक्षयति—"अनुमे-

पातञ्जलरहस्यम्।

अन्वाख्यानेति । अन्वाख्यानं त्वनुमानादिगृहीतोऽर्थः परस्मिन् श्रोत्रन्तःकरणे तादृशेन

वार्त्तिकम्।

तिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनमि"ति सूत्र उपपादयिष्याम" इत्यर्थः, यद्यपि चितेः स्वयमाकारो नास्ति तथाऽपि प्रतिबिम्बवशाद् वृत्त्याकारापत्त्या वृत्तिबोध इत्यस्माभिर्वृत्तिसारूप्यप्रसङ्गेन प्रागेव व्याख्यातम्,

कश्चित्तु—वृत्त्याख्यकारणसामानाधिकरण्येन बुद्धावेव प्रमाऽऽख्यं फलं जायते, चैतन्यमेव हि बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्त्याऽर्थाकारया तदाकारतामापद्यमानं फलं, तच्च चिच्छायाऽऽख्यं चित्प्रतिबिम्बं बुद्धेरेव धर्म इति वदति,

तन्न—पौरुषेयशब्दस्य यथाश्रुतार्थत्यागापत्तेः प्रतिबिम्बस्य तुच्छतयाऽर्थभानरूपत्वानुपपत्तेश्च, प्रतिबिम्बस्य प्रकाशाद्यर्थक्रियाकारितायाः क्वाप्यदर्शनाच्च, प्रतिबिम्बं हि तत्तदुपाधिषु बुद्धेर्बिम्बाकारपरिणाममात्रमिति, किंच परस्परं प्रतिबिम्बस्य श्रुतिस्मृतिसिद्धतया चितेरेव वृत्तिप्रतिबिम्बोपहितायाः फलत्वं युक्तं ज्ञानशब्देनात्मन एव प्रतिपादनात् 'सत्यं ज्ञानमनन्तं ब्रह्म' 'ज्ञानमेव परं ब्रह्म' 'ज्ञानं बन्धाय चेष्यते' इत्यादिश्रुतिस्मृतिष्विति, बुद्धेश्चिच्छायाऽऽपत्तिश्चाहमित्यादिरूपैश्चितो भानार्थमेवेष्यते बुद्ध्यारोहं विना साक्षात्स्वभाने कर्मकर्तृविरोधादित्युक्तमेव, अपि च बुद्धेरेव प्रमातृत्वे पुरुषो न सिध्येद्, वृत्तिसाक्षितया पुरुषसिद्धिरिति चेद् ? एवं सति वृत्तिद्रष्टुरेव वृत्त्यारूढार्थद्रष्टृत्वकल्पनोचिता न तु बिम्बप्रतिबिम्बयोरुभयोरेव द्रष्टृत्वमर्थभेदेन कल्पयितुं युक्तं गौरवादिति, किं च जानामीत्येवं बुद्धिवृत्तौ भासमानं प्रतिबिम्बचैतन्यं स्वज्ञेयं न संभवति कर्मकर्तृविरोधादतो बिम्बचैतन्ये भानमावश्यकमिति,

अत्रायं प्रमात्रादिविभागः—

(१)प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव च ।
प्रमाऽर्थाकारवृत्तीनां चेतने प्रतिबिम्बनम् ॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते ।
वृत्तयः साक्षिभास्याः स्युः करणस्यानपेक्षणात् ॥
साक्षाद्दर्शनरूपं च साक्षित्वं सांख्यसूत्रितम् ।
अविकारेण द्रष्टृत्वं साक्षित्वं चापरे जगुः ॥

इति दिक्,

पुरुषे वृत्तिबोधरूपं च फलमनुमानादिसकलवृत्तिष्वपि बोध्यम्,

अनुमानं लक्षयति-अनुमानस्येति । साध्यविशिष्टः पक्षोऽनुमेयः तस्य साध्यवत्त्वेन तुल्यजातीयेषु सपक्षेष्वनुवृत्तो विजातीयेभ्यो विपक्षेभ्यो व्यावृत्तो यः सम्बन्धोऽर्थात्तत्रैवानुमेये पक्षवृत्तिरिति यावत्, तद्विषया तन्निबन्धना, षिञ् बन्धन इत्यनुशासनात् तद्विषयज्ञान-

---

( १ ) यत्तु केन चिदत्राकाण्ड एव वार्त्तिकमाक्षिप्तं तदतिस्थवीयः, वार्त्तिककृतोहं रूपताऽवच्छेदकत्वेनाविवक्षितमपि शुद्धत्वं भ्रान्त्यैव तथा प्रकल्प्याक्षेपात्, तदीयाशयस्तु चेतनः प्रमाताऽपि शुद्धः = वास्तविकविकृतिशून्य इत्येवंरूपः, अत एव—

"साक्षाद्दर्शनरूपं च साक्षित्वं सांख्यसूत्रितमि"—

त्युपसंहृतं तत्कृतेति निरवद्यैव वार्त्तिकोक्तिः।

यस्तद्विषया सामान्यावधारणप्रधाना वृत्तिरनुमानम्, यथा-देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवद्, विन्ध्यश्चाप्राप्तिरगतिः, आप्तेन दृष्टोऽनुमि-

भास्वती ।

त्वनुवृत्तः = सपक्षेषु समानः, भिन्नजातीयेभ्यो व्यावृत्तः = असपक्षेष्वलब्ध इत्यर्थः, ईदृशानां धर्माणां ज्ञानमिति यावत् सम्बन्धो हेतुः, स यः सम्बन्धस्तद्विषया हेतुनिबन्धना या वृत्तिस्तदनुमानं प्रमाणम्, सा चानुमानवृत्तिः सामान्यावधारणप्रधाना सामान्यधर्म-द्योतकशब्दादिसङ्केतसाध्यत्वाद्, उदाहरणमाह-यथेति । चन्द्रतारकं गतिमद् देशान्तरप्राप्तेश्चैत्रवद्, अगतिमाश्च विन्ध्यश्च, ततस्तस्याप्राप्तिर्देशान्तरस्येति शेषः,

आगमं लक्षयति—यद्वाक्यात् श्रोतुरविचारसिद्धो निश्चयो जायते स तस्य श्रोतुराप्तः,

तत्त्ववैशारदी ।

यस्य" इति । जिज्ञासितधर्मविशिष्टो धर्म्यनुमेयः(१), तस्य तुल्यजातीयाः = साध्यधर्मसामान्येन समानार्थाः सपक्षास्तेष्वनुवृत्त इत्यनेन विरुद्धत्वम्(२) असाधारणधर्मत्वं च साधनधर्मस्य निराकरोति, भिन्नजातीया असपक्षास्ते च सपक्षादन्ये तद्विरुद्धास्तदभाववन्तश्च तेभ्यो व्यावृत्तस्तदनेन (३)साधारणानैकान्तिकत्वमपाकरोति, संबध्यत इति संबन्धो लिङ्गम्, अनेन पक्षधर्मतां दर्शयन्नसिद्धतां(४) निवारयति, तद्विषया = तन्निबन्धना, षिञ् बन्धन इत्यस्माद् विषयपदव्युत्पत्तेः, 'सामान्यावधारणे'ति प्रत्यक्षविषयाद् व्यवच्छिनत्ति, संबन्धसंवेदनाधीनजन्मानुमानं विशेषेषु संबन्धग्रहणाभावेन सामान्यमेव सुकरसंबन्धग्रहणं गोचरयतीति, उदाहरणमाह—"यथा"(५) इति । चो हेत्वर्थे, विन्ध्योऽगतिर्यतस्तस्मात्तस्याप्राप्तिः, अतो गतिनिवृत्तौ प्राप्तेर्निवृत्तेर्देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवदिति सिद्धम्, आगमस्य वृत्तेर्लक्षणमाह—"आप्तेन" इति । तत्त्वदर्शनकारुण्यकरणपाटवाभिसंबन्ध आप्तिः, तया वर्तत-

पातञ्जलरहस्यम् ।

शब्देन समर्पणमिति अनुमेय इति । अनुमेयो वह्न्यादिः, तुल्यजातीया इति । तुल्यजातीया-महानसादयः, असाधारण इति । असाधारणत्वं सपक्षहीनत्वम्, निराकरोति-भाष्य इति शेषः, असपक्षा जलह्रदादयः, अपाकरोति, भाष्य इति शेषः, विरुद्धासाधारणसाधारणानैकान्तिकासिद्धाः हेत्वाभासास्ते निरस्ताः, भूतार्थदर्शनं = तत्त्वदर्शनं, कारुण्यं = परदुःखप्रहाणेच्छा,

वार्त्तिकम् ।

जन्येति यावद्, एवंभूता या सामान्यावधारणप्रधाना वृत्तिः साऽनुमानमित्यर्थः, सम्बन्ध इति पाठेऽपि सम्बध्यत इति संबन्धः तथा च स एवार्थः, सामान्येत्यादि प्रत्यक्षव्यावृत्तस्वरूपकथनमात्रं न तु लक्षणान्तर्गतं वैयर्थ्यादिति, अनुमानवृत्तेरुदाहरणमाह—यथा देशान्तरप्राप्तेरिति । अत्रान्वयव्याप्तौ दृष्टान्तश्चैत्रवदिति, व्यतिरेकव्याप्तौ च दृष्टान्तो विन्ध्यश्चाप्राप्तिरगतिरिति, अप्राप्तेरिति पञ्चमीपाठस्तु लेखकप्रमादात् प्रत्यक्षसिद्धेऽनुमितिवैयर्थ्यादिति,

आगमाख्यां वृत्तिं लक्षयति—आप्तेनेति । भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषरहितेने-

---

(१) धर्म्यनुमेय इति । साध्यविशिष्टः पक्षताऽवच्छेदकावच्छिन्न इति भावः, तथा च बाधस्य तादृशज्ञाने सत्प्रतिपक्षस्याश्रयासिद्धिपक्षासिद्ध्योश्च निरासः,

(२) विरुद्धत्वम् = साध्यव्यापकाभावप्रतियोगित्वम्, असाधारणत्वम् = पक्षवृत्तित्वसमानाधिकरणं निश्चितसाध्यवन्निश्चितसाध्याभाववद्व्यावृत्तत्वम्,

(३) साधारणेति । सपक्षविपक्षवृत्तित्वम्, उपलक्षणं चैतत्—केवलान्वयिधर्मावच्छिन्नपक्षकत्वरूपानुपसंहारित्वस्यापि,

(४) असिद्धताम् = स्वरूपासिद्धिम्,

(५) यथेति । चन्द्रादिकं गतिमद् देशान्तरप्राप्तेः यद्यत्तादृशप्राप्तिमत् तत्तद् गतिमद् यथा चैत्रादि; यद्यद् गतिमन्न तत्तत्तादृशप्राप्तिमदपि न; यथा विन्ध्यादि ।

**तो वाऽर्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः, यस्याश्रद्धेयार्थो वक्ता न दृष्टानुमितार्थः स आगमः प्लवते, मूलवक्तरि तु दृष्टानुमितार्थे निर्विप्लवः स्यात् ॥ ७ ॥**

भास्वती ।

ताद्दशेनाप्तेन दृष्टोऽनुमितो धर्मः=प्रत्यक्षानुमानाभ्यां ज्ञातो विषयः परत्र स्वबोधसङ्क्रान्तय-आप्तस्य परत्र स्वबोधसङ्क्रान्तिकाम्यताऽऽगमाङ्गमिति द्रष्टव्यम् ,

शब्देन=वाक्येन, अन्येनाकारादिना सङ्केतेनापीत्यर्थः, उपदिश्यते, शब्दात्=साक्षात् शब्दश्रवणात्, शब्दार्थविषया=शब्दार्थज्ञाननिबन्धना न तु ध्वनिज्ञाननिबन्धना, श्रोतुश्चेतसि या वृत्तिरुत्पद्यते स आगमः, वक्ता श्रोता चास्यागमप्रमाणस्य द्वे भावने' इति विवेच्यम् , तस्मात् पाठजनिश्चयो नागमप्रमाणम् ,

यथा प्रत्यक्षमिन्द्रियदोषादिना दूष्यते, अनुमानञ्च हेत्वाभासादिना दूष्यते, तथा तत्सजातीय आगमोऽपि प्लवते, कथन्तदाह—यस्येति । मूलवक्तरीति । दृष्टोऽनुमितश्चार्थो-येन, ताद्दशे मूलवक्तरि-आप्ते सति तज्ज्ञात आगमो निर्विप्लवः स्याद् , आगमप्रमाणमूला ग्रन्था अप्यागमशब्देन लक्ष्यन्ते, न च तदागमप्रमाणम् , अनधिगतयथार्थज्ञानं-प्रमा, प्रमायाः करणं प्रमाणमिति सर्वप्रमाणानां साधारणं लक्षणम् ॥ ७ ॥

तत्त्ववैशारदी ।

इत्याप्तस्तेन दृष्टोऽनुमितो वाऽर्थः, श्रुतस्य पृथगनुपादानं, तस्य दृष्टानुमितमूलत्वेन ताभ्यामेव चरितार्थत्वाद् , आप्तचित्तवर्त्तिज्ञानसदृशस्य ज्ञानस्य श्रोतृचित्ते समुत्पादः स्वबोधसंक्रान्तिस्तस्या अर्थं उपदिश्यते=श्रोतृहिताहितप्राप्तिपरिहारोपायतया प्रज्ञाप्यते, शेषं सुगमम्, यस्यागमस्याश्रद्धेयार्थो वक्ता यथा यान्येव दश दाडिमानि तान्येव षडपूपा भविष्यन्तीति, न दृष्टानुमितार्थो, यथा—"चैत्यं वन्देत स्वर्गकाम इति" स आगमः प्लवते, नन्वेवं मन्वादीनामप्यागमः प्लवेत, न हि तेऽपि दृष्टानुमितार्था इत्यत आह—"मूलवक्तरि तु" इति । मूलवक्ता हि तत्रेश्वरो दृष्टानुमितार्थः, यथाऽऽहुः-

"यः कश्चित् कस्य चिद् धर्मो मनुना परिकीर्त्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः"-

इतीत्यर्थः ॥ ७ ॥

पातञ्जलरहस्यम् ।

करणपाटवं बाधिर्यादिराहित्यम् , श्रुतस्य पृथगनुपादानमिति, तत् साक्षात्परम्परया वा दृष्टानुमिताभ्यां व्याप्तम् ॥ ७ ॥

वार्त्तिकम् ।

त्यर्थः, मूलवक्त्रभिप्रायेण श्रुतो वेति।नोक्तः तदप्युपलक्षणीयम्, स्वबोधसंक्रान्तये स्वबोधसदृशबोधोत्पत्त्यर्थमित्यर्थः, श्रोतुर्वृत्तिरिति व्युत्क्रमेणान्वयः, अत्राप्तोक्तार्थविषयिणी शब्दजन्या वृत्तिरित्येवागमप्रमाणस्य लक्षणं, शेषं त्वागमशब्दव्युत्पत्तिमात्रमाप्तादागच्छति वृत्तिरित्यागम इत्याशयः, तदर्थविषयेऽत्यन्तविशेषणव्यावृत्त्याऽत्र प्रमाणमागमवृत्तिं दर्शयति—यस्येति । दृष्टानुमितार्थकत्वाभावेनाश्रद्धेयार्थोऽध्येयप्रतिपादको यस्यागमस्य वक्ता स आगमः शास्त्रं-चैत्यं वन्देत स्वर्गकाम इत्यादिरूपं प्लवते, प्रमाणवृत्तिजननासमर्थ इत्यर्थः,

नन्वेवं दृष्टानुमितार्थकवक्त्रनिर्मितस्य श्रुतिमूलस्याधुनिकागमस्यापि प्लवः स्यादत-आह—मूलेति ॥ ७ ॥

---

( १ ) मनुनेति । विभिन्नदेशस्थकर्मद्रव्यदेवतामन्त्रादीनां व्यवस्थापयितृत्वेनानधिगतार्थाधिगमकत्वेन तादृशोक्तवाक्यानामपि प्रामाण्यं निरपवादमिति मन्तव्यम् ।

## विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥

**स कस्मान्न प्रमाणम् ?**

भास्वती ।

प्रमाणं यथाऽर्थमनधिगतं ज्ञानम्, अस्ति चायथार्थज्ञानं चित्तदोषरूपम्, तद्धि

तत्त्ववैशारदी ।

"विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्," विपर्य्यय इति लक्ष्यनिर्देशो, मिथ्याज्ञानमित्यादि लक्षणम्, यज्ज्ञानप्रतिभासि रूपं तद्रूपाप्रतिष्ठमेवातद्रूपप्रतिष्ठं, यथाऽश्राद्धभोजीतिः अतः (१)संशयोऽपि संगृहीतः, एतावांस्तु विशेषः—तत्र ज्ञानारूढैवाप्रतिष्ठता, द्विचन्द्रादेस्तु बाधज्ञानेन, नन्वेवं विकल्पोऽपि तद्रूपाप्रतिष्ठानाद्विचारतो विपर्य्ययः प्रसज्ज्येतेत्यत आह—"मिथ्याज्ञानमिति"। अनेन हि सर्वजनीनानुभवसिद्धो बाध उक्तः, स चास्ति विपर्य्यये न तु विकल्पे; तेन व्यवहारात्, पण्डितरूपाणामेव तु विचारयतां तत्र बाधबुद्धेरिति, चोदयति—"स कस्मान्न प्रमाणम्" इति । नोत्तरेणोपजातविरोधिना ज्ञानेन पूर्वं बाध-

पातञ्जलरहस्यम् ।

अप्रतिष्ठा = एककोट्यनिर्द्धारणम्, धियामौत्सर्गिकं प्रामाण्यमिति न्यायमाश्रित्याह—स कस्मादिति ।

"पूर्वं परमजातत्वादबाधित्वैव जायते ।
परस्यानन्यथोत्पादान्न त्वबाधेन संभव" इति ।

वार्त्तिकम् ।

प्रमाणं लक्षयित्वा विपर्ययं लक्षयति—

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्, विपर्यय इति लक्ष्यनिर्देशो मिथ्याज्ञानमिति लक्षणं, मिथ्येत्यस्य विवरणमतद्रूपप्रतिष्ठमिति, न तद्रूपो न स्वसमानाकारो यो विषयस्तत्प्रतिष्ठं तद्विशेष्यकमित्यर्थः, भ्रमस्थले ज्ञानाकारस्यैव विषये समारोप इति भावः, संशयस्याप्यत्रैवान्तर्भावः, अत्र च शास्त्रेऽन्यथाख्यातिः सिद्धान्तो न तु सांख्यवदविवेकमात्रम् "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्ये" त्यागामिसूत्रात्, वैशेषिकाद्यत्रायं विशेषो-यद्वाह्यरजतादेर्नारोपः किं त्वान्तरस्यैवेति, ज्ञानाकारमनुभवसिद्धं शुक्त्यादिकं सन्निकृष्टं विहाय दूरस्थरजतादिविषयकत्वकल्पने गौरवात् स्वप्ने दृष्टमिदानीं नास्तीति स्वरूपतो बाधानुपपत्तेश्च, तथा च ब्रह्मसूत्रद्वयं—"संध्ये सृष्टिराह ही"ति "तदभिध्यानादेव तत्तिरोहितं ततोह्यस्य बन्धविपर्ययावि"ति चेति,

ननु प्रतीतिबलेनैव विषयः सिध्यतु तथा च शुक्तिरजतादिस्थलेऽप्यतद्रूपप्रतिष्ठत्वमसिद्धमित्याशयेन पृच्छति—स कस्मादिति । परिहरति—यत इति । अबाधितानुभवेनैव विषयसिद्धिरिति भावः,

---

(१) संशयोऽपीति । अयं भावः—यद्यप्यतद्रूपप्रतिष्ठमित्यत्रोत्तरपदार्थान्वयित्वेन नञः पर्य्युदासतैवोचिता; तथा चोक्तमभियुक्तैः—

"प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्"

पर्य्युदासश्च नञर्थविशेष; तदप्युक्तम्—

"द्वौ नञर्थौ समाख्यातौ पर्युदासप्रसज्यकौ ।
पर्य्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृद्"

इति तद्रूपप्रतिष्ठभिन्न एककोटिकत्वेन तत्सदृशो विपर्यय एव ग्रहणार्हस्तथाऽपि संशयस्यापि संजिघृक्षितत्वतयाऽश्राद्धभोजीत्युदाहरणेन सूचितः प्रसज्यप्रतिषेधस्योपगमः ।

यतः प्रमाणेन बाध्यते, भूतार्थविषयत्वात् प्रमाणस्य, तत्र प्रमाणेन बाधनमप्रमाणस्य दृष्टं, तद्यथा द्विचन्द्रदर्शनं सद्विषयेणैकचन्द्रदर्शनेन बाध्यत इति, सेयं पञ्चपर्वा भवत्यविद्या, अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशा-

भास्वती।

विपर्ययज्ञानम्, तल्लक्षणम्-अतद्रूपप्रतिष्ठं ज्ञेयस्य यद् यथाऽर्थं रूपं न तद्रूपप्रतिष्ठम्, मिथ्या-

तत्त्ववैशारदी।

नैयमपि तु पूर्वेणैव प्रथममुपजातेनानुपजातविरोधिना परमिति भावः, परिहरति—"यतः प्रमाणेन" इति। यत्र हि पूर्वापेक्षा परोत्पत्तिस्तत्रैवम्, इह तु स्वस्वकारणादन्योऽन्यानपेक्षे ज्ञाने जायेते, तेनोत्तरस्य पूर्वमनुपमृद्योदयमनासादयतस्तद्बाधात्मैवोदयो, न तु पूर्वस्योत्तरबाधात्मोदयस्तस्य तदानीमप्रसक्तेः, तस्मादनुपजातविरोधिता बाध्यत्वे हेतुरुपजातविरोधिता च बाधकत्वे, तस्माद् भूतार्थविषयत्वात्प्रमाणेनाप्रमाणस्य बाधनं सिद्धम्, (१)

उदाहरणमाह—"तत्र प्रमाणेन" इति। तस्य कुत्सितत्वं हानाय दर्शयति—"सेयं पञ्च" इति। अविद्यासामान्यमविद्याऽस्मिताऽऽदिपञ्चसु पर्वस्वित्यर्थः, अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वष्टस्वनात्मस्वात्मबुद्धिरविद्या = तमः, एवं योगिनामष्टस्वणिमादिकेष्वैश्वर्येष्वश्रेयःसु श्रेयोबुद्धिरष्टविधो मोहः पूर्वस्माजघन्यः स चास्मितोच्यते, तथा योगेनाऽष्टविधमैश्वर्यमुपादाय सिद्धो भूत्वा दृष्टानुश्रविकान् शब्दादीन् दश विषयान् भोक्ष्य इत्येवमात्मिका प्रतिपत्तिर्महामोहो = रागः, एवमेतेनैवाभिसन्धिना प्रवर्त्तमानस्य केन चित्प्रतिबद्धत्वादणिमादीनामनुत्पत्तौ तन्निबन्धनस्य दृष्टानुश्रविकविषयभोगस्यासिद्धेः प्रतिबन्धकविषयः क्रोधः स तामिस्राख्यो द्वेषः, एवमणिमादिगुणसम्पत्तौ दृष्टानुश्रविकविषयप्रत्युपस्थाने च कल्पान्ते सर्वमेतन्नङ्क्ष्यतीति यस्त्रासः सोऽभिनिवेशोऽन्धतामिस्रः, तदुक्तं—

पातञ्जलरहस्यम्।

न्यायमाश्रित्याह—परिहरतीति। प्रमाणेन = उत्तरभाविना, उपसंहरति—तस्मादिति। सामान्यम् = अविद्यापदवाच्यत्वं पञ्चानामवान्तरभेदे सत्यपि,

तदुक्तम्—

वार्त्तिकम्।

ननु बाध्यबाधकभाव एव वैपरीत्येन कथं न भवति तत्राह—भूतार्थेति। सदर्थविषयत्वेन प्रमाणस्य बलवत्त्वात्, तत्त्वपक्षपातो हि धियां स्वभाव इति, अत्रोदाहरणमाह—तत्र प्रमाणेनेत्यादिना, विपर्ययवृत्तेरतिहेयत्वख्यापनायाह—सेयमिति। पञ्चपर्वा याऽविद्या

---

(१) सिद्धमिति। इह तावदेष निष्कर्षः—पौर्वापर्य्योत्पत्तिकानां ज्ञानानां व्यवस्थाद्वयी शास्त्रप्रमितोपलभ्यते, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षाद्" ३।३।१४, इति जैमिनीयेन सूत्रेण परस्य ज्ञानस्य दौर्बल्यम्, अर्थात् पूर्वस्य तस्य प्राबल्ये स्वारस्यं सिध्यति, तथा "पौर्वापर्ये पूर्वदौर्बल्यं, प्रकृतिवद् ६।५।५४। इति तेन सूत्रेण पूर्वस्य ज्ञानस्य दौर्बल्यं, सुतरां परस्य प्राबल्यमर्थलभ्यम्, एवं च कुत्र कतरो न्याय्य इति विवेचितं—

"पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेद्"
आगामित्वात् परं पूर्वमबाधित्वैव जायते॥
पूर्वं पुनरबाधित्वा परं नोत्पद्यते क चिद्"

इत्यादिना भट्टपादैः,

न्यशीशदंश्चैनमर्थं वाचस्पतिमिश्राः—तस्मादनुपजातेत्यादिना, तथा च यत्र पूर्वबाधेन परोत्पत्तिस्तत्र पूर्वं दुर्बलं परं प्रबलमन्यथा प्रबलं पूर्वं दुर्बलं परमिति सुस्थिरम्।

**इति, एत एव स्वसंज्ञाभिस्तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति, एते चित्तमलप्रसङ्गेनाभिधास्यन्ते ॥ ८ ॥**

भास्वती ।

ज्ञानमिति । सुगमं भाष्यम् ॥ ८ ॥

तत्त्ववैशारदी ।

"भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्र"-

इति ॥ ८ ॥

पातञ्जलरहस्यम् ।

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिता" इति

स्वसंज्ञाभिरिति । यथासंख्यं तमोमोहमहामोहादिनामानः, अणिमादीति ।

"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता" इति

अस्यार्थः—यत ऐश्वर्यादणुर्भवति तत्र विद्यमानोऽपि न दृश्यते, लघिमा लघुर्भवति सूर्यलोकं गच्छति, प्राप्तिः सप्तवितस्तिपरिमाणोऽप्यङ्गुल्यग्रेण चन्द्रमसं स्पृशति, प्राकाम्यं यद्यदिच्छति तत्तत् करोति-भूमावपि निमज्जति, महिमा पर्वतादिशरीरो भवतीति, कायिकं वाचिकं—मानसं त्रयमीशित्वं सर्वान् प्रतीष्टे, केनापि न प्रतिहन्यते यत्तदश्चर्यम्, वशित्वञ्च भूतभौतिकान् वशीकरोति तेषां प्रभवव्यूहलये समर्थो भवति, कामावसायिता यद्वाचाऽभिलपति,

वार्त्तिकम् ।

संसारानर्थबीजं सा, इयमेव=मिथ्याज्ञानरूपा वृत्तिरेव, एतद्विशेष एवेति यावत्, अत इयमवश्यं निरोद्धव्येति भावः, पर्वाणि गणयति—अविद्याऽस्मितेति । क्लेशाः क्लेशाख्याः, क्लेशदत्वादिति भावः, रागादीनां मिथ्याज्ञानत्वाभावेऽप्यविद्ययाऽनुगतत्वादविद्यापर्वत्वं-विपर्ययत्वं च, यथाऽङ्कुरस्य बीजपर्वत्वं बीजत्वं चेति बोध्यम्,

नन्वविद्या विपर्ययो मोह इति पर्यायाः, एवं च सति मोहवृत्त्योरभेदात् कथं शान्तघोरमूढत्वं वृत्तीनामिति सिद्धान्तो घटेतेति चेत् ? न-धर्मधर्म्यभेदेनैवात्र वृत्तीनां विपर्ययादिरूपविभागकरणाद्,

वस्तुतस्तु वृत्तयो विपर्ययादिमत्य एवेत्यत्यन्तहेयत्वप्रतिपादनायान्वर्थसंज्ञापञ्चकं क्लेशानामाह—एत एवेति । स्वसंज्ञाभिः स्वानुरूपसंज्ञाभिः, तथा च विष्णुपुराणम्—

"तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञकः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥"

इति, एतेषामेव च प्राधान्येनावान्तरविभागः सांख्यकारिकायामुक्तः—

"भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः" ॥

इति, अव्यक्तमहदहंकारपञ्चतन्मात्रेष्वनात्मस्वष्टस्वात्मबुद्धिरविद्या=अष्टविधं तमः, ज्ञानावरकत्वाद्, एतास्वेव देहाद्यात्मबुद्धीनामन्तर्भावः, देहादीनामेतदष्टककार्यत्वात्, शुक्तिरजतादिविपर्ययाणां तु संसाराहेतुतया नात्र गणना, 'विपर्ययादिष्यते बन्ध' इति पूर्वकारिकया बन्धहेतुविपर्ययस्यैव प्रकृतत्वादिति, मोहादिष्वप्येवं बोध्यम्, अष्टस्वणिमाद्यैश्वर्येष्वनात्मस्वात्मीयबुद्धिरस्मिता स्वत्वास्मितयोः पर्यायत्वात् सैव चाष्टविषयकतयाऽष्टविधो मोहो मुख्यत उच्यते, शेषं पूर्ववत्, तथा दृष्टानुश्रविकभेदेन दशसु शब्दादिविषयेषु रागो दशविधो महामोहः, शेषं पूर्ववत्, तथाऽष्टैश्वर्यस्य विषयदशकस्य च परिपन्थिनि द्वेषोऽष्टादशधा ता-

## शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥

स न प्रमाणोपारोही, न विपर्य्ययोपारोही च, वस्तुशून्यत्वेऽपि शब्दज्ञा-

भास्वती।

क्रमप्राप्तविकल्पस्य लक्षणमाह—शब्दज्ञानानुपाती = अवस्तुवाचकशब्दज्ञानस्यानुजा-तस्तज्ज्ञाननिबन्धनो वस्तुशून्यो वास्तवार्थशून्यो विकल्पः, स इति । स न प्रमाणो-पारोही प्रमाणान्तर्भूतः, न च विपर्ययोपारोही, वस्तुशून्यत्वान्न प्रमाणं तथा शब्दज्ञा-नमाहात्म्यनिबन्धनाद् व्यवहारान्न विपर्ययः, प्रमाणस्य विषयो वास्तवः, विपर्ययस्य नास्ति व्यवहारः, यतो मिथ्येदमिति ज्ञात्वा न तद् व्यवह्रियते, विकल्पस्य विषयाणां-चास्ति व्यवहारः, यथा—"वैकल्पिकं कालाद्यवस्तु" इति ज्ञात्वाऽपि तद् व्यवह्रियते, उदाहरणमाह—तद् यथेति । यदा यतश्चितिरेव पुरुषस्ततश्चैतन्यं पुरुषस्य स्वरूपमित्यत्र भेदवचनमवास्तवत्वाद् , वैकल्पिकम् , तद्वचननिबन्धनं यज्ज्ञानं स एव विकल्पः, किं वि-शेष्यं केन विशेषणेन व्यपदिश्यते = विशेष्यते, न हि चितिशब्दः पुरुषं विशिनष्टि, अ-भिन्नत्वाद् , तस्मादयं वाक्यार्थः, अवास्तवो वैकल्पिकः, अवास्तवत्वेऽप्यस्यस्य व्यव-हारः, चैत्रस्य गौरित्यत्रास्ति वास्तवोऽर्थस्तस्मात्तत्र भवति च व्यपदेशे विशेष्यविशे-षणभावे वृत्तिः = वाक्यवृत्तिः, वाक्यस्य वास्तवोऽर्थः, तथेति । प्रतिषिद्धवस्तुधर्मा =

तत्त्ववैशारदी ।

"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः," ननु शब्दज्ञानानुपाती चेदागमप्रमाणान्त-र्गतो विकल्पः प्रसज्ज्येत, निर्वस्तुकत्वे वा विपर्य्ययः स्यादित्यत आह—"स न" इति । स न प्रमाणान्तर्गतो विपर्य्ययान्तर्गतो वा, कस्माद् , यतः "वस्तु" इति । वस्तुशून्यत्वेऽपी-ति—प्रमाणान्तर्गतिं निषेधति, शब्दज्ञानमाहात्म्यनिबन्धन इति विपर्य्ययान्तर्गतिम् ,

पातञ्जलरहस्यम् ।

मनसा सङ्कल्पयति तत्सत्यम् , अन्येषां तु व्यभिचरतीति भावः, केनचिदित्यसुरादिना, तदु-क्तमिति । तत्त्वकौमुद्याम् ॥ ८ ॥

विकल्पस्य तृतीयत्वं दूषयन्नाह—नन्विति । व्यपदेशे भेदे वृत्तिर्वाक्यस्येति शेषः, निष्क्रि-यः पुरुष इति भिन्नानामभेदधीः तदाभास इति । वस्तुशून्यत्वेऽपि शब्दव्यवहाराविसंवादिश-ब्दमाहात्म्येन भासत इत्यर्थः, असंबन्धादिति । अभावास्वीकृतेः संयोगसमवायतादात्म्या-नां नैयायिकमतेऽप्यसिद्धेः एकं फलं = विक्लृप्तिः॥ ९ ॥

वार्त्तिकम् ।

मिस्रः, शेषं पूर्ववत् , तथैवर्थाष्टकं विषयदशकं च नङ्क्ष्यतीति यस्त्रासः सोऽष्टादशधाऽभिनिवे-शोऽन्धतामिस्रः, शेषं पूववद् , एत इति । अविद्याऽऽद्य इत्यर्थः ॥ ८ ॥

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः, शब्दज्ञानानुपाती वस्तुशून्यः प्रत्ययो विकल्प-इत्यर्थः, शब्दश्च शाब्दज्ञानं च ते अनुपातिनी यस्य स तथा, तथा च तदुभयजनकः सर्वदैव बाधाबाधकालाविशेषेणेत्याद्यविशेषणार्थः,

ननु विकल्पस्य सवस्तुकत्वे प्रमाणेऽन्तर्भावः, निर्वस्तुकत्वे तु विपर्ययेऽन्तर्भावस्तृतीयप्र-कारासम्भवादित्याशङ्कां परिहरन्नेव विशेषणयोर्व्यावर्त्यमाह—स नेति। उपारोहोऽन्तर्भावः, प्र-माणकोट्यनन्तर्भावे हेतुर्वस्तुशून्यत्वेऽपीति, विपर्ययकोट्यनन्तर्भावे च हेतुः शब्दज्ञानेत्यादि, मा-हात्म्यं याथार्थ्यं, तथा च यथाऽर्थशब्देन यथाऽर्थज्ञानेन च यादृशो व्यवहारो भवति शब्दज्ञा-नरूपस्तादृश एव व्यवहारो विकल्पादपि दृश्यते विवेकिनामपीत्यर्थः, विपर्ययस्तु नैवं,-बाधोत्तरमिदं रजतमिति शब्दप्रत्यययोरभावादिति, एतेन विपर्ययलक्षणे शब्दज्ञाना-नुपातित्वं विशेषणं देयमिति भावः, विकल्पस्योदाहरणमाह—तद्यथेत्यादिना । किं-

नमाहात्म्यनिबन्धनो व्यवहारो दृश्यते, तद्यथा चैतन्यं पुरुषस्य स्वरूपमिति, यदा चितिरेव पुरुषस्तदा किमत्र केन व्यपदिश्यते ? भवति च व्यपदेशे(१) वृत्तिर्यथा चैत्रस्य गौरिति, तथा प्रतिषिद्धवस्तुधर्मो निष्क्रियः पुरुषः, ति-

भास्वती ।

प्रतिषिद्धा न सन्ति दृश्यवस्तुधर्मा यस्मिन् स क्रियाहीनः पुरुष इति पुरुषलक्षणे धर्माणामभावमात्रमेव विवक्षितं न कश्चिद् वास्तवो धर्मः, तस्मादेतद्वाक्यस्यार्थो वैकल्पिकः, तथा—तिष्ठति बाणः स्थास्यति स्थित इत्यत्रापि विकल्पवृत्तिर्जायते, यतः—"ष्ठा गतिनिवृत्तौ" इति धात्वर्थः, तस्मात् तिष्ठत्यादिपदेन गत्यभावमात्रमवगम्यते न का चिद् वास्तवी क्रिया, 'अनुत्पत्तिधर्मा पुरुष' इत्यत्रापि तथैव भवति, न च पुरुषान्वयी पुरुष-

तत्त्ववैशारदी ।

एतदुक्तं भवति—(२)क चिद् अभेदे भेदमारोपयति, (३)क चित् पुनर्भिन्नानामभेदम्, ततो भेदस्याभेदस्य च वस्तुतोऽभावात्तदाभासो विकल्पो न प्रमाणं, नापि विपर्ययो व्यवहाराविसंवादादिति, शास्त्रप्रसिद्धमुदाहरणमाह–"तद्यथा" इति । किं विशेष्यं केन व्यपदिश्यते = विशेष्यते, नाभेदे विशेष्यविशेषणभावो, न हि गवा गौर्विशेष्यते किन्तु भिन्नेन चैत्रेण, तदिदमाह—"भवति च व्यपदेशे वृत्तिः" इति । व्यपदेश्यव्यपदेशकयोर्भावो व्यपदेशो = विशेषणविशेष्यभाव इति यावत्, तस्मिन् वृत्तिर्वाक्यस्य यथा चैत्रस्य गौरिति, शास्त्रीयमेवोदाहरणान्तरं समुच्चिनोति—"तथा" इति । प्रतिषिद्धो वस्तुनः = पृथिव्यादेर्धर्मः = परिस्पन्दो यस्य स तथोक्तः, कोऽसौ निष्क्रियः पुरुषः, न खलु साङ्ख्यीये राद्धान्तेऽभावो नाम कश्चिदस्ति वस्तुधर्मो येन पुरुषो विशेष्येतेत्यर्थः, क चित्पाठः---"प्रतिषिद्धा वस्तुधर्मा" इति, तस्यार्थः—प्रतिषेधव्याप्ताः प्रतिषिद्धाः, न वस्तुधर्माणां तद्व्याप्यता, भावाभावयोरसंबन्धाद्, अथ च तथा प्रतीतिरिति, लौकिकमुदाहरणमाह—"तिष्ठति बाण" इति । यथा हि पचति भिनत्तीत्यत्र पूर्वापरीभूतः कर्मक्षणप्रचय एकफलावच्छिन्नः प्रतीयत इत्येवं तिष्ठतीत्यत्रापि पूर्वापरीभावमेवाह—"स्थास्यति स्थित" इति । ननु भवतु पाकवत् पूर्वापरीभूतयाऽवस्थानक्रियया बाणाद् भिन्नया बाणस्य व्यपदेश इत्यत आह—"गतिनिवृत्तौ धात्वर्थमात्रं गम्यत"–इति । गतिनिवृत्तिरेव तावत् कल्पिता तस्या अपि भावरूपत्वं तत्रापि पूर्वापरीभाव इत्यहो

वार्त्तिकम् ।

विशेष्यं केन विशेषणेन व्यपदिश्यते, अत्यन्ताभेदान्नास्त्यत्र विकल्पज्ञाने विशेषणविशेष्यभावरूपोऽर्थ इत्यर्थः, वस्तुशून्यत्वमुपपाद्य शब्दज्ञानानुपातित्वमुपपादयति–भवति चेति। चैत्रस्य गौरिति यथाऽर्थशब्दवदत्रापि विशेष्यविशेषणभावव्यपदेशे सति तथा वृत्तिर्बोधो विवेकिनामपि भवति चेत्यर्थः, अन्यान्यप्युदाहरणान्याह—तथेत्यादिना। शास्त्रैः प्रतिषिद्धा वस्तुभूताः सुखादयो धर्मा यत्रेति प्रतिषिद्धवस्तुधर्मा पुरुषः, इयं वृत्तिरेकमुदाहरणम्, अभावस्याधिकरणमात्ररूपत्वेनाधाराधेयभावविरहादिति, निष्क्रियः पुरुष इत्यन्यदुदाहरणम्, लौकिकमप्युदाहरणत्रयमाह—तिष्ठतीति । तिष्ठति बाणः स्थास्यति स्थित इति, गतिनिवृत्तौ गतिनिवृत्तिविषयकविकल्पे वर्त्तमानत्वादिविशिष्टं स्थाधात्वर्थमात्रं पारमार्थिकतया प्रतीयते कर्त्तृत्वं-कर्त्तृत्वस्य वर्त्तमानत्वादिकं च, प्रत्ययत्रयार्थस्तु विकल्पित इत्यर्थः, बाणे गतिनिवृत्त्यनुकूलकृत्यभावादिति, उदाहरणान्तरमाह—तथाऽनुत्पत्तीत्यादिना व्यवहार इतीत्यन्तेन, अनुत्पत्तिधर्मो यस्येत्यनुत्पत्तिधर्मा पुरुषः, स धर्मोऽनुत्पत्तिर्धर्मः, प्रमाणविपर्ययातिरिक्तायां विकल्प-

(१) "किमत्र"—"भवति चे"त्यादिग्रन्थाभ्यां क्रमेण वस्तुशून्यत्वशब्दज्ञानानुपातित्वे सूचिते।
(२) राहोः शिर इत्यादौ । (३) गुर्वयो दहतीत्यादौ ।

ष्ठति बाणः स्थापयति स्थित इति, गतिनिवृत्तौ धात्वर्थमात्रं गम्यते तथाऽनुत्पत्तिधर्मा पुरुष इति, उत्पत्तिधर्मस्याभावमात्रमवगम्यते, न पुरुषान्वयी धर्मः, तस्माद् विकल्पितः स धर्मस्तेन चास्ति व्यवहार इति ॥ ९ ॥

## अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

भास्वती।

गतः कश्चिद् धर्मोऽवगम्यते तस्मात् सोऽनुत्पत्तिपदवाच्यो धर्मो विकल्पितस्तेन = विकल्पेन चैतादृशवाक्यस्य व्यवहारोऽस्ति; आनिर्विचारध्यानसिद्धेः, यावद् भाषाऽनुगा चिन्ता तावद् विकल्पस्य व्यवहारो विद्यते ॥ ९ ॥

अभावप्रत्ययालम्बना वृत्तिर्निद्रेति । अभावः = जाग्रत्स्वप्नयोस्तिरोभावः, तस्य प्रत्ययः = कारणं तामसजडताविशेषरूपम्, तदालम्बना = तत्तमोविषया वृत्तिः = अत्यस्फुटं ज्ञानं निद्रा स्वप्नहीना सुषुप्तिरिति सूत्रार्थः, सेति—सा निद्रा प्रत्ययविशेषो वृत्तिरेव सम्प्रबोधे=जाग्रत्काले तस्याः प्रत्यवमर्शात्=स्मरणात्, न हि स्मरणं संस्कारमृते सम्भवेत् संस्कारश्चानुभवमन्तरेण न सम्भवेत्, तस्माद् निद्राऽनुभूतिविशेषो यथाऽन्धकारोऽस्फुटरूपविशेषः सर्वरूपाणाञ्च तत्रैकीभावः, तथैव जाड्यमापन्नेषु शरीरेन्द्रियचित्तेषु यः सामान्यो जडताबोधो विद्यते सा निद्रावृत्तिः, इतरवद् निद्रायास्त्रिगुणत्वं = विवृणोति-उक्तञ्च—

"जाग्रत् स्वप्नः सुषुप्तञ्च गुणतश्चित्तवृत्तयः" इति,

तत्त्ववैशारदी।

कल्पनापरम्परेत्यर्थः, अभावः कल्पितो भाव इव चानुगत इव च सर्वपुरुषेषु गम्यते, न पुनः पुरुषव्यतिरिक्तो धर्मः कश्चिदित्युदाहरणान्तरमाह—"तथाऽनुत्पत्तिधर्मा" इति । प्रमाणविपर्ययाभ्यामन्या न विकल्पवृत्तिरिति वादिनो बहवः प्रतिपेदिरे, तत्प्रतिबोधनायोदाहरणप्रपञ्च इति मन्तव्यमिति ॥ ९ ॥

"अभावप्रत्ययालम्बना वृत्तिर्निद्रा"। अधिकृतं हि वृत्तिपदमनुवादकं, प्रमाणविपर्ययविकल्पस्मृतीनां वृत्तित्वं प्रति परीक्षकाणामविप्रतिपत्तेरनस्तदनूद्यते विशेषविधानाय, निद्रायास्तु वृत्तित्वे परीक्षकाणामस्ति विप्रतिपत्तिरिति वृत्तित्वं विधेयं, न च प्रकृतमनुवादकं विधानाय कल्पत इति (१) पुनर्वृत्तिग्रहणम्, जाग्रत्स्वप्नवृत्तीनामभावस्तस्य प्रत्ययः = कारणं बुद्धिसत्त्वाच्छा-

वार्त्तिकम्।

वृत्तौ बहुवादिविप्रतिपत्तेस्तन्निरासाय बहून्युदाहरणानि, एवं खपुष्पशशशृङ्गप्रत्यया अपि विकल्पमध्ये प्रवेशनीयाः, खपुष्पं नास्तीति प्रत्ययानुरोधेन तादृशप्रत्ययसिद्धेः, विकल्पप्रत्ययास्तु वैशेषिकैराहार्यज्ञानविशेषतयैष्टव्या एव, विशेषस्तु—तैर्मिथ्याज्ञानमध्ये प्रवेश्यन्ते, अस्माभिस्तु सविकल्पनिर्विकल्परूपाभ्यां श्रुतिसिद्धयोगविभागार्थं पृथङ् निर्दिश्यन्त इति ॥ ९ ॥

"अभावप्रत्ययालम्बना वृत्तिर्निद्रा" निद्राया वृत्तित्वस्फुटीकरणाय पुनर्वृत्तिग्रहणम्, जाग्रत्स्वप्नवृत्तीनामभावस्य प्रत्ययः प्रतिसंक्रमस्थानं कारणमिति यावत्, तच्च चित्तसत्त्वाच्छादकं तमोद्रव्यमन्धकारादिवत् तदेवालम्बनं विषयो यस्याः सा तथा तादृशी वृत्तिर्निद्रेत्यर्थः, बुद्धेर्हि त्रिगुणतया यदा सत्त्वरजसी अभिभूय समस्तकरणावरकं तम आविर्भवति तदा मलिनस्य चित्तसत्त्वस्य तमआकारैव वृत्तिः स्वपिमीत्याकारा जायते, स्वापश्चात्र जाग्रत्स्वप्नवृ-

(१) पुनर्वृत्तीति। शब्दाधिकारो हि प्रमाणविशेषमपेक्षते, प्रकृते तु वृत्तिपदोपादानं प्रत्युत तद् विरुणद्धि: अतश्चात्र पक्षे वृत्तिग्रहणं स्पष्टार्थमिति कस्याप्युक्तिर्न युक्ता।

**सा च संप्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः, कथं ? सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति, दुःखमहमस्वाप्सं स्त्यानं मे मनो-**

भास्वती ।

सुखमिति । सात्त्विक्यां निद्रायां 'सुखमहमस्वाप्सम्' इत्यादिः प्रत्यय; विशारदीकरोति = स्वच्छीकरोति, दुःखमिति । राजसनिद्रालक्षणं, स्त्यानम् = अकर्मण्यम्, भ्रमणरूपादस्थैर्यात्, गाढमिति तामसी निद्रा, मूढः—सुप्तस्य सम्प्रबोधेऽपि न द्राक् कुत्राहमित्यत्र-

तत्त्ववैशारदी ।

दकं तमस्तदेवालम्बनं = विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा, बुद्धिसत्त्वं हि त्रिगुणे यदा सत्त्वरजसी अभिभूय समस्तकरणावरकमाविरस्ति तमस्तदा बुद्धेर्विषयाकारपरिणामाभावादुद्भूततमोमयीं बुद्धिमवबुध्यमानः पुरुषः सुषुप्तोऽन्तःसञ्ज्ञ इत्युच्यते कस्मात्पुनर्निरोधकैवल्ययोरिव वृत्त्यभाव एव न निद्रेत्यत आह--"सा" इति । सा च संप्रबोधे प्रत्यमर्शात = सो-

पातञ्जलरहस्यम् ।

करणावरकमिति करणवत्त्वं सूचितं वेदान्तिनामिव न करणाभावः सुषुप्तौ, सोपपत्तिकाद् =

वार्त्तिकम् ।

त्त्यभावः, तां च निद्राऽऽख्यां वृत्तिमवबुध्यमानः पुरुषः सुषुप्तस्थानोऽन्तःप्रज्ञ इति श्रुतिभिरुच्यत इति, न च चित्तेन चित्तग्रहणे कर्मकर्तृविरोधः? वृत्त्या चित्तस्य ग्रहणेन कर्मकर्त्रोर्भेदाद्, न चैवमेकया वृत्त्या वृत्त्यन्तरग्रहणसंभवे पुरुषकल्पनावैयर्थ्यम् ? नियमेन वृत्तिगोचरवृत्तिकल्पनेऽनवस्थायाः सूत्रेण वक्ष्यमाणत्वादिति,

ननु निरोधे कैवल्यप्रलयादिष्विव वृत्त्यभाव एव सर्वस्यां सुषुप्तौ कथं न स्वीक्रियते ? "न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदि"ति सौषुप्तश्रुतावपि तदानीं ज्ञानाभावस्यैवावगमादित्याशङ्क्याह—सा तु संप्रबोध इति । सा तु निद्रा प्रत्ययविशेष एव, जागरे स्मरणादित्यर्थः, अत एव—

'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेदि"

त्यादिश्रुतयः सुषुप्तस्थानेऽपि भोग्यमस्तीत्याहुः, न चैवं श्रुत्योर्विरोध इति वाच्यम्? अर्धसमप्रभेदेन सुषुप्तेर्द्वैविध्यात्, 'मुग्धेऽर्द्धसम्पत्ति'रिति सुषुप्तिप्रकरणस्थवेदान्तसूत्राद्, अन्यथा श्रुत्योर्विरोधस्यापरिहार्यत्वाच्च कदा चिद्गाढतमसा चित्तसत्त्वस्य तमोगोचरवृत्तावप्यसामर्थ्यं च संभवत्येवेति,

यत्त्वाधुनिका वेदान्तिब्रुवा आहुः—सुषुप्तौ तमः साक्षिभास्यमेव न तत्र वृत्तिरस्तीति? तन्न-वक्ष्यमाणस्मरणानुपपत्तेः, साक्षिण्यपरिणामिनि संस्कारस्मृत्योरनभ्युपगमाद्, (१)यच्च तदेकदेशी सुषुप्तावज्ञानाख्यप्रकृतेरेव वृत्तिमाह न तु चित्तस्य; तदपि हेयम्–एवं सति जाग्रत्स्वप्नयोरपि तस्या एव वृत्तिसंभवे चित्तकल्पनावैयर्थ्यादिति, तस्माज्जाग्रत्स्वप्नयोरिव सुषुप्तेऽपि चित्तस्यैव(२) वृत्तिः,

"जाग्रत्स्वप्नसुषुप्तं च गुणतो बुद्धिवृत्तयः"

इति स्मृतिभ्यश्च, तथा चित्तत्वेनैव वृत्तिसामान्ये हेतुतायां लाघवाच्चेति, स्मरणाकारं पृच्छति—कथमिति। यस्यां सत्त्वसचिवं तम आविर्भवति तस्याः सात्त्विक्या निद्राया उत्थि-

---

(१) अनभ्युपगमादिति । अत्रैकदेश्युक्तावधारणनिरासपरग्रन्थे वृत्त्यनभ्युपगमपरत्वमारोप्याक्षेपोऽसौ जन्यमनुमापयत्याक्षेप्तुः ।

(२) चित्तस्यैव वृत्तिरिति । यत्त्वत्राद्वैतिनयेनाक्षेपः कस्य चित् तदसूयाविलसितमेव, प्रस्थानभेदाद्, "उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता" इति न्यायाच्च, अन्यच्च सांख्यसूत्रोक्तब्रह्मरूपताऽन्यथाऽनुपपत्त्यौपाधिकपरिच्छेदापसृतिमुखेन समग्रसुषुप्तौ चित्तविलयस्योक्तत्वेऽप्यध्यर्धसंपत्तिवेलं तादृशवृत्त्युपगमे बाधकाभावेन यद् विक्षोभ्रमापाऽऽपादनं तत् प्रष्टुरपि कुतो नेतिपर्यनुयोगस्य तुल्यत्वम् ।

**भ्रमत्यनवस्थितं, गाढं मूढोऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठतीति, स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्यादसति प्रत्ययानुभवे, तदाश्रिताः स्मृतयश्च तद्विषया न स्युः, तस्मात् प्रत्ययविशेषो निद्रा, सा च समाधावितरप्रत्ययवन्निरोद्धव्येति ॥ १० ॥**

भास्वती।

धारणासामर्थ्यम् मूढत्वम्, चित्तम् अलसं = जडम्, मुषितम् = अपहृतमिव, व्यतिरेकद्वारेण साध्यं साधयति—स इति। यदि प्रत्ययानुभवा न स्युस्तदा तज्जसंस्कारा अपि न स्युः, तथा च संस्कारबोधरूपाः स्मृतयोऽपि न स्युः, एवं निद्राया वृत्तित्वं सिद्धं समाधौ च सा निरोद्धव्या, समाधिर्न बाह्यज्ञानहीना मोहवशाद्देहक्रियाकारिणी स्मृतिहीना चित्तावस्था किन्तु ध्येयस्मृतौ सम्यगवधारणाद् रुद्धेन्द्रियादिक्रियारूपाऽवस्थेति ज्ञातव्यम्॥१०॥

तत्त्ववैशारदी।

पपत्तिकात् स्मरणात्प्रत्ययविशेषः, कथं? यदा हि सत्त्वसचिवं तम आविरस्ति तदैतादृशः प्रत्यवमर्शः सुप्तोत्थितस्य भवति "सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति = स्वच्छीकरोतीति, यदा तु रजःसचिवं तम आविरस्ति तदेदृशः प्रत्यवमर्श इत्याह—"दुःखमहमस्वाप्सम्" इति, स्त्यानम् = अकर्मण्यं मे मनः, कस्माद्? यतो भ्रमत्यनवस्थितम्, नितान्ताभिभूतरजःसत्त्वे तमःसमुल्लासे स्वापे प्रबुद्धस्य प्रत्यवमर्शमाह—"गाढं मूढोऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठति" इति, साध्यव्यतिरेके हेतुव्यतिरेकमाह—"स खल्वयम्" इति। प्रबुद्धस्य = प्रबुद्धमात्रस्य, प्रत्ययानुभवे = वृत्त्यभावकारणानुभवे, तदाश्रिताः, बोधकाल इत्यर्थः, ननु प्रमाणादयोऽभ्युत्थानचित्ताधिकरणा निरुद्ध्यन्तां, समाधिप्रतपक्षत्वान्निद्रायास्त्वेकाग्रवृत्तितुल्यायाः कथं समाधिप्रतिपक्षतेत्याह—"सा च समाधौ" इति एकाग्रतुल्याऽपि तामसत्वेन निद्रा सबीजनिर्बीजसमाधिप्रतिपक्षेति साऽपि निरोद्धव्येत्यर्थः॥१०॥

पातञ्जलरहस्यम्।

अनुभूतविषयकात्, तदेवाह—यदा हीत्यादिना, सा च समाधौ कर्त्तव्येति शेषः, निद्रा न त्याज्याः एकाग्रवृत्तितुल्यत्वादित्याशङ्क्याह—तामसत्वेनेति ॥ १० ॥

वार्त्तिकम्।

तस्य स्मरणाकारमाह-सुखमिति। प्रसन्नं निर्मलं मनः स्वस्मिन् जायमानां प्रज्ञां यथाऽर्थवृत्तिविशारदीकरोति सूक्ष्मार्थप्रतिबिम्बोद्ग्राहिणीं करोतीत्यर्थः, विशारदां करोतीति पाठस्तु साधुः, यस्यां रजःसचिवं तम आविर्भवति तस्या राजस्या निद्राया उत्थितस्य स्मरणाकारमाह—दुःखमिति। स्त्यानमकर्मण्यं, तामस्या निद्राया उत्थितस्य स्मरणाकारमाह-गाढमिति। अलमत्यन्तं मुषितमिव परैरपहृतमिव तिष्ठतीत्यर्थः, अलसमिति पाठे तु स्त्यानता चित्तस्यातिचाञ्चल्येन कर्माक्षमता, आलस्यं तु तमोधर्मगुरुत्वेन कर्माक्षमता कर्मण्यनिच्छा वेति भेदः,

ननु भवतु प्रत्यवमर्शस्तथाऽपि कथं सुषुप्तौ प्रत्ययसिद्धिस्तत्राह—स खल्विति। प्रत्ययानुभवे सूत्रोक्तस्याभावप्रत्ययस्यानुभवे सति सोऽयं प्रत्यवमर्शः खलु न स्यादित्यर्थः, संस्कारासंभवादिति भावः,

ननु वृत्तिं विनाऽपि सुखादिवत् सुषुप्तौ स्वापस्य साक्षिभास्यत्वमभ्युपगम्य तत्स्मरणमुपपादनीयमित्याशङ्क्याह—तदाश्रिता इति। तद्विषयाः प्रत्ययविषयिकाः स्मृतयोऽपि तदाश्रिताश्रिताश्रिता न स्युरन्यदृष्टस्यान्येनास्मरणादित्यर्थः, न च स्मरणमपि साक्षिण्येवास्त्विति वाच्यम्? तत्र संस्कारासंभवात् स्मृत्याख्यपरिणामासंभवाच्चेति,

ननु निद्रावृत्तिरपि तमस्येकाग्रा विषयदुःखशून्या चेति सा किमर्थं निरोद्धव्येत्याशङ्क्याह—सा चेति। इतरवृत्तिवत् सुखदुःखमोहात्मकत्वेन समाधिप्रतिपक्षत्वेन च निद्राऽपि समाधौ निरोद्धव्येत्यर्थः ॥ १० ॥

## अनुभूतविषयासंप्रमोषः स्मृतिः ॥ ११ ॥

किं प्रत्ययस्य(१) चित्तं स्मरति आहोस्विद्विषयस्येति ? ग्राह्योपरक्तः प्रत्य-

भास्वती ।

अनुभूतविषयाणामसम्प्रमोषः = तावन्मात्रग्रहणं नाधिकस्मृतिः, असम्प्रमोषः = परस्वानपहरणम्, चित्तेन यद्विषयीकृतं तस्य चित्तस्वस्यैव न परस्वस्य ग्रहणात्मिका वृत्तिः स्मृतिरित्यर्थः । किमिति । किम् प्रत्ययस्य प्रत्ययमात्रमित्यर्थः ? घटं जानामी-

तत्त्ववैशारदी ।

"अनुभूतविषयासम्प्रमोषः स्मृतिः" प्रमाणादिभिरनुभूते विषये योऽसम्प्रमोषः = अस्तेयः सा स्मृतिः, संस्कारमात्रजन्यस्य हि ज्ञानस्य संस्कारकारणानुभवावभासितो विषय-आत्मीयः तदधिकविषयपरिग्रहस्तु सम्प्रमोषः = स्तेयः, कस्मात्? सादृश्यात् "मुष स्तेय"—इत्यस्मात्सम्प्रमोषपदव्युत्पत्तेः, एतदुक्तं भवति—सर्वं प्रमाणादयोऽनधिगतमर्थं सामान्यतः प्रकारतो वाऽधिगमयन्ति, स्मृतिः पुनर्न पूर्वानुभवमर्य्यादामतिक्रामति, तद्विषया तदूनवि(२)-षया वा न तु तदधिकविषया, सोऽयं वृत्त्यन्तराद्विशेषः स्मृतेरिति, विमृशति—"किंप्रत्ययस्य" इति, ग्राह्यप्रवणत्वादनुभवस्य स्वानुभवाभावात्तज्जः स संस्कारो ग्राह्यमेव स्मारयती-

पातञ्जलरहस्यम् ।

अनुभवविषयातिरिक्तविषयस्यार्जनं संप्रमोषः, सादृश्यादिति । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यं तस्मात्, स्मरणस्य ग्रहणभिन्नत्वेऽपि ग्रहणविषयीकृतविषयमात्रग्रहत्वं,—प्रकारतः = विशेषत इत्यर्थः, ग्राह्योपरक्त इति ।

"अर्थेनैव विशेषो हि निराकारतया धियाम्"

इत्युक्तिमाश्रित्याह—ग्राह्यप्रवणेति । विशेषः = ज्ञानस्य व्यावर्तकोऽर्थ इत्यर्थः, स्व-

वार्त्तिकम् ।

"अनुभूतविषयासंप्रमोषः स्मृतिः" भाष्यानुसारेणास्य सूत्रस्यायमर्थः—एवमनुभूतौ यौ विषयौ वृत्तितदारूढार्थौ तयोरसंप्रमोषोऽस्तेयमनपहरणं धर्मधर्म्यभेदात्तद्वती तदुभयविषयिणीति यावत्, एवंभूता वृत्तिः स्मृतिरिति, अत्र प्रत्यभिज्ञाऽऽदिव्यावृत्तये संस्कारमात्रजन्यत्वमेव स्मृतिलक्षणं, सूत्रकारेण तु स्मृतेः प्रायिकं स्वरूपमेवोक्तं तेन न प्रमुष्टतत्ताकस्मरणाव्याप्तिः,

अथ वा सूत्रोक्तमेव लक्षणं तच्च संस्कारमात्रजन्यत्वेन विशेषणीयं प्रमुष्टतत्ताकं तु संस्कारमात्रजन्यमपि ज्ञानमनुभवमध्ये प्रवेशनीयं, शब्दजन्यपदार्थोपस्थित्यादौ स्मरामीति स्फुटंव्यवहारादर्शनात्, प्रमाणेत्यादिवृत्तिविभागसूत्रे तु संस्कारमात्रजन्यत्वगुणेन तादृशं ज्ञानंस्मृतिशब्दगृहीतमनेन च सूत्रेण मुख्यस्मृतिर्लक्षितेति, स्मृतेर्वृत्तितदर्थोभयविषयकत्वंसूत्रोक्तमवधारयितुं भाष्यकारो विमृशति—किं प्रत्ययस्येति । स्मृत्यर्थधातुयोगात् कर्मणि षष्ठी, चित्तं किं पूर्वानुभवरूपं प्रत्ययमपि स्मरति आहो स्विद्विषयमात्रमित्यर्थः, तत्र स्मृतेरुभयविषयकत्वरूपमाद्यं पक्षं सिद्धान्तयितुमादावुभयस्मरणे कारणमुभयगोचरसंस्कारमुपपादयति–ग्राह्योपरक्त इत्यादिना । यतो ग्राह्योपरक्तो ज्ञानविशेषणतया घटादिभिरप्याकारितोऽतो ग्राह्यग्रहणोभयाकारनिर्भासस्तदुभयाकारतया प्रसिद्धो यः प्रत्ययो घटं जानामीत्यनुव्यवसायः स तथाजातीयकं ग्राह्यग्रहणोभयाकारमेव संस्कारं जनयति समानाकारत्वेनैव लाघवादनुभवसंस्कारस्मृतीनां कार्यकारणभावादित्यर्थः,

(१) प्रत्ययस्येति । अत्र षष्ठीं संगमयतोऽपि टिप्पनयतो विवृतौ द्वितीयोल्लेखः प्रामादिकः ।

(२) तदूनविषया वेति । यच्चात्र टिप्पनयता भिक्षोः कृतान्तविशेषाज्ञानमुद्भावितं तत् स्मरणे प्रमुष्टतत्ताकतायां तत्त्वानवभासेनानुभवतुल्यतया तत्त्वाभ्युपगमोक्तौ तत्त्वोक्तित्वमारोपयतोऽपि कृतान्तविशेषाज्ञानमेवेति ।

**यो ग्राह्यग्रहणोभयाकारनिर्भासस्तथाजातीयकं संस्कारमारभते; स संस्कारः स्वव्यञ्जकाञ्जनस्तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति,**

**तत्र ग्रहणाकारपूर्वा बुद्धिः, ग्राह्याकारपूर्वा स्मृतिः, सा च द्वयी—भावि-**

भास्वती।

स्यात्मकस्य ज्ञानस्येत्यर्थः आहोस्विद् विषयस्य = रूपादेश्चित्तं स्मरति ? उत्तरमुभयस्येति, ग्राह्योपरक्तः = शब्दादिग्राह्यविषयैरुपरक्तोऽपि प्रत्ययः, ग्राह्यग्रहणोभयाकारनिर्भासः, प्रत्ययस्याप्यनुभवात्, तथाजातीयकम् = ग्राह्यग्रहणोभयाकारं संस्कारम्, आरभते = जनयति, स संस्कारः स्वव्यञ्जकाञ्जनः = स्वस्य व्यञ्जकेनोद्बोधकेन, अञ्जनं व्यक्तीभवनं यस्य तादृशः, ग्राह्यग्रहणाकारामेव स्मृतिं जनयति, तत्र-ग्रहणाकारपूर्वा = ग्रहणमनधिगतविषयस्योपादानं तदाकारप्रधाना व्यवसायप्रधानेत्यर्थः, बुद्धिर्ग्रहणरूपा ज्ञानशक्तिः

तत्त्ववैशारदी।

ति प्रतिभाति, अनुभवमात्रजनितत्वाच्चानुभवमेवेति, विमृश्योपपत्तित उभयस्मरणमेवावधारयति, ग्राह्यप्रवणतया ग्राह्योपरक्तः परमार्थतस्तु ग्राह्यग्रहणे एवोभयं तयोराकारं स्वरूपं निर्भासयति = प्रकाशयति स्वव्यञ्जकं = कारणम् = आकारो यस्य स तथोक्तः स्वकारणाकारइत्यर्थः यद्वा व्यञ्जकम् = उद्बोधकम् अञ्जनम् = फलाभिमुखीकरणं यस्येत्यर्थः, ननु यदि कारणविचारणे बुद्धिस्मरणयोः सारूप्यं कस्तर्हि विशेषः ? इत्यत आह—"तत्र ग्रहण" इति। ग्रहणम् = उपादानं, न च गृहीतस्योपादानं सम्भवति, तद्नेनानधिगतबोधनं बुद्धिरित्युक्तम्, ग्रहणाकारो = ग्रहणरूपं, पूर्वम् = प्रधानं यस्याः सा तथोक्ता विकल्पितश्चायमभेदेऽपि बुद्धिग्रहणयोर्गुणप्रधानभाव इति, ग्राह्याकारः पूर्वः = प्रथमो यस्याः सा तथोक्ता, इदमेव च ग्राह्याकारस्य ग्राह्यस्य पूर्वत्वं यद् वृत्त्यन्तरविषयीकृतत्वमर्थस्य, तदनेन वृत्त्यन्तरविषयीकृतगोचरा स्मृतिरित्युक्तं भवति, 'सोऽयमसम्प्रमोष इति, नन्वस्ति स्मृतेरपि सम्प्रमोषो, दर्शयति हि पित्रादेरतीतस्य देशकालान्तराननुभूतचरदेशकालान्तरसंबन्धं स्वप्न इत्यत आह—"सा च द्वयी"

पातञ्जलरहस्यम्।

व्यञ्जकं = संस्कारः, उपादानं = स्वीकारः, न च स्वीकृतस्य स्वीकार इत्याह—न चेति। उक्ता बुद्धिः, स्मृतिमाह—ग्राह्याकार इति। वृत्त्यन्तरविषयीकृतत्वं गृहीतग्राहित्वम्, अत्र वृ-

वार्त्तिकम्।

नन्वत्र व्यवसायरूपवृत्तेः स्वप्रकाशत्वमेव निर्भासान्तविशेषणार्थः कथं नेष्यत इति चेत् ? न—कर्मकर्तृविरोधेन वृत्तेः स्वविषयकत्वस्य सूत्रभाष्याभ्यां चतुर्थपादे निराकरिष्यमाणत्वात्,

ननु किं व्यवसायस्य संस्कारजनकत्वमेव नास्ति? न नास्ति, किंतु तत्संस्कारजन्यं ज्ञानंस्मृतिर्न भवति प्रमुष्टतत्ताकस्य पराभिमतस्य स्मरणस्यास्माभिर्व्यवहारानुसारेणानुभवमध्यएव प्रवेशनादिति,

नन्वस्तूभयविषयकसंस्कारस्ततः किमित्यत आह—स संस्कार इति। स चोभयविषयकसंस्कारो यदा स्वाभिव्यञ्जकेन कालादिनाऽभिव्यक्तो भवति तदा तदाकारां स्वसमानाकारामेव ग्राह्यग्रहणोभयात्मिकां तदुभयविषयिणीं स्मृतिं जनयतीत्यर्थः, अनुभूतविषयासंप्रमोषं सूत्रोक्तंव्याख्यायानुव्यवसायतज्जन्यस्मरणयोर्विशेषमप्याह-तत्र ग्रहण इति। पूर्वं मुख्यं विशेष्यमिति यावत्, तयोः प्रत्ययस्मरणयोरत्यन्तं समानाकारत्वं न मन्तव्यं यतस्तत्र तयोर्मध्ये बुद्धिरनुव्यवसायरूपा यथोक्तप्रत्ययो ग्रहणाकारविशेष्यिका भवति घटमहं जानामीत्यनुव्यवसाये ज्ञानस्य घटांशे विशेष्यत्वात्, स्मृतिस्तु ग्राह्याकारविशेष्यिका भवति स घट इत्येव स्मरणात्, तत्ता च पूर्वज्ञानत्वरूपा, अतः स्मृतौ ज्ञानस्य ग्राह्यं विशेष्यमिति, अयं चाकारभेदोऽनुभवसिद्धइति भावः, स्मृतेरवान्तरभेदं दर्शयति—सा च द्वयीति। भावित उद्भावितः सूचितः स्मर्त-

तरमर्त्तव्या चाभावितस्मर्त्तव्या च, स्वप्ने भावितस्मर्त्तव्या, जाग्रत्समये त्वभावितस्मर्त्तव्येति, सर्वाः स्मृतयः प्रमाणविपर्य्ययविकल्पनिद्रास्मृतीनामनुभवाद् भवन्ति, सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः, सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः, सुखानुशयी रागः, दुःखानुशयी द्वेषः, मोहः पुनरवि-

भास्वती।

प्रमाणमिति यावद्, ग्राह्याकारपूर्वा = व्यवसेयविषयप्रधाना स्मृतिः, घटं जानामीत्यात्मिका घटग्रहणप्रधाना बुद्धिः, घट इति घटाकारा स्मृतिः, सोऽयं घट इति च प्रत्यभिज्ञा, एतदुक्तं भवति—सर्वासां वृत्तीनां बुद्धिवृत्तित्वेऽपि, अनधिगतविषयं प्रमाणमियं बुद्धिः, बुद्धिर्ग्रहणरूपा, ग्रहणञ्च प्राधान्यादगृहीतस्योपादानम्, तस्योपादानस्याप्यस्त्यनुभवः संस्कारश्च, तादृशसंस्काराणां स्मृतिर्गौणभावेनोपादानरूपेऽनधिगतविषये प्रमाणे बुद्धौ वा तिष्ठति, प्रधानतश्च तत्रोपादानरूपो ग्रहणव्यापारस्तिष्ठति, स्मृतौ पुनर्ग्राह्यरूपस्य घटाद्यधिगतविषयस्य प्राधान्यम्, ग्रहणव्यापारस्याप्राधान्यमिति दिक्।

सा च स्मृतिर्द्वयी—भावितस्मर्त्तव्या = भावितानि कल्पितानि स्मर्त्तव्यानि यस्यां सा, स्वप्ने हि कल्पनया स्मृतविषया उद्भाव्यन्ते जागरे न तथा, सर्वासामेव वृत्तीनामनुभवात् संस्कारः, संस्काराच्च तद्बोधरूपा स्मृतिरिति क्रमः, सर्वाश्चेति। सुखदुःखमोहात्मिकाः = सुखादिभिरनुविद्धाः, सुखदुःखे प्रसिद्धे, मोहस्त्रिविधः—विचारमोहः—चेष्टामोहः—वेदनामोहश्चेति, विपर्य्यस्तविचारो विचारमोहः, अभिनिविष्टचेष्टा चेष्टामोहः, कायेन्द्रियचेतसाम् प्रमादादिरूपेणानेन व्यस्यते मूढा बुद्धिः सम्यग् ज्ञानात् सुखदुःखानुभवो यत्र न स्फुटः स वेदनामोहः,

तत्त्ववैशारदी।

इति। भावितः = कल्पितः स्मर्त्तव्यो यया सा तथोक्ता, अभावितः = अकल्पितः पारमार्थिक इति यावद्, नेयं स्मृतिरपि तु विपर्य्ययः, तल्लक्षणोपपन्नत्वात्, स्मृत्याभासतया तु स्मृतिरुक्ता-प्रमाणाभासमिव प्रमाणमिति भावः, कस्मात्पुनरन्ते स्मृतेरुपन्यासः? इत्यत आह—"सर्वाः स्मृतय" इति। अनुभवः = प्राप्तिः प्राप्तिपूर्वा वृत्तिः स्मृतिस्ततः स्मृतीनामुपजन इत्यर्थः, न-

पातञ्जलरहस्यम्।

त्तिविशेषणम्; अन्येषामुपलक्षणतेति नये कल्पित इति स्मर्यमाणे पित्रादौ सान्निध्यमारोप्याह—अयं पितेत्युक्तिः सङ्गता, नेयं स्मृतिरिति। स्वप्नलक्षणाक्रान्तत्वात्, उपजनं =

वार्त्तिकम्।

व्यार्थो ययेति भावितस्मर्त्तव्या तद्भिन्ना चाभावितस्मर्त्तव्या, तयोरुदाहरणे दर्शयति—स्वप्न इति। स्वप्नदर्शनमेव हि भाव्यर्थसूचकतया शास्त्रे सिद्धं न तु जाग्रत्कालीना स्मृतिरिति, ननु स्वप्ने पूर्वदृष्टत्वास्मरणात् संस्कारमात्रजन्यत्वाभावाच्च कथं स्मृतित्वमिति चेद्? न—अंशतस्तदुभयरूपत्वस्य स्वप्नज्ञानेष्वपि सत्त्वात्, तादृशस्य स्वप्नांशस्यैवात्रोपन्यासादिति, सर्ववृत्त्यन्ते स्मृतिवृत्तेरुपन्यासस्य बीजमाह—सर्वा इति। अनुभवाद् = अनुव्यवसायात्, अनुभावादिति पाठे प्रभावादित्यर्थः, यथोक्तानां वृत्तीनां निरोध्यत्वे बीजमाह—सर्वाश्चैता इति। एताः सर्वाः प्रमाणादिवृत्तयो बुद्धिद्रव्यस्य सुवर्णस्येव प्रतिमाऽऽदिवद्विषयाकारा द्रव्यरूपाः परिणामाः सुखदुःखमोहगुणका इत्यर्थः, बुद्धिवृत्तिर्हि रूपादिमती भार्येव सुखादिमती पुरुषस्य भोग्येति, अतो दुःखवत्त्वेन वृत्तयो निरोद्धव्या इत्युपसंहरिष्यति, ननु सुखवत्त्वेनोपादेयत्वमेव कुतो न भवेदित्यत आह—सुखदुःखेति। क्लेशेषु क्लेशव्याख्यानसूत्रेषु व्याख्येयाः, व्या-

घेति, एताः सर्वा वृत्तयो निरोद्धव्याः, आसां निरोधे सम्प्रज्ञातो वा समाधिर्भवत्यसम्प्रज्ञातो वेति ॥ ११ ॥

अथासां निरोधे क उपाय इति—

**अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥**

चित्तनदी नामोभयतो वाहिनी वहति कल्याणाय वहति पापाय च, या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा, संसारप्राग्भाराऽवि-

भास्वती।

स्मर्यते च—

"तत्र विज्ञानसंयुक्ता त्रिविधा वेदना ध्रुवा ।
सुखदुःखेति यामाहुरदुःखा सुखेति च" ॥ इति,

हिताहितज्ञानविपर्ययस्वभावादविद्याऽन्तर्गत एव मोहः, शेषं सुगमम् ॥ ११ ॥

अथेति । आसां चित्तवृत्तीनामभ्यासवैराग्याभ्यां निरोधः स्यात्, चित्तनदीति । चित्तं नदीव, सा च चित्तनदी कल्याणवहा पापवहा वा भवति, येति । या चित्तनदी कैवल्यप्राग्भारा = कैवल्यरूपस्य प्राग्भारस्योच्चप्रदेशरूपस्रोतःप्रबन्धस्य तलदेशपर्यन्त-

तत्त्ववैशारदी ।

नु ये पुरुषं क्लिश्यन्ति ते निरोद्धव्याः प्रेक्षावता, क्लेशाश्च तथा न वृत्तयस्तत्किमर्थमासां निरोधः ? इत्यत आह—"सर्वाश्चैता', इति । सुगमम् ॥ ११ ॥

निरोधोपायं पृच्छति—"अथ" इति । सूत्रेणोत्तरमाह—"अभ्यासवैराग्याभ्यां तन्निरोधः"। अभ्यासवैराग्ययोर्निरोधे जनयितव्येऽवान्तरव्यापारभेदेन समुच्चयो न तु विकल्प इत्याह—

पातञ्जलरहस्यम्।

जन्म, तेभ्यः स्मृतेरित्यर्थः ॥ ११ ॥

न तु विकल्प इति । पक्षे बाधाद् विकल्प उभयस्याशास्त्रत्वात् समुच्चयः श्रेयान्, निम्ना =

वार्त्तिकम्।

ख्यानमेवाह—सुखानुशयी राग इत्यादि, सुखदुःखानुशयी सुखदुःखविषयकः, तथा च रागजनकतया दुःखवत्सुखमपि हेयं, मोहस्त्वविद्यारूपतया शोकाद्यखिलदुःखनिदानत्वेन हेय इत्याशयः, एता इति । अतो दुःखात्मकत्वादेताः सर्वा निरोद्धव्या इत्यर्थः, प्रकरणार्थमुपसंहरति—आसामिति ॥ ११ ॥

तदेवं सामान्यतो योगस्य लक्षणं कृतमिदानीं तस्योपायं प्रतिपादयिष्यति सूत्रकारस्तत्र संक्षेपाद् उपायसारसंग्राहकं सूत्रमवतारयति—अथासामिति ।

"अभ्यासवैराग्याभ्यां तन्निरोधः" अभ्यासवैराग्ये व्याख्यास्येते, अभ्यासवैराग्ययोरवान्तरव्यापारभेदेन निरोधजनने समुच्चय एव न विकल्प इत्याह—चित्तनदीति । यथा नदी कदाचित् समुद्राभिमुखी वहति कदा चिच्च तद्वैपरीत्येन पृथिव्यभिमुखी वहति, अन्यथा समुद्रगमनमात्रेण शुष्येदेव, एवं चित्तनद्यप्युभयतो वाहिनी, उभयतो वहनस्य प्रयोजनमाह—वहतीति । कल्याणं मोक्षस्तदर्थं, पापं संसारस्तत्फलत्वात्तत्कारणत्वाद्वा तदर्थं, तथा चोक्तम्—

"प्रत्यग्दृशां विमोक्षाय निबन्धाय पराग्दृशाम् ।
अपामार्गलतेवायं विरुद्धफलदो भवः" इति,

प्रवाहद्वयं विशिष्य दर्शयति—या त्विति । प्राग्भारा = अभिमुखी, विवेकविषयो निम्नोगमनमार्गो यस्या इत्यर्थः, जलस्य हि प्रवाहाभिमुखं वर्त्म नीचं भवतीति, तत्र = चित्तनद्यां वैराग्येण विषयमार्गगं वृत्तिस्रोतः खिलीक्रियते = अल्पीक्रियते; विवेकदर्शनस्याभ्यासेन च विवे-

वेकविषयनिम्ना पापवहा, तत्र वैराग्येण विषयस्रोतः खिलीक्रियते विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यत इत्युभयाधीनश्चित्तवृत्तिनिरोधः ॥१२॥

## तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥

चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिस्तदर्थः प्रयत्नो = वीर्य्यमु-

भास्वती ।

वाहिनी विवेकविषयनिम्ना = विवेकविषयरूपनिम्नमार्गवाहिनी सा कल्याणवहा, तथा संसारप्राग्भारा = अविवेकनिम्नमार्गवाहिनी पापवहा, तत्र = अभ्यासवैराग्ययोर्मध्ये वैराग्येण विषयस्रोतः खिलीक्रियते = अल्पीक्रियते निरुध्यते, विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यते = सम्प्रवर्त्तितं क्रियते, चित्तस्य निरोधः = निर्वृत्तिकता, एवमभ्यासवैराग्याधीनो विवेक एव मुख्योपायो निरोधस्य, अतस्तस्याभ्यास एवोक्तः, विवेकस्य साधनानामपि पुनः पुनरनुष्ठानमभ्यासः ॥१२॥

तत्र स्थितौ स्थित्यर्थे यो यत्नः सोऽभ्यासः, चित्तस्येति । अवृत्तिकस्य = निरुद्धवृत्तिकस्य चित्तस्य या प्रशान्तवाहिता निरुद्धावस्थायाः प्रवाहः सा हि मुख्या स्थितिः,

तत्त्ववैशारदी ।

"चित्तनदी" इति । प्राग्भारः = प्रबन्धः, निम्नता गम्भीरताऽगाधतेति यावत् ॥ १२ ॥

तत्राभ्यासस्य स्वरूपप्रयोजनाभ्यां लक्षणमाह—"तत्र स्थितौ यत्नोऽभ्यासः" तद् व्याचष्टे—"चित्तस्य" इति । अवृत्तिकस्य = राजसतामसवृत्तिरहितस्य प्रशान्तवाहिता = विमला सा-

पातञ्जलरहस्यम् ।

तत्प्रवणा. खिलीक्रियते = अवरुद्धयत इत्यर्थः, उद्घाट्यते = निरावरणं क्रियते, उभयाधीन—इति । घटधारणे त्रिदण्डवदिति वैराग्याभ्यासाधीन इत्यर्थः ॥ १२ ॥

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" ॥

इत्युक्तम्, तत्राल्पार्थं नञं स्वीकृत्याह—अवृत्तिकस्येति । अलवणा यवागूः, ईषल्लवणे-

वार्त्तिकम् ।

कमार्गगं वृत्तिस्रोत उद्घाट्यते बलवत् क्रियते येन निरोधाख्ये कैवल्यसागरे विलीयत इत्यतोऽवान्तरव्यापारभेदेनोभयाधीनश्चित्तवृत्तिनिरोध इत्यर्थः, तदुक्तं गीतायाम्—

"असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते" इति,

अत्र विवेकदर्शनमात्रस्याभ्यासः प्राधान्येनोक्तः, आगामिसूत्रे निरोधसाधनानुष्ठानसामान्यस्यैवाभ्यासत्वावगमादिति ॥ १२ ॥

अत्राभ्यासवैराग्ये क्रमाल्लक्षयति सूत्रजातेन—

"तत्र स्थितौ यत्नोऽभ्यासः" तत्राभ्यासवैराग्ययोर्मध्ये, चित्तस्येति । अवृत्तिकस्य वृत्त्यन्तरशून्यस्य न तु वृत्तिसामान्याभाववतः, स्थित्यनन्तरं संप्रज्ञातस्य समापत्तिसूत्रे भाष्यकारैर्व्याख्येयत्वात्, प्रशान्तवाहितेति । वृत्त्यन्तराभावात् प्रशान्ता हर्षशोकादितरङ्गरहिता; एकाग्रवृत्तिधारेत्यर्थः, शान्तिश्च तन्त्रेपूक्ता—

"श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा शुभाशुभम् ।
न हृष्यति ग्लायति च स शान्त इति कथ्यते" इति,

स्थितिशब्दार्थं व्याख्याय सप्तम्यर्थं व्याचष्टे—तदर्थ इति । तथा च चर्मणि द्वीपिनं हन्तीतिवदियं निमित्तसप्तमीति, यत्नशब्दं व्याचष्टे—प्रयत्न इति । प्रयत्नमपि पर्या-

त्साहस्तत्संपिपादयिषया तत्साधनानुष्ठानमभ्यासः ॥ १३ ॥

**स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥**

दीर्घकालासेवितः, निरन्तरासेवितः, तपसा ब्रह्मचर्य्येण विद्यया श्रद्धया च सम्पादितः सत्कारवान्, दृढभूमिर्भवति=व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः ॥ १४ ॥

भास्वती।

तदनुकूलैकाग्रावस्थाऽपि स्थितिः, स्थितिनिमित्तः प्रयत्नः, तस्य पर्यायो वीर्यमुत्साहश्चेति, तत्सम्पिपादयिषया=स्थितिसम्पादनेच्छया तत्साधनस्यानुष्ठानमभ्यासः ॥१३॥

दीर्घेति। दीर्घकालं यावद् आसेवितः=अनुष्ठितः, निरन्तरं=प्रत्यहं प्रतिक्षणमासेवितः, तपसा ब्रह्मचर्येण श्रद्धया विद्यया च सम्पादितः सत्कारवानभ्यासः=सत्कारासेवितः, श्रूयते—"यद् यद् विद्यया श्रद्धयोपनिषदा वा तत्तद् वीर्यवत्तरं भवति" इति, तथाकृतोऽभ्यासो दृढभूमिर्भवति, व्युत्थानसंस्कारेण न द्राक्=सहसाऽभिभूयत इति ॥ १४ ॥

तत्त्ववैशारदी।

त्त्विकवृत्तिवाहितैकाग्रता स्थितिः, तदर्थं इति। "स्थितौ" इति निमित्तसप्तमी व्याख्याता(१), यथा चर्मणि द्वीपिनं हन्तीति, प्रयत्नमेव पर्य्यायाभ्यां विशदयति—"वीर्य्यमुत्साह" इति। तस्येच्छायोनितामाह—"तत्सम्पिपादयिषया" इति। "तद्" इति स्थितिं परामृशति, प्रयत्नस्य विषयमाह—"तत्साधने"ति। स्थितिसाधनान्यन्तरङ्गबहिरङ्गाणि यमनियमादीनि, साधनगोचरः कर्तृव्यापारो, न फलगोचर इत्यर्थः ॥ १३ ॥

ननु व्युत्थानसंस्कारेणानादिपरिपन्थिना प्रतिबद्धोऽभ्यासः कथं स्थित्यै कल्पते? इत्यत आह—"स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः" सोऽयमभ्यासो विशेषणत्रयसम्पन्नः सन् दृढावस्थो न सहसा व्युत्थानसंस्कारैरभिभूतस्थितिरूपविषयो भवति, यदि पुनरेवम्भूतमभ्यासं कृत्वोपरमेत् ततः कालपरिवासेन परिभवेत्तस्मान्नोपरन्तव्यमिति भावः॥१४॥

पातञ्जलरहस्यम्।

त्यर्थः, सत्त्ववृत्तिकस्येति शेषः ॥ १३ ॥

दीर्घकालेति। आदरः=श्रद्धा, नैरन्तर्येति। आसुषुप्तेरिति भाष्यार्थः, सत्कारः=ब्रह्मचर्यादिपरिवासः, कालाधिक्यञ्चेति ॥ १४ ॥

वार्त्तिकम्।

याभ्यां विशदयति—वीर्यमुत्साह इति। तथाऽप्यस्पष्टं मन्वानोऽतिविशेषत आह—तत्संपिपादयिषयेति। तत्संपादनेच्छया श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाऽऽदीनां वक्ष्यमाणानां साधनानामनुष्ठानमभ्यास इत्यभ्यासलक्षणं कृतम् ॥ १३ ॥

ननु व्युत्थानसंस्कारेणानादिना प्रतिबन्धात् कथमभ्यासः स्थितिं संपादयत्वित्याकाङ्क्षायामाह सूत्रकारः—

"स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" सत्कारासेवित इत्येतद्विवृणोति—तपसेत्यादिना सत्कारवानित्यन्तेन, दृढभूमिरित्येतद्विवृणोति—व्युत्थानेति। व्युत्थानसंस्कारेण द्रागित्येव सहसाऽनभिभूतः स्थितरूपो विषयो यस्य स भवतीत्यर्थः, अभ्यासं कृत्वोपरमे च कालक्रमादभिभवो भवत्येवेति प्रतिपादयितुं द्रागित्येवेत्युक्तम् ॥ १४ ॥

---

(१) व्याख्यातेति। निमित्तमिह फलम्, एवं च स्थितिफलको यः कर्त्तव्यो यत्नः सोऽभ्यासइति भावः।

**दृष्टानुश्रविकविषयावितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥१५॥**

स्त्रियोऽन्नपानमैश्वर्य्यमितिदृष्टविषयवितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्व-

भास्वती।

वैराग्यमाह—दृष्टेति । दृष्टे = इहत्यविषये, आनुश्रविके = शास्त्रश्रुते पारलौकिके विषये, यद् वैतृष्ण्यम् = चित्तस्य वितृष्णभावेनावस्थितिस्तद् वशीकाराख्यं वैराग्यम्, वशीकारस्य तिस्रः पूर्वावस्थाः, तद् यथा—यतमानं—व्यतिरेकम् एकेन्द्रियमिति; रागोत्पाटनाय चेष्टमानता • यतमानम्, केषु चिद् विषयेषु विरागः सिद्धः केषु चिच्च साध्य इति यत्र व्यतिरेकेणावधारणं तद् व्यतिरेकसंज्ञम्, ततः परं यदैकेन्द्रिये मनस्यौत्सुक्यमात्रेण क्षीणो रागस्तिष्ठति तदैकेन्द्रियेण तादृस्यापि रागस्य नाशाद् वशीकारः सिध्यतीति,

स्त्रिय इति । ऐश्वर्यम् = प्रभुत्वं, स्वर्गः = इन्द्रत्वादिः, वैदेह्यम् = स्थूलसूक्ष्मदेहे विरा-

तत्त्ववैशारदी।

वैराग्यमाह—“दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्” चेतनाचेतनेषु दृष्टविषयेषु वितृष्णतामाह—“स्त्रिय” इति । ऐश्वर्य्यम् = आधिपत्यम्, अनुश्रवो = वेदस्ततोऽधिगता आनुश्रविकाः स्वर्गादयस्तत्रापि वैतृष्ण्यमाह—“स्वर्ग” इति । देहरहिता विदेहाः करणेषु लीनास्तेषां भावो वैदेह्यम्, अन्ये तु प्रकृतिमेवात्मानमभिमन्यमानाः प्रकृत्युपासकाः प्रकृतौ साधिकारायामेव लीनास्तेषां भावः प्रकृतिलयत्वं, तत्प्राप्तिविषये वितृष्णस्य, आनुश्रविकविषये वितृष्णो हि स्वर्गादिप्राप्तिविषये वितृष्ण उच्यते, ननु यदि वैतृष्ण्यमात्रं वैराग्यं हन्त विषयाप्राप्तावपि तदस्तीति वैराग्यं स्यादित्यत आह—“दिव्यादिव्य” इति ।

पातञ्जलरहस्यम् ।

चेतनेति । चेतनाः = स्त्र्यादयः, अचेतनाः = वस्त्रादयः, करणेषु महत्तत्त्वादिमनोऽन्तेषु, साधिकारायां = पुनर्जन्महेतुभूतायाम्, आगमिनः = पौराणिकाः, तत्तद्विषयेषु शब्दादिषु, परि-

वार्त्तिकम् ।

अभ्यासं लक्षयित्वा वैराग्यं लक्षयति --

“दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्” रागाभावमात्रं दोषदर्शनजन्यो रागाभावो वा न निरोधहेतुर्वैराग्यं रोगादिनिमित्तकारुचितो योगानुदयाद्, दोषदर्शनजवैराग्यादनन्तरमपि विषयसांनिध्येन चित्तक्षोभतः सौभर्यादेर्योगानिष्पत्तेश्च, अतोऽत्र वैराग्यस्य वैतृष्ण्यमात्रं न लक्षणं किं तु यथोक्तवितृष्णस्य वशीकारसंज्ञेति, तदेतद् व्याचष्टे—स्त्रिय इति । दृष्टविषयवितृष्णस्येति व्याख्यायानुश्रविकविषयवितृष्णस्येति व्याचष्टे—स्वर्गेति । स्वर्गश्च वैदेह्यं च प्रकृतिलयत्वं च तेषां प्राप्तिरेवानुश्रवाख्यवेदोक्तो विषयस्तत्र च वितृष्णस्येत्यर्थः, स्थूलदेहविरहेऽपि लिङ्गशरीरेणैव येषां देवानां भोगस्ते विदेहास्तद्रूपता च वैदेह्यम्, ये तु सावरणब्रह्माण्डाद्बहिरावरणे प्रकृतौ लीनाः श्लिष्टाः लिङ्गदेहेन सह गता इति यावत्, तेषां भावः प्रकृतिलयत्वं न तु प्रलय एवात्रोक्तः, करणं गतस्यैव श्रुतिस्मृत्योर्भोगश्रवणाद्, अन्यथा प्राकृतप्रलयवदपुरुषार्थत्वाच्च, प्रकृतिलयानां च विदेहेभ्योऽयं भेदः—विदेहाः सावरणब्रह्माण्डान्तर्गता एवाल्पमैश्वर्यं मलिनं च विषयं भुञ्जते, प्रकृतिलयास्तु बहिर्गमनेन विदेहान् प्रत्यधीशते स्वसंकल्पमात्रेण तत्रैव निर्मलं कारणसत्त्वनिर्मितं विषयं च भुञ्जते त ईश्वरकोटय उच्यन्त इति, षष्ठ्यन्तं हेतुगर्भविशेषणपदं व्याख्याय वशीकारसंज्ञेति विशेष्यपदं व्याचष्टे—दिव्यादिव्येति । अयमर्थः—आदौ विषयसान्निध्यरूपेऽवसरे दोषावरकाभावाद् दोषदर्शनेन वैतृष्ण्यं भवति ‘विरक्तिर्दोषदर्शनादि’ति स्मृतेः, तच्च त्रिविधं यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञेति, एतांश्च पश्चाद्व्याख्यास्यामः, एतस्माच्च त्रिविधवैतृष्ण्यादभ्यस्यमानाद्विषय-

**प्राप्तावानुश्रविकविषये वितृष्णस्य दिव्यादिव्यविषयसम्प्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसङ्ख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकारसञ्ज्ञा वैराग्यम् ॥ १५ ॥**

भास्वती ।

गाद् विदेहस्य लीनावस्था भवेत्, तदवस्थाप्राप्तानां देवानां पदम्, प्रकृतिलयः = आत्मबुद्धिरपि हेयेति तत्रापि विरागमात्रात् पुरुषख्यातिहीनस्याचरितार्थस्य चित्तस्य प्रकृतौ लयो भवेत् तत् पदम्, दिव्यादिव्यविषयैः सह संयोगेऽपि = योगलाभेऽपीत्यर्थः, विषयदोषः = त्रितापः, प्रसंख्यानबलात् = प्रसङ्ख्यानं = सम्प्रज्ञा, यया विषयहानायावि च्छिन्ना प्रत्यवेक्षा जायते, तद्बलात् अनाभोगात्मिका = तुच्छताख्यातिमती, हेयोपादेयशून्येत्यर्थः, वैतृष्ण्यावस्था वशीकारसंज्ञा, तच्चापरं वैराग्यम् ।। १५ ।।

तत्त्ववैशारदी ।

न वैतृष्ण्यमात्रं वैराग्यम्, अपि तु दिव्यादिव्यविषयसम्प्रयोगेऽपि चित्तस्यानाभोगात्मिका, तामेव स्पष्टयति—"हेय" इति । हेयोपादेयशून्या = सङ्गदोषरहिता योपेक्षाबुद्धिर्वशीकारसञ्ज्ञा, कुतः पुनरियमित्यत आह—"प्रसङ्ख्यानबलाद्" इति । तापत्रयपरीतता विषयाणां दोषस्तत्परिभावनया तत्साक्षात्कारः प्रसङ्ख्यानं तद्बलादित्यर्थः, यतमानसञ्ज्ञा, व्यतिरेकसञ्ज्ञा, एकेन्द्रियसञ्ज्ञा, वशीकारसञ्ज्ञा, चेति चतस्रः सञ्ज्ञा इत्यागमिनः, रागादयः खलु कषायाश्चित्तवर्त्तिनस्तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्त्यन्ते तन्मा प्रवर्त्तिषतेन्द्रियाणि तत्तद्विषयेष्विति तत्परिपाचनायारम्भः प्रयत्नः सा यतमानसञ्ज्ञा, तदारम्भे सति के चित्तु कषायाः पक्वाः, पक्ष्यन्ते च के चित्, तत्र पक्ष्यमाणेभ्यः पक्वानां व्यतिरेकेणावधारणं व्यतिरेकसञ्ज्ञा, इन्द्रियप्रवर्त्तनासमर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थानमेकेन्द्रियसञ्ज्ञा, औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितेष्वपि दिव्यादिव्यविषयेषूपेक्षाबुद्धिः संज्ञात्रयात्परा वशीकारसञ्ज्ञा, एतयैव च पूर्वासां चरितार्थत्वान्न ताः पृथगुक्ता इति सर्वमवदातम् ॥१५॥

पातञ्जलरहस्यम् ।

पाचनाय = निरोधायेत्यर्थः, एकेन्द्रियसंज्ञा = एकेन्द्रियं मनः तत्र संज्ञा = अवस्थितिः, अत एवोक्तं भगवता

"रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ।"

रसो नाम रागः, परम् = आत्मानम्, उत्तरसिद्धौ किं पूर्वेणेति न्यायमाश्रित्याह—एतयैवेति॥१५॥

वार्त्तिकम् ।

संयोगकालेऽपि दोषदर्शनमप्रतिबद्धमुत्पद्यते 'वैराग्याद्दोषदर्शन'मिति स्मृत्यन्तरात्, कुतः पुनरप्रतिबन्धः, तत्रोक्तं—प्रसंख्यानबलाद् दोषसाक्षात्कारस्य बलवत्त्वादिति, दोषसाक्षात्काररूपबलाभावात्तु सौभर्यादेः प्राग्विरक्तस्यापि विषयसन्निकर्षेण दोषदर्शनं प्रतिबध्य पुना राग उत्पादित इति, एतस्माच्च दोषदर्शनोत्कर्षाद्विषयसंयोगकालेऽपि या चित्तस्यानाभोगात्मिका ऽऽभोगरहिता; एतस्य विवरणं हेयोपादेयशून्या रागद्वेषशून्या वशीकारसंज्ञा या वितृष्णा सा वैराग्यमपरमिति शेषः, उत्तरसूत्रे तत्परमिति वचनादस्यापरत्वम्, तथा च रागद्वेषशून्यस्य विषयसाक्षात्कारस्य योग्यता वशीकारसंज्ञाऽऽख्यं वैराग्यमिति पर्यवसितम्, तेन सर्वदैतादृशविषयसंयोगाभावेऽपि न निरोधासंभवः, तदेवमनेन सूत्रेण हेतुहेतुमद्भावरूपतस्तन्त्रान्तरसिद्धं वैराग्यचतुष्टयमेवोक्तं, तत्र प्रथमभूमिका यतमानसंज्ञानाम्नी वितृष्णा ज्ञानपूर्वकं वैराग्यसाधनानुष्ठानं, द्वितीयभूमिका व्यतिरेकसंज्ञा सा च जितान्येतानीन्द्रियाणि; एतानि च जेतव्यानीति व्यतिरेकावधारणयोग्यता, तृतीयभूमिका चैकेन्द्रियसंज्ञा सा च बाह्येन्द्रियविषयेषु रूपादिषु रागादिक्षये सत्येकस्मिन्नेव मनसि मानापमानादिविषयकरागद्वेषादिक्षयो-रागद्वेषज्ञानपूर्वक इति, चतुर्थभूमिका तु वशीकारसंज्ञा स्पष्टमुक्तैवेति ॥ १५ ॥

## तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

**दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात्तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यो विरक्त इति तद् द्वयं-**

भास्वती ।

तद् वैराग्यं परम् = परसंज्ञकम्, यदा पुरुषख्यातेः पुरुषतत्त्वोपलब्धेर्गुणवैतृष्ण्ये सार्वज्ञ्यादिष्वपि निखिलगुणकार्येषु वैतृष्ण्यमिति सूत्रार्थः, दृष्टेति । दृष्टानुश्रविकदोषदर्शी विरक्तः = वशीकारवैराग्यवान् पुरुषदर्शनाभ्यासाद् = विवेकाभ्यासाद्, तच्छुद्धिप्रविवेकाप्यायितबुद्धिः = तस्य दर्शनस्य शुद्धिः, तस्याः प्रविवेकः = प्रकृष्टं वैशिष्ट्यमविवेकविविक्ता परा काष्ठेत्यर्थः, तेनाप्यायिता कृतकृत्या बुद्धिर्यस्य स योगी व्यक्ताव्यक्तधर्मकेभ्यः =

तत्त्ववैशारदी ।

अपरं वैराग्यमुक्त्वा परमाह—"तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" अपरवैराग्यस्य परवैराग्यंप्रति कारणत्वं, तत्र च द्वारमादर्शयति—"दृष्टानुश्रविकविषयदोषदर्शी विरक्त" इति, अनेनापरं वैराग्यं दर्शितम्, पुरुषदर्शनाभ्यासाद् आगमानुमानाचार्योपदेशसमधिगतस्य पुरुषस्य यद्दर्शनं तस्य.भ्यासः = पौनःपुन्येन निषेवणं तस्मात्, तस्य दर्शनस्य शुद्धिः = रजस्तमोहान्या सत्त्वैकतानता, तया यो गुणपुरुषयोः प्रकर्षेण विवेकः—पुरुषः शुद्धोऽनन्तस्तद्विपरीता गुणा इति; तेनाप्यायिता बुद्धिर्यस्य योगिनः स तथोक्तः, तदनेन धर्ममेघाख्यः समाधिरुक्तः, स तथाभूतो योगी गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यः सर्वथा विरक्तः, सत्त्वपुरुषान्यताख्यातावपि गुणात्मिकायां यावद्विरक्त इति, तत् = तस्माद् द्वयं वैराग्यम्, पूर्वं हि वैराग्यंसत्त्वसमुद्रेकविधूततमसि रजःकणकलङ्कसम्पृक्ते चित्तसत्त्वे, तच्च तौष्टिकानामपि समानम्,(१)

पातञ्जलरहस्यम् ।

कारणत्वम् = उपायत्वम्, आचार्यः = अनुभविता, "श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुतेः, निषेवणं चेतसीति शेषः, एकतानता = एकाग्रता, शुद्धिरित्यन्वयः, यावदिति वाक्यालङ्कारे, तौष्टिकानां—प्रकृत्याद्यष्टस्वात्मबुद्ध्युपासनया तुष्टचित्तानां श्रुतानामिति यावत्, वर्तमानख्यातिमान् = कृतसाक्षात्कार इत्यर्थः, छिन्नमूलस्य = अनधिकारस्य, अधिक्रियते जन्मानेनेति कूटस्थकर्म, सङ्क्रा-

वार्त्तिकम् ।

अपरवैराग्यमुक्त्वा परवैराग्यमाह—"तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" तदिति वैराग्यं परामृश्यते, तथा चात्मद्वयान्यतरसाक्षात्काराभ्यासाद्धेतोरुत्पद्यमानं सकलगुणेषु वैतृष्ण्यं परंश्रेष्ठं वैराग्यमित्यर्थः, पूर्वसूत्रोक्तवैराग्यादस्य भेदं दर्शयति—दृष्टेत्यादिना । पूर्वसूत्रे विषयदोषदर्शनाद्विषयेष्वेव वैराग्यमुक्तं न तु ज्ञाने, तदानीं ज्ञानेऽपि विनाशित्वादिदोषदर्शनसाम्येऽपि नालंबुद्धिरूपं वैराग्यं संभवति; अविद्यानिवृत्त्याख्यप्रयोजनवत्त्वात्, अत्र तु सूत्रे ज्ञानेनाविद्यानिवृत्त्यादौ सिद्धे तेनैव दोषदर्शनेनानात्मत्वदृष्ट्या च ज्ञानसाधारणेष्वखिलकार्यकारणेष्वात्मतृप्तस्योपेक्षेति वैराग्ययोर्भेद इति वाक्यार्थः, तच्छुद्धीति । पुरुषशुद्धिप्रविवेकश्चितिशक्तिरपरिणामिनीत्यादिमा दर्शितस्तेनाप्यायिता तृप्ता समाप्तपुरुषार्था बुद्धिर्यस्येति विग्रहः, व्यक्ताऽव्यक्तेति । व्यक्ताव्यक्ते स्थूलसूक्ष्मे कार्ये धर्मावाश्रिते येषु सत्त्वादिगुणेषु तेभ्यः, तैः कार्यैः सहितेभ्यस्तेभ्य इति यावत्, तद्द्वयमिति । तत्तस्मादुभयं परस्परभिन्नं वैराग्यमित्यर्थः,

(१) तौष्टिकानामिति ।

"अम्भः सलिलं मेघो वृष्टिः पारं तथा सुपारं च ।
अन्यच्च पारापारमनुत्तमाम्भ उत्तमाम्भश्च"

इत्युक्ततुष्टिप्रयोजनकानाम् ।

**वैराग्यं, तत्र यदुत्तरं तज्ज्ञानप्रसादमात्रं यस्योदये प्रत्युदितख्यातिरेवम्मन्यते, प्राप्तं प्रापणीयं, क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्वा भवसं-**

भास्वती।

लौकिकालौकिकज्ञानक्रियारूपेभ्यो व्यक्तधर्मकेभ्यः, तथा विदेहप्रकृतिलयरूपाव्यक्तधर्मकेभ्यो गुणेभ्यो विरक्तो भवतीति तद् द्वयं वैराग्यम्,

तत्रेति। तत्र यदुत्तरं परवैराग्यं तज्ज्ञानप्रसादमात्रम् = ज्ञानस्य यः प्रसादश्चरमोत्कर्षो रजोलेशमलहीनता, अत एव सत्त्वपुरुषान्यताख्यातिमात्रता, तद्रूपं यस्येति, प्रत्युदितख्यातिः = अविप्लुतविवेकः, छिन्नः श्लिष्टपर्वा भवसङ्क्रमः = जन्मसङ्क्रमः, जन्मारम्भकः कर्माशय इत्यर्थः, छिन्नः श्लिष्टपर्वा सन्धिहीनश्च सञ्जातः, यस्याविच्छेदात = अविच्छिन्नात् कर्माशयादित्यर्थः, एवं ज्ञानस्य परा काष्ठा वैराग्यं, नान्तरीयकम् = अ-

तत्त्ववैशारदी।

ते हि तेनैव प्रकृतिलया बभूवुः, तथोक्तं—"वैराग्यात् प्रकृतिलय" इति, तत्र = तयोर्द्वयोर्मध्ये यदुत्तरं तज्ज्ञानप्रसादमात्रम्, मात्रग्रहणेन निर्विषयतां सूचयति, तदेवं हि तादृशं चित्तसत्त्वं रजोलेशमलेनाप्यपरामृष्टमस्याश्रयोऽत एव ज्ञानप्रसाद इत्युच्यते, चित्तसत्त्वं हि प्रसादस्वभावमपि रजस्तमःसम्पर्कान्मलिनतामनुभवति वैराग्याभ्यासविमलवारिधाराधौतसमस्तरजस्तमोमलं त्वतिप्रसन्नं ज्ञानप्रसादमात्रपरिशेषं भवति, तस्य गुणानुपादेयत्वाय दर्शयति—"यस्योदये" इति। यस्योदये सति योगी प्रत्युदितख्यातिः = ख्यातिविशेषे सति वर्त्तमानख्यातिमान् इत्यर्थः, प्रापणीयं = कैवल्यं प्राप्तम्, यथा वक्ष्यति—"जीवन्नेव विद्वान् मुक्तो भवति" इति, संस्कारमात्रस्य छिन्नमूलस्य सत्त्वादिति भावः, कुतः प्राप्तं, यतः क्षीणाः क्षेतव्याः क्लेशाः अविद्याऽऽदयः सवासनाः, नन्वस्ति धर्माधर्मसमूहो भवस्य = जन्ममरणप्रबन्धस्य सङ्क्रमः प्राणिनां, तत्कुतः कैवल्यमित्यत आह—"छिन्न" इति। श्लिष्टानि-निःसन्धीनि पर्वाणि यस्य स तथोक्तः, धर्माधर्मसमूहस्य समूहिनः पर्वाणि तानि श्लिष्टानि, न हि जातु जन्तुर्जन्ममरणप्रबन्धेन वियुज्यते, सोऽयं भवसङ्क्रमः क्लेशक्षये छिन्नः, यथा वक्ष्यति—"क्लेशमूलः कर्माशयः" (पा० २ सू० १२) "सति मूले तद्विपाकः"। (पा० २सू० १३)

पातञ्जलरहस्यम्।

मद्भिरिति, संसारसङ्क्रमणहेतुक्लेशजः, तद्विपाक इति जात्यायुर्भोगाः, श्रीसत्यज्ञानादपरमह-

वार्त्तिकम्।

द्वितीयवैराग्यस्य परत्वे हेतुमाह—तत्र यदुत्तरमिति। ज्ञानप्रसादमात्रं वैराग्यमित्यागामिनाऽन्वयः, ज्ञानस्य प्रसादश्च स्वयं व्याख्यास्यते, ननु वैतृष्ण्यं तृष्णाविरहरूपं वैराग्यं सूत्रकारेणोक्तं तद्विहाय कथं भाष्यकारेण ज्ञानरूपं तदुच्यत इति चेद्? न—शब्दभेदेऽप्यर्थाभेदात्, न ह्यभावोऽस्मन्मतेऽतिरिक्तोऽस्ति, अधिकरणस्यावस्थाविशेषस्यैवाभावत्वात्, तथा च चित्तस्यैव तादृशी ज्ञानावस्थैव तृष्णाविरह इति, यदि च सुषुप्त्यादौ तृष्णाविरहोऽपेक्षितस्तदा ज्ञानप्रसादयोग्यतैव परवैराग्यमुच्यतां, योग्यता च निर्मलसत्त्वतेति, अपि च भवतु वैतृष्ण्यमेव वैराग्यं तथाऽपि ज्ञानप्रसादेनैव वैतृष्ण्यगतो विशेषोऽनुमीयत इति लिङ्गलिङ्गिनोरभेदोपचारात्सूत्रभाष्ययोर्न विरोधः, "विरामप्रत्ययाभ्यासपूर्वं" इत्यागामिसूत्रेऽपि परवैराग्यस्य प्रत्ययत्वलाभाच्चेति, ज्ञानप्रसादस्य लक्षणमाह—यस्योदय इति। यस्य ज्ञानप्रसादस्योदये सति, एतस्यैव विवरणं प्रत्युदितख्यातिर्निष्पन्नात्मज्ञानो योगीति, प्रापणीयं ज्ञानं प्राप्तं सिद्धं यतः क्षीणा अविद्यादयः क्षेतव्याः क्लेशाः, अतश्च श्लिष्टानि निःसंधीनि पर्वाणि यस्य स श्लिष्टपर्वा भवसंक्रमो देहाद्देहान्तरसंचाराख्यः संसारश्छिन्नः, पुनर्न भवितेति यावत्, यस्य संसारस्याविच्छेदाज् जन्ममरणप्रवाहोऽतिदुःखदो भवतीत्येवं मन्यत इत्यन्वयः, ज्ञानप्रसादमात्रमित्युक्तं-

क्रमो यस्याविच्छेदाज्जनित्वा म्रियते मृत्वा च जायत इति, ज्ञानस्यैव परा काष्ठा वैराग्यम्, एतस्यैव हि नान्तरीयकं कैवल्यमिति ॥ १६ ॥

अथोपायद्वयेन निरुद्धचित्तवृत्तेः कथमुच्यते सम्प्रज्ञातः समाधिरिति—

**वितर्कविचारानन्दास्मितारूपानुगमात् संप्रज्ञातः ॥ १७ ॥**

भास्वती ।

विनाभावि ॥ १६ ॥

"अथ" इति प्रश्नपूर्वकं सूत्रमवतारयति—अभ्यासवैराग्याभ्यां निरुद्धचित्तवृत्तेर्योगिनः कः सम्प्रज्ञातयोगः? वितर्कविचारानन्दास्मितापदार्थानां स्वरूपैरनुगताः साक्षात्कारभेदाः सम्प्रज्ञातस्य लक्षणम्, वितर्क इति व्याचष्टे—चित्तस्यालम्बने = ध्येयविषये यः स्थूल आभोगः = साक्षात् प्रज्ञया परिपूर्णता स वितर्कः, एकाग्रभूमिकस्य चेतसः

तत्त्ववैशारदी ।

इति । ननु प्रसङ्ख्यानपरिपाकं धर्ममेघनिरोधं चान्तरा किन्तदस्ति यज्ज्ञानप्रसादमात्रम् इत्यत आह—"ज्ञानस्यैव परा काष्ठा" इति । धर्ममेघभेद एव परं वैराग्यं नान्यद्, यथा वक्ष्यति—"प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः, (पा० ४सू० २९) "तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् (पा० ४ सू० ३१) इति च, तस्मादेतस्य हि नान्तरीयकम् = अविनाभावि कैवल्यमिति ॥ १६ ॥

उपायमभिधाय सप्रकारोपेयकथनाय पृच्छति—"अथोपायद्वयेन" इति । "वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः" सम्प्रज्ञातपूर्वकत्वादसम्प्रज्ञातस्य प्रथमं सम्प्रज्ञातोपवर्णनम्, सम्प्रज्ञातसामान्यं वितर्कविचारानन्दास्मितानां रूपैः = स्वरूपैरनुगमात्प्रतिपत्तव्यम्, वितर्कं विवृणोति—"चित्तस्य" इति । स्वरूपसाक्षात्कारवती प्रज्ञा = आभोगः, स च स्थूलवि-

पातञ्जलरहस्यम् ।

मस्मिन् ज्ञानप्रसादाख्यं तृतीयं नास्तीत्याशङ्कते—नन्विति । समाधत्ते—ज्ञानस्यैवेति । भेद इति । विषयभेदः = विशेषः, अकुसीदस्य = निरभिलाषस्य, विवेकख्यातेरिति पुरुषस्य विशेषणं समाधिर्भवतीति शेषः, ज्ञेयं पुरुषमात्रमिति शेषः ॥ १६ ॥

उपायद्वयेन = अभ्यासवैराग्याभ्याम्, अयं भावः—प्रमातृप्रमाणतन्मात्रस्थूलभूतानि चेमानि चत्वारि सवितर्के समाधौ सन्ति, सविचारे त्रयं तन्मात्रान्तम्, आनन्दे द्वयम्, इन्द्रियधारणायामानन्द इत्यत्र श्रुतिरेव मानम्, तथा हि "सर्वेषामानन्दानामुपस्थमेकायनमिति"

वार्त्तिकम् ।

शब्दान्तरेण विवृणोति—ज्ञानस्यैवेति । ज्ञानस्य परा काष्ठा च विवेकख्यातावलंप्रत्ययो दुःखात्मिकेयमपि शाम्यत्विति रूप इत्यर्थः, अस्य ज्ञानकाष्ठात्वे हेतुमाह—एतस्यैवेति । एतस्यैव यतो ज्ञानप्रसादस्य कैवल्यं नान्तरीयकं नियतम्, एतस्मिन्नेव सति कैवल्यमावश्यकं नान्यस्मिन् ज्ञाने यमनियमादौ वैराग्ये वा तत्सत्त्वेऽप्यसंप्रज्ञातानुदयेनाशेषतः प्राचीनकर्मक्षयानियमतः कषायसंभवतश्च मोक्षे विलम्बसम्भवादिति ॥ १६ ॥

तदेवं सामान्यतो योगस्तत्साधनं चोक्तमिदानीं विशेषतो योगतत्साधने वक्तव्ये तत्रादौ योगगतमवान्तरं विभागं दर्शयिष्यति सूत्रकारः, तत्सूत्रावताराय पृच्छति—अथोपायेति । उपायद्वयेनाभ्यासवैराग्याभ्यां निरुद्धराजसतामसवृत्तेः पुरुषस्य कथं कैः प्रकारभेदैः संप्रज्ञातयोगः शास्त्रेषु कथ्यत इत्यर्थः, अत्र प्रत्युत्तरं सूत्रम्—

"वितर्कविचारानन्दास्मिताऽनुगमात्संप्रज्ञातः" अस्यार्थः—साक्षात्कारविशेषरूपैर्वितर्कादिभिरनुगमाद् हेतोः सम्यक् प्रज्ञावत्त्वेन योगः संप्रज्ञातनामा भवति, वितर्कादिभूमिभेदैश्चतुर्धा विभक्त इत्यर्थादिति, अत्र रूपानुगमादिति पाठः प्रामादिकत्वादुपेक्षणीयः, भाष्ये वितर्कविच-

वितर्कः = चित्तस्यालम्बने स्थूल आभोगः, सूक्ष्मो = विचारः, आनन्दः =

भास्वती।

समाधिजा प्रज्ञैव सम्प्रज्ञात इति प्रागुक्तः, निरन्तराभ्यासात् स्थितिप्राप्त एकाग्रभूमिके चित्ते याः प्रज्ञा जायेरन् ताः प्रतितिष्ठेयुः, ताभिश्च चित्तं परिपूर्णं तिष्ठेत् स एव सम्प्रज्ञातयोगो, न च स समाधिमात्रम्, तत्र षोडशस्थूलविकारविषया समाधिजा प्रज्ञा यदा चेतसि सदैव प्रतितिष्ठति तदा वितर्कानुगतः सम्प्रज्ञातः,

"विचारो ध्यायिनां युक्तिः सूक्ष्मार्थाधिगमो यत"—

इत्येवंलक्षणेन विचारेणाधिगतसूक्ष्मविषयया प्रज्ञया चेतसः परिपूर्णता विचारानुगतः सम्प्रज्ञातः, सूक्ष्मविषया = तन्मात्राण्यहङ्कारस्तथाऽस्मितामात्रं महत्तत्त्वञ्च, एतदुक्तं भवति—आलम्बनविषयभेदात् सम्प्रज्ञातसमाधिश्चतुर्विधः—वितर्का-

तत्त्ववैशारदी।

षयत्वात्स्थूलः, यथा हि प्राथमिको धानुष्कः स्थूलमेव लक्ष्यं विध्यत्यथ सूक्ष्मम्, एवं प्राथमिको योगी स्थूलमेव पाञ्चभौतिकं चतुर्भुजादि ध्येयं साक्षात्करोत्यथ सूक्ष्ममिति, एवं चित्तस्यालम्बने सूक्ष्म आभोगः — स्थूलकारणभूतसूक्ष्मपञ्चतन्मात्रलिङ्गालिङ्गविषयो विचारः, तदेवं ग्राह्यविषयं दर्शयित्वा ग्रहणविषयं दर्शयति—"आनन्द" इति। इन्द्रिये स्थूल-आलम्बने चित्तस्याभोग आह्लादः,(१) प्रकाशशीतृलतया खलु सत्त्वप्रधानाद् अहङ्कारादिन्द्रियाण्युत्पन्नानि सत्त्वं सुखमिति तान्यपि सुखानीति तस्मिन्नाभोग आह्लाद इति, ग्रहीतृवि-

पातञ्जलरहस्यम्।

उपस्थमिन्द्रियान्तराणामुपलक्षणम्, प्रमाणानां त्रयम्, अस्मितायां प्रमातृमात्रम्, तत्र दुग्धनिक्षिप्तमरकतवद् बुद्धिद्वाराऽस्मितायां चैतन्यमप्यस्तीति निर्जडत्वमहङ्कारस्येति, कुतो—

वार्त्तिकम्।

लः सविचार इत्यादिप्रयोगेषु रूपपदाप्रयोगाद्, आद्यसूत्रेऽपि भाष्यकृता वितर्कानुगतो विचारानुगत इत्यादेरेव प्रयोगाच्च, यच्च तत्र पाठे वितर्कादीनां रूपैरनुगमादिति कस्य चिद्व्याख्यानं तदपि वैयर्थ्यादुपेक्षणीयम्, वितर्कादिचतुष्टयं व्याचष्टे—वितर्कश्चित्तस्येत्यादिना, योनिजं वा विराजं वा चतुर्भुजादिकं वा स्थूलं षड्विंशतितत्त्वसंघातमाश्रित्य प्रथमं भावना प्रवर्त्तते स-आलम्बनमदृष्टजातीयेषु चैतन्यपर्यन्तेषु विवेकेन पूर्वं चिन्तनासंभवात्, योगबलादेव हि तानि पश्चात्साक्षात् क्रियन्त इति न तान्यालम्बनानि, तथा चैकस्मिन्नेवालम्बने क्रमेण चतुष्प्रकारः संप्रज्ञातो भवति, तत्रालम्बने विराट्शरीरादौ प्रथमं यश्चित्तस्य स्थूलाकारत्वात्स्थूल-आभोगः परिपूर्णता, स्थूलयोर्भूतेन्द्रिययोरदृष्टाश्रुतामताशेषविशेषसाक्षात्कारः सवितर्क-इत्यर्थः, विशेषेण तर्कणमवधारणं वितर्कस्तेनानुगतो युक्तो निरोधो वितर्कानुगतनामा योग-इति भावः, सवितर्कनिर्वितर्कस्यावान्तरभेदौ वक्ष्यति, तत्र च वितर्कशब्दो विपरीततर्कणार्थकः, शब्दार्थज्ञानविकल्पस्यैव तस्मिन्सूत्रे विकल्पशब्दार्थावगमात्, सूक्ष्मो विचार इति। तत्रैवालम्बने कारणत्वादिनाऽनुगता ये प्रकृतिमहदहंकारपञ्चतन्मात्ररूपा भूतेन्द्रिययोः सूक्ष्मा-अर्थास्तदाकारत्वात्सूक्ष्मो यश्चित्तस्याभोगः सूक्ष्मगताशेषविशेषसाक्षात्कारः स विचार इत्यर्थः, विशेषेण चरणं सूक्ष्मवस्तुपर्यन्तमिति विचारस्तेनानुगतो युक्तो निरोधो विचारानुगतनामा योग इति भावः, सविचारनिर्विचारौ चास्य विचारस्यावान्तरभेदौ वक्ष्यति, तत्र च विचार-शब्दो मन्दचरणार्थकस्तान्त्रिकपरिभाषा वा, तद्भाष्ये सूक्ष्मविषयकसमाधेः कार्याद्युपरागस्यैव विचारशब्दार्थत्वावगमात्, आनन्दो ह्लाद इति। तत्रैवालम्बने यश्चित्तस्य विचारानुगतभू-

(१) आह्लाद इति। यच्चात्र भिक्षावाक्षिप्तावविचारोऽदर्शि केनापि; स च यच्चित्त्यादिना प्रतिक्षिप्तमप्यविचारयत एवाविचारः।

ह्लादः, एकात्मिका संविद् = अस्मिता, तत्र प्रथमश्चतुष्टयानुगतः समाधिः स-

भास्वती ।

नुगतः, विचारानुगतः, आनन्दानुगतः, अस्मिताऽनुगतश्चेति, विषयप्रकृतिभेदाच्चापि

तत्त्ववैशारदी ।

षयं सम्प्रज्ञातमाह—"एकात्मिका संविद्" इति । अस्मिताप्रभवाणीन्द्रियाणि, तेनैषामस्मि-

वार्त्तिकम् ।

म्यारोहात्सत्त्वप्रकर्षेण जायमाने ह्लादाख्यसुखविशेष आभोगः साक्षात्कारो भवति स आनन्दविषयकत्वादानन्द इत्यर्थः, तेनानुगतो युक्तो निरोध आनन्दानुगतनामा योग इति भावः, तदानीं चानन्दगोचर एवाहं सुखीति चित्तवृत्तिर्भवति न सूक्ष्मवस्तुष्वपीति विचारानुगताद् विशेषः, तथा च गीता—

"सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥
तं विद्याद् दुःखसंयोगं वियोगं योगसंज्ञितम्" । इति,

आनन्दस्य च सानन्दनिरानन्दत्वेन भेदो नास्ति सूत्रभाष्ययोरवक्ष्यमाणत्वादिति, अत्र कश्चित्—ह्लादो ह्लादवानिन्द्रियवर्गः, तथा चेन्द्रियाकारत्वादिन्द्रियरूपो यश्चित्तस्याभोगः साक्षात्कारः स आनन्द इत्यर्थं वदति, तन्न—एतादृशलक्षणायां प्रमाणादर्शनात्, इन्द्रियस्यापि स्थूलतया तत्राभोगस्यापि वितर्कमध्य एव प्रवेशाच्च कारणत्वमेव सूक्ष्मत्वमिति भाष्ये वक्ष्यमाणत्वेन केवलविकृतित्वरूपस्यास्थूलत्वस्येन्द्रियसाधारण्यादिति, किं चेन्द्रियगोचरसंप्रज्ञातस्यानन्दानुगतत्वे सति परोक्तरीत्या तत्रापि वृत्त्युपरागानुपरागाभ्यां सानन्दनिरानन्दरूपावान्तरविभागसंभवात्तद्वचनेनागामिसूत्रभाष्ययोर्न्यूनता स्यात्, अस्मद्व्याख्याने चावान्तरविभागो न संभवतीति न तदवचनन्यूनता, यत्तु—"ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिरि"तिसूत्रे ग्राह्यात् पृथगिन्द्रियेषु संप्रज्ञातो वक्ष्यते तत्प्रकारान्तरेण संप्रज्ञातस्याखिलविषयसंकलनार्थमेव न तु वितर्कानुगतविचारानुगताभ्यामिन्द्रियसमापत्तेरानन्दानुगतरूपभेदमभिप्रेत्य तथा तात्पर्यग्राहकलिङ्गाभावादिति दिक्, एकात्मिका संविदस्मितेति । एकशब्दोऽत्र केवलवाची, एकात्मिकाः एक एवात्माऽस्यां विषयत्वेनास्तीत्येकात्मिका, तथा चोक्तम्, एकालम्बने या चित्तस्य केवलपुरुषाकारा संवित् साक्षात्कारोऽस्मीत्येतावन्मात्राकारत्वादस्मितेत्यर्थः, सा च जीवात्मविषया परमात्मविषया चेति द्विधा वक्ष्यते तेनानुगतो युक्तो निरोधोऽस्मिताऽनुगतनामा योग इतिभावः, अस्या अस्मिताया अपि सास्मितनिरस्मितरूपो विभागो नास्ति सूत्रभाष्ययोरवक्ष्यमाणत्वात्, केवलपुरुषज्ञानस्य निर्विकल्पकमात्ररूपतया द्विविधित्वासंभवाच्च, देहेन्द्रियाद्युपरागे तु सविकल्पानां योगानां वितर्कानुगतादिभूमित्रय एवान्तर्भावादिति, अत्र चास्मिताशब्दो विविक्तचेतनाकारतामात्रोपलक्षकस्तेनोदासीनभावेन य ईश्वरचेतनत्वसाक्षात्कारस्तस्यापि संग्रह, सोपाधिकेश्वरसंप्रज्ञातस्य च विचारानुगते प्रवेशः, एताश्च संप्रज्ञातभूमय आनन्दानुगते विचारानुगते प्रवेश्य मोक्षधर्मवाक्येनोक्ताः,

"वितर्कश्च विवेकश्च विचारश्चोपजायते ।
मुनेः समादधानस्य प्रथमं योगमादितः" ॥ इति,

प्रथमं योगं संप्रज्ञातं समादधानस्य कुर्वतः, आदितः क्रमाज्जायत इत्यर्थः,

"योगारम्भे मूर्त्तहरिममूर्त्तमथ चिन्तयेत् ।
स्थूले विनिर्जितं चित्तं ततः सूक्ष्मे शनैर्नयेत्" ॥ इति,

स्मृतिद्वयं चास्मिन्नौत्सर्गिकक्रमे प्रमाणमिति, इदानीं—

"संवेद्ये केवले ध्यानं न कुर्याद्रघुनन्दने"—

त्यादिस्मृत्यनुसारेण । पूर्वपूर्वभूमिकासूत्तरोत्तरभूमिविषयस्य चिन्तनमुत्तरोत्तरभूमिषु च पूर्वपूर्वविषयस्य परित्यागं विदधाति, तत्र प्रथमश्चतुष्टयानुगत इत्यादिना, तत्र

**वितर्कः, द्वितीयो वितर्कविकलः सविचारः, तृतीयो विचारविकलः सानन्दः, चतुर्थस्तद्विकलोऽस्मितामात्र इति, सर्व एते सालम्बनाः समाधयः ॥ १७ ॥**

भास्वती।

चतुर्विधः—सवितर्कः, निर्वितर्कः, सविचारः, निर्विचारश्चेति, आलम्बनञ्च स्थूलसूक्ष्मभेदाद् द्विधा, ग्रहीतृग्रहणग्राह्यभेदात् त्रिधा, एतच्च समापत्तौ वक्ष्यति, तत्रेति। प्रथमो वितर्कानुगतः समाधिश्चतुष्टयानुगतः, तत्र वितर्कविचारानन्दास्मिभावा इत्येते सर्वे वर्तन्त इत्यर्थः, द्वितीयो विचारानुगतो योगः स्थूलालम्बनहीनत्वाद् वितर्कविकलः = वितर्ककलाहीनः, तृतीयो वाच्यवाचकहीनकरणगतह्लादयुक्तप्रकाशालम्बी, एवञ्च स्थूलसूक्ष्मग्राह्यहीनत्वाद् वितर्कविचारविकलः, अत्र स्थूलेन्द्रियाणां स्थैर्यसहगतसात्त्विकप्रकाशजात आनन्दः प्रथममालम्बनीक्रियते, ततश्चान्तःकरणस्थैर्यजातस्य ह्लादस्याधिगमो भवति, स्मर्यते च-

"इन्द्रियाणि मनश्चैव यथा पिण्डीकरोत्ययम्।
स्वयमेव मनश्चैवं पञ्चवर्गञ्च भारत! ॥
पूर्वं ध्यानपथे स्थाप्य नित्ययोगेन शाम्यति।
न तत् पुरुषकारेण न च दैवेन केन चिद् ॥
सुखमेष्यति तत्तस्य यथैवं संयतात्मनः।
सुखेन तेन संयुक्तो रंस्यते ध्यानकर्मणि" ॥ इति,

चतुर्थे ध्यान आनन्दस्यापि "ज्ञाताऽहम्" इत्यस्मितामात्रा संविदेवालम्बनं ततस्तदानन्दादिविकलम् ॥ १७ ॥

तत्त्ववैशारदी।

सा सूक्ष्मं रूपं, सा चात्मना ग्रहीत्रा सह बुद्धिरेकात्मिका संविदिति, तस्यां च ग्रहीतुरन्तर्भावाद्भवति ग्रहीतृविषयः सम्प्रज्ञात इति, चतुर्णामपरमवान्तरविशेषमाह—"तत्र प्रथम"-इति। कार्य्यं कारणानुप्रविष्टं न कारणं कार्य्येण, तदयं स्थूल आभोगः स्थूलसूक्ष्मेन्द्रियास्मिताकारणचतुष्टयानुगतो भवति, उत्तरे तु त्रिद्व्येककारणकास्त्रिद्व्येकरूपा भवन्ति, असम्प्रज्ञाताद्भिनत्ति—"सर्व एत" इति ॥ १७ ॥

पातञ्जलरहस्यम्।

नैयायिकानामात्मबुद्धिसमाधिचतुष्टयविभागः कार्यं कारणानुप्रविष्टमिति, अयमर्थः—उपादेयकार्यकाल उपादानसत्त्वं, न तूपादानसत्त्व उपादेयस्य कार्यस्यावश्यम्भावः, तदुक्तम्—"आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप" इति ॥ १७ ॥

वार्त्तिकम्।

प्रथमः सवितर्को वितर्कानुगतः समाधिश्चतुष्टयानुगतो वितर्कादिचतुष्टयेनानुगतो भवति, तप्तायःपिण्डवदेकीभावेन स्थूलसाक्षात्कारे पुरुषपर्यन्तानां सर्वेषामेव भानात्, अत्र च विचारादित्रयविषयग्राहकतामात्रेण विचारादित्रयानुगतत्वं विवक्षितमन्यथा सांकर्यापत्तेः, वितर्कानुगते समाधौ केवलात्मपर्यन्तसाक्षात्काराभावाच्च, एवमुत्तरेष्वपि बोध्यम्, द्वितीय इति। द्वितीयो विचारानुगतो वितर्कविकलः वितर्कभूमिजयात्तत्परित्यागेन तद्विषयविकलः, तृतीय इति। तृतीय आनन्दानुगतो विचारविषयेणापि विकलः, चतुर्थ इति। चतुर्थोऽस्मिताऽनुगतस्तद्विकलः = आनन्देनापि विकल इत्यतोऽस्मितामात्र इत्यर्थः, असंप्रज्ञातात्संप्रज्ञातस्य भेदमाह—सर्व एत इति। सालम्बनाः साधारणा एकाग्रवृत्तियुक्ता इति यावत्, समाधयो-योगाः कार्यकारणयोरभेदादिति प्रागेव व्याख्यातम् ॥ १७ ॥

अथासम्प्रज्ञातसमाधिः किमुपायः किंस्वभावो वेति—

**विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥**

सर्ववृत्तिप्रत्यस्तमये संस्कारशेषो निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः, तस्य परं वैराग्यमुपायः, सालम्बनो ह्यभ्यासस्तत्साधनाय न कल्पत इति—

भास्वती ।

विरामस्य = सर्वप्रत्ययहीनतायाः प्रत्ययः कारणं परं वैराग्यं तस्याभ्यासः पूर्वः प्रथमो यस्य सः, अस्मीतिप्रत्ययमात्राया बुद्धेरपि हानाभ्यासपूर्वको निष्पन्न इत्यर्थः, संस्कारशेषः = संस्कारा न च प्रत्यया यत्राऽव्यक्तरूपेणावशिष्टास्तदवस्थः समाधिरसम्प्रज्ञात इति सूत्रार्थः, सर्वेति । सर्ववृत्तिप्रत्यस्तमये = प्रत्ययहीनत्वे प्राप्ते सति याऽवस्था सोऽसम्प्रज्ञातो- निर्बीजः समाधिः, तस्योपायः परं वैराग्यम्, सालम्बनोऽभ्यासः = सम्प्रज्ञाताभ्यासः, न तस्य मुख्यं साधनम्, विरामप्रत्ययः = परवैराग्यरूपो, निर्वस्तुकः = ध्येयविषयहीनः, ग्रहीतरि महदात्मन्यप्यलम्बुद्धिरूपोऽव्यक्ताभिमुखो मुख्यो रोध इति यावत्, आलम्बनीक्रियते = आश्रीयते, असम्प्रज्ञातेच्छुना योगिनेति शेषः, तदिति । तदभ्यासपूर्वं = तदभ्या-

तत्त्ववैशारदी ।

क्रमप्राप्तमसम्प्रज्ञातमवतारयितुम्पृच्छति "अथ" इति । "विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः", पूर्वपदेनोपायकथनम्, उत्तराभ्याञ्च स्वरूपकथनम्, मध्यमं पदं विवृणोति—"सर्ववृत्ति" इति । प्रथमं पदं व्याचष्टे—"तस्य परम्" इति । विरामो = वृत्तीनामभावस्तस्य प्रत्ययः = कारणं तस्याभ्यासः = तदनुष्ठानं पौनःपुन्येन, तदेव पूर्वं यस्य स तथा, अथापरं वैराग्यं निरोधकारणं कस्मान्न भवतीत्यत आह—"सालम्बनो हि" इति । कार्य्यसरूपं कारणं युज्यते न विरूपं, विरूपं चापरं वैराग्यं सालम्बनं- निरालम्बनसमाधिना कार्य्येण, तस्मान्निरालम्बनादेव ज्ञानप्रसादमात्रात् तस्योत्पत्तिर्युक्ता, धर्ममेघसमाधिरेव हि नितान्तविगलितरजस्तमोमलात्सत्त्वादुपजातस्तत्तद्विषयातिक्रमेण प्रवर्त्तमानोऽनन्तो विषयावद्यदर्शी समस्तविषयपरित्यागाच्च स्वरूपप्रतिष्ठः सन्निरालम्बनः

पातञ्जलरहस्यम् ।

मध्यमं पदं = संस्कारशेष इति भावः, अथापरं वैराग्यं वशीकारसंज्ञाऽऽख्यम्, तद्विषया-

वार्त्तिकम् ।

क्रमप्राप्तमसंप्रज्ञातमवतारमितुं पृच्छति—अथेति ।

"विरामप्रत्ययाभ्यासपूर्वःसंस्कारशेषोऽन्यः"वृत्त्याऽपि विरम्यतामिति प्रत्ययो विरामप्रत्ययः परं वैराग्यं ज्ञानेऽप्यलंबुद्धिर्ज्ञानमपि शाम्यत्वित्येवंरूपा तस्या अभ्यासात् पौनःपुन्याज्जायत इत्याद्यविशेषणार्थः, तथा चाद्यविशेषणेनोपायकथनं मध्येन लक्षणकथनमन्त्येन लक्ष्यकथनमन्योऽसंप्रज्ञात इत्यर्थः, अन्त्यं विशेषणद्वयं व्याचष्टे–सर्वेति । समाधिर्योगः, आद्यविशेषणस्य पर्यवसितार्थमाह—तस्य परं वैराग्यमुपाय इति, नन्वेकाग्रतारूपोऽभ्यासोऽप्यत्र साक्षात्कारणं कथं न भवति संप्रज्ञात इवेत्याकाङ्क्षायामाह—सालम्बन इति । पुरुषपर्यन्तं कस्मिन्नाप्यालम्बने चित्तस्यैकाग्रतारूपोऽभ्यासो नासंप्रज्ञातस्य साक्षात्साधको भवतिः आलम्बनवृत्त्यवि-

---

( १ ) सर्ववृत्तीति । यच्च क्व चन—

"मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ।

असंप्रज्ञातनामाऽसौ समाधिरभिधीयते"—

इत्यसम्प्रज्ञातलक्षणे ब्रह्माकारतोक्ता, तत्र विषयानुपरक्तत्वेन ब्रह्मतुल्यतायां तात्पर्यम् ।

**विरामप्रत्ययो निर्वस्तुक आलम्बनीक्रियते, स चार्थशून्यः, तदभ्यासपूर्वं-चित्तं निरालम्बनमभावप्राप्तमिव भवतीत्येष निर्बीजः समाधिरसम्प्रज्ञातः, १८**

**स खल्वयं द्विविध उपायप्रत्ययो भवप्रत्ययश्च, तत्रोपायप्रत्ययो योगि-**

भास्वती।

सेन हेतुनेत्यर्थः, चित्तमभावप्राप्तमिव = क्रियाहीनत्वाद् विनष्टमिव न तु वस्तुतोऽभावप्राप्तम्, "नाभावो विद्यते सत" इति नियमाद्, निरालम्बनं = ग्रहीतृग्रहणग्राह्यविषयहीनमेवासम्प्रज्ञाख्यो निर्बीजः = नास्ति बीजमालम्बनं यस्य स निरोधः समाधिः ॥ १८ ॥

अन्योऽपि निर्बीजः समाधिरस्ति न स कैवल्याय भवति, तद्विवरणमाह—स खल्विति। द्विविधो निर्बीजः—उपायप्रत्ययः, श्रद्धाऽऽद्युपायहेतुको विवेकपूर्व इत्यर्थः, भवप्रत्ययश्च,

तत्त्ववैशारदी।

संस्कारमात्रशेषस्य निरालम्बनस्य समाधेः कारणमुपपद्यते सारूप्यादित्यर्थः, आलम्बनीकरणम् = आश्रयणम्, अभावप्राप्तमिव = वृत्तिरूपकार्य्याकरणाद्, निर्बीजः = निरालम्बनः, अथ वा बीजं = क्लेशकर्माशयास्ते निष्क्रान्ता यस्मात् स तथा ॥ १८ ॥

निरोधसमाधेरवान्तरभेदं हानोपादानाङ्गमादर्शयति—"स खल्वयमिति" सः = निरोधसमाधिर्द्विविध उपायप्रत्ययो भवप्रत्ययश्च, उपायः = वक्ष्यमाणः श्रद्धाऽऽदिः प्रत्ययः = कारणं-यस्य निरोधसमाधेः स तथोक्तः, भवन्ति = जायन्तेऽस्यां जन्तव इति भवोऽविद्या(१), भूतेन्द्रि-

पातञ्जलरहस्यम्।

तिक्रमेणेति तद्विषया मधुमत्यादयः, अनन्तः, अनन्तमोक्षहेतुत्वात्, विषयावद्यदर्शी विषयदोषदर्शी, कारणं धर्ममेघ इति ॥ १८ ॥

भूतादिमनोऽन्तेषु षोडशसु विकारेषु प्रकृत्यादितन्मात्रेष्वष्टसु तादात्म्याभिमानिनोऽविद्येत्याह—भूतेति, तौष्टिकानाम् = उक्तेष्वेवात्मबुद्ध्या तुष्टानाम्, वैराग्येति। वैराग्यात्प्र-

वार्त्तिकम्।

रोधित्वात्, अतः पुरुषख्यातिपर्यन्तास्वखिलवृत्तिष्वसंबुद्धिरूपो विरामप्रत्ययः परवैराग्याख्य एवासंप्रज्ञातेन साधनतयाऽऽलम्बनीक्रियत आश्रीयते. स यतो निर्वस्तुको, नास्ति वस्तु चिन्तनीयं यत्रेत्यर्थः, ननु तस्य निर्वस्तुकत्वं कथं तदाश्रयणे हेतुः तत्राह—स चार्थशून्य इति। सोऽप्यसंप्रज्ञातो ध्येयार्थशून्यः, अतोऽखिलध्येयवैराग्यमेव तत्र हेतुर्युक्त इत्यर्थः, सूत्रस्य फलितार्थमाह—तदभ्यासेति। कृतवैराग्याभ्यासं चित्तं निरालम्बनं निर्विषयमभावप्राप्तमिव वृत्तिरूपकार्याकरणाद् मृतकवद्भवतीत्येषोऽवस्थाविशेष इत्यादेरयमर्थः, निर्बीज इति। संस्कारद्वारा जन्मबीजं ज्ञानकर्म तच्छून्यावस्थेत्यर्थः, संस्काराख्यसंसारबीजोन्मूलक इति वाऽर्थः ॥ १८ ॥

असंप्रज्ञातस्यापि निमित्तभेदाद् द्वैविध्यं सूत्राभ्यां सूत्रकारो वक्ष्यति, तदेव द्वैविध्यं युक्तिसिद्धं पूर्वाचार्योक्तक्रमेण दर्शयति तयोः सूत्रयोरवतारणाय—स खल्वयं द्विविध इति। सोऽयम-

---

(१) भवोऽविद्येति। यत्त्वत्र केनापि—कतिपयविषयेषु भिक्षुराक्षिप्तस्तत्सर्वमपि मात्सर्यविजृम्भितमेव, तथा हि—तत्राद्य आक्षेपः—भिक्षुणा कृतो भवप्रत्यय इत्यस्य जन्मकारणकोऽर्थो मिश्रोक्तादविद्याकारणकात्तदर्थाद् विरुद्धः, द्वितीयस्तु—भाष्योक्ताद् भवप्रत्ययभाजां पुनरावर्त्तनात् तेषां मुक्तिस्तेनोक्ता विरुद्धा, तृतीयश्च—तेषामेवेयं "न कारणलयात् कृतकृत्यता मग्नवदुत्थानादि"ति कापिलसूत्रभाष्ये प्रकृतिलीनानांस्वेनोक्तात् पुनरावर्त्तनाद् विरुद्धेति।

प्रतिक्षेपश्चेत्थम्—अनात्मस्वात्मभ्रमेण लीना ये सर्ववृत्तिनिरोधजुषस्तेषामुद्भूतानां वर्त्तमानसाधनमन्तरेण भवन्नसंप्रज्ञातो जन्महेतुको यथोच्यते तथाऽविद्याप्रयुक्तोऽप्यस्त्येवेति फलतो नैवास्ति विरोधः, द्वितीयोऽपि तदा स्याद् यद्यन्यत्रैव मुक्तिरुक्ता भवेद्, भाष्योक्तावृत्तेश्वरमतायां को विरोधः

तृतीयोऽप्यव्यवधानेन मुक्त्युक्तावेव न तूक्तदिशा, एतेन भाष्योक्तयोत्तरया बन्धकोट्याऽपि न वैमत्यम्।

नां भवति—

## भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

भास्वती।

तत्र कैवल्यभाजां योगिनामुपायप्रत्यय, विदेहप्रकृतिलयानाञ्च भवप्रत्ययो निर्बीजः स्याद्, विदेहानामिति। देहः = स्थूलसूक्ष्मशरीरं, तद्धीना विदेहा ये तु पुरुषख्यातिहीनाः किन्तु दोषदर्शनाद् देहधारणे विरागवन्तस्ते तद्वैराग्येण तद्विषयेण च समाधिना सर्वकरणकार्यं निरुन्धन्ति, कार्याभावात करणशक्तयो न स्थातुमुत्सहन्ते, तस्मात् ताः प्रकृतौ लीयन्ते स्वेषामधिष्ठानभूतेन स्थूलसूक्ष्मदेहेन सह न संयुञ्जन्ति, उक्तञ्च—"वैराग्यात प्रकृतिलयः" इति, एवमेषामपि निर्बीजः समाधिः स्यात् किन्तु वैराग्यसंस्कारजातत्वात् तत् संस्कार-बलक्षये स समाधिः प्लवते, न हि पुरुषख्यातिं विना संस्कारस्य सम्यग् नाशः स्याद् चि-त्तातिरिक्तस्य द्रव्यस्यानधिगतत्वात्, ततस्तदा यो वैराग्यसंस्कारस्तिष्ठति तद्बलक्षयाच्च पुनरुत्थानम्, उक्तञ्च—"मग्नवदुत्थानम्" इति, यथा विदेहानां देवानां तथा प्रकृतिल-यानामपि वेदितव्यम्, ये तु पुरुषख्यातिहीनाः संज्ञामात्ररूपे ग्रहीतर्यपि विरागवन्तो न देहमात्रे, तद्विरागात् तदनुरूपसमाधेश्च तेषां विवेकहीनत्वात् साधिकारं चित्तं प्रकृतौ ली-यते, लीनञ्च तिष्ठति यावत् तद्वैराग्यहेतुकनिरोधसंस्कारस्य बलक्षयम्, विदेहप्रकृतिलयानां-निरोधो भवप्रत्ययः = भवति जायतेऽनेनेति भवो = जन्महेतवः क्लेशमूलाः संस्काराः, उक्तञ्च—

"विवेकख्यातिहीनस्य संस्कारश्चेतसो भवः।
अशरीरि शरीरि वा प्लवं जन्म यतो भवेद्" ॥ इति,

जन्म किल मरणान्तं, वैदेह्यादेर्विप्लुतिदर्शनात् तज्जन्मैव, जन्म त्वविद्यामूलात् संस्काराद् भवति, विदेहादीनां तत्तज्जन्म विवेकहीनात् सूक्ष्मास्मितामूलाद् वैराग्यसंस्कारात् सङ्घटते यथा क्लेसमूलात कर्माशयाद् देहवतां जन्म, विदेहप्रकृतिलया महासत्त्वाः, ते हि

तत्त्ववैशारदी।

येषु वा विकारेषु प्रकृतिषु वाऽव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मख्यातिस्तौष्टिकानां-वैराग्यसम्पन्नानां, स खल्वयं भवः प्रत्ययः = कारणं यस्य निरोधसमाधेः स भवप्रत्ययः, तत्र—तयोर्मध्य उपायप्रत्ययो योगिनां = मोक्षमाणानां भवति, विशेषविधानेन शेषस्य मुमुक्षुस-म्बन्धं निषेधति, केषान्तर्हि भवप्रत्यय इत्यत्र सूत्रेणोत्तरमाह—"भवप्रत्ययो विदेहप्रकृतिल-यानाम्", विदेहाश्च प्रकृतिलयाश्च तेषामित्यर्थः, तद्व्याचष्टे—"विदेहानां भवप्रत्यय" इति भूतेन्द्रियाणामन्यतममात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्ड-

पातञ्जलरहस्यम्।

कृतिलय इत्युक्तेर्वैराग्यमत्रापरम्, साधिकारे चेतसि, यतः प्रकृतिलयः, विशेषविधानेन = उ-पायविधानेन, शेषस्य = अभवप्रत्ययस्य, भवति भावयति जन्मेति भवस्तस्य प्रत्ययो-

वार्त्तिकम्।

संप्रज्ञातः, आगामिसूत्रेऽस्य प्रज्ञापूर्वकत्वदर्शनात्, उपायप्रत्ययो वक्ष्यमाणश्रद्धाऽऽद्युपायकारण-को योगिनामिह लोके भवति, इह लोके योगभ्रष्टानां च देवताविशेषताऽऽपन्नानां देवलोके भव-प्रत्ययो जन्ममात्रकारणक इति क्रमः, तत्रोपायप्रत्ययं विस्तरेण वदिष्यन् सूत्रकारः सूचीकटाह-न्यायेनादौ भवप्रत्ययं वदिष्यतीति सूत्रभाष्ययोः क्रमभेदो न दोषायेति मन्तव्यम्,

उत्पत्तिक्रमानुसारेण सौत्रं क्रममुल्लङ्घ्य पूरयित्वा सूत्रमुत्थापयति—तत्रेति। तत्रोपाय-प्रत्ययो योगिनां प्रकृष्टयोगानां भवति, स च पश्चाद् वक्ष्यत इति शेषः,

**विदेहानां देवानां भवप्रत्ययः, ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्ति, तथा प्रकृतिलयाः साधिकारे चेतसि प्रकृतिलीने कैवल्यपदमिवानुभवन्ति**

भास्वती।

पुनरावर्त्तने महर्द्धिसम्पन्ना भूत्वा प्रादुर्भवन्ति, एतेन भाष्यं व्याख्यातम्, विदेहानामिति। स्वसंस्कारमात्रोपयोगेन(१) = स्वस्य वैराग्यसंस्कारस्य, उपयोगेन = आनुकूल्येन, चित्तेनेति चित्तस्याप्रतिप्रसवत्वं सूचयति, कैवल्यपदमिवानुभवन्त इति, विदेहप्रकृतिलयास्तु

तत्त्ववैशारदी।

पातानन्तरमिन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषमनसः (२)षाट्कौशिकशरीररहिता· विदेहाः, ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः = प्राप्नुवन्तो विदेहाः, अवृत्तिकत्वञ्च कैवल्येन सारूप्यं, साधिकारसंस्कारशेषता च वैरूप्यम्, संस्कारमात्रोपभोगेने'ति क्वचित्पाठः, तस्यार्थः—संस्कारमात्रमेवोपभोगो यस्य, न तु चित्तवृत्तिरित्यर्थः, प्राप्तावधयः स्वसंस्कारविपाकं तथाजातीयकम् अतिवाहयन्ति = अतिक्रामन्ति, पुनरपि संसारे

पातञ्जलरहस्यम्।

भवप्रत्ययः, विदेहत्वं = स्थूलदेहराहित्यम्, आविदेहमुक्तेर्लिङ्गदेहस्य सत्त्वात्, अवृत्तिकत्वं-वृत्तिमात्रशून्यत्वम्, विशन्तीति साधिकारत्वात्, प्राप्तावधय इत्युक्तं, तत्रावधिमाह—दशेति। अवधिं भोगोद्बोधं, विविच्यन्ते = भोगाय निष्क्रान्ता भवन्ति, एतत् स्पष्टयति—

वार्त्तिकम्।

"भवप्रत्ययो विदेहप्रकृतिलयानाम्", भवो जन्म तदेव प्रत्ययः कारणं यस्येति विग्रहः, विदेहप्रकृतिलयानामिति विभज्य व्याचष्टे—विदेहानामिति। शरीरनैरपेक्ष्येण बुद्धिवृत्तिमन्तो विदेहा इति विभूतिपादे स्पष्टीभविष्यति, ते च महदादयो देवास्तेषां साधनानुष्ठानं विनैवासंप्रज्ञातयोगो जन्ममात्रनिमित्तको भवति योनिसादृगुण्येनौत्पत्तिकज्ञानात्, ते हि दैनन्दिनप्रलये कदा चिच्च सर्गकालेऽपि स्वसंस्कारमात्रोपगतेन चित्तेन संस्कारशेषेण निरोधावस्थेन चित्तेन कैवल्यपदमिव प्राप्नुवन्तो व्युत्थानकाले च स्वसंस्कारस्य = देवभावप्रापकसंस्कारस्य विपाकं फलमैश्वर्यभोगं प्रारब्धकर्मयन्त्रिता अतिवाहयन्ति = अतिक्रामन्ति ततो मुच्यन्त इति शेषः, तथा प्रकृतिलया इति। ईश्वरोपासनया प्रकृतिदेवतोपासनया वा ये ब्रह्माण्डं सावरणं त्यक्त्वा लिङ्गशरीरेण सह प्रकृत्यावरणे गताः तेऽत्र प्रकृतिलीनाः तेऽपि चासमाप्तकार्ये चेतसि स्वेच्छयैव प्रकृतिलीने संस्कारशेषे सत्यसंप्रज्ञातयोगे कैवल्यपदमिव प्राप्नुवन्ति यावदधिकारशेषवशात् चित्तं पुनर्व्युत्थितं न भवति तस्यापि भवप्रत्यय इति शेषः, अधिकारसमाप्तौ च तेऽपि मुच्यन्त इत्याशयः, के चित्तु भवत्यस्यामिति भवोऽविद्या, तथा चेदं सूत्रमिन्द्रियादिप्रकृत्यन्तचिन्तकानामविद्याकारणकमसंप्रज्ञातं वदन्तीत्याहुः, तन्न—परवैराग्यस्यासंप्रज्ञातहेतुतया तस्याविदुष्यसंभवात्, यच्च वायुपुराणे—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।

---

(१) उपयोगेनेति भाष्यपाठं मत्वेयं व्याख्येति भाति।

(२) षाट्कौशिकेति।

"रसाद्वै शोणितं जातं शोणितान्मांससंभवः।
मांसात्तु मेदसो जन्म मेदसोऽस्थिसमुद्भवः॥
अस्थ्नो मज्जा समभवन्मज्जातः शुक्रसंभवः।
शुक्राद् गर्भः समभवत्ततः पिण्डसमुद्भवः॥"

इति स्मृत्युक्तशोणितमांसमेदोऽस्थिमज्जाशुक्राणां षण्णां कोशेन निवृत्तेत्यादि।

यावन्न पुनरावर्त्ततेऽधिकारवशाच्चित्तम् इति ॥ १९ ॥

श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥

भास्वती ।

मोक्षपदे वर्त्तन्त इति न लोकमध्ये न्यस्ता इति भाष्यात्, ते हि न लोकिनो भूताद्यभिमानिनो देवाः, नापि भूतादिध्यायिनो देवाः, तेषां हि चित्तमव्यक्तताप्राप्तं यथा केवलिनाम्, स्वसंस्कारविपाकं—स्वेषां वैराग्यसंस्कारस्य विपाकभूतमवच्छिन्नकालं यावद् लीनचित्ततारूपं यदवस्थानं तथाजातीयकमतिवाहयन्ति, तथेति सुगमम् ॥ १९ ॥

श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञा-इत्युपायेभ्यः कैवल्यार्थिनां योगिनामसम्प्रज्ञातो-

तत्त्ववैशारदी ।

विशन्ति, तथा च वायुप्रोक्तं—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णम्" इति ।

तथा प्रकृतिलयाश्च=अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वन्यतममात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमव्यक्तादीनामन्यतमस्मिंल्लीनाः, साधिकारे=अचरितार्थे, एवं हि चरितार्थं चेतः स्याद् यदि विवेकख्यातिमपि जनयेदजनितसत्त्वपुरुषान्यताख्यातेस्तु चेतसोऽचरितार्थस्यास्ति साधिकारितेति साधिकारे चेतसि प्रकृतौ लीने कैवल्यपदमिवानुभवन्ति यावन्न पुनरावर्त्ततेऽधिकारवशाच्चित्तमिति, प्रकृतिसाम्यमुपगतमप्यवधिं प्राप्य पुनरपि प्रादुर्भवति=ततो विविच्यते, यथा वर्षातिपाते मृद्भावमुपगतो-मण्डूकदेहः पुनरम्भोदवारिधारावसेकान्मण्डूकदेहभावमनुभवतीति, तथा च वायुप्रोक्तम्—

"सहस्रन्त्वाभिमानिकाः ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यत" इति ।

तदस्य पुनर्भवहेतुतया हेयत्वं सिद्धम् ॥ १९ ॥

योगिनां तु समाधेरुपायक्रममाह—"श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्" नन्वि-

पातञ्जलरहस्यम् ।

वर्षापाय इति । वर्षासमयेऽतीत इत्यर्थः, आभिमानिकाः=अहङ्कारोपासकाः, एवं—बौद्धाः=बुद्ध्युपासकाः, पूर्णं मन्वन्तराणामिति शेषः तदस्य=भवप्रत्ययस्य ॥ १९ ॥

"श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति" श्रुतेरात्मविज्ञानं तदुपादेये श्रद्धा, सैव श्रद्धेति वक्तुमाशङ्कते—नन्विति । सम्प्रसादः=चेतसः परिणामविशेषः, शिष्यमात्र-

वार्त्तिकम् ।

भौतिकाश्च शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥
निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते ।"

इति वाक्यं, तद् इन्द्रियाद्युपासकानामनुत्पन्नज्ञानानां कर्मदेवानां तत्तत्पदावस्थितिकालमेव परिच्छिनत्ति न तु तेषामसंप्रज्ञातसमाधिकालान् देहाद्यभावेन वृत्त्यभावकालान् वा; इन्द्रियादिचिन्तामात्रेणासंप्रज्ञातानुपपत्तेः, वृत्त्यभावस्य कादाचित्कस्य प्रलयमरणादितुल्यत्वेनापुरुषार्थत्वाच्च, इन्द्रियाद्युपासकानामिन्द्रियाद्यभिमानिसूर्यादिपदप्राप्तेरेवान्यत्र फलवत्त्वश्रवणाच्चेति१९॥

उपायप्रत्ययमसंप्रज्ञातं तदधिकारिणं चाह—

"श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्", इतरेषां विदेहप्रकृतिलयातिरिक्तानां देवा-

उपायप्रत्ययो योगिनां भवति, श्रद्धा = चेतसः सम्प्रसादः, सा हि जननीव कल्याणी योगिनं पाति, तस्य हि श्रद्दधानस्य विवेकार्थिनो वीर्यमुपजायते, समुपजातवीर्य्यस्य स्मृतिरुपतिष्ठते, स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते, समाहितचित्तस्य प्रज्ञाविवेक उपावर्त्तते, येन यथावद्वस्तु जा-

भास्वती।

निर्बीजो भवति, ननु विदेहादीनामपि श्रद्धावीर्यादीनि विद्यन्ते स्म, अथ कोऽत्र योगिनां-विशेष इत्यत आह—श्रद्दधानस्य विवेकार्थिन इति, तस्माद् श्रद्धाऽत्र विवेकविषये चेतसः सम्प्रसादः=अभिरुचिमती बुद्धिः, अभिरुचिरूपायाः श्रद्धाया वीर्यं प्रयत्नः, ततः स्मृतिः = सदा समनस्कतोपतिष्ठते, स्मृत्युपस्थाने = स्मृतावुपस्थितायाम्, अनाकुलम् = अविलोलं, चित्तं समाधीयते=अष्टाङ्गयोगवद् भवति, समाधेः प्रज्ञाविवेकः = प्रज्ञाया विवेकः = वैशिष्ट्यं = विशदता = उत्कर्ष इति यावद्, उपावर्त्तते = समुपजायत इत्यर्थः, प्रज्ञाप्रकर्षेण यथावद् वस्तु = तत्त्वानीत्यर्थः, जानाति तदभ्यासाद् = व्युत्थानसंस्कारनाशे; उत्पन्ने

तत्त्ववैशारदी।

न्द्रियादिचिन्तका अपि श्रद्धावन्त एवेत्याह—श्रद्धा चेतसः सम्प्रसादः" इति, स चागमानुमानाचार्य्योपदेशसमधिगततत्त्वविषयो भवति, स हि चेतसः सम्प्रसादोऽभिरुचिरतीच्छा श्रद्धा, नेन्द्रियादिष्वात्माभिमानिनामभिरुचिः, असम्प्रसादो हि सः व्यामोहमूलत्वादित्यर्थः, कुतोऽसावेव श्रद्धेत्यत आह—"सा हि जननीव कल्याणी योगिनं पाति" विमार्गपातजन्मनोऽनर्थात्, सोऽयमिच्छाविशेष इष्यमाणविषयं यत्नं प्रसूत इत्याह—"तस्य हि श्रद्दधानस्य", तस्य विवरणं—विवेकार्थिनो वीर्य्यमुपजायते, स्मृतिः = ध्यानम्, अनाकुलम् = अविक्षिप्तं, समाधीयते = योगाङ्गसमाधियुक्तं भवति, यमनियमादिनान्तरीयकसमाध्युपन्यासेन च यमनियमादयोऽपि सूचिताः, तदेवमखिलयोगाङ्गसम्पन्नस्य सम्प्रज्ञातो जायत इत्याह—"समाहितचित्तस्य" इति, प्रज्ञाया विवेकः = प्रकर्ष उपजायते, सम्प्रज्ञातपूर्वमसम्प्रज्ञातोत्पादमाह—"तदभ्यासाद्" इति, तत्रैव तत्तद्भूमिप्राप्तौ तत्तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति, स हि कैवल्यहेतुः, सत्त्वपुरुषान्यताख्यातिपूर्वो हि निरोधश्चित्तमखिलकार्य्य-

पातञ्जलरहस्यम्।

विषयमात्मविषयं वीर्यं सामर्थ्यम्, उपजायत इत्यत्राग्रे विवरणपदं सम्बन्धनीयम्, 'स्मृतिलाभे सर्वग्रन्थीनां विप्रमोक्ष' इति श्रुतेर्ध्यानमत्र निदिध्यासनम्, यमादीनां समाधेः पूर्वभावित्वात् तेऽप्युदाहृता इत्याह—यमेति। नान्तरीयकम् = अनन्यथासिद्धम्, यथाऽऽमिक्षाऽर्थ आनीयमाने दधनि वाजिनस्योत्पत्तिः, सत्त्वपुरुषान्यताख्यातिः = पुंप्रकृतिभेदसाक्षात्कारः, 'विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण इति श्रुतेः', एतन्मते ज्ञानानन्तरं व्युत्थानं-

वार्त्तिकम्।

नां वा मनुष्यादीनां वा न जन्ममात्रादसंप्रज्ञातो भवति किंतु श्रद्धाऽऽदिभ्यः प्रज्ञापर्यन्तेभ्य इत्यर्थः, संक्षेपतः सूत्रवाक्यार्थमाह—उपायेति। उपायः श्रद्धाऽऽदिः, श्रद्धाऽऽदीन् पञ्च क्रमेण व्याचष्टे—श्रद्धा चेतस इत्यादिना, संप्रसादः प्रीतिः योगो मे भूयादित्यभिलाषा, सा च समर्था मातेव योगिनं पाति प्रतिबन्धसहस्राणि तिरस्कृत्य रक्षति, यथा योगभङ्गो न भवतीत्यर्थः, श्रद्धातश्च वीर्यं भवतीत्याह—तस्य हीति। श्रद्दधानस्य विवेके जीवेश्वरान्यतरपुरुषतत्त्वज्ञाने योगसाधने ऽर्थितया वीर्यं प्रयत्नो धारणरूपो भवतीत्यर्थः, समुपजातेति। वीर्यतश्च स्मृतिर्ध्यानं ततश्च समाधिर्योगस्य चरमाङ्गं भवति, तदेवं श्रद्धामूलकाद्धारणाद्यन्तरङ्गत्रयात्संप्रज्ञातयोगे जायमाने प्रज्ञा जीवब्रह्मान्यतरात्मतत्त्वसाक्षात्काररूपो विवेक उपावर्त्तत उपजायते येन विवेकेन यथार्थंवस्तु जानाति विषयीकरोति विद्वानित्यर्थः, तदेवं श्रद्धाऽऽदीन् व्याख्याय तत्पूर्वकत्वमसंप्रज्ञा-

नाति, तदभ्यासात् तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति ॥ २० ॥

ते खलु (१)नवयोगिनो मृदुमध्याधिमात्रोपाया भवन्ति, तद् यथा—मृदूपायः, मध्योपायः, अधिमात्रोपायः, इति, तत्र मृदूपायोऽपि त्रिविधो मृदुसंवेगः, मध्यसंवेगः, तीव्रसंवेग इति, तथा मध्योपायस्तथाऽधिमात्रोपाय-इति, तत्राधिमात्रोपायानाम्—

**तीव्रसंवेगानामासन्नः ॥ २१ ॥**

समाधिलाभः समाधिफलं च भवतीति ॥ २१ ॥

भास्वती ।

च परवैराग्येऽसम्प्रज्ञातः समाधिर्भवतीति ॥ २० ॥

त इति । स्पष्टं भाष्यम्, तीव्रसंवेगानां = तीव्रः संवेगः = शीघ्रलाभाय निरन्तरा-

तत्त्ववैशारदी ।

करणेन चरितार्थमधिकारादवसादयति ॥ २० ॥

ननु श्रद्धाऽऽदयश्चेद् योगोपायास्तर्हि सर्वेषामविशेषेण समाधितत्फले स्याताम्, दृश्यते तु कस्य चित्सिद्धिः, कस्य चिदसिद्धिः, कस्य चिच्चिरेण सिद्धिः, कस्य चिच्चिरतरेण सिद्धिः कस्य चित् क्षिप्रमित्यत आह—"ते खलु नवयोगिन" इति । उपायाः श्रद्धाऽऽदयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्कारादृष्टवशाद् येषां ते तथोक्ताः, संवेगः = वैराग्यं, तस्यापि मृदुमध्यतीव्रता प्राग्भवीयवासनाऽदृष्टवशादेवेति, तेषु यादृशां क्षेपीयसी सिद्धिस्तान् दर्शयति सूत्रेण—

"तीव्रसंवेगानामासन्नः" इति सूत्रं, शेषं भाष्यम्, समाधेः सम्प्रज्ञातस्य फलमसम्प्रज्ञा-

पातञ्जलरहस्यम् ।

विरोधी निरोधः, योगकरणेन = सम्पादनेन, अधिकाराद् = पुनर्जन्महेतोः ॥ २० ॥

इष्टापत्तिं धुनीते—दृश्यते त्विति ।

वार्त्तिकम् ।

तस्य व्याचष्टे—तदभ्यासादिति । प्रज्ञाया अभ्यासात्तत्सिद्ध्या तद्विषयकादपि विरामप्रत्ययरूपादलंबुद्ध्याख्याद्वैराग्यादसंप्रज्ञातो भवतीति सूत्रार्थः ॥ २० ॥

आसन्नसमाधिसिद्धौ त्वतिशयेनोपायानुष्ठानं हेतुरिति सूत्रद्वयेन प्रतिपादनीयं, तयोरादिसूत्रमवतारयितुमुपक्रमते–ते खल्विति । उपायः = श्रद्धाऽऽदिः,तस्य मृदुत्वमल्पता, मध्यत्वं प्रसिद्धमेव, अधिमात्रत्वमतिप्रमाणता = अतिशयितत्वमिति यावत्, संवेगश्चोपायानुष्ठाने शैघ्र्यम्, कश्चित्तु संवेगो वैराग्यमिति व्याचष्टे--तन्न–योगिनो नवधात्वानुपपत्तेः, उपायकार्यतया वैराग्योपायमृदुत्वादिकं विहाय स्वातन्त्र्येण मृदुत्वाद्यसंभवात् संवेगशब्दस्य वैराग्यवाचकत्वाभावाच्चेति, तथा मध्येति । मृदुसंवेगत्वादिरूपैस्त्रिविध इत्यर्थः, तथाऽधिमात्रोपाय इति । अधिकप्रमाणकोपायोऽपि मृदुसंवेगत्वादिरूपैस्त्रिविध इत्यर्थः,

तत्र तेषु नवसु मध्ये, सूत्रेण सहान्वयः,

---

(१) नवेति । संख्येयं भाष्यकारैर्मृदुमध्येत्यादिसूत्रोक्तभेदाननादायैवोक्ता, प्रथमसूत्रावतारणाऽवसरे सामान्यस्यैवानुपस्थिता सूत्रान्तरोक्तविशेषाणामजिज्ञास्यत्वाद्,

एवं च पूर्वं नवैव—मृदूपायमृदुसंवेगः १ मृदूपायमध्यसंवेगः २ मृदूपायतीव्रसंवेगः ३ मध्योपायमृदुसंवेगः ४ मध्योपायमध्यसंवेगः ५ मध्योपायतीव्रसंवेगः ६ अधिमात्रोपायमृदुसंवेगः ७ अधिमात्रोपायमध्यसंवेगः ८ अधिमात्रोपायतीव्रसंवेगः ९ एषु नवम एव पुनस्त्रिधा—अधिमात्रोपायमृदुतीव्रसंवेगः १ अधिमात्रोपायमध्यतीव्रसंवेगः २ अधिमात्रोपायाधिमात्रतीव्रसंवेगः ३ एतस्मिन्नेव भेदत्रये द्वितीयसूत्रोक्तताररम्यं विज्ञेयम् ।

## मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥

मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति ततोऽपि विशेषः, तद्विशेषान्मृदुतीव्रसंवेगस्यासन्नः, ततो मध्यतीव्रसंवेगस्यासन्नतरः, तस्मादधिमात्रतीव्रसंवेगस्याधिमात्रोपायस्याप्यासन्नतमः समाधिलाभः समाधिफलञ्चेति ॥ २२ ॥

भास्वती ।

नुष्ठान इच्छाप्राबल्यं येषां तेषां समाधिलाभः कैवल्यञ्चासन्नं भवति ॥ २१ ॥

मृदुतीव्र इति । सुगमं भाष्यम् अधिमात्रोपायः = अधिकप्रमाणकोपायः, तद् यथा—समाधिसाधनोपायेष्वविचला श्रद्धेत्यादिः ॥ २२ ॥

तत्त्ववैशारदी ।

तस्तस्यापि कैवल्यम् ॥ २१ ॥

"मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः" निगदव्याख्यातेन भाष्येण व्याख्यातम् इति॥२२॥

पातञ्जलरहस्यम् ।

"योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" ॥ इतिस्मृतेः,
"न हि कल्याणकृत् कश्चिद् दुर्गतिं तात ! गच्छति"-

इत्युक्तेर्नैकान्ततः सिद्ध्यभावः किन्तु विलम्बेनेत्याह—कस्य चिदिति । असिद्धिः = विलम्बेन सिद्धिः,

"बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यत" इतिस्मृतिम् ;

'मध्यतीव्रसंवेगस्यासन्नतर इति' भाष्योक्तिञ्चाश्रित्याह—कस्य चिच्चिरेणेति ।

"शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायत"-

इतिस्मृतिम् 'मृदुतीव्रसंवेगस्य आसन्न' इतिभाष्योक्तञ्चाश्रित्याह—कस्य चिच्चिरतरेणेति । अधिमात्रः = उत्तमः, संस्कारः = वासना, अदृष्टं = निःश्रेयसहेतुः शुद्धो धर्मः, केषाञ्चिदधिमात्रतीव्रसंवेगानां क्षिप्रं सिद्धिः, क्षेपीयसी = शीघ्रा, कैवल्यं फलमित्यनुषङ्गः ॥ २१ ॥ २२ ॥

वार्त्तिकम् ।

"अधिमात्रोपायानां तीव्रसंवेगानामासन्नः," नवयोगिमध्ये चरमाणामेवासन्नोऽसंप्रज्ञातो भवतीत्यर्थः, समाधिलाभः तन्निष्पत्तिः, न केवलं समाधिरासन्नोऽपि तु मोक्षोऽपीत्याह—समाधिफलं चेति—

'विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि'

इत्यादिविष्णुपुराणादिभ्य इति भावः, अत्र कश्चिद् अधिमात्रोपायानामिति सूत्रमध्ये न प्रवेशयति, (१)तन्न—तथा सति संवेगस्य त्रिधा विभागेनैव सूत्रोपपत्तौ भाष्ये नवधा विभागप्रदर्शनवैयर्थ्यापत्तेः ॥ २१ ॥

"मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः" पूर्वसूत्रोक्तविशिष्टेऽन्तर्गतस्य तीव्रत्वस्य मृदुमध्याधिमात्रत्वेन त्रैविध्यात्ततोऽप्यासन्नादपि विशेषस्तरतमरूपो भवति, पूर्वसूत्रोक्तस्य नवमयोगिन इत्यर्थः, एतदेव व्याचष्टे—ततोऽपि विशेष इत्यन्तेन भाष्येण, फलितार्थमाह—तद्विशेषादपीति । तस्माद्विशेषादपि नवमस्य त्रिविधस्यान्तिमस्यामासन्नतम इत्यर्थः, अपिशब्द आगामिसूत्रस्थसाधनापेक्षया, अत्र तीव्राधिमात्रसंवेगस्येत्यपपाठः, अधिमात्रतीव्र इत्युक्तभाष्यतोऽधिमात्रतीव्रसंवेगस्येत्येव पाठादिति ॥ २२ ॥

---

(१) यत्तु केनाप्यत्र कश्चिदित्यादिनाऽनूद्य भिक्षुणा कृत खण्डनं निर्दलितं; तदुतिस्थवीयः, तदनूदितस्य प्रवेशयतीतिपदस्यान्वाययतीत्यर्थानाकलनाद् ।

किमेतस्मादेवासन्नतमः समाधिर्भवत्यथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो न वेति—

**ईश्वरप्रणिधानाद्वा ॥ २३ ॥**

प्रणिधानाद् = भक्तिविशेषाद् आवर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमा-

भास्वती ।

किमिति । एतस्माद् = ग्रहीतृग्रहणग्राह्याणां सम्प्रज्ञानलाभाय तीव्रसंवेगादेवासन्नतमः समाधिर्भवति न वेति ? ईश्वरप्रणिधानाद् वाऽपि स भवति, प्रणिधानादिति । सर्वकर्मार्पणपूर्वं भावनारूपं प्रणिधानं न तु कर्मार्पणमात्रम्, तच्च भक्तिविशेषः, तस्माद्

तत्त्ववैशारदी ।

सूत्रान्तरं पातयितुं विमृशति—"किमेतस्मादेव" इति । नवा = शब्दः संशयनिवर्त्तकः, "ईश्वरप्रणिधानाद्वा", व्याचष्टे—"प्रणिधानाद्" इति, प्रणिधानाद् = भक्तिविशेषान्मानसाद्वाचिकात्कायिकाद्वाऽऽर्जितः = अभिमुखीकृतस्तमनुगृह्णाति, अभिध्यानम् = अनागतेऽर्थे—

पातञ्जलरहस्यम् ।

अव्ययानामनेकार्थत्वाद् निश्चयवाची नवाशब्दः, तेनोपायान्तरमाह—ईश्वरप्रणिधानाद्वेतिसूत्रेण, अनुगृह्णाति "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्' इतिश्रुतेः', यमधिकारिणमेष ईश्वरः भक्त्या वशीकृतो वृणुते 'मां जानात्विति' तेनाधिकारिणा लभ्यः

वार्त्तिकम् ।

सूत्रान्तरमवतारयितुं पृच्छति—किमेतस्मादेवेति । किमेतस्मादेव तीव्रसंवेगस्याधिमात्रत्वादेवासन्नतमः समाधिर्भवतीत्यादिरर्थः, न वेति वैकल्पिकत्वार्थः विकल्पमेव सिद्धान्तयति सूत्रेण—

"ईश्वरप्रणिधानाद्वा" विशेष इत्यनेनान्वयः, प्रणिधानमत्र न द्वितीयपादवक्ष्यमाणं किं त्वसंप्रज्ञातकारणीभूतसमाधिर्भावनाविशेष एव, तज्जपस्तदर्थभावनमित्यागामिसूत्रेणैवात्मप्रणिधानस्यात्र लक्षणीयत्वात, तथा च सूत्रद्वयस्यायमर्थः, प्रज्ञाऽन्तो यो योगोपायो जीवात्मपरमात्मसाधारणविषयक उक्तः, तत्र जीवात्मप्रज्ञाऽन्तस्योपायस्याधिमात्रतीव्रसंवेगत्वे सत्येवासन्नतमोऽसम्प्रज्ञातो भवति, परमात्मप्रज्ञाऽन्तस्योपायस्य त्वधिमात्रतीव्रसंवेगत्वाभावेऽप्यासन्नतमोऽसंप्रज्ञातो भवतीति, एवं च सति मुख्यकल्पानुकल्पभेदेन परमात्मजीवात्मप्रज्ञयोर्योगमोक्षहेतुत्वं बोध्यम्, उभयप्रज्ञयोरेव देहाद्यभिमाननिवर्त्तकत्वेन परवैराग्यद्वारकत्वसाम्येऽप्यतितीव्राभ्यासं विनाऽपि परमात्मप्रज्ञाया आसन्नतमयोगहेतुतया श्रैष्ठ्यात्, 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्चेत्यागामिसूत्रेणाधिकद्वारकीर्त्तनात्, अत एव श्रुतिस्मृतीतिहासादिषु प्रायशो ब्रह्मज्ञानमेव मोक्षहेतुतयोपदिश्यते, कदा चिदेव तु स्वातन्त्र्येण जीवतत्त्वज्ञानमिति, यदि चोभयोरेव तुल्यवद्विकल्पः स्यात्तर्हि "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ" "अमृतस्यैष सेतु"रित्यादिश्रुतयो व्याकुप्येरन्, तथा—

"स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपोऽप्रकटस्वरूपः ।
सर्वेश्वरः सर्वविशेषवेत्ता समस्तशक्तिः परमेश्वरात्मा ॥
प्रज्ञायते येन उदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाऽप्यवगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्" ॥

इत्यादिस्मृतयोऽपि व्याकुप्येरन्, मुख्यकल्पत्वे तु राजमार्ग एव मम इति वाक्यवत् तादृशवाक्यानां मुख्यसाधनपरतयोपपत्तिरिति दिक्, ननु जीवप्रज्ञाऽऽसन्नतमयोगोत्पादनार्थमभ्यासस्यातितीव्रत्वमपेक्षते; ईश्वरप्रज्ञा तु नापेक्षत इत्यत्र का युक्तिरित्याकाङ्क्षायामाह—प्रणि-

त्रेण, तदभिध्यानादपि योगिन आसन्नतमः समाधिलाभः फलं च भवतीति २३

अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नामेति—

**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥**

भास्वती।

भक्तिविशेषाद् = हृदि ब्रह्मपुरे व्योम्नि प्रतिष्ठितमात्मनीश्वरसत्त्वमनुभवतः परमप्रेमास्पदे तस्मिन् निवेदितात्मनो निश्चिन्तस्य योगिनः सदैवावस्थानमियं समाधिसाधिनी भक्तिः, तादृशभक्त्याऽऽवर्जितः = अभिमुखीकृतः, ईश्वरस्तं योगिनमनुगृह्णाति, अभिध्यानमात्रेणेच्छामात्रेण नान्येन व्यापारेणेत्यर्थः, कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति वाक्यादीश्वरः प्रलयकाल एव निर्माणचित्तेनाभिध्यानं करोतीति गम्यते, अन्यदा सगुणब्रह्मणो हिरण्यगर्भस्यैवाभिध्यानं लभ्यम्, किञ्च—ईश्वराभिध्यानालाभेऽपि तत्प्रणिधानादेवासन्नतमः समाधिलाभो भवति, समाहितपुरुषे प्रवर्त्तिता भावना शीघ्रं समाधिमानयेदिति, उक्तञ्च सूत्रकृता—"ततः प्रत्यक्चेतनाधिगमोऽन्तरायाभावश्च" इति ॥२३॥

अथेति। ननु पञ्चविंशतितत्त्वान्येव विश्वस्य निमित्तोपादानं कारणं, तत्र प्रधानं मूलमुपादानं पुरुषस्तु मूलं निमित्तम्, यत् किञ्चिद् विद्यते कल्पनीयञ्च यद् भवेत् तत् सर्वं प्रधानपुरुषात्मकमिति साङ्ख्ययोगनयः, ईश्वरस्तु न प्रधानं नापि पुरुषमात्र इत्यतः स कः? स हि—ऐशचित्तव्यपदिष्टो मुक्तपुरुषविशेषो यस्य चित्तं सदैव मुक्तमित्यस्य प्रधानपुरुषव्यतिरिक्तता, तस्य लक्षणमाह सूत्रकारः—क्लेशेति। अविद्येति। अविद्या-

तत्त्ववैशारदी।

इच्छा, इदमस्याभिमतमस्त्विति, तन्मात्रेण न व्यापारान्तरेण, शेषं सुगमम् ॥ २३ ॥

ननु चेतनाचेतनाभ्यामेव व्यूढं नान्येन विश्वम्, ईश्वरश्चेदचेतनस्तर्हि प्रधानं, प्रधानविकाराणामपि प्रधानमध्यपातात्, तथा च न तस्यावर्जनमचेतनत्वाद्, अथ चेतनस्तथाऽपि चितिशक्तेरौदासीन्यादसंसारितया चास्मिताऽऽदिविरहात्कुत आवर्जनं कुतश्चाभिध्यानमित्याशयवानाह—"अथ प्रधाने"ति। अत्र सूत्रेणोत्तरमाह—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषवि-

पातञ्जलरहस्यम्।

किञ्च स्वां तनुं स्वस्वरूपं वृणुते च प्रकाशयतीत्यर्थः, तन्मात्रेण = सङ्कल्पेनेत्यर्थः ॥ २३ ॥

"प्रकृतिं पुरुषं चैव विद्धयनादी उभावपी"ति

श्रुतिमाश्रित्याह—नन्विति, व्यूढं = व्याप्तम्, अस्मिता = अहङ्कारममकारौ, ईश्वरः =

वार्त्तिकम्।

धानादित्यादि। ब्रह्मात्मना चिन्तनरूपतया प्रेमलक्षणभक्तिरूपाद्वक्ष्यमाणात्प्रणिधानादावर्जितोऽभिमुखीकृत ईश्वरस्तं ध्यायिनमभिध्यानमात्रेण "अस्य समाधिमोक्षावासन्नतमौ भवेतामि"तीच्छामात्रेण रोगाशक्त्यादिभिरुपायानुष्ठानमान्द्येऽप्यनुगृह्णात्यानुकूल्यं भजते; अतस्तस्मादभिध्यानादपि प्रणिधाननिष्पत्त्यादिद्वारा योगिनामासन्नतमौ समाधिमोक्षौ भवत इत्यर्थः॥२३॥

ननु प्रधानपुरुषातिरिक्तं तत्त्वं नास्तीति त्वयाऽप्यभ्युपगम्यते तत्र चेश्वरो न प्रधानं चेतनत्वाद्यभ्युपगमात्, नापि पुरुषः सर्वेषां पुरुषाणां चिन्मात्रस्वरूपत्वेनेश्वरत्वानीश्वरत्वयोः स्वतोऽसम्भवात्, न हि वैशेषिकादिवद् नित्येच्छाऽऽदिमान् स्वत एवेश्वरस्त्वयाऽप्यभ्युपगम्यते, औपाधिकत्वे तूपाधिमुक्त्या पुरुषाख्यजीवानामेवैश्वर्यमस्तु तत्परत्वेनैव श्रुतिस्मृत्युपपत्तेः, अतः प्रधानजीवातिरिक्त ईश्वरो नास्तीति सांख्याक्षेपनिरासकतयोत्तरसूत्रमवतारयति-अथ प्रधानेति। क इत्याक्षेपे, अथ वा प्रकृतिपुरुषातिरिक्तस्येश्वरस्य किं लक्षणमिति प्रश्नेन लक्षणसूत्रमुत्थापयति—अथ प्रधानेति—

**अविद्याऽऽदयः क्लेशाः, कुशलाकुशलानि कर्माणि, तत्फलं विपाकः, तदनुगुणा वासना आशयः,**

**ते च मनसि वर्त्तमानाः पुरुषे व्यपदिश्यन्ते, स हि तत्फलस्य भोक्तेति,**

भास्वती।

ऽऽदयः पञ्च क्लेशाः = दुःखकराणि विपर्ययज्ञानानि, कर्माणि = धर्माधर्मसंस्काररूपाणि, वासनाः = आशयाः, तद् यथा—जातिवासना—आयुर्वासना—सुखदुःखवासना—चेति, तत्र मनसि वर्त्तमानाः पुरुषे साक्षिणि व्यपदिश्यन्ते = उपचर्यन्ते, स हि पुरुषस्तत्फलस्य = उपचार-

तत्त्ववैशारदी।

शेष ईश्वरः," अविद्याऽऽदयः क्लेशाः = क्लिश्नन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारद्वारेणेति, कुशलाकुशलानि = धर्माधर्मास्तेषाञ्च कर्मजत्वाद् उपचारात् कर्मत्वम्, विपाकाः = जात्यायुर्भोगाः, तदनुगुणाः = विपाकानुगुणा वासनाः; ताश्चित्तभूमावाशेरत इत्याशयाः, न हि करभजातिनिर्वर्त्तकं कर्म प्राग्भवीयकरभभोगभावितां भावनां न यावदभिव्यनक्ति तावत्करभोचिताय भोगाय कल्पते, तस्माद् भवति करभजात्यनुभवजन्मा भावना करभविपाकानुगुणेति, नन्वमी क्लेशादयो बुद्धिधर्मा न कथञ्चिदपि पुरुषं परामृशन्ति, तस्मात्पुरुषग्रहणादेव तदपरामर्शसिद्धेः कृतं क्लेशकर्मेत्यादिनेत्यत आह- "ते" इति । ते च मनसि वर्त्तमानाः सांसारिके पुरुषे व्यपदिश्यन्ते, कस्मात्? स हि तत्फलस्य भोक्ता = चेतयितेति, तस्मात्पुरुष-

पातञ्जलरहस्यम्।

क्लेशादिचतुष्टयात्यन्ताभाववान्, प्रहारेण = संसर्गेण, जातिः = जन्म मनुष्यादियोनिसम्बन्धः, आयुः = शतवर्षादि 'शतायुर्वै पुरुष इति श्रुतेः,' भोगः = सुखदुःखसाक्षात्कारः, 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति' श्रुतिमाश्रित्य, तत्रान्वयव्यतिरेकौ मानमाह-न हि करभेति । करभः = कण्टकाशनः, निर्वर्तकम् = जनकं, भावनां = संस्कारं, न परामृशन्ति = न स्पृशन्ति 'असङ्गो ह्ययं पुरुष इति श्रुतेश्च, कृतं = व्यर्थं, 'तयोरन्यः पिप्पलं स्वाद्वत्तीति' श्रुतिमाश्रित्याह—भोक्तेति, 'अनश्नन्नन्यो अभिचाकशीतीति श्रुतिमाश्रित्याह—

वार्त्तिकम्।

"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" पुरुषविशेष एवेश्वरः, तथा चेश्वरस्य पुरुषेऽन्तर्भावस्तदुपाधेः प्रधान इति भावः, यच्चोक्तं सिद्धजीवमादायेश्वरप्रतिपादकश्रुतिस्मृत्योरुपपत्तिरिति तन्निराकरणार्थमपरामृष्ट इत्यन्तं विशेषणम्, क्लेशाद्यपरामृष्टतया श्रुतिस्मृतिगीतईश्वरो न सिद्धजीवो भवितुमर्हति कादाचित्कक्लेशादिसंबन्धादित्यर्थः, अपरामृष्टान्तं विशेषणंव्याचष्टे—अविद्याऽऽदय इति । अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशा इति वक्ष्यति, कुशलाकुशलसाधनत्वात् कुशलाकुशलानि धर्माधर्माः तयोः क्लेशकर्मणोः फलं विपाकः स च जात्यायुर्भोगाः, भोगश्चात्र विषयसत्त्वादिभिश्चित्तपोषणं शब्दाद्याकारवृत्तिर्वा न तु सुखाद्यनुभवः, ते च मनसि वर्त्तमाना इति वक्ष्यमाणात्स हि तत्फलस्य भोक्तेत्यनेन विपाकफलयोः सुखदुःखयोर्भोगस्य पुरुषे वक्ष्यमाणत्वाच्चेति, चित्तभूमौ शेरत इत्याशया वासनास्ताश्च विपाकानुगुणाः तत्कारणानि, यतस्तत्तच्छरीरसाध्यभोगवासनामुद्बोध्यैव कर्मणा विपाको दीयत इति, ननु क्लेशाद्यपरामृष्टत्वं सर्वपुरुषसाधारणमित्याशङ्क्याह—ते च मनसीति । एकस्यैवान्तःकरणस्य वृत्तिभेदाच्चातुर्विध्यमित्याशयेन पूर्वं चेतस्युक्त्वा विद्याऽत्र मनस्युक्तेति बोध्यम्, तथा चायमर्थः-ते चाविद्याऽऽदयो यद्यपि मनस्येव सन्ति न कुत्रापि पुरुषे तथाऽपि पुरुषे सांसारिके व्यपदिश्यन्त इति, व्यपदेशबीजं च स्वामित्वापरनामकं भोक्तृत्वमित्याह-स हीति । हि यस्मात् स पुरुषस्तस्य क्लेशादेः फलस्य सुखदुःखयोः स्वस्मिन्प्रतिबिम्बितयोर्भोक्ता भवतीत्यर्थः, स्वा-

**यथा जयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्यते, यो ह्यनेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः, कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः**

भास्वती ।

फलस्य वृत्तिरोधरूपस्य भोक्ता बोद्धा, दृष्टान्तमाह–यथेति । यो हीति । अनेन भोगेन = क्लेशमूलकर्मफलस्य भोक्तृभावेनेत्यर्थः, योऽपरामृष्टः = अव्यपदिष्टः, किन्तु—विद्यामूलनिर्माणचित्तेन कदा चित् परामृष्टः; स पुरुषविशेष ईश्वरः, तस्य विशेषत्वं विवृणोति—कैवल्यमिति । त्रीणि बन्धनानि = प्राकृतिकं, वैकृतिकं, दाक्षिणञ्चेति, प्राकृतिकंबन्धनं प्रकृतिलयानाम्, वैकृतिकं विदेहलयानामन्येषाञ्च भूततन्मात्रादिध्यायिनाम्, दाक्षिणबन्धनं दक्षिणादिनिष्पाद्यकर्मकृताम्, पूर्वा बन्धकोटिः = पूर्वबन्धनरूपो मोक्षप्रान्तः, उत्तरा बन्धकोटिः सम्भाव्यते = सम्भवतीति ज्ञायते, स हि सदैव मुक्तः सदैवेश्वरः, अत्रायंन्यायः–वस्तूनां जातिरनादिर्धर्मिणां नित्यत्वात्, तस्माद् बद्धजातीयकं तथा मुक्तजातीयकं चित्तमनादि, यस्तु—अनादिमुक्तचित्तेन व्यपदिष्टः पुरुषविशेषः स ईश्वरः, अतः स सदैव मुक्तः सदैवेश्वर इति, नन्वनेनासंख्याता एव नित्यमुक्तपुरुषाः सम्भाव्यन्त इति, सत्यं, किन्तु—तत्र सर्वेषां द्रष्टॄणां तथा मुक्तचित्तानामेकरूपत्वप्रसङ्गाद् नास्ति पृथग्

तत्त्ववैशारदी ।

त्वाद् ईश्वरस्यापि तत्सम्बन्धः प्राप्त इति तत्प्रतिषेध उपपद्यत इत्याह—"यः" इति । योह्यनेन = बुद्धिस्थेनापि पुरुषमात्रसाधारणेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः, विशिष्यतइति विशेषः पुरुषान्तराद् व्यवच्छिद्यते, विशेषपदव्याख्यत्वं दर्शयितुकामः परिचोदनापूर्वं परि-

पातञ्जलरहस्यम् ।

यो ह्यनेनेति । परिचोदना = पूर्वपक्षः, 'बन्धत्रयात्यन्ताभावाधिकरणस्वरूपं विशेषपदसूचितमी-

वार्त्तिकम् ।

मित्यसम्बन्धेनाधारत्वे दृष्टान्तमाह—यथेति । तदा व राजा जयी पुरुषो धनीत्यादिवदेव पुरुषः क्लेशादिमान् सुखी दुःखी मूढ इत्यादिविद्व्यहार इति भावः, समवायसम्बन्धेन पुरुषे सुखादिमत्त्वबुद्धिरेवाविद्येति, एवं च सत्त्वाख्येन क्लेशसंपर्केण शून्यता नान्यपुरुषेऽस्ति किंत्वीश्वर एवेत्याह—यो ह्यनेनेति । अनेन भोगेन क्लेशादिफलभोगेनेत्यर्थः, अत्रानेनेति विशेषणादीश्वरस्य भोगोऽस्तीत्यवधार्यते, सत्त्वविवेकग्रहणे सत्येव स्वोपाधिसुखसाक्षितामात्रं चिदवसानो भोग इति सांख्यसूत्रात्, तथा च—

"उपद्रष्टाऽनुमन्ता च भर्त्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥"

इति गीताद्युक्तपरमेश्वरे भोग उपपद्यत इति, अत एवेश्वरस्यापि भोगप्रतिपादिका "ऋतंपिबन्ताविति श्रुतिः यथाश्रुतैवोपपद्यते, अनश्नन्नन्यो अभिचाकशीतीति श्रुतिस्तु मुख्यमेव भोगं प्रतिषेधति मुख्यभोगश्चाभिमानपूर्वकः सुखाद्यनुभवः, लोकैस्तत्रैव भोगव्यवहारात् "सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः" इत्यागामिसूत्रेण तस्यैव लक्षयितव्यत्वात्, अथ वा जीवभोग्यदुःखादिभोक्तृत्वमेवानश्नन्निति वाक्येन प्रतिषिध्यते, एकशरीरस्थत्वेन तद्भोगस्यैव प्रसक्तत्वादिति जीवन्मुक्तस्यापीश्वरसदृश एव भोगो दुःखभोगमात्रमीश्वराद्भिलणमिति, अपरामृष्टत्वं परामर्षशून्यता, तत्र परामर्षशब्दफलं प्रतिपादयितुं शङ्कते—कैवल्यमिति । यदि क्लेशादिशून्यः ईश्वरः श्रुतिस्मृतिभ्य एष्टव्यस्तर्हि कैवल्यं ज्ञानं प्राप्ता बहवो हिरण्यगर्भादयः केवलिनः केवलानां जीवन्मुक्तानामध्यक्षाः क्लेशादिशून्याः सन्ति; त एवेश्वरतयाश्रुत्यर्थाः सन्त्विति पूर्वपक्षिणो भावः, तथा च सांख्यसूत्रं 'मुक्तात्मनः प्रशंसा सिद्धस्य वेति,"

**केवलिनः, ते हि त्रीणि बन्धनानि छित्त्वा कैवल्यं प्राप्ताः, ईश्वरस्य च तत्सम्बन्धो न भूतो न भावी, यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते,नैवमीश्वरस्य,यथा वा प्रकृतिलीनस्योत्तरा बन्धकोटिः सम्भाव्यते नैवमीश्वरस्य, स तु**

भास्वती ।

व्यपदेशोपायः, अतो मोक्षतत्त्वरूपो नित्यमुक्त ईश्वर एकस्वरूपेणोपासनीय एवेति न्याय्या

तत्त्ववैशारदी ।

हरति—"कैवल्यं प्राप्तास्तर्हि इति, प्रकृतलयानां प्राकृतो बन्धः, वैकारिको विदेहानाम्, दक्षिणाबन्धो दिव्यादिव्यविषयभाजाम्, तान्यमूनि त्रीणि बन्धनानि, प्रकृतिभावनासंस्कृतमनसो हि देहपातानन्तरमेव प्रकृतिलयतामापन्ना इतीतरेषां पूर्वा बन्धकोटिः प्रज्ञायते तेनोत्तरकोटिविधानमात्रम् इह तु पूर्वापरकोटिनिषेध इति, संक्षिप्य विशेषं दर्शयति—"स तु सदैव मुक्तः सदैवेश्वर" इति, ज्ञानक्रियाशक्तिसम्पद् = ऐश्वर्यम्, अत्र पृच्छति—

पातञ्जलरहस्यम् ।

श्वरतत्त्वं वक्तुं तदधिकरणान् जीवानाह—प्रकृतिलयानामिति । 'ते धूममभिसम्भवन्ति ते अर्चिषमभिसम्भवन्ति जायस्व म्रियस्वेत्यादिपदैः सूचितः श्रुतिसिद्धो बन्धो दक्षिणाबन्धः, प्रज्ञायते = प्रसिद्धाऽऽद्या, 'मुक्तानामुत्तरा कोटिर्नास्तीति भाष्ये प्रसिद्धमिति हृदयम्, इह तु = ईश्वरे,

"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"ति

स्वाभाविकी = प्रवाहानादिरित्यर्थः,

वार्त्तिकम् ।

"आद्यस्तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात् ।
कृच्छक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम्" ॥

इतिपञ्चशिखाचार्यधृतवाक्ये च ज्ञानस्यापि कैवल्यमोक्षादिशब्दार्थत्वात् हिरण्यगर्भादयोऽपि कैवल्यमुक्त्यादिमन्त उच्यन्ते, कैवलिन इतिपाठे केवलस्यायमिति कैवलोऽत्र द्वितीयमोक्षो रागादिक्लेशशून्यतेति । परिहरति—ते हीति । ते हि हिरण्यगर्भादयः प्राकृतिकानि बन्धनानि पूर्वस्थितानि छित्त्वैव मुक्ताः न तु क्लेशादिपरामर्शशून्याः, ईश्वरस्तु सर्वदैव क्लेशात्मकबन्धनत्रयशून्यतया श्रुत्यादिसिद्ध इत्यर्थः, ईश्वरस्य सदा क्लेशादिशून्यत्वे मानं—

"तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः ।
कर्मात्मा पुरुषो योऽसौ मोक्षबन्धैः स युज्यते" ॥

इत्यादिवाक्यशतानि, निर्गुणो = गुणाभिमानशून्यः गीतायां गुणाभिमानशून्यतयैव गुणातीतत्ववचनात्,

"परस्तु निर्गुणः प्रोक्तो ह्यहंकारयुतोऽपर"–

इति नारदीयादिष्वपि ईश्वरजीवयोरिच्छादिसाम्येऽपि तदनभिमानाभिमानाभ्यां निर्गुणसगुणत्वसिद्धेश्च, बन्धनत्रयं चोक्तं सांख्ये–प्रकृतिलयानां प्राकृतिको बन्धः, विदेहानां वैकारिको-बन्धः, दिव्यादिव्यविषयभाजां दक्षिणाबन्ध—इति, तत्राद्योऽष्टप्रकृतिष्वभिमानरूपः, द्वितीयः शब्दादिविषयरागः, तृतीयो गृहस्थानां–कर्मदक्षिणादानाध्ययनादिष्वनुरागः, तथा चोक्तम्—

"प्रकृतेर्वेत बन्धेन तथा वैकारिकेण च ।
दक्षिणाभिस्तृतीयेन बद्धो जन्तुर्विवर्त्तते" इति,

ईश्वरस्य क्षुद्रेश्वरेभ्यो वैलक्षण्यं बन्धापरामर्शरूपं विवृणोति—यथा मुक्तस्येति । निरस्ताविद्यस्येत्यर्थः, प्रज्ञायते निश्चीयते संभाव्यत इति प्रकृतिलीनस्याभिमानसंबन्धेन पश्चाद्बन्धसंभावनेति भावः, सदैव मुक्त इति । दुःखशून्य इत्यर्थः, सदैवेश्वर इति । सदैवाप्रतिहतेच्छया युक्तः, अत्र केचित्–सदैवेश्वर ऐश्वरशक्तिमानित्यर्थः, न हि वेदान्तिभिरिव प्रलये योगैरपीश्वरस्य

सदैव मुक्तः सदैवेश्वर इति, योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य

भास्वती।

विचारणा, य इति। प्रकृष्टसत्त्वोपादानात्=प्रकृष्टं सार्वज्ञ्ययुक्तं सत्त्वं-बुद्धिः, तस्यो-

तत्त्ववैशारदी।

"योऽसौ" इति। ज्ञानक्रिये हि न चिच्छक्तेरपरिणामिन्याः सम्भवत इति रजस्तमोरहितविशुद्धचित्तसत्त्वाश्रये वक्तव्ये, न चेश्वरस्य सदा मुक्तस्याविद्याप्रभवचित्तसत्त्वसमुत्कर्षेण सह स्वस्वामिभावसम्बन्धः सम्भवतीत्यत उक्तं-"प्रकृष्टसत्त्वोपादानाद्" इति। नेश्वरस्य पृथग्जनस्येवाविद्यानिबन्धनश्चित्तसत्त्वेन स्वस्वामिभावः, किन्तु तापत्रयपरीतान् प्रेत्यभावमहार्ण-

पातञ्जलरहस्यम्।

"स ईशो यद्वशे माया स जीवो यस्तयाऽर्दित" इति

स्मृतिमाश्रित्याह—प्रकृष्टसत्त्वेति, प्रेत्यभावः=संसारः, उपदेशस्य स्वाभाविकत्वं-

वार्त्तिकम्।

नित्यमिच्छाऽऽदिकमभ्युगन्तुं शक्यते प्रकृतेर्गुणसाम्यरूपत्वाभ्युपगमविरोधाद् इत्येकदेशिनः, तन्न—यतो—

'नैवाहस्तस्य न निशा नित्यस्य परमात्मन'-

इत्यादिवाक्यशतैरीश्वरसत्त्वस्य नित्यमेव ज्ञानेच्छाऽऽदिकं यथाश्रुतभाष्यानुरोधाच्च विसदृशपरिणामाभावरूपाच्च साम्यावस्थाऽनिच्छेत्यादिमन्नित्यसत्त्वव्यक्तिसत्त्वेऽप्युपपद्यत इति स्वकार्याकरणमेव च तस्य द्विपरार्द्धान्तलय—इति, किं बहुना 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किं चन मिषदि'ति श्रुत्या प्राग्लये परमात्मनोऽर्थद्रष्टृत्वं सिद्धमत ईश्वरोपाधेर्ज्ञानलक्षणा वृत्तिः प्रलयेऽप्यस्ति न चापाधिवृत्तिं विनवेशस्य ज्ञातृत्वमेष्टव्यं, बाधकं विना दृष्टानुसारत्यागानौचित्यात्, "ज्ञानशक्तिरहं परे"ति प्रकृत्यभिमानिदेवतावाक्यविरोधाच्च, किं "चैतत्तमो वा इदमेकमास तत्परे स्यात् तत्परेणेरितं विषयत्वं प्रायती"त्यादिश्रुतिष्वेव परमेश्वरप्रयत्नेनैव गुणवैषम्यं श्रूयते, तथा—

"प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ"॥

इत्यादिना प्रकृतेर्वैषम्यहेतुः क्षोभोऽपीश्वरेच्छात एव, स्मर्यते च-"अतः साम्यावस्थायामप्यगत्येश्वरोपाधेर्ज्ञानादि स्वीकार्यमि"ति, अपि च-एवं सति प्रलये स्वसंकल्पेन स्वोपाधिं स्वस्माद्वियोज्येश्वरः शेते पूर्वसर्गीयसंकल्पसंस्काराभ्यां च सर्गादावुपाधिरीश्वरेण सह स्वयं संयुज्यत इत्यभ्युपेयं, तच्चायुक्तं "तस्य हेतुरविद्ये"त्यागामिसूत्रेणाविद्याया बुद्धिपुरुषसंयोगहेतुत्ववचनेनेश्वरस्याप्यविद्धत्त्वापत्तेः, न चाहार्यज्ञानरूपोऽविद्यया संयोगः स्यात् सा चाविद्या मायेति न तस्याः क्लेशत्वमिति वाच्यम्? संयोगहेत्वविद्याया विवेकख्यातिनाश्यत्वबोधकसूत्रविरोधात्, किं च सूत्रकारेण

"क्लेशकर्मविपाकाद्यैर्वासनाभिस्तथैव च।
अपरामृष्टमेवाह पुरुषं हीश्वरं श्रुतिः"॥

इति योगियाज्ञवल्क्यादिभिश्चेश्वरोपाधौ संस्कारस्य प्रतिषिद्धत्वात्, तदभ्युपगमोऽपि तेषामपसिद्धान्त एव, तथाऽऽगामिसूत्रप्रतिषिद्धं कालावच्छिन्नत्वं चेशे स्याद् उपाधिवृत्त्यभावेनैव चेतनस्य कालानवच्छिन्नत्वाद् इत्यादीन्यत्र दूषणानि सन्तिः तस्मात् प्रलये निरुद्धोऽप्युपाधिः पूर्वसर्गीयसंकल्पवासनाभ्यां स्वयं व्युत्थितो भवतीति यच्छास्त्रं तद्दैनंदिनप्रलये योगनिद्रया शयानस्य स्वयंभुव उपाधिपरमेव न परमेश्वरोपाधिपरमिति दिक्, शास्त्रप्रामाण्यसिद्धौ शास्त्राद् यथोक्तेश्वरसिद्धिरीश्वरसिद्धौ चैतत्प्रत्यक्षपूर्वकतया शास्त्रप्रामाण्यसिद्धिरित्यन्योन्याश्रयं मन्वानो नास्तिक ईश्वरे प्रमाणमस्ति न वेति पृच्छति—योऽसाविति। सर्वपुरुषाणां-

शाश्वतिक उत्कर्षः स किं सनिमित्त आहोस्विन्निर्निमित्त इति ?

भास्वती ।

पादानात् = तद्रूपादुपाधेर्योगाद् , ईश्वरस्य योऽसौ शाश्वतिकः = नित्यः, उत्कर्षः स किं- सनिमित्तः = सप्रमाणकः, आहोस्विद् निर्निमित्तः ? इति, प्रत्युत्तरमाह—तस्येति । ईश्वरस्य सत्त्वोत्कर्षस्य शास्त्रम् = मोक्षविद्यैव, निमित्तम् = प्रमाणम् , मोक्षविद्या

तत्त्ववैशारदी ।

वाज्जन्तूनुद्धरिष्यामि ज्ञानधर्मोपदेशेन, न च ज्ञानक्रियासामर्थ्यातिशयसम्पत्तिमन्तरेण तदुपदेशः, न चेयमपहतरजस्तमोमलविशुद्धसत्त्वोपादानं बिना, इत्यालोच्य सत्त्वप्रकर्षमुपादत्ते भगवान् अपरामृष्टोऽप्यविद्ययाऽविद्याभिमानीव, अविद्यायास्तत्त्वमविद्वान् भवति, न पुनरविद्यां ह्यविद्यात्वेन सेवमानः, न खलु शैलूषो रामत्वमारोप्य तास्ताश्चेष्टा दर्शयन् भ्रान्तो भवति, तदिदमाहार्य्यमस्य रूपं न तात्त्विकमिति, स्यादेतद्-उद्दिधीर्षया भगवता सत्त्वमुपादेयं तदुपादानेन च तदुद्दिधीर्षाः अस्या अपि प्राकृतत्वात्तथा चान्योन्यसंश्रय इत्यत उक्तं— "शाश्वतिक" इति, भवेदेतदेवं यदीदंप्रथमता सर्गस्य भवेदनादौ तु सर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नसंजिहीर्षाऽवधिसमये पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवान् जगत्संजहार, तदा चेश्वरचित्तसत्त्वं प्रणिधानवासितं प्रधानसाम्यमुपगतमपि परिपूर्णे महाप्रलयावधौ प्रणिधानवासनावशात्तथैवेश्वरचित्तं सत्त्वभावेन परिणमते, यथा चैत्रः श्वः प्रातरेवोत्थातव्यं मयेति प्रणिधाय सुप्तस्तदैवोत्तिष्ठति प्रणिधानसंस्कारात्, तस्मादनादित्वादीश्वरप्रणिधानसत्त्वोपादानयोः शाश्वतिकत्वेन नान्योन्यसंश्रयः, न चेश्वरस्य चित्तसत्त्वं महाप्रलयेऽपि प्रकृतिसाम्यं नोपैतीति वाच्यम् ? यस्य हि न कदा चिदपि प्रधानसाम्यं न तत्प्राधानिकं,- नापि चितिशक्तिरजत्वादित्यर्थान्तरमप्रामाणिकमापद्येत, तच्चायुक्तं, प्रकृतिपुरुषव्यतिरेकेणार्थान्तराभावात्, सोऽयमीदृश ईश्वरस्य शाश्वतिक उत्कर्षः किं सनिमित्तः = सप्रमाणकः, आ-

पातंजलरहस्यम् ।

निषेधति—न चेति ।

"उत्पत्तिं च विनाशञ्च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति" इति

स्मृतेर्भगवत्त्वं क्लेशापरामृष्टत्वे हेतुः, वेत्ति विद्यामविद्याञ्चेति स्मृत्या प्रतीकारज्ञानवत्त्वमविद्यासाक्षात्कारवत्त्वञ्च ध्वनितमित्याह-सेवमान इति । एवंभूतो न मुह्यतीति दृष्टान्तेन परिहरति—न खल्विति । शैलूषो = नर्तकः, आहार्यम् = ऐच्छिकं, शाश्वतिकं शश्वन्निरन्तरम् प्रवाहेन भवतीति प्रवाहोऽनादिः, अत उत्तरमेतदिति प्रबन्धः, सर्गान्तरे च समुत्पन्नं वार्तमानिकं, एतस्याः संजिहीर्षाया अवधिसमयो द्विपरार्द्धावसानकालः तस्मिन् पूर्वप्रणिधानसंस्कारविशेषस्य चित्ते सत्त्वात् प्रलयावधौ सृष्टिसमय आदावेव प्रधानमिति शेषः,

'पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः' इति श्रुतिमाश्रित्याह—यथेति । नैयायिकानां यथा भावाभावौ पदार्थौ, यथा वेदान्तिनां दृक्दृश्ये पदार्थौ, यथा च साङ्ख्यानांप्रकृतिपुरुषाविति तथा स्वमतेऽपि लाघवात् पदार्थद्वयमपि वक्तुमुपक्रमते—न चेति । तृतीयंपदार्थान्तरं नास्तीति, इदंप्रथमतेति समस्तं पदं, विकल्प्य दूषयति-नापीति । अजत्वात् परि-

वार्त्तिकम् ।

स्वत एकरूपतयैश्वर्यमुपाधिधर्म एवेति प्रतिपादयितुं प्रकृष्टसत्त्वोपादानादित्युक्तं, प्रकृष्टसत्त्वसंबन्धात्तदौपाधिकः शाश्वतिको नित्य उत्कर्ष ऐश्वर्यमित्यर्थः, ईश्वरस्य चोपाधौ प्रमाणं—

'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर'—

इति श्रुत्यादयः, 'तदैक्षत' 'सोऽकामयत' 'तदात्मानं स्वयमकुरुत' 'स एको ब्रह्मण आनन्द'-

तस्य शास्त्रं निमित्तम्, शास्त्रं पुनः किन्निमित्तं ? प्रकृष्टसत्त्वनिमित्तम्,

भास्वती।

पुनरधिगतमोक्षधर्मेण सिद्धचित्तेनैव देशनीया, श्रूयते च—

"ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ती"ति,

तत्त्ववैशारदी।

होस्विन्निर्निमित्तः = निष्प्रमाणक इति, उत्तरं—"तस्य शास्त्रं निमित्तम्" इति। श्रुतिस्मृतीतिहासपुराणानि शास्त्रम्, चोदयति—"शास्त्रं पुनः किन्निमित्तम्" इति ? प्रत्यक्षानुमानपूर्वं हि शास्त्रं, न चेश्वरस्य सत्त्वप्रकर्षे कस्य चित्प्रत्यक्षमनुमानं वाऽस्ति, न चेश्वरप्रत्यक्षप्रभवं शास्त्रमिति युक्तं, कल्पयित्वाऽपि ह्ययं स्वयं ब्रूयादात्मैश्वर्य्यप्रकाशनायेति भावः, परिहरति—"प्रकृष्टसत्त्वनिमित्तम्" इति। अयमभिसन्धिः—मन्त्रायुर्वेदेषु तावदीश्वरप्रणीतेषु प्रवृत्तिसामर्थ्यादर्थाव्यभिचारविनिश्चयात्प्रामाण्यं सिद्धं, न चौषधिभेदानां तत्तत्संयोगविशेषाणाञ्च मन्त्राणां च तत्तद्वर्णावापोद्धारेण सहस्रेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारी शक्तः कर्तुमन्वयव्यतिरेकौ, न चागमादन्वयव्यतिरेकौ ताभ्याञ्चागमस्तत्सन्तानयोरनादित्वादिति प्रतिपादयितुं युक्तम्, महाप्रलये तत्सत्त्वादनयोर्विच्छेदात्, न च तद्भावे प्रमाणाभावः, अभिन्नं—प्रधानविकारो हि जगदिति प्रतिपादयिष्यते, सदृशपरिणामस्य विसदृशपरिणामता दृष्टा यथा क्षीरेक्षुरसादेर्दधिगुडादिरूपं, विसदृशपरिणामस्य पूर्वसदृशपरिणामता च दृष्टा, तदिह प्रधानेनापि महदहङ्कारादिरूपविसदृशपरिणामेन सता भाव्यं कदा चित्सदृशपरिणामेनापि, सदृशपरिणामश्चास्य साम्यावस्था, स च महाप्रलयः, तस्मान्मन्त्रायुर्वेदप्रणयनात्तावद् भगवतो-

पातञ्जलरहस्यम्।

णामित्वाच्च, नाप्यर्थान्तरमप्रामाणिकत्वाद्गौरवाच्चेत्याह-अयुक्तमित्यादिना, निमित्तं = ज्ञापकमित्यर्थः, प्रत्यक्षानुमेति। शक्तिमच्छब्दत्वादिति शेषः, सत्त्वप्रकर्षे चेति। सत्त्वे चित्ते प्रकर्षे तद्धर्मे चेति। कस्य चित्प्राणिमात्रस्य 'नास्तीतिशेषः, शास्त्रस्येश्वरप्रत्यक्षप्रभवत्वे तु प्रतारकत्वमाशङ्कते—न चेत्यादि—भाव इत्यन्तेन, दृष्टान्वयव्यतिरेकावाश्रित्याह—परिहरतीति। प्रवृत्तिसामर्थ्यात् = फलसंवादाद् न प्रतारकत्वमित्यर्थः,

अत्र साङ्ख्यः शङ्कते—कृतमीश्वरेण जीवादेवादृष्टसहकृतात्सेत्स्यत्येतत्; तत्राह—न चेति। अन्वयव्यतिरेकाविति। ताभ्यां हि दधिविषयोर्ज्वरमरणकारित्वेऽपि गुडमन्त्रसंयोगेन यथा बलपुष्टिकारित्वं विरुद्धं दृश्यतेऽतो न लौकिकप्रमाणव्यवहारिभिः तत्सिद्धिः कर्तुं शक्येत्यर्थः, तत्त्वीश्वरसाध्यम्, अत एवोक्तम्—

"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदि"ति,

अत एव सर्वज्ञेश्वरसिद्धिः, अन्योन्याश्रयोऽपि नास्तीत्याह—महाप्रलयेति। चस्त्वर्थे पूर्वपक्षनुत्, तद्भावे तयोर्विच्छेदसद्भावे, तथा हि—अभिन्नमित्यारभ्य महाप्रलय इत्यन्तं प्रमाणं,-सदृशपरिणामता = मधुररसतेत्यर्थः, एतद्वत् सृष्टिसमये महदहङ्कारादिरूपविसदृशपरिणामेन सता प्रधानेन कदा चित् सृष्टिसमये महदहङ्कारादिरूपविसदृशपरिणामेन भाव्यम् तरङ्गितजलवदित्यन्वयः, तदेव निगमयति—सदृशपरिणामेति।

'रजतस्तमश्चाभिभूय सत्वं भवति भारतेति'

वार्त्तिकम्।

इति श्रुत्याद्युक्तस्यानन्दान्तस्य ब्रह्मणि स्वतोऽनुपपत्तिश्च, "साक्षी चेता केवलो निर्गुणश्चे"त्यादिश्रुतिभिरीश्वरस्य निर्गुणत्वचिन्मात्रत्वसिद्धेरिति, सनिमित्तक सप्रमाणकः, उत्तरं—तस्य शास्त्रं निमित्तमिति, शास्त्रं श्रुतिस्मृतीतिहासपुराणानि, पुनः पृच्छति—शास्त्रं पुनरिति। शास्त्रस्यैव प्रामाण्यं कुत इत्यर्थः, उत्तरं-प्रकृष्टसत्त्वनिमित्तमिति। ईश्वरस्योपाधिर्यत्प्रकृष्टसत्त्वं—तत्प्रत्यक्षरूपवाक्यार्थज्ञानजन्यत्वाच्छास्त्रस्य प्रामाण्यमित्यर्थः, नन्वेवमन्योन्याश्रयः शास्त्रप्रा-

**एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्त्तमानयोरनादिः सम्बन्धः, एतस्मादेतद् भवति सदैवेश्वरः सदव मुक्त इति, तच्च तस्यैश्वर्य्यं साम्यातिशयविनिर्मुक्तं, न तावदैश्वर्य्यान्तरेण तदतिशय्यते, यदेवातिशयि स्यात् तदेव**

भास्वती।

एतयोरिति । एवमनादिप्रवर्त्तिन्यां सर्गपरम्परायामीश्वरसत्ते = ईश्वरचित्ते; वर्त्तमानयोः शास्त्रोत्कर्षयोः = शासनीयमोक्षविद्यायास्तथा विवेकरूपस्योत्कर्षस्य चेति द्वयोरनादिसम्बन्धः, विनिगमयति-एतस्मादिति । तच्चेति । अस्य प्रयोगो यथा—अस्ति सा-

तत्त्ववैशारदी।

विगलितरजस्तमोमलावरणतया परितः प्रद्योतमानं बुद्धिसत्त्वमास्थेयम्, तथा चाभ्युदयनिःश्रेयसोपदेशपरोऽपि वेदराशिरीश्वरप्रणीतस्तद्बुद्धिसत्त्वप्रकर्षादेव भवितुमर्हति, न च सत्त्वोत्कर्षे रजस्तमःप्रभवौ विभ्रमविप्रलम्भौ सम्भवतस्तत्सिद्धं प्रकृष्टसत्त्वनिमित्तं शास्त्रमिति, स्यादेतत्—प्रकर्षकार्य्यतया प्रकर्षं बोधयच्छास्त्रं शेषवदनुमानं भवेन्न त्वागम इत्यत आह-"एतयोः" इति । न कार्य्यत्वेन बोधयत्यपि त्वनादिवाच्यवाचकभावसम्बन्धेन बोधयतीत्यर्थः, ईश्वरस्य हि बुद्धिसत्त्वे प्रकर्षो वर्त्तते शास्त्रमपि तद्वाचकत्वेन तत्र वर्त्तत इति, उपसंहरति—"एतस्माद्" इति । एतस्माद् = ईश्वरबुद्धिसत्त्वप्रकर्षवाचकाच्छास्त्राद्, एतद् भवति = ज्ञायते विषयेण विषयिणो लक्षणात्, सदैवेश्वरः सदेव मुक्त इति, तदेवं पुरुषान्तराद् व्यवच्छिद्येश्वरान्तरादपि व्यवच्छिनत्ति-"तच्च तस्य" इति । अतिशयविनिर्मुक्तिमाह—"न तावद्" इति । कुतः "यदेव" इति । कस्मात्सर्वातिशयविनिर्मुक्तं तदैश्वर्य्यमित्यत आह -"तस्माद् यत्र" इति । अतिशयनिष्ठामप्राप्तानामौपचारिकमैश्वर्य्यमित्यर्थः, साम्यविनिर्मुक्तिमाह—"न च तत्समा-

पातञ्जलरहस्यम्।

भगवद्वाक्यमाश्रित्याह—तस्मादित्यारभ्य शास्त्रमित्यन्तेन, तत् = तस्मादित्यर्थं, विभ्रमविप्रलम्भौ न सम्भवत इत्युक्त्या पूर्वोक्तमैश्वर्यप्रकटनमितीश्वरगतचोद्यं निरस्तं, शास्त्रमनुमानेनान्यथासिद्धमिति शङ्कते—स्यादेतदिति । शेषवदिति व्यतिरेकी, तद्यथा-प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् शिष्यमाणे संप्रत्यय इति, तथा हि-शब्दो व्योमगुणः विशेषगुणत्वे सति भूम्याद्यष्टस्वसम्भाव्यमानत्वात्, अभावचतुष्टयेऽप्यप्रसक्तेः, यन्नैवं तन्नैवं यथा गन्धः, एवं संसारिष्वविद्यमानः अनुमानसिद्ध उत्कर्ष ईश्वराश्रितः स्यादिति, तदुदाहृत्य ते दूषयति—एतयोरिति । अभावे चाप्रसक्तो भवतीति सत्तावाचित्वेऽपि ज्ञाने लक्षणातो ज्ञायत इति, तत्र हेतुमाह-विषयेति । यः सर्वज्ञः सर्वविदिति'शास्त्रादित्यन्वयः, न तत्समश्चाभ्यधिकश्च दृश्यत इति श्रुतिमाश्रित्याह—न चेति । वस्तुनि विकल्पासहत्वमाश्रित्याह—नवेति । इतिकृत्वा कार्यानुपप-

वार्त्तिकम्।

माणये सिद्धे प्रकृष्टसत्त्वसिद्धिः तत्सिद्धौ च तन्मूलकतया शास्त्रप्रामाण्यसिद्धिरिति चन्न-मन्त्रायुर्वेदप्रामाण्यत ईश्वरसिद्धेः प्रागेव शास्त्रस्य प्रामाण्यसिद्धेः प्रकृष्टसत्त्वस्य च शास्त्रप्रामाण्यनिर्वाहकतामात्रमत्रोक्तमिति, तथा च न्यायसूत्रं 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्य'मिति. एतयोरिति । विषयत्वेन समवायसम्बन्धेन च परमेश्वरसत्त्वे वर्त्तमानयोरेतयोः शास्त्रोत्कर्षयोरनादिर्निमित्तनैमित्तिकभावः संबन्धः, शास्त्रं नैमित्तिकं सत्त्वोत्कर्षश्च निमित्तं कारणत्वादित्यर्थः, ततः किमित्याकाङ्क्षायामाह—तस्मादिति । सदैवेश्वरः प्रलयेऽपि ज्ञानेच्छाकृतिमान् सदैव मुक्तोऽनादिकाले क्लेशादिमुक्तश्चेत्यर्थः, ईश्वरस्याद्वितीयत्वमपि प्रतिपादयति—तच्चेति । नास्ति साम्यमतिशयश्च यस्मात् तादृशमित्यर्थः, अतिशयनिर्मुक्तौ हेतुमाह—न तावदिति । उक्ते हेतुमाह—यदेवेति । यस्माद्धेतोर्यदेवातिशयि निरतिशयं तदेव तत ऐश्वर्यं स्यादिति योजना, सातिशयत्वे सत्यैश्वर्यमेव न भवति; अप्रतिहतेच्छत्वस्यैवाभावात्, अतो यदेव निरतिशयि

तत्स्यात्, तस्माद् यत्र काष्ठाप्राप्तिरैश्वर्य्यस्य स ईश्वरः, न च तत्समानमैश्वर्य्यमस्ति, कस्माद् ? द्वयोस्तुल्ययोरेकस्मिन् युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्त्वित्येकस्य प्रसिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तं-द्वयोश्च तुल्ययोर्युगपत्कामितार्थप्राप्तिर्नास्त्यर्थस्य विरुद्धत्वात्, तस्माद् यस्य साम्यातिशयविनिर्मुक्तमैश्वर्य्यं स ईश्वरः स च पुरुषविशेष इति ॥ २४ ॥

भास्वती।

तिशयमैश्वर्य सातिशयत्वदर्शनादैश्वर्यस्य, यस्मिन् पुरुषे सातिशयस्यैश्वर्यस्य काष्ठाप्राप्तिः स एवेश्वरः साम्यातिशयनिर्मुक्तैश्वर्यवान्, तत्समानं तदधिकञ्चैश्वर्यं नास्ति कस्य चित्, न चेति। एतदुक्तं भवति—सन्ति बहव ऐश्वर्यवन्तः पुरुषाः, ईश्वरोऽपि तादृशः पुरुषः, किन्तु—तत्तुल्ये तदधिके वा ऐश्वर्येऽविद्यमाने तस्येश्वरत्वसिद्धिर्न स्याद्, अतो निरतिशयत्वात् साम्यातिशयशून्यं यस्यैश्वर्यं स पुरुषविशेष एवेश्वरपदवाच्य इति वयं ब्रूमः, प्राकाम्यविघातादूनत्वम् = प्राकाम्यमहतेच्छता तस्यविघातादवरत्वम् ॥ २४ ॥

तत्त्ववैशारदी।

त्वम्" इति। प्राकाम्यम् = अविहतेच्छता तद्विघातादूनत्वम्, अनूनत्वे वा द्वयोरपि प्राकाम्यविघातः कार्य्यानुत्पत्तेः, उत्पत्तौ वा विरुद्धधर्मसमालिङ्गितमेकदा कार्य्यमुपलभ्येतेत्याशयेनाह—"द्वयोश्च" इति। अविरुद्धाभिप्रायत्वे च प्रत्येकमीश्वरत्वे कृतमन्यैरेकेनैवेशनायाः कृतत्वात्, संभूय कारित्वे वा न कश्चिदीश्वरः परिषद्वत्, नित्येशनायोगिनां च पर्य्यायायोगात्, कल्पनागौरवप्रसङ्गाच्चेति द्रष्टव्यम्, तस्मात् सर्वमवदातम् ॥ २४ ॥

पातञ्जलरहस्यम्।

त्तिः, विपक्षे बाधकमाह–उत्पत्ताविति। कृतं = व्यर्थं, "त्र्यवरा वा परिषदि"तिमनूक्तेर्न कस्यापि स्वातन्त्र्यं परिषदि, स्वातन्त्र्यं नामेशस्य चेतनान्तराप्रयुक्तत्वे सति सर्वप्रयोक्तृत्वं सार्वभौमवत्, खले कपोतन्यायेन युगपदुपस्थितानामेककार्यसिद्धिरित्याह—नित्येशनायोगिनामिति, द्रष्टव्यमिति। लाघवादेक एवास्त्विति भावः ॥ २४ ॥

वार्त्तिकम्।

तदेव मुख्यमैश्वर्यमित्यर्थः, उपसंहरति—तस्मादिति। ऐश्वर्येण यत्र काष्ठा प्राप्यते स ईश्वर-इत्यर्थः। साम्यनिर्मुक्तौ हेतुमाह—न चेति। द्वयोरिति। नवमल्पकालस्थायि, पुराणं दीर्घकालस्थायि एवमस्त्वित्येवंरूपेणैकस्मिन्नर्थे क्व चिद् द्वाभ्यां तुल्याभिमताभ्यां कामिते सत्येकस्य सिद्धौ संकल्पसिद्धावितरस्येच्छाविघातादूनत्वं न्यूनत्वं स्यादतो न समानानेकेश्वरसम्भव इत्यर्थः, ननूभयोः संकल्पान्नवत्वं पुराणत्वं चोभयमेव भवतु? तत्राह-द्वयोश्चेति। तस्य पुरुषविशेषत्वमुपसंहरति–स चेति। स्यादेतत्—यदि प्रकृष्टसत्त्वोपादानादेव शाश्वतिको जीवेभ्य उत्कर्षश्चेतनविशेषस्य त्वयाऽप्यभ्युपगतस्तथा जीवानामप्यपकर्षो-मलिनकार्यसत्त्वनिमित्तिक इत्यर्थादागतः, तथा च श्रुतिरपि—

'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति,

तर्हि किमर्थं पुरुषविशेष ईश्वर एवेत्युच्यते? 'एकस्यैवात्मन आकाशस्येवोपाधिभेदैर्जीवेश्वरादिविभागसंभवेन लाघवादैकात्म्यकल्पनस्यैवौचित्यात्' 'तत्त्वमसि' 'अहं ब्रह्मास्मि'

'आकाशमेकं हि यथा घटादिषु पृथग्भवेत्,
तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमानि'-

त्यादिश्रुतिस्मृतिशतैरात्मैक्यस्यैव प्रतिपादितत्वाच्च, भेदाभेदोभयश्रुतिस्मृतिमध्ये भेदनिन्दयाऽभेदज्ञानस्य मोक्षफलकत्वकथनेन चाभेदवाक्यानि त्वनुवादमात्राणीति? अत्रोच्यते-जीवेश्वरयोरंशांशिनोस्तावद्व्याप्यव्यापकभावस्वीकारेण जीवोपाधिनाऽवच्छेद्यस्यात्मप्रदेशस्ये-

वार्त्तिकम्।

घरोपाध्यवच्छिन्नत्वं वक्तव्यं, तथा च यथा ब्रह्माण्डाकाशस्य गर्दभमुखावच्छेदेन दुस्स्वरत्वं यथा वा पाय्ववच्छेदेनौपाधिकं दुर्गन्धत्वमेवं कारणसत्त्वावच्छिन्नचिदाकाशस्यापीश्वरस्य जीवोपाध्यवच्छेदेन संसारित्वं स्यात्, यदि च जीवेश्वरौ चैतन्यस्यैवांशौ न तु जीव ईश्वरस्य साक्षादंशोऽतो घटकुण्डाकाशवदेवान्योन्यव्यावृत्तौ जीवेश्वरौ स्वीक्रियेतां तदाऽपीश्वरस्य जीवान्तर्यामित्वानुपपत्तिः जीवप्रदेशेऽपीश्वरासत्त्वादिति, एवमेव सर्वजीवानामप्यैक्यं न सम्भवति; एकस्यैव चिदाकाशस्यैकान्तःकरणाद्विमुक्तेऽपि प्रदेशे संसार्यन्तःकरणान्तरसम्बन्धाद् बन्धप्रसङ्गेन श्रुत्युक्तबन्धमोक्षादिव्यवस्थाऽनुपपत्तेः, न ह्याकाशस्य भग्नघटप्रदेशेष्वन्यघटसंबन्धो न भवतीति नियमः संभवति प्रत्यक्षविरोधात् पर्यायेणैकस्मिन्नेव देशेऽनेकलिङ्गदेहसंबन्धस्य समानदेशीयभोगेनानुमानाच्च, तदेतदुक्तं—कपिलाचार्यैः "जन्मादिव्यवस्थातः पुरुषबहुत्वम्" "उपाधिभेदेऽप्येकस्य नानायोगः" "आकाशस्येव घटादिभि"रित्यादिसूत्रैरिति, ननूपाधिविशिष्टयोरेव जीवेश्वरत्वे वक्तव्ये इति चेत्? न—विकल्पासहत्वात, विशिष्टानतिरेके जीवेश्वरत्वबन्धमोक्षादिसांकर्यतादवस्थ्याद्, अतिरेके तु तदनित्यं नित्यं वा—आद्ये विनाशितया तस्य बन्धमोक्षाद्यनुपपत्तिः, अन्ते वृश्चिकभिया पलायमानस्याशीविषमुखनिपातः, यदि हि विशिष्टा अनेक आत्मानः कल्पनीयास्तर्हि स्वासूपन्यस्तगौरवं भवतामप्यापतितमधिकं तु सामान्यैकात्मकल्पनमिति, न चात्माद्वैतश्रुत्यनुरोधेन तदप्युचितमिति वाच्यम्? विशिष्टात्मभ्यः सामान्यात्मनोऽत्यन्तभेदे तत्त्वमस्याद्यभेदवाक्यानुपपत्तितादवस्थ्याद्, अत्यन्तमभेदे च विशिष्टातिरिक्तताविरोधात्, भेदाभेदे चास्मन्मतप्रवेशादिति, अस्माभिरपि हि सामान्यरूपेणाभेदो वैधर्म्यलक्षणभेदनिरासायेष्यते विशेषतस्तु भेद इति, तथा चोक्तं कपिलाचार्यैः—"नाद्वैतश्रुतिविरोधो जातिपरत्वादि"ति, एवं तावदवच्छेदवादो निरस्तः, प्रतिबिम्बवादस्त्वत्यन्तं विकल्पासहः, प्रतिबिम्बस्य तुच्छत्वे प्रतिबिम्बरूपजीवस्य ब्रह्मणा सहाभेदानुपपत्तिः सदसतोरभेदानुपपत्तेः, अतुच्छत्वे चात्मनानात्वस्य शब्दभेदेन स्वीकारापत्तिरद्वैताद्यनुपपत्तिश्चेति, अत्र च मूढानामुपर्युपरि कक्षाः ब्रह्ममीमांसाभाष्येऽस्माभिर्निराकृताः, तत्त्वमस्यादिवाक्यानि तत्र विस्तरेण व्याख्यातानि संक्षेपतस्त्वत्रापि व्याख्यास्यामः, न्यायानुग्रहेण बलवद्भिरग्निविस्फुलिङ्गादिभिः सांशदृष्टान्तैर्विरोधादाकाशसूर्यादिदृष्टान्ता अखण्डतापरा न भवन्ति किं तु ब्रह्मणि सर्वजीवानामविभागलक्षणाभेदस्य सर्वकालस्यापि तथा पारमार्थिकत्वेऽपि यत्किञ्चिदवच्छेदेन फेनबुद्बुदादिवद् अतिमङ्गुरस्य विभागलक्षणभेदस्यापारमार्थिकस्यौपाधिकत्वमात्रं प्रतिपादयन्तीति, एतेन भेदनिन्दावाक्यानि प्रकरणभेदैर्विभागवैधर्म्यादिभेदपराण्येव, यच्चोक्तमभेदज्ञानान्मोक्षः श्रूयत इति? तत् परम्परयैव न तु साक्षात्, "अथात आदेशो नेति नेति" "न ह्येतस्मादिति नेत्यन्यत् परमस्ति"

"प्रधानपुरुषव्यक्तकालानां परमं हि तत्।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम्" ॥

इत्याद्यैः श्रुतिस्मृतिवाक्यैर्विवेकाख्यभेदज्ञानस्यैव मुख्यत्वात्,

"परमात्मात्मनोर्योगः परमोऽर्थ इतीष्यते।
मिथ्यैतदन्यद् द्रव्यं हि नैति न द्रव्यतां यतः" ॥

इति विष्णुपुराणादिष्वत्यन्ताभेदस्यापि निन्दितत्वाच्चेति, किं बहुना—

"अन्यश्च राजन्! प्रवरस्तथाऽन्यः पञ्चविंशकः।
तत्स्थत्वाच्चानुपश्यन्ति एक एवेति साधवः" ॥

इति मोक्षधर्मादिष्वन्योन्याभावाविभागरूपतयैव भेदाभेदयोर्व्याख्यातत्वेन भेदवाक्याभेदवाक्ययोरर्थनिर्णये नाधुनिककुतर्कापेक्षेति दिक् ॥ २४ ॥

किञ्च—

## तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥

यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सर्वज्ञबीजम्, एतद्धि वर्धमानं यत्र निरतिशयं स सर्वज्ञः, अस्ति काष्ठाप्रा-

भास्वती ।

किञ्चेतीश्वरसिद्धावनुमानप्रमाणमाह—यत्र सातिशयं सर्वज्ञबीजं निरतिशयत्वं प्राप्तं स एवेश्वरः, यदित्यनुमितिं विवृणोति—अतीतानागतप्रत्युत्पन्नानामतीन्द्रियविषयाणां प्रत्येकं समुच्चयेन च = एकस्य बहूनाञ्चेत्यर्थः, यदिदमल्पं वा बहु वा ग्रहणं दृश्यते तत् सर्वज्ञबीजं-सार्वज्ञ्यस्यानुमापकम्, एतद् विवर्धमानं यत्र चित्ते निरतिशयत्वं प्राप्तं तच्चित्तवान् पुरुषः सर्वज्ञः, अस्य न्यायस्य प्रयोगमाह—अस्तीति । ससीमानां पदार्थानामुपादानं चेदमेयं तदा तेऽसङ्ख्याः स्युः, तादृशामेयपदार्थाः क्रमशो विवर्धमानाः सातिशया इत्युच्यन्ते, अमेयो-

तत्त्ववैशारदी ।

एवमस्य क्रियाज्ञानशक्तौ शास्त्रं प्रमाणमभिधाय ज्ञानशक्तावनुमानं प्रमाणयति-"किञ्च" इति । तत्र निरतिशयं सर्वज्ञबीजम्"—व्याचष्टे "यदिदम्" इति । बुद्धिसत्त्वावरकतमोऽपगमतारतम्येन यदिदमतीतानागतप्रत्युत्पन्नानां प्रत्येकं च समुच्चयेन च वर्त्तमानानामतीन्द्रियाणां-ग्रहणं तस्य विशेषणमल्पं बह्विति, सर्वज्ञबीजं = कारणं, कश्चित् किञ्चिदेवातीतादि गृह्णाति, कश्चिद् बहु, कश्चिद् बहुतरमिति ग्राह्यापेक्षया ग्रहणस्याल्पत्वं बहुत्वं कृतम्, एतद्धि वर्द्धमानं-यत्र निष्क्रान्तमतिशयात् स सर्वज्ञ इति, तदनेन प्रमेयमात्रं कथितम्, अत्र प्रमाणयति—"अस्ति" इति । अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्येति, साध्यनिर्देशः, निरतिशयत्वं काष्ठा, यतः परमतिशयवत्ता नास्तीति, तेन नावधिमात्रेण सिद्धसाधनम्, सातिशयत्वादिति हेतुः,

पातञ्जलरहस्यम् ।

अतीन्द्रियाणां = परमाण्वादीनां पदार्थानां ग्रहणं = साक्षात्कारः, अल्पं बह्विति क्रियाविशेषणं सर्वज्ञतायां बीजं वर्त्तत इति, एकार्थसमवायितयाऽनादिवाच्यवाचकतेति भावः, उद्रिक्तसत्त्वेन रजस्तमसोरभिभवो यथा गगने विद्यमानयोश्चन्द्रसूर्ययोरभिभाव्याभिभावकता, सर्वज्ञबीजं-तत्कारणं ज्ञापकं निरतिशयैश्वर्यमित्यर्थः, एतत् स्पष्टयति-कश्चिदित्यादिना, ग्राह्यं प्रमेयं ग्रहणस्य ज्ञानस्य, प्रमेयमात्रं कथितं-प्रमातुरीश्वरस्येत्यर्थः, एतद्विवृणोति-अत्रेत्यादि-परिमाणवदित्यन्तेन, अवधिमात्रेण सहस्रादिना, व्याप्तिं दर्शयति-यद्यदिति। कुवलयं = वदरीफलं, परिमाणवत् = वि-

वार्त्तिकम् ।

पुरुषान्तरेभ्य ईश्वरस्य निरतिशयसार्वज्ञ्यरूपविशेषान्तरं प्रतिपादयन् सूत्रमवतारयति—किं चेति--

"तत्र निरतिशयं सर्वज्ञबीजम्", बीजं = लिङ्गं सर्वज्ञानुमापकं वक्ष्यमाणं यत्सातिशयजातीयं ज्ञानं तत् तत्रेश्वरे निरतिशयमित्यर्थः, सार्वज्ञ्यबीजमिति पाठेऽप्ययमेवार्थः, यत्तु बीजं कारणं-तथा च सर्वज्ञत्वकारणं सत्त्वमिति तस्यार्थ इति कश्चित्, तन्न-ज्ञानस्य बह्वल्पतयोरेव बीजतयाऽत्र भाष्यकारैर्व्याख्यास्यमानत्वादिति, व्याचष्टे-यदिदमिति । यद् अतीतानागतवर्त्तमानानां प्रत्येकसमुच्चितानामतीन्द्रियार्थानामल्पं बहु ग्रहणं ज्ञानमिदं सर्वज्ञबीजमित्यर्थः, कथं बीजं-तदाह-तदिति। एतत्सर्वज्ञबीजं सातिशयज्ञानं विवर्धमानं यत्र निरतिशयं भवति स सर्वज्ञोऽन्यथाऽनवस्थानादिति युक्तिरुक्ता, प्रयोगमप्याह—अस्तीति । सर्वज्ञबीजं सातिशयज्ञानं क्वचित्प्राप्तकाष्ठं-सातिशयत्वात् परिमाणवदित्यर्थः, अत्र बाधकाभावे सतीति हेतुर्विशेषणीयस्तेन गुरुत्वसंस्काररूपादिषु न व्यभिचारस्तेषां चैकत्र काष्ठाप्राप्तौ कार्यमात्रेऽतिशयित्वमेव बाधकं साम-

त्तिः सर्वज्ञबीजस्य सातिशयत्वात् परिमाणवदिति, यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्वज्ञः स च पुरुषविशेष इति, सामान्यमात्रोपसंहारे कृतोपक्षयमनु-

भास्वती।

पादानकानां सातिशयानां पदार्थानां विवर्धमानता निरवधिः स्यात्, तद् निरवधिबृहत्त्वमेव निरतिशयत्वम्, यथाऽमेयदेशोपादानका वितस्तिहस्तव्यामक्रोशगव्यूतियोजनादयः परिमाणा विवर्धमाना असङ्ख्ययोजनरूपं निरतिशयबृहत्त्वं प्राप्नुयुः, ज्ञानशक्तय आक्रमेर्मानवस्थिताः सातिशया दृश्यन्ते, तासाञ्चोपादानममेयं प्रधानम्, तस्मात् सातिशयास्ता निरतिशयत्त्वं प्राप्नुयुः, यत्र चेतसि ज्ञानशक्तेर्निरतिशयत्त्वं तच्चित्तवान् सर्वज्ञपुरुष ईश्वर इत्यनुमानसिद्धिः, स च भगवान् परमेश्वरो जगद्व्यापारालिप्तो नित्यमुक्तत्वाद्, मुक्तपुरुषस्य जगत्सर्जनमनुपपन्नं शास्त्रव्याकोपकञ्च जगत्सर्जनपालनादिकार्यमक्षरब्रह्मणो-हिरण्यगर्भस्य, श्रूयते च—

"हिरण्यगर्भः समवर्त्तताग्रे विश्वस्य जातः पतिरेक आसीद्" इति,

"ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता" इति च,

न हि जगतः स्रष्टा ब्रह्मा मुक्तपुरुषः तस्यापि मुक्तिस्मरणात्, उक्तञ्च—

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति,

सर्ववित्–सर्वाधिष्ठाता–जगदन्तरात्मा ब्रह्मविष्णुरुद्रस्वरूपो भगवान् हिरण्यगर्भः, स हि पूर्वसर्गे सास्मितसमाधिसिद्धेरिह सर्गे सर्वज्ञः सर्वाधिष्ठाता भूत्वा प्रादुर्भूतः, तस्यैशसंस्कारादेव सृष्टिः प्रवर्त्तते, विवेकबलाद् यदा स परं पदं प्रविशति तदा ब्रह्माण्डस्य लय इत्येव श्रुतिस्मृतिसाङ्ख्ययोगानां समीचीनो राद्धान्तः, सामान्येति । सामा-

तत्त्ववैशारदी।

यद् यत् सातिशयं तत्तत् सर्वं निरतिशयं, यथा कुवलयामलकबिल्वेषु सातिशयं महत्त्वमात्मनि निरतिशयमिति व्याप्तिं दर्शयति—"परिमाणवद्" इति । न च गरिमादिभिर्गुणैर्व्यभिचार इति साम्प्रतम्, न खल्ववयवगरिमातिशयो गरिमाऽवयविनः किन्त्वापरमाणुभ्य आऽन्त्यावयविभ्यो यावन्तः के चन तेषां प्रत्येकवर्त्तिनो गरिम्णः समाहृत्य गरिमबर्द्धमानाभिमानः, ज्ञानं तु न प्रतिज्ञेयं समाप्यत इत्येकद्विबहुविषयतया युक्तं सातिशयमिति न व्यभिचारः, उपसंहरति—"यत्र काष्ठा" इति । ननु सन्ति बहवस्तीर्थकरा बुद्धार्हतकपिलर्षिप्रभृतयस्तत् कस्मात् त एव सर्वज्ञा न भवन्त्यस्मादनुमानादित्यत आह—"सामान्य" इति ।

पातञ्जलरहस्यम् ।

भुत्ववत्, शङ्कते–न चेति । अभिमान इत्यन्तग्रन्थस्तूत्तरम्, अवयविनि स्वारम्भकावयवगतगरिमातिरिक्तगरिमाभाव इति गरिमातिशये भ्रम इति भावः, द्रव्यत्वे सति द्रव्यान्तरानारम्भकत्वम् = अन्त्यावयवित्वं, समूहालम्बनज्ञाने व्यभिचारादाह–ज्ञानन्त्विति । तीर्थकराः = गुरवः,

वार्त्तिकम् ।

त्यास्तारतम्याव्यवस्थित्या कार्यतारतम्ये व्यवस्थाऽनुपपत्तेः, ज्ञानेच्छापरिमाणानां तु नित्यानामपि सिद्धतया क चित् काष्ठाप्राप्तौ नास्ति बाधकम्, वस्तुतस्तु यथाश्रुतभाष्यादनवस्थाऽऽपत्तेश्च गुरुत्वादिष्वप्यतिशयानां क चित्काष्ठाऽनुमीयते साम्यमीतारतम्यकाष्ठाया अप्यनवस्थाऽऽपत्त्यैवानुमानसाम्याद् अतो न हेतौ विशेषणापेक्षेति, अस्मिंश्चानुमाने श्रुत्यादिस्तर्क इति, सूत्रतात्पर्यमाह—यत्रेति । ननूक्तानुमानेन सामान्यतः सर्वज्ञपुरुषसिद्धावपि तस्य संज्ञाविशेषः कथमवधार्यत इत्याकाङ्क्षायामाह–सामान्येति । सामान्यमात्रेणोपसंहारे निश्चये कृतपर्यवसान-

**मानं न विशेषप्रतिपत्तौ समर्थमिति तस्य संज्ञाऽऽदिविशेषप्रतिपत्तिरागमतः पर्य्यन्वेष्या,**

भास्वती।

न्यमात्रोपसंहार ईदृशेश्वरोऽस्तीति सामान्यमात्रनिश्चयं जनयित्वा कृतोपक्षयं = निवृत्त-मनुमानम्, न तद्विशेषप्रतिपत्तौ = विशेषज्ञानजनने समर्थमिति हेतोरीश्वरस्य संज्ञाऽऽदि-विशेषप्रतिपत्तिः = प्रणवादिसंज्ञायाः प्रणिधानोपायस्य च ज्ञानं, शास्त्रतः पर्यन्वेष्या = शि-

तत्त्ववैशारदी।

कुतस्तर्हि तद्विशेषप्रतिपत्तिरित्यत्र आह—"तस्य इति । बुद्धादिप्रणीत आगमाभासो न-त्वागमः; सर्वप्रमाणबाधितक्षणिकनैरात्म्यादिमार्गोपदेशकत्वेन विप्रलम्भकत्वादिति भावः, तेन श्रुतिस्मृतीतिहासपुराणलक्षणाद् = आगमतः = आगच्छन्ति = बुद्धिमारोहन्त्यस्मादभ्यु-दयनिःश्रेयसोपाया इत्यागमस्तस्मात् सञ्ज्ञाऽऽदिविशेषप्रतिपत्तिः = सञ्ज्ञाविशेषः = शिवेश्व-रादिः श्रुत्यादिषु प्रसिद्धः, आदिशब्देन षडङ्गतादशाव्ययते सङ्गृहीते, तथोक्तं वायुपुराणे—

"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य" ॥

तथा—

"ज्ञानं वैराग्यमैश्वर्य्यं तपः सत्यं क्षमा धृतिः ।
स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ॥
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे" इति।

स्यादेतत्—नित्यतृप्तस्य भगवतो वैराग्यातिशयसम्पन्नस्य स्वार्थे तृष्णाऽसम्भवात्, का-रुणिकस्य च सुखैकतानजनसर्जनपरस्य दुःखबहुलजीवलोकजननानुपपत्तेः, अप्रयोजनस्य च

पातञ्जलरहस्यम्।

उपदेशिन इत्यर्थः, कृतोपक्षयमनुमानमिति भाष्यम्, कृतः प्राप्तः सामान्यं बोधयित्वैवोपक्षयो-विनाशो येन तत् कृतोपक्षयं धूमज्ञानाद्वह्निमत्त्वस्येव, तस्य = निरतिशयैश्वर्यस्येत्यर्थः, आगमत-इति भाष्यम्, "ऐश्वर्यं केवलश्रीप्रकाशः" "यः सर्वज्ञः सर्वविदिति"; "सत्यं ज्ञानमनन्तं ब्रह्मे"त्या-द्यागमः स्यात्तत्राह-आगमाभास इति। आगमाभासत्वं संपादयति-सर्वेत्यादि-भावइत्यन्तेन, तथा हि क्षणिकत्वं = स्वोत्तरक्षणवर्त्तित्वं, तच्च योऽहं पुराऽऽसं सोऽहमद्य स्मरामीतिप्रत्यभिज्ञाबा-धितंनैरात्म्यं = नामात्मशून्यत्वं तत्कदा स्वसत्ताकाले वा स्वात्मासत्ताकाले वा ? आद्ये स्व-प्रतियोगिकसंसर्गाभावाभावः स्वस्य विद्यमानत्वाद्, द्वितीये ग्रहीतुरभावः, आर्हतमते तु जीवाः सावयवाः मध्यमपरिमाणाश्च, "निष्कलं निष्क्रियं शान्तम्"इतिश्रुतेः' सावयवत्वमध्यमपरिमाण-त्वयोरात्मन्यसङ्गतिरेवेति सर्वप्रमाणबाध उन्नेयः, प्रसिद्ध इति । "शिवमद्वैतं चतुर्थं मन्यन्ते" "स ब्रह्मा स शिवः सेन्द्रः' इत्यादिश्रुतिभिरिति शेषः, "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने"-ति, "कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यात्" "लोकवत्तु लीलाकैवल्यमि"ति चोक्तोराभि-

वार्त्तिकम्।

मनुमानं न संज्ञाऽऽदिविशेषप्रतिपादनक्षममित्यत इत्यादिरर्थः, संज्ञा = ब्रह्मान्तर्यामिपरमात्मा-दिरूपा, आदिशब्देन पूर्णानन्दत्वपरमकारुणिकत्वपारमार्थिकात्मत्वजगदाधारकारणत्वादयो-ग्राह्याः, हरिहरादिसंज्ञामूर्त्तयस्तु शक्तिशक्तिमदाद्यभेदेनोपासनार्थमेव परमेश्वरस्योच्यन्ते न तु साक्षादेव—

"ब्रह्मविष्णुशिवा ब्रह्मन् ! प्रधाना ब्रह्मशक्तयः ।
ततो न्यूनाश्च मैत्रेय ! देवा दक्षादयस्ततः ॥
ब्रह्मविष्णुशिवादीनां यः परः स महेश्वरः !"

इत्यादिवाक्येभ्यः, आगमतो = वेदान्ततः, यत्त्वाधुनिकाः केचन परस्य साक्षादपि लीला-

तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनं, ज्ञानधर्मोपदेशेन कल्प-

भास्वती ।

क्षणीयेत्यर्थः, तस्येति । ईश्वरस्यात्मानुग्रहाभावेऽपि = स्वोपकाराय प्रवर्त्तनाभावेऽपि, भूतानुग्रहः प्रयोजनम् = तत्कर्मणः प्रयोजकम्, तस्य नित्यमुक्तस्य भगवतः किं कार्य्यं-न्याय्यं तदाह—तस्य नित्यमुक्तस्य नित्यकालं यावद् जगज्जननसंहारादिकार्ये न न्यायेन सङ्गतम्, ईश्वराणां कार्यं ज्ञानधर्मोपदेशेन संसारिणां पुरुषाणामुद्धरणम्,

तत्त्ववैशारदी ।

प्रेक्षावतः प्रवृत्त्यनुपपत्तेः, क्रियाशक्तिशालिनोऽपि न जगत्क्रियेत्यत आह—"तस्यात्मानुग्र-हाभावेऽपि" इति भूतानां = प्राणिनामनुग्रहः प्रयोजनं, शब्दाद्युपभोगविवेकख्यातिरूपका-र्य्यकरणात्किल चित्तं निवर्त्तते ततः पुरुषः केवली भवति, अतस्तत्प्रयोजनाय कारुणिको विवे-कख्यात्युपायं कथयति, तेनाचरितार्थत्वाच्चित्तस्य जन्तूनीश्वरः पुण्यापुण्यसहायः सुखदुःखे भाव-यन्नपि नाकारुणिकः, विवेकख्यात्युपायकथने द्वारमाह—"ज्ञानधर्मोपदेशेन" इति । ज्ञानं च धर्म-श्च ज्ञानधर्मौ तयोरुपदेशेन, ज्ञानधर्मसमुच्चयाल्लब्धविवेकख्यातिपरिपाकात् कल्पप्रलये = ब्र-ह्मणो दिवसावसाने यत्र सत्यलोकवर्ज्जं जगदस्तमेति, महाप्रलये = ससत्त्यलोकस्य ब्रह्मणोऽपि

पातञ्जलरहस्यम् ।

त्याह—तस्यात्मानुग्रहाभावेऽपीति । सूत्रद्वयस्यायमर्थः—कृतप्रयत्नापेक्षो जीवकृतधर्माधर्माद्यपेक्षो-यदीशः प्रवर्त्तते तदा जीवकृतविहितप्रतिषेधवैयर्थ्यम्, बलादीशस्य प्रवर्तकत्वे तस्य स्वप्रयोज-नाभावेऽपि लीलामात्रात् प्रवृत्तिरित्यर्थः, केवलीभवतीति । तदा द्रष्टुः स्वरूपेऽवस्थानमित्यत्र सूत्रे चोक्तं, विवेकख्यात्युपायं = यसनियमासनादिसमाध्यन्तं, समुच्चयादिति । क्रमसमुच्चयात्,

वार्त्तिकम् ।

विग्रहं कल्पयन्ति, तदप्रामाणिकं विष्णवादीनामेव लीलाऽवतारश्रवणाद् विष्णवादीनां च पर-मात्मन्येवाहंभावात्तेषामवतारा एव परमेश्वरावतारतया श्रुतिस्मृतिषूच्यन्ते तेन तु ते भ्रा-न्ताः 'न तस्य कार्यं करणं च विद्यते' इत्यादिश्रुतिभ्यः परमेश्वरस्य कार्यकारणाख्यशरीरद्वय-प्रतिषेधात्,

"अनादिमत्परं ब्रह्म सर्वदेहविवर्जित'मि"—

त्यादिस्मृतिभ्यश्चेति दिक्, ननु नित्यमुक्तश्चेदीश्वरस्तर्हि पुरुषार्थाभावात् तस्य प्रवृत्तिर्न घटते, तथा च सांख्यसूत्रं—"स्वोपकारादधिष्ठानं लोकवदि"ति पूर्वपक्षः, तन्न—प्रवृत्त्यादिनित्यत्वात् तत्र निमित्तापेक्षा नास्तीति मुख्यसमाधाने सत्यपि प्रौढ्या प्रकारान्तरेणापि समाधानमाह—तस्यात्मेति । आत्मानुग्रहः = स्वोपकारः, तस्येश्वरस्य स्वोपकाराभावेऽपि भक्तान् पुरुषानुद्धरिष्यामीत्याशयेन ज्ञानधर्मयोरुपदेशतो-भक्तभूतानुग्रहः प्रयोजनं, पुरुषाणां विशेषणं कल्पेत्यादि, कल्पप्रलयेषु दैनंदिनप्रल-येषु, महाप्रलयेषु प्राकृतप्रलयेषु च संसारिणः, स्वकारणगामिनोऽतस्तदा मरणदुःख-भाज इत्यर्थः, ननु स्वेष्टसाधनताज्ञानाभावे कथं व्यापारः स्यादिति चेन्न ? तृणारणिमणिन्यायेन स्वेष्टसाधनताज्ञानपरदुःखज्ञानयोर्विजातीयेच्छाद्वयं प्रत्येव फलबलेन हेतुतायाः क्लृप्तत्वात्, तथा च ब्रह्मसूत्रं—'लोकवत्तु लीलाकैवल्यम्" इति, ननु तथाऽपि भक्तानेवानुगृह्णाति नान्यान् प्रत्युत तान्निगृह्णात्यपि स्वभक्तैश्वर्यदानेनेत्यतो वैषम्यादिना नेश्वरस्य नित्यमुक्तत्वं भवतीति चेद् ? नैवम्—अग्नेरौष्ण्यस्वाभाव्यवत् विशुद्धसत्त्वे भक्तवशतास्वभावस्यापर्यनुयोज्यत्वात्, वैषम्यं च रागद्वेषाभ्यामेव भवति न तु प्रवृत्तिमात्रेणेति, अत एव गीता—

"समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" ॥ इति,

प्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति, तथा चोक्तम्—"आदि-

भास्वती।

भूतोपघातहीनं परमपदप्रापणं कार्यं कारुणिकस्य सर्वज्ञस्य भवितुमर्हतीति, ईश्वरस्तथा च सगुणेश्वरो भगवान् हिरण्यगर्भः सर्गकाले स्वात्मन्यवस्थाथ प्रलयकाले जनिष्यमाणेन निर्माणचित्तेन भूतानुग्रहं करोतीति योगानां मतम्, अधिगतकैवल्यस्यापि योगिनो निर्माणचित्ताधिष्ठानं कुर्वतो देशनाविषये "पञ्चशिखाचार्यस्य" वचनं प्रमाणयति—तथेति। आदिविद्वान् भगवान् परमर्षिः कपिलः, निर्माणचित्तं = नष्टे संस्कारे योगिनांचित्तं न स्वयमेव व्युत्तिष्ठति किन्तु स्वेच्छापरिणतयाऽस्मितया योगिनश्चित्तं निर्मिमते भूतानुग्रहाय, तादृशं निर्माणचित्तमधिष्ठाय जिज्ञासमानाय "आसुरये" कारुण्यात् तन्त्रं = साङ्ख्ययोगविद्यां प्रोवाच, एवमीश्वरो नित्यमुक्तोऽपि निर्माणचित्तमधिष्ठाय तदेकशर-

तत्त्ववैशारदी।

निधने, संसारिणः = कारणगामिनः; अतस्तदा मरणदुःखभाजः; कल्पेत्युपलक्षणमन्यदाऽपि स्वार्जितकर्मवशेन जन्ममरणादिभाजः पुरुषानुद्धरिष्यामीति, कैवल्यं प्राप्य पुरुषा उद्धृता भवन्तीत्यर्थः, एतच्च करुणाप्रयुक्तस्य ज्ञानधर्मोपदेशनं कापिलानामपि सिद्धमित्याह = "तथा चोक्तम्" इति। तथा चोक्तं पञ्चशिखाऽऽचार्य्येण—(१)आदिविद्वान् = कपिल इति। "आदिविद्वान्" इति पञ्चशिखाचार्य्यवचनमादिमुक्तस्वसन्तानादिगुरुविषयं, न त्वनादिमुक्तपरमगुरुविषयम्, आदिमुक्तेषु कदा चिन्मुक्तेषु विद्वत्सु कपिलोऽस्माकमादिविद्वान्मुक्तः स एव च गुरुरिति, कपिलस्यापि जायमानस्य महेश्वरानुग्रहादेव ज्ञानप्राप्तिः श्रूयत इति, कपिलो नाम

पातञ्जलरहस्यम्।

तथा च "धर्मेण पापमपनुदतीति" श्रुतेरादौ धर्मोपदेशः, "ततस्तु तं पश्यति निष्कलं ध्यायमान" इति श्रुतेः पश्चाद् ज्ञानं, अत एव आर्थिकः पूर्वं धर्मोपदेशः, तस्मान्न समुच्चयः परे वैराग्ये धर्मानधिकारादि"ति हृदयम्, ब्रह्मणो दिनावसाने चतुर्युगसहस्रान्ते महाप्रलये द्विपरार्द्धावसाने,

"एकं दश शतं चैव सहस्रमयुतं तथा।
लक्षञ्च नियुतञ्चैव कोटिरर्बुदमेव च॥
वृन्दः खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः।
अन्त्यं मध्यं परार्धञ्च सङ्ख्या नातः परा भवेत्" ॥ इति,

कल्पप्रलय इतिभाष्यं प्रायिकं 'पश्यन् ऋषिर्वामदेवः प्रतिपेदे' इतिश्रुतेः, 'ज्ञानादेव तु कैवल्य'-मित्यपि, यदैव साक्षात्कारः तदैव मुक्तिरिति–आदिमुक्तस्वसन्तानादिगुरुविषयमित्यन्तेन जीवन्मुक्तत्वे सति सम्प्रदायप्रवर्त्तकत्वं ध्वनितं व्यासादेरिव; अत एव"ऋषिं प्रसूतं कपिलमि"त्यादि सङ्गतम् अत एव कदा चिन्मुक्तेष्वित्युत्तरग्रन्थावतारो नित्यमुक्तव्यावृत्त्यर्थम्, श्रूयत इति।

वार्त्तिकम्।

यच्च हिरण्यगर्भाद्यैश्वर्यदानाद् अन्येषां दुःखं भवति तत्रापि हिरण्यगर्भादीनामेव वैषम्यं बीजम्, ईश्वरस्य तु परदुःखप्रहाणेच्छा विद्यमानाऽपि भक्तवशतया कुण्ठिता स्वकार्याय विलम्बत इति सर्वं समञ्जसम्, यच्च सर्वेश्वरस्य कर्मसापेक्षतया वैषम्यं नैर्घृण्यं च ब्रह्ममीमांसासूत्रेणापाकृतं तत्राप्ययमेवाशयः, लोकानां विहितनिषिद्धरूपाणि कर्माणि देवानां सुखदुःखसाधनानिः अत ईश्वरेण स्वभक्तदेवेष्वपराद्धाय यद् दुःखं दीयतेऽनपराद्धाय सुखं तद्भक्तपारवश्यनिमित्तकमिति, स्वप्रयोजनाभावेऽपि विदुषां प्रवृत्तौ पञ्चशिखाचार्यवाक्यं सांख्यस्थं प्रमाणयति—तथा चोक्तमिति। आदिविद्वान् स्वयंभूः सर्गादावाविर्भूतो विष्णुर्निर्माणचित्तं-

(१) आदिविद्वानिति। "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानं च पश्येदि"तिश्रुतेरस्य सादितेति भावः।

विद्यान्निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" इति ॥ २५ ॥

स एषः—

## पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥

भास्वती।

णानप्रतिपन्नविवेकान् योगिनो विवेकोपदेशेन निःश्रेयसं प्रापयतीति सर्वमवदातम्, ईश्वर-एक एव ब्रह्मादयो देवा असङ्ख्याताः, ब्रह्माण्डानामसङ्ख्येयत्वाद्, उक्तञ्च—

"कोटिकोट्ययुतानीशे चाण्डानि कथितानि तु।
तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः॥
असङ्ख्याताश्च रुद्राद्या असङ्ख्याताः पितामहाः।
हरयश्चाप्यसङ्ख्याता एक एव महेश्वरे" ॥ इति ॥ २५ ॥

पूर्व इति। पूर्वे गुरवो हिरण्यगर्भादयः कालेनावच्छेद्यन्ते न नित्यमुक्ता इत्यर्थः; यथेति। यथा—एतत्सर्गस्य।दावीश्वरस्य प्रकर्षगत्या = प्रकर्षस्य = मोक्षस्य गतिः = अवगतिस्तथा

तत्त्ववैशारदी।

विष्णोरवतारविशेषः प्रसिद्धः,(१) स्वयम्भूर्हिरण्यगर्भस्तस्यापि साङ्ख्ययोगप्राप्तिर्वेदे श्रूयते, स एवेश्वर आदिविद्वान् कपिलो विष्णुः स्वयम्भूरिति भावः, "स्वायम्भुवानान्त्वीश्वर" इति भावः॥ २५॥

सम्प्रति भगवतो ब्रह्मादिभ्यो विशेषमाह—"स एष" इति पातनिका-'स एष" इति।

पातञ्जलरहस्यम्।

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतावित्यर्थः॥ २५॥

वार्त्तिकम्।

योगबलेन स्वनिर्मितं चित्तमधिष्ठाय स्वांशेन प्रविश्य कपिलाख्यपरमर्षिर्भूत्वा कारुण्याजिज्ञासव आसुरये तत्त्वं प्रोवाचेत्यर्थः॥ २५॥

परमेश्वरस्यापरं विशेषं प्रतिपादयति सूत्रकारः—

"स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात्" पूर्वेषां पूर्वपूर्वसर्गाद्युत्पन्नानां ब्रह्मविष्णुमहेस्वरादीनामपि गुरुः।पिताऽन्तर्यामी विद्यया ज्ञानचक्षुःप्रदश्च, कुतः कालेनानवच्छेदात्, ब्रह्मादयो हि द्विपरार्द्धादिकालेनावच्छिन्नाः कालानवच्छिन्नं गुरुं विना न सम्भवन्तीत्यर्थः, "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतिभ्य इति भावः, न च प्रकृतिस्वातन्त्र्यक्षतिः, निमित्तमप्रयोजकं प्रकृतीनाम"त्यागामिसूत्राद् निमित्तकारणस्येश्वरादेस्तत्स्वातन्त्र्याविघातकत्वात्, एतदेव व्याचष्टे-पूर्वे हीति। अवच्छेदशब्दार्थेनावच्छेदप्रयोजनेन कालो नोपावर्तते न संबध्यते, तात्पर्या-

(१) प्रसिद्ध इति।

"पञ्चमे कपिलो नाम सिद्धेशः कालविप्लुतम्।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्॥" इति

परमहंससंहिताश्रीमद्भागवतोक्तेरिति शेषः।

"अग्निः स कपिलो नाम सांख्यशास्त्रप्रवर्त्तकः"—

इति भारतीयवचनं कल्पभेदाशयकं ज्ञेयम्।

पूर्वे हि गुरवः कालेनावच्छिद्यन्ते, यत्रावच्छेदार्थेन कालो नोपावर्त्तते स एष पूर्वेषामपि गुरुः, यथाऽस्य सर्गस्यादौ प्रकर्षगत्या सिद्धस्तथाऽतिक्रान्तसर्गादिष्वपि प्रत्येतव्यः ॥ २६ ॥

**तस्य वाचकः प्रणवः ॥ २७॥**

भास्वती।

ईश्वरः सिद्धस्तथाऽतिक्रान्तसर्गेष्वपि स सिद्धः, आदिशब्देनानागतसर्गेष्वपि तत्सिद्धिरिति प्रत्येतव्या ॥ २६ ॥

तस्येति। ईश्वरस्य वाचकः = नाम प्रणव ओङ्कार इति सूत्रार्थः, किमिति । सन्ति

तत्त्ववैशारदी।

सूत्रं—"पूर्वेषामपि गुरुः कालेनानवच्छेदात्" व्याचष्टे—"पूर्वे हि" इति । कालस्तु = शतवर्षादिः, अवच्छेदार्थेन = अवच्छेदेन प्रयोजनेन, नोपावर्त्तते = न वर्त्तते, प्रकर्षस्य गतिः = प्राप्तिः, प्रत्येतव्य आगमादिति भावः ॥ २६ ॥

पातञ्जलरहस्यम्।

नोपावर्तत इति। सर्वेषां पुरुषाणां देशकालकृतपरिच्छेदाभावेऽपीश्वरो भोगापवर्गहेतुर्भवतिः ऐश्वर्यं प्रति च शतवर्षादिरिति भावः, वस्तुतस्त्वीश्वरचित्तसन्तानयोरपरिच्छेदको द्विपरार्द्धकालो-जीवानां देशकालकृतपरिच्छेदाभावेऽपि चित्तसन्तानयोः परिच्छेदकत्वात् कालस्येत्यर्थः, ईश्वरः सदैव मुक्तोऽपरिच्छेद्यश्च, यथाऽस्येति। विद्यमानस्य सर्गस्येत्यर्थः, प्रकर्षगतिः = प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात्पञ्च तन्मात्राणि, आगमादिति। "तदैक्षत बहु स्यां प्रजायेये"त्यादेरिति शेषः,

अस्यार्थः—तदिति प्रकृतिः, ईक्षणं महान् बुद्धिः महानित्युक्तेः, बहु स्यामित्यहङ्कारः, प्रजायेयेति पञ्चतन्मात्राकारेणेति श्रुतेरर्थः ॥ २६ ॥

वार्तिकम्।

धर्ममाह—यथाऽस्येति। अस्य वर्त्तमानस्य सर्गस्यादौ पूर्वं प्रकर्षगत्या ज्ञानोत्कर्षप्राप्त्या स्वतः सिद्ध इत्यर्थः, अत्रेश्वरस्य सवजीवपितृत्ववचनात् श्रुत्युक्ताग्निविस्फुलिङ्गदृष्टान्तानुसारेण च जीवब्रह्मणोरंशांशिभावस्तयोरभेदश्च पितापुत्रवदेवेति भावः, तथा च स्मृतिः—

"यथा दीपसहस्राणि दीप एक प्रसूयते ।
तथा जीवसहस्राणि स एवैकः प्रसूयते ॥
सलिले करकाऽश्मेव दीपोऽग्नाविव तन्मयः ।
जीवो मौढ्यात् पृथग् बुद्धो युक्तो ब्रह्मणि लीयते" ॥

इत्यादिः, अयं चाभेदो नाखण्डताः अपि त्वविभाग एव, "अविभागो वचनादि"ति वेदान्तसूत्रेण जीवानां ब्रह्मण्यविभागलक्षणाभेदस्यैव वचनात्, अविभागश्च दुग्धं जलमभूदित्यादिप्रत्ययनियामकः स्वरूपसम्बन्ध आधारताऽऽदिवत्, किं वा लक्षणानन्यत्वमिति, अनेन पितृत्वान्तर्यामित्वरूपेण गुरुत्वेन जीवानामप्यात्मेश्वर इति वेदान्तमहावाक्यार्थोऽपि सूचितः, यो-हि यस्यांशीः अधिष्ठाता वा भवति स तस्यात्मेति दृष्टं, यथा सूर्यश्चक्षुषः यथा वा जीवो-देहस्येति दिक्, ॥ २६ ॥

ईश्वरशब्दार्थो विस्तरेण व्याख्यात इदानीं तत्प्रणिधानं व्याख्यातुमादौ प्रणिधानाङ्गं-मन्त्रं दर्शयति—

"तस्य वाचकः प्रणवः", तस्येश्वरस्य प्रणवो नामेत्यर्थः,

"अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योंकारः स्मृतो नाम तेनाहूतः प्रसीदति" ॥ इति

वाच्य ईश्वरः प्रणवस्य, किमस्य सङ्केतकृतं वाच्यवाचकत्वम् अथ प्रदीपप्रकाशवदवस्थितमिति ? स्थितोऽस्य वाच्यस्य वाचकेन सह संबन्धः,

भास्वती।

पदार्थ ये साङ्केतिकवाचकपदमन्तरेणापि बुध्यन्ते, यथा-नीलः पीतो गौरित्यादयः, के चित् पदार्था न तथा, ते हि वाचकैः पदैरेवावगम्यन्ते, यथा-पिता पुत्र इत्यादयः, येनोत्पादितः पुत्रः स पितेति वाक्यार्थः पितृशब्देन सङ्केतीकृतः, तत्सङ्केतं विना न पितृपदार्थस्यावगतिः, अत्र हि वाच्यवाचकसम्बन्धः प्रदीपप्रकाशवदवस्थितः, यथा—प्रदीपप्रकाशावविनाभाविनौ तथा पित्रादिशब्दतदर्थौ, एवं स्थित एव वाच्येन सह वाचकस्य सम्बन्धः, ईश्वरवाचकप्रणव-

तत्त्ववैशारदी।

तदनेन प्रबन्धेन भगवानीश्वरो दर्शितः, सम्प्रति तत्प्रणिधानं दर्शयितुं तस्य वाचकमाह—"तस्य वाचकः प्रणवः",(१)

व्याचष्टे—"वाच्य" इति। तत्र परेषां मतं विमर्शद्वारेणोपन्यस्यति—"किमस्य" इति। वाचकत्वम्=प्रतिपादकत्वमित्यर्थः, परे हि पश्यन्ति यदि स्वाभाविकः शब्दार्थयोः सम्बन्धः सङ्केतेनास्माच्छब्दादयमर्थः प्रत्येतव्य इत्येवमात्मकेनाभिव्यज्यते; ततो यत्र नास्ति स सम्बन्धस्तत्र सङ्केतशतेनापि न व्यज्येत, न हि प्रदीपव्यङ्ग्यो घटो यत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्यो व्यङ्क्तुं, कृतसङ्केतस्तु करभशब्दो वारणे वारणप्रतिपादको दृष्टः, ततः सङ्केतकृतमेव वाचकत्वमिति विमृश्याभिमतवधारयति—स्थितोऽस्य" इति। अयमभिप्रायः—सर्व एव शब्दाः सर्वाकारार्थाभिधानसमर्था इति स्थित एवैषां सर्वाकारैरर्थैः स्वाभाविकः सम्ब-

पातञ्जलरहस्यम्।

विमर्शमवाह-परे हीत्यारभ्य वाचकत्वमित्यन्तेन, ईश्वरकृतो जन्यः सम्बन्ध इति परमतमभिधाय"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध"इत्यादिना जैमिनिसूत्रेण शब्दार्थयोर्नित्यसम्बन्ध इत्याह-स्थित इति।सप्रणवाग्र इति मनुस्मृतेः, ब्रह्मा स्वयम्भू"रनादिनिधना वेदा"इत्यादिश्रवणाद्वेदस्य नित्यत्वम्, ईश्वरत्वं जातिरखण्डोपाधिर्वा, प्रतिकल्पम् ईशितव्यस्य भेदात्सम्बन्धोऽपि नित्यः, एतदेवाह-अयमभिप्राय इति। सर्वा सर्वगता जातिः सा यथा घटाश्वादिना व्यज्यते

वार्त्तिकम्।

योगियाज्ञवल्क्यादिवचनेभ्यः, अदृष्टविग्रहोऽद्भुतशरीरो देवः परमात्मा भावग्राह्यो भक्तिमात्रग्राह्यो मनोमयो मनस्तुल्यकारणोपाधिशबलोऽयःशबलाग्निवदित्यादिरर्थः, कर्त्तव्यविचारोपयोगिनमर्थं पूरयति—वाच्य ईश्वर इति। नित्य एव प्रणवेन सहेश्वरस्य वाच्यवाचकभाव इति, श्रद्धाऽतिशयोत्पादनाय संशयपूर्वकमवधारयति—किमस्येति। ईश्वरप्रणवयोर्वाच्यवाचकता शक्तिः किमस्येश्वरस्य संकेतेनाहार्यान्योन्याध्यासरूपेण कृताऽऽगन्तुकी यथा पिण्डविशेषे देवदत्तादिनामवाच्यता पितृसंकेतकृता तद्वत्, अथ वा प्रदीपस्य प्रकाशवत्स्वाभाविकी यावद्द्रव्यभाविनीत्यर्थः, विमृश्य सिद्धान्तमाह—स्थित इति। अर्थसम्बन्धमेवाभिनयति=प्रकाशयतीत्यर्थः, स च शक्त्याख्यसम्बन्ध आधाराधेयवत्स्वरूपसम्बन्धोऽतिरिक्तपदार्थ एव वाऽस्तु घटादिनाम्नामप्येवं बोध्यं, देवदत्तादिनाम्नां तु नैवं यतः पुरुषसंकेतभेदेनार्थभेदा भवन्तीति, संकेतेनेति। अयमस्य पितेत्याद्येवंरूपेणेत्यन्वयः, ननु शक्तिनित्यत्वेऽपि कदा चित्संकेतभेदाद्दे-

(१) वाचक इति। अत एव—

"अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः।
तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदती"ति—

योगियाज्ञवल्क्येनापि सूचितमेतद्।

**सङ्केतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति, यथाऽवस्थितः पितापुत्रयोः संबन्धः सङ्केतेनावद्योत्यतेऽयमस्य पिताऽयमस्य पुत्र इति, सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्षस्तथैव सङ्केतः क्रियते, सम्प्रतिपत्तिनित्यतया नित्यः शब्दार्थसम्बन्ध इत्यागमिनः प्रतिजानते ॥ २७ ॥**

भास्वती।

शब्दस्तमर्थमभिनयति = प्रकाशयति, एतदुक्तं भवति—यः क्लेशादिभिरपरामृष्टो नित्यमुक्तः कारुणिकः स ईश्वर इत्यादिरर्थो न वाचकशब्दं विना बोद्धव्यः, अतः केन चिद् वाचकेन सह तद्वाच्यस्य सम्बन्धोऽविनाभावित्वान्नित्यस्थित एव, सङ्केतीकृतेन प्रणवेन वाचकेन तदर्थस्यावद्योतनम्, सर्गान्तरेष्वपीदृशो वाच्यवाचकशक्त्यपेक्षः सङ्केतः क्रियते नान्यथा, तद्वैपरीत्यस्याकल्पनीयत्वादिति, एवं सम्प्रतिपत्तेः = सदृशव्यवहारपरम्परायाः, प्रणवरूपेण नित्यत्वान्नित्यः शब्दार्थसम्बन्धः = केन चिच्छब्देन सह कस्य चिदर्थस्य सम्बन्ध इत्यागमिनः प्रतिजानते = आतिष्ठन्ते ॥ २७ ॥

तत्त्ववैशारदी।

न्धः, ईश्वरसङ्केतस्तु प्रकाशको नियामकश्च तस्य, ईश्वरसङ्केतासङ्केतकृतश्चास्य वाचकापभ्रंशविभागः, तदिदमाह—"सङ्केतस्त्वीश्वरस्य" इति। निदर्शनमाह—"यथा" इति। ननु शब्दस्य प्राधानिकस्य महाप्रलयसमये प्रधानभावमुपगतस्य शक्तिरपि प्रलीना, ततो महदादिक्रमेणोत्पन्नस्यावाचकस्यैव माहेश्वरेण संकेतेन न शक्या वाचकशक्तिरभिज्वलयितुं विनष्टशक्तित्वादित्यत आह—"सर्गान्तरेष्वपि" इति। यद्यपि सह शक्त्या प्रधानसाम्यमुपगतः शब्दस्तथाऽपि पुनराविर्भवंस्तच्छक्तियुक्त एवाविर्भवति, वर्षातिपातसमधिगतमृद्भाव इवोद्भिज्जो मेघविसृष्टवारिधारासारावसेकात्, तेन पूर्वसम्बन्धानुसारेण सङ्केतः क्रियते भगवतेति, तस्मात् सम्प्रतिपत्तेः = सदृशव्यवहारपरम्पराया नित्यतया नित्यः शब्दार्थयोः सम्बन्धो न कूटस्थनित्य इत्यागमिकाः प्रतिजानते, न पुनरागमनिरपेक्षाः सर्गान्तरेष्वपि तादृश एव सङ्केत इति

पातञ्जलरहस्यम्।

तथैवात्र सर्वे एव शब्दाः सर्वाकारा इति, ईश्वरसंकेतेति। अस्य शब्दार्थसम्बन्धस्य नित्यस्येश्वरसङ्केतादेवाभिव्यक्तिर्नियमश्च, गोपिण्ड एव गोत्वं नान्यत्रेति, गवेतरावृत्तित्वे सति सकलगोवृत्ति गोत्वमिति लक्षणम् प्रकृते विपक्षे बाधकम्, गावीगोणेतलिकागोणीत्यादिषु शब्देषु विद्यमानेषु गोप्रतिपादकत्वेन च साधुतानियमौ स्तः, ईश्वरसङ्केताभावाद् एतेभ्यो गोत्वादिव्यवहारस्तु भ्रमादेवेति भाव इति स्मृतिपादे व्याकरणाधिकरणे भट्टैर्निरूपितम्, शक्तिशक्तिमतोर्भेदेन शक्तिमत्सु विद्यमानेषु शक्तेरप्यबोधकतेति शङ्कते-नन्विति। सिद्धान्तमाह—सर्गान्तरेष्वपीति भाष्यम्—

अस्यार्थः—यद्यपीत्यादि-आविर्भवतीत्यन्तेन, शक्तिशक्तिमतोस्तादात्म्यमस्तीति हृदयम्, वर्षातिपात इति। उद्भिज्जो = मण्डूकादिः, वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि घनाघनासारसहितानि प्रावृषि तथैवाविर्भवन्तीति वेदान्ते वाचस्पतिः, न कूटस्थनित्य इति। प्रवाहनित्य इति भावः, न पुनराममनिरपेक्षा इति। "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।

वार्त्तिकम्।

वदत्तादिशब्दवदर्थभेदोऽपि प्रणवस्य स्यादित्याशङ्कायामाह—सर्गान्तरेष्वपीति। अयं संकेतो लौकिको न भवति अपि तु सर्वज्ञाश्चेतनाशक्ति पूर्वसिद्धामनुसृत्यैव संकेतं कुर्वन्तीत्याशयः, सम्बन्धनित्यत्वे संप्रतिपत्त्याख्यकार्यनित्यत्वं प्रमाणयति—सम्प्रतिपत्तीति। देवदत्तादिशब्दवद्वाच्यवाचकभावस्यानित्यत्वे कदा चित्संकेतवैपरीत्येन व्यवहारवैपरीत्यमपि स्यादित्याशयः, तथा च सति सर्वत्र शब्दार्थेऽनाश्वासः स्यादित्यागमिनः प्रतिजानते = अवधारयन्तीति समग्र-

विज्ञातवाच्यवाचकत्वस्य योगिनः—

**तज्जपस्तदर्थभावनम् ॥ २८ ॥**

प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावना, तदस्य योगिनः

भास्वती ।

विज्ञातेति । विज्ञातवाच्यवाचकत्वस्य = प्रणवस्मरणेन सह यस्य सार्वज्ञ्यादिगुण-युक्तस्येश्वरस्य स्मृतिरुपतिष्ठते स एव विज्ञातवाच्यवाचको योगी, तस्य तज्जपः प्रणवजप-

तत्त्ववैशारदी ।

प्रतिपत्तुमीशत इति भावः ॥ २७ ॥

वाचकमाख्याय प्रणिधानमाह—"तज्जपस्तदर्थभावनम्" व्याचष्टे—"प्रणवस्य" इति । भा-

पातञ्जलरहस्यम् ।

दिवं च पृथिवीञ्चान्तरिक्षम्" इति ॥ २७ ॥

प्रणवः = स्वाध्यायः, प्रणवशतरुद्रियादिस्वाध्यायेन विषयेण विषयिणमध्ययनं लक्षयति,

वार्त्तिकम् ।

वाक्यार्थेनान्वयः, ॥ २७ ॥

प्रणिधानाङ्गमन्त्रं प्रदर्श्य साङ्गप्रणिधानस्य स्वरूपं सूत्रकारो वक्ष्यति तत्सूत्रं पूरयित्वो-त्थापयति—विज्ञातेति । सूत्रेण सहान्वयः,

"तज्जपस्तदर्थभावनम्", सूत्रार्थं व्याचष्टे–प्रणवस्येति । प्रणवजपेन सह ब्रह्मध्यानं प्रणि-धानं तच्च वाच्यवाचकभावं ज्ञात्वा कर्त्तव्यमिति समुदायार्थः,

"प्रणवेन परं ब्रह्म ध्यायीत नियतो यति"रिति

स्मरणादिति, प्रणवार्थश्चावान्तरभेदैः श्रुत्यादिषु बहुधोक्तः सङ्क्षेपात्तु गारुडोक्तोऽर्थोऽत्र कथ्यते, यथा गारुडे—

"व्यक्ताव्यक्ते च पुरुषस्तिस्रो मात्राः प्रकीर्त्तिताः ।
अर्धमात्रा परं ब्रह्म ज्ञेयमध्यात्मचिन्तकैः" ॥ इति,

प्रणवार्थचिन्तनं च मुख्यतो द्विविधं—तत्रैकमंशांशिकार्यकारणशक्तिशक्तिमदाद्यभेदेन तप्तायःपिण्डवद्विभागलक्षणैकीभावादहं ब्रह्म सर्वं खल्विदं ब्रह्मेत्यादिरूपं भवति "तमेतमात्मा-नमोमिति ब्रह्मणैकीकृत्य ब्रह्म चात्मनोमित्येकीकुर्व्ये"त्यादि श्रुतेः, "सर्वं खल्विदं ब्रह्म तज्जला-निति शान्त उपासीते"त्यादिश्रुतेश्च,

"एकः समस्तं यदिहास्ति किं चित्तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥"

इत्यादिस्मृतेश्च, अपरं प्रकृतितत्कार्यपुरुषेभ्यो विवेकेन केवले ब्रह्मचिन्मात्र आत्मत्वचि-न्तनम्, "ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्मात्", "अथात आ-देशो नेति नेति" "न ह्येतस्मादिति नेत्यन्यत्परमस्ति" "तमेवैकं जानथ आत्मानम् आत्मेत्ये-वोपासीतेति श्रुतेः,

"प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत् ।
अहं ब्रह्म परं ज्योतिः प्रसंख्याय विमुच्यते ॥
यः सर्वभूतचित्तज्ञो यश्च सर्वहृदि स्थितः ।
यश्च सर्वान्तरे ज्ञेयः सोऽहमस्मीति चिन्तयेत्" ॥ इति

गारुडादिभ्यश्च, तथा—'आत्मेति तूपयन्ति ग्राहयन्ति चे'ति ब्रह्ममीमांसासूत्राच्च, अत्र गारुडवाक्ये पुरुषस्य ब्रह्मणि न्यासो लय एव न त्वभेदः,

"विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् ।
ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे" ॥

प्रणवं जपतः प्रणवार्थं च भावयतश्चित्तमेकाग्रं सम्पद्यते, तथा चोक्तं—

भास्वती ।

स्तदर्थभावनञ्चेश्वरप्रणिधानं चित्तस्थितिकरम्, प्रणवस्येति । सुगमम्, तथेति । स्वाध्यायाद् = निरन्तरप्रणवजपाद्, योगम् = ऐकाग्र्यम्, आसीत = सम्पादयेदित्यर्थः, यो-

तत्त्ववैशारदी ।

वनम् – पुनःपुनश्चेतसि निवेशनम्, ततः किं सिद्ध्यतीत्यत आह—"प्रणवम्" इति । एकाग्रं-

वार्त्तिकम् ।

इत्यादिवाक्येषु जीवविलापनेन ब्रह्मात्मचिन्तनस्य स्मरणात् प्रकृतिस्थापनसाहचर्याच्च, अम्बरदृष्टान्तश्च नाखण्डत्वे—

यथाऽग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् ।
तथाऽऽत्मा साम्यमभ्येति योगिनः परमात्मना ॥

इत्यादिवाक्योक्तस्याग्निवायुजलादिबहुलदृष्टान्तस्य साम्यस्य च विरोधाद् न्यायानुग्रहेऽगम्याल्यादिदृष्टान्तानामेव बलवत्त्वाच्च, किन्त्वेकरूपस्यौपाधिकमिथ्याविभागनिवृत्तिमात्रइति, विलापनेन च प्रकृत्यादिवज्जीवानामनात्मत्वमेव लभ्यते, तदुक्तं मात्स्ये—

"तत्त्वैः संपादितं भुङ्क्ते पुरुषः पञ्चविंशकः ।
ईश्वरेच्छावशात्सोऽपि जडात्मा कथ्यते बुधैः" ॥ इति,

मोक्षधर्मे च—

"ते चैनं नाभिनन्दति पञ्चविंशकमच्युत ।
षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः" ॥ इति,

एतेन प्रकृतिपुरुषौ विलाप्य यच्छिष्टं ब्रह्म तस्मिन्नेवाहंभावे वचनाच्च न जीवे मुख्योऽहंशब्द इति, ध्यानयोश्चिन्तनयोर्मध्ये प्रथमचिन्तनमुपासना द्वितीयं तत्त्वज्ञानमिति, ब्रह्मात्मताज्ञानं चातिदुर्लभं, मोक्षधर्मे चोक्तं—

"भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरामयाः ।
ऐकात्म्यं नाम कश्चिद्धि कदा चित्प्रतिपद्यते" ॥ इति

दिक्, ईश्वरप्रणिधानादिति पञ्चम्युक्तमसंप्रज्ञातपर्यन्तयोगहेतुत्वं तस्यप्रणिधानस्य येन द्वारेण तदाह—तदस्येति । प्रणिधानादिभिश्चैकाग्रो भवति ततश्च परमात्मसाक्षात्कारः ततः परवैराग्यादसंप्रज्ञातयोग इति शेषः,

"स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशत" इति

वक्ष्यमाणवाक्यस्वरसात्, उक्तार्थे स्वपितुर्वाक्यं विष्णुपुराणस्थं प्रमाणयति—तथा चोक्तमिति । योगजपयोरेकदा न संभव इति योगस्याद्यन्तयोर्व्युत्थानकाले जप उक्तः, ननु परमात्मसाक्षात्कारात् परवैराग्यं भवतीति यदुक्तं तन्नोपपद्यते—आत्मसाक्षात्कारेणैवाभिमाननिवृत्त्या परवैराग्यसंभवादिति, अत्रोच्यते—ब्रह्मज्ञानं ताटस्थ्येनात्र न विवक्षितं किं त्वात्मत्वेनैव, तथा च जीवात्मतत्त्वज्ञानाद् बुद्धिपर्यन्तमभिमाननिवृत्तिवत् परमात्मज्ञानाद् जीवपर्यन्तेष्वभिमानो निवर्त्तते, पञ्चविंशतितत्त्वानि विलाप्यैव सोऽहमित्यात्मतयाऽधिष्ठानब्रह्मसाक्षात्कारादिति, नन्वेवं जीवस्याप्यनात्मत्वं प्रसक्तमिति चेद्? न—व्यावहारिकपारमार्थिकभेदेनात्मद्वयाभ्युपगमात्, आत्मत्वं हि संघाताध्यक्षत्वं क्षेत्रज्ञत्वं च, तच्चेश्वरस्यैवास्ति ईश्वरत्ववत् जीवात्मनां परतन्त्रत्वाद् धर्माधर्माद्यज्ञातृत्वाच्च, जीवानां च चितिशक्तिमत्तामात्रेणैवात्मत्वं गौणं बुद्ध्याद्यापेक्षिकं च यथा हिरण्यगर्भादीनामीश्वरत्वं तद्वज्जीवानामात्मत्वं बन्धमोक्षभोगादिभागितया सिद्धं लोकव्यवहारगोचरतया च व्यावहारिकमेव, एवमेवाहंत्वंशब्दोऽपि परमात्मन्येव मुख्यो-न तु जीवे प्रयोगादिषु स्वातन्त्र्याभावेन प्रश्नोक्त्राऽऽत्मत्वादिरूपस्याहमादिशब्दप्रवृत्तिनिमित्तस्य जीवेष्वभावादिति, तथा चोक्तम्—

"स्वाध्यायाद् योगमासीत योगात्स्वाध्यायमामनेत्(१) ।

भास्वती ।

गाद् = एकाग्र्यलब्धयाऽन्तर्दृष्ट्या सूक्ष्मस्यार्थस्याधिगमात्, स्वाध्यायमामनेद् = अभ्यसेत्, तमर्थं लक्षीकृत्य जञ्जपूको भवेदित्यर्थः, एवं स्वाध्याययोगसम्पत्त्या = स्वाध्यायेन

तत्त्ववैशारदी ।

सम्पद्यते = एकस्मिन् भगवत्यारमति चित्तम्, अत्रैव वैयासिकीं गाथामुदाहरति—"तथा च"

पातञ्जलरहस्यम् ।

तस्माद्ध्ययनाद् योगमासीत = उपासीत, तथा चोक्तं—स्वाध्यायादिति । वैयासिकीमिति । व्यासान्तरोक्ताम्,

द्वापरे द्वापरे विष्णुर्व्यासरूपी जनार्दनः ।

इति व्यासान्तरसिद्धिः, ईश्वरविषयिणीं चित्तवृत्तिं कुर्यादित्यर्थः, तदुक्तम्—

"जपश्रान्तः शिवं ध्यायेद् ध्यानश्रान्तः शिवं जपेत् ।
जपध्यानसमायुक्तः परं ब्रह्माधिगच्छति" ॥

वार्त्तिकम् ।

"त्वामात्मानं परं मत्वा परमात्मानमेव च ।
आत्मा पुनर्बहिर्मृग्य अहो ज्ञजनताऽज्ञता" ॥ इति,

परम् = अनात्मानम्, यद्यपि जीवो मुख्यात्मा न भवति तथाऽपि तज्ज्ञानादपि धर्माधर्मरागादिनिवृत्त्या मोक्षस्तु भवत्येवेति, एतेन व्यवहारपरमार्थभेदादैकात्म्यनानाऽऽत्मतावादौ श्रुतिस्मृतिदर्शनेष्वविरुद्धावित्यपि सिद्धम्, अधिकं तु ब्रह्ममीमांसाभाष्ये विज्ञानामृते द्रष्टव्यमिति दिक्, तदिदमीश्वरप्रणिधानाद्वेत्यादिसूत्रगणोक्तमर्थजातं लिङ्गपुराणे स्पष्टं प्रदर्शितं, यथा—

"अविद्ययेशस्य योगो नातीतो नाप्यनागतः। नाप्यस्त्यस्मितया चैवं रागेणापि त्रिकालता ॥
कालेषु त्रिषु संबन्धस्तस्य द्वेषेण नो भवेत् । तथैवाभिनिवेशेन संबन्धो न कदा चन ॥
कुशलाकुशलैश्चैव संबन्धो नैव कर्म्मभिः । भवेत् कालत्रये शंभोरविद्यामतिवर्जनात् ॥
विपाकैः कर्मणां तस्य न भवेदेव संयमः । कालेषु त्रिषु शर्वस्य शिवस्य शिवदायिनः ॥
सुखदुःखैर्न संस्पृश्यः कालत्रितयवर्तिभिः । तथैव भोगसंस्कारैर्भगवानन्तकान्तकः ॥
पुंविशेषः परो देवो भगवान् परमेश्वरः । चेतनाचेतनोन्मुक्तः प्रपञ्चादखिलात्परः ॥
लोके सातिशयत्वेन ज्ञानैश्वर्यं विलोकिते । शिवे नातिशयित्वेन स्थिते आहुर्मनीषिणः ॥
प्रतिसर्गं वस्तुभानं ब्रह्मणः शास्त्रविस्तरम् । उपदेशात्स एष्टव्यः कालावच्छेदवर्त्तिनाम् ॥
कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः । सर्वेषामपि सर्वेशः कालावच्छेदवर्जितः ॥
अनादिरेव संबन्धो विज्ञानोत्कर्षयोः परे । स्थितयोरीदृशः शर्वः परिशुद्धः स्वभावतः ॥
आत्मप्रयोजनाभावे परानुग्रह एव हि । प्रयोजनं समस्तानां क्रियाणां परमेष्ठिनः ॥
प्रणवो वाचकस्तस्य शिवस्य परमात्मनः । शिवरुद्रादिशब्दानां प्रणवो हि परः स्मृतः ॥
शंभोः प्रणववाच्यस्य भावना तज्जपादपि । आशु सिद्धिः परा प्राप्या भवत्येव न संशयः ॥
एकं ब्रह्ममयं ध्यायेत्सर्वं विप्र ! चराचरम् । चराचरविभागं च त्यजेदहमिति स्मरन् ॥
सत्साण्डावरणान्याहुरण्डस्यात्माऽम्बुजासनः। कोटिकोट्ययुतानीशे चाण्डानि कथितानि तु ॥
तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः। सृष्टाः प्रधानेन तथा प्राप्य शंभोस्तु सन्निधिम् ॥
असंख्याताश्च रुद्राख्या असंख्याताः पितामहाः । हरयश्चाप्यसंख्याता एक एव महेश्वरः ॥
ब्रह्मेन्द्रविष्णुरुद्राद्यैरपि देवैरगोचरम् । आदिमध्यान्तरहितं भेषजं भवरोगिणाम् ॥

(१) आमनेदिति । तथा च प्रणवजपात्मकस्वाध्यायसंपुटितेन योगेनेत्यर्थः ।

स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशत" इति ॥ २८ ॥

किञ्चास्य भवति—

**ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥**

ये तावदन्तराया व्याधिप्रभृतयस्ते तावदीश्वरप्रणिधानान्न भवन्ति,

भास्वती ।

योगोत्कर्षस्य योगेन च स्वाध्यायोत्कर्षस्य सम्पादनमित्यनेनोपायेन परमात्मा प्रकाशते॥२८॥

किञ्चेति । किञ्च—ईश्वरप्रणिधानादस्य योगिनः प्रत्यक्चेतनाधिगमोऽन्तरायाभावश्च भवति, प्रत्यङ् = प्रतिव्यक्तिगतः, चेतनः = चैतन्यम् , आत्मगतस्यं=द्रष्टृचैतन्यस्य, अधिगमः=उपलब्धिर्भवति योगान्तरायाभावश्च भवति, कथं? स्वरूपदर्शनं प्रत्यक्चेतनाधिगमः ?

तत्त्ववैशारदी ।

इति । तत ईश्वरः (१)समाधितत्फललाभेन तमनुगृह्णाति ॥ २८ ॥

किञ्चापरमस्मात्? "ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च", प्रतीपं = विपरीतम्, अञ्चति = विजानातीति प्रत्यङ् स चासौ चेतनश्चेति प्रत्यक्चेतनोऽविद्यावान् पुरुषः, तदनेनेश्वराच्छाश्वतिकसत्त्वोत्कर्षसम्पन्नाद्विद्यावतो निवर्त्तयति, अविद्यावतः प्रतीचश्चेतनस्याधिगमः = ज्ञानं स्वरूपतोऽस्य भवति, अन्तराया वक्ष्यमाणास्तदभावश्च, अस्य विवरणं—"ये तावद्" इति । स्वम् = आत्मा तस्य रूपं, रूपग्रहणेनाविद्यासमारोपितान् धर्मान् निषेधति, न-

पातञ्जलरहस्यम् ।

इत्यग्निपुराणवचनम् ॥ २८ ॥

प्रतीच इति। बुद्धयविवेकिनः, ज्ञानं = द्रष्टुः स्वरूपेणावस्थानम्, सत्त्वधर्मानास्कन्दितं रूपं,

वार्त्तिकम् ।

शिवतत्त्वमिति ख्यातं शिवादपि परं पदम्" ।

इति ॥ २८ ॥

तदेवं जीवप्रज्ञाया इवेश्वरप्रणिधानादपि प्रज्ञाद्वारा योगस्तत्फलं मोक्षश्च भवतीत्युक्तमिदानीं तयोर्मध्य ईश्वरप्रणिधानस्य मुख्यकल्पत्वं प्रतिपादयितुं तत्र द्वाराधिक्यं सूत्रेण प्रतिपादयति—किं चास्येति । अन्यच्चास्य प्रणिधानिनो भवतीत्यर्थः,

"ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च", तत ईश्वरप्रणिधानात्तत्साक्षात्कारद्वारा तद्दृष्टान्तेन जीवतत्त्वमप्यनायासेन पूर्णतया साक्षात् क्रियत इति प्रथमदलार्थः, अपिशब्द-आसन्नतमसमाध्यपेक्षया, यद्यपि प्रति = प्रतिवस्तु अञ्चति = अनुगच्छतीति व्युत्पत्त्याऽसंकुचितसर्वानुगतः परमात्मैव मुख्यः प्रत्यक्शब्दार्थः—

'प्रत्यक्प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्ती'—

त्यादिष्वपीश्वरे प्रत्यक्प्रयोगदर्शनाच्च, तथाऽपीश्वरादिशब्दवदेव प्रत्यक्शब्दोऽपि जीवे गौणो विभुत्वात्, अत एव प्रकृतिव्यावर्त्तनाय चेतनेत्युक्तम्, यदि च प्रत्यक्शब्दः पश्चिमवाची तथाऽपि सर्वप्रलयाद्यवधिभूते ब्रह्मण्येव मुख्योऽन्यत्र गौण इति, अन्तरायाभाव एकाग्रतासामान्यस्यैव फलमिति वक्ष्यते 'तत्प्रतिषेधार्थमेकतत्त्वाभ्यास' इति सूत्रेणेत्यतो विशेष्येश्वरप्रणिधानस्यान्तरायाभावफलकत्ववचनमनुवादकतया व्याचष्टे—ये तावदिति । अनुवादस्य च

(१) समाधीति । न चैवं प्रणवार्थचिन्तनात् समाध्यादिलाभोत्तरमपवर्गे "व्याहरन् मामनुस्मरन् यः प्रयाती"त्यादिभगवद्वचनेऽव्यवहितमुक्तिश्रवणविरोध इति वाच्यम्?

तत्रापि प्रकृताया योगधारणाऽऽस्थाया ग्राह्यत्वात्, तथा चैकवाक्यतया प्रणवजपतदर्थभावनेन तिरोहितेऽन्तरायवृन्दे प्रत्यक्चेतनस्फूर्त्तौ सबीजनिर्बीजसमाध्युत्तरमपवर्ग इति पर्यवस्यति ।

**स्वरूपदर्शनमप्यस्य भवति, यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गस्तथाऽयमपि बुद्धेः प्रतिसंवेदी यः पुरुष इत्येवमधिगच्छति ॥ २९ ॥**

भास्वती ।

तदाह—यथेति । यथैवेश्वरः शुद्धः = गुणातीतः, प्रसन्नः = अविद्याऽऽदिहीनः, केवलः=कैवल्यं प्राप्तः, अनुपसर्गः = कर्मविपाकहीनः, तथाऽयमप्यात्मा बुद्धेः प्रतिसंवेदी यः पुरुष इत्येवं-मुक्तपुरुषप्रणिधानान्निर्गुणस्वात्मचैतन्यस्याधिगमो भवति ॥ २९ ॥

तत्त्ववैशारदी ।

न्वीश्वरप्रणिधानमीश्वरविषयं कथमिव प्रत्यक्चेतनं साक्षात्करोत्यतिप्रसङ्गादित्यत आह—"यथैवेश्वर" इति । शुद्धः = कूटस्थनित्यतयोदयव्ययरहितः, प्रसन्नः = क्लेशवर्जितः, केवलः = धर्माधर्मापेतः, अत एवानुपसर्गः, उपसर्गाः = जात्यायुर्भोगाः, सादृश्यस्य किञ्चिद्भेदाधिष्ठानत्वादीश्वराद् भिनत्ति—"बुद्धेः प्रतिसंवेदी" इति । तदनेन प्रत्यग्ग्रहणं व्याख्यातम्, अत्यन्तविधर्मिणोरन्यतरार्थानुचिन्तनं न तदितरस्य साक्षात्काराय कल्पते; सदृशार्थानुचिन्तनं तु सदृशान्तरसाक्षात्कारोपयोगि तामनुभवति, एकशास्त्राभ्यास इव तत्सदृशार्थशास्त्रान्तरज्ञानोपयोगिताम्, प्रत्यासत्तिस्तु स्वात्मनि साक्षात्कारहेतुर्न परात्मनीति सर्वमवदातम् ॥ २९ ॥

पातञ्जलरहस्यम् ।

कथमिवेत्याक्षेपः, कस्मादिति भावः, समाधत्ते-यथैवेश्वर इति । उदयव्ययौ = जन्मविनाशौ, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वं सादृश्यमित्याह-बुद्धेः प्रतिसंवेदीति । कल्पत इति । घटपटयोरिवेत्यर्थः, सदृशयोस्तु भवेदेव गोगवययोरिवेत्यर्थः, दृष्टान्तान्तरमाह-एकशास्त्रेति । वैशेषिकशास्त्राभ्यासो यथा न्यायशास्त्राभ्यासे, उपकरोतीति शेषः, प्रत्यासत्तिः = संबन्धः,

अयमर्थः—नगरेऽसकृद्दृष्टगोः पुरुषस्यारण्यप्रवेशे गवये चक्षुःप्रत्यासत्तौ यथा गवयधीः; एवं बहुधा भावितेश्वरस्यात्मनि मनःप्रत्यासत्तावात्मसाक्षात्कारः तत्रेश्वरभावना सहायतामवलम्बते, अत एवाह —न परात्मनीति । परात्मनः परप्रत्यक्षायोग्यत्वादित्युक्तेः ॥ २९ ॥

वार्त्तिकम् ।

फलमाधिक्येन विघ्ननिवर्त्तकत्वलाभः, "तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवती"ति श्रुत्या ब्रह्मात्मतादर्शिन इच्छाविघाते देवादीनामप्यसामर्थ्यप्रतिपादनादिति, अत-एवोक्तं नारदीयादिष्वपि—

"तस्मान्मुमुक्षोः सुसुखो मार्गः श्रीविष्णुसंश्रयः ॥
चित्तेन चिन्तयानेन बञ्च्यते ध्रुवमन्यथा" ।
"धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि"—

इत्यादि, स्वरूपदर्शनमिति । अस्य प्रतीचो जीवस्य यत्तात्त्विकं रूपं तस्य साक्षात्कारोऽपि भवतीत्यर्थः, अन्यप्रणिधानेनान्यसाक्षात्कारेऽदृष्टद्वारमप्यस्तीतिप्रतिपादयन्नेव स्वरूपदर्शनं-विवृणोति—यथैवेति । बुद्धेः प्रतिसंवेदी बुद्धिवृत्तिप्रतिबिम्बोद्ग्राही तत्साक्षीति यावद्, इदं-च जीवब्रह्मणोरत्यन्ताभेदनिराकरणाय वैधर्म्यमुक्तं, यथैवेश्वरः शुद्धयादिगुणकस्तथाऽयमपि यो-बुद्धेः साक्षी पुरुष इत्येवमधिगच्छति = अवधारयति पुरुषत्वाविशेषादित्यर्थः, "पुरुषश्चेतनः शुद्धः पापपुण्यविवर्जितः प्रसन्नो निर्दुःखः केवलश्चिन्मात्रोऽनुपसर्गो जात्यायुर्भोगरहित" इति, तदेतदुक्तं नारदीये—

"मायाप्रवर्त्तके विष्णौ दृढा भक्तिः कृता नृणाम् ।
सुखेन प्रकृतेर्भिन्नं स्वं दर्शयति दीपवद्" इति ॥ २९ ॥

अथ केऽन्तरायाः? ये चित्तस्य विक्षेपकाः, के पुनस्ते ? कियन्तो वेति ?—

**व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥३०॥**

नवान्तरायाश्चित्तस्य विक्षेपाः, सहैते चित्तवृत्तिभिर्भवन्त्येतेषामभावे न

भास्वती।

अथेति सूत्रमवतारयति—नवेति । धातुः = वातपित्तादिः, रसः = आहारपरिपाकजातरसः, करणानि = चक्षुरादीनि, एषां वैषम्यं वैरूप्यं व्याधिः, अकर्मण्यता = भ्रमणात्,

तत्त्ववैशारदी।

पृच्छति—"क" इति । सामान्येनोत्तरं—"य" इति । विशेषसङ्ख्ये पृच्छति—"के पुन"रिति । उत्तरमाह—"व्याधि" इत्यादिसूत्रेण,

अन्तरायाः = नव, एताश्चित्तवृत्तयो योगान्तराया योगविरोधिनः, चित्तस्य विक्षेपाः = चित्तं खल्वमी व्याध्यादयो योगाद्विक्षिपन्ति = अपनयन्तीति विक्षेपाः, योगप्रतिपक्षत्वे हेतुमाह—"सहैत" इति । संशयभ्रान्तिदर्शने तावद् वृत्तितया वृत्तिनिरोधप्रतिपक्षौ, येऽपि न वृत्तयो

पातञ्जलरहस्यम्।

अन्तराया विघ्ना विक्षेपाः प्रतिकूला इत्यर्थः, वृत्तिनिरोधः समाधिः, न वृत्तय इति । वाक्काययोरेव व्यापारत्वात्, रसो = रक्तादि, न्यूनाधिकभाव इति । पटुमृदुते, कर्मानर्हता = अनु-

वार्त्तिकम्।

यद्यप्यंशिस्वरूपावधारणेनांशस्वरूपावधारणवदंशस्वरूपावधारणेनाप्यंशिस्वरूपावधारणं भवति, अंशांशिनोरेकस्वरूपत्वस्यौत्सर्गिकत्वात्, प्रत्युतेश्वरस्यावाङ्मनसगोचरतया स्वतत्त्वसाक्षात्कारादेव तदनुसारेणेश्वरे विवेकः संभवति नान्यथा, तथा च श्रुतिरपि 'यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्ये'दित्यादिः; तथाऽपि जीवस्य पूर्णत्वनित्यत्वाद्यंशईश्वरानुसारेणैव सुखेन ज्ञातुं शक्यत इत्याशयः, अत एव 'तत्त्वमेव त्वमेव तद्'इत्यादिश्रुतयः परस्परमेवावैधर्म्यलक्षणाभेदं प्रतिपादयन्ति—

अन्योन्यदृष्टान्तेनान्योन्यधर्माणामन्योन्यस्मिन्नवधारणायान्तरायस्वरूपप्रतिपादकं सूत्रमवतारयति—अथेति । व्याध्यादेरन्तरायत्वोपपादनाय सूत्रे चित्तविक्षेपा इति वदिष्यति, तस्य व्याख्यानार्थं भाष्ये वक्रोक्तिः, विक्षेपाः = विक्षेपकाः, सामान्येन दत्तोत्तरं विशेषसंख्याभ्यां पुनः पृच्छति—के पुनरिति ।

"व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः, चित्तविक्षेपकतयैतानि ते पूर्वसूत्रोक्ता अन्तराया इत्यर्थः, व्याचष्टे—नवेति । अन्वयव्यतिरेकाभ्यां चित्ते विक्षेपकत्वमेषां साधयति—सहैत इति। सूक्ष्मकालानाकलनेन सहेत्युक्तम्, एतेषामव्यवधानेनैव व्याध्यादिगोचरा वा तन्निवृत्त्युपायगोचरा वा चित्तस्य वृत्तयो भवन्ति योगभ्रंशिका इत्यर्थः, व्याध्यादीन्नव क्रमेण व्याचष्टे—व्याधिरिति । शरीरधारकत्वाद् धातूनां वातकफपित्तानां, रसानामाहारपरिणामानां, करणानां चक्षुरादिमनआदीनां च वैषम्यं विसदृशभावो व्याधिः, अकर्मण्यता = योगानुष्ठानाक्षमता, आमवातादिना देहस्याकर्मण्यत्वेऽपि चित्तस्य योगाविरोधाच्चित्तस्येत्युक्तम्, संशयाकारमाह—स्यादिति । इदं गुरुशास्त्रोक्तं ज्ञानतत्साधनादि, अभावनमननुसंधानम्, कायगुरुत्वं कफादिना, चित्तगुरुत्वं तमसा, ताभ्यां हेतुभ्यामप्रवृत्तिः समाधिसाधनाननुष्ठानम्, संप्रयोगात्मा सन्निकर्षजन्यो गर्धोऽभिलाषः, विपरीतं ज्ञानं गुर्वादिप्रमितार्थविपरीतनिश्चयः, समाधिभूमेरिति । वक्ष्यमाणानां मधुमत्यादिभूमीनामेकतमस्या अपि साधनानुष्ठानेऽप्यलाभ इत्यर्थः, 'अप्रतिष्ठालाभेऽपि

भवन्ति पूर्वोक्ताश्चित्तवृत्तयः, व्याधिः = धातुरसकरणवैषम्यं, स्त्यानम् = अकर्मण्यता चित्तस्य, संशयः = उभयकोटिस्पृग् विज्ञानं--स्यादिदमेवं नैवं-स्यादिति, प्रमादः = समाधिसाधनानामभावनम्, आलस्यम् = कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः, अविरतिः = चित्तस्य विषयसंप्रयोगात्मा गर्द्धः, भ्रान्तिदर्शनम् = विपर्ययज्ञानम्, अलब्धभूमिकत्वम् = समाधिभूमेरलाभः, अनवस्थितत्वं = यल्लब्धायां भूमौ चित्तस्याप्रतिष्ठा, समाधिप्रतिलम्भे हि तदवस्थितं स्याद्—इत्येते चित्तविक्षेपा नव योगमलाः, योगप्रतिपक्षाः, योगान्तराया इत्यभिधीयन्ते ॥ ३० ॥

**दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥३१॥**

भास्वती ।

उभयकोटिस्पृक् = इदं वाऽदो वेत्युभयप्रान्तस्पर्शि, गुरुत्वाद् = जाड्याद्, निद्रातन्द्राऽऽदितामसावस्थाया या कायचित्तयोः साधनेऽप्रवृत्तिः, विषयसम्प्रयोगात्मा गर्धः=विषयसंस्थारूपा तृष्णा, भ्रान्तिदर्शनं = तत्त्वानामतद्रूपप्रतिष्ठं ज्ञानम्, समाधिभूमिः=मधुमती मधुप्रतीका प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति चतस्रोऽवस्थाः ॥ ३० ॥

तत्त्ववैशारदी ।

व्याध्यादिप्रभृतयस्तेऽपि वृत्तिसाहचर्य्यात् तत्प्रतिपक्षा इत्यर्थः, पदार्थान् व्याचष्टे—"व्याधिः" इति, धातवो = वातपित्तश्लेष्माणः शरीरधारणाद्, अशितपीताहारपरिणामविशेषो रसः, करणानि = इन्द्रियाणि तेषां वैषम्यं = न्यूनाधिकभाव इति, अकर्मण्यता = कर्मानर्हता, संशयः = उभयकोटिस्पृग् विज्ञानम् सत्यप्यतद्रूपप्रतिष्ठत्वेन संशयविपर्य्यासयोरभेदे उभयकोटिस्पर्शास्पर्शरूपावान्तरविशेषविवक्षयाऽत्र भेदेनोपन्यासः, अभावनम् = अकरणं, तत्राप्रयत्न इति यावत्, कायस्य गुरुत्वं कफादिना, चित्तस्य गुरुत्वं तमसा, गर्द्धः = तृष्णा, मधुमत्यादयः = समाधिभूमयः, लब्धभूमेर्यदि तावत्तैव सुस्थितम्मन्यस्य समाधिभ्रेषः स्यात्ततस्तस्या अपि भूमेरपायः स्यात्, यस्मात् समाधिप्रतिलम्भे तदवस्थितं स्यात् तस्मात्तत्र प्रयतितव्यमिति ३०॥

न केवलं नवान्तरायाः, दुःखादयोऽप्यस्य तत्सहभुवो भवन्तीत्याह—"दुःखे"त्यादि ।

पातञ्जलरहस्यम् ।

त्साहः, चित्तस्येति शेषः, उभयकोटीति । एककोटेरबाधितत्वात्, विपर्यये तु एककोटेरप्यभावः, तृष्णा = विषयलौल्यम्, सुस्थितम्मन्यस्य तुष्टस्येति यावत्, समाधिप्रतिलम्भे = लब्धे समाधौ, तदवस्थितं स्यात् चित्तमिति शेषः ॥ ३० ॥

सहभुवः = सहजन्मानः, दुःखमिति । आध्यात्मिकम्,

आत्मा यत्नो धृतिर्बुद्धि स्वभावो ब्रह्म वर्ष्म चे-

वार्त्तिकम् ।

भ्रंशः, ननु लाभोत्तरं भ्रंशे का क्षतिरित्याशङ्कायामाह—समाधिप्रतिलम्भे हीति । प्रतिलम्भो निष्पत्तिर्ध्येयसाक्षात्कार इति यावत्, अयं भावः—साक्षात्कारपर्यन्तमेव चित्तस्य तत्तद्भूम्यवस्थानमपेक्षितमतोऽकृतसाक्षात्कारस्य योगारूढस्यापि भ्रंशोऽनवस्थितत्वमेव भवतीति,

'आरूढयोगोऽपि निपात्यतेऽधः सङ्गेन योगी किमुताल्पसिद्धि'—

रित्यादिस्मृतिश्चात्र प्रमाणमिति, एतेषां तान्त्रिकान् संज्ञाभेदानाह—एत इति ॥ ३० ॥

न केवलमेते व्याध्यादयो योगान्तराया अपि तु दुःखादिरूपेष्वन्तरायान्तरेष्वपि हेतवो-भवन्तीत्याह—

"दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः",दुःखादीन्यत्र क्रमेण व्याचष्टे–दुःख-

दुःखमाध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं च, येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद् दुःखम्, दौर्मनस्यम् = इच्छाऽभिघाताच्चेतसः क्षोभः, यदङ्गान्येजयति = कम्पयति तद् अङ्गमेजयत्वम्, प्राणो यद्बाह्यवायुमाचामति स श्वासः, यत् कोष्ठ्यं वायुं निःसारयति स प्रश्वासः, एते विक्षेपसहभुवो = विक्षिप्तचित्तस्यैते भवन्ति, समाहितचित्तस्यैते न भवन्ति ॥ ३१ ॥

अथैते विक्षेपाः समाधिप्रतिपक्षास्ताभ्यामेवाभ्यासवैराग्याभ्यां निरो-

भास्वती।

दुःखमिति । सुगमम् । अभिहताः = अभिघातप्राप्ताः, उपघाताय = निरासाय ।। ३१ ।।

अथेति । चित्तनिरोधेन सह विक्षेपा निरुद्धा भवन्ति, अभ्यासवैराग्याभ्यां निरोधः

तत्त्ववैशारदी।

प्रतिकूलवेदनीयं दुःखम् आध्यात्मिकं—शारीरं व्याधिवशान्मानसं कामादिवशात्, आधिभौतिकं = व्याघ्रादिजनितम्, आधिदैविकम् = ग्रहपीडाऽऽदिजनितम्, तच्चेदं दुःखं प्राणिमात्रस्य प्रतिकूलवेदनीयतया हेयमित्याह—"येनाभिहता" इति । अनिच्छतः प्राणो यद्बाह्यं वायुमाचामति = पिबति प्रवेशयतीति यावत् स श्वासः समाध्यङ्गरेचकविरोधी, अनिच्छतोऽपि प्राणो यत् कोष्ठ्यं वायुं निःसारयति = निश्चारयति स प्रश्वासः समाध्यङ्गपूरकविरोधी ॥ ३१ ॥

उक्तार्थोपसंहारसूत्रमवतारयति—"अथैत" इति । अथ = उक्तार्थानन्तरम्, उपसंहरन्निदं-

पातञ्जलरहस्यम्।

त्यभिधानात्, प्रतिकूलतया जिहासिततया येन दुःखत्रयेणाभिहता सम्बद्धा इत्यर्थः, अनिच्छतः प्राणायामान्, अधिकृतमभ्यासपदं वैराग्योपलक्षकं तथा च ताभ्यामिति द्विवचनं सङ्गच्छते, षड्विंशतितत्त्वेषु मध्ये एकं मुख्यं तत्त्वमीश्वरः,

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥

पुरुषविशेषश्चेति, षड्विंशतेः प्रकृतत्वात्, क्लेशकर्मसूत्रे पठितत्वात् ॥ ३१ ॥

वार्त्तिकम्।

मिति । आत्मानं स्वसंघातमधिकृत्य जातम् इत्याध्यात्मिकं, तच्च द्विविधं शारीरं मानसं च, शारीरं व्याध्यादिजनितं मानसं कामादिजन्यं, भूतानि प्राणिनो व्याघ्रादीन् लक्षीकृत्य जायत इत्याधिभौतिकं व्याघ्राद्युत्थम्, देवानधिकृत्य जायत इत्याधिदैविकं शीतोष्णाद्युत्थमित्यर्थः, यद्यपि सर्वमेव विपक्षोद्भवं दुःखं मानसं तथाऽपि प्राधान्येन मनोविकारजन्यत्वाजन्यत्वाभ्यां मानसत्वामानसत्त्वविभागः विषयगतदुःखेषु चित्तविक्षेपाणामहेतुत्वात्, दुःखसामान्यस्य त्रिधा विभागो न घटते घटपटादिदुःखानामसंग्रहात्, एवमन्यत्रापि, दुःखसामान्यलक्षणमाह—येनेति । क्षोभः = चाञ्चल्यं, यदङ्गानीति । अङ्गकम्पोऽङ्गमेजयत्वमिति । प्राणेति । पुरुषप्रयत्नं विना स्वयमेव प्राणो यद्बाह्यं वायुमतिशयेनाचामति पिबति शरीरान्तः प्रवेशयति स श्वासनामा विकार इत्यर्थः, कोष्ठ्यमुदरस्थं वायुं निःसारयति बहिः करोति, शेषं पूर्ववत्, सूत्रवाक्यार्थं व्याचष्टे—एत इति । विक्षेपसहभुवो व्याध्यादिविक्षेपोद्भवाः, तत्र हेतुमाह—विक्षिप्तेति । विक्षेपानन्तरमेव जायन्ते विक्षेपनिवृत्तौ निवर्तन्त इत्यर्थः ॥ ३१ ॥

नन्वेतेऽन्तरायाः सकार्याः किमीश्वरप्रणिधानमात्रनिरस्या अथ वाऽन्योपायेनापि निरसितुं शक्या इत्याकाङ्क्षायामुत्तरं प्रयच्छति सूत्रान्तरावतारणाय-अथैत इति*। अथ विक्षेपोत्प-

ख्याः, तत्राभ्यासस्य विषयमुपसंहरन्निदमाह—

**तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥**

विक्षेपप्रतिषेधार्थमे(१)कतत्त्वावलम्बनं चित्तमभ्यसेत्, यस्य तु प्रत्यर्थं-

भास्वती।

साध्यः, तयोर्मध्येऽभ्यासस्य विषयमुपसंहरन् = संक्षिपन्, इदमाह = ईश्वरप्रणिधानादीनां-सर्वेषामभ्यासानां साधारणविषयं सारभूतं समासत आह—तदिति सूत्रेण, विक्षेपप्रतिषेधार्थमेकतत्त्वावलम्बनं = यस्मिन् ध्येयविषय एकतत्त्वात्मकं नानेकभावेषु विचरणस्वभावकं तादृशविषयकं चित्तमभ्यसेत्, ईश्वरप्रणिधान आदौ चित्तमनेकविषयेषु विचरति, यथा—यः क्लेशादिरहितो यः सर्वज्ञो यः सर्वव्यापीत्यादिभावेषु सञ्चरणं नैकतत्त्वालम्बनता चेतसः, अभ्यासबलात्तान् सर्वान् समाहृत्य यदैकस्वरूपध्येयालम्बनं चित्तं क्रियते तदा तादृशादभ्यासात् कायेन्द्रियस्थैर्यं क्षिप्रं प्रवर्त्तते ततश्च विक्षेपा दूरीभवन्ति, एकतत्त्वालम्बनायाहम्भावः श्रेष्ठो विषयः, ईश्वरप्रणिधानेऽप्यात्मानमीश्वरस्थं कृत्वा;

तत्त्ववैशारदी।

सूत्रमाहेति सम्बन्धः, निरोद्धव्ये हेतुरुक्तः "समाधिप्रतिपक्षा" इति। यद्यपीश्वरप्रणिधानादित्यभ्यासमात्रमुक्तं, तथाऽपि वैराग्यमिह तत्सहकारितया ग्राह्यमित्याह—"ताभ्याम्" इति। ताभ्याम् = उक्तलक्षणाभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः, तत्र = तयोरभ्यासवैराग्ययोर्मध्ये, अभ्यासस्य = अनन्तरोक्तस्येति, "तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः",

एकतत्त्वम् = ईश्वरः, प्रकृतत्वादिति—

वैनाशिकानां तत्सर्वमेकाग्रमेव चित्तं नास्ति किञ्चिद् विक्षिप्तमिति तदुपदेशानां तदर्थानां-च (२)प्रवृत्तीनां वैयर्थ्यमित्याह—"यस्य तु" इति। यस्य मते प्रत्यर्थ = अर्य्यमाण एकस्मिन्ननेकस्मिन् वा, नियतं = यावदर्थाभासमुत्पन्नं तत्रैव समाप्तम् अनन्यगामि, अर्थान्तरं ताव-

पातञ्जलरहस्यम्।

उपदेशानाम् अर्यमाणे गृह्यमाणे, शङ्कते—अर्थान्तरमिति।

वार्त्तिकम्।

स्त्यनन्तरमेते विक्षेपा अभ्यासवैराग्याभ्यामित्यादिसूत्रोक्ताभ्यां सामान्याभ्यामेवाभ्यासवैराग्याभ्यां निरस्या न त्वीश्वरप्रणिधानादेवेति नियम इत्यर्थः, एतत्प्रतिपादकतयोत्तरसूत्रमवतारयति—तत्रेति। तयोरभ्यासवैराग्ययोर्मध्येऽभ्यासविषयं जीवेश्वरादिसाधारणं पिण्डीकृत्योपसंहरन् इदं मयोक्तं वक्ष्यमाणसूत्रेणाहेत्यर्थः, यदि हीश्वरप्रणिधानमेव केवलमन्तरायाभावहेतुरिति वक्ष्यमाणसूत्रार्थः स्यात्तदैकतत्त्वाभ्यास इति सामान्योपसंहारो न युज्येत निस्संदेहार्थमीश्वराभ्यास इत्येव वक्तुं युक्तत्वादिति भावः ॥ ३१ ॥

"तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः" एकं स्थूलादि किंचित्, यत्तु—एकतत्त्वशब्देनात्र परमेश्वर एवोक्त इति तन्न—बाधकं विना सामान्यशब्दस्य विशेषपरत्वानौचित्यात्, पूर्वसूत्रप्राप्तत्वेन पौनरुक्त्यापत्तेश्च, सर्वमेव चित्तमेकाग्रं नास्त्येव विक्षिप्तमित्यागामिभाष्यानुपपत्तेश्चेति, उक्तयोर्विक्षेपैकाग्र्ययोर्वक्ष्यमाणपरिकर्मणश्चोपपत्तये चित्तस्य स्थिरतां साधयिष्यन् चित्तस्य क्षणिकत्वादिकं दूषयति—यस्य त्विति। यस्य तु वैनाशिकस्य मते चित्तं प्रत्यर्थनियतमर्था-

(१) यत्त्वत्राभ्युपगम्य भिक्षुणा किंचिदप्येकवस्त्वभिहितमाक्षिप्तं केनापि तत्सहजामूर्यानिबन्धनतयोपेक्ष्यं सद्भिरिति।

(२) प्रवृत्तीनाम् = सर्वदुःखसर्वक्षणिकसर्वस्वलक्षणसर्वशून्यत्वतात्पर्यकोपदेशानुगुणभावनाशालिसाधनविशेषाणाम्।

नियतं प्रत्ययमात्रं क्षणिकञ्च चित्तं तस्य सर्वमेव चित्तमेकाग्रं नास्त्येव विक्षिप्तं, यदि पुनरिदं सर्वतः प्रत्याहृत्यैकस्मिन्नर्थे समाधीयते तदा भवत्येकाग्रमिति अतो न प्रत्यर्थनियतम् , योऽपि (१)सदृशप्रत्ययप्रवाहेण चित्तमेकाग्रं-

भास्वती।

ईश्वरवदहमिति ध्यायेद् , उक्तञ्च—

"एकं ब्रह्ममयं ध्यायेत् सर्वं विप्र ! चराचरम् ।
चराचरविभागञ्च त्यजेदहमिति स्मरन्" ॥ इति,

सर्वेष्वभ्यासेष्वेकतत्त्वालम्बनस्य चेतसोऽभ्यासः श्रेष्ठः, चित्तमेकाग्रं कार्यमित्युपदेशो-न तु योगानामेव किन्तु क्षणिकवादिनोऽपि चित्तस्य निरोधाय तस्यैकाग्र्यमुपदिशन्ति, तेषाञ्च दृष्ट्या चित्तस्यैकाग्र्यं निरर्थकं वाङ्मात्रमित्युपपादयति—अतोऽत्र तदुपन्यासो-नाप्रस्तुत इति, क्षणिकवादिनां नये चित्तं प्रत्यर्थनियतं = प्रत्येकमर्थं उद्भूतं समाप्तञ्च न किञ्चिद् वस्त्वेकक्षणिकचित्तात् क्षणान्तरभाविनि चित्ते गच्छति, तच्च प्रत्ययमात्रम् = तेषां-नये संस्कारा अपि प्रत्ययाः, नास्ति प्रत्ययातिरिक्तं किञ्चिच्छून्योपादानत्वात्, तथा च तेषां चित्तं क्षणिकं = प्रत्येकं क्षणमात्रव्यापि निरन्वयत्वात्, क्षणक्रमेणोदयमानानि चित्तानि पृथक्, पूर्वक्षणिकं चित्तमुत्तरस्य प्रत्ययरूपं निमित्तकारणं पूर्वस्यात्यन्तनाशरूपे निरोध उत्तरं शून्यादेवोत्पद्यते, उक्तञ्च—

"सर्वे संस्कारा अनित्या उत्पादव्ययधर्मिणः ।
उत्पद्य च निरुध्यन्ति तेषां व्युपशमः सुखः" ॥ इति,

तस्येति । एतन्नये सर्वमेव चित्तमेकाग्रं स्याद् निरर्था तेषां विक्षिप्तं चित्तमित्युक्तिः, क्षणिके प्रत्येकं चित्त एकस्यैवार्थस्य वर्त्तमानत्वाद् , यदीति । सर्वतः प्रत्याहृत्यैकस्मिन्नर्थे समाधानमेवैकाग्रतेति चेद् वदति भवांस्तदा चित्तं प्रत्यर्थनियतमिति भवदुक्तिर्बाधिता भवेत्, योऽपीति । उदयमानानां प्रत्ययानां समानरूपतैवैकाग्र्यमित्यपि

तत्त्ववैशारदी।

त्प्रथमं गृहीत्वाऽर्थान्तरमपि पश्चात् कस्मान्न गृह्णातीत्यत आह—"क्षणिकञ्च" इति । क्षणस्याभेद्यत्वेन पूर्वपश्चाद्भावस्याप्यभावः, अस्मन्नये त्वक्षणिकं चित्तं स्वविषय एकस्मिन्ननेकस्मिन् वाऽनवस्थितं प्रतिक्षणं तत्तद्विषयोपादानपरित्यागाभ्यां विषयानियतं विक्षिप्तम्, अतो विक्षेपपरिणाममपनीय शक्यैकाग्रताऽऽधातुमिति तदुपदेशप्रवृत्त्योर्नानर्थक्यमित्याह—"यदि पुनरि"ति । उपसंहरति—"अतो न" इति । वैनाशिकमुत्थापयति—"योऽपि" इति ।

पातञ्जलरहस्यम् ।

अथ सिद्धान्तेन दूषयति-क्षणिकमिति । प्रवाहचित्तं प्रवाहिचित्तस्येत्यर्थः, चित्तसन्तान-

वार्त्तिकम् ।

दर्थान्तरं न गच्छति तथा प्रत्ययमात्रं निराधारवृत्तिमात्रं तथा क्षणिकं च भवतिः तस्य मते सर्वमेव चित्तमेकाग्रमतो विक्षिप्तचित्तानुपपत्तिरित्यर्थः, तदनुपपत्तौ च तेषां स्वशिष्येभ्यः स्वशास्त्रेषु समाध्युपदेशो विफल एवेति भावः, एकस्य चित्तस्य क्रमेण नानाऽर्थविषयकत्वस्वीकारे तु नायं दोष इत्याह—यदि पुनरिति । ततः किमित्यत आह—अतो नेति । योऽपि

(१) अत्र

"तत्स्यादालयविज्ञानं यद् भवेदहमास्पदम् ।
तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेदि"ति ॥

मन्यते तस्य यद्येकाग्रता प्रवाहचित्तस्य धर्मस्तदैकं नास्ति प्रवाहचित्तं-क्षणिकत्वाद्, अथ प्रवाहांशस्यैव प्रत्ययस्य धर्मः स सर्वः सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः, तस्मादेकमनेकार्थमवस्थितं चित्तमिति, यदि च चित्तेनैकेनानन्विताः स्वभावभिन्नाः प्रत्यया जायेरन् अथ कथमन्यप्रत्ययदृष्टस्यान्यः

भास्वती ।

भवतां दृष्टिर्न न्याय्या, सुगमं भाष्यम् , तस्मादिति । चित्तमेकमनेकार्थमवस्थितमिति

तत्त्ववैशारदी ।

मा भूदेकस्मिन् क्षणिके चित्त एकाग्रताऽऽधानप्रयत्नः, चित्तसन्ताने त्वनादावक्षणिके विक्षेपमपनीयैकाग्रताऽऽधास्यत इत्यर्थः

तदेतद् विकल्प्य दूषयति—"तस्य" इति । तस्य दर्शन एकाग्रता यदि प्रवाहचित्तस्य = चित्तसन्तानस्य वा धर्मः, तत्रैकं क्रमवदुत्पादेयु प्रत्ययेष्वनुगतं नास्ति प्रवाहचित्तम्, कुतः ? यद् यावदस्ति तस्य सर्वस्य क्षणिकत्वाद् , अक्षणिकस्य चासत्त्वाद् भवतां दर्शन इति भावः, द्वितीयं कल्पं गृह्णाति—"अथ" इति । (१)सांवृतस्य प्रवाहस्यांशः प्रत्ययः परमार्थः सन् , तस्य प्रत्ययस्यैकाग्रता प्रयत्नसाध्यो धर्मः, दूषयति "स सर्व" इति । सांवृतप्रवाहापेक्षया सदृशप्रवाही वा विसदृशप्रवाही वा, अत परमार्थसता रूपेण प्रत्यर्थनियतत्वाद् यदर्थाभास उत्पन्नस्तत्र समाप्तत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः; यदपनयेनैकाग्रताऽऽधीयत इति, उपसंहरति—'तस्माद्' इति । इतोऽपि चित्तमेकमनेकार्थमवस्थितं चेत्याह—'यदि चे'ति ।

पातञ्जलरहस्यम् ।

स्य, चित्तवृत्तिजातिमत्संतानस्य वेत्यर्थः-नाद्य इत्याह, तत्रैकमिति क्रमवदुत्पादेष्विति । क्रमेणोत्पद्यमानेषु प्रत्ययेषु मध्ये, अनुगतं नास्ति, पृच्छति—कुत इति । उत्तरयति—यद्यावदित्यादि-भावइत्यन्तेन, द्वितीयं निराह—द्वितीयमिति । अथेत्यादिविक्षिप्तचित्तानुपपत्तिरित्यन्तेन भाष्येण, सांवृतस्य प्रवाहस्य = अविद्याप्रदर्शितस्येत्यर्थः, धर्मो भविष्यतीति शेषः, सदृशप्रवाही प्रदीपकलिकावद् विसदृशप्रवाही घटपटकुसूला इतिवत्, परमार्थसतारूपेण क्षणिकत्वेन प्रत्यर्थिनियतत्वात् = प्रतिस्वलक्षणनियतत्वात् यदर्थावभासः यदाकारः, स मासत्वात् = स्वलक्षणान्तरावर्तित्वेनान्यान्याग्राहकत्वात्, यदिति = विक्षेपः, नान्यदृष्टं स्मर-

वार्त्तिकम् ।

वैनाशिकविशेष उक्तदोषपरिहाराय मन्यते सदृशप्रत्ययप्रवाहरूपतैव चित्तस्यैकाग्रता प्रवाहमध्ये विसदृशत्वं च विक्षेप इति, तस्य मतं-योऽपीत्यादिनाऽनूद्य विकल्प्य दूषयति-तस्येति । मत इति शेषः, क्षणिकत्वादिति । अत आश्रयाभावेनैकाग्रताऽनुपपत्तिरिति शेषः, नन्वतीतानागतवर्त्तमानासु सदृशप्रत्ययव्यक्तिषु त्रित्वादिवद्व्यासज्यवृत्तिरेकाग्रता भवत्विति चेन्न—अन्योन्यासमानकालीनेषु व्यासज्यवृत्तित्वासंभवात्, क्षणिकवादिनां सामान्यधर्माभावेन सादृश्यस्य दुर्वचत्वाच्चेति, प्रवाहांशस्य प्रत्येकव्यक्तेरित्यर्थः, दूषयति—स सर्व इति । स सर्वः प्रवाहांशः सदृशप्रत्ययप्रवाहान्तःपाती वा विसदृशप्रत्ययप्रवाहान्तःपाती वा भवतु; उभयथैवैकाग्रः चित्तस्य प्रत्यर्थनियतत्वादित्यादिरर्थः, अतः स्वसिद्धान्तमुपसंहरति—तस्मादिति । अवस्थितं स्थिरम्, परमते दूषणान्तरमाह—यदि चेति । स्वभावभिन्नत्वेन नित्यभिन्नत्वेन त्वयाऽभ्युपगताः प्रत्यया यद्येकचित्तानाश्रिताः स्युरित्यर्थः, अथशब्दः प्रश्ने, अन्यप्रत्ययदृष्ट-

नयमनुसृत्य; प्रवृत्तिविज्ञानधारामवमत्य विक्षेपरूपामालयविज्ञानसंततिमेवैकाग्रतामाशयानस्य योगाचारादेर्मतं निरस्यन्नाह—योऽपीति ।

(१) वस्तुस्वरूपतिरोधायिकाऽविद्या संवृतिः ।

**स्मर्ता भवेद् अन्यप्रत्ययोपचितस्य च कर्माशयस्यान्यः प्रत्यय उपभोक्ता भवेत् ,**

**कथञ्चित् समाधीयमानमप्येतद् गोमयपायसीयं न्यायमाक्षिपति,**

भास्वती।

दर्शनमेव न्याय्यम्, एकम् = प्रवाहरूपेषु सर्वेषु प्रत्ययेष्वन्वितमेकं वस्तु, अनेकार्थे = न प्रत्यर्थम्, अवस्थितम् = अस्मिताऽऽत्मधर्मिरूपेण स्थितमित्यर्थः, क्षणिकमते स्मृतिभोगयोरपि विप्लवः स्यादित्याह—यदीति। एकेन चित्तेन, अनन्विताः = असम्बद्धाः, स्वभावभिन्नाः = भिन्नसत्ताकाः प्रत्यया यदि जायेरंस्तदाऽसम्बद्धानां पूर्वपूर्वप्रत्ययानुभवानां स्मृतिः कथं सङ्गच्छते कर्मफलभोगो वा कथमिति? कथञ्चित् समाधीयमानमप्येतद् गोमयपायसीयन्यायमाक्षिपति = गोमयं गव्यं पायसमपि गव्यमतो गोमयमेव

तत्त्ववैशारदी।

यथा हि मैत्रेणाधीतस्य शास्त्रस्य न चैत्रः स्मर्ता यथा च मैत्रेणोपचितस्य पुण्यस्य पापस्य वा कर्माशयस्य फलं तदसम्बन्धी चैत्रो न भोक्ता, एवं प्रत्ययान्तरदृष्टस्य प्रत्ययान्तरं न स्मरेत्, प्रत्ययान्तरोपचितस्य वा कर्माशयस्य फलं न प्रत्ययान्तरमुपभुञ्जीतेत्यर्थः, ननु नातिप्रसज्ज्यते, कार्यकारणभावे सतीतिविशेषणात्, (१)श्राद्धवैश्वानरीयेष्ट्यादावकर्तृमातापितापुत्रादिगामिफलदर्शनाद्, मधुररसभावितानां वाऽऽम्रबीजादीनां परम्परया फलमाधुर्यनियमाद् इत्यत आह—"कथञ्चित् समाधीनमानमप्येतद्" इति। अयमभिसन्धिः—कः खल्वेकसन्तानवर्त्तिनां प्रत्ययानां सन्तानान्तरवर्त्तिभ्यः प्रत्ययेभ्यो विशेषो येनैकसन्तानवर्त्तिना प्रत्ययेनानुभूतस्योपचितस्य कर्माशयस्य वा तत्सन्तानवर्त्त्येव प्रत्ययः स्मर्त्ता भोक्ता च स्याद्; नान्यसन्तानवर्त्ती, न हि सन्तानो नामास्ति कश्चिद्वस्तुसन् य एनं सन्तानिनं सन्तानान्तरवर्त्तिभ्यो-

पातञ्जलरहस्यम्।

त्यन्य इति न्यायमाश्रित्याह-एवमिति। प्रत्ययान्तरदृष्टस्येव भोक्रन्तरदृष्टस्य प्रत्ययान्तरं न स्मरेत् भोक्रन्तरं न स्मरेत्, नातिप्रसज्यत इति = अतिप्रसङ्गो नास्ति, कार्यकारणभावे = जन्यजनकभाव एकसन्तानवर्तित्वेन, वस्तुतस्तु तत्र दृष्टान्तः श्राद्धेति। यस्मिन् जात एतामिष्टिं निर्वपति स पूतः; एवं तेजस्वी, अन्नादो अनामयावी पशुमान् भवतीति वाचनिकम्, यथा—

"यन्नाम्ना पातयेत्पिण्डं तन्नयेद् ब्रह्म शाश्वतम्"

इत्यादिवाचनिकं न तु सन्तानकार्यकारणता, प्रकरणाद् यथावचनमन्वयः, किञ्च-मधुररसभावितानामित्यादि, अत्रापि नानुपमृद्य प्रादुर्भावादिति न्यायात्, अङ्कुरोत्पत्तिस्तु बीजावयवादेव न तु बीजात्, त्वन्मते त्ववयवानामपि क्षणिकत्वं, गोविकारत्वाद् गोमयमपि पायसं स्यादिति गोमयपायसीयन्यायः, इत्थमेवार्थं स्पष्टयति-अयमभिसन्धिरिति। विनिगमनाभावं शङ्कते-कः खल्विति। अनुभूतस्य = दृष्टस्य श्रुतस्य च, उपचितस्य कर्माशयस्य जनितस्य पापपुण्यादेः, प्रत्ययः = आत्मा, नान्यसन्तानवर्तीत्यत्र दृष्टान्तः-सिक्थज्वलितदीपसन्तानस्य तैलवर्तिज्वलितदीपसन्तानस्यावस्तुत्वेनापि तथेत्याह-न हीति। कल्पनया क्रियासिद्धि-

वार्त्तिकम्।

स्येति। तन्मते चित्तातिरिक्तात्माभावादुक्तम्, उपचितस्य = अर्जितस्य कर्माशयस्यादृष्टस्येत्यर्थः, नन्वेकसंतानोत्पन्नत्वेनानुभवसंस्कारस्मृत्यादीनां कार्यकारणभावाभ्युपगमेनायं दोषः परिहर्त्तव्य इत्याशङ्कायामाह—समाधीयमानमिति। गोमयं पायसं गव्यत्वादित्यादि न्याय-

(१) वैश्वानरीति। जैमिनीयतन्त्रे तुरीयस्य तृतीये—"फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वादित्यत्र व्यक्तमेतत्।

**किञ्च—स्वानुभवापह्नवश्चित्तस्यान्यत्वे प्राप्नोति, कथं ? यदह-**

भास्वती।

पायसमिति न्यायाभासमप्यतिक्रामति, प्रत्यभिज्ञाऽसङ्गत्याऽपि क्षणिकमतमनास्थेयमित्याह—किञ्चेति । प्रतिक्षणिकस्य चित्तस्य भिन्नत्वे सति स्वात्मानुभवापह्नवः प्राप्नोति=

तत्त्ववैशारदी ।

भिन्द्याद् , न च काल्पनिको भेदः क्रियायामुपपद्यते, न खलु कल्पिताग्निभावो माणवकः पचति,न च कार्य्यकारणसम्बन्धोऽपि वास्तवः, सहभुवोः सव्येतरविषाणयोरिवाभावाद् , असहभुवोरपि प्रत्युत्पन्नाश्रयत्वायोगात्, न ह्यतीतानागतौ व्यासज्य प्रत्युत्पन्नं वर्त्तितुमर्हतः, तस्मात्सन्तानेन वा कार्य्यकारणभावेन वा स्वाभाविकेनानुपहिताः परमार्थसन्तः प्रत्ययाः परस्परासंस्पर्शित्वेन स्वसन्तानवर्त्तिभ्यः परसन्तानवर्त्तिभ्यो वा प्रत्ययान्तरेभ्यो न भिद्यन्ते, सोऽयं गोमयं पायसं चाधिकृत्य प्रवृत्तो न्यायो="गोमयं पायसं गव्यत्वादुभयसिद्धपायसवद्" इतिः तमाक्षिपति=न्यायाभासत्वेन ततोऽप्यधिकत्वादिति, न चात्र कृतनाशाकृताभ्यागमं चोद्यं, यतश्चित्तमेव कर्मणां कर्तृ, तदेव तज्जनिताभ्यां सुखदुःखाभ्यां युज्यते, सुखदुःखे च चितिच्छायाऽऽपन्नं चित्तं भुङ्क्त इति पुरुषे भोगाभिमानश्चितिचित्तयोरभेदग्रहादिति, (१)स्वप्रत्ययं प्रतीत्य (२)समुत्पन्नानां स्वभाव एवैषां तादृशो यत्त एव स्मरन्ति फलं चोपभुञ्जते न त्वन्ये; न च स्वभावा नियोगपर्य्यनुयोगावर्हन्ति-एवं भवतु मैवं भूदिति वा कस्मान्नैवमिति वेतिः यः पूर्वोक्ते न परितुष्यति तं प्रत्याह—

"किञ्च—स्वात्मे"ति । उदयव्ययधर्माणामनुभवानामनुभवस्मृतीनां च नानात्वेऽपि तदाश्रयमभिन्नं चित्तमहमिति प्रत्ययः प्रतिसंदधानः कथमत्यन्तभिन्नान् प्रत्ययानालम्बेत , ननु ग्रहणस्मरणरूपकारणभेदात् पारोक्ष्यापारोक्ष्यरूपविरुद्धधर्मसंसर्गाद्वा न प्रत्यभिज्ञानं नामैकः प्रत्ययो यतः प्रत्ययिनश्चित्तस्यैकता स्यादित्यत आह—"स्वानुभवे"ति । ननु कारणभेदवि-

पातञ्जलरहस्यम् ।

न भवतीत्याह—न चेति । न हि गुञ्जापुञ्जारोपितवह्निर्दहति पचति वा, असहभुवोरतीतानागतयोः प्रत्युत्पन्नं वार्तमानिकं प्रत्युपादानत्वायोगात्, तदाह न होति । व्यासज्य युगपद्भावेन, गोमयपायसन्यायस्तु कदा चित् सम्भाव्यते प्रायश्चित्तादावयन्तु न सम्भवतीत्याह—ततोऽपीति । स्वमतं समाधत्ते-न चात्रेति । स्वप्रत्ययं=प्रधानं प्रतीत्य द्विपरार्द्धावसाने संस्कारशेषत्वेन गत्वा समुत्पन्नानां सर्गकाले जातानां चित्तानां स्वभावः कार्यतत्संस्कारयोरन्यतरताः, अन्येन चित्तान्तरेण, नियोगो जलं दहत्विति, पर्यनुयोगः=अग्निः कुतो न क्लेदयत्विति, एतदेव विवृणोति--एवमिति–नानात्वेऽपीति । ज्ञाननिष्ठत्वेनाश्रयस्त्वेक एव सोऽहमितिदृढतरप्रत्यभिज्ञाविषयत्वात्, अहमिति प्रत्यय एकं चित्तं प्रति सन्दधान इत्यन्वयः, भिन्नान् प्रत्ययान्=क्षणिकज्ञानानि,शङ्कते-नन्विति । ग्रहणसामग्री=इन्द्रियार्थसन्निकर्षः स्मरणसामग्री=संस्कार-

वार्त्तिकम् ।

मतिदूषणं समाधीयमानमप्याक्षिपति=तिरस्करोति, तन्न्यायापेक्षयाऽप्येतद्दूषणोद्धरणन्यायआभासीभूत इत्यर्थः, तत्र हि गव्यत्वं हेतुः प्रसिद्धोऽस्ति, अत्र त्वेकसंतानीयत्वरूपो हेतुरप्यप्रसिद्धः संतानस्यैकतानिर्वाहकजात्याद्यनभ्युपगमादिति भावः, दूषणान्तरमाह—किंचेति । स्वस्य बौद्धस्य य आत्मविषयकानुभवस्तस्याप्यपलापश्चित्तस्य प्रतिक्षणमन्यत्वे सति प्रसज्यत इत्यर्थः, पृच्छति—कथमिति । उत्तरं,—यदित्यव्ययमहमो विशेषणम्,

---

(१) स्वप्रत्ययं=आलम्बनप्रत्ययसमनन्तरप्रत्ययाधिपतिप्रत्ययालोकचतुष्टयम् ।

(२) प्रतीत्यसमुत्पादो हेतूपनिबन्धप्रत्ययोपनिबन्धनिबन्धनत्वेन द्विविधीभूय, बाह्यान्तरत्वेन पुनर्द्वैधमाप्य चतुर्विधो भवति, तत्रान्तरप्रतीत्यसमुत्पादस्याविधिकरूपविज्ञानवेदनासंज्ञासंस्कारपञ्चकस्कन्धीसध्रीचीनस्य नैसर्गिकनियत्यैवानुभवसंकारस्मृतीनां सामानाधिकरण्यमिति भावः ।

मद्राक्षं तत्स्पृशामि यश्चास्प्राक्षं तत् पश्यामीत्यहमिति प्रत्ययः सर्वस्य प्रत्ययस्य भेदे सति प्रत्ययिन्यभेदेनोपस्थित एकप्रत्ययविषयोऽयमभेदात्माऽहमितिप्रत्ययः कथमत्यन्तभिन्नेषु चित्तेषु वर्त्तमानः सामान्यमेकं प्रत्ययिनमाश्रयेत् स्वानुभवग्राह्यश्चायमभेदात्माऽहमितिप्रत्ययः, न च प्रत्यक्षस्य माहात्म्यं प्रमाणान्तरेणाभिभूयते प्रमाणान्तरं च प्रत्यक्षबलेनैव व्यव-

भास्वती।

स्वानुभवमपह्नुवातत्यथः, अनुभूयते सर्वैर्यत् सर्वेषां विभिन्नानामपि प्रत्ययानां ग्रहीताऽहमित्येकः प्रत्ययः, यदित्यव्ययं य इत्यर्थः, योऽहमद्राक्षं सोऽहं स्पृशामीत्यनुभवरूपमत्र प्रत्यक्षं प्रमाणम्, अपि च सोऽहम्प्रत्ययः प्रत्ययिनि चेतस्यभेदेन = अविभाज्यैकत्वेन पूर्वाहम्प्रत्ययेन सहाभिन्नोऽहमित्यात्मकत्वेनोपतिष्ठते, एकेति। अयमभेदात्माऽभिन्नस्वरूपोऽहमितिप्रत्ययः, एकप्रत्ययविषयः = एकचित्तविषय इत्यनुभूयते, यदि वहुभिन्नचित्तस्य स विषयस्तदा न तस्य सामान्यस्यैकचित्तस्याश्रयः सङ्घटेत, एवमनुभवापलापः क्षणिकवादिनां नास्त्यत्र किञ्चित् प्रमाणम्, ते हि प्रदीपदृष्टान्तबलेनेदं स्थापयितुमिच्छन्ति न हि दृष्टान्तः प्रमाणं नात्रापि प्रदीपो दृष्टान्तः, तन्मते प्रतिक्षणं हि प्रदीपशिखायां दह्यमानं तैलं भिन्नं तथाऽपि सैकेति प्रतीयते तद्वदुत्पादनिरोधधर्मकाणां चित्तानां प्रवाह— एक इव प्रतीयते, नेदं युक्तम्; प्रदीपशिखायाः पृथग् भ्रान्तो द्रष्टाऽस्ति, अत्र को नाम चित्तैकत्वस्य भ्रान्तो द्रष्टा, न हि प्रदीपशिखा प्रतिक्षणं शून्यादेवोत्पद्यते किन्तु दह्यमानात् तैलादेव वास्तवात् कारणात् तथा चित्तरूपात् प्रत्ययिन एव प्रत्ययधर्मा उत्पद्यन्ते, ते च सर्वे एकचित्तान्वयाः, एकमहमिति साक्षादनुभूयते तच्च प्रत्यक्षं प्रमाणम्, न तदपलापः

तत्त्ववैशारदी।

रुद्धधर्मसंसर्गावत्र बाधकावुक्तावित्यत आह—"न च प्रत्यक्षस्य" इति। प्रत्यक्षानुसारत एव,

पातञ्जलरहस्यम्।

तथा परोक्षं देशकालादिव्यवहितम् अपरोक्षं सन्निहितमित्यादिभेदात्, न चेत्यादि भाष्यं- प्रमाणान्तरमनुमानं, तथा हि—आत्मा प्रतिक्षणं भिन्नः सेयं दीपकलिकेतिवद् इत्याशङ्कानि-

वार्त्तिकम्।

तथा च योऽहमद्राक्षं सोऽहं स्पृशामीत्यादिप्रत्ययेऽहमिति यः प्रत्ययांशः स सर्वस्य प्रत्ययस्य दर्शनस्पर्शनादिरूपस्यान्योन्यभेदे सति तदाश्रये प्रत्ययिनि धर्मिण्यभेदाकारतयाऽनुभवसिद्धोऽस्तीत्यर्थः, आत्मानुभवं व्याख्याय तदपह्नवं व्याचष्टे—एकप्रत्ययेति। अयं चैकप्रत्ययविषयः प्रत्ययव्यक्तिमात्रगोचरको भवन्मतेऽतो भेदाकारोऽहमिति प्रत्ययः कथं भवन्मतेऽत्यन्तभिन्नेषु क्षणिकचित्तेषु विषयत्वेन वर्तमानः सामान्यमेकं विषयीकुर्यादित्यर्थः, सर्वप्रत्ययानुगतधर्मिणः स्थिरचित्तस्यानभ्युपगमादिति भावः, नन्वभेदाकारोऽहंप्रत्यय एवाप्रामाणिक इति ? तत्राह—स्वानुभवेति। अभेदात्मा = अभेदाकारः, ननु यत्सत्तत् क्षणिकमिति सत्त्वेन क्षणिकत्वानुमानादुक्तप्रत्ययो बाधनीयस्तत्राह—न च प्रत्यक्षेति। माहात्म्यं = स्वार्थसाधकत्वं न तर्कादिशून्यप्रमाणान्तरेणाभिभूयते = प्रतिबध्यते, उपजीव्यजातीयत्वेन बलवत्त्वादित्यर्थः शङ्खः पीत इत्यादिप्रत्यक्षं तु तर्कयोगेन बलवताऽनुमानेनैव बाध्यते, एवं देहाद्यात्मताप्रत्यक्षमपि निर्णीतप्रामाण्येन शास्त्रेण संदिग्धप्रामाण्यतया दुर्वलं बाध्यत इति, ननु चित्तातिरिक्तात्मानभ्युपगमिनामयं दोषो न चास्तिकानाम् अहंप्रत्ययस्य स्थिरात्मविषयकत्वाभ्युपगमादतः स्वमते कथं चित्तस्थैर्यसिद्धिरिति चेत् ? पूर्वोक्तात्स्मृतिसंस्कारयोरेकाश्रयतानियमा-

द्वारं लभते तस्मादेकमनेकार्थमवस्थितं च चित्तम् ॥ ३२ ॥

यस्येदं शास्त्रेण परिकर्म निर्दिश्यते तत्कथम् ?

**मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां-भावनातश्चित्तप्रसादनम् ॥ ३३ ॥**

तत्र सर्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेद्, दुःखितेषु करुणां,-पुण्यात्मकेषु मुदिताम्, अपुण्यात्मकेषूपेक्षाम्,

भास्वती ।

शक्यः कर्तुं दृष्टान्तादिभिरिति, उपसंहरति—तस्मादिति ॥ ३२ ॥

यस्येति । उक्तस्य चित्तस्य योगशास्त्रेण स्थित्यर्थं यदिदं परिकर्म=परिष्कृतिर्निर्दिश्यते तत् कथम् ? अस्योत्तरम्—मैत्र्यादीति सूत्रम्, सुखविषया मैत्री, दुःखविषया करुणा, पुण्यविषया मुदिता, अपुण्यविषयोपेक्षा, येषाममैत्र्यादयश्चित्तविक्षेपका आसां भावनया तेषां चित्तप्रसादः स्यात् ततः स्थितिलाभः, स्थित्युपाय एवात्र प्रस्तुत इति द्रष्टव्यम्, तत्रेति । सुखसम्पन्नेषु सर्वप्राणिष्वपकारिष्वपि मैत्रीं भावयेत्, स्वमित्रस्य सुखे जाते यथा सुखी भवेस्तथा भावयेः, मात्सर्येर्ष्याऽऽदीनि चेदुपतिष्ठेरन् मैत्रीभावनया तदुत्पादयेत्, सर्वेषु दुःखितेष्वमित्रमित्रेषु करुणां भावयेत्=तेषां दुःख उपजाते तान् प्रत्यनुकम्पां-

तत्त्ववैशारदी ।

सामग्र्यभेदः, पारोक्ष्यापारोक्ष्यधर्माविरोधश्चोपपादितो न्यायकणिकायाम्, अक्षणिकस्य चार्थक्रिया न्यायकणिकाब्रह्मतत्त्वसमीक्षाभ्यामुपपादितेति सर्वमवदातम् ॥ ३२ ॥

अपरिकर्मितमतयोऽमूयाऽऽदिमतः समाधितदुपायमप्यस्यनुत्पादाच्चित्तप्रसादनोपायान् असूयाऽऽदिविरोधिनः प्रतिपादयितुमुपक्रमते-"यस्येदम्" इति । यस्य चित्तस्य व्युत्थितस्येदं-परिकर्मेत्यर्थः, 'मैत्रीकरुणेत्यादि-प्रसादनमित्यन्तं सूत्रम्', सुखितेषु मैत्रीं=सौहार्दं भावयत-

वार्त्तिकम् ।

दित्यत्रेहि, तदिदं चित्तस्थैर्यमुपसंहरति-तस्मादिति । परिकर्मोपदेशान्यथाऽनुपपत्त्याऽपि चित्तस्थैर्यमनुमीयत इत्याह—यस्येति । हेतुगर्भविशेषणेन यस्य स्थिरचित्तस्येदमागामिसूत्रवक्ष्यमाणपरिकर्मचित्तप्रसादनं स्थितिदार्ढ्यहेतुः परिष्कारः शास्त्रेषु निर्दिश्यत इत्यर्थः ॥३२॥

सूत्रान्तरमुत्थापयितुं पृच्छति—कथमिति । किमुपायकं किंस्वरूपं किंफलं वा परिकर्म ? भवतीत्यर्थः,

अत्र सूत्रेणोत्तरम्—

"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्", प्रसा-(१)दनं स्थितिनिबन्धनमित्यागामितृतीयसूत्रस्थेनान्वयः, अन्यथा तत्र सूत्रे वाशब्दवैयर्थ्यात्, निबन्धनत्वं च स्थित्यभ्रंशहेतुत्वं तच्च स्थितिहेतुश्रद्धाऽऽद्यप्रतिबन्धद्वारा तत्रैवागामिसूत्रे भाष्यव्याख्यानात्, श्रद्धावीर्यस्मृतिसमाधीनामेव स्थितिहेतूनामुक्तत्वाच्च, अत्र सुखादिशब्दस्तद्वाहुल्यलाभाय धर्मधर्म्यभेदात्सुखितावाची, भावना चोत्पादनं प्रसादनं समाधिप्रतिबन्धकरागद्वेषाधर्मादिमलापसारणं तोयादिप्रसादवदित्यर्थः, तत्र सर्वेति । मैत्रीं सौहार्दं करुणां-निरुपधिपरदुःखप्रहाणेच्छां, मुदितां प्रीतिमुपेक्षामौदासीन्यं, सर्वत्र भावयेदित्यन्वयः, भावनानां-चित्तप्रसादे द्वारमाह—एवमस्येति । शुक्लः पापासंभिन्नः ततो धर्मः, इतस्तमःक्षये चित्तं नि-

(१) अत्र भाष्यस्वरसाद् वार्त्तिकस्थप्रसादनपदस्यापि प्रकर्षेण सादनं स्थापनमित्यर्थेन मनःस्थितिकारकत्वमेव पर्यवसितोऽर्थो ज्ञेयः, एतेन कस्य चिदाक्षेपो भिक्षुसंबद्धो मुधैव ।

**एवमस्य भावयतः शुक्लो धर्म उपजायते, ततश्च चित्तं प्रसीदति प्रसन्नमेकाग्रं स्थितिपदं लभते ॥ ३३ ॥**

## प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥

**कोष्ठ्यस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषाद् वमनं प्रच्छर्दनं, विधा-**

भास्वती ।

भावयेद्, न च पैशुन्यनैर्घृण्यहर्षादीन्, समानसमान् वा पुण्यकृतः प्रति मुदितां भावयेत्, सर्वेषां परद्रोहहीनपुण्याचरणं दृष्ट्वा श्रुत्वा स्मृत्वा वा प्रमुदितो भवेद् यथा स्ववर्गीयाणाम् पापकृतामाचरणमुपेक्षेत न विद्विष्यान्नानुमोदयेदिति, एवमिति । अस्य योगिन एवं भावयतः शुक्लो धर्मः = अविमिश्रं पुण्यं जायते, बाह्योपकरणसाध्येन धर्मेण भूतोपघातादिदोषाः सम्भाव्यन्ते मैत्र्यादिना चावदातं पुण्यमेव, प्रकृतमुपसंहरन्नाह—तत इति ।

आभिर्भावनाऽऽदिभिश्चित्तप्रमादस्ततः ऐकाग्र्यभूमिरूपा स्थितिरिति ॥ ३३ ॥

स्थितेरुपायान्तरमाह—प्रच्छर्दनेति । व्याचष्टे-कोष्ठ्यस्येति । कोष्ठगतस्य वायोः प्रयत्नविशेषात् = प्रश्वासप्रयत्नेन सह यथा चित्तं धारणीये देशे तिष्ठेत् तादृशप्रयत्नाद् वमनं प्रच्छर्दनं, ततो विधारणं = यथाशक्ति कियत्कालं यावद् वायोरग्रहणं, ततः प्रयत्नेन

तत्त्ववैशारदी ।

ईर्ष्याकालुष्यं निवर्त्तते चित्तस्य, दुःखितेषु च करुणाम् = आत्मनीव परस्मिन् दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षाकालुष्यं चेतसो निवर्त्तते, पुण्यशीलेषु प्राणिषु मुदितां = हर्षं भावयतोऽसूयाकालुष्यं निवर्त्तते चेतसः, अपुण्यशीलेषु चोपेक्षां = माध्यस्थ्यं भावयतोऽमर्षकालुष्यं निवर्त्तते, ततश्चास्य राजसतामसधर्मनिवृत्तौ सात्त्विकः शुक्लो धर्म उपजायते = सत्त्वोत्कर्षसम्पन्नः सम्भवति, वृत्तिनिरोधपक्षे तस्य प्रसादस्वाभाव्याच्चित्तं प्रसीदति, प्रसन्नं च वक्ष्यमाणेभ्य उपायेभ्य एकाग्रं स्थितिपदं लभते, असत्यां पुनर्मैत्र्यादिभावनायां न त उपायाः स्थित्यै कल्पन्त इति भावः ॥ ३३ ॥

तानिदानीं स्थित्युपायानाह—"प्रच्छर्दनविधारणाभ्यां वा प्राणस्य", वाशब्दो वक्ष्यमाणोपायान्तरापेक्षो विकल्पार्थो न मैत्र्यादिभावनाऽपेक्षया तया सह समुच्चयात्, प्रच्छर्दनं विवृणोति—"कोष्ठ्यस्य" इति । प्रयत्नविशेषाद् = योगशास्त्रोक्तात्, येन कोष्ठ्यो वायुर्नासिकापुटाभ्यां-शनै रेच्यते, विधारणं विवृणोति-"विधारणं प्राणायाम" इति । रेचितस्य प्रा-

वार्त्तिकम् ।

मेलं भवतीत्यर्थः, अदृष्टद्वारकत्वं चैतन्मुख्यत उक्तं रागद्वेषनिवृत्तिरूपदृष्टद्वारकत्वमपि बोध्यम्, तदुक्तं गीतायाम्—

"रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठत"-इति,

ननु चित्तस्य प्रसादाख्यपरिकर्मणैव किं कार्यमित्याकाङ्क्षायामाह—प्रसन्नमिति । स्थैर्यप्रसन्नं चित्तमेकाग्रं भूत्वा स्थिरपदमभ्रंशयोग्यतां लभत इत्यर्थः, स्थितिपदमिति पाठे स्थितिमित्यर्थः, एवं सर्वत्र ॥ ३३ ॥

प्रसादस्य साधनान्तरमाह—

"प्रच्छर्दनविधारणाभ्यां वा प्राणस्य", वाशब्दोऽप्यर्थे, आभ्यामपि चित्तस्य प्रसादनं कुर्यादित्यर्थः, नासिकापुटाभ्यामिति । एकतरपुटेनेत्यर्थः, प्रयत्नविशेषादिति । सूक्ष्मरूपेण यो-

रणं=प्राणायामः, ताभ्यां वा मनसः स्थितिं सम्पादयेत् ॥ ३४ ॥

**विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी॥३५॥**

नासिकाऽग्रे धारयतोऽस्य या दिव्यगन्धसंवित् सा गन्धप्रवृत्तिः, विह्वाऽग्रे दिव्यरससंवित्, तालुनि रूपसंविद्, जिह्वामध्ये स्पर्शसंविद्, जिह्वा-

भास्वती ।

सह चित्तस्यापि धारणीये देशे स्थापनमन्यचिन्तापरिहारश्च, ततः पुनर्ध्येयगतचित्तस्तिष्ठन् वायुं लीलयाऽऽचम्य पुनः प्रच्छर्दनमित्यस्य निरन्तराभ्यासेन चित्तमेकाग्रभूमिकं कुर्यात् ॥ ३४ ॥

स्थितेरुपायान्तरं विषयवतीति । प्रवृत्तिः=प्रकृष्टा वृत्तिः, नासिकाऽग्र इति । योगिजनप्रसिद्धेयं विषयवती प्रवृत्तिः, ताः प्रवृत्तयो नासाऽग्रादौ चित्ताधारणात् प्रादुर्भवन्ति, दिव्यसंविद्=दिव्यविषयो ह्लादयुक्तोऽन्तर्बोधः, एता इति । केषाञ्चिदधिकारिणामेताः प्रवृत्तय उत्पन्नाश्चित्तस्थितिं निष्पादयेयुः, ह्लादकरे विषये दिध्यासायाः स्वत एव प्रवर्त्तनात्, एताः संशयं विधमन्ति,=निर्दहन्ति, छिन्दन्तीत्यर्थः, समाधिप्रज्ञायाश्च ताः पूर्वाभासाः, एतेनेति । चन्द्रादिष्वपि विषयवती प्रवृत्तिरुत्पद्यते तत्र तत्र चित्तधारणाद्, यद्यपीति । यावत् कश्चिदेकदेशो योगस्य न स्वकरणवेद्यः=साक्षात्कृतो भवति

तत्त्ववैशारदी ।

णस्य कोष्ठ्यस्य वायोर्यदायामो=बहिरेव स्थापनं न तु सहसा प्रवेशनम्, तदेताभ्यां प्रच्छर्दनविधारणाभ्यां-वायोर्लघूकृतशरीरस्य मन. स्थितिपदं लभते, अत्र चोत्तरसूत्रगतात् स्थितिनिबन्धनीतिपदात् स्थितिग्रहणमाकृष्य संपादयेदित्यर्थप्राप्तेन सम्बन्धनीयम् ॥ ३४ ॥

स्थित्युपायान्तरमाह—"विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी", व्याचष्टे—"नासिकाऽग्रे धारयत" इति । धारणाध्यानसमाधीन् कुर्वतस्तज्जयाद् या दिव्यगन्धसंवित् तत्साक्षात्कारः, एवमन्यास्वपि प्रवृत्तिषु योज्यम्, एतच्चागमात् प्रत्येतव्यं नोपपत्तितः,

वार्त्तिकम् ।

गशास्त्रोक्तरीत्या, वमनं रेचनमित्यर्थः, विधारणं कुम्भकं तच्चार्थात्पूरणानन्तरमिति बोध्यम्, रेचनोत्तरं पूरणं विना विधारणासंभवात्, प्राणायाम इत्युक्तेः

'प्राणायामश्च विज्ञेयो रेचकपूरककुम्भका'—

इत्यादिस्मृतिभिस्त्रयाणामेव मिलितानां प्राणायामत्वकथनादिति, प्राणायाम इति । एतच्च द्वयं पूरणगर्भं प्राणायाम इत्यर्थः, प्रच्छर्दनविधारणे व्याख्याय समग्रसूत्रार्थमाह—ताभ्यामिति । स्थितिं भावयेत्, प्रसादद्वारेति शेषः, अत्र प्राणायामो यमादिनिरपेक्ष एवोत्तमाधिकारिणो योगसाधनतयोक्तः, द्वितीयपादे च मन्दाधिकारिणो व्युत्थितचित्तस्य यमाद्यष्टाङ्गमध्ये प्राणायामो वक्तव्य इत्यपौनरुक्त्यम्, तथा च स्मृतिः—

प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषमि"ति ॥ ३४ ॥

प्रसादापेक्षया स्थितिनिबन्धनं परिकर्मान्तरमाह—

"विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी", प्रकृष्टा वृत्तिःप्रवृत्तिः साक्षात्काररूपा, विषया गन्धादयः पञ्च विषयत्वेनास्याः सन्तीति विषयवती, सा च स्वसाधनादुत्पन्ना स्वाविषयेष्वपि विवेकपर्यन्तेषु श्रद्धाऽऽद्यप्रतिबन्धहेतुतया स्थितिप्रयोजिका भवतीत्यर्थः, वाशब्दः समुच्चये; आवश्यकतया भाष्ये वाच्यत्वात्, अत्र च मनस इति वचनाद् मनश्चित्तयोरेकतेति बोध्यम्, विषयवतीं प्रवृत्तिं पञ्चप्रकारां दर्शयति-नासिकाऽग्र इति।नासिकाऽग्रे गन्धोपलब्धिस्थाने धारणां कुर्वतो योगिनो यो दिव्यगन्धसाक्षात्कारोऽल्पेनैव कालेन भवति सा

मूले शब्दसंविद्, इत्येताः प्रवृत्तय उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति, संशयं विधमन्ति, समाधिप्रज्ञायाञ्च द्वारीभवन्तीति, एतेन चन्द्रादित्यग्रहमणिप्रदीपरत्नादिषु प्रवृत्तिरुत्पन्ना विषयवत्येव वेदितव्या, यद्यपि हि तत्तच्छास्त्रानुमानाचार्य्योपदेशैरवगतमर्थतत्त्वं सद्भूतमेव भवति, एतेषां यथाभूतार्थप्रतिपादनसामर्थ्यात्, तथाऽपि यावदेकदेशोऽपि कश्चिन्न स्वकरणसंवेद्यो भवति तावत्सर्वं परोक्षमिवापवर्गादिषु सूक्ष्मेष्वर्थेषु न दृढां बुद्धिमुत्पादयति तस्माच्छास्त्रानुमानाचार्य्योपदेशोपोद्बलनार्थमेवावश्यं कश्चिद्विशेषः प्रत्यक्षीकर्त्तव्यः, तत्र तदुपदिष्टार्थैकदेशस्य प्रत्यक्षत्वे सति सर्वं सुसूक्ष्मविषयमप्यापवर्गात्सुश्रद्धीयते, एतदर्थमेवेदं चित्तपरिकर्म निर्दिश्यते, अनियतासु

भास्वती।

तावत सर्वं परोक्षमिव भवति, तस्मादिति। उपोद्बलनं = दृढीकरणम्, अनियतास्विति। अनियतासु = अव्यवस्थितासु वृत्तिषु सतीषु यदा दिव्यगन्धादिप्रवृत्तय उत्पन्नास्तदा तासामुत्पत्तौ, तथा च तद्विषयायां वशीकारसंज्ञायां जातायां = गन्धादिविषयेषु वशीकारवैराग्ये जाते चित्तं समर्थं स्यात् तस्य तस्यार्थस्य गन्धादिविषयस्य प्रत्यक्षीकरणाय सम्प्रज्ञानायेति, तथा च सत्यस्य योगिनः कैवल्याभिमुखाः श्रद्धावीर्य-

तत्त्ववैशारदी।

स्यादेतत्-किमेताद्दग्भिर्वृत्तिभिः कैवल्यं प्रत्यनुपयोगिनीभिरित्यत आह—"एता" इति। एता वृत्तयोऽल्पेनैव कालेनोत्पन्नाश्चित्तमीश्वरविषयायां वा विवेकख्यातिविषायायां वा स्थितौ निबध्नन्ति, नन्वन्यविषया वृत्तिः कथमन्यत्र स्थितिं निबध्नातीत्यत आह—"संशयं विधमन्ति" इति। विधमन्ति = अपसारयन्ति, अत एव "समाधिप्रज्ञायाम्" इति वृत्त्यन्तराणामप्यागमसिद्धानां विषयवत्त्वमतिदिशति-"एतेन" इति। नन्वागमादिभिरवगतेष्वर्थेषु कुतः संशय इत्यत आह—"यद्यपि हि" इति। श्रद्धामूलो हि योगः, उपदिष्टार्थैकदेशप्रत्यक्षीकरणे

वार्त्तिकम्।

गन्धप्रवृत्तिरिति तान्त्रिकपरिभाषा, एवं सर्वत्र व्याख्येयम्. ताल्वादयो रूपाद्युपलब्धिस्थानमिति शास्त्रप्रामाण्यादवधारणीयम्, स्थितिनिबन्धनीति व्याचष्ट-चित्तं स्थितौ निबध्नन्तीति। अर्थान्तरेष्वतिसूक्ष्मेषु दृढस्थितियोग्यं कुर्वन्ति संस्कारद्वारेत्यर्थः, अन्यच्च कुर्वन्तीत्याह—संशयमिति। शास्त्रीयेऽर्थान्तरे संशयं निराकुर्वन्तीत्यर्थः, संशयविधमनप्रकारं च वक्ष्यति, समाधिप्रज्ञायामिति। समाधौ जायते या प्रज्ञा सत्त्वपुरुषान्यतासाक्षात्कारस्तत्र वक्ष्यमाणवैराग्यद्वारोपकुर्वन्ति चेत्यर्थः, एतेनेति। यतो रूपप्रवृत्तिर्विषयवती, एतेन हेतुना रूपप्रधानत्वाच्चन्द्रादिप्रवृत्तयोऽपि स्थितिहेतुतया शास्त्रान्तरेपूच्यमाना अस्यामेव विषयवत्यां प्रवेशनीया इत्यर्थः, अतो न न्यूनतेति भावः, संशयं विधमन्तीति यदुक्तं तत्र शङ्कां निराकुर्वन्नेव तद्विवृणोति—यद्यपि हीति। तैस्तैः शास्त्रैः स्वानुमानैराचार्योपदेशैश्च निर्णीतमर्थतत्त्वं परमार्थभूतमेव भवतीति निश्चयान्न तत्र संशयः संभवतीति शेषः, संशयमुपपादयति—तथाऽपीति। यावच्छास्त्रार्थैकदेशः स्वकरणैश्चक्षुर्मनआदिभिर्न साक्षात्क्रियते तावत्सर्वं शास्त्रादि परोक्षमिव व्याजोक्तिवत् संदिग्धतात्पर्यकं भवतीत्यतो नापवर्गादिषु निश्चयं जनयतीत्यर्थः, तात्पर्यसंशयाहितो हि संशयो निर्णीतेऽप्यर्थे भवति, अत एव शास्त्रमूलकेऽनुमानेऽपि संशयो भवतीत्याशयः, संशयमुपपाद्य तद्विधमनप्रकारमाह—तस्मादिति। उपोद्बलनमत्र पूर्वावधृततात्पर्ये संशयापसारणं, तत्र = शास्त्रेषु, श्रद्धीयते, इदमित्थमेवेति विश्वस्यत इत्यर्थः, एतदर्थं निश्चयाख्यश्रद्धोत्पादनार्थं समाधिप्रज्ञायाः श्रद्धा द्वारीभवतीति यदुक्तं तद्विवृणोति-अनियतास्विति। अनि-

वृत्तिषु तद्विषयायां वशीकारसंज्ञायामुपजातायां समर्थं स्यात्तस्य तस्यार्थस्य प्रत्यक्षीकरणायेति, तथा च सति श्रद्धावीर्यस्मृतिसमाधयोऽस्याप्रतिबन्धेन भविष्यन्तीति ॥ ३५ ॥

## विशोका वा ज्योतिष्मती ॥ ३६ ॥

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीत्यनुवर्त्तते,

भास्वती ।

स्मृतिसमाधयः, अप्रतिबन्धेन = अप्रत्यूहा इत्यर्थः, भविष्यन्तीति, अत्रेदं शास्त्रम्—

"ज्योतिष्मती स्पर्शवती तथा रसवती परा ।
गन्धवत्यपरा प्रोक्ताश्चतस्रस्तु प्रवृत्तयः ॥
आसां योगप्रवृत्तीनां यद्येकाऽपि प्रवर्त्तते ।
प्रवृत्तयोगं तम् प्राहुर्योगिनो योगचिन्तकाः" ॥ इति ॥ ३५ ॥

विशोकेति । विशोका = ब्रह्मानन्दोद्रेकाच्छोकदुःखहीना, ज्योतिष्मती = ज्योतिर्मयबोधप्रचुरा, हृदयेति । हृदयपुण्डरीके = हृत्प्रदेशस्थे ध्यानगम्ये बोधस्थाने न तु मांसादिमये, धारयतो योगिनो बुद्धिसंवित् = व्यवसायमात्रप्रधानोऽन्तर्बोधो ज्ञानव्यापारः स्मृतिरूपो जायते, तत्स्वरूपं भास्वरं = प्रकाशशीलम्, आकाशकल्पम् = आकाशवद् निरावरणमबाधमिति यावत्, तत्र स्थितिवैशारद्यात् = स्वच्छस्थितिप्रवाहान्न तु तदुपलब्धिमात्रात्, प्रकृष्टा वृत्तिर्जायते, सा च प्रवृत्तिः प्रथमं तावत् सूर्येन्दुग्रहमणिप्रभा-

तत्त्ववैशारदी ।

च श्रद्धाऽतिशयो जायते तन्मूलाश्च ध्यानादयोऽस्याप्रत्यूहं भवन्तीत्यर्थः ॥ ३५ ॥

"विशोका वा ज्योतिष्मती", विगतशोका = दुःखरहिता, ज्योतिष्मती = ज्योतिरस्या अस्तीति ज्योतिष्मती प्रकाशरूपा, "हृदयपुण्डरीक" इति। उदरोरसोर्मध्ये यत्पद्मम् (१)अधोमुखं तिष्ठत्यष्टदलं ; रेचकप्राणायामेन तदूर्ध्वमुखं कृत्वा तत्र चित्तं धारयेत्, तन्मध्ये सू-

वार्त्तिकम् ।

यतासु = अव्यवस्थितासु चित्तवृत्तिषु मध्ये तत्तद्गन्धादिप्रवृत्त्या गन्धादीनां दोषदर्शनात् तद्विषयके वशीकारसंज्ञावैराग्ये जाते सति विक्षेपह्रासात् तस्य तस्योत्तरभूमिरूपस्यार्थस्य साक्षात्काराय चित्तं समर्थं स्यादित्यर्थः, वैराग्यस्य द्वारं विक्षेपाख्यप्रतिबन्धनिवृत्तिं स्वयं विवृणोति—तथा च सतीति । वशीकारसंज्ञावैराग्ये च सतीत्यर्थः ॥ ३५ ॥

चित्तस्थैर्यनिबन्धनं परिकर्मान्तरमाह—

"विशोका वा ज्योतिष्मती", विगतः शोको यस्या इति विशोकेति हेतुगर्भविशेषणं, तथा च यतो विशोका: अतो वक्ष्यमाणज्योतिष्मती श्रेष्ठा स्थितिहेतुरित्यर्थः, द्विविधां विशोकां विवृ-

(१) पद्ममिति ।

"अतिरम्यं हि भूतानां पद्मच्छिद्रमधोमुखम् ।
वितस्तिमात्रतो देशे नाभेरूर्ध्वमवस्थितम् ॥
यथैवाष्टदलं पद्मं सुरक्तं मुकुलीकृतम् ।
एवं हृदयपद्मं तल्लम्बते हृदयस्य के ॥
सोमाग्निरविनक्षत्रविद्युद्दत्तेजसा युतम् ।
भाति विश्वस्य कृत्स्नस्य ह्याश्रयो योगिनां सदा" ॥

इत्याद्याकरेभ्यः स्पष्टमेतद् ।

**हृदयपुण्डरीके धारयतो या बुद्धिसंविद्—**

**बुद्धिसत्त्वं हि भास्वरमाकाशकल्पं, तत्र स्थितिवैशारद्यात्प्रवृत्तिः सूर्य्येन्दु-**

भास्वती ।

रूपाकारेण विकल्पते, दिगवयवहीनं ग्रहणरूपं बुद्धिसत्त्वम्, न च सूक्ष्मत्वात् तत्तादृश-स्वरूपेण प्रथममुपलभ्यते, तद्ध्यानेन सह च ज्योतिर्व्याप्तिधारणाऽपि सम्प्रयुक्ता वर्त्तते, तस्मात् सूर्यादेः प्रभा तस्य वैकल्पिकं रूपं = काल्पनिकं नानात्वं न स्वरूपम्, तथा = ततः परमित्यर्थः, अस्मितायाम् = अस्मितामात्रे समापन्नं चित्तं निस्तरङ्गमहोदधि-कल्पं = वितर्कतरङ्गरहितत्वादसङ्कुचितवृत्तिमत्त्वाद्, अतः शान्तमनन्तम् = अबाधं = सीमा-ज्ञानहीनं न तु बृहद्देशव्यासम्, अस्मितामात्रं = सूर्यप्रभाऽऽदिवैकल्पिकभावहीनमहं-म्बोधरूपम् भवति, एषा स्वरूपास्मितताया उपलब्धिः, "पञ्चशिखाचार्यस्य" सूत्रेणैतत् स्व-

तत्त्ववैशारदी ।

सूर्य्यमण्डलमकारो जागरितस्थानं, तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्थानं, तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानं, यस्योपरि परं व्योमात्मकं ब्रह्मनादं तुरीयस्थानमर्द्धमात्रमु-दाहरन्ति ब्रह्मवादिनः, तत्र – कर्णिकायामूर्ध्वमुखी सूर्य्यादिमण्डलमध्यगा ब्रह्मनाड़ी, ततोऽप्यू-र्ध्वं (१)प्रवृत्ता सुषुम्नानाम नाड़ी तया खलु बाह्यान्यपि सूर्य्यादीनि मण्डलानि प्रोतानि, सा हि चित्तस्थानं, तस्यां धारयतो योगिनश्चित्तसंविदुपजायते, उपपत्तिपूर्वकं बुद्धिसंविद आका-रमादर्शयति—"बुद्धिसत्त्वं हि" इति । आकाशकल्पमिति व्यापितामाह-(२)सूर्य्यादीनां प्रभा-स्तासां रूपं तदाकारेण विकल्पते = नानारूपा भवति, मनश्चात्र बुद्धिरभिमतं, न तु महत्त-त्त्वं, तस्य च सुषुम्नास्थस्य वैकारिकाहङ्कारजन्मनः सत्त्वबहुलतया ज्योतीरूपता विव-

वार्त्तिकम् ।

णोति-हृदयेत्यादिना—एषा द्वयी विशोकेत्यन्तेन, हृदयपुण्डरीकालम्बने चित्तं धारयतो या बुद्धि-संवित्तत्साक्षात्कारो भवति यच्च वक्ष्यमाणरीत्याऽस्मितामात्रमस्मीत्येतावन्मात्राकारं चित्तं भ-वति, एषा द्वयी विशोका ज्योतिष्मतीत्युच्यते, इत्यन्वयो भविष्यति, तत्र = बुद्धिसंविदि, ज्यो-तिष्मती संज्ञाया अन्वर्थतामाह-बुद्धिसत्त्वं हीति । बुद्धिरूपं सत्त्वं भास्वरं स्वपरप्रकाशकं तेजो-वद् आकाशवद्विभु च भवति, तत्र बुद्धौ स्थितिवैशारद्याद् निर्मलैकाग्र्याद् बुद्धिप्रवृत्तिः सूर्या-दिप्रभाऽन्तसदृशाकारेण विकल्पते विशेषेणोत्पद्यत इत्यर्थः, अतो विषयस्य ज्योतिष्मत्त्वेन विष-यिणी प्रवृत्तिरपि ज्योतिष्मतीति भावः, अत्र चान्तःकरणस्य विभुत्वमाचार्येण सिद्धान्तितम्, अन्तःकरणस्य चेयं योगशास्त्रोक्ता प्रक्रिया-उदरोरसोर्मध्ये यत्पद्मं तिष्ठत्यधोमुखमष्टदलं तद्रे-चकप्राणायामेनोर्ध्वमुखं कृत्वा तस्मिन्नालम्बने चित्तं धारयेत्, तत्र हि चित्तं तिष्ठति तद्यथा पद्ममध्ये सूर्यमण्डलमकारो जागरितस्थानं, तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्थानं, तस्यो-परि वह्निमण्डलं मकारः सुषुप्तिस्थानं, तदुपरि परं ब्रह्म व्योमात्मकं नादस्तुरीयस्थानमस्ति यम-र्द्धमात्रमुदाहरन्ति योगिनः, तत्कर्णिकायां विष्वग्व्यापिशाखासहस्रवत्या मनोवहनाड्या-

(१) ऊर्ध्वमिति ।

"कन्दस्य मध्यमे भागे सुषुम्ना सम्प्रतिष्ठिता ।
पृष्ठमध्यस्थितेनास्थ्ना सह मूर्ध्नि समागता" ॥

इत्यागमोऽत्रानुसंधेयः ।

(२) व्यापितामाहेति । यत्त्वत्रैतेनेत्यादिना भिक्षूक्तेर्हेयत्वमुक्तं केनापि तदेव हेयम्, अत्र हि तत्तद्वि-षयगोचरत्वाभिप्रायेणान्तःकरणस्याचार्य्येणोक्तैव विभुकल्पता भिक्षुणाऽनूदिता न तु स्वयमेव किमपि सिद्धा-न्तितं, कथमन्यथा "न व्यापकत्वं मनस"-इत्यादिसांख्यसूत्रव्याख्यानेऽन्तःकरणमात्रस्य विभुत्वं तेन प्रत्याख्यायीति ।

न्दुग्रहमणिप्रभारूपाकारेण विकल्पते, तथाऽस्मितायां समापन्नं चित्तं-निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति, यत्रेदमुक्तं-"तमणु-मात्र(१)मात्मानमनुविद्यास्मीत्येवं तावत्संप्रजानीते" इति, एषा द्वयी-विशो-

भास्वती।

च्छीकरोति-तमिति। तमणुमात्रम् = अणुवद्दुर्व्याससिहीनमभेद्यम्, आत्मानम् = महान्तमात्मानम्, अहम्बोधस्य तत्राहङ्कृतिरूपायाः सङ्कुचितवृत्तेरभावात् तस्य महदिति संज्ञा न तु बृहत्त्वात्, अनुविद्य = नानाऽहङ्कृतिहीनेन रूपादिविषयहीनेन चान्तरतमेन वेदनेनोपलभ्य, अस्मीत्येवमस्मितामात्रमन्यविकारहीनं तावत सम्प्रजानीत इति, एतच्च सास्मितसम्प्रज्ञातस्य लक्षणम्, एषेति। अत एषा विशोका द्वयी-एका विषयवती = प्रभाऽऽदिभिर्विकल्पि-

तत्त्ववैशारदी।

क्षिता, तत्तद्विषयगोचरतया च व्यापित्वमपि सिद्धम्, अस्मिताकार्ये मनसि सम्पत्तिं दर्शयित्वाऽस्मितासमापत्तेः स्वरूपमाह-तथाऽस्मितायाम्'' इति,

शान्तम् = अपगतरजस्तमस्तरङ्गम्, अनन्तं = व्यापि, अस्मितामात्रं = न पुनर्नानाप्रभारूपम्, आगमान्तरेण स्वमतं समीकरोति-"यत्र" इति। यत्रेदमुक्तं पञ्चशिखेन-तमणुं दुरधिगमत्वाद्, आत्मानम् = अहङ्कारास्पदं. अनुविद्य = अनुचिन्त्य, अस्मीत्येवं तावज्जानीत-इति। स्यादेतद्-नानाप्रभारूपा भवतु ज्योतिष्मती, कथमस्मितामात्ररूपा ज्योतिष्मतीत्यत आह-"एषा द्वयी" इति। विधूतरजस्तमोमलाऽस्मितैव सत्त्वमयी ज्योतिरिति भावः,

वार्त्तिकम्।

मूलं तिष्ठति, तस्या अलाबुलतिकाया इव ऊर्ध्वमुख्येका शाखा सुषुम्नेति गीयते, तया च शाखारूपया ब्रह्मनाड्या बाह्यान्यपि सूर्यमण्डलानि प्रोतानि सैव मनोवहा नाडी चित्तस्थानं-भवति, तस्यां चित्तं धारयतो योगिनश्चित्तसाक्षात्कारो जायत इति, तथाऽस्मितायामिति। अस्मिताऽत्र नाहंकारः किं त्वात्मतत्त्वं "तमणुमात्रमात्मानमनुविद्य"त्युत्तरवाक्यात्, अस्मिताऽऽत्मताऽहन्तानां पर्यायत्वाच्च, भावप्रत्ययश्च निर्विशेषसामान्यमात्रताबोधनाय प्रयुक्तः, तथा चास्मितायां विविक्तचिन्मात्रे पुरुषे समापन्नं तद्रूपताऽऽपन्नमत एव निस्तरङ्गमहोदधिकल्प-पुरुषाकारत्वात् स्वयमपि तत्कल्पं तथा शान्तं शोकादिनिमित्तक्षोभरहितमनन्तं सर्वतोऽनावृतमस्मितामात्रमस्मीत्येतावन्मात्राकारमन्याकारताशून्यं भवतीत्यर्थः, आत्मनश्चिज्ज्योतिर्मयत्वात् तदाकारस्य ज्योतिष्मत्त्वं स्पष्टमेवेति पुनर्नोक्तम्, नन्वनेनैवात्मसाक्षात्कारेण कृतार्थत्वात् कथमस्य स्थितिविशेषतयोपन्यास इति चेद्? न—कृतात्मसाक्षात्कारेणापि ज्ञाननिष्ठया परवैराग्यार्थमभ्यासापेक्षणादिति, गन्धादिप्रवृत्तिभ्यश्चायमस्मिताप्रवृत्तेर्विशेषो यद्गन्धादिप्रवृत्तयोऽर्थान्तरेषु चित्तस्थैर्यहेतवोऽस्मिताप्रवृत्तिस्तु स्वविषय एवेति, अपि च जीवात्मसाक्षात्कारस्य परमात्मनि चित्तस्थितिहेतुत्वमस्तीति, अस्मिताशब्दार्थं पूर्वाचार्यमुखेन विवृणोति—यत्रेदमिति। अणुमात्रं सूक्ष्मतममनुविद्य श्रवणमननाभ्यामवधार्यास्मीत्येतावन्मात्राकारेण साक्षात्करोतीत्यर्थः, एषा द्वयीति। विषयवती अस्मितामात्रा चेति द्विविधा विशोका ज्योतिष्मतीत्युच्यते शास्त्रकृद्भिः, अनया योगिनश्चित्तं स्थितियोग्यतां प्राप्नोतीत्यर्थः, ननु गन्धादिप्रवृत्तिवद् बुद्धिसंविदोऽपि विषयवतीत्वे पूर्वसूत्रेणैव तद्ग्रहणं युक्तमिति चेद्? न—गन्धादिपञ्चक एव विषयशब्दस्य मुख्यत्वात्तत्प्रवृत्तेरेव मुख्यविषयवत्याः पूर्वसूत्रेणोक्तत्वाद् बुद्धौ च पुरु-

(१) आत्मानमिति। अत्रात्मपदेन भिक्षूक्तं पुरुषग्रहणं केनाप्यपेशलमुक्तं; तदेवापेशलम्, आचार्यपञ्चशिखेनैवात्मपदोपादानाद्, न चास्य साध्यत्वेन साधनकोटिप्रवेशानौचित्यमिति वाच्यम्? तद्दार्ढ्यसंपिपादयिषया हि परवैराग्योत्पादनार्थं तथोक्तौ बाधकाभावाद्, अत एव मिश्रैरहंकारास्पदत्वेनैतद्विवृतम्, भिक्षुस्तु विवरणमेनदुपलक्षणं मत्वा विविक्तत्वेनैनं न्यशिषदिति।

का विषयवती, अस्मितमात्रा च प्रवृत्तिर्ज्योतिष्मतीत्युच्यते, यया योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३६ ॥

## वीतरागविषयं वा चित्तम् ॥ ३७ ॥

वीतरागचित्तालम्बनोपरक्तं वा योगिनश्चित्तं स्थितिपदं लभत इति ॥३७॥

## स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥

भास्वती।

तास्मितारूपा, अन्या चास्मितामात्रा = व्याप्तिप्रभाऽऽदिग्राह्यभावहीनाऽणुवत् सूक्ष्माऽभेद्या ग्रहणमात्ररूपा याऽस्मिता तद्विषयेत्यर्थः, ते उभे ज्योतिष्मतीत्युच्येते योगिभिः सात्त्विकप्रकाशप्राचुर्यात्, तया च ज्योतिष्मत्या प्रवृत्त्या केषाञ्चिदधिकारिणां चित्तस्थितिर्भवति ॥ ३६ ॥

वीतरागेति। रागहीनं चित्तमवधार्य तदालम्बनोपरक्तं योगिनश्चित्तमेकाग्रभूमिकं भवति ॥ ३७ ॥

स्वप्नेति। स्वप्नज्ञानालम्बनम् = अन्तःप्रज्ञं बहीरुद्धं स्वप्ने ज्ञानं भवति भावितस्मर्त्तव्यविषयकम्, तादृशकल्पितविषयालम्बनं चित्तं कुर्यात् तदभ्यासाच्च केषाञ्चित्

तत्त्ववैशारदी।

द्विविधाया अपि ज्योतिष्मत्याः फलमाह-"यया" इति ॥ ३६ ॥

"वीतरागविषयं वा चित्तम्", वीतरागाः = कृष्णद्वैपायनप्रभृतयस्तेषां चित्तं तदेवालम्बनं तेनोपरक्तमिति ॥ ३७ ॥

"स्वप्ननिद्राज्ञानालम्बनं वा", यदा खल्वयं स्वप्ने विविक्तवनसन्निवेशवर्त्तिनीम् उत्कीर्णामिव चन्द्रमण्डलात् कोमलमृणालशकलानुकारिभिरङ्गप्रत्यङ्गैरुपेताम् अभिजातचन्द्रकान्तमणिमयीम् अतिसुरभिमालतीमल्लिकामालाहारिणीं मनोहरां भगवतो महेश्वरस्य

पातञ्जलरहस्यम्।

राकरणं तु दृढतरप्रत्यक्षेण वह्नेः शैत्यानुमानवत ॥ ३२ ॥ ३३-३६ ॥

"वीतरागविषयं वा चित्तं", वीता गता रागद्वेषमोहा येभ्यस्ते वीतरागाः = कृष्णाद्वैपायनादय इति ॥ ३७ ॥

"स्वप्ननिद्राज्ञानालम्बनं वा", उत्कीर्णा = निःसृता, अङ्गानि = करचरणादीनि, प्रत्यङ्गानि = अङ्गुलयस्तैरुपेतां, मालतीमल्लिकागन्धेन मनोहारिणीमिति गन्धानुभावो दर्शितः, सु-

वार्त्तिकम्।

पसाक्षितया विषयशब्दो गौण एव, असङ्गस्य पुरुषस्य बुद्धिबद्बन्धाभावेन सिधात्वर्थायोगात्, अतो बुद्धिसंविदो गौणं विषयवत्त्वमत्र सूत्रे प्रोक्तमिति विशोकत्वं चास्मितासंविदः साक्षादेवास्ति 'तरति शोकमात्मवि'दिति श्रुतेः, बुद्धिसंविदस्तु विशोकत्वं संकल्पसिद्ध्या किं वा विवेकख्यातिद्वारेति बोध्यम् ॥ ३६ ॥

चित्तस्थैर्यकारणं परिकर्मान्तरमाह—

"वीतरागविषयं वा चित्तम्", व्याचष्टे-वीतेति। वीतरागं यत्सनकादीनां चित्तं तदेवालम्बनं तेनोपरक्तं तद्धारणया तदाकारताऽऽपन्नं योगिचित्तं विरक्तं सदालम्बनान्तरेऽपि स्थितियोग्यतां लभत इत्यर्थः ॥ ३७ ॥

तथैव परिकर्मान्तरमाह—

"स्वप्ननिद्राज्ञानालम्बनं वा", स्वप्नज्ञानं स्वप्नरूपं ज्ञानं तदालम्बनकं चित्तं प्रपञ्चज्ञाने। स्वप्नदृष्टिमच्चित्तमिति यावत्, तथा चोक्तम्—

स्वप्नज्ञानालम्बनं निद्राज्ञानालम्बनं वा तदाकारं योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३८ ॥

## यथाऽभिमतध्यानाद्वा ॥ ३९ ॥

यदेवाभिमतं तदेव ध्यायेत्, तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति ॥ ३९ ॥

भास्वती।

स्थितिर्भवति, तथा निद्राज्ञानालम्बनेऽपि, निद्रा = सुषुप्तिः स्वप्नहीना, नान्तःप्रज्ञं न बहिःप्रज्ञं तत्रास्फुटं ज्ञानं तदवलम्बनचित्ताभ्यासादपि केषाञ्चित् स्थितिः ॥ ३८ ॥

यदिति । ईश्वरादीनि यान्यालम्बनान्युक्तानि ततोऽन्यद् यत् कस्य चिदभिमतं योगमुद्दिश्य तस्यापि ध्यानात् स्थितिः, एवं स्थितिं लब्ध्वा पश्चादन्यत्र = तत्त्वविषय इत्यर्थः स्थितिं लभते, तत्त्वेषु स्थितिरेव सम्प्रज्ञातो योगो नान्यत्रेति विवेच्यम्, संप्रज्ञातसिद्धावेवासम्प्रज्ञातो नान्यथा ॥ ३९ ॥

तत्त्ववैशारदी।

प्रतिमामाराधयन्नेव प्रबुद्धः प्रसन्नमनास्तदा तामेव स्वप्नज्ञानावलम्बनीभूतामनुचिन्तयतस्तस्य तदेकाकारमनसस्तत्रैव चित्तं स्थितिपदं लभते, निद्रा चेह सात्त्विकी ग्रहीतव्या, यस्याः प्रबुद्धस्य सुखमहमस्वाप्समिति प्रत्यवमर्शो भवति, एकाग्रं हि तस्यां मनो भवति, तावन्मात्रेण चोक्तम्—एतदेव ब्रह्मविदो ब्रह्मणो रूपमुदाहरन्ति सषुप्तावस्थेति, ज्ञानं च ज्ञेयरहितं न शक्यं गोचरयितुमिति ज्ञेयमपि गोचरीक्रियते ॥ ३८ ॥

"यथाऽभिमतध्यानाद्वा", किं बहुना यदेवाभिमतं तत्तद्देवतारूपमिति ॥ ३९ ॥

पातञ्जलरहस्यम्।

सुखमहमस्वाप्सं, प्रसन्नं मे मनो, लघूनि मे गात्राणि, इदमुक्तं रूपं = दृष्टान्तः, सर्वे प्रत्यया निरालम्बनाः प्रत्ययत्वात् स्वप्नप्रत्ययवदिति बौद्धास्तान्निराह—ज्ञानञ्चेति । सर्वे प्रत्ययाः यथाऽर्थाः प्रत्ययत्वाद् जाग्रद्घटादिप्रत्ययवद्

"अर्थस्य व्यभिचारित्वे विश्वासः किंनिबन्धनः"

इत्युक्तेः ॥ ३८ ॥

अभिमतं = शास्त्राविरुद्धं नग्नस्त्र्यादिवारणार्थम् ॥ ३९ ॥

वार्त्तिकम्।

"दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम्" इति,

इयं च दृष्टिः कामदुघत्वादिगुणैर्वाचि धेनुदृष्टिवत् क्षणभङ्गुरविषयकत्वादिगुणैर्जाग्रद्ज्ञाने स्वप्नदृष्टिरूपेति, एतदपि वैराग्यद्वारा चित्तस्थैर्यहेतुरित्याशयः, निद्राज्ञानालम्बने चेति । निद्रारूपं ज्ञानमेवालम्बनं यस्य तत्तथा सर्वजीवेषु विस्मृतात्मकेषु सुषुप्तदृष्टिमच्चित्तमिति यावत्, यदुक्तम्—

"ब्रह्माद्यं स्थावरान्तं च प्रसुप्तं यस्य मायया ।
तस्य विष्णोः प्रसादेन यदि कश्चित् प्रमुच्यते ॥
चराचरं लय इव प्रसुप्तमिह पश्यताम् ।
किं मृषा व्यवहारेषु न विरक्तं भवेन्मनः"॥ इति,

भाष्यं च सुगमम् ॥ ३८ ॥

"यथाऽभिमतध्यानाद्वा", किं बहुना यदेवाभिमतं हरिहरमूर्त्यादिकं तदेवादौ ध्यायेत् तस्मादपि ध्यानात्तत्र लब्धस्थितिकस्य चित्तस्यान्यत्रापि विवेकपर्यन्तसूक्ष्मेषु विनैव साधनान्तरं स्थितियोग्यता भवतीत्यर्थः, इत्थमेव व्याचष्टे—यदेवेति ॥ ३९ ॥

**परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥**

**सूक्ष्मे निविशमानस्य परमाण्वन्तं स्थितिपदं लभत इति , स्थूले निविशमानस्य परममहत्त्वान्तं स्थितिपदं चित्तस्य, एवं तामुभयीं कोटिमनुधावतो योऽस्याप्रतिघातः स परो वशीकारः, तद्वशीकारात्परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्मापेक्षत इति ॥ ४० ॥**

**अथ लब्धस्थितिकस्य चेतसः किंरूपा किंविषया वा समापत्तिरिति ?**

भास्वती।

स्थितेश्चरमोत्कर्षमाह—अस्य = स्थितिप्राप्तस्य चित्तस्य परमाण्वन्तः परममहत्त्वान्तश्च यदाऽव्याहतप्रचारस्तदा वशीकारः = सम्यगधीनत्वादभ्याससमाप्तिरित्यर्थ इति सूत्रार्थः। सूक्ष्मं इति । परमाण्वन्तम् = परमाणुस्तन्मात्रं यस्यावयवोऽभेद्यस्तत्पर्यन्तम्, स्थूले = सूक्ष्मप्रतिपक्षे महत्त्वे न तु स्थौल्ययुक्ते द्रव्ये, परममहत्त्वम् = अनन्तास्मितारूपमान्तरम्, ब्रह्माण्डादिरूपं बाह्यम्, उभयीं कोटिम् = उभयं प्रान्तम्, अप्रतिघातः = अव्याहतप्रसारः, तदिति । सर्वाजाभ्यासस्यात्र परिसमाप्तिः परिष्कारकार्यस्याभावात्, वक्ष्यमाणायाः समापत्तेर्विषय एव ग्रहीतृग्रहणग्राह्याणाम् महान् भावोऽणुभावश्चेति ॥४०॥

समापत्तिस्वरूपमाह—

अथेति । अथ लब्धस्थितिकस्य = एकाग्रभूमिकस्य चेतसः किंस्वरूपा = किम्प्रकृति-

तत्त्ववैशारदी।

कथं पुनः स्थितिपदमात्मीभावोऽवगन्तव्य इत्यत आह— "परमाणुपरममहत्त्वान्तोऽस्य वशीकारः", व्याचष्टे—"सूक्ष्म" इति । उक्तमर्थं पिण्डीकृत्य वशीकारपदार्थमाह—"एवं तामुभयीम्" इति । वशीकारस्यावान्तरफलमाह—"तद्वशीकाराद्" इति ॥ ४० ॥

तदेवं चित्तस्थितेरुपाया दर्शिताः, लब्धस्थितिकस्य वशीकारोऽपि दर्शितः—सम्प्रति लब्धस्थितिकस्य चेतसः किंविषयः, किंरूपश्च संप्रज्ञातो भवतीति पृच्छति—"अथ" इति ।

पातञ्जलरहस्यम्।

"परमाणुपरममहत्वान्तोऽस्य वशीकारः" निरवयवत्वाविशेषेऽपि चित्तस्य व्यापित्वाव्यापित्वे विशेषः सम्प्रज्ञातसमाधेरिति शेषः ॥ ४० ॥

"क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः",

वार्त्तिकम्।

परिकर्मनिष्पत्तेर्लक्षणमाह—

"परमाणुपरममहत्त्वान्तोऽस्य वशीकारः", अस्य = परिकर्मितचेतसः, परमं महत्त्वं येषां पुरुषादीनां ते परममहत्त्वाः, व्याचष्टे—सूक्ष्मेऽल्पपरिमाणे चित्तस्य निवेशनमवस्थानमभीप्सोरित्यर्थः, लभते योगीति शेषः, स्थूल इति । स्थूले महापरिमाणे, अन्यत् पूर्ववत्, एवं तामिति । एतत् स्थूलसूक्ष्मरूपं कोटिद्वयं पक्षद्वयं चरतोऽस्य चित्तस्य योऽप्रतिघातः केनाप्यप्रतिबद्धता स वशीकारश्चित्तस्य विधेयत्वं भवतीत्यर्थः, परशब्दादपरोऽपि वशीकारोऽस्ति दोषदर्शनजन्यो वशीकारसंज्ञारूप इति भावः, तदपेक्षयाऽस्य परत्वे हेतुमाह—तद्वशीकारादिति । तस्माद्वशीकारात्परिपूर्णं समाहस्थैर्यसाधनाकाङ्क्षं चित्तमभ्यासान्तरसाध्यं परिष्कारं नापेक्षत इत्यर्थः, वशीकारसंज्ञावैराग्यानन्तरमपि तु चित्तमभ्यासकृतं वशीकारमपेक्षत एवेति तदपरं निकृष्टमिति भावः ॥४०॥

तदेवमभ्यासवैराग्यादिकं परिकर्मान्तं योगसाधनमभिहितं सामान्यतो योगद्वितयं च प्रोक्तमतः परं योगयोः फलं वक्तव्यं, तत्रादौ संप्रज्ञातस्य फलं ध्यानादिक्रियावृत्तं प्रतिपादयन्सूत्रमवतारयति—अथेति । अथशब्दः प्रश्ने, समापत्तिः सम्यगालम्बनाकारत्वापत्तिः प्रत्यक्ष-

तदुच्यते—

**क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थ-तदञ्जनता समापत्तिः ॥ ४१ ॥**

क्षीणवृत्तेरिति। प्रत्यस्तमितप्रत्ययस्येत्यर्थः, अभिजातस्येव मणेरिति दृष्टान्तोपादानं, यथा स्फटिक उपाश्रयभेदात्तत्तद्रूपोपरक्त उपाश्रयरूपाकारेण निर्भासते तथा ग्राह्यालम्बनोपरक्तं चित्तं ग्राह्यसमापन्नं ग्राह्यस्व-

भास्वती।

का, किंविषया वा समापत्तिरिति ? तदुच्यते-क्षीणवृत्तेः = एकाग्रभूमिकस्य चित्तस्य, अभिजातस्य = स्वच्छस्य मणेरिव, ग्रहीतृग्रहणग्राह्याणि समापत्तेर्विषयाः, तत्स्थतदञ्जनता तस्याः सामान्यं स्वरूपम्, ग्राह्यादिविषयेषु सदैव या स्थितता तद्विषयैश्च योपरक्तता यथा स्वच्छस्य मणेः चञ्चकेनोपरागः सैव समापत्तिः सम्प्रज्ञातस्य योगस्यापरपर्याय इति सूत्रार्थः, क्षीणेति । ऐकाग्र्यसंस्कारप्रचयात् प्रत्यस्तमितप्रत्ययस्य = ध्येयादन्यप्रत्ययै-

तत्त्ववैशारदी।

अत्रोत्तरसूत्रमवतारयति-"तदुच्यते" इति। सूत्रं पठति—"क्षीणवृत्तेरित्यादि-समापत्त्यन्तम्", तद्व्याचष्टे-"क्षीण" इति । अभ्यासवैराग्याभ्यां क्षीणराजसतामसप्रमाणादिवृत्तेश्चित्तस्य तस्य व्याख्यानं-'प्रत्यस्तमितप्रत्ययस्य'इति। तदनेन चित्तसत्त्वस्य स्वभावस्वच्छस्य रजस्तमोभ्यामभिभव उक्तः, दृष्टान्तं स्पष्टयति—'यथा' इति। उपाश्रयः = उपाधिः जपाकुसुमादिः, उपरक्तः = तच्छायाऽऽपन्नः, उपाश्रयस्य यदात्मीयं रूपं लोहितनीलादि तदेवाकारस्तेन लक्षितो निर्भासते, दार्ष्टान्तिके योजयति—"तथा ग्राह्य" इति। ग्राह्यञ्च तदालम्बनञ्च तेनोपरक्तं तदनुविद्धं, तदनेन ग्रहीतृग्रहणाभ्यां व्यवच्छिनत्ति—आत्मीयमन्तःकरणरूप-

पातञ्जलरहस्यम्।

उपाश्रयस्य = उप समीपे स्थापितस्य जपापुष्पादेः, अपिधाय – तिरस्कृत्य, मरकतक्षिप्तदुग्धस्येव मरकताकारवद्, अर्थाकारवदित्याह, स्थूलसूक्ष्मक्रमेण ग्राह्यमुक्त्वा ग्रहणमाह-सर्वेषामानन्दा-

वार्त्तिकम्।

वृत्तिरित्यर्थः, चित्तस्य चेयं प्रज्ञाऽऽख्यावस्था संप्रज्ञातेष्वेव भवति न तु धारणाध्यानसमाधिषु, तेषु सामग्र्येणालम्बनाग्रहणात् साक्षात्कारस्यैव विशेषाकारत्वादिति,

"क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिः", क्षीणवृत्तेरपगतवृत्त्यन्तरस्य चित्तस्येत्यर्थः, अभिजातस्य निर्मलस्य मणेरिव ग्रहीत्रादिषु तत्स्थितततया तदञ्जनता सम्यक्तदाकारता जायते, सा च समापत्तीतिशब्दवाच्या भवतीत्यर्थः, अत्र संप्रज्ञातफलभूतायाः प्रज्ञायाः समापत्तिरिति तान्त्रिकी परिभाषाऽपि प्रसङ्गादुक्ता, सा चासंप्रज्ञातव्यावृत्तस्य संप्रज्ञातस्वरूपस्य परिचायकं तस्यैव संप्रज्ञातयोग इति पश्चाद्वक्ष्यते "ता एव सबीजः समाधिरि"ति सूत्र इति, क्षीणवृत्तेरिति हेतुगर्भविशेषणस्यायमाशयः-चित्तस्य स्वत एव सर्वार्थसाक्षात्कारसामर्थ्यमस्ति विषयान्तरव्यासङ्गदोषादेव तु तत्प्रतिबद्धमतो वृत्त्यन्तरप्रतिबन्धस्य निःशेषतो विगमे स्वत एव ध्येयवस्तुसाक्षात्कारस्तद्रूपापत्त्याख्यो भवतीति, भाष्ये "प्रत्यस्तमिते"ति। प्रत्ययस्य प्रत्ययान्तरस्येत्यर्थः, समापत्तेरपि प्रत्ययत्वात्, उत्पत्तिक्रमानुरोधेन सौत्रंपाठक्रममुल्लङ्घ्य ग्राह्यादिसमापत्तीः सदृष्टान्ता व्याख्यानायादौ स्वयं विवृणोति—यथेति। उपाश्रयभेदाज्जपाकुसुमाद्युपाधिविशेषात्तद्रूपोपरक्तस्तत्प्रतिबिम्बोद्ग्राही सन् स्फटिक उपाधितुल्याकारतयैव निर्भासते प्रतीयते तथा ग्राह्येणालम्बनेनोपरक्तं समर्पितप्रतिबिम्बं वृत्तेः प्रत्यक्षरूपतालाभाय ग्राह्यसमापन्नमिति ग्राह्यगतविशेषाकारमित्यर्थकमेवं भूतं चित्तं ग्राह्यान्यूना-

रूपाकारेण निर्भासते, भूतसूक्ष्मोपरक्तं भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्वरूपाभासं भवति, तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं स्थूलरूपाभासं भवति, तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं भवति, तथा ग्रहणेष्वपि = इन्द्रियेष्वपि द्रष्टव्यम्, ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते, तथा ग्रहीतृपुरुषालम्बनोपरक्तं ग्रहीतृपुरुषसमापन्नं ग्रहीतृपुरुषस्वरूपाकारेण निर्भासते, तथा मुक्तपुरुषालम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तपुरुषस्वरूपाकारेण निर्भासते, तदेवमभि-

भास्वती।

हीनस्य, तथेति। ग्राह्यालम्बनं द्विधा—भूतसूक्ष्मं = तन्मात्राणि; तथा स्थूलं = पञ्चमहाभूतानि, स्थूलतत्त्वान्तर्गतो विश्वभेदो घटपटादिभौतिकवस्तूनीत्यर्थः, ग्रहणालम्बनं = ग्रहणं = कारणं तदालम्बनम्, न त्विन्द्रियाणां गोळका ग्रहणविषयास्ते हि स्थूलभूतान्तर्गता एव, इन्द्रियशक्तय एव ग्रहणम्, तच्च रूपादिविषयाणां ग्रहणव्यापार इन्द्रियाधिष्ठानेषु चित्तधारणादुपलब्धव्यम्, ग्रहीता पुरुषाकारा बुद्धिर्महानात्मा, स चास्मीतिमात्र-

तत्त्ववैशारदी।

मपिधाय ग्राह्यसमापन्नं = ग्राह्यतामिव प्राप्तमिति यावत्, अतो ग्राह्यस्वरूपाकारेण निर्भासते, ग्राह्योपरागमेव सूक्ष्मस्थूलताभ्यां विभजते—"भूतसूक्ष्म" इति। विश्वभेदश्चेतनाचेतनस्वभावो गवादिर्घटादिश्च द्रष्टव्यः, तदनेन वितर्कविचारानुगतौ समाधी दर्शितौ, "तथा ग्रहणेष्वपीन्द्रियेषु" इति। "गृह्यन्त एभिरर्था इति ग्रहणानीन्द्रियाणि, एतदेव स्पष्टयति—"ग्रहणालम्बने"ति। ग्रहणं चालम्बनं च तदिति ग्रहणालम्बनं तेनोपरक्तम् = अनुविद्धम्, आत्मीयमन्तःकरणरूपमपिधाय, ग्रहणमिव = बहिःकरणमिवापन्नमिति, तदनेनानन्दानुगतमुक्त्वाऽस्मिताऽनुगतमाह—"तथा ग्रहीतृपुरुष" इति। अस्मिताऽऽस्पदं हि ग्रहीता पुरुष इति भावः, पुरुषत्वाविशेषादनेनैव मुक्तोऽपि पुरुषः शुकप्रह्लादादिः समाधिविषयतया संग्रहीतव्य इत्याह-"तथा मुक्त" इति। उपसंहरन् तत्स्थतदञ्जनतापदं व्याचष्टे-"तदेवम्" इति। तेषु = ग्रहीतृग्रहणग्राह्येषु, स्थितस्य = धारितस्य ध्यानपरिपाकवशादपहतरजस्तमोमलस्य चित्तसत्त्वस्य, या तदञ्जनता = तदाकारता, सा समापत्तिः = सम्प्रज्ञातलक्षणो योग उच्यते,

पातञ्जलरहस्यम्।

नामुपस्थमेकायनमिति श्रुतिमाश्रित्याह—आनन्दानुगतमिति। अस्मिताऽऽस्पदमहंप्रत्य-

वार्त्तिकम्।

कारेणैव साक्षिणि निर्भासत इत्यर्थः, यत्र समापत्तिरूपस्य प्रत्यक्षस्य प्रामाण्याय ग्राह्यरूपाकारेण निर्भासत इत्यनेन तत्फलमुक्तं पौरुषेयबोधस्यैव प्रमाणफलत्वादिति, एवं सर्वत्र ग्राह्यसमापत्ताववान्तरं त्रैविध्यमाह—भूतेति। अत्र भूतसूक्ष्मशब्देन तन्मात्रादिप्रकृतिपर्यन्तं गृहीतं सूक्ष्मशब्दस्य कारणार्थतया नात्रेन्द्रियग्रहणं, स्थूलशब्देन च महाभूतानि गृहीतानि विश्वभेदशब्देन च स्थावरजङ्गमादयोऽवान्तरभेदा ग्राह्याः, अन्यत् पूर्ववत्, गृह्यतेऽनेनेति ग्रहणमिन्द्रियं तत्र समापत्तौ सूक्ष्मस्थूलविश्वभेदरूपं त्रैविध्यमतिदिशति—तथा ग्रहणेष्वपीति। इन्द्रियाणां सूक्ष्मं बुद्ध्यहंकाराविति भाष्यकारो वक्ष्यति, स्थूलं च चक्षुरादिकं विश्वभेदश्च स्थावरजङ्गमानां चक्षुरादिविशेषा इति, अवान्तरविभागमतिदिश्य ग्रहणसमापत्तिं सामान्यतो दर्शयति—ग्रहणालम्बनेति। पूर्ववद्व्याख्येयम्, ग्रहीतृसमापत्तिं पूर्ववद्व्याचष्टे—तथा ग्रहीत्रिति। ग्रहीतृत्वं बुद्धेरपि व्यपदिश्यत इति तद्व्यावर्त्तनाय पुरुषपदम्, अत्र ग्रहणफलोपहितत्वं ग्रहीतृत्वं स्वरूपयोग्यतापरत्वे मुक्तपुरुषेषु पृथग्वचनानौचित्यात्, ईश्वरस्य चात्रैव प्रवेशः, ग्रहणस्वरूपयोग्यमात्रेष्वपि समापत्तिं व्याचष्टे—मुक्तेति। मुक्ता आत्यन्तिकलयं गताः शुकादयः, सम-

जातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु = पुरुषेन्द्रियभूतेषु, या तत्स्थ-तदञ्जनता = तेषु स्थितस्य तदाकारापत्तिः, सा समापत्तिरित्युच्यते ॥ ४१ ॥

**तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः॥४२॥**

तद् यथा गौरितिशब्दो, गौरित्यर्थः, गौरिति ज्ञानमित्यविभागेन वि-

भास्वती।

बोधो ज्ञातृत्वकर्तृत्वधर्तृत्वबुद्धेराश्रयो मूलं सर्वचित्तव्यापारस्य, द्रष्टृपुरुषसारूप्यात् स ग्रहीतृपुरुष इत्युच्यते ॥ ४१ ॥

समापत्तेः सामान्यलक्षणमुक्त्वा तद्विशेषमाह–विषयप्रकृतिभेदात् समापत्तयश्चतुर्विधाः—तद्यथा—सवितर्का, निर्वितर्का, सविचारा, निर्विचारा चेति, सवितर्काया लक्षणमाह—तत्रेति। स्थूलविषयेत्याध्याहार्यं सविचारनिर्विचारयोः सूक्ष्मविषयत्वाद्, व्याचष्टे–तद्यथेति। गौरितिशब्दः कर्णग्राह्यो वागिन्द्रियस्थितः, गौरित्यर्थः चक्षुस्त्वगिन्द्रियग्राह्यो-गोष्ठादौ स्थितः, गौरितिज्ञानं चेतसि स्थितमिति विभक्तानामपि = पृथग्भूतानामपि, अविभागेन सङ्कीर्णैकरूपेण ग्रहणं विकल्पज्ञानात्मकं दृश्यते, विभज्यमाना इति। तादृशस्य सङ्कीर्णविषयस्य धर्मा विभज्यमानाः = विविच्यमाना अन्ये शब्दधर्माः = वर्णात्मकत्वादि-

तत्त्ववैशारदी।

तत्र च ग्रहीतृग्रहणग्राह्येष्विति सौत्रः पाठक्रमोऽर्थक्रमविरोधान्नादर्त्तव्यः, एवम्भाष्येऽपि प्रथमं भूतसूक्ष्मोपन्यासोऽप्यनादरणीय इति सर्वं रमणीयम् ॥ ४१ ॥

सामान्यतः समापत्तिरुक्ता, सेयमवान्तरभेदाच्चतुर्विधा भवति, तद्यथा–सवितर्का, निर्वितर्का, सविचारा, निर्विचारा चेति, तत्र सवितर्कायाः समापत्तेर्लक्षणमाह—"तत्रेत्यादि-समापत्त्यन्तं" सूत्रम्, तत्र = तासु समापत्तिषु मध्ये सवितर्का समापत्तिः प्रत्येतव्या, कीदृशी? शब्दश्चार्थश्च ज्ञानं च तेषां विकल्पा वस्तुतो भिन्नानामपि शब्दादीनामितरेतराध्यासाद्, विकल्पोऽप्येकस्मिन् भेदमादर्शयति भिन्नेषु चाभेदम्, तेन शब्दार्थज्ञानविकल्पैः सङ्कीर्णा = मिश्रेत्यर्थः, तद्यथा गौरितिशब्द इति–गौरित्युपात्तयोरर्थज्ञानयोः शब्दाभेदविकल्पो दर्शितः, गौरित्यर्थ इति–गौरित्युपात्तयोः शब्दज्ञानयोरर्थाभेदविकल्पो दर्शितः, गौरितिज्ञानमिति–गौरित्युपात्तयोः शब्दार्थयोर्ज्ञानाभेदविकल्पो दर्शितः, तदेवमविभागेन वि-

पातञ्जलरहस्यम्।

यत्रेयजीवन्मुक्तत्वं यस्य विवेकिनोऽस्तीत्याह–शुकेति। स्थितस्य = तदेकप्रवणस्य ॥ ४१ ॥

समापन्नमनुविद्धतया जलदुग्धयोरिव संकीर्णतया सहभूतं साकल्यम्, असंकीर्णं श्रुतानुमानयोरविषयं तं प्रति कारणं योगिप्रत्यक्षमिति भाष्यार्थः, प्रथमविकल्प शब्दधी,रन्तरा द्वि-

वार्त्तिकम्।

प्रसूत्रार्थमाह—तदेवमिति ॥ ४१ ॥

सामान्यतः समापत्तिरुक्ता तत्र ग्रहीतृसमापत्तौ स्थूलसूक्ष्मविषयत्वरूपविशेषाभावात्सा एकविधैव, ग्राह्यग्रहणसमापत्त्योस्तु तद्विशेषसत्त्वात्तयोर्विशेषानाह–त्रिभिः सूत्रैः—

"तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः", तृतीयसूत्रे सूक्ष्मविषयकसमापत्तेः वक्ष्यमाणतयाऽस्य सूत्रद्वयस्य स्थूलविषयकत्वं परिशेषाल्लभ्यते, स्थूलं कार्यं सूक्ष्मं कारणम्; तत्र स्थूलं द्विविधं—भूतानि तन्मात्राणां कार्याणि; इन्द्रियाणि चाहंकारस्य कार्याणीति, तत्र च स्थूलसूक्ष्मसमापत्ती द्विविधे भवतः, तासु चतसृषु समापत्तिषु सविकल्पिकायाः स्थूलविषयकसमापत्तेर्लक्षकमिदं सूत्रं, तदेतद् व्याचक्षाण आदौ शब्दार्थज्ञानविकल्पमुदाहरति–तद्यथेत्यादिना–दृष्टमित्यन्तेन, इत्यविनिर्भागेण = एवमभेदेन, विभक्तानां वस्तुतो भिन्नानामपि ग्रहणं-

भक्तानामपि ग्रहणं दृष्टम्, विभज्यमानाश्चान्ये शब्दधर्माः, अन्येऽर्थधर्मा-अन्ये विज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः, तत्र समापन्नस्य योगिनो यो-गवाद्यर्थः समाधिप्रज्ञायां समारूढः स चेच्छब्दार्थज्ञानविकल्पानुविद्ध उपा-

भास्वती।

रूपाः, अन्ये अर्थधर्माः = काठिन्यादयः, अन्ये विज्ञानधर्माः = दिगवयवहीनत्वादय इत्येतेषां विभक्तः पन्थाः = स्वरूपावधारणमार्गः, तत्रेति। तत्र = शब्दार्थज्ञानानां भिन्नानामन्योन्यं यद् मिश्रणं तादृशे सविकल्पे विषये, समापन्नस्य योगिनो यो गवाद्यर्थः = स्थूलभूतविषय इत्यर्थः, समाधिजातायां प्रज्ञायां समारूढः स चेत् शब्दार्थज्ञानविकल्पानुविद्धः भाषासहाय उपावर्त्तते तदा सा सङ्कीर्णा समापत्तिः सवितर्केत्युच्यते, उदाहरणेनैतद् स्पष्टीक्रियते—भूतानि स्थूलग्राह्यम्, भौतिकेषु समाधानात् तेषां शब्दस्पर्शादिमत्त्वस्य साक्षात्कारो भूततत्त्वप्रज्ञा, उक्तञ्च—

"शब्दस्पर्शौ रूपरसाश्च गन्ध इत्येव बाह्यं खलु धर्ममात्रम्" इति,

एकाग्रभूमिके चित्ते सा प्रज्ञा सदैवोपतिष्ठते न तस्या विप्लवो यथा विक्षिप्तभूमिकस्य चेतसः प्रज्ञायाः, तत्प्रज्ञासमापन्नस्य चित्तस्य प्रथमं तावद् वागनुविद्धा चिन्तोपावर्त्तते तद् यथा-इदं खभूतमिदं तेजोभूतम्, भौतिकं वस्तु कदलीकाण्डवन्निःसारं = भूतमात्रं तत्कृता सुखदुःखमोहा वैराग्येण त्याज्या इत्यादिः, गोशब्दस्यास्ति वाक्यवृत्तिस्तद् यथा-गोशब्दो, गोवाच्योऽर्थो, गोज्ञानञ्चैकमेवेति, अलोकस्यापि तादृशस्य गोशब्दानुपातिनो ज्ञानस्य विषयस्यास्ति व्यवहार्यता ततस्तद्विकल्प इति विवेच्यम्, स्थू-

तत्त्ववैशारदी।

भक्तानामपि शब्दार्थज्ञानानां ग्रहणं लोके द्रष्टव्यम्, यद्यविभागेन ग्रहणं कुतस्तर्हि विभागः? इत्यत आह-"विभज्यमानाश्च" इति। विभज्यमानाश्चान्वयव्यतिरेकाभ्यां परीक्षकैरन्ये शब्दधर्माः = ध्वनिपरिणाममात्रस्य शब्दस्योदात्तादयो धर्माः, अन्येऽर्थस्य जडत्वमूर्त्तत्वादयः, अन्ये प्रकाशमूर्त्तिविरहादयो ज्ञानस्य धर्मा इति, तस्मादेतेषां विभक्तः पन्थाः = स्वरूपभेदोन्नयनमार्गः, तत्र = विकल्पिते गवाद्यर्थे "समापन्नस्येति" तदनेन योगिनोऽपरं प्रत्यक्षमुक्तम्,

पातञ्जलरहस्यम्।

तोयाऽर्थधीः, स्मृतिर्या सा तृतीया ज्ञानधीरिति समापत्तित्रयं, जलदुग्धयोः समापत्तावपि यथा हंसैर्विविच्यते तथाऽत्र शब्दधर्मोदात्तादिः श्रोत्रेण, अर्थस्त्वक्चक्षुर्भ्यां, ज्ञानधर्मा मनसा,

वार्त्तिकम्।

विकल्पाख्यं लोके दृष्टं पूर्वोक्तविकल्पलक्षणाक्रान्तत्वादित्यर्थः, ननु वस्तुशून्यत्वे सति विकल्पः स्यात् प्रतीतिबलात्त्वभेदोऽत्र वस्तुसन्नेव भवतु तत्राह—विभज्यमानाश्चेति। अन्वयव्यतिरेकाभ्यां परीक्षकैर्विभज्यमाना विविच्यमाना अन्येऽर्थज्ञानधर्माभ्यां भिन्नाः शब्दधर्मास्तारत्वमन्दत्वादयः, एवमर्थधर्माः जडत्वमूर्त्तत्वादयः शब्दज्ञानधर्माभ्यामन्ये, एवं ज्ञानधर्माः प्रकाशामूर्त्तत्वादयः शब्दार्थधर्माभ्यामन्ये, इत्थमेतेषां शब्दार्थज्ञानानां विभक्तोऽन्योन्यं भिन्नः पन्थाः = स्वरूपभेदोन्नयनमार्ग इत्यर्थः, समापत्तिरेव विकल्परूपेत्यतो विकल्पसंकीर्णत्वानुपपत्तिरित्याशयेनान्यथा सूत्रार्थं व्याचष्टे—तत्रेति। तत्र गवादौ स्थूलभूतेन्द्रियेषु समापन्नस्य समाहितस्य योगिनः समाधिप्रज्ञायां समारूढो, या गवाद्यर्थः स यदि शब्दार्थज्ञानविकल्पेन गौरियं भासत इत्येवं शब्दार्थज्ञानानामभेदभ्रमेणानुविद्धो विषयीकृतो भवति; तदा सा सङ्कीर्णा विकल्पमिश्रिता विकल्पविषयीभवदर्थविषयिणीति यावत् समापत्तिः सवितर्कसंज्ञा भवतीत्यर्थः, अत्र हि गौरयमित्यंशे शब्दार्थयोरभेदविकल्पः, भासत इत्यंशे चार्थज्ञानयोरभेद-

वर्त्तते सा सङ्कीर्णा समापत्तिः सवितर्केत्युच्यते ॥ ४२ ॥

यदा पुनः शब्दसङ्केतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायांसमाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवाव-

भास्वती।

ल्पविषयेदृशया प्रज्ञया परिपूर्णस्य चेतसो या समापन्नता सा सवितर्केति ॥ ४२ ॥

निर्वितर्कां व्याचष्टे—यदेति। यदा नामवाक्यरहितध्यानाभ्यासाद् वास्तवो ध्येयविषयो वाग्वियुक्तो ज्ञायते तदा शब्दसङ्केतस्मृतिपरिशुद्धिः, न तदा तत् प्रत्यक्षं विज्ञानं-शब्दानुविद्धेन सविकल्पेन श्रुतानुमानज्ञानेन मलिनं भवति, तदाऽर्थः समाधिप्रज्ञायां निर्विकल्पेन स्वरूपमात्रेणावतिष्ठते, तादृशस्वरूपमात्रतयैवावच्छिद्यते=वास्तवं रूपमात्रमेव तदा निर्भासते, न च कश्चिदसत्पदार्थस्तदन्तर्गतो वर्त्तते, सा हि निर्वितर्का समापत्तिः,

तत्त्ववैशारदी।

शेषं सुगमम् ॥ ४२ ॥

सूत्रं योजयितुं प्रथमतस्तावन्निर्वितर्कां व्याचष्टे—"यदा पुनरिति। परिशुद्धिः=अपनयः, शब्दसङ्केतस्मरणपूर्वे खल्वागमानुमाने प्रवर्त्तेते, सङ्केतश्चायं गौरितिशब्दार्थज्ञानानामितरेतराध्यासात्मा, ततश्चागमानुमानज्ञानविकल्पौ भवतः; तेन तत्पूर्वा समाधिप्रज्ञा सवितर्का, यदा पुनरर्थमात्रप्रवणेन चेतसाऽर्थमात्रादृतेन तदभ्यासान्नान्तरीयकतामुपगता सङ्केतस्मृतिस्त्यक्ता, तत्त्यागे च श्रुतानुमानज्ञानविकल्पौ तन्मूलौ त्यक्तौ, तदा तच्छून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपमात्रतयैव, न तु विकल्पितेनाकारेण परिच्छिद्यते सा निर्वितर्का समापत्तिरिति, तद् योगिनां परं प्रत्यक्षम्, असदारोपगन्धस्याप्यभावात्, स्यादेतत्—परेण प्रत्यक्षेणार्थतत्त्वं गृहीत्वा योगिन उपपादयन्ति; उपदिशन्ति च, कथं वाऽतद्विषयाभ्यामागमपरार्थानुमानाभ्यां सोऽर्थ उपदिश्यते; उपपाद्यते च, तस्मादागमानुमाने तद्विषये;

पातञ्जलरहस्यम्।

इत्याह—विभक्तः पन्था इति ॥ ४२ ॥

परं प्रत्यक्षं ज्ञानाकरणकं, पूर्वव्यक्तिधीपूर्वत्वादागमपरार्थानुमानयोरिति भावः,

अध्यात्मं नामभेदेन वर्तमानेऽप्यभेदधीरिति—

वार्त्तिकम्।

विकल्पः, अर्थद्वारा च शब्दज्ञानयोरप्यभेदविकल्पः, एवं नारायणोऽयं भासत इत्यादिरूपैश्च सवितर्का समापत्तिर्भवति, अत्र शब्दादिविकल्पैर्यथासम्भवमन्येऽपि विकल्पा उपलक्षणीयाः, इयं च समापत्तिरपरं प्रत्यक्षमविद्यालेशसम्बन्धादिति ॥ ४२ ॥

सूत्रान्तरं योजयितुं प्रथमं तावन्निर्वितर्कां स्थूलसमापत्तिं व्याचष्टे—यदा पुनरिति। अयं भावः—शब्दसंकेतस्मरणपूर्वके तावत्क्रमेणागमानुमानज्ञाने भवतः, संकेतश्चायं गौरिति शब्दार्थयोरितरेतराध्यासात्मकः, एतद्वैतत्परमपरं च ब्रह्म यदोंकार' इत्यादिश्रुतिषु,

'अकारोकारमकारा ब्रह्मविष्णुमहेश्वराः'

इत्यादिस्मृतिषु; 'अमरा निर्जरा' इत्यादिकोशेषु च संकेतस्य विकल्पिताभेदरूपत्वावधारणात्, ततश्च संकेतग्रहसमानाकारेणैव शाब्दबोधस्तन्मूलकानुमानं च भवतीत्यत आगमानुमानज्ञानयोरपि श्रवणमननरूपयोर्विकल्प औत्सर्गिकः, ततश्च तन्मूलिका या प्रथमं जायते समाधिप्रज्ञा साऽपि विकल्पव्याप्तिश्चैव भवतीति सा सवितर्का भवति, यदा पुनरर्थमात्रादरादर्थमात्रप्रवणेन चेतसा संकेतस्मृतिस्त्यज्यते तदा समाधौ तन्मूलको विकल्पो न जायत इति निर्वितर्का भवतीति, तदिदमाह—शब्दसंकेतेति। शब्दसंकेतस्य स्मृतेः परिशुद्धिरपगमस्तस्यां सत्यां तत्स्मृतिनिमित्तकेन श्रुतानुमानज्ञानकालीनविकल्पेन शून्यायां समाधिप्रज्ञायामर्थस्वरू-

च्छिद्यते सा च निर्वितर्का समापत्तिः, तत्परं प्रत्यक्षं, तच्च श्रुतानुमानयोर्बीजं, ततः श्रुतानुमाने प्रभवतः, न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनं, तस्मादसङ्कीर्णं प्रमाणान्तरेण योगिनो निर्वितर्कसमाधिजं दर्शनमिति निर्वितर्कायाः समापत्तेरस्याः सूत्रेण लक्षणं द्योत्यते—

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥४३॥**

या शब्दसङ्केतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ ग्राह्यस्वरूपोप-

भास्वती ।

तत् परं प्रत्यक्षं समाधिजातत्वादन्यप्रमाणामिश्रत्वात्, तच्च तत्त्वज्ञानविषयकयोः श्रुतानुमानयोर्बीजम् = मूलम्, तादृशसाक्षात्कारवद्भिर्योगिभिरेव तत्त्वविषयकश्रुतानुमानप्रवर्त्तितमित्यर्थः, शब्दसङ्केतहीनत्वान्न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनम्, शेषं सुगमम्, स्मृतेति। स्मृतिपरिशुद्धौ = वाग्रहितार्थचिन्तनसामर्थ्ये जात इत्यर्थः, स्वरूपशून्यमिव = अहं जानामीति प्रज्ञा = स्वरूपशून्येव न तु वस्तुतस्तच्छून्या; अर्थमात्रनिर्भासा नामादिहीनध्येयविषयमात्रद्योतिनी समापत्तिर्निर्वितर्का स्थूलविषयेति सूत्रार्थः, व्याचष्टे-येति ।

तत्त्ववैशारदी ।

ते च विकल्पाविति परमपि प्रत्यक्षं विकल्प एवेत्यत आह -"तच्च श्रुते"ति । यदि हि सवितर्कमिव श्रुतानुमानसहभूतं = तदनुषक्तं स्याद् भवेत्सङ्कीर्णं, तयोस्तु बीजमेवतत्, ततो हि श्रुतानुमाने प्रभवतः, न च यद् यस्य कारणं तत्तद्विषयं भवति, न हि धूमज्ञानं वह्निज्ञानकारणमिति वह्निविषयम्, तस्मादविकल्पेन प्रत्यक्षेण गृहीत्वा विकल्प्योपदिशन्ति चोपपादयन्ति च, उपसंहरति -"तस्माद्" इति । व्याख्येयं सूत्रं योजयति—"निर्वितर्काया" इति ।

"स्मृतिपरिशुद्धावि"त्यादि सूत्रम्, शब्दसङ्केतश्च श्रुतं चानुमानञ्च तेषां ज्ञानमेव विकल्पः, तस्मात् स्मृतिस्तस्याः परिशुद्धिः = अपगमः, तस्याम्, अत्र च सङ्केतस्मृतिपरिशुद्धिर्हेतुः,

पातञ्जलरहस्यम् ।

परिच्छिद्यते न तु ज्ञानाद्यनुविद्धतयेत्यर्थं साकल्याभावेन समाधत्ते—तयोः = श्रुतानु-

वार्त्तिकम् ।

पाकारेणैवावधार्यत इत्यादिरर्थः, आरोपगन्धस्यापि सम्पर्को नास्तीति प्रतिपादनाय स्वरूपमात्रेणावस्थितोऽर्थ इत्युक्तम्, परमिति । आरोपसम्पर्काभावादिति भावः, अगृहीतग्राहित्वं निर्वितर्कसमापत्तेः प्रामाण्यप्रयोजकं दर्शयति—तच्चेत्यादिना-दर्शनमितीत्यन्तेन, श्रुतानुमानयोः श्रवणमननयोर्बीजं, बीजशब्दार्थं व्याचष्टे -तत इति । प्रभवतः प्रकर्षेण भवतः, गुरुणाऽशेषविशेषसाक्षात्कारं विनाऽसन्दिग्धाविपर्यस्तवस्तुस्वरूपप्रतिपादनासम्भवात्, अतः सवितर्कानधिगतोऽपि विशेषोऽस्या विषय इत्यर्थः, नन्वेवं सर्वज्ञगुरुणा श्रुतिस्मृतिभ्यामेवाशेषविशेषप्रतिपादनं स्यादितीयं व्यर्था निर्वितर्कसमापत्तिरिति तत्राह—न चेति । सहभूतं तत्कालीनं गुरोर्विशेषज्ञत्वेऽपि स विशेषः शब्देनाशेषो वक्तुं न शक्यत इक्षुक्षीरादिविशेषवद्,

'इदं तदिति निर्देष्टुं गुरुणाऽपि न शक्यत'—

इति स्मृतेः, अतः सर्वज्ञवाक्यादपि निर्विकल्पकसमापत्तिसमानाकारं ज्ञानं न सम्भवतीत्यर्थः, ततः किमित्यत आह-तस्मादिति । संकीर्णं = गृहीतमात्रावगाहि,

तदेवमुत्तरसूत्रस्य लक्ष्यमवधार्य सूत्रमवतारयति—निर्वितर्काया इति । स्पष्टम्,

"स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का", यतः स्मृतिपरिशुद्धौ सत्यां जायते तथा-स्वरूपशून्येव भवति अतोऽर्थमात्रस्य निर्भासो यत्रेत्यर्थमात्रनिर्भासाऽखिलविकल्पशून्या या समापत्तिः सा निर्वितर्केत्यर्थः, पदानि क्रमतो व्याचष्टे-या शब्देति । शब्द-

**रक्ता प्रज्ञा स्वमिव प्रज्ञारूपं ग्रहणात्मकं त्यक्त्वा पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति सा निर्वितर्का समापत्तिः, तथा च व्याख्याता(१), तस्या एकबुद्ध्युपक्रमो ह्यर्थात्माऽणुप्रचयविशेषात्मा(२) गवादिर्घटादिर्वा लोकः,**

भास्वती।

श्रुतानुमानज्ञाने शब्दसङ्केतसहाये ततो विकल्पानुविद्धे शब्दहीनत्वाद् विकल्पादिस्मृतिः शुद्धा भवति, यदा नार्थज्ञानकाले तत्तत्स्मृतिरुपतिष्ठते तदा केवलग्राह्योपरक्ता = ग्राह्यनिर्भासा भवति, ग्राह्यमत्र ध्येयविषयो न तु भूतानि, स्थूलग्रहणस्यापि वितर्कानुगतत्वात, स्वं प्रज्ञारूपं ग्रहणात्मकं त्यक्त्वेवाहं जानामीत्यात्मस्मृतिहीनो विषयमात्रावगाहीत्यर्थः, तथा च व्याख्यातं = सूत्रपातनिकायामस्माभिरित्यर्थः, तस्या इति । तस्याः

तत्त्ववैशारदी।

श्रुतादिज्ञानस्मृतिपरिशुद्धिश्च हेतुमती, अनुमानशब्दश्च कर्मसाधनोऽनुमेयवाचकः, स्वमिवेतीवकारो भिन्नक्रमः, त्यक्त्वेतिपदानन्तरं द्रष्टव्यः, विषयविप्रतिपत्तिं निराकरोति— "तस्या एक" इति। एकां बुद्धिमुपक्रमते = आरभत इत्येकबुद्ध्युपक्रमः, तदनेन परमाणवो नानाऽऽत्मानो न निर्वितर्कविषया इत्युक्तं भवति,

योग्यत्वेऽपि तेषां परमसूक्ष्माणां नानाभूतानां महत्त्वैकार्थसमवेतैकत्वनिर्भासप्रत्ययविषयत्वायोगाद्, अस्तु तर्हि परमार्थसत्सु परमाणुषु सांवृतः प्रतिभासधर्मः स्थौल्यमित्यत आह—"अर्थात्मा" इति। न स्थूलमनुभवसिद्धमपति बाधके शक्यापह्नवमिति भावः, तत्र

पातञ्जलरहस्यम्।

मानयोः, बीजमेतदिति। योगजज्ञानेन केवलार्थं गृहीत्वोपपाद्यते च, अस्मिन्नर्थे दृष्टान्त-

वार्त्तिकम्।

संकेतात श्रुतानुमानरूपाज्ज्ञाने या विकल्पारूढा स्मृतिः चिन्ता सवितर्ककालेऽप्यनुवर्त्तते तदपगमे सतीत्याद्यपदार्थः, शब्दसंकेतस्यात्र स्मृतिहेतुत्वं स्वगोचरज्ञानद्वारा बोध्यम्, संकेतश्च शब्दार्थयोः कल्पिताभेदमात्र इत्यतः संकेतस्मृतौ तन्मूलकज्ञाने चाभेदविकल्प औत्सर्गिक इति, शब्दविकल्पशून्यत्वे हेतुमुक्त्वा ज्ञानविकल्पशून्यत्वे हेतुमाह-स्वमिवेति । इवकारो भिन्नक्रमेण त्यक्त्वेतिपदानन्तरं योजनीयः, त्यागसादृश्यं चाग्रहणमिति, तृतीयपदस्यार्थमाह-पदार्थमात्रेति। तस्याप्यर्थमाह-ग्राह्यस्वरूपापन्नेव भवतीति, सा निर्वितर्केति। एवंनिर्भासा या समापत्तिः सा निर्वितर्केत्यर्थः, तदेवं सूत्राभ्यां प्रतिपादितौ सवितर्कनिर्वितर्कयोगौ सविकल्पशब्दाभ्यामपि शास्त्रेपूच्येते, वितर्कविचारेत्यादिसूत्रे च यः स्थूलविषयभोगो वितर्क इत्युक्तं स एवात्र सवितर्कनिर्वितर्कसमापत्तिरूपेण द्विधोक्त इति, नन्वस्य निर्वितर्कसाक्षात्कारस्य विषयः किमवयवाः किं वाऽवयवी ? आद्ये वक्ष्यमाणनिर्विचारसमापत्त्या सहैकविषयत्वापत्तिः, अन्त्येऽवयविनः कल्पितत्वेन तद्गोचरनिर्वितर्काया विकल्पशून्यत्वानुपपत्तिरित्याशङ्क्यावयविनं व्यवस्थापयन् अवयविविषयकत्वमेवास्य वृद्धवाक्यादवधारयति- तथा चेत्यादिना-लोक इत्यन्तेन, व्याख्यातं पूर्वाचार्यैरिति शेषः, तस्या निर्वितर्काया गवादिघटादिर्वा लोक आलम्बनमित्यन्वयः, नन्ववयविनि किं प्रमाणं तत्राह-एकबुद्ध्युपक्रम इति। एका गौरिति बुद्धिमुपक्रमत आरभत इत्येकबुद्ध्युपक्रमः, अतो नावयवानामनेकतयाऽवयविव्यवहारनिर्वाहकत्वमिति भावः, नन्वेवमप्येकप्रत्ययानुरोधादेकं विज्ञानमात्रमेवावयविव्यवहारहेतुरस्तु तत्राह-अर्थात्मेति। अर्थात्मा = दृश्यस्वरूपः, विज्ञानमात्रत्वे स्वस्य स्वदृश्यत्वानुपपत्तिः कर्मकर्तृविरोधादिति भावः, नन्वेवमवयवेभ्योऽवयविनोऽतिरेके कपालं घटो जात-

(१) व्याख्यातेति। पूर्वाचार्यैरपि रीत्यन्तरेणोक्तत्वाद् भिक्षूक्तेरनवधानतोक्तेरेव तथात्वम्।

(२) एकेत्यादिविशेषणत्रयेण क्रमात् सौत्रान्तिकवैभाषिकयोर्योगाचारस्य नैयायिकादेश्च निरासः।

स च संस्थानविशेषो भूतसूक्ष्माणां साधारणो धर्म आत्मभूतः फलेन

भास्वती।

=निर्विकार्याः, विषय एकबुद्ध्युपक्रमः =एकबुद्ध्यारम्भकः, न नानापरमाणुरूपः, स ध्येयविषयः किन्त्वेकोऽयमित्यात्मक इत्यर्थः, अर्थात्मा =बाह्यवस्तुरूपो न तु विज्ञानमात्रः, अणुप्रचयविशेषात्मा =अणूनां शब्दादितन्मात्राणामणुशब्दादिज्ञानानामिति यावद् यः, प्रचयविशेषः =स्थूलपरिणामरूपसमाहारविशेषः स एवात्मा स्वरूपं यस्य तादृशो गवादिर्घटादिर्वा लोकश्चेतनाचेतनलौकिकविषय इत्यर्थः, स चेति । स च घटादिरूपः परमाणु-

तत्त्ववैशारदी।

ये पश्यन्ति द्व्यणुकादिक्रमेण गोघटादय उपजायन्त इतिः तान् प्रत्याह—"अणुप्रचय" इति। अणूनां प्रचयः = स्थूलरूपः परिणामः, स च विशिष्यतेऽन्यस्मात् परिणामान्तरात्, स एवात्मा = स्वरूपं यस्य स तथोक्तः गवादिर्भोगायतनं, घटादिर्विषयः, तच्चैतदुभयमपि लोक्यत इति लोकः, नन्वेष सूक्ष्मभूतेभ्यो भिन्नोऽभिन्नो वा स्याद्, भिन्नश्चेत् कथन्तदाश्रयः, कथञ्च तदाकारः, न हि घटः पटादन्यस्तदाश्रयो वा, अभिन्नश्चेत्तद्वदेव सूक्ष्मोऽसाधारणश्च स्यादत आह—"स च" इति। अयमभिप्रायः—नैकान्ततः परमाणुभ्यो भिन्नो घटादिरभिन्नो वा

पातञ्जलरहस्यम्।

माह-न हीति—

स्मृत्यादि-वितर्कान्तं व्याख्येयं सूत्रं, समापत्तिः समाधिर्यस्यां ज्ञेयमात्रं भासते न ज्ञानहेतुशब्दसङ्केतत्वश्रुतत्वानुमेयत्वानि तेषां ज्ञानानि तत्र स्मृतयश्च परिशुद्धाः त्यक्ता न भासन्त इति समापत्तिर्निर्वितर्केति कथ्यत इत्याह—येत्यादि-समापत्तिरित्यन्तेन भाष्येण, समाधिमुक्त्वा तस्याः समाधेयविषयमाह—तस्या इत्यादि—अवयवीत्यन्तेन, अवयव्यवयवेषु परमाण्वादिषु भूतसूक्ष्मेषु संख्याऽऽदिवद् व्यासज्य वर्त्तते न त्ववयवारब्धः कश्चित् स्वतन्त्रः सद्वादे तादात्म्यस्वीकारादत एव जन्मादिषड्वर्गात्मा, तेनावयविना तादृशेन धर्मिणोदकाहरणादिक्रियाः स्युरिति, स्वमतमुक्त्वा पुञ्जात् पुञ्जोत्पत्तिरिति बौद्धमतं निराह—यस्येत्यादि—किंस्यादित्यन्तेन, सम्यङ्मिथ्याधियोर्भावाभावयोरिव नित्यं सापेक्षत्वात् सम्यग्धीरप्यपेक्ष्यैवेत्यभिप्रायः, स्वमतमुपसंहरति—तस्मादिति भाष्यार्थः, तर्ह्येवं बुद्धिभ्रमः स्यादिति शङ्कते-अस्त्विति । धियामौत्सर्गिकं प्रामाण्यमितिन्यायेनाह—असतीति । नैयायिकमतमुत्थापयति—तत्र य इयि। परमाणुद्वयसंयोगाद् द्व्यणुकमुत्पद्यते द्व्यणुकत्रयेण त्रसरेणुरेवं क्रमेण भूम्यादिघटान्तो जायते, तान् प्रत्याह—अणुप्रचय इति। भोगायतनं = शरीरं, विषयो यो नामा-

वार्त्तिकम्।

इत्यादिरूपोऽवयवावयविनोरभेदप्रत्ययो न स्यादित्याशङ्कामपाकरोति-अणुप्रचयविशेषात्मेति। अणूनामेव प्रचयाख्यसंयोगनिमित्तको यो विशेषः परिणामरूपस्तत्स्वरूप इत्यर्थः, तथा च सामान्यविशेषयोर्भेदाभेदाङ्गीकाराद् अभेदप्रत्ययोऽप्युपपन्न एवेति भावः, न च भेदाभेदयोर्विरोध इति वाच्यम् ? भेदस्यान्योन्याभावरूपत्वाद् अभेदस्याविभागरूपत्वादिति, अयं चाविभागो न लक्षणानन्यत्वं लक्षणभेदकालेऽप्यभेदप्रत्ययात् किं त्वाधाराधेयभाववत्स्वरूपसम्बन्धविशेष एव दुग्धजलयोरिवेति, एतत्सर्वं परिणामसूत्रे विशिष्य प्रतिपादयिष्यति भाष्यकारः, ननु यद्यवयवी स्वीकृतस्तर्हि तस्यैकावयवनाशे नाशापत्त्याऽनुपलब्धिप्रसङ्गः, किं चावयविनो नित्यत्वे सर्वदा कार्यकारिताप्रसङ्गः, अनित्यत्वेऽसदुत्पादतः शशशृङ्गाद्यपि कारणव्यापारादुत्पद्येतेत्याशङ्कामपाकरोति-स चेति। स च स्थूलोऽवयवी स्वकारणानां भूतसूक्ष्माणां साधारणः प्रत्येकं परिसमाप्नोति न तु द्वित्वादिवद्व्यासज्यवृत्तिः, एकावयवव्यवधानेऽप्यप्रत्यक्षत्वप्रसङ्गात्, अत एकावयवनाशेऽप्यवयवान्तरेऽवयव्यवस्थानात्तदुपलब्धिः,

व्यक्तेनानुमितः स्वव्यञ्जकाञ्जनः (१)प्रादुर्भवति, धर्मान्तरोदये च तिरोभवति,

भास्वती।

संस्थानविशेषो भूतसूक्ष्माणां = तन्मात्राणां साधारणो धर्मः = प्रत्येकं तन्मात्राणां धर्मस्तत्र साधारण एकीभूतः, एवं कारणेभ्यस्तन्मात्रेभ्यस्तस्य कार्यस्य विशेषस्य कथञ्चिद्

तत्त्ववैशारदी।

भिन्नत्वे गवाश्ववद् धर्मधर्मिभावानुपपत्तेः, अभिन्नत्वे धर्मिरूपवत्तदनुपपत्तेः, तस्मात्कथञ्चिद् भिन्नः कथञ्चिदभिन्नश्चास्थेयस्तथा च सर्वमुपपद्यते, "भूतसूक्ष्माणाम्" इति षष्ठया कथञ्चिद् भेदं सूचयति, "आत्मभूत" इति चाभेदम्, फलेन व्यक्तेन = तदनुभवलक्षणेन तद्व्यवहारलक्षणेन च व्यक्तेन विप्रतिपन्नं प्रत्यनुमापितः कारणाभेदेन च कारणाकारतोपपन्नेत्याह–"स्वव्यञ्जकाञ्जन" इति। स किं तदात्मभूतो धर्मो नित्यो? नेत्याह–"धर्मान्तर"इति। धर्मा-

पातञ्जलरहस्यम्।

चेतनः स किमवयवी अवयवान्तरविशिष्टः स्वारम्भकावयवविशिष्टो वा? आद्ये सोऽप्येवमित्यनवस्था, द्वितीये त्वात्माश्रयोऽन्योन्याश्रयो वा, तृतीये चक्रकं, किञ्च व्यासज्यवृत्तित्वे चाश्रयप्रत्यक्षमन्तरेण बहुत्वादिवत्तद्ग्रहः समाप्यवृत्तित्वे एकैकावयवे घटादिव्यवहारो जाताविव, किञ्चायं घट एतदारम्भकावयवनिष्ठात्यन्ताभावप्रतियोगी घटत्वाद्घटान्तरवद्, न च प्रत्यक्षविरोधः शुक्तिरजतादिवदुपपत्तेः, न चैको घट इतिप्रत्ययविरोधः, ग्रहकरकादिवत्तदुपपत्तेः, अ-

वार्त्तिकम्।

अवयवविभागविशेष एव चावयविनाशकः, स च विशेषो जातिरूपः फलबलात् कल्प्यत इति भावः, तथाऽऽत्मभूतः सदेव भूतसूक्ष्मेष्वनुगतः नातः शशादौ शृङ्गाद्युत्पत्तिप्रसङ्गः, तत्र प्रमाणमाह—फलेन व्यक्तेनानुमित इति। अभिव्यक्तिलक्षणकार्यानुमितः, असदभिव्यक्तौ सर्वत्र सर्वाभिव्यक्तिप्रसङ्गात्, ननु तर्हि सर्वदैवाभिव्यक्तिः कुतो न भवति तत्राह–स्वव्यञ्जकेति। स्वाभिव्यक्तिहेतुर्यत्कारणं तदेवाञ्जनमभिव्यञ्जनं कारणं यस्य तथाभूतः सन्नाविर्भवति वर्त्तमानावस्थां प्राप्नोति न सर्वदा तथा धर्मान्तरोदयकाले च मुद्गरपातादिना तिरोभवति = अतीतावस्थां प्राप्नोति, स एवावयवानां धर्मोऽवयवीत्युच्यत इत्यर्थः, अतो नोक्तशङ्काऽवकाशः, कार्यनित्यत्वेऽप्यभिव्यक्तस्यैव कार्यस्य स्वकार्यकारित्वादिति भावः, स्यादेतद्–अभिव्यक्तिरपि नित्याऽनित्या वा, आद्ये सर्वदैवाभिव्यक्तिकार्यप्रसङ्गः, अन्तेऽवयव्यादेरेवानित्यत्वमभिव्यक्तिवदस्तु व्यर्थमभिव्यक्तिकल्पनमिति, उच्यते—अतीतानागतावस्थावत्त्वस्वरूपमनित्यत्वं घटादावभिव्यक्तौ चेष्यत एव, आद्यन्तयोः कार्यस्यात्यन्तासत्त्वप्रतिषेधाय ध्वंसादिप्रतियोगित्वस्यैव निषेधाद्, अतीतानागतावस्थयोर्ध्वंसप्रागभावस्थलाभिषेकमात्र एवास्माकं विशेषात्, अभिव्यक्तिकल्पना च न व्यर्था घटोऽनागतो घटोऽतीत इतिव्यवहारवद् घटो वर्तमान इति व्यवहारस्यापि घटमात्रेणासंभवाद् घटस्यावस्थात्रयसाधारण्येनातीतादिकालेऽपि वर्त्तमानत्वव्यवहारप्रसङ्गात्, न चैवमभिव्यक्तेरप्यवस्थात्रयकल्पना भवत्वेवेति वाच्यम्? बीजाङ्कुरादिवत् प्रामाणिकत्वेनादोषत्वस्य सांख्यसूत्रेणोक्तत्वात्, किं च सत एवाभिव्यक्तिरित्येव सत्कार्यवादिनो नियमः, अभिव्यक्तेश्चाभिव्यक्त्यन्तरास्वीकारेण तस्या असत्या एवोत्पादेऽपि न क्षतिः, कार्याणामनागतावस्थैवाभिव्यक्तेरप्यनागतावस्था, सैव चाभिव्यक्त्युत्पत्तौ नियामिका, अतः शशशृङ्गादिवैलक्षण्यम्, यथा परैरुत्पत्तेरुत्पत्तिरभावे चाभावः स्वरूपमेवेष्यते तथैवाभिव्यक्तेरभिव्यक्तिः स्वरूपमेवेत्यस्माभिरप्युपगन्तव्यम्, घटादेरतीतानागतावस्थं तदभिव्यक्तेरप्यतीतानागतावस्थे इति, अथैवमभिव्यक्तिरपि घटस्वरूपमेवास्त्विति चेन्न-अतीताद्यवस्थघटेनाभिव्यक्तिव्यवहारप्रसङ्गस्योक्तत्वादिति दिक्, यत्तु वैशेषिकाः प्रागभाव-

(१) स्वेति। स्वव्यञ्जककारणकलापेन व्यक्तः।

**स एष धर्मोऽवयवीत्युच्यते, योऽसावेकश्च महाँश्चाणीयाँश्च स्पर्शवाँश्च क्रियाधर्मकश्चानित्यश्च, तेनावयविना व्यवहाराः क्रियन्ते, यस्य पुनरवस्तुकः**

भास्वती ।

भेदः, आत्मभूतः = तन्मात्रधर्मशब्दादेरनुगतः शब्दादिमानेव न चान्यधर्मवानेवं कारणादभेदः, फलेन व्यक्तेनानुमितः = व्यक्तं फलं द्रव्याणां ज्ञानं तद्व्यवहारश्च तेनानुमितः, अणुप्रचयोऽप्यणुभ्योऽभिन्नोऽयं घट इति स व्यक्तो घटव्यवहारोऽनुमापयतीत्यर्थः, किञ्च सस्वव्यञ्जकाञ्जनः = स्वव्यञ्जनहेतुना निमित्तेनाभिव्यक्तः, एवम्भूतः संस्थानविशेषः प्रादुर्भवति तिरोभवति च, धर्मान्तरोदये = अनेन निमित्तेन संस्थानस्यान्यथाभावो भवति स एव तिरोभावो नाभावः, स एव संस्थानविशेषरूपो धर्मोऽवयवीत्युच्यते, अतो योऽसावेकः = एकत्वबुद्धिनिष्ठः, महान् = बृहन् वा, अणीयान् = क्षुद्रो वा, स्पर्शवान् = इन्द्रियग्राह्यः शब्दादिधर्माश्रय इति यावत्, क्रियाधर्मकः = जलधारणादिक्रियाधर्मकः, अनित्यः = आगमापायी च सोऽवयवीति व्यवह्रियते, अनेकेन्द्रियग्राह्यत्वं व्यवहार्यत्वम्, अत्र वैनाशिकानामयुक्ततां दर्शयति—यस्येति । यस्य नये स स्थूलविकाररूपः प्रचयविशेषः, अवस्तुकः =

तत्त्ववैशारदी ।

न्तरस्य = कपालादेरुदय इत्यर्थः, तस्यावयविनः परमाणुभ्यो व्यावृत्तं रूपमादर्शयति—"स एष" इति । परमाणुसाध्यायाः क्रियाया अन्या क्रिया मधूदकादिधारणलक्षणा तद्धर्मक- इति, न केवलमनुभवादपि तु व्यवहारतोऽपि तन्निबन्धनत्वाल्लोकयात्राया इत्याह—"तेन" इति । स्यादेतद्—असति बाधकेऽनुभवोऽवयविनं व्यवस्थापयेद्, अस्ति च बाधकं यत्सत् तत्सर्वमनवयवं यथा विज्ञानं, सच्च गोघटादि इति स्वभावहेतुः, सत्त्वं हि विरुद्धधर्मसंसर्गरहितत्वेन व्याप्तं, तद्विरुद्धश्च विरुद्धधर्मसंसर्गः सावयव उपलभ्यमानो व्यापकविरुद्धोपलब्ध्या सत्त्वमपि निवर्त्तयति, अस्ति चावयविनि तद्देशत्वातद्देशत्वावृतत्वानावृतत्वरक्तारक्तत्वचलाचलत्वलक्षणो विरुद्धधर्मसंसर्ग इत्यत आह—"यस्य पुनः" इति । अयमभिप्रायः--

पातञ्जलरहस्यम् ।

स्मत्पक्षे च तादात्म्याद् भेदाभेदाभ्यां सर्वं समञ्जसं, धर्मोऽवयवीति । आश्रितत्वसाम्यादिति भाष्यार्थः, स्वव्यञ्जका ये परमाणवः तदञ्जनस्तत्तादात्म्यापन्नोऽपि न नित्यः; उदयव्ययशालित्वात् प्रत्येकं परमाणवोऽर्थक्रियाऽसमर्था अपि त्रिदण्डादिवत् समर्था इत्याह--तेनेति । बौद्धः शङ्कते-स्यादेतदिति । सहोपलम्भनियमादभेदे ज्ञानादनुमेयादतिरिक्तो नार्थस्तथा च ज्ञानं सत्त्वेन व्याप्तं सावयवत्वेन घटादौ सत्त्वं व्यावर्तमानं सावयवत्वमपि व्यावर्तयति, घटादौ सावयवत्वमेवाशुद्धमित्याशङ्क्याह—अस्ति चावयवीति । सर्वजनीनानुभवमादाय दूषयति—यस्य

वार्त्तिकम् ।

मेव कार्योत्पत्तिनियामकं कल्पयन्ति, तदसत्—अभावकल्पनापेक्षया भावकल्पने लाघवाद्, भावानां दृष्टत्वाद् अन्यानपेक्षत्वाच्च, अपि चाभावेषु स्वतो विशेषे भावत्वापत्तिः, प्रतियोगिरूपविशेषश्च प्रतियोग्यसत्ताकाले नास्तिः अतोऽभावस्याविशिष्टतया सर्वत्र सर्वोत्पत्तिप्रसङ्ग एवेति, अवयवेभ्यो विज्ञानाच्चातिरिक्ततया हेतुभूतं ताभ्यां वैधर्म्यजातमवयविनि दर्शयति—योऽसाविति । षड्विशेषणानि यथासंभवमवयवज्ञानाभ्यां वैधर्म्याणि, वैशेषिकैस्त्र्यणुकशब्देनोच्यते यः परिणामविशेषः स एवात्राणीयानित्युक्तः, कार्येषु परमसूक्ष्मत्वाभावादिति, अवयवादिविलक्षणजलाहरणादिव्यवहारकारितयाऽप्यतिरिक्तोऽवयवीति प्रतिपादयति-तेनावयविनेति । अवयवातिरिक्तोऽवयवी नास्तीत्यवयवा एव निर्विकल्पसाक्षात्कारविषय इति वैनाशिकमतमपाकरोति, यस्य पुनरिति । यस्य मते स प्रचयनिमित्तको विशेषोऽवयव्याख्योऽवस्तु-

स प्रचयविशेषः सूक्ष्मं च कारणमनुपलभ्यमविकल्पस्य तस्यावयव्यभा-

भास्वती ।

शून्यमूलको धर्मस्कन्धमात्रः, तस्य प्रचयस्य सूक्ष्मं वास्तवं कारणं = भूतादिकार्याणां तन्मात्रादिरूपं कारणम्, अविकल्पस्य = विकल्पहीनस्य समाधेर्निर्वितर्कनिर्विचारयोरित्यर्थः, अत्र तु सूक्ष्मविषया निर्विचारा विवक्षिता, अनुपलभ्यम् = साक्षात्कारायोग्यम्, तस्य नये प्रायेण सर्वं मिथ्याज्ञानमित्येतदायातं, कथमवयविनामभावात्, तत् समाधिजं ज्ञानमतद्रूपप्रतिष्ठमनवयविन्यवयविप्रतिष्ठम्, अतो मिथ्याज्ञानं भवेद्, एवं प्रायेण सर्वमेव मिथ्याज्ञानत्वम् प्राप्नुयात, तदा चेत्येवं सर्वस्मिन् मिथ्यात्वे प्राप्ते भवदीयं सम्यग् दर्शनं किं स्यात्? विषयाभावाद् ज्ञानाभाव एव सम्यग् दर्शनमिनि भवन्नये स्यादित्यर्थः, यद् यदुपलभ्यते तत्तदवयवित्वेनाघ्रातम् = समायुक्तम्, अतो नास्ति भवत्सम्मतोऽनवयवी विषयो यो निर्वितर्काया विषयः स्यात, तस्मादस्ति निर्वितर्काया विषयोऽवयविरूपि वस्तु यत् सत्यज्ञानस्य विषय इति, सत्यपदार्थोऽत्र विचार्यो वागविषयस्तथा ज्ञानविषयश्चेद् यथाऽर्थस्तदा तद्वाक्यं ज्ञानञ्च सत्यमुच्यते, द्विविधं सत्यम्—व्यावहारिकविषयं व्यवहारसत्यम्, मोक्ष-

तत्त्ववैशारदी ।

अनुभवसिद्धं सत्त्वं हेतुः क्रियते यत्किल पांशुलपादुको हालिकोऽपि प्रतिपद्यते; अन्यद्वाऽनुभवसिद्धात्, तत्रान्यदसिद्धत्वादहेतुः, अनुभवसिद्धन्तु घटादीनां सत्त्वमर्थक्रियाकारित्वरूपं न स्थूलादन्यत्, सोऽयं हेतुः स्थूलत्वमपाकुर्वन्नात्मानमेव व्याहन्ति, ननु न स्थूलत्वमेव सत्त्वम्; अपि त्वसतो व्यावृत्तिः, अस्थौल्यव्यावृत्तिश्च स्थौल्यं, व्यावर्त्यभेदाच्च व्यावृत्तयो भिद्यन्ते, अतः स्थौल्याभावेऽपि न सत्त्वव्याहतिरन्यत्वाद्, भवतु वा व्यावृत्तिभेदादवसायविषयभेदो यत्पूर्वकास्त्ववसायास्तस्यानुभवस्याविकल्पस्य प्रमाणस्य को विषय इति निरूपयतु भवान्? रूपपरमाणवो हि निरन्तरोत्पादा अगृहीतपरमसूक्ष्मतत्त्वा इति चेद्? हन्तैते गन्धरसस्पर्शपरमाणुभिरन्तरिता न निरन्तराः, तस्मादन्तरालाग्रह एकघनवनप्रत्ययवत्परमाण्वालम्बनः सन्नयं विकल्पो मिथ्येति; तत्प्रभवा विकल्पा न पारम्पर्य्येणापि वस्तुप्रतिबद्धा इति कुतस्तदवसितस्य सत्त्वस्यानवयवत्वसाधकत्वम्? तस्मादविकल्पस्य प्रत्यक्षस्य प्रामाण्यमिच्छता तदनुभूयमानस्थौल्यस्यैव सत्त्वमविकल्पावसेयमकामयताऽभ्युपेयम्, तथा च तद्बाधमानं सत्त्वमात्मानमेवापबाधेत, परमसूक्ष्माः परमाणवो विजातीयपरमाणवन्तरिता अनुभवविषया इति व्याहतमङ्गीकरणम्, तदिदमुक्तं—यस्य पुनरवस्तुकः स प्रचयविशेषो निर्विकल्पस्य विषय इति, सन्तु तर्हि सूक्ष्माः परमाणवो निर्विकल्पविषया इत्यत आह—"सूक्ष्मं च कारणमनुपलभ्यमविकल्पस्य" इति । तस्यावयव्यभावाद् हेतोः 'अतद्-

पातञ्जलरहस्यम् ।

पुनरिति । स्थूलात् = सावयवात्, आत्मानं = सत्त्वम्, अपोहवादमाशङ्कते—नन्विति । व्यावृत्तिर्भावः सप्रतियोगिकत्वात् स्थौल्यप्रतियोगितयाऽऽपतति स्थौल्याभावो ज्ञाने, सत्त्वमङ्गीकृत्य तस्य कारणं निर्विकल्पकं ज्ञानं विषयाभावेन दूषयति—भवत्विति । अवसायविषयेति । ज्ञानस्य प्रमेयरूपाः त्वक्चक्षुषाऽगृह्यमाणा रूपपरमाणव इत्युक्ते दोधूयमाना रूपरसादिपरमाणवस्तैरन्तरिता एव ते कथं निरन्तरा इति भेदाग्रहनिबन्धनो भ्रम एवेत्याह—तस्मादिति । अयं = कारणीभूताविकल्पस्तस्य अधीने च ज्ञानेऽनन्तरित्वासिद्धेरनुभवविषयासिद्धिरित्याह—एतद्रूपेति ।

वार्त्तिकम् ।

कस्तुच्छः सूक्ष्मं चावयवाख्यं कारणं न प्रत्यक्षगोचरं तस्य मतेऽवयव्यभावात् प्रायेण सर्वमेव मिथ्याज्ञानमित्यायातम्, यतोऽतद्रूपप्रतिष्ठमेव मिथ्याज्ञानमिति, तदा च सर्वस्य मिथ्या-

**वादतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव प्राप्तं मिथ्याज्ञानमिति, तदा च सम्यग् ज्ञानमपि किं स्याद्विषयाभावाद्, यद् यदुपलभ्यते तत्त-दवयवित्वेनाघ्रातं, तस्मादस्त्यवयवी यो महत्त्वादिव्यवहारापन्नः समा-पत्तेर्निर्वितर्काया विषयो भवति ॥ ४३ ॥**

भास्वती ।

विषयश्च परमार्थसत्यमिति, तद्व्यश्चापि-आपेक्षिकानापेक्षिकभेदेन द्विधा—काञ्चिदवस्था-मपेक्ष्य यज्ज्ञानमुत्पद्यते तदवस्थाऽपेक्षं तज्ज्ञानं तद्भाषणञ्चापेक्षिकं सत्यम् , उक्तञ्च—

"अतिदूरात् पयोदवद्दूरादश्मसङ्घातः ।
लक्ष्यतेऽद्रिः सदा भिन्नं सामीप्याच्छर्करामयः" ।। इति,

अल्पाधिकदूरावस्थानमपेक्ष्य पर्वतज्ञानं तज्ज्ञानभाषणञ्च सत्यमेव, करणोत्कर्षमपेक्ष्य जातं-ज्ञानमुत्कृष्टसत्यज्ञानम् , तत्रापि तत्त्वानां ज्ञानं चरमसत्यज्ञानम्, समाधौ करणानां चरम-स्थैर्यं स्वच्छता च तत एकाग्रभूमिकसमाधिजा प्रज्ञा चरमोत्कर्षसम्पन्ना, एवं सवितर्क-निर्वितर्कसमाधौ तदालम्बनविषयस्य चरमा स्थूलविषया सत्यप्रज्ञा, सविचारनिर्विचार-समाधौ च सूक्ष्मविषया सत्यप्रज्ञा, सा च योगिभिर्ऋतम्भरेत्यभिधीयते, तत्र तत्त्वविषया-ण्यापेक्षिकसत्यानि परमार्थस्योपायभूतानीत्यतस्तानि परमार्थसत्यमुच्यते, परमार्थसत्येषु यदुपेयभूतं स कूटस्थो द्रष्टा पुरुषस्तस्मात् तद्विषयकमनापेक्षिकं नित्यवस्तुविषयकं ज्ञानं-कूटस्थसत्यज्ञानम् , तेन च कौटस्थ्याधिगमः कैवल्यं वा भवतीति, नित्यवस्तुविषयकं-सत्यमनापेक्षिकं, तच्चापि द्विधा—परिणामिनित्यवस्तुविषयकं त्रैगुण्यम् , तथाऽपरिणा-मिनित्यवस्तुविषयकं कूटस्थवस्तुविषयकञ्चेति ॥ ४३ ॥

तत्त्ववैशारदी ।

रूपप्रतिष्ठं मिथ्याज्ञानम्' इति लक्षणेन सर्वमेव प्राप्तं मिथ्याज्ञानं = यत् स्थौल्यालम्बनं-यच्च तदधिष्ठानसत्त्वालम्बनमित्यर्थः, नन्वेतावताऽपि न ज्ञानमात्मनि मिथ्या भवति तस्यावयवित्वेनाप्रकाशादित्यत आह—"प्रायेण" इति । ननु किमेतावताऽपीत्यत आह—"तदा च" इति । सत्त्वादिज्ञानं चेन्मिथ्या तदा सत्त्वादिहेतुकमनवयवित्वादिज्ञानमपि मि-थ्यैव, तस्यापि हि निर्विकल्पागोचरस्थूलमेवावसेयतया विषयः, स च नास्तीति ता-त्पर्य्यार्थः, विषयाभाव एव कुत इत्यत आह—"यद् यद्" इति । विरोधश्च परिणामवैचि-त्र्येण भेदाभेदेन चोक्तोपपत्त्यनुसारेणोद्धर्तव्य इति सर्वं रमणीयम् ॥ ४३ ॥

पातञ्जलरहस्यम् :

सत्त्वालम्बनं = निर्विकल्पकं, तद्घटितमज्ञानं प्रमा स्यादित्यत्राह—प्रायेणेति । सूत्रार्थमुपसंहरति—तस्मादिति । क्षणमपरिणम्य न तिष्ठन्ति गुणा इत्याह—परिणामवैचित्र्येणेति ॥ ४३ ॥

वार्त्तिकम् ।

ज्ञानत्वे सम्यग् ज्ञानमपि किं स्यात्? न स्यादेव विषयाभावेन क्वापि, ज्ञानस्य सद्विषयकत्वा-सिद्धेरित्यर्थः, तत्र हेतुः—यद्यदिति । नन्ववयवज्ञानस्य सम्यग्ज्ञानत्वं स्यादिति चेन्न—सूक्ष्मं-चेत्यादिनाऽवयवानामप्रत्यक्षत्वस्योक्तत्वात्, अप्रत्यक्षेष्ववयवेषु लिङ्गं चावयव्येव तस्या-भावात् पूर्वावयवज्ञानं प्रमाणाभावादेवासिद्धमित्याशयः, ज्ञानज्ञानस्य सम्यग्ज्ञानत्वं कदा चित् स्यादित्याशयात् प्रायेणेत्युक्तम्, अवयव्यभावे संघाताश्रितत्वेन परैरभ्युपगतस्य ज्ञान-स्यापि रूपादिवन्मिथ्यात्वे सर्वं ज्ञानं भ्रमो ज्ञानत्वादित्यनुमानसंभवाच्चेति, स्वसिद्धान्त-मुपसंहरति—तस्मादिति । सवितर्कायाः कदा चिद् विकल्पनाप्युपपत्तिरित्याशयेन निर्वित-र्काया इत्युक्तम् ॥ ४३ ॥

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता॥४४॥**

तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिस्सा सविचारेत्युच्यते, तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितध-

भास्वती।

सूक्ष्मविषये सविचारनिर्विचारे व्याचष्टे—तत्रेति। तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु = साक्षाद् गृह्यमाणेषु न चागमानुमानविषयेषु, देशकालनिमित्तानुभवावच्छिन्नेषु देश उपर्यध-आदिः, तादृशदेशव्याप्तं नीलपीतादिध्येयं गृहीत्वा तत्कारणं तन्मात्रं तत्रोपलभ्यतेऽतो-देशानुभवावच्छिन्नः, न हि परमाणोः स्फुटा देशव्याप्तिप्रतीतिस्तस्मात् तज्ज्ञानेऽस्फुटा, उपर्यधःपार्श्वानुभवसम्प्रयुक्ततेति विवेच्यम्, कालः = वर्त्तमानादिः, त्रिकालानुभवेषु

तत्त्ववैशारदी।

"एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता", अभिव्यक्तो घटादिधर्मो-यैस्ते तथोक्ताः, घटादिधर्मोपगृहीता इति यावत्, देशः = उपर्य्यधःपार्श्वादिः, कालो = व-र्त्तमानः, निमित्तम् = पार्थिवस्य परमाणोर्गन्धतन्मात्रप्रधानेभ्यः पञ्चतन्मात्रेभ्य उत्पत्तिः, एवमाप्यस्य परमाणोर्गन्धतन्मात्रवर्जितेभ्यो रसतन्मात्रप्रधानेभ्यश्चतुर्भ्यः, एवं तैजसस्य पर-माणोर्गन्धरसतन्मात्ररहितेभ्यो रूपतन्मात्रप्रधानेभ्यस्त्रिभ्यः, एवं वायवीयस्य परमा-णोर्गन्धादितन्मात्रहीनाभ्यां स्पर्शप्रधानाभ्यां स्पर्शशब्दतन्मात्राभ्याम्, एवं नाभसस्य शब्दतन्मात्रादेवैकस्मात्, तदिदं निमित्तं भूतसूक्ष्माणाम्, एतेषां देशकालनिमित्तानामनु-भवस्तेनावच्छिन्नेषु, नाननुभूतविशेषणा बुद्धिर्विशेष्य उपजायत इत्यर्थः, ननु सवितर्कया सह किं सारूप्यं सविचाराया इत्यत आह—"तत्रापि" इति। पार्थिवो हि परमाणुः पञ्चत-

पातञ्जलरहस्यम्।

एतयेत्यादि-व्याख्याताऽन्तं सूत्रं, यैः = परमाणुभिर्निमित्तैः, उपादानैः गुणैः, गन्धः पृथिव्या-श्चेति स्मृतिमाश्रित्याह-पार्थिवस्य परमाणोः, पृथिवीरूपः परिणामा यस्य पञ्चारब्धत्वेन स्थू-ला पृथिवी, तथा च मोक्षधर्मवाक्यं—

सूक्ष्मताव्यापिते ज्ञेये भूम्यादेरुत्तरोत्तरमिति,

उपादानोपचय उपादेयस्थूलता, एवमाप्यस्येति। देशादिप्रतीतौ किंमानमित्थाशङ्क्या-ह—नाननुभूतेति। सारूप्यमाह—तत्रापीति। एकबुद्धिनिर्ग्राह्यत्वं सारूप्यमित्यर्थः, गन्ध-

वार्त्तिकम्।

तदेवं स्थूलविषये सूत्रद्वयेन समापत्तेर्द्विधा विभागं कृत्वा सूक्ष्मविषयेऽपि तस्या द्वैवि-ध्यमतिदिशति—

"एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता", एतया सवितर्कनिर्वितर्क-रूपया स्थूलविषयकसमापत्त्या सूक्ष्मविषयाऽपि सविचारनिर्विचाररूपा समापत्तिद्वयी व्या-ख्याता, अर्थोपरागानुपरागसाम्येनेत्यर्थः, वितर्कविचारेत्यादिसूत्रे सूक्ष्मविषयकाभोगो विचार-इत्युक्तं स एवात्र सविचारनिर्विचाररूपेणोच्यत इति स्मर्त्तव्यम्, कार्याद्युपरागानुपराग-युक्तां समापत्तिं द्विधा विभजते-तत्र भूतसूक्ष्मेष्विति। अत्र भूतशब्द इन्द्रियाणामप्युपलक्षकः सामान्यत एव सूक्ष्मविषयत्वेनास्याः समापत्तेः भाष्ये व्याख्येयत्वात्, भूतेन्द्रियाणां यत्सूक्ष्मं-कारणं तन्मात्रादिप्रकृतिपर्यन्तं "सूक्ष्मविषयत्वं चालिङ्गपर्यवसान"मित्यागामिसूत्रात् तेषु वर्त्तमानधर्मविशिष्टेषु तथा देशकालनिमित्तैर्विशिष्टतयाऽनुभूयमानेषु या समापत्तिः सा सविचारेत्युच्यत इत्यर्थः, अत्र देश उपर्यधःपार्श्वादिः, कालो वर्त्तमानादिः, निमित्तं परिणाम-प्रयोजकः पुरुषार्थविशेष इति, पूर्ववदेवात्राप्यत्रयबातिरिक्तस्तन्मात्रादिरूपोऽवयवी समापत्ते-र्विषय इत्याह-अत्रापीति। उदितो वर्त्तमानः, उपतिष्ठत-आरूढं भवति, सविचारां व्याख्याय

**मविशिष्टं भूतसूक्ष्ममालम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते, या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते, एवंस्वरूपं हि तद् भूतसूक्ष्म-**

भास्वती ।

वर्त्तमानमात्रानुभवावच्छिन्नः सविचारः, निमित्तानुभवावच्छिन्नः = निमित्तमुद्घाटकं कारणं-तद् यथा—रूपतन्मात्रज्ञानस्य निमित्तं तेजोभूतसाक्षात्कारपूर्वकं तेजःकारणानुसन्धित्सोः सविचारं ध्यानमेतन्निमित्तसापेक्षः, एवं देशकालनिमित्तानुभवावच्छिन्नेषु सूक्ष्मविषयेषु शब्दसहाया या समापत्तिर्जायते सा सविचारा, तत्रेति । तत्रापि निर्वितर्कवदत्र सविचाराऽप्येकबुद्धिनिर्ग्राह्यम् = एकमिदमनुभूयमानं रूपतन्मात्रमित्यादिरूपम्, उदित-धर्मविशिष्टम् = अतीतानागतानां धर्माणामनवगाहीत्यर्थः, भूतसूक्ष्मं = ग्राह्यं तन्मात्र-मस्मिताऽऽदयो ग्रहणतत्त्वान्यपीत्यर्थः, आलम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते, येति । या पुनः सर्वथा = सम्यगनवच्छिन्ना, सर्वत इत्यादिभिस्त्रिभिर्दलैः सर्वथा शब्दो व्याख्यातः, सर्वत इति । देशानुभवानवच्छिन्नत्वं शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेष्विति विषयस्य कालानुभवानवच्छिन्नत्वं सर्वधर्मानुपातिषु, सर्वधर्मात्मकेष्विति निमित्तानुभवानवच्छिन्नत्वम्, एवंविधावच्छेदरहिता शब्दादिविकल्पहीना प्रज्ञासमापन्नता निर्विचारा समापत्तिरिति, समापत्तिद्वयमुदाहरणेन विवृणोति—एवमिति । सविचाराया उदाहरणम्, विचारानुग-

तत्त्ववैशारदी ।

न्मात्रप्रचयात्मैकबुद्धिनिर्ग्राह्यः, एवमाप्यादयोऽपि चतुस्त्रिद्व्येकतन्मात्रात्मान एकबुद्धिनिर्ग्राह्या वेदितव्याः, उदिता = वर्त्तमानो धर्मस्तेन विशिष्टम्, एतावता चात्र सङ्केतस्मृत्यागमानुमानानविकल्पानुवेधः सूचितः, न हि प्रत्यक्षेण स्थूले दृश्यमाने परमाणवः प्रकाशन्तेऽपि त्वागमानुमानाभ्याम्, तस्मादुपपन्नमस्याः सङ्कीर्णत्वमिति, निर्विचारामाह = "या पुनरिति । सर्वथा = सर्वेण नीलपीतादिप्रकारेण, सर्वत इति । सार्वविभक्तिकस्तसिः, सर्वैः = देशकालनिमित्तानुभवैरित्यर्थः, तदनेन स्वरूपेण कालानवच्छेदः परमाणूनामिति दर्शितम्, नापि तदारब्धधर्मद्वारेणेत्याह—"शान्त" इति । शान्ताः = अतीताः, उदिताः = वर्त्तमानाः, अव्यपदेश्याः = भविष्यन्तो धर्मास्तैरनवच्छिन्नेष्विति, कतमेन सम्बन्धेन धर्माननुपतन्ति परमाणव इत्यत आह—"सर्वधर्मात्मकेषु" इति । अनवच्छिन्ना धर्मैः परमाणवः किमसम्बद्धा एव तैरित्यत आह—सर्वधर्मानुपातिष्विति । कथञ्चिद् भेदः कथञ्चिदभेदो धर्माणां परमाणुभ्य इत्यर्थः, कस्मात् पुनरियं समापत्तिरेतद्विषयेत्यत आह—"एवंस्वरूपं हि" इति ।

पातञ्जलरहस्यम् ।

तन्मात्रादुपादेयानां यत्कालानवच्छेद्यत्वं तत्परमतमादायान्यथा पञ्चतन्मात्रस्य पार्थिवस्य परमाणोरुत्पत्तिरिति विरोधः, एवमतीतवर्तमानानागतानां, भाष्यान्तरमाह—शान्तेत्यादि । एकतमेन परिणामेन सर्वधर्मानुपातित्वे कथं तदात्मकत्वमिति चेत्तत्राह—कथ-

वार्त्तिकम् ।

निर्विचारां व्याचष्टे—या पुनरिति । या तु सर्वथा सर्वैः स्वरूपैः सर्वतो देशकालाद्यनवच्छेदतः समापत्तिः शान्तादिव्यपदेश्यधर्मानवच्छिन्नेष्वतीतवर्त्तमानभविष्यद्धर्मैरनवच्छिन्नेष्वतीतवर्तमानभूतसूक्ष्मेषु जायते सा निर्विचारा, अनवच्छिन्नशब्दस्यासंबद्धार्थत्वनिरासाय विशेषणद्वयं-सर्वधर्मेत्यादि, सर्वधर्मानुगतेषु सर्वधर्माणामाश्रयेषु चेत्यर्थः, निर्वितर्कसाम्यमस्याः प्रतिपादयति—एवंस्वरूपं हीति । पूर्वसूत्रानुसारेणैतद्व्याख्येयम्, उक्तस्य समापत्तिचतुष्टयस्य

मेतेनैव स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति, प्रज्ञा च स्वरूपशून्येवार्थमात्रा यदा भवति तदा निर्विचारेत्युच्यते, तत्र महद्वस्तुविषया सवितर्का निर्वितर्का च, सूक्ष्मविषया सविचारा निर्विचारा च, एवमुभयोरेतयैव(१) निर्वितर्कया विकल्पहानिर्व्याख्यातेति ॥ ४४ ॥

## सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसानम् ॥ ४५ ॥

भास्वती।

तसमाधिना साक्षात्कृतं भूतसूक्ष्ममेवंस्वरूपम्, एतेनैव स्वरूपेण = देशाद्यनुभवमपेक्ष्येत्यर्थः, आलम्बनीभूतम्, एवं सवितर्कवच्छब्दसहायः प्रज्ञेयविषयः समाधिप्रज्ञामुपरञ्जयति सविचारायामिति शेषः, निर्विचारस्वरूपं विवृणोति—प्रज्ञेति। समाधिप्रज्ञा यदा शब्दव्यवहारजविकल्पशून्या स्वरूपशून्येवार्थमात्रनिर्भासा भवति तदा निर्विचारेत्युच्यते, तत्रेति। किञ्च तत्र महावस्तुविषया = स्थूलभूतेन्द्रियविषया, सूक्ष्मविषया = तन्मात्रादिविषया, एवमुभयोर्निर्वितर्कनिर्विचारयोरेतया निर्वितर्कया विकल्पहानिः = शब्दार्थज्ञानविकल्पशून्यता व्याख्याता ॥४४॥

किं सूक्ष्मविषयत्वमित्याह—सूक्ष्मविषयत्वमलिङ्गपर्य्यवसानम् = अलिङ्गे प्रधाने सूक्ष्म-

तत्त्ववैशारदी।

वस्तुतत्त्वग्राहिणी नातत्त्वे प्रवर्त्तत इत्यर्थः,

विषयमभिधायास्याः स्वरूपमाह—"प्रज्ञा च" इति। सङ्कलय्य स्वरूपभेदोपयोगिविषयमाह—"तत्र" इति। उपसंहरति—"एवम्" इति। उभयोः = आत्मनश्च निर्विचारायाश्चेति ॥ ४४ ॥

किं भूतसूक्ष्म एव ग्राह्यविषया समापत्तिः समाप्यते ? न–किन्तु–"सूक्ष्मविषयत्वं चा-

पातञ्जलरहस्यम्।

च्छिद्रमेद इति। जात्युत्तरेण समाधत्ते वस्तुतत्त्वेति ॥४४॥

निर्विचारायाः समापत्तेरुपादानविषयपर्यवसानमाह–"सूक्ष्मविषयत्वं चालिङ्गपर्यवसान-

वार्त्तिकम्।

विषयविभागमाह—तत्रेति। महत् स्थूलं केवलविकृतिरिति यावत्, तेनेन्द्रियाणां भूतपरमाणूनां च संग्रहः, भूतपरमाणूनां च सूक्ष्ममध्ये प्रवेशो वक्तुं न शक्यते, आगामिसूत्रे पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्म इत्यादिना तन्मात्रादीनामेव सूक्ष्मत्वस्य वक्ष्यमाणत्वात्, सूक्ष्मत्वं च तत्त्वान्तरकारणत्वं, तच्च जलादिचतुष्टयव्यावृत्त्यर्थं बहिरिन्द्रियग्राह्यगुणराहित्येन विशेषणीयम्, वस्तुतस्तु–अष्टप्रकृतिसिद्धान्ताद् भूतान्युत्तरभूतेष्वाधारकारणान्येव न तु प्रकृतयः, अतोऽत्र तत्त्वान्तरप्रकृतित्वमेव सूक्ष्मत्वमिति, ननु शब्दार्थज्ञानविकल्पसंकीर्णत्वमेव कथमेतयवेत्यनेन नातिदिश्यते ? तत्राह—एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति, एवंस्वरूपमिव विकल्पहानिरपि = यथोक्तविकल्पराहित्यमप्युभयोः सविचारनिर्विचारयोरेतयैव पूर्वोक्तया निर्वितर्कया यथोक्तविकल्पशून्यया सूत्रकारेण व्याख्यातप्रायेत्यर्थः, पूर्वभूमिकायां त्यक्तविकल्पस्योत्तरभूमिकायामसंभवादिति ॥४४॥

सूक्ष्मविषयेत्युक्तं, तत्र सूक्ष्मो विषयः किंपर्यन्त इत्याकाङ्क्षायामाह—

"सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्", सूक्ष्मश्चासौ विषयश्चेति सूक्ष्मविषयः, अलिङ्ग-

(१) एतयैवेति। यत्तु केनापि भिक्षुणाऽत्रार्थोपरागानुपरागसाम्येनैतयेत्यनेन सवितर्कामपि परामृश्योभयोरित्यस्य सविचारनिर्विचारयोरित्येवं कृतमर्थमाक्षिप्यासंगतिरुक्ता, तदुत्थापितकुचोद्यतया हेयम्।

**पार्थिवस्याणोर्गन्धतन्मात्रं, सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रं, तैजसस्य रूपतन्मात्रं, वायवीयस्य स्पर्शतन्मात्रम्, आकाशस्य शब्दतन्मात्रमिति, तेषामहङ्कारः, अस्यापि लिङ्गमात्रं सूक्ष्मो विषयः, लिङ्गमात्रस्याप्यलिङ्गं सूक्ष्मो विषयः, न चालिङ्गात्परं सूक्ष्ममस्ति, नन्वस्ति पुरुषः सूक्ष्म इति ? सत्यम्—यथा लिङ्गात्परमलिङ्गस्य सौक्ष्म्यं, न चैवं पुरुषस्य,**

भास्वती ।

विषयत्वं पर्यवसितं तदवधिस्थितमित्यर्थः, व्याचष्टे—पार्थिवस्येति । लिङ्गमात्रं महत्तत्त्वमस्मीतिमात्रबोधस्वरूपं यत् स्वकारणयोः पुम्प्रकृत्योर्लिङ्गमात्रम्, न कस्य चित् स्वकारणस्य लिङ्गमित्यलिङ्गम्, तच्च महत उपादानकारणं ततस्तत् सूक्ष्मतमं दृश्यम्, अपि च लिङ्गस्य महतः पुरुषोऽपि सूक्ष्मं कारणमिति स सूक्ष्मं कारणमिति, सत्यं किन्तु नोपादान-

तत्त्ववैशारदी ।

लिङ्गपर्य्यवसानम्", पार्थिवस्य परमाणोः सम्बन्धिनी या गन्धतन्मात्रता सा समापत्तेः सूक्ष्मो विषयः, एवमुत्तरत्रापि योज्यम्, लिङ्गमात्रं = महत्तत्त्वं, तद्धि लयं गच्छति प्रधान इति, अलिङ्गं = प्रधानं, तद्धि न क्व चिल्लयं गच्छतीत्यर्थः, अलिङ्गपर्य्यवसानत्वमाह—"न चालिङ्गात्परम्" इति । चोदयति—"ननु" इति । पुरुषोऽपि सूक्ष्मो नालिङ्गमेवेत्यर्थः, परिहरति—"सत्यम्" इति । उपादानतया सौक्ष्म्यम् अलिङ्ग एव नान्यत्रेत्यर्थः, तत्र पुरुषार्थनिमित्तत्वान्महदहङ्कारादेः पुरुषोऽपि कारणमलिङ्गवद् इति, कुत एवंलक्षणमलिङ्गस्य

पातञ्जलरहस्यम् ।

मि"ति, अलिङ्गं न कुत्रापि लीयत इत्यलिङ्गं प्रकृतिः तद्व्यापिकैषा समापत्तिरित्याह-पार्थिवस्याणोरित्यादि-अलिङ्गंसूक्ष्मो विषय इत्यन्तेन भाष्येण, पुरुषस्य ततः सूक्ष्मत्वेऽपि नोपादानत्वेन समापत्तेर्विषयो, हेतुः = प्रवर्तको भोगापवर्गद्वारेणेति भाष्यार्थः, सम्बन्धिन्युपादानतयेत्युपादेयः परमाणुरित्यर्थः, प्रधानं प्रधीयते घटान्तं कार्यमत्रेति, ननु पुरुषोऽपि प्रधानमस्त्वलिङ्गत्वादि-

वार्त्तिकम् ।

प्रकृतिस्तत्पर्यन्तैव सूक्ष्मविषयतेत्यर्थः, तत्र स्थूलमारभ्य प्रकृतिपर्यन्तस्य सूक्ष्मतायां क्रममाह-पार्थिवस्येति । स्थूलकाष्ठाः पञ्चविधा अणवस्तत्र पार्थिवाण्वपेक्षया गन्धतन्मात्रंसमापत्तेः सूक्ष्मो विषयः, यद्यपि पार्थिवाणुर्जलविशिष्टगन्धतन्मात्रारब्धस्तथाऽपि गन्धतन्मात्रस्य प्राधान्यात् तदेवं पार्थिवाणोः सूक्ष्मत्वमुक्तम्, एवमाप्यादीनां त्रयाणां पूर्वपूर्वभूतविशिष्टरसादितन्मात्रकार्यत्वेऽप्याकाशाणोश्चाहङ्कारविशिष्टशब्दतन्मात्रकार्यत्वेऽपि प्राधान्यादेकैकतन्मात्रमेव सूक्ष्ममित्युक्तमिति वेदितव्यम्, तेषामहङ्कार इति । तेषां पञ्चतन्मात्राणामहङ्कारः सूक्ष्मः कारणत्वात्, अत्र च तन्मात्रैरिन्द्रियाण्युपलक्षणीयानि, अस्यापीति । अहङ्कारस्यापीत्यर्थः, लिङ्गमात्रं महत्तत्त्वं तद्धि स्वकारणस्य प्रकृतेरनुमापकमात्रमङ्कुरवत्, प्रकृतिगतविशेषाणामहंकारादिष्वेव प्रकटीभावात्, यथा यत्र काण्डादिभिर्बीजगतविशेषाभिव्यक्तिर्नाङ्कुरमात्रेणेति, अलिङ्गं प्रधानम्, अकार्यत्वेन कस्याप्यननुमापकत्वादिति, अलिङ्गपर्यवसानत्वं व्याचष्टे-न चालिङ्गादिति । चोदयति-नन्विति । ननु पुरुषः प्रकृत्यपेक्षयाऽपि सूक्ष्मोऽस्ति निर्धर्मकत्वादिति पूर्वपक्षं परिहरति-सत्यमिति । यथोपादानतया लिङ्गापेक्षितं सौक्ष्म्यंप्रधानस्यास्ति नैवं पुरुषस्य तस्यापरिणामित्वाद् उपादानतया च सूक्ष्मत्वमत्र विवक्षितमित्याशयः, ननु यदि पुरुषः कारणं न भवति तर्हि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म"

"तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी"-

किन्तु लिङ्गस्यान्वयिकारणं पुरुषो न भवति हेतुस्तु भवतीति, अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम् ॥ ४५ ॥

## ता एव सबीजः समाधिः ॥ ४६ ॥

भास्वती ।

रूपेण सूक्ष्मं यतः स हेतुः = निमित्तकारणं लिङ्गमात्रस्य, तद्रूपेणैव सूक्ष्मतमं नोपादानरूपेण, अतः प्रधान उपादानस्य निरतिशयं सौक्ष्म्यम् ॥४५॥

ता इति । बहिर्वस्तुबीजाः = बहिर्वस्तु = ध्येयरूपेण पृथग् ज्ञायमानं वस्तु, तदेव बीज-

तत्त्ववैशारदी ।

सौक्ष्म्यमित्याशयवान् पृच्छति—किन्त्विति । उत्तरमाह—"लिङ्गस्य" इति । सत्यं-कारणं, न तूपादानम्, यथा हि प्रधानं महदादिभावेन परिणमते न तथा पुरुषस्तद्धेतु-रपीत्यर्थः, उपसंहरति—"अतः प्रधान एव सौक्ष्म्यं निरतिशयं व्याख्यातम्" इति ॥ ४५ ॥

चतसृणामपि समापत्तीनां ग्राह्यविषयाणां सम्प्रज्ञातत्वमाह—"ता एव सबीजः समाधिः"

पातञ्जलरहस्यम् :

त्याशङ्क्याह-सत्यमिति । प्रधानस्य परिणामिनित्यत्वेऽपि पुंसः कूटस्थनित्यत्वादसंहतत्वा-च्च नोपादानतेत्यर्थः ॥ ४५ ॥

एकतत्त्वाभ्यास इत्यत्रोक्ता पुरुषविषयिण्यभ्यस्यमानैव सम्प्रज्ञातनेति स्मारयन्नाह-सम्प्र-

वार्त्तिकम् ।

त्यादिश्रुतिस्मृतिशतविरोध इत्याशङ्कां परिहरति-किं तु लिङ्गस्येति । हेतुस्तु भवति किन्तु लिङ्गस्यान्वयिकारणमुपादानकारणं पुरुषो न भवतीति व्युत्क्रमेणान्वयः, तत्र परमात्मनोऽधिष्ठातृत्वेन निमित्तकारणत्वं—

"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्"

इति गीतावचनात्—

"प्रधानपुंसोरजयोर्यतः क्षोभः प्रवर्त्तते ।
नित्ययोर्व्यापिनोश्चैव जगदादौ महात्मनोः ॥
तत्क्षोभकत्वाद् ब्रह्माण्डसृष्टौ हेतुर्निरञ्जनः ।
अहेतुरिति सर्वात्मा गीयते परमेश्वरः" ॥

इत्यादि सकलस्मृतिषु तथा निर्णयाच्च, यत्तु-ईश्वरस्याधिष्ठानत्वरूपमुपादानत्वं "यतो वा इमानि भूतानि जायन्ते" इत्याद्युक्तश्रुतिस्मृत्योर्गीयत आकाशस्य वायूपादानवत्; तदप्यत्र दर्शननिमित्तकारणतामध्य एव प्रवेश्यते पुरुषाणां विकारित्वभ्रमनिरासायेति पुरुषार्थं प्रकृतेः प्रवृत्त्यभ्युपगमेन च जीवपुरुषाणामपि महदाद्यखिलसृष्टिहेतुत्वं संयोगमात्रेण, नोपादानत्वेन, तथा चोक्तम्—

"बुद्ध्यादयो विशेषान्ता अव्यक्तादीश्वरेच्छया ।
पुरुषाधिष्ठितादेव जज्ञिरे मुनिपुङ्गवाः ! ॥
सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च" ॥

इत्यादिस्मृतिभिः, जीवानामधिष्ठानसंयोगमात्रम्, अनुमतिस्तु पूर्वकल्पीयकामकर्मादि-रूपेति दिक् ॥ ४५ ॥

तदेवं ग्राह्यग्रहणसमापत्त्योः स्थूलसूक्ष्मविषयभेदेन विशिष्टाविशिष्टरूपतश्चतुर्विधविभाग-उक्तः, ग्रहीतृसमापत्तौ च यः सविकल्परूपो विशेषः स एतास्वेव चतसृष्वन्तर्भूतः चेतनोपराग-णैवाचेतनेषु योगस्य व्यवस्थापितत्वात्, अतो ग्रहीतृसमापत्तौ सविकल्पाविकल्पादिवि-

**ताश्चतस्रः समापत्तयो बहिर्वस्तुबीजा इति समाधिरपि सबीजः, तत्र स्थूलेऽर्थे सवितर्को निर्वितर्कः सूक्ष्मेऽर्थे सविचारो निर्विचार इति चतुर्धोपसंख्यातः समाधिरिति ॥ ४६ ॥**

भास्वती।

मालम्बनं यासां ताः, सुगममन्यत् ॥ ४६ ॥

तत्त्ववैशारदी।

एवकारो भिन्नक्रमः सबीज इत्यस्यानन्तरं द्रष्टव्यः, ततश्चतस्रः समापत्तयो ग्राह्यविषयाः सबीजतया नियम्यन्ते, सबीजता त्वनियता ग्रहीतृग्रहणगोचरायामपि समापत्तौ विकल्पानिकल्पभेदेनानिषिद्धा व्यवतिष्ठते, तेन ग्राह्ये चतस्रः समापत्तयो ग्रहीतृग्रहणयोश्च चतस्र-(१)इत्यष्टौ ते भवन्तीति, निगदव्याख्यातं भाष्यम् ॥ ४६ ॥

पातञ्जलरहस्यम्।

ज्ञातत्वमिति। "ता एव सबीजः समाधिः" सूत्रं, प्रधानान्त इति भाष्यार्थः, व्रीहीनवहन्तीति चतुरो मुष्टीन्निर्वपतीति प्रत्येकं व्रीहिष्ववघातयोगो नियम्यते न त्वन्येषु निषिध्यते तद्वद् ग्राह्यविषये नियम्येऽपि न ग्रहीतृग्रहणयोः समापत्तेः सबीजता निषिध्यत इत्याह-सबीजता त्विति। तेनाष्टौ सिद्धा भवन्तीति भाष्यहृदयं प्रकटीकृतम् ॥ ४६ ॥

वार्त्तिकम्।

भागो नोक्तः, वितर्केत्यादिसूत्रेण पूर्वं संप्रज्ञातस्यावान्तरविभाग एव कृत इदानीं यथोक्तसमापत्त्याख्यकार्यमुखेन सबीजपरिभाषापूर्वकं संप्रज्ञातस्य सामान्यलक्षणमनेनैव प्रसङ्गेनाह-

"ता एव सबीजः समाधिः", ता एव ग्रहीतृग्रहणग्राह्येषु समापत्तय एव सबीजः समाधिः संप्रज्ञातयोग इत्यर्थः, समापत्तिरूपसाक्षात्कारहेतुत्वाद्योगस्य समापत्तित्वमुक्तम्, योगे स्वतोऽवान्तरविशेषाभावादिति, ननु ग्रहीतृग्रहणग्राह्यसमापत्तिभिर्वितर्कविचारास्मिताऽनुगतास्त्रयः संप्रज्ञाता एव संगृह्यन्ते न पुनरानन्दानुगत इति कथं ता एवेत्यवधारणमिति चेन्न? आनन्दस्य बुद्धिधर्मत्वेन ग्राह्यमध्ये प्रवेशात्, ननु दुःखबीजसंस्कारहेतुतया समापत्तय एव सबीजाः न तु वृत्तिनिरोधात्मको योग इति कथमुच्यते ता एव सबीजयोग इति? तत्राह—भाष्यकारः ताश्चतस्र इति। बहिर्वस्तून्यनात्मधर्माः संस्कारधर्मादयो दुःखबीजानि जायन्तेऽस्यास्य इति बहिर्वस्तुबीजाः, संप्रज्ञातनिष्ठाया अपि संस्कारहेतुत्वाद् धर्ममेघत्वाच्च, तथा च वितर्कादिसूत्रोक्तरीत्या चतस्रः प्रकृते तु त्रिधा विभक्तास्ता ग्रहीत्रादिविषयिकाः समापत्तयो-बहिर्वस्तुबीजा इत्यतस्ताभिः सम्बन्धात्समाधेः संप्रज्ञाताख्यो वृत्तिनिरोधोऽपि सबीजः उच्यत इत्यर्थः, ननु स्थूलसूक्ष्मसमापत्तेरेव चतुर्विधत्वादानन्दास्मितासमापत्तिभ्यां सह षट् समापत्तयो भवन्ति तत्कथमुच्यते चतस्र इत्याशङ्कामपाकरोति—तत्र स्थूल इति। तत्र चतसृषु समापत्तिषु मध्ये स्थूलेऽर्थे एक एव समाधिरवान्तरभेदेनैव सवितर्कनिर्वितर्करूपतो-द्विधा, तथा सूक्ष्मेऽर्थेऽप्येक एव समाधिरवान्तरभेदेनैव सविचारनिर्विचाररूपतो द्विधा प्रोक्त इत्यतो वितर्कानुगतादिरूपैः पूर्वं स संप्रज्ञातयोगश्चतुर्धोपसंख्यातः परिगणित इत्यर्थः, के चित्तु सूत्रस्थ एवकारो भिन्नक्रमः, तथा च ताः सवितर्कनिर्वितर्कसविचारनिर्विचाररूपाश्चतस्रः समापत्तयः सबीजसमाधेरेवेति सूत्रार्थः, तेन न ग्रहीत्रादिसमापत्तेरपि सबीजत्वं भाष्ये प्रागुक्तंविरुध्यत इत्याहुः, तन्न–ग्रहीत्रादिसमापत्तेः सबीजत्वानुक्त्याऽत्र सूत्रकारस्य न्यूनताऽऽपत्तेः, एवकारवैयर्थ्याच्च, यथाक्रमस्यैवैवकारस्योपपत्तौ भिन्नक्रमात्वानौचित्याच्चेति, यच्चान्यैरुक्तं ग्राह्यविषये स्थूलसूक्ष्मभेदेन सवितर्कादिरूपाश्चतस्रः समापत्तयः, ग्रहणाख्येषु चेन्द्रियेषु सानन्दनिरानन्दरूपे द्वे समापत्ती ग्रहीतृषु च सास्मितनिरस्मितरूपे द्वे समापत्ती इत्यष्टौ

(१) अष्टाविति। यत्त्वत्र समापत्तिषोढात्वं वदतो भिक्षोर्मत्सरत्वमारोपि केनापि तत्स्वमात्सर्यमेवासूचि ग्राह्यगृह्यं चतुष्कमादाय ग्रहणग्रहीत्रोर्द्वित्वेनावान्तरभेदाविवक्षायां षोढात्वस्य निराबाधात।

## निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥

**अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यम्, यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवत्यध्यात्मप्रसादः, भूतार्थविषयः क्रमाननुरोधी स्फुटप्रज्ञाऽऽलोकः, तथा चोक्तं—**

**"प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान्।**

भास्वती।

अशुद्ध्येति। अशुद्ध्यावरणमलापेतस्य = अस्थैर्यजाड्यरूपमावरणमलं तदपेतस्य, प्रकाशस्वभावस्य बुद्धिसत्त्वस्य रजस्तमोभ्यां = राजसतामससंस्कारैरित्यर्थः, अनभिभूतोऽतः स्वच्छः = अनाविलः, स्थितिप्रवाहः = एकाग्रभूमिजातत्वादित्यर्थः, वैशारद्यमित्यर्थः, तदेति

तत्त्ववैशारदी।

चतसृषु समापत्तिषु ग्राह्यविषयासु निर्विचारायाः शोभनत्वमाह—"निर्विचारवैशारद्येऽध्यात्मप्रसादः", वैशारद्यपदार्थमाह—"अशुद्धि" इति। रजस्तमसोरुपचयोऽशुद्धिः सैवावरणलक्षणो मलस्तस्मादपेतस्य, प्रकाशात्मनः = प्रकाशस्वभावस्य बुद्धिसत्त्वस्य, अत एवानभिभूतः, स्यादेतद्-ग्राह्यविषया चेत् समापत्तिः कथमात्मविषयः प्रसाद इत्यत आह—"भूतार्थविषय" इति। नात्मविषयः किन्तु तदाधार इत्यर्थः, क्रमाननुरोधी = युगपदित्यर्थः,

पातञ्जलरहस्यम्।

शोभनत्वमुपादेयत्वमित्याह, निर्विचारादि-प्रसादान्तं, सूत्रं विशारदो निर्मल इत्याह न विभुमिति, अनेन व्यधिकरणत्वे कार्यकारणता नास्तीत्याशङ्क्याह-किन्त्विति। प्रसादो नाम निष्कलुषता स आत्मन्येव घटते, असङ्गत्वादात्मनः, "असङ्गो ह्ययं पुरुष" इति श्रुतेः, उच्च-

वार्त्तिकम्।

समापत्तयो बोध्याः युक्तिसाम्यादिति, तदपि न-प्रमाणादर्शनाद्, आनन्दानुगतास्मितानुगतयोर्निरानन्दनिरस्मितत्वरूपविशेषासंभवाच्च, आनन्दो हि ल्हादमात्रोऽस्मिता च चैतन्यमात्रसंविदिति भाष्यकृता प्रोक्तम्, न त्विन्द्रियं ह्लादशब्देन व्याख्येयं लक्षणाप्रसङ्गात्, नाप्यहङ्कारोपरक्तचैतन्यमस्मिताशब्देन व्याख्येयं लक्षणाऽऽपत्तेः, अतः कथं ल्हादवतः संप्रज्ञातस्य ल्हादशून्यत्वं कथं वा विविक्तचिन्मात्रसंविद्युक्तस्य संप्रज्ञातस्य तच्छून्यत्वमिति दिक्, तस्मादवान्तरभेदेन पञ्चैव समापत्तयः-ग्राह्यग्रहणयोः स्थूलसूक्ष्मभेदेन सवितर्काद्याश्चतस्रः पञ्चमी च महीतृष्विति, संप्रज्ञातयोगस्त्वानन्दानुगतमादायावान्तरभेदेन षोढैवेति ॥ ४६ ॥

उक्तासु समापत्तिषु निर्विचारायां विशेषं कं चिदाह—

"निर्विचारवैशारद्येऽध्यात्मप्रसादः", सामान्यतो वैशारद्यमादौ व्याचष्टे—अशुद्ध्येति। रजस्तमोवृद्धिकरणं पापादिरशुद्धिः सैवावरणलक्षणो मलस्तस्मादपेतस्येति हेतुगर्भविशेषणम्, प्रकाशात्मनः प्रकाशस्वभावस्य बुद्धिरूपसत्त्वस्य कारणापायादेव रजस्तमोभ्यामनभिभूतोऽतः स्वच्छः ध्येयगताशेषविशेषप्रतिबिम्बोद्ग्राही स्थितिप्रवाह एकाग्रताधारा चित्तस्य वैशारद्यमित्यर्थः, समग्रसूत्रार्थं व्याचष्टे-यदेति। आत्मनि बुद्धौ वर्त्तत इत्यध्यात्मं तादृशः, प्रसादशब्दार्थं विवृणोति—भूतार्थेति। यथाऽऽर्थविषयकः क्रमाननुरोधी युगपत्सर्वार्थग्राही स्फुटप्रत्यक्षः स प्रज्ञाऽऽख्य आलोक इत्यर्थः, अत्रैव परमर्षिगाथामुदाहरति—तथा चेति। "तरति शोकमात्मविदि"ति श्रुतेरशोच्योऽहं दुःखी पापीत्यादिरूपैः स्वस्याशोच्यः सन् सर्वानेव जनान् शोचतो दुःखितान् पश्यति, स्वयं शोच्यो हि पुरुषः स्वापेक्षया कं चित् सुखिनमिव पश्यति मौढ्यात्, अशोच्यस्तु परमार्थतो दुःखसमुद्रमग्नं सर्वं-

भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति" ॥ ४७ ॥

**ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥**

(१)तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति सञ्ज्ञा भवति, अन्वर्था च सा, सत्यमेव बिभर्त्ति, न तत्र विपर्यासगन्धोऽप्यस्तीति, तथा चोक्तम्—

"आगमेनानुमानेन ध्यानाभ्यासरसेन च ।

भास्वती।

अध्यात्मप्रसाद; = अध्यात्मं करणं बुद्धिरित्यर्थः, तस्य प्रसादः परमनैर्मल्यं ततो भूतार्थविषयः = यथाऽर्थविषयः, क्रमाननुरोधी = क्रमहीनो युगपत् सर्वभासकः ॥ ४७ ॥

तस्मिन् = निर्विचारस्य वैशारद्ये जाते सति या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा ऋतं = सत्यं बिभर्त्तीति ऋतम्भरा, अन्वर्था = नामानुरूपार्थयुक्ता, तथेति । आगमेन = श्रवणेन, अनुमानेन = उपपत्तिभिर्मननेन, ध्यानाभ्यासरसेन = ध्यानस्याभ्यासरसेन संस्का-

तत्त्ववैशारदी ।

अत्रैव पारमर्षीं गाथामुदाहरति —"तथा च" इति । ज्ञानालोकप्रकर्षेणात्मानं सर्वेषामुपरि पश्यन् दुःखत्रयपरीतान् शोचतो जनान् जानातीत्यर्थः ॥ ४७ ॥

अत्रैव योगिजनप्रसिद्धान्वर्थसञ्ज्ञाकथनेन योगिसंमतिमाह—"ऋतम्भरा तत्र प्रज्ञा", सुगमं भाष्यम्, 'आगमेन'—इति वेदविहितं श्रवणमुक्तं, अनुमानेनेति मननं, ध्यानं = चिन्ता,

पातञ्जलरहस्यम् ।

तरनिर्मलस्थलाधिष्ठितस्याविलाधस्थलस्थिते पुंसि चोक्ता धीरनुभवसिद्धेत्याह—प्रज्ञाप्रासादमिति । अशोच्यः = कृतकृत्यः, शोचनं शोकान्वयात् ॥ ४७ ॥

अन्वर्थसंज्ञाकथनम्—ऋतं सत्यम् आत्मतत्त्वं बिभर्तीति, श्रोतव्यो मन्तव्यो निदिध्यासितव्य-इति श्रुतिमाश्रित्याह—आगमेनेति। तत्र श्रवणं = मीमांसापारम्पर्ययोर्गुरुमुखाच्छ्रवणं तस्य प्रवात्तिकम् ।

जीवजातं दुःखितमेव पश्यतिः अमूढत्वादित्यर्थः, तथा च निर्विचारवैशारद्ये जाते स्वयमेव प्रकृतिपुरुषविवेको वा परमेश्वरतत्त्वं वा साक्षात् क्रियते न तु तत्साक्षात्काराय पुनर्योगापेक्षेति निर्विचाराया उत्कर्षः ॥ ४७ ॥

पूर्वसूत्रोक्तसबीजसमाधौ जायमानायाः समापत्त्याख्यायाः प्रज्ञाया अन्वर्थां तान्त्रिकींसंज्ञामपि दर्शयति—

"ऋतम्भरा तत्र प्रज्ञा", तस्मिन्निति तत्रेत्यस्य विवरणं, तस्मिन्समाहितचित्तस्येति पूर्वोक्तसबीजयोग इत्यर्थः, न चाव्यवहितसूत्रोक्तं वैशारद्यं प्रसादो वा कथं न तत्रेत्यनेन परामृश्यत-इति वाच्यम्, द्वितीयसूत्रतोऽत्र समाधिप्रज्ञासामान्यपरत्वस्य लभ्यमानत्वात्, सुगममन्यत्, ननु संज्ञाकथनमात्रेण किं प्रयोजनमित्याशङ्क्याह—अन्वर्थेति । विपर्यासरूपज्ञानं यद्यपि सवितर्कयोगजप्रज्ञायां शब्दार्थज्ञानविकल्पेऽस्ति तथाऽपि ऋतंभरजातीयत्वस्यैवात्र विवक्षितत्वाद् न तस्याव्याप्तिः, साजात्यं च समाधिजप्रज्ञात्वेन, अथ वा तत्र समाहितचित्ते जायमाना या प्रज्ञा सैव ऋतम्भरोच्यत इति सूत्रार्थः, लौकिकज्ञानेऽविद्यालेशसंपर्कावश्यंभावादिति योगकाले प्रकृष्टा प्रज्ञा भवतीत्यत्र स्मृतिं प्रमाणयति—तथा चेति । ध्यानस्य चिन्तनस्य योऽभ्यासः पौनःपुन्यं तत्र यो रस आदरस्तेन, तथा च श्रवणमनननिदिध्यास-

(१) तस्मिन्निति । बुद्धिविषयताऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नशक्तत्च्छब्देन सबीजयोगं परामृशतो भिक्षोरुक्तिः फल्गुत्वोक्तिर्या कस्यापि सैव तादृशी, फलतोऽध्यात्मप्रसादलाभाद् ।

त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्" इति ॥ ४८ ॥

सा पुनः,—

**श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥**

श्रुतम् = आगमविज्ञानम्, तत्सामान्यविषयम्, न ह्यागमेन शक्यो वि-

भास्वती।

रोपचयेनैवं प्रज्ञां त्रिधा प्रकल्पयन् साधयन्नुत्तमं योगं लभत इति ॥ ४८ ॥

श्रुतेति । विशेषः = अनन्तवैचित्र्यात्मकः, तस्मान्न शक्यः शब्दैरभिधातुमतः शब्दैः सामान्यविषयाः सङ्केतीकृताः, तस्माच्छब्दजन्यमागमविज्ञानं सामान्यविषयकम्, अनुमानमपि तादृशं तत्र हेतुज्ञानाद् यदंशस्य प्राप्तिस्तस्यैवावगतिस्तस्मान्न शक्या अनन्तविशेषास्तेनावगन्तुम्, असङ्ख्यहेतुज्ञानस्यासंभवत्वात्, प्रायेण चानुमानस्य

तत्त्ववैशारदी।

तस्याभ्यासः = पौनःपुन्येनानुष्ठानं, तस्मिन् रसः = आदरः तदनेन निदिध्यासनमुक्तम् ॥ ४८ ॥

स्यादेतद्—आगमानुमानगृहीतार्थविषयभावनाप्रकर्षलब्धजन्मा निर्विचाराऽऽगमानुमानविषयमेव गोचरयेद्, न खल्वन्यविषयानुभवजन्मा संस्कारः शक्तोऽन्यत्र ज्ञानं जनयितुम्, अतिप्रसङ्गात्, तस्मान्निर्विचारा चेद् ऋतम्भराऽऽगमानुमानयोरपि तत्प्रसङ्ग इत्यत आह—"श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वाद्", इति, बुद्धिसत्त्वं हि प्रकाशस्वभावं सर्वार्थदर्शनसमर्थमपि तमसाऽऽवृतं यत्रैव रजसोद्घाटयते तत्रैव गृह्णाति, यदा त्वभ्यासवैराग्याभ्यामपास्तरजस्तमोमलमनवद्यवैशारद्यम् उद्द्योतते तदाऽस्यातिपतितसमस्तमानमेयसीम्नः प्रकाशानन्त्ये सति किन्नाम यन्न गोचर इति भावः, व्याचष्टे—"श्रुतमागमविज्ञानं तत्सामान्यविषयम्", इति, कस्माद्—"न ह्यागमेन शक्यो विशेषविषयोऽभिधातुं" कुतः ?

पातञ्जलरहस्यम्।

थमाध्ययनविधिसिद्धेः, "प्रज्ञां कुर्वीत ब्राह्मणः" इति श्रुतिमाश्रित्याह-प्रकल्पयन् = दृढांकुर्वन् ४८

श्रुतानुमानेत्युत्तरसूत्रमवतारयितुं शङ्कते—स्यादिति । आकृतिस्तु क्रियाऽर्थत्वान्नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायत इति सूत्राभ्यां शब्दाभ्यां सामान्ये जातावेव शक्तिः, अनुमानं तु सामान्यविषयमेवान्यथा कुतश्च विशेषविषयताविरह इति सामान्यविषयकस्तज्जसंस्कार इत्युद्देश्यानुरोधेनोद्देश्ययोरपि न विशेषविषयतेति न योगिप्रत्यक्षमाहात्म्यं केनापि तावद् गृह्यते, "सर्वे समाः सर्वेऽनन्ताः" इति श्रुतिमाश्रित्याह-बुद्धिसत्त्वं हीति ।

"रजस्तमश्चाभिभूय सत्त्वं भवति भारत" ! इति-

भगवदुक्तेरुद्रिक्तसत्त्वस्यानतिक्रमणीयो विषयो नास्तीत्याह-अतिपतितेत्यादि-भाव इत्यन्तेन, "अथ यदा वाक् मृत्युनाऽत्ययमुच्यत साऽग्निरभवदि"ति श्रुतेः पापकृतपरिच्छिन्नत्वशून्यत्वेनानन्त्यं सर्वग्राहकत्वं बुद्ध्यादेरित्यर्थः, शब्दानुमानयोर्न विशेषो विषय इति युक्त्या स्थापयति-न हीत्यादि—उपसंहार इत्यन्तेन,

वार्त्तिकम्।

नैस्त्रिभिर्हेतुभिः सबीजयोगकाले प्रज्ञां प्रकल्पयन् प्रकर्षेण विपर्यासराहित्येनोत्पादयन् तत्प्रज्ञातः परवैराग्यद्वारा वक्ष्यमाणमुत्तमयोगं निर्बीजं लभत इति श्लोकार्थः ॥ ४८ ॥

नन्वागमानुमानयोरपि प्रमाणत्वात्ताभ्यामेव तदर्थतत्त्वं गृह्णतां किं योगेनेत्याशङ्कानिरासायोत्तरं सूत्रं प्रवर्त्तते तद्योजयति--सा पुनरिति—

"श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वाद्", सा तु समाधिसामान्यजा प्रज्ञा श्रुतानुमानरूपप्रज्ञाभ्यामन्यविषया = अतिरिक्तविषया विशेषार्थत्वाद् विशेषोऽर्थो विषयो यस्याः सा तथा तत्त्वादित्यर्थः, समाधिप्रज्ञायाः श्रवणमननाभ्यामतिरिक्तविषयत्वं विवृ-

शेषोऽभिधातुं, कस्माद् न हि विशेषेण कृतसङ्केतः शब्द इति, तथाऽनुमानं-सामान्यविषयमेव, यत्र प्राप्तिस्तत्र गतिर्यत्राप्राप्तिस्तत्र न भवति गतिरित्युक्तम्, अनुमानेन च सामान्येनोपसंहारः, तस्माच्छ्रुतानुमानविषयो न विशेषः कश्चिदस्तीति, न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणं, न चास्य विशेषस्याप्रमाणिकस्याभावोऽस्तीति,

भास्वती।

शब्दजन्यत्वाद्, एवमनुमानेन। सामान्यमात्रस्योपसंहारः = सामान्यधर्माश्रयबुद्धिः, न चेति। तथा लोकप्रत्यक्षेणापि सूक्ष्मव्यवहितविप्रकृष्टवस्तुना न ग्रहणं दृश्यते, एवमप्रामाणिकस्य श्रुतानुमानलोकप्रत्यक्षाणांति त्रिविधप्रमाणैरग्राह्यस्य विशेषस्य रूपस्य सूक्ष्मवि-

तत्त्ववैशारदी।

यस्मादानन्त्याद् व्यभिचाराच्च न विशेषेण कृतसंकेतः शब्दः, यस्मादस्य विशेषेण सह न वाच्यवाचकसम्बन्धः प्रतीयते, न च वाक्यार्थोऽपीदृशो विशेष. सम्भवति, अनुमानेऽपि लिङ्गलिङ्गिसम्बन्धग्रहणाधीनजन्मनि गतिरपेवेत्याह-"तथाऽनुमानम्" इति। यत्राप्तिरित्यत्र यत्रतत्रशब्दयोः स्थानपरिवर्त्तनेन व्याप्यव्यापकभावो गमयितव्यः, (१) अतोऽत्रानुमानेन सामान्येनोपसंहारः, उपसंहरति—"तस्माद्" इति। अस्तु तर्हि सम्बन्धग्रहानपेक्षं लोकप्रत्यक्षं, न तत् सामान्यविषयमित्यत आह—"न चास्य" इति। मा भूत् सम्बन्धग्रहाधीनं लोकप्रत्यक्षमिन्द्रियार्थाधीनं तु स्याद्, न चेन्द्रियाणामस्मिन्नस्ति योग्यतेत्यर्थः,

ननु यद्यागमानुमानप्रत्यक्षागोचरो विशेषस्तर्हि नास्ति प्रमाणविरहादित्यत आह—"न च" इति। न हि प्रमाणं व्यापकं कारणं वा प्रमेयस्य येन तन्निवृत्तौ निवर्त्तेत, नो खलु

पातञ्जलरहस्यम्।

"यत्राप्यतिशयो दृष्टो दूरसूक्ष्मादिदर्शने।
स स्वार्थानतिलङ्घेनानुरूप श्रोत्रवृत्तिते"ति-

न्यायमतिक्रम्याह—अस्तु तर्हीति। तथा—

"ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति"-

एतदपि सङ्कल्पादुपस्थीयत इति भावः, "प्राणा वै सत्यं तेषामेष सत्यमि"ति श्रुतिमाश्रित्याह- न हि प्रमाणमिति। सति प्रमेये प्रमाणं व्यवच्छेदकमन्यथैतदप्रमेयं तत्र मानं न तु यत्र मानं तत्रैव मेयं मेयस्य मानव्याप्यत्वाद् इत्याह-तन्निवृत्ताविति। मृगाङ्कश्चन्द्रः, शशव-

वार्त्तिकम्।

णोति-श्रुतमागमेति। न हि विशेषेणेति। पदार्थताऽवच्छेदकरूपेणैव पदार्थः शाब्दबोधे भासतेऽन्यथाऽतिप्रसङ्गात्, पदार्थताऽवच्छेदकं तु घटत्वादिसामान्यमेव न तु तत्तद्विशेषास्तेषामानन्त्येन सर्वेषामेकदाऽनुपस्थितेस्तत्तद्रूपैः शक्तिग्रहासंभवात् विशेषाणामन्योन्यं व्यभिचाराच्च सामान्यतः श्रुतेऽप्यर्थविशेषसंशयदर्शनाच्चेति, इत्युक्तमिति। अनुमानमित्यस्य विशेषणम्, अत्र हि व्यापकताऽवच्छेदकेन गतित्वादिसामान्येनैवानुमानं भवति न तु क्रियाऽऽदिगतविशेषरूपैरिति, अनुमानेन चेति। सामान्योपसंहार इत्युक्त इत्यनुषङ्गः, ननु श्रुतानुमानागोचरोऽपि विशेषो लौकिकप्रत्यक्षेणैव ग्राह्योऽस्तु किं योगजप्रत्यक्षेणेति तत्राह—न चास्येति। नन्वेवं तस्य विशेषस्याप्रामाणिकत्वाद् अभाव एवास्त्वित्याशङ्कां प्रतिषेधति—न चास्य विशेष-

(१) गमयितव्य इति।
"नियम्यत्वनियन्तृत्वे भावयोर्यादृशे मते।
विपरीते प्रतीयेते ते एव तदभावयोः"
इत्यभियुक्तोक्तेरानुभविकत्वादिति भावः।

समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा, तस्माच्छ्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वाद् इति ॥ ४९ ॥

समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवो जायते—

## तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥

भास्वती ।

शेषप्रमेयस्याभावोऽस्तीति न शङ्कनीयं; यतः सूक्ष्मभूतगतो वा पुरुषगतः = ग्रहीतृपुरुषगतः, करणगत इति यावत् स विशेषः समाधिप्रज्ञानिर्ग्राह्यः, तस्मादित्युपसंहरति ॥ ४९ ॥

समाधिप्रज्ञालाभे योगिनः प्रज्ञाजातः संस्कारो जायते, स च संस्कारोऽन्यसंस्कार-

तत्त्ववैशारदी ।

कलावतश्चन्द्रस्य परभागवर्त्तिहरिणसद्भावं प्रति न सन्दिहते प्रामाणिका इत्यर्थः, इति = तस्मात्, समाधिप्रज्ञानिर्ग्राह्य एवेति । अत्र च विवादाध्यासिताः परमाणव आत्मानश्च प्रातिस्विकविशेषशालिनः द्रव्यत्वे सति परस्परं व्यावर्त्तमानत्वाद्, ये द्रव्यत्वे सति परस्परं व्यावर्त्तन्ते ते प्रातिस्विकविशेषशालिनो यथा खण्डमुण्डादय इत्यनुमानेन, आगमेन च ऋतम्भराप्रज्ञोपदेशपरेण, यद्यपि विशेषो निरूप्यते तदनिरूपणे संशयः स्याद्, न्यायप्राप्तत्वात्, तथाऽप्यदूरविप्रकर्षेण तत्तत्त्वं कथञ्चिद्बोधयतः श्रुतानुमाने, न तु साक्षाच्चार्थमिव समुच्चयादिपदानि लिङ्गसंख्यायोगितया, तस्मात् सिद्धं श्रुतानुमानप्रज्ञाभ्यामन्यविषयेति ॥ ४९ ॥

स्यादेतद्—भवतु परमार्थविषयः सम्प्रज्ञातो यथोक्तोपायाभ्यासाद्, अनादिना-

पातञ्जलरहस्यम् ।

त्वेऽपि सन्दिहानो यतो, बुद्धिसत्त्वस्य विषयोऽप्यात्मा; इन्द्रियाविषयः सिद्ध इत्याह-समाधिप्रज्ञानिर्ग्राह्य इति । आत्मा शब्दैकगम्य इत्युक्तमुद्योतकारेणापि, वैशेषिकस्य विशेषपदार्थमादायानुमानमाह-विवादेति। आगमेन = "सत्यस्य सत्यं" "दूरस्थं चान्तिके पि तत्" "सर्वमावृत्य तिष्ठति" इत्यादिना, अदूरविप्रकर्षं सामान्यतो बोधयतः विशेषतो न बोधयत इति, अदूरविप्रकर्षो नाम संभावना, तदेवाह-चार्थमिवेति। देवदत्तश्च यज्ञदत्तश्च तावित्यत्र चो लिङ्गसङ्ख्ये बोधयति न तु चार्थानि समुच्चयादिपदानि तयोः समुच्चय इत्युक्तेः, एवं योगिप्रत्यक्षतेति भावः॥४९॥

"पूर्वं परमजातत्वादबाधित्वैव जायते ।

वार्त्तिकम् ।

स्येति । न हि निर्विशेषं सामान्यमस्तीतिन्यायेन सर्वत्रैव वस्तुनि विशेषसिद्धेरिति भावः, अतः परिशेषात्समाधिप्रज्ञाग्राह्य एव स विशेष इत्युपसंहरति—इति समाधीति । स्थूलस्य विशेषः कदा चिल्लौकिकप्रत्यक्षगोचरोऽपि स्यादिति स्थूलं परित्यज्य भूतसूक्ष्मगत इत्युक्तम्, पुरुषगतो वेति । एतेन पुरुषेष्वपि विशेषादिधर्मः स्वीकृतः, धर्मनिषेधस्तु विशेषगुणद्रव्यादिपरः, अथ वा स्वस्वोपाधिप्रतिबिम्बा एवातीतानागतवर्तमाना मुक्तामुक्तसाधारणाखिलपुरुषेष्वन्योन्यं विशेष इति बोध्यम्, स्यादेतद्-व्यवहितादिषु सन्निकर्षाद्यभावात्कथं समाधिप्रत्यक्षग्राह्यत्वमपि स्यात्, अथ योगजधर्मस्यापि सन्निकर्षत्वं कल्प्यमिति चेन्न—संयोगादिभिरननुगमात् प्रत्यक्षे विषयस्य कारणत्वेनातीतादिप्रत्यक्षस्यैवासंभवाच्चेति, अत्रोच्यते—अस्माकमन्तःकरणस्य विभुत्वेनातीतादीनां स्वरूपतः सत्त्वेन च सदा सर्वार्थसन्निकर्षात्, योगजधर्मेण च व्यवहितातीतादिज्ञानप्रतिबन्धकं तम एव निरस्यत इति तदेतत्साङ्ख्यभाष्ये "लीनवस्तुलब्धातिशयसंबन्धाद्वा न दोष"इति सूत्रेऽस्माभिः प्रपञ्चितम्, उपसंहारमुखेन सूत्रवाक्यार्थमाह—तस्माच्छ्रुतेति । एतेन दशमस्त्वमसीतिवत् शब्दादेव साक्षात्कार आत्मनो भवति निर्विशेषत्वेन चात्मनो न विशेषग्रहार्थमपि योगजप्रत्यक्षापेक्षेति नवीनवेदान्तिप्रलापोऽपसिद्धान्त एव, स्वशास्त्रानुक्तेऽर्थे समानतन्त्रसिद्धान्तस्यैव सिद्धान्तत्वादिति ॥ ४९ ॥

**समाधिप्रज्ञाप्रभवः संस्कारो व्युत्थानसंस्काराशयं बाधते,(१) व्युत्थानसंस्काराभिभवात् तत्प्रभवा प्रत्यया न भवन्ति, प्रत्ययनिरोधे समाधिरुपतिष्ठते, ततः समाधिप्रज्ञा, ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्काराशयो जायते, ततः प्रज्ञा ततश्च संस्कारा इति, कथमसौ संस्कारा-**

भास्वती।

प्रतिबन्धी = विक्षिप्तव्युत्थानसंस्कारप्रतिपक्षः, समाधीति। प्रज्ञाऽनुभवात् प्रज्ञासंस्कारस्ततः प्रज्ञाप्रत्ययः, प्रज्ञासंस्कारस्य विवर्धमानत्वे विक्षेपसंस्कारस्य तज्जप्रत्ययस्य च क्षीय-

तत्त्ववैशारदी।

तु व्युत्थानसंस्कारेण निरूढनिबिडतया प्रतिबन्धनीया समाधिप्रज्ञा सा, वातयाऽऽवर्त्तमध्यवर्त्तिप्रदीपपरमाणुरिवेति शङ्कामपनेतुं सूत्रमवतारयति—"समाधिप्रज्ञा" इति। सूत्रं पठति—"तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी", 'तद्' इति निर्विचारां समापत्तिं परामृशति, 'अन्य' इति व्युत्थानमाह, भूतार्थपक्षपातो हि धियां स्वभावः, तावदेवेयमनवस्थिता भ्राम्यति न यावत् तत्त्वं प्रतिलभते तत्प्रतिलम्भे तत्रास्थितपदा सती संस्कारबुद्धिः संस्कारचक्रक्रमेणावर्त्तमानमनादिमप्येतत्तत्त्वसंस्कारबुद्धिक्रमं बाधत एवेति, तथा च बाह्या अप्याहुः—

"निरुपद्रवभूतार्थस्वभावस्य विपर्य्ययैः।
न बाधोऽनादिमत्त्वेऽपि बुद्धेस्तत्पक्षपाततः" इति,

स्यादेतत्—समाधिप्रज्ञातोऽस्तु व्युत्थानजस्य संस्कारस्य निरोधः, समाधिजस्तु संस्का-

पातञ्जलरहस्यम्।

परस्य नान्यथोत्पादो न त्वबाधेन जीवनम्"—

इति न्यायेनानादिरपि सादिना बाध्यत इत्याह—"तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी"ति, समाधिजसंस्कारो व्युत्थानसंस्कारविरोधीत्यर्थः, बाधत एवेति। तत्र पूर्वपक्षो भाष्ये, विपयः तत्त्वज्ञानस्य सहायो, निःसहाया भ्रान्तिरत आह—निरुपद्रवेति। उपद्रवा समनन्तरप्र-

वार्तिकम्।

यथोक्तप्रज्ञायाः संस्कारजनकत्वमुत्तरसूत्रोपयोगितया प्रतिपादयति—समाधीति। ननु तथाऽपि प्रज्ञोत्पत्तिपर्यन्तं योगापेक्षाऽस्तु प्रज्ञोत्पत्त्यनन्तरं तु पुनः संप्रज्ञातपरम्परायाः किं फलमित्याशङ्कायामाह—

"तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी", प्रतिबन्धः कार्यविरोधित्वम्, इदमेव बाधशब्देन भाष्यकारो वक्ष्यति—सर्वेषां च संस्काराणां चित्तनाशादेव नाश इत्यपि भाष्ये व्यक्तीभविष्यति, सूत्रार्थं व्याचष्टे,—बाधत इत्यन्तेन, आशेत इत्याशयः संस्कारश्चासावाशयश्चेति विग्रहात् संस्काराशयमनुद्बुद्धसंस्कारमित्यर्थः, उद्बुद्धसंस्कारस्य च बाधो न संभवति; उद्बोधप्रतिबन्धस्यैव बाधशब्दार्थत्वादिति भावः, ननु वृत्तिनिरोधसंस्कारस्य व्युत्थानसंकाराभिभावकत्वं वक्ष्यति तत्कथं समाधिप्रज्ञासंस्कारस्यापि व्युत्थानसंस्काराभिभावकत्वमिष्यत इति चेन्न—वृत्तित्वावच्छिन्नाभावस्यैव वक्ष्यमाणयुक्त्या संस्कारजनकत्वसिद्धेर्न तु संप्रज्ञातकालीनस्य यत्किञ्चिद्वृत्तिनिरोधस्यापि, स्मृतिहेतुतया सिद्धात्प्रज्ञासंस्कारादेव व्युत्थानसंस्काराभिभवस्य वक्ष्यमाणप्रयोजनस्योपपत्तेः, नन्वेकयैव प्रज्ञाव्यक्त्या तत्सन्तानव्यक्त्या चोत्पादितेन संस्कारेण व्युत्थानसंस्कारबाधसंभवे किमर्थं पुनःपुनः संप्रज्ञातानुष्ठानं? तत्राह—व्युत्थानसंस्काराभिभवादित्यादि—ततश्च संस्कारा इत्यन्तेन, अभिभवात्,

(१) बाधत इति। अखिलसंस्कारबाधस्य योगफलत्वेन प्रारब्धसंस्काराणामपि तदन्तर्गततयाऽपि पुनः ससंप्रज्ञातेऽभिनिवेशोदयोक्तिर्भक्षबी यावत्संस्कारलयात्प्राक्तनदशाऽभिप्राया बोध्या, ततश्च भिक्षुभावमप्रतियत एव मन्दाक्षौचित्यमायाति।

तिशयश्चित्तं साधिकारं न करिष्यतीति ? न ते प्रज्ञाकृताः संस्काराः क्ले-

भास्वती ।

माणता विरुद्धत्वाद्, सुगममन्यत्, संस्कारातिशयः = प्रज्ञासंस्कारबाहुल्यम्, प्रज्ञया हे-
यताख्यातिस्ततो वैराग्यं, ततः कार्यावसानम्, चित्तचेष्टितं ख्यातिपर्यवसानम् = विवेक-

तत्त्ववैशारदी ।

रातिशयः समाधिप्रज्ञाप्रसवहेतुरस्त्यविकल इति तदवस्थैव चित्तस्य साधिकारतेति, चोद-
यति—"कथमसौ" इति । परिहरति—"न ते" इति । चित्तस्य हि कार्य्यद्वयं शब्दाद्युपभोगो-
विवेकख्यातिश्चेति, तत्र क्लेशकर्माशयसहितं शब्दाद्युपभोगे प्रवर्त्तते, प्रज्ञाप्रभवसंस्कारोन्मूलि-
तनिखिलक्लेशकर्माशयस्य तु चेतसोऽवसितप्रायाधिकारभावस्य विवेकख्यातिमात्रमवशिष्यते
कार्य्यम्, तस्मात्समाधिसंस्काराश्चित्तस्य न भोगाधिकारहेतवः, प्रत्युत तत्परिपन्थिन इति,
स्वकार्य्याद् = भोगलक्षणाद्, अवसादयन्ति - असमर्थं कुर्वन्तीत्यर्थः, कस्मात् ? ख्याति-
पर्य्यवसानं हि चित्तचेष्टितम्, तावद्धि भोगाय चित्तं चेष्टते न यावद्विवेकख्यातिमनुभवति,

पातञ्जलरहस्यम् ।

त्ययसहकारिप्रत्ययाविपतिप्रत्ययालम्बनप्रत्ययाः त एव विपर्ययाः तेषामनादित्वेऽपि न बा-
ध्यो बुद्धेः प्रमाबुद्धेरित्यर्थः-समाधौ विद्यमाने कथं निरधिकारिता चित्तस्येत्याक्षिप्य समाधत्ते-
कथमसावित्यादि-परिहरतीत्यन्तेन, भोगापवर्गौ = पुमर्थस्तयोर्भोगे क्लेशकर्माशयः सहकारी;
अपवर्गहेतावन्यथाख्यातौ तु समाधिसंस्कारः सहकारी, चित्तस्य हीत्यादि-कुर्वन्तीत्यन्तेनोक्तं-
यक्षानुरूपो बलिरिति न्यायेन, अवसितोऽधिकारभावो यस्य तस्यावशिष्यते कर्तव्यत-

वार्त्तिकम् ।

तत्करणात्, शेषं स्पष्टम्, अयं भावः—नैकदा संप्रज्ञाता व्युत्थानं संस्कारबाधः, श्रुतिस्मृति-
सिद्धस्य पुनःपुनर्व्युत्थानस्यानुपपत्तेः, उपदेशाद्यनुपपत्तेश्च, किं तु संप्रज्ञातपरम्पराजन्येन दृढत-
रसंस्कारेणैव तद्बाधः, अदृढैश्च प्राथमिकैः संप्रज्ञातसंस्कारैस्तस्य बाधार्थन्तनुतापरंपरैव क्रि-
यते, तथा च संस्कारदार्ढ्यार्थं प्रज्ञासंस्कारचक्रमपेक्ष्यत इति, एतेन प्रज्ञायाः साक्षादेव व्युत्था-
नसंस्कारबाधकत्वशङ्काऽप्यपास्ता, एकप्रज्ञयैव। संस्कारबाधे व्युत्थानासंभवात्, प्रज्ञासंस्कारे
तु दृढत्वरूपवैजात्यसंभवेन तस्यैव व्युत्थानसंस्कारबाधकताऽवच्छेदकत्वकल्पनया व्युत्थाना-
द्युपपत्तिरिति, व्युत्थानसंस्कारेषु मध्ये वा विद्यासंस्कारस्त्वयं विशेषः-यत्सकृत्प्रज्ञाया जनि-
तेनैव संस्कारेणाविद्यासंस्कारो बाध्यते न तत्र प्रज्ञासंस्कारचक्रापेक्षेति, एतच्च 'ते प्रतिप्रसव-
हेयाः सूक्ष्मा' इत्याद्यगामिसूत्रद्वये प्रकटीभविष्यति, इदमत्रावधेयम्-अस्मिन्सूत्रे शेषसूत्रे चा-
खिलसंस्कारदाहस्य योगफलत्ववचनात् प्रारब्धकर्मणोऽप्यतिक्रमेणाशुतरमोक्षः केवलज्ञाना-
साध्यो योगयोरसाधारणं फलमिति, न हि भोगसंस्कारस्य निःशेषतो दाहे प्रारब्धकर्मापि फ-
लायालं; दृष्टकारणाभावाद्, "योगाग्निदग्धकर्मचयोऽचिरादि"त्यादिवाक्यं संकोचकप्रमाणाभा-
वाच्च, "ज्ञानाग्निः सर्वकर्माणी"त्यादिस्त्वगत्या संकोचः क्रियते, "तस्य तावदेव चिरमि"-
त्यादिज्ञानिविषयकश्रुतेः, उपदेशाद्यन्यथाऽनुपपत्तेश्च, साङ्ख्यवेदान्तसूत्रयोश्च ज्ञानिनामेव प्रार-
ब्धभोगावश्यकतोक्ता, नन्वर्द्धभुक्तप्रारब्धकर्मणां नाशे तत्फलस्य कालप्रतिनियमानुपपत्तिरिति
चेन्न-शास्त्रोक्तनाशकनाश्यकर्मस्वेव कालप्रतिनियमात्, अन्यथा कर्मविपाकोक्तप्रायश्चित्तस्य
शान्तिकर्मादेश्चार्धभुक्तपापनाशकत्वानुपपत्तिः।शास्त्रोक्तनाशकनाश्यकर्मणां तु स्वावस्थितिप-
र्यन्तमेव फलदातृत्वमिति दिक्, नन्वेवं प्रज्ञासंस्कारातिशयस्वीकारे ततोऽपि पुनर्जन्म भवि-
ष्यति, न चासंप्रज्ञातयोगेन तस्य नाशो भवितेति वाच्यम् ? असंप्रज्ञाताभावेऽपि प्रारब्ध-
समाप्त्यनन्तरं केवलज्ञानतो मोक्षाभ्युपगमादित्याशङ्कते-कथमसाविति । साधिकारं स्वका-
र्यजननक्षमम्, परिहरति-न त इति । ते प्रज्ञासंस्काराश्चित्तं स्वकार्यक्षमं न कुर्वन्ति जन्मकारण-
स्याविद्यादिक्लेशस्य विनाशनादित्यर्थः, कर्मनाशनादित्यपि बोध्यम्, कर्त्तव्यसमा-

शतयहेतुत्वाच्चित्तमधिकारविशिष्टं कुर्वन्ति, चित्तं हि ते स्वकार्यादवसादयन्ति, ख्यातिपर्य्यवसानं हि चित्तचेष्टितमिति ॥ ५० ॥

किञ्चास्य भवति—

**तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥**

भास्वती ।

ख्यातौ जातायां न किञ्चिच्चेष्टितमवशिष्यते, विवेकस्तु सम्प्रज्ञातस्य शिरोमणिः ॥ ५० ॥

किञ्चास्य भवति—तस्यापि निरोधे परेण वैराग्येण सम्प्रज्ञातफलस्य विवेकस्यापि निरोधे सर्वप्रत्ययनिरोधाद् निर्बीजः समाधिः = असम्प्रज्ञातः कैवल्यभागीयो निर्बीजसमाधिरित्यर्थ इति सूत्रार्थः, स नेति । स निर्बीजो न तु केवलं समाधिप्रज्ञाविरोधी = प्रज्ञारूपप्रत्ययनिरोधकृत्, किन्तु प्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी = क्षयकृद् भवति, कस्मादिति । निरोधजः संस्कारः = परवैराग्यरूपनिरोधप्रयत्नानुभवकृतः संस्कारः समाधि-

तत्त्ववैशारदी ।

संजातविवेकख्यातिनस्तु क्लेशनिवृत्तौ न भोगाधिकार इत्यर्थः, तदत्र भोगाधिकारप्रशान्तिः प्रयोजनं प्रज्ञासंस्काराणामित्युक्तम् ॥ ५० ॥

पृच्छति—"किञ्च" इति । किञ्चास्य भवति ? प्रज्ञासंस्कारवच्चित्तं प्रज्ञाप्रवाहजनकतया तथैव साधिकारमित्यधिकारापनुत्तयेऽन्यदपि किञ्चिदपेक्षणीयमस्तीत्यर्थः, सूत्रेणोत्तरमाह—"तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः",

पातञ्जलरहस्यम् ।

वेति शेषः, परिपन्थिनो = विरोधिन इति, दावाग्निरिव वेत्रबीजस्येत्यवसादनमित्यर्थः, चेष्टते = क्लेशकर्माद्यारभत इत्यर्थः ॥ ५० ॥

किञ्चास्य भवतीतिप्रश्नस्योत्तरं सूत्रं-"तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः", निर्बीजो-निरधिकार इत्यर्थः, धर्ममेघनाम्ना परवैराग्येण तदेव ज्ञानप्रसादरूपं, तेन विरोधिज्ञानयोरेव बा-

वार्त्तिकम् ।

धनादपि साधिकारं न कुर्वन्तीत्याह -चित्तं हीति । स्वकार्यादवसादयन्ति कर्त्तव्यशून्यङ्कुर्वन्ति, तत्र हेतुः-ख्यातीत्यादि, हि यस्माच्चित्तस्य व्यापारो विवेकख्यातिपर्यन्तः विवेकख्यातिनिष्पत्तौ सत्यां प्रयत्नकपुरुषार्थासम्भवात्, सा च विवेकख्यातिरूपा प्रज्ञा तत्संस्कारातिशयेनानिशमुत्पद्य परवैराग्यजननद्वारेण समाप्यत इत्यर्थः ॥ ५० ॥

क्षीणवृत्तेरित्यादिसूत्रैः संप्रज्ञातस्य फलादिकमुक्तमिदानीमसंप्रज्ञातस्य फलादेः सूत्रं प्रवर्त्तिष्यते, तत्सूत्रं प्रज्ञासंस्कारातिशयस्य पुनर्जन्माहेतुत्वे हेत्वन्तरपरतयाऽवतारयति—किं चास्येति । अस्य प्रज्ञासंस्कारस्यान्यच्च फलं सर्ववृत्तितत्संस्कारयोर्निरोधो भवतीति न पुनर्जन्मसंभावनेत्यर्थः,

"तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः", पूर्वपूर्वासंप्रज्ञाते तावत्प्रज्ञैव निरुध्यते प्रज्ञासंस्कारस्य तु तानवमात्रं भवति, एवं क्रमेण तु तस्यापि प्रज्ञाकृतसंस्कारस्याप्यसंप्रज्ञातपरम्परया निरोधेऽत्यन्ताभिभवे जायमाने चरमासम्प्रज्ञातो निर्बीजयोगस्य परा काष्ठा भवत्यपुनर्व्युत्थानेत्यर्थः, सर्वनिरोधादितिसूत्रावयवेन निर्बीजत्वे हेतुरुक्तः, यतः प्रज्ञा तत्संस्कारश्च सर्वोऽप्यत्यन्तं विलयमितोऽतो निर्बीजः, दुःखबीजैः संस्कारादिभिः शून्य इत्यर्थः पूर्वपूर्वासम्प्रज्ञातव्यक्तिषु च क्रमेण बीजतानवाद् गौणं निर्बीजत्वमसंप्रज्ञातलक्षणे पूर्वं भाष्यकृतोक्तमिति स्मर्त्तव्यं, तथा च चरमासम्प्रज्ञाते सर्वे प्रज्ञासंस्काराः क्षीयन्त इत्यतो न ते चित्तं साधिकारं कुर्वन्तीति भावः, एतेनासंप्रज्ञातपरंपरया प्रज्ञासंस्कारात्यन्तलयः फलं सूत्रेणोक्तं,-

**स न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी भवति, कस्माद् ? निरोधजः संस्कारः समाधिजान् संस्कारान् बाधत इति, निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयम् ,**

भास्वती ।

जान् संस्कारान्=प्रज्ञासंस्कारान् बाधते निःप्रत्ययीकरणात्, प्रत्ययजननमेव संस्कारस्य कार्यम्, प्रत्ययानुद्भवे संस्कारस्य क्षयः प्रत्येतव्यः, निरोधस्याप्यस्ति संस्कारो निरोधस्य विवर्द्धमानतादर्शनात् तदवगम्यते, ननु निरोधो न प्रत्ययोऽतः कथं तस्य संस्कारः प्रत्ययस्यैव संस्कारजननियमादिति ? सत्यम्—तत्रापि प्रत्ययकृत एव संस्कारः, प्रा॰

तत्त्ववैशारदी ।

परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन संस्कारोपजननद्वारा तस्यापि प्रज्ञाकृतस्य संस्कारस्य निरोधो, न केवलं प्रज्ञाया इत्यपिशब्दार्थः, सर्वस्योत्पद्यमानस्य संस्कारप्रवाहस्य निरोधात् कारणाभावेन कार्य्यानुत्पादनात्, सोऽयं निर्बीजः समाधिः, व्याचष्टे—"स" इति । सः=निर्बीजः समाधिः, समाधिप्रज्ञाविरोधिनः परस्माद्वैराग्याज्जायमानः स्वकारणद्वारेण न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानामप्यसौ संस्काराणां परिपन्थी भवति, ननु वैराग्यजं विज्ञानं सद्विज्ञानं प्रज्ञामात्रं बाधतां, संस्कारं त्वविज्ञानरूपं कथं बाधते, दृष्टा हि जाग्रतोऽपि स्वप्नदृष्टार्थे स्मृतिरित्याशयवान् पृच्छति—"कस्माद्"इति । उत्तरमाह —"निरोधज" इति । निरुद्ध्यते प्रज्ञाऽनेनेति निरोधः=परं वैराग्यं, ततो जातो निरोधजः संस्कारः, संस्कारादेव दीर्घकालनैरन्तर्य्यसत्कारासेवितपरवैराग्यजन्मनः प्रज्ञासंस्कारबाधो, न तु विज्ञानादित्यर्थः, स्यादेतद्—निरोधजसंस्कारसद्भावे किं प्रमाणं ? स हि प्रत्यक्षेण वाऽनुभूयेत, स्मृत्या वा कार्य्येणानुमीयेत, न च सर्ववृत्तिनिरोधे प्रत्यक्षमस्ति योगिनो, नापि स्मृतिः; तस्य वृत्तिमात्रनिरोधतया स्मृतिजनकत्वासम्भवादित्यत आह —"निरोध" इति ।

पातञ्जलरहस्यम् ।

ध्यबाधकता, न पुनः संस्कारयोः प्रतिबुद्धस्यापि स्वप्नसंस्कारदर्शनादित्याशङ्कते—कस्मादिति । वैराग्यस्य नास्ति कृत्यं प्रियां त्यजत्यग्निं प्रविशतीति तदेवात्र बाधकं, न तु ज्ञानमित्युत्तरमाह—निरोधज इत्यादिना न तु विज्ञानादित्यन्तेन, प्रमाणाभावं द्विधा विकल्प्यानुमानमादाय

वार्त्तिकम् ।

सूत्रस्थस्यापिशब्दस्यार्थं भाष्यकारो व्याचष्टे—स न केवलमिति । स सामान्यनिर्बीजयोगः न केवलं समाधिप्रज्ञाया विरोधी भावाभावरूपेण, अपि तु क्रमेण प्रज्ञाकृतसंस्काराणामपि प्रतिबन्धी=अत्यन्तमभिभावक इत्यर्थः, ननु यदि प्रज्ञाकृतसंस्काराणामपि सम्प्रज्ञातबाधकस्तर्हि सकृदसम्प्रज्ञातादेव सर्वसंस्कारबाधे व्युत्थानं कदाऽपि कस्यापि न स्यादित्याशयेनाक्षिपति—कस्मादिति। परिहरति—निरोधज इति । न निरोधः साक्षादेव प्रज्ञासंस्कारान् विलापयति किं तु निरोधपरंपराजन्यो दृढतरः संस्कार एव प्रज्ञासंस्कारानत्यन्तं विलापयतीत्यर्थः, दृढतरत्वं च जातिविशेष इत्युक्तम्, ननु ज्ञानस्यैव संस्कारजनकत्वं दृष्टं निरोधस्तु न ज्ञानं संस्कारशेषचित्तावस्थाविशेषमात्रत्वादतस्तस्य संस्कारजनकत्वे किं प्रमाणमित्याशङ्क्याह—निरोधस्थितीति । निरोधस्थितावसम्प्रज्ञातावस्थाने यो मुहूर्त्ताहोरात्रमासादिरूपः कालक्रमः क्रमेण कालवृद्धिस्तद्दर्शनेन निरोधावस्थचित्तजन्यः संस्कारोऽनुमेयः संस्कारवृद्धिव्यतिरेकेण तन्नियामकासम्भवादित्यर्थः, सम्प्रज्ञातस्य तु कालवृद्धिः प्रज्ञासंस्कारतारतम्येनैवोपपद्यत इत्यतो न सम्प्रज्ञातस्य संस्कारहेतुतेति, ननु प्रज्ञासंस्काराश्चरमासम्प्रज्ञातेनात्यन्तं बाध्यन्तां निरोधसंस्कारास्तु कुतः समुच्छिद्यन्ते तदनुच्छेदे च साधिकारत्वमेव

**व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्याम्प्रकृताववस्थितायां प्रविलीयते, तस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनो न स्थितिहेतवो, यस्मादवसिताधिकारं सह कैवल्यभागीयैः**

भास्वती।

निरोधात् प्रत्ययप्रवाहो विद्यते, ततस्तद्भेदरूपस्य प्रत्ययस्य संस्कारो जायते, सप्रत्ययनिरोधनसंस्कारस्तथा निरोधभङ्गसंस्कार एव निरोधसंस्कारः, येन वैराग्यबलेन प्रत्ययप्रवाहभङ्गस्तस्य प्राबल्यान्निरोधसंस्कारस्य विवर्धमानता, सम्प्रज्ञातसंस्कारनाशे निष्प्रत्यूहेन परवैराग्येण शाश्वतः प्रत्ययप्रवाहभेदः स्यात् तदेव कैवल्यम्, प्रत्ययप्रवाहभङ्गो यदाऽवच्छिन्नकालव्यापी तदा स निरोधसंस्कार इति वक्तव्यः, यदा तु तस्य शाश्वत उपरमस्तदा तत्संस्कारस्यापि प्रणाश इति विवेच्यम् , व्युत्थानेति । व्युत्थानस्य = विक्षेपस्य निरोधस्तद्रूपः समाधिः सम्प्रज्ञातसमाधिः, तद्भवैः सह कैवल्यभागीयैर्निरोधजैर्निरोधकृद्भिः परवैराग्यजैः संस्कारैश्चित्तं स्वस्यामवस्थितायां = नित्यायां प्रकृतौ प्रविलीयते = पुनरु-

तत्त्ववैशारदी ।

निरोधस्थितिः = चित्तस्य निरुद्धावस्था, तस्याः कालक्रमो = मुहूर्त्तार्द्धयामयामाहोरात्रादिः, तदनुभवेन, एतदुक्तं भवति—वैराग्याभ्यासप्रकर्षानुरोधी निरोधप्रकर्षो मुहूर्त्तार्द्धयामादिव्यापितयाऽनुभूयते योगिना, न च परवैराग्यक्षणाः क्रमनियततया परस्परमसम्भवन्तस्तत्तत्कालव्यापितया सातिशयं निरोधं कर्तुमीशत इति तत्तद्वैराग्यक्षणप्रचयजन्यः स्थायी संस्कारप्रचय एषितव्य इति भावः, ननूच्छिद्यन्तां प्रज्ञासंस्काराः, निरोधसंस्कारस्तु कुतः समुच्छिद्यते, अनुच्छेदे वा साधिकारत्वमेवेत्यत आह--"व्युत्थान" इति । व्युत्थानं च तस्य निरोधसमाधिश्च = सम्प्रज्ञातः, तत्प्रभवाः संस्काराः कैवल्यभागीयाः = निरोधजाः संस्कारा इत्यर्थः, व्युत्थानप्रज्ञासंस्कारांश्चित्त प्रलीना इति भवति चित्तं व्युत्थानप्रज्ञासंस्कारवत् , निरोधसंस्कारस्तु प्रत्युदित एवास्ते चित्ते, निरोधसंस्कारे सत्यपि चित्तमनधिकारवत् , पुरुषार्थजनकं हि चित्तं साधिकारं, शब्दाद्युपभोगविवेकख्याती च तथा पुरुषार्थौ, संस्कारशेषतायान्तु न बुद्धेः प्रतिसंवेदी पुरुष इति नासौ पुरुषार्थः, विदेहप्रकृतिलयानां न निरोधभागितया साधिकारं चित्तम्; अपि तु क्लेशवासिततयेत्याशयवानाह—यस्मादिति । शेषं-

पातञ्जलरहस्यम् ।

समाधत्ते-निरोधस्थितीति । विनश्यदवस्थस्यापि कार्यकारित्वमसम्भवः, वाक्यार्थं कथयति—एतदुक्तमिति । पयसि प्रक्षिप्तलवणवद्धि प्रकृतौ लीनमित्याह—नेत्यादि—भाष्येण, व्युत्थानञ्च निरोधसमाधिश्च तत्प्रभव इति विग्रहः, कैवल्यभागीयैर्मोक्षजनकैरित्यर्थः, न बुद्धेः प्रतिसंवेदी =

वार्त्तिकम् ।

चित्तस्येति मोक्षानुपपत्तिः, किं च प्रलीनानामपि संस्काराणां कदा चिद्योगीश्वरसंकल्पादिना दग्धबीजस्येव पुनरुद्बोधोऽपि सम्भाव्येतेत्याशङ्कामपाकरोति—व्युत्थाननिरोधेति । असम्प्रज्ञातापेक्षया समाधिप्रज्ञाऽपि व्युत्थानम्, अतो व्युत्थानं ज्ञानसामान्यं निरोधसमाधिश्चासम्प्रज्ञातस्तदुभयप्रभवैः सह सहितैः कैवल्यभागीयैः कैवल्यहेतुकर्मसंस्कारैर्विशिष्टं चित्तं स्वकीयप्रकृतौ नित्यायां स्वयमेव प्रलीयते दग्धेन्धनानलवदात्यन्तिकलयं गच्छति परिणामस्वाभाव्यात तत्स्वामिपुरुषस्य भोगहेतुर्विसदृशपरिणाम एव हि पुनर्न भवति तद्धेतोः पुरुषार्थस्याभावादित्यर्थः, अथ वा कैवल्यभागीयैः कैवल्यपर्यन्तस्थायिभिर्व्युत्थानसंस्कारैः सहेति चित्तविशेषणम्, अनेन सूत्रेण शङ्कानिराकरणमुपपादयति—तस्मादिति । तस्मान्निरोधसंस्कारस्यापि क्षयात्ते निरोधसंस्कारा इत्यादिरर्थः, ननु भवतु योगद्वयाच्चित्तस्यात्यन्तिकलयस्तथाऽपि पुरुषार्थः कः सिध्यतीत्याकाङ्क्षायामाह—यस्मादित्यादि । यस्माच्चित्तं निवर्तते-

संस्कारैश्चित्तं विनिवर्त्तते तस्मिन्निवृत्ते पुरुषः स्वरूपप्रतिष्ठोऽतः शुद्धमुक्त-इत्युच्यते ॥ ५१ ॥

इति पातञ्जले सांख्यप्रवचने योगशास्त्रे समाधिपादः प्रथमः ॥

भास्वती ।

स्थानहीनं लयं प्राप्नोति, तस्मादिति । अधिकारविरोधिनः = चेष्टापरिपन्थिनः, चेष्टितमेव चित्तस्य स्थितिहेतुः चित्तस्य शाश्वतविनिवर्त्तनात्; पुरुषः स्वरूपप्रतिष्ठः शुद्धो गुणातीतो मुक्तः = दुःखोपचारहीन इत्युच्यत इति ॥ ५१ ॥

पादेऽस्मिन् समाहितचित्तस्य योगस्तत्साधनसामान्यञ्चोक्तम्, समाधिदृशा च कवल्यमुपपादितमिति ।

इति श्रीपातञ्जलसाङ्ख्यप्रवचनभाष्यस्य टीकायां भास्वत्यां प्रथमः पादः ।

तत्त्ववैशारदी ।

सुगमम् ॥ ५१ ॥

(१)योगस्योद्देशनिर्देशौ तदर्थं वृत्तिलक्षणम् ।
योगोपायास्तत्प्रभेदाः पादेऽस्मिन्नुपवर्णिताः ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां तत्त्ववैशारद्यां-प्रथमः समाधिपादः समाप्तः ॥

पातञ्जलरहस्यम् ।

बुद्धिसाक्षात्कारवानित्यर्थे निरधिकारमेव चित्तं निवर्तते न साधिकारम्,

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्"—

इति स्मृतेः, ज्ञानातिरिक्तनाशकानाश्यस्यावश्यं भोग इत्याह–विदेहेति । पादार्थं संकलय्याह–योगेति । उद्देशो नाम्ना कीर्तनमथ योगानुशासनं, निर्देशो योगश्चित्तवृत्तिनिरोधः,

वार्त्तिकम् ।

ऽसास्तस्मिन्निवृत्ते सति पुरुषो मुक्त इत्युच्यते तत्र हेतुगर्भविशेषणानि स्वरूपेत्यादीनि, स्वरूपमात्रप्रतिष्ठः पररूपैः प्रतिबिम्बितदुःखादिभिर्मुक्तः शुद्धस्वत्वसम्बन्धेन पुण्यपापमुक्तः, भोगसाधनस्यैव स्वत्वतया कूटस्थस्यापि संसारदशायां स्वत्वाभ्युपगमात्, एतादृशमुक्तेः साध्यत्वमुपपन्नं, केवल उपाधिसंयोगाख्यबन्धमुक्त इत्यर्थः, एवंरूपो मोक्ष एव योगस्य मुख्यंफलमित्याशयः, पारमार्थिको दुःखकर्मादिसम्बन्धो लेपाख्यसंयोगरूपसम्बन्धो वा लोके बन्धइत्युच्यते तन्मुक्तिश्च बुद्धेरेव न कूटस्थस्यासङ्गस्य पुरुषस्येति प्रतिपादयितुं मुक्त इत्युच्यतइत्युक्तं, शास्त्रेषु मुक्त इति व्यवहारमात्रं क्रियत इति तस्यार्थः, तदुक्तं साङ्ख्यसूत्रेण—"वाङ्-

(१) योगेति ।
योगारम्भप्रतिज्ञामभिदधति किलोद्देशमत्राभिरूपा—
निर्देशं योगचिन्हं, तदधिगतिफलं लक्ष्म वृत्तेर्वदन्ति ।
अभ्यासातीतरागप्रभृति खलु भणन्त्यस्य चोपायवर्ग—
सांप्रज्ञातं वितर्कादिकमखिलमुशन्त्येतदीयं प्रभेदम् ॥
इति साङ्ख्यपातञ्जलदर्शनटिप्पन्यां प्रथमः समाधिपादः ।

पातञ्जलरहस्यम् ।

वृत्तिलक्षणं वृत्तय इत्यादि ॥ ५१ ॥

इति श्रीविश्वेश्वरभगवत्पादशिष्याद्वयभगवत्पादशिष्यराघवानन्दसरस्वतीविरचिते योगतत्ववैशारद्याख्यायाः व्याख्यायाः टीकारूपे पातञ्जलरहस्य एकपञ्चाशत्-सूत्रात्मकः प्रथमः समाधिपादः समाप्तः ।

वार्त्तिकम् ।

मात्रं न तु तत्त्वं चित्तस्थितेर्गरिति, पुरुषे बन्धादिकं वाङ्मात्रं चित्त एव बन्धाद्यवस्थानादित्यर्थः,पुरुषार्थत्वं च पारमार्थिकमेव दुःखं भुञ्जीयेति प्रार्थनादिति भावः, साङ्ख्यप्रवचन इति । साङ्ख्यस्यैव प्रकर्षेण वचनं साङ्ख्यप्रवचनं साङ्ख्ये ह्यभ्युपगमवादेनेश्वरं प्रतिषिध्यासम्प्रज्ञातयोगनैरपेक्ष्येण च जीवतत्त्वज्ञानादेव मोक्ष उक्तोऽस्मिंस्तु शास्त्रे निरुपद्रवामन्दिग्धेच्छिकमुक्तिनियमाय परमेश्वरविद्याः आशुमोक्षहेतुरसम्प्रज्ञातयोगश्च प्रदर्शित इति भावः ॥ ५१ ॥

इति श्रीपातञ्जलभाष्यवार्त्तिके श्रीविज्ञानभिक्षुनिर्मिते प्रथमः समाधिपादः ।

# साङ्गे योगदर्शने

## द्वितीयः साधनपादः

उद्दिष्टः समाहितचित्तस्य योगः, कथं व्युत्थितचित्तोऽपि योगयुक्तः स्याद् इत्येतदारभ्यते—

भास्वती।

उद्दिष्टः समाहितेति। मनः प्रधानसाधनानि तथाऽभ्यासेन वैराग्येण च सिद्धस्य समाधेरवान्तरभेदास्तत्फलभूतं कैवल्यञ्चेति योगः प्रथमे पाद उद्दिष्टः, कथं व्युत्थितेति। व्युत्थि-

तत्त्ववैशारदी।

ननु प्रथमपादेनैव सोपायः सावान्तरप्रभेदः सफलो योग उक्तस्तत्किमपरमवशिष्यते यदर्थं द्वितीयपादः प्रारभ्येतेत्यत आह—"उद्दिष्ट" इति। अभ्यासवैराग्ये हि योगोपायौ प्रथमे पाद उक्तौ, न च तौ व्युत्थितस्य द्रागित्येव संभवत इति द्वितीयपादोपदेश्यानुपायानपेक्षते सत्त्वशुद्ध्यर्थम्, ततो हि विशुद्धसत्त्वः कृतरक्षासंविधानोऽभ्यासवैराग्ये प्रत्यहं भावयति, समाहितत्वम्—अविक्षिप्तत्वं, कथं व्युत्थितचित्तोऽप्युपदेक्ष्यमाणैरुपायैर्युक्तः सन् योगी स्यादित्यर्थः, तत्र वक्ष्यमाणेषु नियमेष्वाकृष्य प्राथमिकं प्रत्युपयुक्ततरतया प्रथमतः क्रियायोगमुप-

पातञ्जलरहस्यम्।

द्वितीये दीयते पादे स्वागताख्यं सदुत्तरम्।
योगोपायात्मके शम्भोः प्रसादाय कृतीश्वरैः॥

"तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः," इत्यादिसूत्रम्, "तपसा कल्मषं हन्ति स्वाध्यायेन योगमाप्नोति"

"यज्ञायाचरतः कर्म समग्रं प्रविलीयत"—

वार्त्तिकम्।

ननु प्रथमपादेनैव योगः सोपायः सफलश्चावान्तरभेदैः सह प्रोक्तः तत्किमपरमवशिष्यते यदर्थं द्वितीयपाद आरब्धव्य इत्याकाङ्क्षायामाह—उद्दिष्ट इति। समाहितचित्तस्य योगारूढचित्तस्योत्तमाधिकारिणोऽभ्यासवैराग्यमात्रसाधनेनैव क्रियायोगादिसकलाङ्गानां नैरपेक्ष्येण पूर्वपादे योगः प्रदर्शितः, तेषां बहिरङ्गत्वं वक्ष्यति—"त्रयमन्तरङ्गं पूर्वेभ्य" इतिसूत्रेण तदभावेऽपि भावादिति भाष्येण च, तथा चोक्तमाश्वमेधिके—

"अपेतव्रतकर्मा तु केवलं ब्रह्मणि स्थितः।
ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते"॥ इति,

तथा गारुडेऽपि—

"आसनस्थानविधयो न योगस्य प्रसाधकाः।
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात्"॥ इति,

ते चाभ्यासवैराग्ये न सर्वेषां द्रागित्येव भवतः, अतो व्युत्थितचित्तो बहिर्मुखोऽपि योगमारुरुक्षुः क्रमात् केनोपायेन योगयुक्तः स्यादिति तमुपायं वक्तुमेतत्सूत्रजातमारभत इत्यर्थः, तदेवमधिकारभेदेन साधनभेदो गारुडादिष्वप्युक्तः—

"आरुरुक्षुयतीनां च कर्मज्ञाने उदाहृते।
आरूढयोगवृक्षाणां ज्ञानत्यागौ परौ मतौ"॥ इति,

त्यागो बाह्यकर्मणाम्,

## तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥

**नातपस्विनो योगः सिद्ध्यति, अनादिकर्मक्लेशवासनाचित्रा प्रत्युप-**

भास्वती ।

तस्य = निरन्तरध्यानाभ्यासवैराग्यभावनाऽसमर्थस्य चेतसः कथं = कैर्योगानुकूलक्रियाऽऽचरणैर्योगः सम्भवेदिति, अनादीति । कर्म = कर्मफलानुभवः, क्लेशः = दुःखमूलमज्ञानं, ताभ्यां जाताऽनादिवासना स्मृतिफलसंस्काररूपा तया चित्रा, तथा विषयजालसम्प्रयुक्ताऽशुद्धिर्योगान्तरायभूतं रजस्तमोमलमित्यर्थः, अयोघनाभिहतः पाषाण इव साऽशुद्धिस्तपसा विरलावयवा भवतीति, तपस्तु चित्तप्रसादकराणामासनप्राणायामोपोषणादीनां क्लेशसहनं-सुखत्यागश्च कायसंयमस्तपः, वाक्संयमः स्वाध्यायः, ईश्वरप्रणिधानन्तु मानसः संयम-

तत्त्ववैशारदी ।

दिशति सूत्रकारः-"तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" क्रियैव योगः क्रियायोगः योगसाधनत्वात्, अत एव विष्णुपुराणे खाण्डिक्यकेशिध्वजसंवादे—

"योगयुक् प्रथमं योगी युजमानोऽभिधीयत"--

इत्युपक्रम्य तपःस्वाध्यायादयो दर्शिताः, व्यतिरेकमुखेन तपस उपायत्वमाह—"नातपस्विन" इति । तपसोऽवान्तरव्यापारमुपायतोपयोगिनं दर्शयति "अनादि" इति । अना-

पातञ्जलरहस्यम् ।

इत्यादिश्रुतिस्मृतिभ्यां क्रियायोगस्य समाधावुपकारकतामाह-नातपस्विनो योगः सिध्यतीत्यादि-क्रियायोग इत्यन्तेन भाष्येण, ततो हि विशुद्धसत्त्व इति, उपायानुष्ठानस्य फलमाह-योगी स्यादिति । विषयजालं, जालं नाम मत्स्यस्येव बन्धनम्, सम्भेदं प्रथितं, तपोऽत्र युक्ताहारता न तु कृच्छ्रचान्द्रायणादि तस्य धातुवैषम्यहेतुत्वात्, तदुक्तम्-

"द्वौ भागौ पूरयेदन्नैस्तोयेनैकञ्च पूरयेत् ।
मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्" ॥ इति,

युक्ताहारविहारस्ये"ति,

वार्त्तिकम् ।

गीतायामपि--

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते" ॥ इति,

कारणं योगस्य,

"तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" योगोपायत्वाद्योगः, क्रिया चासौ योगश्चेति विग्रहः, तपआदीनि त्रीणि क्रियायोग इत्यर्थः, ईश्वरप्रणिधानरूपो भक्तियोगोऽप्यत्र क्रियायोगमध्य एव प्रवेशितः,

अतो—

'योगास्त्रयो मया प्रोक्ता भक्तिज्ञानक्रियाऽऽत्मका'—

इत्यादिस्मृतिषु त्रय एव योगोपायत्वाद्योगा उक्ताः, तत्र ज्ञानयोगो धारणाध्यानसमाधिरूपः पूर्वपादे प्रोक्तः, विस्तरस्त्वस्याग्रे भविष्यतीति, यद्यपि यमादयोऽपि क्रियायोगास्तथाऽपि वक्ष्यमाणयमनियमादिषु मध्ये तपआदित्रयं प्रकृष्टतयाऽऽदौ पृथङ्निर्दिष्टं केवलेनैतेनापि तीव्रतरेण योगो भवतीति सूचयितुमिति बोध्यम्, ननु स्वाध्यायेश्वरप्रणिधानं च तत्त्वज्ञानेश्वरानुग्रहाभ्यां योगोपकारकं स्यात् तपस्तु देहेन्द्रियशोषणात्मकं केन द्वारेण योगस्योपकारकं भवतु प्रत्युत चित्तक्षोभकत्वेन योगविरोध्येवेत्याशङ्क्य तपसो द्वारमाह—नातपस्विन इति । असिद्धौ हेतुमाह—

स्थितविषयजाला चाशुद्धिर्नान्तरेण तपः सम्भेदमापद्यत इति तपस उपादानं, तच्च चित्तप्रसादनमबाधमानमनेनासेव्यमिति मन्यते, स्वाध्यायः = प्रणवादिपवित्राणां जपः मोक्षशास्त्राध्ययनं वा, ईश्वरप्रणिधानं = सर्वक्रियाणां परमगुरावर्पणं तत्फलसंन्यासो वा ॥ १ ॥

भास्वती ।

इति, एभिर्बाह्यकर्मविरतः शान्तो दान्त उपरतस्तितिक्षुर्भूत्वा समाध्यभ्याससमर्थो भवेत्,

तत्त्ववैशारदी ।

दिभ्यां कर्मक्लेशवासनाभ्यां चित्रा अत एव प्रत्युपस्थितम् = उपनतं विषयजालं यस्यां सा तथोक्ता, अशुद्धिः = रजस्तमःसमुद्रेको नान्तरेण तपः सम्भेदमापद्यते = सान्द्रस्य नितान्तविरलता सम्भेदः, ननूपादीयमानमपि तपो धातुवैषम्यहेतुतया योगप्रतिपक्ष इति कथन्तदुपाय इत्यत आह-"तच्च" इति । तावन्मात्रमेव तपश्चरणीयं, न यावता धातुवैषम्यमापद्यतेत्यर्थः, प्रणवादयः = पुरुषसूक्तरुद्रमण्डलब्राह्मणादयो वैदिकाः, पौराणिकाश्च ब्रह्मपारायणादयः, परमगुरुः = भगवानीश्वरः तस्मिन्, यत्रेदमुक्तं—

पातञ्जलरहस्यम् ।

"परञ्चापरञ्च ब्रह्म यदोङ्कारः",

"युञ्जीत प्रणवे चित्तं प्रणवं ब्रह्म निर्भयम्—"

इत्यादि श्रुतिस्मृती आश्रित्याह-प्रणवादय इति । सर्वशब्दस्यासङ्कुचितवृत्तित्वे पापार्पणमपि प्राप्तं ? नायं दोषो वाचनिकत्वात्, "यत् करोषि यदश्नासी"ति भगवतोक्तेः,शुभाशुभमित्युक्तेश्च, फलसंन्यासश्चेत् कथं कर्मकृतिः ? अत्रापि वाचनिकत्वाददोष इत्याह-"मा कर्मफलहेतुर्भूरि"ति कर्मफलमेव हेतुः प्रवर्तको यस्य तथाविधो मा भूस्त्वमर्जुन !, तर्हि कथं कर्मत्यनुभवाद-

वार्तिकम् ।

अनादीति । अनादिक्लेशकर्मवासनया हेतुना चित्रा नानाविधाऽशुद्धिः पापाख्या प्रत्युपस्थापितविषयजालतया योगविरोधिनी तपो विना न संभेदं तनुतामापद्यत इ. . ., इतीति । इत्यतः साधनमध्ये तपसो ग्रहणमित्यर्थः, योगविरोधशङ्कामपाकरोति—तच्चेति । तच्च तपश्चित्तप्रसादाविरोधि मृद्वेवानेन योगिना कर्त्तव्यमिति परमर्षिभिर्मन्यत इत्यर्थः, पवित्राणांपापक्षयहेतूनाम् प्रथमपादोक्तप्रणिधानादतिरिक्तमत्र प्रणिधानमाह— सर्वक्रियाणामिति । लौकिकवैदिकासाधारण्येन सर्वकर्मणां परमेश्वरेऽन्तर्यामिण्यर्पणमित्यर्थः, तदुक्तं गीतायाम्—

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।

यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम्" ॥ इति,

अर्पणं च—

"कामतोऽकामतो वाऽपि यत्करोमि शुभाशुभम् ।

तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम्" ॥

इत्यादिस्मृतिभिर्व्याख्यातमिति, त्वत्प्रयुक्तः करोम्यहमिति चिन्तनमेव संन्यास इत्यर्थः, अत्र प्रयोक्तृत्वमन्तर्यामिविधयैव न तु श्रुतिद्वारा, अशुभकर्मसु श्रुत्यभावादिति, एतदपेक्षयाऽपि प्रकृष्टं द्विविधं कर्मार्पणान्तरं कौर्मे प्रोक्तम्—

"ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते ।

ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥

नाहं कर्त्ता सर्वमेतत् ब्रह्मैव कुरुते तथा ।

एतद् ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः" ॥ इति,

तत्फलेति । एतदपि कौर्मे प्रोक्तम्—

स हि क्रियायोगः-

## समाधिभावनाऽर्थः क्लेशतनूकरणार्थश्च ॥ २ ॥

भास्वती ।

कर्मविरतये योगमुद्दिश्य कर्माचरणं क्रियायोगः, स च कण्टकेन कण्टकोद्धारवद् योगाङ्गभूतेन कर्मणा योगप्रतिपक्षकर्मणामुन्मूलनम् ॥ १ ॥

क्रियायोगोऽतनूनविद्याऽऽदीन् क्लेशांस्तनून् करोति, प्रतनूकृताः क्लेशाः प्रसङ्ख्यान-रूपेणाग्निना = विवेकेनेत्यर्थः, भृष्टबीजकल्पा भवन्ति, भृष्टानि मुद्गादिबीजानि बीजाका-

तत्त्ववैशारदी ।

"कामतोऽकामतो वाऽपि यत्करोमि शुभाशुभम् ।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम्" इति,

तत्फलसंन्यासो वा = फलानभिसन्धानेन कार्यकरणं, यत्रेदमुक्तं—

"कर्मण्येवाधिकारस्ते मा फलेषु कदा चन ।
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि" इति ॥ १ ॥

तस्य प्रयोजनाभिधानाय सूत्रमवतारयति—"स हि" इति । "समाधिभावनाऽर्थः क्लेश-

पातञ्जलरहस्यम् ।

कृतिरेवास्त्विति चेत्तत्राह-"मा ते सङ्गोऽस्त्वकर्मणि" कर्माकृतौ फले च सक्तिर्मा भूदथ च कर्म कुर्वित्यर्थः ॥ १ ॥

क्रियायोगस्य फलद्वयं सूत्रेणाह-"समाधिभावनार्थः क्लेशतनूकरणार्थश्च", धर्मेण पापमपनुद-तीतिश्रुतेः समाधिप्रतिबन्धकीभूतपापनिरसनेन समाधिं दृढीकुर्वन् रागद्वेषाभिभवार्थ इति सू-

वार्त्तिकम् ।

"यद्वा फलानां संन्यासं प्रकुर्यात्परमेश्वरे ।
कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम्" ॥ इति,

कर्मफलानामीश्वरो भोक्तेति चिन्तनं कर्मफलसंन्यासः,

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरमि-

त्यादिवाक्यात्, तदुक्तम् —

'करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत् तदि'ति,

यज्ञादीनां हीन्द्रादिभावापन्नस्यान्तर्यामिणो भोग एव मुख्यं फलं—

'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वक'मि-

त्यादिवाक्येभ्य इति,

नन्वत्र वाक्ये विष्ण्वाख्यदेवताविशेषस्यैवेतरदेवतायजनेन यजनं प्रोक्तं न परमात्मन-इति चेन्न—

"परं हि ब्रह्म कथितं योगयुक्तेन तन्मये"

त्यनुगीतावाक्यतः श्रीकृष्णस्य भगवद्गीतायां परमात्मोपदेशस्यैव लाभादिति, यद्यपीश्वरस्य भोगो नित्यः तथाऽपि सिसृक्षाऽऽद्युत्पत्तिवत् तदुत्पत्तिर्गौणी, यज्ञादिस-हकारेणैव फलदातृतयेश्वरप्रीतेरभिव्यक्तेः,

नन्वीश्वरप्रणिधानमत्र पूर्वपादोक्तभावनारूपमेव कथं न भवति तत्राह—स हि क्रियायोग इति । स हि स एव फलसंन्यासः कर्मार्पणं च क्रियायोगो भवति कर्मशेषत्वात्तज्जपस्तदर्थभाव-नमिति पूर्वोक्तं च भावनारूपं प्रणिधानं ज्ञानमेव कर्मतच्छेषत्वयोरभावादित्यर्थः, उत्तर-सूत्रेण सहान्वये तुहिशब्दवैयर्थ्यमिति बोध्यम् ॥ १ ॥

**स हि आसेव्यमानः समाधिं भावयति, क्लेशांश्च प्रतनूकरोति, प्रतनूकृतान् क्लेशान् प्रसङ्ख्यानाग्निना दग्धबीजकल्पानप्रसवधर्मिणः करिष्यतीति, तेषां तनूकरणात्पुनः क्लेशैरपरामृष्टा सत्त्वपुरुषान्यताख्यातिः सूक्ष्मा**

भास्वती।

राण्यपि न प्ररोहन्ति तथा = विवेकख्यातिमच्चेतसि स्थिताः, सूक्ष्माः क्लेशा अप्रसवधर्मिणो भवन्ति क्लेशसन्तानं न बर्द्धयेयुरित्यर्थः, किन्तु तदा बुद्धिपुरुषविवेकख्यातिरेव चेतसि प्रवर्त्तेत, सा च ख्यातिरूपा सूक्ष्मा प्रज्ञा क्लेशैरपरामृष्टाऽनभिभूतेत्यर्थः, प्रान्तभूमिलब्ध्वा परिपूर्णा सता प्रज्ञेयस्यार्थस्याभावात समाप्ताधिकाराऽऽरम्भहीना लब्धपर्यवसानेत्यर्थः, प्रतिप्रसवाय कल्पिष्यते प्रलीना भविष्यतीत्यर्थः, इन्धनं दग्ध्वा यथाऽग्निः स्वयं ली-

तत्त्ववैशारदी।

तनूकरणार्थश्च", ननु क्रियायोग एव चेत् क्लेशान् प्रतनूकरोति कृतं तर्हि प्रसङ्ख्यानेनेत्यत आह—"प्रतनूकृतान्" इति । क्रियायोगस्य प्रतनूकरणमात्रे व्यापारो, न तु बन्ध्यत्वे क्लेशानां, प्रसंख्यानस्य तु तद्बन्ध्यत्वे, दग्धबीजकल्पानिति वन्ध्यत्वेन दग्धकल्पे बीजसारूप्यमुक्तम् स्यादेतत्–प्रसङ्ख्यानमेव चेत् क्लेशान् अप्रसवधर्मिणःकरिष्यति कृतमेषां प्रतनूकरणेनेत्यत आह—"तेषाम्" इति । क्लेशानामतानवे हि बलवद्विरोधिग्रस्ता सत्त्वपुरुषान्यताख्यातिरुदेतुमेव नोत्सहते प्रागेवत द्वन्ध्यभावं कर्त्तुम्, प्रविरलीकृतेषु तु क्लेशेषु दुर्बलेषु तद्विरोधिन्यपि वैराग्याभ्यासाभ्यामुपजायते, उपजाता चैतैरपरामृष्टा = अनभिभूता नैव यावत्परामृश्यते, सत्त्वपुरुषाऽन्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा = अतीन्द्रियत-

पातञ्जलरहस्यम्।

त्रार्थे गौरवाहतिरिति शङ्कते—नन्विति । प्रसङ्ख्यानेन वैराग्येण कृतं = विफलता, तरणिकिरणतनूकृतस्यापि धान्यादेः प्ररोहसामर्थ्यं दृष्टं न तु दग्धेष्वित्यनुभवमाश्रित्याह–प्रतनूकृतानित्यादि—उक्तमित्यन्तेन, वन्ध्यत्वं = प्रसवाजनकत्वं, वैराग्ये विद्यमानेऽपि छर्दितान्ने दुर्भिक्षादौ क्षुधाऽऽर्त्तस्य प्रवृत्तिः सम्भाव्येत्याशङ्कते—स्यादेतदित्यादिना—परामृश्यतइत्यन्तेन, अतानवे = अतनूकरणे, उदेतुमिति । "नाशान्तो नासमाहितः नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयाद्" इति श्रुतेः, तस्य प्रज्ञैव न जायत इति श्रुतेरर्थः, तामिस्रेषु नो रूपधीर्विरलीकृतेषु मन्दप्रदीपैः सन्तमसेषु रूपमुपलभ्यत इति, क्लेशतनूकरणस्योपकारितेति भावः,

"दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति—

श्रुतिमाश्रित्याह—सूक्ष्मेति ।

वार्त्तिकम्।

तेषां योगद्वारमाह—

"समाधिभावनार्थः क्लेशतनूकरणार्थश्च" उभयार्थत्वे हेतुमाह—स हीति । आ सम्यक् निष्कामादिरूपेण सेव्यमानः स हि स एव कर्मयोगः कर्मातिरिक्तविषयेभ्यो निरुद्धवृत्तिकं निष्पापं च चित्तं करोति ततः क्रमेण सत्त्वोद्रेकादेकाग्रमन्यत्रापि करोति, अविद्याऽऽदिकं च प्रकर्षेणानायासेन तनूकरोति सत्त्वशुद्ध्यादिद्वारेत्यर्थः, उत्तमाधिकारिणश्च समाधियोग्यता क्लेशतनुता च सिद्धैवेत्यतः पूर्वपादे तदुभयं योगसाधनतया नोक्तम्, नन्वविद्याऽऽदीनां क्लेशानां नाशेनैव संसारोच्छेदः प्रतनूकरणेन तु किंप्रयोजनमित्याकाङ्क्षायामाह—प्रतनूकृतानिति । प्रतनूकृतांश्च शुष्केन्धनतुल्यान् कृतान् क्लेशान् क्रियायोगः स्वयमुद्दीपितेन प्रसंख्यानाग्निना विवेकख्यातिवह्निना दग्धबीजवदप्रसवधर्मिणोऽप्रसवस्वभावान् संस्काराजनकान् करिष्यति जीवन्मुक्तिदशायामिति शेषः, प्रसंख्यानाग्निज्वालने तनूकरणस्य द्वारं वदन् पूर्वोक्तार्थमुपसंहरति—तेषामिति । अपरामृष्टा = अनभिभूता, तथा

प्रज्ञा समाप्ताधिकारा प्रतिप्रसवाय कल्पिष्यत इति ॥ २ ॥

अथ के ते क्लेशाः, कियन्तो वेति—

**अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ॥ ३ ॥**

क्लेशा इति । पञ्च विपर्य्यया इत्यर्थः, ते स्यन्दमाना गुणाधिकारं द्रढ-

भास्वती ।

यते तद्वत्, एवं क्रियारूपाण्यपि तपआदीनि सर्ववृत्तिनिरोधस्य ज्ञानसाध्यस्य योगस्य बहिरङ्गतां लभन्ते ॥ २ ॥

दुःखमूलाः परमार्थप्रतिपक्षा विपर्य्यया एव पञ्च क्लेशाः ते स्यन्दमानाः संस्कारप्रत्ययरूपेण तन्वाना विवर्द्धमाना इत्यर्थः, गुणानामधिकारं कार्यारम्भणसामर्थ्यमित्यर्थः, द्रढयन्ति, अत एव महदादिरूपं चित्तवृत्तिरूपं संसृतिरूपञ्च परिणाममवस्थापयन्ति = परिणामस्या-

तत्त्ववैशारदी ।

या सूक्ष्मोऽस्या विषय इति सूक्ष्मा प्रज्ञा, प्रतिप्रसवाय = प्रविलयाय कल्पिष्यते, कुतः ? यतः समाप्ताधिकारा = समाप्तोऽधिकारः कार्य्यारम्भणं गुणानां यया हेतुभूतया सा तथोक्तेति ॥ २ ॥

पृच्छति-"अथ" इति । "अविद्या" इति सूत्रेण परिहरति-"अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः", "क्लेशा" इति व्याचष्टे-"पञ्च विपर्य्यया" इति । अविद्या तावद्विपर्य्यय एव, अस्मिताऽऽदयोऽप्यविद्योपादानास्तदविनाभाववर्त्तिन इति विपर्य्ययाः, ततश्चाविद्यासमुच्छेदे तेषामपि समुच्छेदो युक्त इति भावः, तेषामुच्छेत्तव्यताहेतुं संसारकारणत्वमाह-"ते" इति । स्यन्दमानाः = समुदाचरन्तो गुणानामधिकारं द्रढयन्ति = बलवन्तं कुर्व-

पातञ्जलरहस्यम् ।

"नैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्ममि"ति

साङ्ख्योक्तेश्च ॥ २ ॥

"पञ्चाशद्भेदां पञ्चपर्वामविद्याम्" इति श्रुतिमाश्रित्य के क्लेशाः कियन्तो वेत्यस्योत्तरमाह-"अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा" इति,

तमो मोहो महामोहस्तामिस्रश्चान्धसंज्ञक" इति

वार्त्तिकम् ।

चामभिभव एव तनूकरणस्य द्वारमिति, सूक्ष्मेति । सूक्ष्मविषयत्वात् सूक्ष्मा साक्षात्काररूपिणी प्रज्ञा क्रमेण समाप्तकर्त्तव्या चरमासंप्रज्ञाते प्रतिप्रसवाय प्रलयाय कल्पिष्यते विदेहकैवल्यदशायामिति शेषः, तदेवं क्रियायोगस्य मोक्षज्ञानादिव्यापारकथनात्कर्मयोगो ज्ञानादिसाधनतया ज्ञानाद्यङ्गमेव न साक्षान्मोक्षहेतुरिति सिद्धान्त इति ॥ २ ॥

उत्तरसूत्रावताराय पृच्छति—अथेति—

"अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः", पञ्च विपर्यया इति पूरयित्वा संक्षेपतः सूत्रार्थमाह-क्लेशा इतीति । इतिशब्दोऽविद्याऽऽदिपरामर्शी तथा चाविद्याऽस्मितारागद्वेषाभिनिवेशा इति पञ्चविपर्ययाः क्लेशा इत्यर्थ इति योजना, अत्र कियन्त इतिप्रश्नस्योत्तरं पञ्चेत्यनेन, के त इत्यस्य चोत्तरं विपर्यया इत्यनेनाह—पञ्च विपर्यया इति । अत्र पञ्चेत्यर्थादेव लब्धं विपर्यया इति च पूरितं विशेषलक्षणस्य च सामान्यलक्षणपूर्वकत्वौचित्यात्, विपर्ययशब्दश्चात्र संसारहेतुविपर्ययार्थकः, अतो न शुक्तिरजतविपर्यये क्लेशलक्षणातिव्याप्तिः, रागादीनां च विपर्ययकार्यतया विपर्ययत्वं चेष्टम्, प्रकृतस्य संसारहेतुविपर्ययस्य लक्षणमदृष्टसामान्यहेतुमनोविशेषगुणत्वमिति, ननु क्लेशशब्दो दुःखवाची किमित्यविद्याऽऽदिषु परिभाषितः किमर्थं वा तेषामुच्छेदोऽपेक्षित इत्याकाङ्क्षायामाह—ते स्यन्दमाना इति । ते क्लेशाः स्यन्दमाना-

यन्ति, परिणाममवस्थापयन्ति, कार्य्यकारणस्रोत उन्नमयन्ति, परस्परा-नुग्रहतन्त्रीभूय कर्मविपाकं चाभिनिर्हरन्ति इति ॥ ३ ॥

**अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥४॥**

भास्वती ।

वस्थितेः प्रवर्त्तनाया वा हेतवो भवन्तीत्यर्थः, यथाऽपत्यार्थं पित्रोः प्रवर्त्तनं तथा क्लेश-कारणानां महदादीनामपि कार्यकारणस्रोतोरूपेणोन्नमनं प्रवर्त्तनमित्यर्थः, ते च क्लेशाः पर-स्परसहाया जात्यायुर्भोगरूपं कर्मविपाकमभिनिर्हरन्ति = निर्वर्त्तयन्तीति ॥ ३ ॥

चतुर्विधकल्पितानामस्मितारागद्वेषाभिनिवेशानामित्यर्थः, तत्रेति । शक्तिः क्रिया-

तत्त्ववैशारदी ।

न्ति, अत एव परिणाममवस्थापयन्ति, अव्यक्तमहदहङ्कारपरम्परया हि कार्य्यकारणस्रोत-उन्नमयन्ति = उद्भावयन्ति, यदर्थं सर्वमेतत्कुर्वन्ति — तद्दर्शयति — "परस्पर" इति । कर्मणां — विपाकः = जात्यायुर्भोगलक्षणः पुरुषार्थः, तममी क्लेशा अभिनिर्हरन्ति = निष्पादयन्ति, किम्प्रत्येकं निष्पादयन्ति ? नेत्याह "परस्परनुग्रह" इति । कर्मभिः क्लेशाः क्लेशैश्च क-र्माणीति ॥ ३ ॥

इयानां क्लेशानामविद्यामूलत्वं दर्शयति — "अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुवि-च्छिन्नोदाराणाम्", तत्र का प्रसुप्तिरिति ? स्वोचितामर्थक्रियामकुर्वतां क्लेशानां-

पातञ्जलरहस्यम् ।

विष्णुपुराणवचनात्, पञ्चपर्वा पञ्चाशद्भेदा वणरूपेणेति श्रुतेरर्थः, उन्नमयन्ति = उद्घाट-यन्ति, अविनिर्भागवर्तिनः शुक्तिकाद्यं रा।हिण्युद्धयवदविनाभाविन इत्यर्थः. इन्द्रियाणाञ्च स्वातन्त्र्यं निराह — परस्परेति ॥ ३ ॥

यतो ज्ञानमज्ञानस्यैव निवर्तकमित्युक्तिमाश्रित्य तत्त्वधीनिवर्त्यत्वसूचनाया विद्योपादान-कत्वमाह चतुर्णामिति, सूत्रारूढं करोत्य"विद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणामि"ति, तदेषामस्मिताऽऽदिचतुर्णामविद्या = अज्ञानमसुरामित्रवद् भावभूतं क्षेत्रं गर्भस्येव योनिर-विद्योपादानकत्वात्तेषामिति, प्रसुप्तादिविशेषणमुपादेयानां चतुर्णां न तूपादानस्येत्यर्थः, कालान्तरं फलवत्त्वेन सर्वदा मन्थरं जनकत्वेन, कादाचित्कजनकत्वेन सर्वदा जनकत्वेन प्रसुप्तादि-वाच्यास्ते क्लेशा इति सूत्रार्थः, अविद्योपादानत्वे तेषामन्वयव्यतिरेकावाह — भाष्यं, यदवि-द्यया वस्त्वाकार्यते तदेवानुशेरते क्लेशा इत्यन्वयः, क्षीयमाणामनु क्षीयन्त इति व्यतिरेकः,

"कर्मणा जायते जन्तुः कर्मणैव प्रलीयते"

वार्त्तिकम् ।

लब्धवृत्तिका दृष्टादृष्टद्वारा गुणानां सत्त्वादीनाम् अधिकारं कार्यारम्भणसामर्थ्यं द्रढयन्ति = बलवत् कुर्वन्ति, तथा गुणानां परिणामं वैषम्यरूपमवस्थापयन्ति निर्वर्त्तयन्ति ततश्च महदादि-रूपकार्यकारणप्रवाहमुन्नमयन्ति प्रवर्त्तयन्ति, यदर्थमेतत्सर्वं कुर्वन्ति तद्दर्शयति — परस्परेति । कर्मविपाकं जात्यायुर्भोगं चाभिनिर्हरन्ति निष्पादयन्ति, किं स्वतन्त्रा एव ? नेत्याह — परस्प-रानुग्रहतन्त्रा भूत्वेति । अविद्यातो रागो रागाच्चाविद्येत्येवमादिरूपान्योन्यानुग्रहाधीना-भूत्वेत्यर्थः, अन्योन्यसाहित्येनैव हि क्लेशानां स्थैर्यं भवति येन स्थैर्येण विपाकपरम्परा निर्व-हतीति भावः, तथा च क्लेशाख्यदुःखदत्वादविद्याऽऽदीनां क्लेशपरिभाषा तान्त्रिकी, तथा दुःखनिदानतयाऽविद्याऽऽदयः समुच्छेत्तव्या इति भावः ॥ ३ ॥

क्लेशानां स्थूलसूक्ष्माणां सर्वेषामेव ज्ञाननाश्यत्वं वक्ष्यमाणमुपपादयितुम् अविद्यामू-लकत्वमन्यक्लेशानामाह —

"अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्", निमित्तकारणस्यापि प्रसवभूमित्वं-

अत्राविद्या क्षेत्रम्=प्रसवभूमिः, उत्तरेषाम्=अस्मिताऽऽदीनां चतुर्विध-कल्पितानां प्रसुप्ततनुविच्छिन्नोदाराणाम्, तत्र का प्रसुप्तिः ? चेतसि-शक्तिमात्रप्रतिष्ठानां बीजभावोपगमः, तस्य प्रबोध आलम्बने संमुखीभावः प्रसङ्ख्यानवतो दग्धक्लेशबीजस्य संमुखीभूतेऽप्यालम्बने नासौ पुनरस्ति, दग्धबीजस्य कुतः प्ररोह इति, अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते, तत्रैव सा दग्धबीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति,

भास्वती ।

या जननी तन्मात्रप्रतिष्ठानां क्लेशानां प्रसुप्तिर्द्वितयी भविष्यक्रियाजननी च दग्धबीजोपमा क्रियाजननसामर्थ्यहीना वन्ध्या चेति, आद्या विषये प्राप्ते विबुध्यते न तथाऽन्त्येति विवे-

तत्त्ववैशारदी ।

सद्भावे न प्रमाणमस्तीत्यभिप्रायः पृच्छतः, उत्तरमाह—"चेतसि" इति । सा नामा-श्रिया कार्युः क्लेशाः, विदेहप्रकृतिलयानां बीजभावं प्राप्तास्तु ते शक्तिमात्रेण सन्ति क्षीर इव दधि, न हि विवेकख्यातेरन्यदस्ति कारणं तद्वन्ध्यतायाम्, अतो विदेहप्रकृतिलया विवेकख्यातिविरहिणः प्रसुप्तक्लेशा न यावदवधिकालं प्राप्नुवन्ति, तत्प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास्तेषु तेषु विषयेषु संमुखीभवन्ति शक्तिमात्रेण प्रतिष्ठा येषां ते तथोक्ताः, तदनेनोत्पत्तिशक्तिरुक्ता, बीजभावोपगम इति च कार्यशक्तिरिति, ननु विवेकख्यातिमतोऽपि क्लेशाः कस्मान्न प्रसुप्ता इत्यत आह—"प्रसंख्यानवत" इति ।

पातञ्जलरहस्यम् ।

सुखदुःखे इत्यादिस्मृतः, कुतं विवेकख्यात्येत्याशङ्क्याह—न हीति । ततः किं फलितमित्याह-अतो विदेहेत्यादि कार्यशक्तिरित्यन्तेन, अवधिकालं "पूर्णं शतं सहस्रं त्वि"त्यादि, कल्पानामिति शेषः, प्रसंख्यानवतो ध्यायिनश्चानेनानीश्वरान् गुणान् इति श्रुतेर्जहातीति

वार्त्तिकम् ।

प्राधान्यमात्रेण गौणं व्याख्यास्यते--अत्रेति । अत्रैतेषु क्लेशेषु मध्ये चतुर्भेदानामस्मिताऽऽदिक्लेशानामित्यादिरर्थः प्रसुप्तादीनां सर्वेषामेवाविद्यासत्त्वे सत्त्वं तदभावे तदभाव इत्याशय, तेषां चतुर्विधभेदं विवृणोति तत्र का प्रसुप्तिरिति । चेतसि शक्तिमात्रेणानागतावस्थयाऽवस्थितानामस्मिताऽऽदीनां बीजभावोपगम. स्वकार्यजननसामर्थ्यं प्रसुप्तिरित्यर्थः, अस्माद्वाक्यात् कार्यस्यानागतावस्थैव कारणे कार्यशक्तिरिति लब्धं, सैव चोपादानकारणतेति भावः, दग्धबीजभावां पञ्चमीमवस्थां व्यावर्तयितुं बीजभावोपगम इत्युक्तं, दग्धबीजभावानां चास्मिताऽऽदीनां पुनरप्रसवादविद्या न क्षेत्रमिति सा पञ्चम्यवस्था न लक्ष्येति भावः, कदा चित्प्रबोधसत्त्व एव प्रसुप्तिः संभवतीत्यतः प्रबोधमपि दर्शयति—तस्येति । तस्य सुप्तक्लेशस्य स्वस्वविषये संमुखीभावोऽभिव्यक्तिः प्रबोध इत्यर्थः, पञ्चम्यवस्थायामतिव्याप्त्यभावं प्रतिपादयति प्रसंख्यानेति । प्रसंख्यानवतो विवेकसाक्षात्कारिणो जीवन्मुक्तस्य दग्धक्लेशबीजतया संमुखीभूते सन्निकृष्टेऽपि विषयेऽसौ क्लेशानां संमुखीभावः [illegible] भवति, तत्र हेतु- [illegible] स्य कुतः प्ररोह [illegible]ति । का[illegible]र्थः, तत्र तस्य पुनः क्लेशप्ररोहे, नास्य-

[illegible]

[illegible]

"बीजा[illegible]

[illegible]

[illegible]धैः क्लेशरूपबीजै[illegible] [illegible] [illegible] । तत्रैव [illegible]मदे-

दग्धबीजभावाया [illegible]

सतां क्लेशानां तदा बीजसामर्थ्यं दग्धमिति विषयस्य सम्मुखीभावेऽपि सति न भवत्येषां प्रबोध इत्युक्ता प्रसुप्तिः दग्धबीजानामप्ररोहश्च, तनुत्वमुच्यते—प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति, तथा विच्छिद्य विच्छिद्य

भास्वती।

च्यम्, प्रसङ्ख्यानवतो विवेकख्यातिमतः, चरमदेह इति। मनःप्राणेन्द्रियक्रियां स्तम्भतो विवेकमात्रे चित्तसमाधानसामर्थ्याद् न तस्य योगिनः पुनः शरीरधारणं स्यात्, ततश्चरमदेहो-जीवन्मुक्त इति, सतामिति। विवेकः प्रत्ययविशेषः, प्रत्ययस्तु द्रष्टृदृश्यसंयोगमन्तरेण न सम्भवेत्, तस्माद् विवेककालेऽप्यस्ति चित्तोपादानभूताऽस्मिता सा च विवेकादन्यं सांसारिकं प्रत्ययं न जनयतीति सत्यपि साऽस्मिता दग्धबीजोपमा बीजसामर्थ्यहीना, उक्तञ्च—

"बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः"॥ इति,

प्रतिपक्षेति। अस्मितायाः प्रतिपक्ष आत्मनः करणव्यतिरिक्तताभावना, रागस्य

तत्त्ववैशारदी।

चरमदेहः = न यस्य देहान्तरमुत्पत्स्यते यदपेक्षयाऽस्य देहः पूर्व इत्यर्थः, नान्यत्र = विदेहादिष्वित्यर्थः, ननु सतो नात्यन्तविनाश इति किमिति तदीययोगर्द्धिबलेन विषयसंमुखीभावे न क्लेशाः प्रबुद्ध्यन्त इत्यत आह —"सताम्"इति। सन्तु क्लेशाः, दग्धस्त्वेषां प्रसङ्ख्यानाग्निना बीजभाव इत्यर्थः, क्लेशप्रतिपक्षः क्रियायोगस्तस्य भावनम् = अनुष्ठानं तेनोपहतास्तनवः, अथ वा सम्यग् ज्ञानम् अविद्यायाः प्रतिपक्षः, भेददर्शनम् अस्मितायाः, माध्यस्थ्यं रागद्वेषयोः, अनुबन्धबुद्धिनिवृत्तिरभिनिवेशस्येति, विच्छित्तिमाह —'तथा" इति। क्लेशा-

पातञ्जलरहस्यम्।

शेषः, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति श्रुतिमाश्रित्याह—चरमदेह इति। चरमत्वं देहान्तरसम्बन्धाभावः, "नाभावो विद्यते सत" इति स्मृतेः कथं न बुध्यन्ते सतां न नाशः किन्तु कार्याक्षमत्वं—

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन!" इति

स्मृत्यन्तरादित्याह-सतामित्यादि-तनवइत्यन्तेन, "तरति शोकमात्मविद्" "यतो ज्ञानमज्ञानस्य निवर्तकमि"ति श्रुतिस्मृती प्रमाणीकृत्याह-अथ वेति। यथाक्रमं तमआदिपञ्चानां प्रतिपक्षानाह-सम्यक्ज्ञानमित्यादि—अभिनिवेशस्येत्यन्तेन, माध्यस्थ्यम् = औदासीन्यम्, अनुब-

वार्त्तिकम्।

ह एव दग्धबीजावस्था नान्यत्र पुनर्जन्माभावादित्यर्थः, अतो नास्ति दग्धबीजावस्थस्य प्रसवो नापि तत्प्रसवभूमिरविद्येति भावः, जीवन्मुक्तानां विषयसन्निकर्षेऽपि क्लेशानभिव्यक्तेः क्लेशसंस्कार एव तदा नास्ति विवेके कैवल्य इवेति भ्रमं निरस्यति—सतामिति। सूक्ष्मरूपेण सतामेव क्लेशानां तदा चरमदेहे बीजसामर्थ्यं कार्यजननसामर्थ्यं दग्धं-नाशितमित्यादिरर्थः, अग्न्यादौ दाहादिशक्तेर्यावद्द्रव्यभावितादर्शनात् चित्तेन सहैव क्लेशशक्तेरशेषतो नाशसंभवाद्, ततश्च "ते प्रतिप्रसवहेयाः सूक्ष्मा" इतिसूत्रे व्यक्तीभविष्यति, उपसंहरति—इत्युक्ता प्रसुप्तिर्दग्धबीजानामप्ररोहश्चेति, शिष्यावधानाय क्रमप्राप्तं तनुत्वस्य निर्वचनं प्रतिजानीते—तनुत्वमुच्यत इति। प्रतिपक्षेति। क्लेशप्रतिपक्षः क्रियायोगः तस्य भावनमनुष्ठानं तेनोपहताः क्लेशास्तनवो विवेकख्यातिप्रतिबन्धाक्षमा भवन्ति, एतदेव तनुत्वमिति शेषः, के चित्तु सम्यग्दर्शनं श्रवणादिरूपं परोक्षमविद्यायाः प्रतिपक्षः, एवं भेददर्शनमस्मितायाम्, अहेयानुपादेयताज्ञानरूपं माध्यस्थ्यं रागद्वेषयोः, उपकरणाख्यानुबन्धबुद्धिनिवृत्तिरभिनिवेशस्य, एतेषां भावनेनानुष्ठानेनोपहता इत्यर्थमाहुः, विच्छित्तिं व्याचष्टे—तथेति।

**तेन तेनात्मना पुनः समुदाचरन्तीति विच्छिन्नाः, कथं ? रागकाले क्रोधस्यादर्शनाद्, न हि रागकाले क्रोधः समुदाचरति रागश्च क चिद् दृश्यमानो न विषयान्तरे नास्ति; नैकस्यां स्त्रियां चैत्रो रक्त इत्यन्यासु स्त्रीषु विरक्त इति किन्तु तत्र रागो लब्धवृत्तिरन्यत्र भविष्यद्वृत्तिरिति, स हि तदा प्रसुप्ततनुविच्छिन्नो भवति, विषये यो लब्धवृत्तिः स उदारः, सर्व-**

भास्वती।

वैराग्यभावना, द्वेषस्य मैत्रीभावना, अभिनिवेशस्य चाजरोऽहममरोऽहमित्यादिभावना तपःस्वाध्यायसहगतया प्रतिपक्षभावनया क्लेशास्तनवो भवन्ति, सर्व इति। चतसृष्व-

तत्त्ववैशारदी।

नामन्यतमेन समुदाचरताऽभिभवाद्वाऽत्यन्तं विषयसेवया वा विच्छिद्य विच्छिद्य तेन तेनात्मना समुदाचरन्ति = आविर्भवन्ति बाजीकरणाद्युपयोगेन वाऽभिभावकदौर्बल्येन वेति, वीप्सया विच्छेदसमुदाचारयोः पौनःपुन्यं दर्शयता यथोक्तात्प्रसुप्ताद् भेद उक्तः, रागेण वा समुदाचरता विजातीयः क्रोधोऽभिभूयते, सजातीयेन वा विषयान्तरवर्त्तिना रागेणैव विषयान्तरवर्त्ती रागोऽभिभूयत इत्याह—"राग" इति।

भविष्यद्वृत्तेस्त्रया गतिर्यथायोगं वेदितव्येत्याह–'स हि' इति। भविष्यद्वृत्तिक्लेशमात्रपरामर्शि सर्वनाम न चैत्रराग परामर्शि, तस्यविच्छिन्नत्वादेवेति, उदारमाह–"विषय" इति। ननूदार एव पुरुषान् क्लिश्नातीति भवतु क्लेशः, अन्ये त्वक्लिश्नन्तः कथं क्लेशा इत्यत आह— "सर्व एवैत इति। क्लेशविषयत्वं = क्लेशपदवाच्यत्वं, नातिक्रामन्त्युदारतामापद्यमाना-

पातञ्जलरहस्यम्।

न्धबुद्धिः = उपकारकर्धाः, समुदाचरता = आविर्भवता, अन्यतमेनास्मिताऽऽदीनां चतुर्णां मध्ये, वाजीकरणम् = शुक्रस्थैर्यलिङ्गविवृद्ध्यादिहेतुः दधिगुडादिरसायनं, तस्योपयोगो = भक्षणम्, अभिभावकदौर्बल्येनाभिभाव्यस्य प्रबलता = यथा मन्दप्रदीपे तमस इत्यर्थः, विच्छेदसमुदाचारयोस्तिरोभावाविर्भावयोरनादिप्रवाहत्वेन पौनरुक्त्यम्, उत्कटरागेऽनुत्कटरागस्य क्रोधस्य वाऽभिभवो दृष्ट इत्याह–रागेणेत्यादि-अभिभूयतइत्यन्तेन, रागकाल इत्यादि; विच्छिन्नं भवतीत्यस्य व्याख्या, सुखानुशयी रागः रञ्जनात्मकत्वाद्विषयप्रसक्त्या सह समपरिणामत्रयभागीत्याह—तदेति। उदारलक्षणमाह—विषय—इति। शब्दाद्याश्रयविषये साधारणे कथं-

वार्त्तिकम्।

क्लेशानामन्यतमेनाभिभवादत्यन्तविषयसेवनाद्वा विच्छिद्य विच्छिद्य तेन तेनात्मना पूर्ववद् तनुभावेनैव पुनः समुदाचरन्ति = आविर्भवन्तीत्यतो विच्छिन्नशब्दवाच्या भवन्तीत्यर्थः, अत्र वीप्सया विच्छिद्यसमुदाचारयोः पौनःपुन्यं दर्शयता प्रसुप्ताद् भेद उक्तः, प्रसुप्तिर्हि क्लेशानां व्यञ्जकविलम्बेनैकद्वित्रिजन्मादिबहुकालं व्यापारानभिव्यक्तिः विच्छिन्नता तु स्वल्पप्रतिबन्धतः क्लेशप्रवाहस्याल्पकालमन्तराऽन्तराऽनभिव्यक्तिरिति भेदः, तेन तेनात्मनेत्यनेन च तन्ववस्थातो भेद उक्त इति, विच्छेदे प्रमाणं पृच्छति—कथमिति। उत्तरं— रागेति। रागकाले क्रोधस्यादर्शनात् क्रोधस्य विच्छिन्नता सिध्यतीत्यर्थः, तदा क्रोधाभावे च पुनः क्रोधोत्पत्त्यसम्भवोऽसत्कार्यानभ्युपगमादिति भावः, एवं क्लेशान्तरेऽपि द्रष्टव्यम्, रागकाले क्रोधस्य विच्छेदे च विरोधो बीजमित्याह—न हीति। कालिकविच्छेदं क्लेशानाम् उदाहृत्य दैशिकविच्छेदमप्युदाहरति—रागश्चेति। विषयान्तरे न नास्ति; अपि तु विच्छिन्नावस्थस्तत्रापि; अन्यथाऽसदुत्पादासंभवादित्यर्थः, अतो विषयान्तरे तदा रागेण विच्छिन्न इति भावः, तदेवं लोकव्यवहारेणाप्यवधारयति–नैकस्यामिति। तत्रैकस्यां स्त्रियामित्यर्थः, स हीति। स हि रागस्तदाऽन्यत्र प्रसुप्तो वा तनुर्वा विच्छिन्नो वेकतरोऽवश्यं भवति तत्र विच्छिन्नतामादायात्रोदाहृत इत्याशयः. उदारतां व्याचष्टे—विषय इति। लब्ध-

एवैते क्लेशविषयत्वन्नातिक्रामन्ति, कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेश इति ? उच्यते—सत्यमेवैतत्-किन्तु विशिष्टानामेवैतेषां विच्छिन्नादित्वं यथैव प्रतिपक्षभावनातो निवृत्तस्तथैव स्वव्यञ्जकाञ्जनेनाभिव्यक्त इति सर्व एवामी क्लेशा अविद्याभेदाः, कस्मात् ? सर्वेष्वविद्यैवाभिप्लवते यदविद्यया वस्त्वाकार्य्यते तदेवानुशेरते क्लेशाः, विपर्य्यासप्रत्ययकाल उपलभ्यन्ते, क्षीयमाणां चाविद्यामनु क्षीयन्त इति ॥ ४ ॥

भास्वती।

प्यवस्थास्ववस्थिताः क्लेशाः क्लिश्नन्ति पुरुषं सम्प्रति वोत्तरकाले वेति क्लेशविषयत्वं नातिक्रामन्ति, विशिष्टानामिति। अवस्थाविशेषादेव प्रसुप्त्यादिभेद इत्यर्थः, अभिप्लवते = व्याप्नोति, सर्वे एवाविद्यालक्षणान्तर्गता इत्यर्थः, यदिति। अविद्यया वस्तु अतद्रूपेणाकार्यते = आकारितं क्रियते, इतरे च क्लेशास्तन्मिथ्याज्ञानानुगामिन इति तेऽविद्यामनुशेरते = अविद्यामपेक्ष्य वर्त्तन्त इत्यर्थः, क्षीयमाणामविद्यामनु = क्षीयमाणायामविद्यायामित्यर्थः, ते क्षीयन्ते ॥ ४ ॥

तत्त्ववैशारदी।

अत एव तेऽपि हेया इति भावः, क्लेशत्वेनैकतां मन्यमानश्चोदयति—"कस्तर्हि" इति। क्लेशत्वेन समानत्वेऽपि यथोक्तावस्थाभेदाद्विशेष इति, परिहरति—"उच्यते सत्यम्" इति। स्यादेतद्—अविद्यातो भवन्तु क्लेशास्तथाऽप्यविद्यानिवृत्तौ कस्मान्निवर्त्तन्ते, न खलु पटः कुविन्दनिवृत्तौ निवर्त्तत इत्यत आह—"सर्वे एव" इति। भेदा इव भेदास्तदविनिर्भागवर्त्तिन इति यावत्, पृच्छति—"कस्माद्" इति। उत्तरमाह—"सर्वेषु" इति। तदेव स्फुटयति—"यद्" इति। आकार्य्यते = समारोप्यते, शेषं सुगमम्,

पातञ्जलरहस्यम्।

विच्छिन्नत्वाद्यवान्तरभेदः तद्विना पर्यायत्वापत्तिरिति शङ्कते-सर्व इत्यादिना, "हृदि श्रिताः-कामा" इति श्रुत्याश्रयणेन समाधत्ते—उच्यत इत्यादिना, आत्मोपादानकत्वं निरस्यन्नविद्योपादानकत्वमाह—अविद्यवाभिप्लवते, उपादानत्वेनेति शेषः, आकार्यते शब्दस्पर्शादि, अनुशेरते = विषयीकुर्वन्ति, अमीषामविद्याऽन्वयव्यतिरेकेणाविद्याकारणकत्वमाह—विपर्यासे-

वार्त्तिकम्।

वृत्तिर्लब्धस्वाभाविकवृत्तिरित्यर्थः, तेन तनुव्यावृत्तिः, ननु प्रसुप्तविच्छिन्नयोः कथं क्लेशत्वं-दुःखाजनकत्वादित्याशङ्क्याह—सर्व एवैत इति। क्लेशविषयत्वं क्लेशजननयोग्यत्वं नातिक्रामन्ति, उदाराद्यवस्थायां प्रसुप्तादिरूपस्य धर्मिणो दुःखदत्वादित्यर्थः, नन्वेवं सर्वासामेव क्लेशव्यक्तीनां कालभेदाच्चानुरूप्ये कथं प्रसुप्तादिरूपेण क्लेशानां विभाग इत्याशङ्कते—कस्तर्हीति। परिहरति—उच्यत इति। प्रसुप्तादिरूपेण चतुर्णां क्लेशानामेकत्वमितिः सत्यमेतत्; तथाऽप्यवस्थाभिर्विशिष्टानामेव क्लेशानां विच्छिन्नादित्वं विवक्षितं, यथैकस्यैव पुरुषस्य बालकतरुणवृद्धादिरूपो विभाग इत्यर्थः, उक्ताया उदारावस्थायाः कारणं प्रदर्शयति हानाय—यथैवेति। स्वव्यञ्जकेन विषयध्यानेनाञ्जनेनाभिव्यक्त उदारो भवति क्लेशोऽतो मुमुक्षुणा प्रतिपक्षभावनावद्विषयसङ्गत्यागोऽपि कार्य इत्याशयः, निमित्तकारणेऽपि क्षेत्रशब्दो येन गुणेनात्र गौणस्तमाह—सर्व एवेति। ननु रागादीनां ज्ञानत्वाभावात् कथमविद्याविशेषत्वमित्याशयेन पृच्छति—कस्मादिति। उत्तरं—सर्वेष्विति। सर्वेष्वेव स्वेतरक्लेशेष्वविद्यैव व्यापिका भवति, तत्र हेतुर्यदिति, आकार्यते = विषयीक्रियते, अनुशेरते अनुगता भवन्ति, शेषं सुगमं, तथा च "वैशेष्यात्तद्वाद" इति न्यायेनाविद्याप्राचुर्याद् अविद्यामिश्रितेषु सर्वक्लेशेष्वविद्याभेदवत्त्वमुपपन्नं, यथा सुवर्णादिषु

तत्राविद्यास्वरूपमुच्यते--

**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या॥५॥**

अनित्ये कार्य्ये नित्यख्यातिः, तद्यथा-ध्रुवा पृथिवी ध्रुवा सचन्द्रतारका द्यौः अमृता दिवौकस इति,

तथाऽशुचौ = परम बीभत्से काये; उक्तञ्च—

"स्थानाद् बीजादुपष्टम्भान्निस्यन्दान्निधनादपि।

भास्वती।

स्थानादिति। देहस्य बीजमशुचि, तथा स्थानं = मातुरुदरं लालाऽऽदिमिश्रभुक्तान्नपा-

तत्त्ववैशारदी।

प्रसुप्तास्तत्त्वलीनानां तन्ववस्थाश्च योगिनाम्।
विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनाम् इति सङ्ग्रहः॥ ४॥

"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या", अनित्यत्वोपयोगि विशेषणं "कार्य" इति। के चित् किल भूतानि नित्यत्वेनाभिमन्यमानास्तद्रूपमभोप्सवस्तान्येवोपासते, एवं धूमादिमार्गानुपासते चन्द्रसूर्य्यतारकादुलोकान्नित्यानभिमन्यमानास्तत्प्राप्तये, एवं दिवौकसः = देवानमृतानभिमन्यमानास्तद्भावाय सोमं पिबन्ति, आम्नायते हि—"अपाम सोमममृता अभूम" इति, सेयमनित्येषु नित्यख्यातिरविद्या,

तथाऽशुचौ = परमबीभत्से काये, अत्रोक्त एव कायबीभत्सतायां वैयासिकीं गाथां पठति—

पातञ्जलरहस्यम्।

त्यादिना, अविद्यामनु क्षीयन्ते = तिरोभवन्तीत्यर्थः॥ ४॥

प्रमाप्रागभाववद्विद्याविरोधित्वे विद्यानाश्यत्वमविद्यात्वमिति सूत्रारूढं करोति-अनीति। "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्ये"ति, अनित्यादिषु विभ्रमधीरवि-

वार्त्तिकम्।

पार्थिवांशमिश्रितेषु तेजोविशेष्यात्तेजोभेदत्वमिति भावः॥ ४॥

अविद्यैव मूलं दुःखबीजम् इत्युक्तमिदानीं पञ्चक्लेशान् पञ्चभिः सूत्रैः क्रमेण लक्षयति—

"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या", अनित्यादिचतुष्टये क्रमेण नित्यादिबुद्धिरविद्येत्यर्थः, अविद्याचतुष्टयं क्रमेण व्याचष्टे; उदाहरणानि च दर्शयति—अनित्य इति। अनित्यत्वमसत्त्वं कालनिष्ठाभावप्रतियोगित्वमिति यावत् तस्यैव स्वरूपाख्यानं-कार्य इति। नित्यत्वं च सत्त्वम्, गारुडे--

"अनात्मन्यात्मविज्ञानमसतः सत्स्वरूपता।
सुखाभावे तथा सौख्यं मायाऽविद्याविनाशिनी"॥ इति,

भगवद्गीतायां च--

"नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः"॥ इति,

असतः प्रागभावप्रतियोगिनो भावोऽविनाशित्वं नास्ति सतश्चानादिभावस्याभावो विनाशो नास्तीत्यर्थः, अविनाशि तु तद्विद्धीत्याद्युत्तरवाक्याद् अत्राभावप्रतियोगित्वरूपानित्यत्वमेवासत्त्वमुक्तमिति, इमामेवासति सद्बुद्धिरूपामविद्यामादाय प्रपञ्च आविद्यक इति श्रुतिस्मृतिडिण्डिमः, तथा प्रपञ्चज्ञानस्यासति सदाकारकत्वाद् भ्रमत्वमपि शुक्तिरजतादिज्ञानवद्गीयत इति, उक्ताविद्यायाः प्रपञ्चमेवोदाहरणमाचार्योऽप्याह-ध्रुवेति। "वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"त्यादिश्रुत्याऽपि प्रपञ्चस्येदृशमेवासत्यत्वमुक्तम्, परमबीभत्स इति। कुत्सितेऽपवित्र इति यावत्, कायस्याशुचित्वे श्रुतिं प्रमाणयति—उक्तं चेति।

कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः"

इत्यशुचौ शुचिख्यातिर्दृश्यते-नवेव शशाङ्कलेखाकमनीयेयं कन्या मध्व-मृतावयवनिर्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते नीलोत्पलपत्रायताक्षी हा-

भास्वती ।

नम्, उपष्टम्भः = सङ्घातः, घर्मसिङ्घाणादिर्निःस्यन्द इत्येतत् सर्वमशुचि, किञ्च निधनात् तथाऽऽधेयशौचत्वात् = पुनः पुनः शौचस्य विधेयत्वात् कायोऽशुचिरित्यर्थः, रागादशुचौ शुचिख्यातिः, द्वेषाद् दुःखे सुखख्यातिर्यतो द्वेषजमीर्ष्याऽऽदिकं सन्तापकरमप्यनुकूलतयो-

तत्त्ववैशारदी ।

"स्थानाद्" इति । मातुरुदरं मूत्राद्युपहतं स्थानम्, पित्रोर्लोहितरेतसी बीजम्, अशितपीताहाररसादिभाव उपष्टम्भः; तेन हि शरीरं संधार्य्यते, निस्पन्दः = प्रस्वेदः, निधनञ्च श्रोत्रियशरीरमप्यपवित्रयति, तत्स्पर्शे स्नानविधानाद्, ननु यदि शरीरमशुचि कृतं तर्हि मृज्जलादिक्षालनेनेत्यत आह—आधेयशौचत्वादिति । स्वभावेनाशुचेरपि शरीरस्य शौचमाधेयं सुगन्धितेव कामिनीनामङ्गरागादिति, अर्धोक्तं पूरयति--इत्यशुचाविति । इत्युक्तेभ्यो-हेतुभ्योऽशुचौ शरीर इत्यर्थः, शुचिख्यातिमाह—"नवा" इति, हावः = शृङ्गारजा लीला, कस्य = स्त्रीकायस्य परमबीभत्सस्य, केन = मद्गतमसादृश्येन शशाङ्कलेखाऽऽदिना सम्बन्धः, एतेन = अशुचिस्त्रीकाये शुचिख्यातिप्रदर्शनेन, अपुण्ये = हिंसाऽऽदौ, संसारमोचकादीनां पुण्यप्रत्ययः' एवमर्जनरक्षणादिदुःखबहुलतयाऽनर्थे = धनादावर्थप्रत्ययो व्याख्यातः, सर्वेषां जुगुप्सितत्वेनाशुचित्वात्, "तथा दुःख इति सुगमम्, अनात्म-

पातञ्जलरहस्यम् ।

धेति सूत्रार्थः, आविर्भूतधर्मादिपरिणामकेऽध्रुवादौ नित्यख्यातिः = ध्वंसाप्रतियोगित्वधीः, एषु भ्रमज्ञानं परमबीभत्से देहे रेतःशोणितयोरियं परिणतिर्यद्योषेत्यादि, "अपाम सोममस्ता-अभूमे"त्यादिश्रुतिमाश्रित्याह-नित्यानभिमन्यमाना इति, अपवित्रयतीति-

"नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशे"दि-

त्यादिना नरास्थिवद् यदशुद्धं तदशुद्धमेव कृतं क्षालनादिना तत्राह-आधेयशौचत्वा दिति । गोमयवद्वाचनिकशौचत्वादिति भावः, अर्धोक्तमिति । अशुचित्वे हेतुर्नोक्तः स्थानादिपञ्चहेतुभिः पूर्यत इत्यर्थः, शुचिताभ्रमकारणमाह-नवेति । मध्वमृतेति । मधुवदवयवसुधापानास्पदत्वेनामृतवदवयवस्पर्शेन व्यामोहकत्वेन,

"अमेध्यक्लेदार्द्रे पथि च रमते स्पर्शरसिक" इति,

कस्य = पाटितपाटीनतुल्यस्य, केन = मध्ववयवादिना, तदत्यन्ताभाववति तद्बुद्धेर्भ्रमत्वमिति भावः, एतेन दिग्दर्शनमात्रं--

"सोमस्तासां ददौ शौचं गन्धर्वाश्च शुभां गिरम् ।
पावकः सर्वमेध्यत्वं शुद्धा वै योषितः सदा" ॥

वार्त्तिकम् ।

स्थानं मूत्राद्युपहतं मातुरुदरं, बीजं, शुक्रशोणिते, उपष्टम्भो मातृभुक्ताद्यादिरसः, निस्यन्दो नवद्वाररोमकूपादिभिश्च क्षरणं, निधनं मरणम्, एवमन्येऽशुद्धिहेतवः स्पष्टाः, तथा स्नानादिभिः शौचाधानादपि सदा स्वतोऽशुचित्वमनुमीयत इत्याह-आधेयशौचत्वादिति । ननु भवतु शरीरमशुचि तथाऽपि तत्र शुचिख्यातौ किं प्रमाणमित्याकाङ्क्षायामाह--अशुचौ शुचिख्यातिर्दृश्यत इति, नवीनशशाङ्कवदिवं कन्या कमनीया मधुनोऽमृतस्य वाऽवयवैर्निर्मितेव दृश्यते, हावः = शृङ्गारजा लीला, कस्य स्त्रीकायस्य निकृष्टस्य केन चन्द्रकलाऽऽदिनाऽतिनिर्मलेनाभिसंबन्धः साधर्म्यम्, नास्त्येव विवक्षितसाधर्म्यमित्यर्थः, उपसं-

**वगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयन्तीवेति-कस्य केनाभिसम्बन्धो- भवति चैवमशुचौ शुचिविपर्य्यासप्रत्यय इति, एतेनापुण्ये पुण्यप्रत्ययस्त- थैवानर्थे चार्थप्रत्ययो व्याख्यातः, तथा दुःखे सुखख्यातिं वक्ष्यति-"परिणा- मतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" इति, तत्र सुखख्यातिरविद्या, तथाऽनात्मन्यात्मख्यातिः बाह्योपकरणेषु चेतनाचेतनेषु भोगाधिष्ठाने वा शरीरे पुरुषोपकरणे वा मनस्यनात्मन्यात्मख्याति- रिति, तथैतदत्रोक्तं-"व्यक्तमव्यक्तं वा सत्त्वमात्मत्वेनाभिप्रतीत्य तस्य सम्पद- मनु नन्दत्यात्मसम्पदं मन्वानस्तस्य व्यापदमनु शोचत्यात्मव्यापदं मन्य- मानः स सर्वोऽप्रतिबुद्ध" इति, एषा चतुष्पदा भवत्यविद्या मूलमस्य क्लेश-**

भास्वती ।

पनह्यन्ति क्लेषिणो जनाः, अस्मितयाऽनात्मन्यात्मख्यातिः, तथाऽभिनिवेशादनित्ये

तत्त्ववैशारदी ।

नि" इति ।। सुगमम्, तथैतदत्रोक्तं—पञ्चशिखेन-व्यक्तम्=चेतनं पुत्रदारपश्वादि, अव्यक्तम्=अचेतनं शय्याऽऽसनाशनादि, स सर्वोऽप्रतिबुद्धः=मूढः, चत्वारि पदानि=स्था- नान्यस्या इति चतुष्पदा, नन्वन्या अपि दिङ्मोहालातचक्रादिविषयाऽनन्तपदाऽविद्या, त- त्किमुच्यते चतुष्पदेत्यत आह-"मूलमस्य" इति । ननु नामान्या अप्यविद्याः, संसारबीजं- चतुष्पदैवेति, नन्वविद्येति नञ्समासः पूर्वपदार्थप्रधानो वा स्याद् यथाऽमक्षिकमिति, उत्त-

पातञ्जलरहस्यम् ।

इत्यादीनां, नञश्चैष स्वभावो यत् स्वसंबन्धिनोऽभावं बोधयतीति न्यायेनाह-यथाऽम- क्षिकमिति ।

वार्त्तिकम् ।

इरति—भवतीति । एतेनेति । एतेनाशुचौ शुचिख्यातेर्व्याख्यानेनापुण्ये तक्षशिलाऽऽरोहणादौ हिंसाऽऽदौ वा पुण्यप्रत्ययस्तथाऽनर्थेऽर्जनरक्षणादिना दुःखबहुलतयाऽपुरुषार्थे धनादावर्थप्रत्य- योऽप्यविद्यात्वेन व्याख्यातः, शुच्यशुचिशब्दयोर्योगोत्कृष्टसाधनासाधनमात्रोपलक्षकत्वादि- त्यर्थः, भाष्योक्तमप्यविद्याद्वयमन्यासामपि संसारहेतूनामविद्यानामुपलक्षकमतो न न्यूनता, तत्रेत्युत्तरग्रन्थेन तृतीयामविद्यां व्याख्यातुमादौ वक्ष्यमाणसूत्रमुखेन तस्योदाहरणं प्रदर्शयति- तथा दुःख इति । तथेत्यस्य तत्र सुखख्यातिरविद्येत्यनेनान्वयः, वक्ष्यतीति । अर्थादिति शेषः, तत्रेति । जगद्रूपदुःख इत्यर्थः, अत्र च दुःखमेव सर्वं विवेकिन इत्यागामिसूत्रे दुःखसाधनतया दुःखबहुलतया च दुःखत्ववचनाद् दुःखसाधने दुःखनिवृत्त्याख्यतात्त्विकसुखसाधनत्वबुद्धिः तथा दुःखप्रचुरे सुखप्रचुरत्वबुद्धिश्च तृतीयाऽविद्येति बोध्यम्, अन्यथा केवलदुःखे सुखभ्रमस्यासि- द्धिरिति, चतुर्थीमविद्यां व्याचष्टे—तथाऽनात्मनीति। उदाहरणं बाह्येति । बाह्यस्य देहस्योप- करणेषु पुत्रादिष्वहंबुद्धितया विषयभोगावच्छेदकतयाऽन्तःकरणस्योपकरणे शरीरेऽहंबुद्धि- स्तथा भोग्यतया साक्षात्पुरुषस्योपकरणेऽन्तःकरणेऽहंबुद्धिरित्यर्थः, इमामेव चतुर्थीमविद्यामा- दाय प्रपञ्चोऽविद्याकार्य इत्युच्यते, अहं कर्त्तेत्याद्यभिमानस्यैव धर्माधर्मोत्पत्तिद्वाराऽखिलजग- द्धेतुत्वाद् इति, अत्र पञ्चशिखाचार्यसंवादमाह-तथेति । यथा मयोक्तं तथा, अत्र चतुर्थऽवि- द्याविषये पञ्चशिखेनाप्येतदुक्तमित्यर्थः, व्यक्ताव्यक्तं व्याकृताव्याकृतं स्थूलसूक्ष्मरूपं बुद्धिस- त्त्वमात्मतया गृहीत्वा तस्य सत्त्वस्य संपत्तिं सत्यसंकल्पादिकं शुभवासनाऽदृष्टादिकं चानु न- न्दत्यात्मसंपदं मन्वानस्तथा तस्य विपत्तिम् इच्छाविघातादिरूपादिकं चानु शोचत्यात्मविपत्ति- मन्वानः, एवंविधो यः स सर्वोऽविद्वानित्येतदुक्तमित्यन्वयः, ननु शुक्तिरजतादिभ्रमरूपाणामवि- द्यानां कथमत्र गणना न कृतेत्याशङ्क्याह—एषेति । पशोरिव चत्वारि पदानि पादा अंशा-

सन्तानस्य कर्माशयस्य च सविपाकस्येति, तस्याश्चामित्रागोष्पदवद्

भास्वती।

नित्यख्यातिः, बाह्येति । चेतने = पुत्रपश्वादिषु, अचेतने = धनादिषु, उपकरणेषु = भोग्यद्रव्येष्वित्यर्थः, सुखदुःखभोगाधिष्ठाने च शरीरे, तथा पुरुषीभूते चोपकरणे मनसि, इत्येतेष्वनात्मद्रव्येष्वात्मख्यातिः, अहं सुखी दुःखी इच्छाऽऽदिमानित्याद्यात्मख्यातिः, तथेति । पञ्चशिखाचार्येणोक्तम्—व्यक्तम् = चेतनं पुत्रादि, अव्यक्तम् = अचेतनं गृहादि, सत्त्वम् = द्रव्यम्, आत्मत्वेन = अहन्ताममताऽऽस्पदत्वेनेत्यर्थः, स सर्वः = तादृशः सर्वो जनः, अप्रतिबुद्धः = मूढः, तस्या इति । वासोऽस्यास्तीति वस्तु तस्य सतत्त्वम् = वस्तुत्वं भावत्वं नाभावत्वमित्यर्थः, विज्ञेयममित्रादिवद्, न मित्रमात्रमिति । न मित्रमित्यनिर्दिष्टं किञ्चिद् द्रव्यमात्रमपि नेत्यर्थः, किन्तु शत्रुरेवामित्रः, तथाऽगोष्पदं विस्तृतो देश एव न तद् गोष्पदस्याभावमात्रं नाप्यन्यद् वस्तु, एवमविद्या न विद्याया अभावमात्रं नापि

तत्त्ववैशारदी।

रपदार्थप्रधानो वा यथाऽराजपुरुष इति, अन्यपदार्थप्रधानो वा यथाऽमक्षिको देश इति, तत्र पूर्वपदार्थप्रधानत्वे विद्यायाः प्रसज्यप्रतिषेधो गम्येत; न चास्य क्लेशादिकारणत्वम्, उत्तरपदार्थप्रधानत्वे वा विद्यैव कस्य चिदभावेन विशिष्टा गम्येत; सा च क्लेशादिपरिपन्थिनी न तु तद्बीजम्, न हि प्रधानोपघाती प्रधानगुणो युक्तस्तदनुपघाताय गुणे त्वन्याय्यकल्पना, तस्माद्विद्यास्वरूपानुपघाताय नञोऽन्यथाकरणम् अध्याहारो वा निषेधस्येति, अन्यपदार्थप्राधान्ये त्वविद्यमानविद्या बुद्धिर्वक्तव्या, न चासौ विद्याया अभावमात्रेण क्लेशादिबीजं, विवेकख्यातिपूर्वकनिरोधसम्पन्नाया अपि तथात्वप्रसङ्गात्, तस्मात्सर्वथैवाविद्याया न क्लेशादिमूलतेत्यत आह—"तस्याश्च" इति । वस्तुनो भावो वस्तुसतत्त्वं वस्तुत्वमित्यर्थः, तदनेन न प्रसज्यप्रतिषेधो नापि विद्यैवाविद्या नापि तदभावविशिष्टा बुद्धिरपि तु विद्यावि(१)रुद्धं विपर्ययज्ञानमविद्येत्युक्तं, लोकाधीनावधारणो हि शब्दार्थसम्बन्धः लोके चोत्तरपदार्थप्रधानस्यापि नञ उत्तरपदाभिधेयोपमर्दकस्य तल्लक्षिततद्विरुद्धपरतया तत्र तत्रोपलब्धे-

पातञ्जलरहस्यम्।

"ब्राह्मणार्थो यथा नास्ति नित्यं ब्राह्मणकम्बल-

इत्युत्तरपदप्राधान्ये विद्यैव विलक्षणा क्लेशादिविरोधिनी, तृतीये बुद्धिरेव स्यात् तथा च विद्याऽपि क्लेशहेतुः स्यादिति भावः, बाह्यधर्मानात्मन्यध्यस्यतीति श्रीमच्छङ्करोक्तिमाश्रित्याह-तस्य संपदमनु नन्दतीत्यादि-इत्येपेत्यन्तेन, अविद्येति । नञः—

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः", ॥

इति षोढात्वमुपलक्षणीकृत्य सप्रतियोगिकाभावकल्पनाद्वरं भावकल्पनं लघ्विति विरोध्यर्थमाह—वस्तुसतत्त्वं, ज्ञेयमित्याह-एवमित्यादि-ज्ञानान्तरमविद्येत्यन्तेन, विपुलो देशो-

वार्त्तिकम्।

अस्या इति चतुष्पदा, एवंभूतैवैषा संसारस्य मूलं भवतीत्यर्थः, तथा च संसारहेतुतया नान्यासामत्र गणनमिति भावः, ननु विग्रहताऽविद्याशब्दस्य विद्याभिन्नत्वं विद्याशून्यत्वमल्पत्वमविद्यात्वं वाऽर्थः स्याद् न तु विपरीतख्यातिरित्याशङ्क्याह —तस्याश्चेति । तस्याश्चाविद्यायाः सतत्त्वं तत्त्वं वस्त्वेव विज्ञेयं न त्वभावोऽमित्रागोष्पदादिशब्दवदित्यर्थः, दृष्टान्त-

(१) विद्याविरुद्धमिति । एवं चात्र पर्युदासात्मको नञर्थः, यथोक्तमभियुक्तैः—

प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥

वस्तुसतत्त्वं विज्ञेयम्, यथा नामित्रो मित्राभावो न मित्रमात्रं किन्तु तद्विरुद्धः सपत्नः, तथाऽगोष्पदं न गोष्पदाभावो न गोष्पदमात्रं किन्तु देश एव ताभ्यामन्यद् वस्त्वन्तरम्, एवमविद्या न प्रमाणं न प्रमाणाभावः किन्तु विद्याविपरीतं ज्ञानान्तरमविद्येति ॥ ५ ॥

**दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥**

पुरुषो दृक्शक्तिर्बुद्धिर्दर्शनशक्तिरित्येतयोरेकस्वरूपापत्तिरिवास्मिता

भास्वती।

वस्त्वन्तरं किन्तु—अतद्रूपप्रतिष्ठं मिथ्याज्ञानरूपं वस्त्वेवाविद्या, सर्वमेव मिथ्याज्ञानं-विपर्ययः, तत्र ये तु विपर्ययाः संसृतिहेतवस्तेऽविद्येति वेदितव्यम्, न चाविद्याऽनिर्वचनीया किन्त्वतद्रूपप्रतिष्ठं मिथ्याज्ञानमित्यस्या निर्वचनम्, सा न प्रमाणं नापि स्मृतिः, अतद्रूपप्रतिष्ठत्वात्, तस्मात् सा तदन्यो ज्ञानभेद एव, सा च पूर्वोत्तरवृत्तिप्रवाहरूपत्वात् प्रमाणादिवद् बीजवृक्षन्यायेनानादिरिति ॥ ५ ॥

दृक्शक्तिः स्वबोधः स्वतो बोधो वा, दर्शनशक्तिस्तु दृशेः स्वाभासेन स्वाभासभूत इव बौद्धबोधः, ज्ञाताऽहमित्यत्र प्रत्यये विशुद्धो ज्ञाता दृक्, तत्र च प्रत्यये दृश्याभिमानरू-

तत्त्ववैशारदी।

रिहापि तद्विरुद्धे वृत्तिरिति भावः, दृष्टान्तं विभजते—"यथा नामित्र" इति। न मित्राभावो-नापि मित्रमात्रमित्यस्यानन्तरं वस्त्वन्तरं किन्तु तद्विरुद्धः सपत्न इति वक्तव्यम्, तथाऽगोष्पदमिति = न गोष्पदाभावो, न गोष्पदमात्रं किन्तु देश एव विपुलो गोष्पदविरुद्धः, ताभ्याम् – अभावगोष्पदाभ्यामन्य इति, अर्थाद्वस्त्वन्तरम्, दार्ष्टान्तिके योजयति—"एवम्" इति ॥५॥

अविद्यामुक्त्वा तस्याः कार्यमस्मितां रागादिवरिष्ठामाह—"दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" इति, दृक् च दर्शनं च ते एव शक्ती तयोरात्मानात्मनोः, अनात्मन्यात्मज्ञानल-

पातञ्जलरहस्यम्।

गोचर्माख्यः, तत्र भट्टोऽप्याह—

"भावान्तरमभावो हि कया चित्तु व्यपेक्षया"

इति ॥ ५ ॥

"दृग्दर्शनशक्त्योरेकात्मतेवास्मिता", द्वन्द्वात्परं यत् श्रूयते प्रत्येकमभिसम्बध्यत इति न्याय-

वार्त्तिकम्।

विभजते—यथा नामित्र इति। न मित्राभाव इति। अत्राभावशब्देन संसर्गान्योन्याभावौ ग्राह्यौ, न मित्रमात्रमिति। नास्ति मित्रं यस्मादिति व्युत्पत्त्या केवलमित्रमित्यर्थः, किं तु तद्विरुद्धो मित्रविरुद्ध इत्यर्थः, तथा च निरूढलक्षणेति भावः, किं तु देश एवेति। विपुलो देशविशेषोऽगोष्पद इति परिभाषितः, प्रमाणं = विद्या, ज्ञानान्तरमिति। एतेनाविद्याशब्दस्य ज्ञानविशेष रूढत्वावधारणादाधुनिकवेदान्तिनामन्यार्थत्वोपवर्णनं स्वातन्त्र्यमात्रमवधेयम्, काचित्कस्तु त्रिगुणात्मकप्रकृतावविद्याशब्दो गौणः, अविद्याधर्मकत्वाद् अविद्ययाऽऽस्मन्यारोपितत्वाद् जडत्वाच्च, विद्याऽविद्याशब्दयोर्ज्ञानाज्ञानवाचित्वेनात्मानात्मवाचित्वादिति, अस्मिंश्च दर्शने सांख्यानामिवाविवेको नाविद्याशब्दार्थः किं तु वैशेषिकादिवद् विशिष्टज्ञानमेवेति सूत्रभाष्याभ्यामवगन्तव्यम् ॥ ५ ॥

अविद्याऽनन्तरं तत्कार्यमस्मितां लक्षयति—

"दृग्दर्शनशक्त्योरेकात्मतेवास्मिता," दृग् = द्रष्टा, दृश्यतेऽनेनेति दर्शनं = करणं बुद्धिः, प्रकृतावौ फलोपधानं नास्तीति शक्तिग्रहणं तयोरेकात्मतेव स्वरूपतो धर्मतश्चात्यन्तमेकाकारो विप-

क्लेश उच्यते, भोक्तृभोग्यशक्त्योरत्यन्तविभक्तयोरत्यन्तासङ्कीर्णयोरविभा-

भास्वती ।

पेणाहंवाच्येन जडेन प्रत्ययेन सह ज्ञातुरेकत्वं प्रतीयते, स एकत्वप्रतिभास एवास्मिता, त-
थाऽत्यन्तविभक्ता = अत्यन्तविभिन्ना, अत्यन्तासङ्कीर्णा = अत्यन्ताविमिश्रा भोक्तृशक्तिर्भो-
ग्यशक्तिश्च दृग्दर्शनशक्ती इत्यर्थः; अभिन्ना = विमिश्रा इव प्रतीयते, तस्मिन् मिश्रीभावे
सत्यहं सुखी; अहं दुःखीत्यादयो विपर्यस्ताः प्रत्यया जायेरन्, ततो द्रष्टुर्भोग इति कल्पते,

तत्त्ववैशारदी ।

क्षणाविद्याऽऽपादिता या एकात्मतेव = एकार्थतेव, न तु परमार्थत एकात्मता । साऽस्मिता,
दृग्दर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोग्यतालक्षणं सम्बन्धं दर्शयितुं शक्तिग्रहणम्, सूत्रं
विवृणोति—"पुरुष" इति । नन्वनयोरभेदप्रतीतेरभेद एव कस्मान्न भवति कुतश्चैकत्वं क्लिश्ना-
ति पुरुषमित्यत आह—"भोक्तृभोग्यशक्त्योः" इति । भोक्तृशक्तिः = पुरुषः, भोग्यशक्तिः =
बुद्धिः, तयोरत्यन्तविभक्तयोः, कुतोऽत्यन्तविभक्तत्वमित्यत आह—"अत्यन्तासंकीर्णयोः"
इति । अपरिणामित्वादिधर्मकः पुरुषः, परिणामित्वादिधर्मिका बुद्धिरित्यसंकीर्णता, तदनेन
प्रतीयमानोऽप्यभेदो न पारमार्थिक इत्युक्तम्, अविभागेति । क्लेशत्वमुक्तम्, अन्वयं दर्शयि-

पातञ्जलरहस्यम् ।

येन दृकशक्तिः पुरुषः, दर्शनं दृश्यत इति कर्मणि ल्युट् दर्शनशक्तिर्बुद्धिस्तयोरेकात्मता जलदु-
ग्धयोः मिश्रणमिव चिदचिदात्मकोऽस्मिताऽहंकार इति क्लेश इति सूत्रार्थः, लाघवादेकस्यैव
क्लेशहेतुताऽस्त्वति तत्राह–अत्यन्तविविक्तयोरिति । तादात्म्यमुपलभ्यमानं भ्रमं द्रढयतीत्याह
अत्यन्तेति । फलितमाह–स्वरूप इति । प्रतिलम्भः = विवेकख्यातिः, ध्यायतीव लेलायतीवेति

वार्त्तिकम् ।

येयोऽस्मिताऽहंकार इत्यर्थः, एतदेव शब्दान्तरेणाह–पुरुष इत्यादिना । एकस्वरूपापत्तिरिवैका-
कारो यः क्लेशः सोऽस्मितोच्यत इत्यन्वयः, अविद्यातश्चास्मिताया अयं भेदो यद् बुद्ध्यादावात्म
या सामान्यतोऽहंबुद्धिरयं च भेदाभेदेनाप्युपपद्यतेऽत्यन्ताभेदाग्रहणात् सैवाविद्या न तु तदु-
त्तरकालीनः पुरुषे बुद्ध्यादिगुणदोषारोप ईश्वरोऽहमहं भोगीत्यादिरूपः, न वा दूरस्थवनस्पत्योरिव
तयोरत्यन्तमेकताभ्रमः, अस्मिता तु एतदुभयरूपिणीति, भ्रमत्वाविशेषेऽपि कार्यकारणरूपावा-
न्तरविशेषादविद्याऽस्मितयोर्भेदेनोपन्यास इति, अनयोश्च कार्यकारणभावबोधो लोकानुसारेणा-
वधार्यते, लोके ह्यादौ कलत्रपुत्रभृत्यादिष्वात्मभावो जायते पश्चादेव तु तेषां सुखदुःखादिक-
मात्मन्यभिमन्यते तथाऽऽदौ जलादिषूपाधिषु प्रतिबिम्बादिरूपेण चन्द्राद्यारोपो भवति
पश्चादेव तु चन्द्रादिषु तद्द्वारा कम्पमालिन्याद्यारोपो भवतीति, अयं च कार्यकारणभावः पूर्व-
सूत्रभाष्यस्थेन पञ्चशिखवाक्येनाप्युक्तः, तथा सांख्यकारिकायामपि पाठक्रमेणोक्तः,

"तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः" ॥ इति,

ननु बुद्धिपुरुषयोरन्यारोपणैवाहं दुःखीत्यादिव्यवहारोपपत्तावेकात्मताऽऽरोपे किं प्र-
माणं, परस्परारोपश्च व्यक्त्योरभेदग्रहं विनाऽपि रङ्गरजतयोरिव संभवत्येव, अग्निलोहयोर्दूरस्थव-
नस्पत्योश्च पुनः स्फुटैक्यप्रत्ययदर्शनादभेदारोपः सिध्यति, आत्मबुद्ध्योः परमसूक्ष्मतया नास्ति
स्फुटमैक्यप्रत्यक्षमिति ? तत्राह –भोक्तृभोग्यशक्त्योरिति । अत्यन्तविविक्तयोरित्यत्र हेतुरत्य-
न्तासंकीर्णयोरत्यन्तविप्रकृष्टधर्मकयोरिति, भोग्यभोक्तृत्वे एव स्फुटे वैधर्म्ये अन्यथा कर्मकर्तृ-
विरोधादिति भावः, एवंभूतयोर्भोक्तृभोग्ययोः पुरुषबुद्ध्योरविभागप्राप्ताविव सत्यामेकत्वप्र-
त्यये सत्येव भोगः संभवति भेदग्रहे तु तयोः कैवल्यमन्योन्यवियोग एव भवति परवैराग्यादि-
त्यतः कथं भोगः स्यादित्यर्थः, तथा च भोगान्यथाऽनुपपत्तिरेकात्मताऽऽरोपे प्रमाणमित्याशयः,
अत एव "सत्त्वपुरुषयोः प्रत्ययाविशेषो भोग" इति सूत्रकृद्वदिष्यति, योऽहं सुखी सोऽहं-

गप्राप्ताविव सत्यां भोगः कल्पते, स्वरूपप्रतिलम्भे तु तयोः कैवल्यमेव भवति कुतो भोग इति, तथा चोक्तं "बुद्धितः परं पुरुषमाकारशीलविद्याऽऽदिभिर्विभक्तमपश्यन् कुर्यात्तत्रात्मबुद्धिं मोहेन" इति ॥ ६ ॥

## सुखानुशयी रागः ॥ ७ ॥

सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्द्धस्तृष्णा लो-

भास्वती।

दृग्दर्शनशक्त्योः स्वरूपप्रतिलम्भे=स्वरूपोपलब्धौ सत्यामस्मीतिप्रत्ययतोऽखण्डैकरूपो निर्विकारः स्वाभासश्चेतिता पुरुषोऽभिमानेनारोपितात् सर्वोऽस्मिप्रत्ययरूपाद् दृश्यादत्यन्तविधर्मा इति विवेकख्यातौ जातायामित्यर्थः, तस्मिन् सत्यहं सुखीत्यादिभोगप्रत्यया न जायेरन् विवेकज्ञानविरोधादिति, यथा रागकाले द्वेषस्यानवकाशः, पञ्चशिखाचार्येणात्रेदमुक्तम्—बुद्धितः परं पुरुषं द्रष्टारम्, आकारः=शुद्धस्वरूपता, शीलम्=साक्षित्वरूपमाध्यस्थ्यस्वभावः, विद्या,=चिद्रूपता इत्यादिलक्षणैर्विभक्तम् बुद्धितोऽत्यन्तभिन्नमपश्यन्=न पश्यन्, अविवेकी जनो बुद्धिरेवात्मेति मतिं कुर्यादिति ॥ ६ ॥

सुखेति। सुखाभिज्ञस्य सुखाशयरूपः सुखसंस्कारः, सुखाशयस्यानुस्मरणपूर्विकाऽनुकू-

तत्त्ववैशारदी।

त्वा व्यतिरेकमाह—"स्वरूप" इति। प्रतिलम्भः=विवेकख्यातिः, परस्याप्येतत्संमतमित्याह—"तथा चोक्तं पञ्चशिखेन—बुद्धित" इति। आकारः=स्वरूपं सदा विशुद्धिः, शीलम्=औदासीन्यं, विद्या=चैतन्यं, बुद्धिरविशुद्धाऽनुदासीना जडा चेति, तत्रात्मबुद्धिरविद्या, मोहः=पूर्वाविद्याजनितः संस्कारः तमो वा, अविद्यायास्तामसत्वादिति ॥ ६ ॥

विवेकदर्शने रागादीनां विनिवृत्तेरविद्याऽऽपादिताऽस्मिता रागादीनां निदानमित्यस्मिताऽनन्तरं रागादीन् लक्षयति—"सुखानुशयी (१)रागः", सुखानभिज्ञस्य स्मृतेरभावात्सुखाभिज्ञ-

पातञ्जलरहस्यम्।

श्रुतिमाश्रित्याह-तथा चोक्तमिति भाष्यार्थः, अत एवोद्योतकरवार्तिकेऽतस्मिंस्तदिति प्रत्ययोऽध्यास इति ॥ ६ ॥

अस्मिताऽनन्तरं रागं लक्षयति—"सुखानुशयी रागः" अननुभूतसुखस्य तज्जातीये सुखे

वार्त्तिकम्।

तदनुभवितैत्येकाकारतैव च बुद्ध्यात्मप्रत्यययोरविशेषाद्यस्मिन्मर्त्येत्र च लोके भोगव्यवहार इति, जीवन्मुक्तस्य च गौण एव भोगः सुखादिसाक्षात्कारमात्ररूप इति वक्ष्यामः, इदं चोपलक्षणं सुखदुःखज्ञानाद्याश्रयोऽहम् एक एवेति प्रत्ययोऽप्येकात्मताऽऽरोपे प्रमाणं बोध्यम्, अस्मितायाः स्वरूपेऽविद्याजन्यत्वे च पञ्चशिखाचार्यवाक्यं प्रमाणयति-तथा चोक्तमिति। परमार्थतो बुद्धितः परं पृथक्कृतं पुरुषं बुद्धेराकारशीलविद्याऽऽदिभिर्विविक्तमसंस्पृष्टमपश्यन्नविवेकी जनस्तत्र बुद्ध्याकारादिष्वात्मबुद्धिमस्मितां कुर्यात्, शान्ताद्याकारोऽस्मि जाग्रदादिशीलोऽस्मि विद्याऽऽदिमानस्मात्येवंरूपां, मोहेन=पूर्वसूत्रोक्ताविद्ययेत्यर्थः ॥ ६ ॥

अस्मितां लक्षयित्वा तत्कार्यं रागं लक्षयति—

(१) सुखानुशयीति। यत्त्वत्र केनापि ग्रह्यादित्वाद् णिनिना विषयिविशयिशब्दवद् वृद्ध्यभावेनानुशयिशब्दसाधुतोक्ता; सा न साध्वी—

तत्रास्य पाठाभावाद्, दृष्टान्तितयोस्तु प्रातिस्विकतयोपसृष्टप्रकृतिकयोरुपादानेनानुपसृष्टान्योपसृष्टप्रकृतिकग्रहणे मानाभावात्तस्याकृतिगणत्वाभावाच्च, एवं स्थितौ निमित्तस्यैवानुत्पत्तौ नैमित्तिक्या वृद्ध्याः कैव प्रसक्तिः, तस्मान्मत्वर्थीयेनैव निर्वाहः।

भः स राग इति ॥ ७ ॥

**दुःखानुशयी द्वेषः ॥ ८ ॥**

दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा यः प्रतिघो मन्युर्जिघांसा क्रोधः स द्वेष इति ॥ ८ ॥

**स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ॥ ९ ॥**

भास्वती।

लप्रवृत्तिरूपा चित्तावस्था रागः, तत्पर्यायाः "गर्धस्तृष्णा लोभः" इति, गर्धः = अभिकाङ्क्षा, अनुभूयमाने विषयाभावे या प्रवृत्तिः सा तृष्णा, लोभः = लोलुपता, उदरपूरं भुक्त्वाऽपि लोभात् पुनर्भुङ्क्ते ॥ ७ ॥

दुःखेति। दुःखानुस्मरणाद् दुःखस्य दुःखसाधनस्य च प्रहाणाय या प्रवृत्तिः स द्वेषः, तत्पर्यायाः-"प्रतिघो जिघांसा क्रोधो मन्यु"रिति, प्रतिघातात् प्राप्तस्य दुःखस्य प्रतिहन्तुमिच्छा प्रतिघः, जिघांसा = हन्तुमिच्छा, मन्युः = बद्धमूला मानसो द्वेषः, क्रोधस्य पूर्वावस्था वा ॥ ८ ॥

तत्त्ववैशारदी।

स्येत्युक्तं, स्मर्यमाणे सुखे रागः सुखानुस्मृतिपूर्वकः, अनुभूयमाने तु सुखे नानुस्मृतिमपेक्षते, तत्साधने तु स्मर्यमाणे दृश्यमाने वा सुखानुस्मृतिपूर्व एव रागः, दृश्यमानमपि हि सुखसाधनं तज्जातीयस्य सुखहेतुतां स्मृत्वा तज्जातीयतया चास्य सुखहेतुमनुमायेच्छति, अनुशयिपदार्थमाह—"य" इति ॥ ७ ॥

"दुःखानुशयी द्वेषः", दुःखाभिज्ञस्येति पूर्ववद् व्याख्येयम्, अनुशयिपदार्थमाह—"यः प्रतिघ" इति। प्रतिहन्तीति प्रतिघः, एतदेव पर्यायैर्विवृणोति—"मन्युः" इति ॥ ८ ॥

"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः", अभिनिवेशपदार्थं व्याचष्टे—"सर्वस्य

पातञ्जलरहस्यम्।

तत्साधनजातीये वा रागपर्यायो न दृष्ट इत्याह-अनुशयीति। दृश्यमानेऽपि स्त्र्यादौ सुखहेतुतामनुमायैव प्रवर्त्तते नान्यथेत्याह-दृश्यमानस्यापीति ॥ ७ ॥

"दुःखानुशयी द्वेषः," सुगमम्, अत्रापि पर्यायतामाह-मन्युरित्यादि ॥ ८ ॥

"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः"-

वार्त्तिकम्।

"सुखानुशयी रागः," सुखानुशयी सुखतत्साधनमात्रविषयको यः क्लेशः स राग इत्यर्थः, मात्रपदादविद्याऽऽदिक्रियावृत्तिर्जीवन्मुक्तेच्छाव्यक्तौ राग एव न भवति संसाराहेतुत्वादिति न तस्यामतिव्याप्तिः, रागस्य कारणं वदन्निममेवार्थं भाष्यकारोऽप्याह-सुखाभिज्ञस्येति। सुखाभिज्ञस्य वा सुखानुस्मृतिपूर्वको वेत्यर्थः, तेन सुखसाक्षात्कारतः सुखस्मृतितश्च रागो भवतीति रागस्य कारणमुक्तम्, पर्यायै रागशब्दार्थमवधारयति -गर्ध इत्यादिना ॥ ७ ॥

रागप्रतिघातोत्थतया रागस्य पश्चाद् द्वेषं लक्षयति—

"दुःखानुशयी द्वेषः," सर्वं पूर्ववत्, प्रतिहन्त्युद्वेजयतीति प्रतिघः, अत्र जिघांसेति वचनाद् द्वेषोऽपीच्छाविशेष एवेत्याशयः ॥ ८ ॥

द्वेषमूलकतया द्वेषस्य पश्चादभिनिवेशं लक्षयति—

"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः", स्वरसेन संस्कारमात्रेण वहतीति स्वरसवाही अपि शब्दसमुच्चितमविद्वांसं तथा तत्त्वशब्दः परामृशति, रूढः प्रसिद्धः, तथा च यथाऽविद्वज्जनस्तथा विदुषोऽपि स्वरसवाहित्वहेतुना यः क्लेशोऽस्ति प्रसिद्धः सोऽभिनिवेश इत्यर्थः, अवि-

**सर्वस्य प्राणिन इयमात्माशीर्नित्या भवति मा न भूवं भूयासमिति, न चाननुभूतमरणधर्मकस्यैषा भवत्यात्माशीः, एतया च पूर्वजन्मानुभवः प्रतीयते; स चायमभिनिवेशः क्लेशः स्वरसवाही कृमेरपि जातमात्रस्य**

भास्वती।

सर्वस्येति। आत्माशीः = आत्मप्रार्थना, नित्या = अव्यभिचारिणीत्यर्थः, मा न भूवम्, किन्तु भूयासमित्याशीः सदा सर्वप्राणिषु दर्शनात् सा नित्येति, कुत इयमात्माशीर्जाता ? तदाह—नेति। इयमात्माशीरनुस्मृतिरूपा, स्मृतिस्तु संस्काराज्जायते, संस्कारः पुनरनुभवाज्जायते, मा न भूवं भूयासमित्याशिषोऽनुभूतिर्मरणकाल एव भवतीत्येतया पूर्वजन्मानुभवः पूर्वजन्मनि मरणानुभव इत्यर्थः, उपेयते, स्वरसवाहीति। स्वसंस्कारेण वहनशीलः स्वाभाविक इव जातमात्रस्याप्यभिनिवेशदर्शनात्, न स मरणाभयरूपोऽभिनिवेशः प्रत्यक्षादि-

तत्त्ववैशारदी।

प्राणिन" इति, इयमात्माशीः = आत्मनि प्रार्थना मा न भूवं = मा अभावी भूवं, भूयासं = जीव्यासमिति, न चाननुभूतमरणधर्मकस्य = अननुभूतो मरणधर्मो येन जन्तुना तस्यैवं भवत्यात्माशीः = अभिनिवेशो मरणभयं, प्रसङ्गतो जन्मान्तरं प्रत्याचक्षाणं नास्तिकं निराकरोति—"एतया" इति। प्रत्युदितस्य शरीरस्य म्रियमाणत्वात् पूर्वजन्मानुभवः प्रतीयते = निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियवेदनाभिरभिसम्बन्धो जन्म तस्यानुभवः = प्राप्तिः सा प्रतीयते, कथमित्यत आह–"स चायमभिनिवेश" इति। अर्द्धोक्तार्थेऽस्य क्लेशत्वमाह–"क्लेश" इति। अयमहितकर्मादिना जन्तून् क्लिश्नाति = दुःखाकरोति इति क्लेशः, वक्तुमुपक्रान्तं परिसमापयति—"स्वरसवाही" इति। स्वभावेन = वासनारूपेण वहनशीलो, न पुनरागन्तुकः,

पातञ्जलरहस्यम्।

"न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम्" ॥

इतिस्मृतेरनादिरात्मेत्याह—निकायविशिष्टाभिर्देवत्वादिजातिविशिष्टाभिरस्याभिसम्ब-

वार्त्तिकम्।

द्याऽऽदयस्तु विदुषि न सन्तीति न तेष्वतिव्याप्तिः, नन्वेवं कथं पूर्वोक्तमविद्याव्याप्तत्वमभिनिवेशस्य घटताम्, अविद्यानाशेऽप्यभिनिवेशसत्त्वादिति चेन्न,संस्कारहेतुताऽवच्छेदकरूपेणैव विपर्यव्याप्तत्वस्य विवक्षितत्वात् संस्कारहेतुत्वं मरणत्रासातिरिक्तभयत्वेनैव फलबलादिति, अयं च क्लेशो भयाख्य इति वक्ष्यति भाष्यकारः, अभिनिवेशस्यात्यन्तदुरन्तत्वप्रतिपादनाय विद्वदपरिहार्यत्वमुखेन लक्षणं कृतं भयसामान्यमेव तु अभिनिवेशो रागादिवदिह विवक्षित इति, तत्रादौ भाष्यकारोऽभिनिवेशस्य स्वरूपमाह—सर्वस्येति। सर्वस्य विदुषोऽविदुषश्चेयमात्मन्याशीः प्रार्थना = इच्छाविशेषः सदैव भवति,तामेवाह–मा न भूवम् इति। माऽहमभावी भूवं-भूयासं जीव्यासमित्येवंरूपेत्यर्थः,इयमाशीरेव त्रासो भयमित्युच्यत इति भावः, विदुषोऽप्यपरिहार्यत्वमुपपादयितुं यथोक्तमभिनिवेशस्य कारणमवधारयति—न चेति। अननुभूतो मरणस्य धर्मो दुःखातिशयो येन तस्येयमाशीर्न संभवति धनादिनाशजन्यदुःखज्ञस्यैव धनादिषु तादृशाशीर्दर्शनात्, धनं मे मा नश्यतु सदैव भूयादिति,अत एव तयाऽऽशिषा पूर्वजन्मनि मरणदुःखानुभवस्तत्कारणतया प्रतीयतेऽनुमीयत इत्यर्थः, एतेन जीवस्यानादित्वमपि प्रसङ्गात्साधितं, जन्म तु कूटस्थचिन्मात्रस्य तैस्तैर्देहेन्द्रियबुद्धिवेदनादिभिराद्यः संबन्ध इति, यत्तु न जायते न म्रियत इत्यादिवाक्यं तदात्मन उत्पत्तिविनाशावेतद्देहादेरिव प्रतिषेधतीति बोध्यम्, नन्विह जन्मन्येवानुमानादिना मरणदुःखानुभवेनाभिनिवेशाख्यं भयं भवतु किमर्थं पूर्वजन्मानुभवः कल्प्यत इत्याशङ्कामपाकरोति–स चायमिति। स चायमुक्ताशीरूपोऽभिनिवेशः

प्रत्यक्षानुमानागमैरसम्भावितो मरणत्रास उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति, यथा चायमत्यन्तमूढेषु दृश्यते क्लेशस्तथा

भास्वती।

प्रमाणैः सम्भावितः = निष्पादितः प्रमित इत्यर्थः, तस्मात् स स्मृतिरेव भवितुमर्हतीति, उच्छेददृष्ट्यात्मक उच्छेदो मे भविष्यतीति तन्मा भूदितिज्ञानात्मको मरणत्रासः, एतदुक्तं भवति–मरणत्रासो न प्रमाणप्रमितप्रत्ययः, ततः सा स्मृतिः, स्मृतिस्तु पूर्वानुभवाज्जायते, तस्माद् मरणत्रासः पूर्वानुभूत इत्येवं पूर्वजन्मानुमानम्, विदुष इति। विदुष आगमानुमानज्ञानवतो न तु सम्प्रज्ञानवतः, आगमानुमानाभ्यां येन पूर्वापरान्तो विज्ञातस्तादृशस्य विदुषः, अनादिः पुरुषः "पुराणः स्वयंभू पुरुष" इति पूर्वान्तविज्ञानम्,

"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि"

तथा–देहान्तरप्राप्तिरित्येवं पुरुषस्यामरत्वविज्ञानमेवापरान्तविज्ञानम्, यैः श्रुतानुमानाभ्यामेतन्निश्चितं तादृशानां विदुषामपि तथारूढः = तथाप्रसिद्धो भयरूपः क्लेशोऽभिनि-

तत्त्ववैशारदी।

कृमेरपि जातमात्रस्य = दुःखबहुलस्य निकृष्टतमचैतन्यस्य, अनागन्तुकत्वे हेतुमाह— "प्रत्यक्ष" इति 'प्रत्यक्षानुमानागमैः प्रत्युदिते जन्मन्यसम्भावितः = असम्पादितः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति, अयमभिसन्धिः–जातमात्र एव हि बालको मारकवस्तुदर्शनाद् वेपमानः कम्पविशेषादनुमितमरणप्रत्ययासक्तिस्ततो बिभ्यदुपलभ्यते, दुःखाद् दुःखहेतोश्च भयं दृष्टं, न चास्मिन् जन्मन्यनेन मरणमनुभूतमनुमितं श्रुतं वा प्रागवास्य दुःखत्वं तद्धेतुत्वं वाऽवगम्यते, तस्मात्तस्य तथाभूतस्य स्मृतिः परिशिष्यते, न चेयं संस्कारादृते, न चायं संस्कारोऽनुभवं विना, न चास्मिन् जन्मन्यनुभव इति प्राग्भवीयः परिशिष्यत इत्यासीत्पूर्वजन्मसम्बन्ध इति, तथापदं यथापदमाकाङ्क्षत इत्यर्थप्राप्तं यथापदे सति यादृशो वाक्यार्थो भवति तादृशं दर्शयति—"यथा चायम्" इति। अत्यन्तमूढेषु = मन्दतमचैतन्येषु, विद्वत्तां दर्शयति—"विज्ञातपूर्वापरान्तस्य" इति, अन्तः = कोटिः, पुरुषस्य हि पूर्वा कोटिः संसारः,

पातञ्जलरहस्यम्:

न्धः पूर्वा कोटिः अनादित्वात्संसारस्य, उत्तरा कोटिः पुनर्बन्धाभावेन सान्ता मुक्तस्येति भावः, "पश्वादिभिश्चाविशेषादि"ति शाङ्करं भाष्यमादायाह–समाना हीति। संप्रज्ञातवान्

वार्त्तिकम्।

स्वरसवाही स्वाभाविकोऽत्यन्तमूढस्य कृमेरपि मरणदुःखप्रत्यक्षादिभिरसंभाव्यो मरणत्रास-उच्छेददृष्ट्यात्मक उच्छेददृष्टिकार्यः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति पूर्वजन्मनि मरणदुःखानुभवमनुमापयति यदनुभवोत्थेन मरणत्रासेन जनितया वासनयेह जन्ममरणत्रासो भवतीति शेषः, मरणभयस्य द्वेषरूपस्यापि संस्कारजनकत्वं निरोधस्येवागत्या कल्प्यत इति, अभिनिवेशं तत्कारणं च व्याख्याय सूत्रवाक्यार्थं व्याचष्टे—यथा चेत्यादिना रूढ इत्यन्तेन, विज्ञातेति। विज्ञातः संप्रज्ञातयोगेन साक्षात्कृतः प्रपञ्चस्य पूर्वान्तोऽपरान्तश्चाद्यन्तौ येन स तथा तस्य तत्त्वज्ञस्येत्यर्थः, कुशलाकुशलयोरिति वक्ष्यमाणत्वाद् इति, एतेनाद्यन्तयोरवशिष्यमाणमेव वस्तु प्रपञ्चस्य तत्त्वं तच्च परं ब्रह्म विकारस्तु मध्ये वाचाऽऽरम्भणमात्रमित्यस्माकमपि सिद्धान्त इति सिद्धम्, तथा चोक्तं मोक्षधर्मेऽपि—

"अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे।
अन्तप्राप्तिसुखामाहुर्दुःखमन्तरमेतयोः" ॥ इति,

सुखामाहुरित्यार्षम्, सुखायाहुरिति पाठस्तु साधुः, ननु तत्त्वज्ञस्याविद्याऽस्मिताऽऽ-

**विदुषोऽपि(१) = विज्ञातपूर्वापरान्तस्य रूढः, कस्मात् समाना हि तयोः कुशलाकुशलयोर्मरणदुःखानुभवादियं वासनेति ॥ ९ ॥**

**ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥**

भास्वती।

वेशः, श्रुतानुमानप्रज्ञाभ्यामेव न क्षीयन्ते क्लेशास्तस्मात् समाना क्लेशवासना तादृशविदुषामविदुषाञ्चेति, सम्यग्ज्ञानवतां क्षीणक्लेशानां योगिनां क्षीणा भवेदभिनिवेशक्लेशवासनेति,

आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति—

श्रुतेः ॥ ९ ॥

प्रतिप्रसवः = प्रसवाद् विरुद्धः प्रलयः पुनरुत्पत्तिहीनलय इत्यर्थः, सूक्ष्मीभूता विवेकख्यातिमच्चित्तस्योपादानरूपा इत्यर्थः, क्लेशा एव प्रतिप्रसवेन हेयास्त्याज्या इति सूत्रार्थः,

तत्त्ववैशारदी।

उत्तरा कैवल्यं, सैव विज्ञाता श्रुतानुमानाभ्यां येन स तथोक्तः, सोऽयं मरणत्रास आ कृमेरा च विदुषो रूढः = प्रसिद्ध इति। नन्वविदुषो भवतु मरणत्रासो, विदुषस्तु न संभवति विषयोन्मूलितत्वाद्, अनुन्मूलने वाऽस्य मरणत्रासस्य स्यादत्यन्तसत्त्वमित्याशयवान् पृच्छति—"कस्माद्" इति। उत्तरं—"समाना हि" इति। न संप्रज्ञातवान् (२)विद्वान् अपि तु श्रुतानुमानविवेकीति भावः ॥ ९ ॥

तदेवं क्लेशा लक्षितास्तेषां च हेयानां प्रसुप्ततनुविच्छिन्नोदाररूपतया चतस्रोऽवस्था दर्शिताः, कस्मात्पुनः पञ्चमी क्लेशावस्था दग्धबीजभावतया सूक्ष्मा न सूत्रकारेण कथितेत्यत आह—"ते प्रतिप्रसवहेयाः सूक्ष्माः," यत्किल पुरुषप्रयत्नगोचरस्तदुपदिश्यते, न च सूक्ष्मावस्था

पातञ्जलरहस्यम्।

कृतविवेकसाक्षात्कारः, इयं = वासना: मा न भूवमित्यादिका ॥ ९ ॥

प्रतिप्रसवेन = कारणभावापत्त्या हेया इति सूत्रार्थः, न तस्य प्राणा उत्क्रामन्ति इहैव

वार्त्तिकम्।

प्रभावात्कथं यथोक्ताशीरित्याशयेनाशङ्कते-कस्मादिति। संस्कारमात्रजन्यत्वेन परिहरति—समाना हीति। इयं वासना एतदाशीर्हेतुवासनेत्यर्थः, इयं च बलवत्तरा वासना चित्तेन सह नश्यत्येव ज्ञानेन न दह्यत इत्येतद् अविद्याऽऽदिसंस्कारेभ्यो विशेषः,ननु कुशलस्यात्मनित्यत्वनिश्चयात्कथं मा न भूवं भूयासमितीच्छा स्यात् सिद्धत्वज्ञानस्य प्रतिबन्धकत्वादिति चेन्न,विशेषदर्शने सत्यपीदृगिच्छादृष्ट्या फलबलेन तादृशसंस्कारस्योत्तेजकत्वात्, एतेन यदाधुनिकवेदान्तिब्रुवा आहुरात्मा सुखस्वरूपो निरुपधियथोक्तेच्छाविषयत्वाद् बाह्यसुखवदित्यनुमानेनात्मनः सुखरूपता सिद्ध्यतीति, तदप्यपास्तम्, पूर्वपूर्वजन्मसु यद्रागो जातस्तेन तदा जातायास्तद्वासनातो निरुपधीच्छासंभवात्, अन्यथाऽप्यात्मत्वेनैव प्रियत्वकल्पनौचित्याच्चेति ॥ ९ ॥

क्रियायोगः क्लेशतनूकरणार्थ इत्युक्तं तत्र क्लेशतनूकरणस्य फलं वक्तुमाह—

"ते प्रतिप्रसवहेयाः सूक्ष्माः", प्रसवाद्विरुद्धः प्रतिप्रसवः प्रलयः, तथा च प्रतिप्रसवेन चित्त-

(१) विदुषोऽपीति। यत्त्वत्र तत्त्वज्ञस्यापीतिभिक्षूक्तौ केनाप्याक्षिप्तं तत्त्वज्ञेऽभिनिवेशोदययोग्यताऽभाववादिति तन्निर्दलितं, तत्त्वज्ञानेनाप्रमाणितेऽपि मिथ्याज्ञाने तस्य दृढभूमित्वालाभावध्येतदीयसंस्काराणांस्थित्याऽभिनिवेशात्यन्ताभिभवस्य दौर्लभ्याद्।

(२) संप्रज्ञातवानिति। अत्र दृढभूमिकसंप्रज्ञाते मिश्राणां तात्पर्य्यं योग्यतावशाद्बोध्यं, ततश्च भिक्षूक्तौ तदुल्लेख उदितमात्रतदभिप्रायकः, एतेनास्योक्तौ केनाप्युक्ते हेयतामन्दते स्वोक्तावेव पर्यवसिते।

ते पञ्च क्लेशा दग्धबीजकल्पा योगिनश्चरिताधिकारे चेतसि प्रलीने सह तेनैवास्तं गच्छन्ति ॥ १० ॥

स्थितानान्तु बीजभावोपगतानां—

**ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥**

क्लेशानां या वृत्तयः स्थूलास्ताः क्रियायोगेन तनूकृताः सत्यः प्रसङ्ख्या-

भास्वती ।

त इति । ज्ञानेच्छाऽऽदिरूपं चित्तकार्यं परिसमाप्यते विवेकेन, अतस्तेन समाप्ताधिकारस्य चित्तस्य क्लेशा दग्धबीजकल्पा भवन्ति, ततः पुनः परेण वैराग्येण विवेकस्यापि निरोधः कार्यः तदाऽत्यन्तवृत्तिनिरोधात् क्लेशानामत्यन्तप्रहाणं भवतीत्यर्थः ॥ १० ॥

स्थूला इति । जात्यायुर्भोगमूला क्लेशावस्था स्थूला, निर्धूयते = अपनीयते, स्वल्पे ति । स्वल्पाः प्रतिपक्षा नाशोपाया यासां ता अवस्थाः, सूक्ष्माः क्लेशवृत्तयो महा-

तत्त्ववैशारदी ।

हानप्रयत्नगोचरः, किन्तु प्रतिप्रसवेन = कार्य्यस्य चित्तस्यास्मितालक्षणकारणभावापत्त्या हातव्येति व्याचष्टे- "ते" इति । सुगमम् ॥ १० ॥

अथ क्रियायोगतनूकृतानां क्लेशानां किंविषयात् पुरुषप्रयत्नाद् हानमित्यत आह— "स्थितानान्तु बीजभावोपगतानाम्" इति, अनेन बन्ध्येभ्यो व्यवच्छिनत्ति, सूत्रं पठति— "ध्यानहेयास्तद्वृत्तयः" इति, व्याचष्टे—"क्लेशानाम्" इति । क्रियायोगतनूकृता अपि हि

पातञ्जलरहस्यम् ।

समवलीयन्त इति श्रुतिमाश्रित्याह—चरिताधिकारे चेतसीति भाष्यं, न हि नाऽऽकाशहनने नियुज्यते किन्तु घटादावित्याह—न चेति । अस्मितालक्षणं यत् कारणं तदाकारताऽऽपत्त्यैव, मूलोच्छेदे पुरुषस्य व्यापाराद् या हि कपालस्थानीयाः नाविद्यायामिति भावः ॥ १० ॥

"ध्यानेनानीश्वरान् गुणानि"ति श्रुतिमाश्रित्याह—"ध्यानहेयास्तद्वृत्तय", इति, ननूक्तं प्र-

वार्त्तिकम् ।

स्य प्रलयेन सूक्ष्मा दग्धबीजभावाः क्लेशा हेया इत्यर्थः, तदेव भाष्यकार आह—ते पञ्चेति । पञ्चमध्येऽभिनिवेशो मरणातिरिक्त एव योगिनो दग्धबीजकल्पो भवतीत्युक्तमेव, ननु तनूकरणं दग्धबीजभावः प्रलयश्चेत्येव क्रमः, अतो दग्धबीजभावप्रतिपादकमुत्तरसूत्रमेवादावुचितमिति चेन्न, मुख्यफलतया प्रलयस्यात्रादौ निर्वचनात् तत्र द्वाराकाङ्क्षया च दग्धबीजभावस्य पश्चाद्वक्ष्यमाणत्वादिति, ननु क्लेशतद्वासनयोर्वक्ष्यमाणप्रसंख्यानेनैव नाशोऽस्तु किमर्थं तत्र चित्तनाशोऽपेक्ष्यत इति चेन्न, ज्ञानदग्धस्तथा क्लेशैरित्यादिशास्त्रप्रामाण्येन ज्ञानाग्निदाहस्यैव सिद्धेर्न तु तन्नाशस्य, युक्तिश्चात्र प्रागेवोक्ता; कारणेषु कार्यशक्तेर्यावद्द्रव्यभावित्वदर्शनमिति, तथा च योगाग्निना व्युत्थानसंस्कारदाहवद् ज्ञानाग्निनाऽपि क्लेशसंस्कारयोर्दाह एव भवति न तु तन्नाशः, नन्वेवमपि क्लेशसंस्कारदाहेन च संसारात्यन्तोच्छेदसंभवे संस्कारसहितचित्तनाशः किमिति मोक्षायापेक्ष्यत इति चेन्नैवम्—योगिसंकल्पेन दृष्टबीजादिवद् दग्धबीजशक्तिकादपि कदाचित्पुनरङ्कुरोत्पत्त्यापत्तेरिति ॥ १० ॥

तनूकरणस्य द्वारं दग्धबीजभावं प्रतिपादयन् सूत्रं पूरयित्वा पठति—स्थितानामिति । तद्वृत्तय इति । समासान्तर्गततच्छब्दस्यार्थैः क्लेशैः सहान्वयः, स्थितानामित्यस्य विवरणं बीजभावोपगतानामिति, एतच्च सूत्रेण सह व्याख्यास्यामः,

"ध्यानहेयास्तद्वृत्तयः", क्लेशानामिति । स्थितानां बीजभावोपगतानां क्लेशानां या वृत्तयः स्थूला अभिव्यक्तावस्थाः ताः प्रथमं क्रियायोगेनाल्पीकृताः सत्यः प्रसंख्यानेन समाधिजप्र-

**नेन ध्यानेन हातव्या यावत्सूक्ष्मीकृता यावद् दग्धबीजकल्पा इति; यथा च वस्त्राणां स्थूलो मलः पूर्वं निर्धूयते पश्चात्सूक्ष्मो यत्नेनोपायेन चाऽपनीयते, तथा स्वल्पप्रतिपक्षाः स्थूला वृत्तयः क्लेशानां, सूक्ष्मास्तु महाप्रतिपक्षा इति॥ ११॥**

भास्वती।

प्रतिपक्षाश्चित्तप्रलयहेयत्वात्, चित्तप्रलयस्तु परवैराग्यमन्तरेण न भवति, परवैराग्यञ्च निर्गुणपुरुषख्यातेरेवोत्पद्यते, तच्च सम्यग् दर्शनं सुदुर्लभम्, उक्तञ्च—

"यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" इति,

केचिल्लपन्ति शून्यमात्मेति, यथोक्तं—

"शून्यमाध्यात्मिकं पश्येत् पश्येच्छून्यं बहिर्गतम्।
न विद्यते सोऽपि कश्चिद् यो भावयति शून्यताम्" इति,

केचिच्च चिदानन्दमय आत्मेति, केचिच्चिन्मयः सर्वज्ञः सर्वेश्वर आत्मेति, न ते सम्यग्दर्शिनः शून्यत्वानन्दमयत्वसर्वज्ञत्वादयो दृश्यधर्माः, न ते द्रष्टुर्निर्गुणस्यौपनिषदपुरुषस्य लक्षणानि, सुदुर्लभेन सम्यग्दर्शनेनासम्प्रज्ञातेन च योगेन सूक्ष्मक्लेशानां प्रहाणं ततस्तु महाप्रतिपक्षा इति ॥ ११ ॥

तत्त्ववैशारदी।

प्रतिप्रसवहेतुभावेन कार्य्यतः स्वरूपतश्च शक्या उच्छेत्तुमिति स्थूला उक्ताः, पुरुषप्रयत्नस्य प्रसङ्ख्यानगोचरस्यावधिमाह—"यावद्" इति। सूक्ष्मीकृता इति। विवृणोति—"दग्ध"—इति। अत्रैव दृष्टान्तमाह—"यथा च वस्त्राणाम्" इति। यत्नेन=तत्क्षालनादिना, उपायेन=क्षारसंयोगादिना, स्थूलसूक्ष्मतामात्रतया दृष्टान्तदार्ष्टान्तिकयोः साम्यं न पुनः प्रयत्नापनेयतया, प्रतिप्रसवहेयेषु तदसम्भवात्, स्वल्पः प्रतिपक्षः=उच्छेदहेतुर्यासां तास्तथोक्ताः, महान् प्रतिपक्ष=उच्छेदहेतुर्यासां तास्तथोक्ताः, प्रतिप्रसवस्य चाधस्तात् क्लेशोच्छेदसाधकं स्यात्प्रसंख्यानमित्यवरतया स्वल्पत्वमुक्तम्॥ ११ ॥

पातञ्जलरहस्यम्।

तिप्रसवहेयत्वं तत्कुतो ध्यानहेयत्वादिति? सत्यं-यथा वस्त्रादेर्द्विविधो मलः स्वल्पास्वल्पप्रयत्नाभ्यां नाश्यते तथाऽत्र ध्याननाश्याः स्थूलमलस्थानीया वृत्तयः, सूक्ष्मास्तु प्रतिप्रसवनाश्याः

"विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते"॥

तथा स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति श्रुतिस्मृतिभ्यां ज्ञाननाश्यत्वं सूक्ष्माणां दग्धबीजकल्पनामाह—यावद्दग्धेति॥ ११॥

वार्त्तिकम्।

ज्ञानरूपेण ध्यानेन ध्यानकार्य्येण हातव्याः प्रतिबद्धोत्पत्तिकाः कर्त्तव्याः यावत्सूक्ष्मीकृताः, अस्यैव विवरणं यावद्दग्धबीजकल्पा भवन्तीत्यर्थः, ततश्च प्रतिप्रसवहेया इति पूर्वसूत्रेणैवोक्तमिति, तनूकरणादिषु त्रिषु सुकरत्वदुष्करत्वरूपं विशेषं दृष्टान्तेनाह—यथा वस्त्राणामिति। निर्धूयते वाताहत्या निराक्रियते, यत्नेन पाषाणे प्रहारादिना, उपायेन क्षारसंयोगादिना, अत्रेदं दृष्टान्ते साधनत्रयं दार्ष्टान्तिकेऽपि साधनत्रित्वाभिप्रायेणोक्तम्, स्वल्पेति। स्वल्पः क्रियायोगः प्रतिपक्षस्तनुताहेतुर्यासां स्थूलानामतनूकृतानां तास्तथा महानतिदुष्करः प्रसंख्यानाभिरसंप्रज्ञातयोगसाध्यचित्तनाशश्च प्रतिपक्षौ दाहकनाशकौ यासामिति महाप्रतिपक्षा—इत्यर्थः, अनेन सूत्रेण जीवन्मुक्तानां वृत्तिरूपोऽप्यविद्यालेशस्तिष्ठतीत्यभ्युपगम आधुनिकानां वेदान्तिब्रुवाणामपसिद्धान्त इति निर्णेयम्, तथा सति स्थूलानामपि प्रतिप्रसवहेयत्वापत्तेरिति॥ ११॥

## क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥

तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रोधप्रसवः, स दृष्टजन्मवेदनी-

भास्वती ।

जात्यायुर्भोगहेतवः संस्कारा आशयाः, कर्म = चित्तेन्द्रियप्राणानां व्यापारः, तदनुभवजाता ये संस्काराः पुनरभिव्यक्ताः सन्तः स्वानुगुणाश्चेष्टा जनयेरंस्तथा च चेष्टासहभावीनि शरीरेन्द्रियसुखदुःखादीन्याविर्भावयेयुः स एव कर्माशयः, कर्माशयः पुण्यापुण्यरूपः, पुण्यापुण्ये कामक्रोधादिभ्यो जायेते, कामाद् यज्ञादिकं परपीडाऽऽदिकञ्च कुर्वन्ति, तथा लोभात् क्रोधाद् मोहाच्चापि, अविद्यायामन्तरे बहुधा वर्त्तमानाः स्वयंधीराः पण्डितंमन्यमाना ये कर्मणस्तेषां मोहमूलो धर्मोऽधर्मश्चेति, स इति । कर्माशयो-

तत्त्ववैशारदी ।

स्यादेतद्—जात्यायुर्भोगहेतवः क्लिश्नन्तः क्लेशाः, कर्माशयश्च तथा, न त्वविद्याऽऽदयः, तत्कथमविद्याऽऽदयः क्लेशा इत्यत आह—"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः", क्लेशो मूलं यस्योत्पादे च कार्य्यकरणे च स तथोक्तः, एतदुक्तं भवति—अविद्याऽऽदिमूलः कर्माशयो जात्यायुर्भोगहेतुरित्यविद्याऽऽदयोऽपि तद्धेतवोऽतः क्लेशा इति, व्याचष्टे—"तत्र"इति । आशेरते सांसारिकाः पुरुषा अस्मिन्नित्याशयः, कर्मणामाशयौ = धर्माधर्मौ, कामात्काम्यकर्मप्रवृत्तौ स्वर्गादिहेतुर्धर्मो भवति, एवं लोभात्परद्रव्यापहारादावधर्मः, एवं मोहादधर्मे हिंसाऽऽदौ धर्मबुद्धेः प्रवर्त्तमानस्याधर्म एव, न त्वस्ति मोहजो धर्मः, अस्ति क्रोधजो धर्मः, तद्यथा—ध्रुवस्य जनकावमानजन्मनः क्रोधात् तज्जिगीषयाऽऽहितेन कर्माशयेन पुण्येनान्तरिक्षलोकवासिनामुपरि स्थानम्, अधर्मस्तु क्रोधजो ब्रह्मवधादिजन्मा प्रसिद्ध एव भूतानाम्, तस्य द्वैविध्यमाह—"स दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च"इति । दृष्टजन्मवेदनीयमाह—

पातञ्जलरहस्यम् ।

"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्ये तु संयन्ति यथाकर्म यथाश्रुतम्" ॥ इति

श्रुतेर्जात्यायुर्भोगाः कर्मजाः कृतमत्र क्लेशैरित्याशङ्क्य सूत्रेण समाधत्ते—"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः" क्लेशा रागद्वेषमोहलोभक्रोधास्ते मूलमस्य कृतकारितानुमोदितरूपस्य कर्माशयस्य स चापि दृष्टादृष्टजन्मवेदनीय इति सूत्रार्थः, तत्र—

"अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते" इति

श्रुतिमाश्रित्याह—तत्र तीव्रेति । संवेगो विषयानभिष्वङ्गरूपं वैराग्यं, मन्त्राद्यैस्त्रिभिर्जनित ईश्वरादिचतुर्णामाराधनाद्वा परिनिष्पन्नोऽपि जनितपुण्याशयः, एवं पापञ्च परपीडनादि-

वार्त्तिकम् ।

इदानीं क्लेशाः किमर्थं हेया इत्याकाङ्क्षायां क्लेशानां परम्परया दुःखनिदानत्वं सूत्रत्रयेण वक्तव्यं तत्रादौ क्लेशानां दुःखोत्पादने साक्षाद् द्वारमाह—

"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः", दृष्टादृष्टजन्मनी वर्त्तमानभविष्यती, वेदनं = भोगः, कर्माशयो धर्माधर्मौ, तौ च दृष्टजन्मभोग्यौ वाऽदृष्टजन्मभोग्यौ वोभयथैव क्लेशमूलकौ, क्लेशे सत्येव भवत इत्यर्थः,

"यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते"—

इत्यादिवाक्यशतेभ्य इति भावः, यथा वाऽधिकारिविशेषतया क्लेशानां धर्मादिजनकत्वं शौचादिवद्, एवं तज्जनककर्मादिषु रागादिरूपैः प्रवर्त्तनादपीत्यपि बोध्यम्, क्लेशमूलकत्वं—विवृणोति—तत्रेति । तत्र चित्ते लोभादिरूपदोषत्रयसत्त्व एव पुण्यपापरूपौ कर्माशयौ भवत-

**यश्चादृष्टजन्मवेदनीयश्च, तत्र तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति, तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः स चापि पापकर्माशयः सद्य एव परिपच्यते, यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः, तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्य्यक्त्वेन परिणत इति, तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्माशयः,**

भास्वती।

दृष्टादृष्टजन्मवेदनीयः, यज्जन्मन्युपचितः कर्माशयस्तत्रैव जन्मनि स चेद् विपक्को भवेत् तदा दृष्टजन्मवेदनीयः, अन्यस्मिञ्जन्मनि वेदनीयोऽदृष्टजन्मवेदनीयः, एतयोरुदाहरणे आह-तत्रेति। सुगमम्, सद्य एवाचिरादेवेत्यर्थः, नन्दीश्वरो नहुषश्चात्र यथाक्रमं दृष्टान्तः, तत्रेति। नारकाणामुपभोगदेहानां निरयदुःखभाजां सत्त्वानां नास्ति दृष्टजन्मवेदनीयः कर्माशयो यतस्ते प्राग्भवीयकर्मणः फलमेव भुञ्जते, मनःप्रधानत्वात् तन्निकायस्य, यथा-स्वप्ने स्मृतिरूपे नास्ति कर्माशयप्रचयस्तथा प्रेतानां सत्त्वानामिति, ननु कस्मादुक्तं-नारकाणामिति? सन्ति तु दिव्यदेहा अपि प्रेताः सत्त्वास्तेऽप्युपभोगदेहाः कस्मात्ते नोक्ता इति? उच्यते-दिव्यसत्त्वेषु य उपभोगप्रधानदेहास्तेषामपि स्वल्पो दृष्टजन्मवेदनीयः कर्माशयः, तत्र ये ध्यानबलसम्पन्ना वशिनोऽस्ति तेषां दृष्टजन्मवेदनीयः कर्माशयः, यतस्ते दिव्यदेहेनैव निष्पन्नकृत्याः परं पदं विशन्ति, यथोक्तम्,

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ॥ इति,

तत्त्ववैशारदी।

"तीव्रसंवेगेन"इति। यथासंख्येन दृष्टान्तावाह-"यथा नन्दीश्वर" इति। तत्र नारकाणामिति। येन कर्माशयेन कुम्भीपाकादयो नरकभेदाः प्राप्यन्ते तत्कारिणो नारकाः तेषां नास्ति दृष्ट-

पातञ्जलरहस्यम्।

त्याह-तथा तीव्रेति। यथासङ्ख्यमुदाहरणमाह-नन्दीश्वरः = शिलादपुत्रः, नहुषश्च राजा; अगस्त्यशापात् प्राप्ताजगरत्वः, नारकाणां तिरश्चां च यत्नाद्यभावेनानधिकारितया तथा ज्ञानिनां-नास्तीत्याह-क्षीणेति। हिंसा धर्मजनिका हिंसात्वादग्निषोमीयपशुहिंसावदिति हिंसाऽऽदिर्मोहादिति, धर्मस्तु क्रोधजोऽपीत्याह-अस्ति क्रोधज इति। आहितेन = क्रोधजेन, दृष्टम-

वार्त्तिकम्।

इत्यर्थः, रागद्वेषमोहाख्यानां च दोषाणामदृष्टनियामकत्वं कौर्मे दर्शितम्—

"रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः।
कार्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमिति श्रुतिः॥
तद्वशादेव सर्वेषां सर्वदेहसमुद्भव" इति।

दृष्टजन्मवेदनीयमुदाहरति—तत्र तीव्रेति। सद्य इति। इह जन्मनीत्यर्थः, परिपच्यते कालेन परमेश्वरेण वा फलोपहितीक्रियते, दृष्टजन्मवेदनीयं पुण्यमुदाहृत्य दृष्टजन्मवेदनीयं पापमुदाहरति—तथेति। य इत्यनुषज्यते, यथाक्रममुक्तयोः पुण्यपापयोर्दृष्टान्तावाह—यथा नन्दीश्वर इति। अदृष्टजन्मवेदनीयं च कर्म प्रसिद्धत्वान्नोदाहृतम्, प्रसङ्गतो व्यतिरेकावप्युदाहरति-तत्र नारकाणामिति। नारकिपुरुषाणां धर्माद्यनुत्पत्तेः, ननु स्वर्गिणामपि कर्म नोत्पद्यत इति

**क्षीणक्लेशानामपि नास्त्यदृष्टजन्मवेदनीयः कर्माशय इति ॥ १२ ॥**

## सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

भास्वती ।

पुनर्जन्माभावात् क्षीणक्लेशानां नास्त्यदृष्टजन्मवेदनीयः कर्माशयः, तस्मिन्नेव जन्मनि तेषां संस्कारक्षयः स्यादिति ॥ १२ ॥

जातिरायुर्भोग इति त्रिविधो विपाकः = फलं कर्माशयस्य, जातिर्देहः, आयुर्देहस्थितिकालः, भोगः सुखं दुःखं मोहश्च, देहमाश्रित्यायुर्भोगौ सम्भवतः, अभिमानं बिना न देहधारणं तथा रागादि बिना सुखादि न सम्भवेदतोऽस्मितारागादिक्लेशमूल एव कर्माशयो जात्यादेः कारणं ; तस्मादुक्तं—सत्स्विति । सुगमम् , तुषावनद्धाः = सतुषाः,

तत्त्ववैशारदी ।

जन्मवेदनीयः कर्माशयः, न हि मनुष्यशरीरेण तत्परिणामभेदेन वा सा तादृशी वत्सरसहस्रादिनिरन्तरोपभोग्या वेदना संभवति इति, शेषं सुगमम् ॥ १२ ॥

स्यादेतद्--अविद्यामूलत्वे कर्माशयस्य विद्योत्पादे सत्यविद्याविनाशान्मा नाम कर्माशयान्तरं चैषीत्, प्राक्तनकर्माशयानामनादिभवपरम्परासंचितानामसंख्यातानामनियतविपाककालानां भोगेन क्षपयितुमशक्यत्वादशक्योच्छेदः संसारः स्यादित्यत आह—"सति मूले तद्विपाको जात्यायुर्भोगा" इति,

पातञ्जलरहस्यम् ।

स्मदादिभिर्जन्म यस्य शरीरस्य तद् दृष्टजन्म शरीरं तेन वेदनीयः कर्माशयो भोगोऽत एव नारकिणां नास्ति दृष्टजन्मवेदनीय इत्याह—न हीति ॥ १२ ॥

"कदा चित्सुकृतं कर्म कूटस्थमिव तिष्ठति,"

इति स्मृतेः किञ्चित् कर्म शतजन्मभोग्यं किञ्चित्करिभोग्यं मनुष्यभोग्यमिति विरुद्धजातिभोग्यमिति तेषां का गतिरिति शङ्कते-स्यादेतदित्यादिसंसारइत्यन्तेन, । अत्रार्थे सूत्रं पठति-

वार्त्तिकम् ।

कथं नारकिवचनमात्रमिति चेद् न स्वर्गिणां भारतवर्षमागत्य लीलामानुषविग्रहेण प्रयागादौ कर्मानुष्ठानस्य तत्फलस्य च श्रवणादिति, शेषं सुगमम् ॥ १२ ॥

न केवलं कर्माशयेष्वेव क्लेशाः कारणमपि तु तत्फलेष्वप्यतस्तान्यपि दुःखोत्पादने क्लेशानां साक्षात्परम्परया द्वाराणीत्याह—

"सति मूले तद्विपाको जात्यायुर्भोगाः", क्लेशरूपे कर्माशयस्य मूले सत्येव कर्माशयस्य विपाकः फलं भवति, क्लेशाश्च वासनारूपा एव जन्मादिविपाककारणम् , विपाकस्य स्वरूपमाह—जात्यायुर्भोगा इति । जातिर्जन्म, आयुर्जीवनकालः, भोगः सुखदुःखात्मकशब्दादिवृत्तिरित्यर्थः, न तु सुखादिसाक्षात्कार एवात्र भोगः, "ते ह्लादपरितापफला" इत्युत्तरसूत्रे तस्य विपाकजन्यतावचनाद् इति, स्यादेतत्—क्लेशानां कर्मसहकारित्वे प्रमाणं नास्ति—

"ज्ञानाग्निः सर्व कर्माणि भस्मसात्कुरुतेऽर्जुने"-

त्यादिवाक्येभ्यो हि ज्ञानस्य क्लेशक्षयहेतुत्ववत् कर्मक्षयहेतुत्वमपि सिद्धम्, अतः क्लेशाभावकाले कर्माभावस्यावश्यकत्वात्तत एव विपाकाभावः स्यादिति, अत्रोच्यते—विविधयोनिहेतुशुभाशुभकर्मसु सत्सु यत्र रागादिरन्तकाल उद्बुद्धस्तिष्ठति।मरणोत्तरं तामेव योनिं जीवः प्राप्नोति नेतरामित्यन्वयव्यतिरेकाभ्यां कर्मवद्रागादिदोषोऽपि विपाकहेतुः, तथा च श्रुतिः —

"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्ये"ति—

"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे"ति च,

भास्वती।

केचिदातिष्ठन्ते-एकं कर्मैकस्य जन्मनः कारणम्, अन्ये वदन्ति-एकं पशुहनना-

तत्त्ववैशारदी।

एतदुक्तं भवति—सुखदुःखफलो हि कर्माशयस्तादर्थ्येन तन्नान्तरीयकतया जन्मायुषी अपि प्रसूते, सुखदुःखे च रागद्वेषानुषक्ते तदविनिर्भागवर्तिनी तदभावे न भवतः, न चास्ति

पातञ्जलरहस्यम्।

"सति मूले तद्विपाका जात्यायुर्भोगाः" मूलं क्लेशादि तस्मिन् सति विद्यमाने तद्विपाकः परिपाकः, स कः ? जात्यायुर्भोगा इति, जातिर्जन्म स तु कुलादिषु, आयुः शताब्दादि, भोगः सुखदुःखसाक्षात्कार इति सूत्रार्थः, व्यतिरेकमाह-नोच्छिन्नक्लेशमूलः, उच्छिन्नं क्लेशलक्षणं मूलं यस्य कर्माशयस्य स न विपाकारम्भीत्यर्थः, दावदग्धत्वेऽसत्यपि नष्टबीजभावस्य नास्त्यङ्कुरोत्पत्तिरिति समुच्चयार्थो वाशब्दः, व्यतिरेकमाह-नापनीतेति। दार्ष्टान्तिकमाह-तथेति। अत्रापि व्यतिरेकमाह-नापनीतक्लेश इति। अत्र चतुर्द्धा विप्रतिपत्तिं दर्शयन् क्रमेण कस्मिन् पक्षे किं दूषणमित्याह-कस्मादित्यादि, अवशिष्टस्यानारब्धभोगस्य, सांप्रतिकस्य = वर्त्तमानस्य, किं कदा भोक्ष्यत इति नियामकाभावादनाश्वासः कर्मणि प्रवृत्तावित्येकं-कर्मैकजन्महेतुरिति दुर्घटः,

"श्वशृगालखरोष्ट्राणां ब्रह्महा योनिमृच्छति" इति,

एकस्या ब्रह्महत्यायाः विरुद्धानेकदेहभोग्यत्वेनावशिष्टो भोगः स चाप्यनिष्टोऽनिर्मोक्षापत्तेः, तृतीयविकल्पमाह-न चानेकमिति। युगपन्न भवतिः एकदा विरुद्धानेकदेहासम्भवात्, पूर्वदोषः = भोगकालानियमः, तस्मादनाद्यनन्तकर्मभिरेकं जन्मेति परिशिष्यतेः तस्माज्जन्म च प्रायणं मरणं तयोरन्तराले मध्ये, एकप्रघट्टकेन = युगपत्कालेन, यथाऽपवरकस्थो दीपो घटपटादिस्थूलसूक्ष्मादिनैको व्यज्यत इत्यर्थमनिच्छतो यथाऽनेकैः सूत्रैरेका रज्जुरारभ्यते, ततः किं तत्राह-तच्चेति। काकशाल्मल्यादिवद्बहुकालव्यापीत्याह-लब्धायुष्कमिति। एकद्विविपाकत्वं विवृणोति-एकविपाकारम्भीत्यादिउक्त इत्यन्तेन, यस्त्वसावेकभविक उक्तः; तस्य त्रित्वं-विभजते—कृतेत्यादिना, 'धर्मेण पापमपनुदति, इति श्रुतिमाश्रित्याह—तत्र कृतस्येत्यादिना, पुण्यो वै पुण्येन कर्मणा भवतीति श्रुतेः पुण्यवता कृतः शुक्लो राशिः = शर्मकुलं, पञ्चशिखाचार्यस्य वचनं-स्यादिति । स्वल्पः = स्वल्पकालावच्छिन्नभगोदः, सङ्करो नान्तरीयकदुरहष्टेन मिश्रणं, सपरिहारः प्रायश्चित्तनिरस्यः, अकृतप्रायश्चित्तेन मृष्यते सहनीयमानुषङ्गिकं-दुःखं यथा मत्स्यभक्षणे कण्टकम्,

"कदाचित्सुकृतं कर्म कूटस्थमिव तिष्ठति"-

तिस्मृतिमाश्रित्याह-नियतेति। कथं त्रित्वमिति शङ्कते-कथमिति। उत्तरमदृष्टजन्मेत्यादि, अनियतविपाकस्यानारब्धफलस्य तटस्थस्येत्यर्थः,

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि"

इत्यादिस्मृतिमाश्रित्याह-यावदिति।

"त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः"-

इति श्रुतिमाश्रित्याह-उत्सर्गस्यापवादान्न निवृत्तिः, उत्सर्गस्य हिंसाजनितपापस्याग्निषोमीयवचनकृता न निवृत्तिरिति, पुण्यापुण्यैरेकभविकोऽनुज्ञायत इति भाष्यार्थः, तादर्थ्येन

वार्त्तिकम्।

तथा गीताऽपि—

"पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्वि"ति ॥

न्यायसूत्रं च—'वीतरागजन्मादर्शनात्', नरकादिष्वपि रागाद्यनुसारेणैव विपाको भवति,

सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति, नोच्छिन्नक्लेशमूलः, यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः प्ररोहसमर्था भवन्ति, नापनीततुषा दग्धबीजभावा वा, तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति, नापनीतक्लेशो न प्रसङ्ख्यानदग्धक्लेशबीजभावो वेति, स च विपा-

भास्वती।

दिकर्मानेकं जन्म निर्वर्त्तयतीति, इत्यादींस्त्रीनसमीचीनान् पक्षान् निरस्य समीचीनं-

तत्त्ववैशारदी।

सम्भवो न च तत्र यस्तुष्यति वोद्विजते वा तत्र तस्य सुखं वा दुःखं वेति, तदियमात्मभूमिः क्लेशसलिलावसिक्ता कर्मफलप्रसवक्षेत्रमित्यस्ति क्लेशानां फलोपजननेऽपि कर्माशयसहकारितेति, क्लेशसमुच्छेदे सहकारिवैकल्यात् सन्नप्यननोऽप्यनियतविपाककालोऽपि प्रसंख्यानदग्धबीजभावो न फलाय कल्पत इति, उक्तमर्थं भाष्यमेव द्योतयति—"सत्सु" इति।

पातञ्जलरहस्यम्।

भोगनिर्वाहकतया, क्षीणायुषो जन्मतः कुतो भोगः, तदविनिर्भागवर्त्तिनी = अविनाभूते, एतदे-

वार्त्तिकम्।

निषिद्धस्त्र्यादिसक्तानामेव तप्तलोहमयनारीसमालिङ्गनादिफलश्रवणात्, अतः क्लेशोऽपि स्वातन्त्र्येण विपाकारम्भे हेतुः, ज्ञानोत्तरं चारब्धविपाकः समाप्यत एव न त्वारभ्यत इति न तत्र क्लेशापेक्षेति, अपि चात्रैव सूत्रे भाष्यकृता कर्माशयस्यापि प्रसंख्यानदग्धबीजभावस्य वक्तव्यतया कर्माशयस्य दाह एव ज्ञानेन क्रियते न तु नाश इत्यवधार्यते, स च क्लेशाख्यसहकार्युच्छेद एव, ज्ञानस्य हि व्यापारद्वयं क्लेशाख्यहेतूच्छेदेन कर्मानुत्पादः प्राचीनकर्मणां दाहश्च न तु कर्मनाशः प्रारब्धकर्मणोऽपि नाशप्रसङ्गात्, न च प्रारब्धातिरिक्तकर्मत्वेन ज्ञाननाश्यता कल्प्येति वाच्यम्? लाघवेन क्लेशस्यैव विपाकारम्भहेतुत्वकल्पनौचित्यात्, प्रारब्धफलकस्य कर्मणो बीजशक्तिनाशेऽपि फलं समाप्यत एव बीजदाहेऽप्युत्पन्नाङ्कुरवदिति, अत एव—

"ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः।"

"योगाग्निदग्धकर्मचयोऽचिरादि"ति

गीताविष्णुपुराणयोर्ज्ञानयोगाभ्यां कर्मणो दाह एव श्रूयते न तु नाश इति, तदेकवाक्यतया च क्षीयन्ते चास्य कर्माणीत्यादिवाक्यान्यपि दाहपराण्येव, तथा "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशावि"ति ब्रह्मसूत्रेऽपि विनाशशब्दो निष्फलतार्थक एव मन्तव्यः, कर्माशयनाशस्तु ज्ञानवासनानाशवच् चित्तनाशादेव भवति, धर्मिनाशस्य धर्मनाशहेतुतायाः सामान्यत एव क्लृप्तत्वादिति, तस्माज्ज्ञानेन क्लेशाख्यहेतुदाहात् कर्मानुत्पादवत् प्राचीनकर्मविपाकानारम्भोऽपि भवति क्लेशाख्यदृष्टसहकार्यभावात्, अतो ज्ञानात् क्लेशाख्यसहकार्युच्छेद एव कर्मदाह इति सर्वं सुस्थम्, तदेतत्सर्वमभिप्रेत्य भाष्यकारः सूत्रमिदं व्याचष्टे—सत्सु क्लेशेष्विति। विपाकारम्भीति। आरम्भशब्दाज्जीवन्मुक्तस्यारब्धविपाकेषु न क्लेशाः कारणमित्युक्तं तस्य ह्यारब्ध एव विपाकः कर्मणा समाप्यत इति, एतेन जीवन्मुक्तस्यभोगार्थमविद्यालेशकल्पनमज्ञानामुपेक्षणीयम्, आरब्धविपाकक्लेशानामहेतुत्वादिति, क्लेशानां कर्माशयसहकारित्वं ज्ञानादग्धकर्माशयस्यैव विपाकारम्भहेतुत्वं च दृष्टान्तेन प्रतिपादयति-यथा तुषेति। क्लेशावनद्ध इति। ज्ञानादग्धबीजभाव इत्यपि बोध्यम्, दृष्टान्तानुसाराद् न प्रसंख्यानदग्धबीजभावो वेत्युत्तरवाक्याच्च, नापनीतक्लेश इति। सविपाकगोचरक्लेशशून्य-इत्यर्थ, अतो न प्रसंख्यानदग्धबीजभावो वेत्यस्य क्लेशसामान्याभावकालीनः कर्माशयोऽसंकीर्णोदाहरणमिति, जात्यायुर्भोगा इति व्याचष्टे-स च विपाक इति। कर्मणो जन्मकारणत्वे कं चन विशेषमवधारयितुमाह-तत्रेदं विचार्यत इति। तत्र = जन्मलक्षणविपाके, अस्य विचा-

कस्त्रिविधो जातिरायुर्भोग इति, तत्रेदं विचार्य्यते-किमेकं कर्मैकस्य जन्मनः कारणम् ? अथकं कर्मानेकं जन्माक्षिपतीति ? द्वितीया विचारणा-किमनेकं कर्मानेकं जन्म निर्वर्त्तयति ? अथानेकं कर्मैकं जन्म निर्वर्तयतीति ? न तावदेकं कर्मैकस्य जन्मनः कारणं, कस्माद् ? अनादिकालप्रचितस्यासङ्ख्येयस्याव-शिष्टकर्मणः साम्प्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः स चानिष्ट इति, न चैकं कर्मानेकस्य जन्मनः कारणं, कस्माद् ? अनेकेषु कर्मस्वेकैकमेव कर्मानेकस्य जन्मनः कारणमित्यवशिष्टस्य विपाककालाभावः

तत्त्ववैशारदी।

अत्रैव दृष्टान्तमाह—"यथा तुष"इति। सतुषा अपि दग्धबीजभावाः स्वेदादिभिः, दार्ष्टान्तिके योजयति—"तथा" इति। ननु न क्लेशाः शक्या अपनेतुम्, न हि सतामपनय इत्यत आह—"न प्रसङ्ख्यानदग्धबीजभावो वा" इति। विपाकस्य त्रैविध्यमाह—"स च" इति। विपच्यतं=साध्यते कर्मभिरिति विपाकः, कर्मैकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा प्रथमा विचारणा, द्वितीया तु कर्मानेकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा, तदेवं चत्वारो-विकल्पाः, तत्र प्रथमं विकल्पमपाकरोति-"न तावदेकं कर्मैकस्य जन्मनः कारणम्" इति, पृच्छति—"कस्माद्" इति। उत्तरमाह—"अनादि" इति। अनादिकाल एकै-कजन्मप्रचितस्यात एवासङ्ख्येयस्यैकैकजन्मक्षपितादेकैकस्मात्कर्मणोऽवशिष्टस्य कर्मणः, साम्प्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः, स चानिष्ट इति, एतदुक्तं भवति-कर्मक्षयस्य विरलत्वात् तदुत्पत्तिबाहुल्याचान्योन्यसंपीडिताश्च कर्माशया निरन्तरोत्पत्तयो-निरुच्छ्वासाः स्वविपाकं प्रतीति न फलक्रमः शक्योऽवधारयितुं प्रेक्षावतेत्यनाश्वासः पुण्या-नुष्ठानं प्रति प्रसक्त इति, द्वितीयं विकल्पमपाकरोति-"न चैकं कर्मानेकस्य जन्मन कारणम्" इति। पृच्छति-"कस्माद्"इति। उत्तरमाह-"अनेकेषु" इति। अनेकस्मिन् जन्मन्याहितमे-कमेव कर्मानेकस्य जन्मलक्षणस्य विपाकस्य निमित्तमित्यवशिष्टस्य विपाककालाभाव-

पातञ्जलरहस्यम्।

वान्वयेन द्रढयति-न चास्तीत्यादिसहकारितेत्यन्तेन, व्यतिरेकमाह—क्लेशेत्यादिकल्पत-इत्यन्तेन, नाभावो विद्यते सत इति स्मृतिमाश्रित्य शङ्कते—नन्विति। सत्यं—न नाशः किन्तु ज्ञानाग्निना दग्धप्ररोहसामर्थ्या इत्याह—नेति। ध्रुवं=पक्षं, धिया जनयति पुरुषो-वा क्षितिरिति श्रुतिमाश्रित्याह—सांप्रतिकस्य भोगकालेऽपि जनितस्य, अक्षयत्वं स्पष्ट-

वार्त्तिकम्।

रस्य प्रयोजनं स्वयमेव वक्ष्यति, तत्र चत्वारो विकल्पाः—कर्मैकत्वपक्षं ध्रुवं कृत्वा जन्मैकत्वा-नेकत्वरूपं प्रथमं विकल्पद्वयं, कर्मानेकत्वं च ध्रुवं कृत्वा जन्मानेकत्वैकत्वरूपमपरं विकल्पद्वय-मिति, आक्षिपतीति। फलदानार्थमुत्पादयतीत्यर्थः, किमनेकमिति। अनेकं कर्म मिलित्वाऽनेकं जन्म करोतीत्यर्थः, आद्यविकल्पे तु न मिलनमुक्तमिति ततो विशेषः, तत्राद्यं विकल्पमपाक-रोति-न तावदेकमिति। पृच्छति-कस्मादिति। उत्तरम्-अनादीति। प्रचितस्य संचितस्य, अवशिष्टस्य अभुक्तस्य, अविशिष्टस्येतिपाठे अन्योन्यभुक्तत्वेनाविशिष्टस्येत्यर्थः, सांप्रतिकस्यै-हिकस्य, फलक्रमानियमादनाश्वास इति। यथोक्तानामनन्तकर्मणां मध्ये किं कर्म प्रथमं फलं दास्यति किं वा पश्चादिति फलक्रमे नियमो नास्ति; अतो लोकानां पुण्यानुष्ठाने फलानाश्वासः स्यात्, भाव्यनन्तकालमध्ये भाविपापादिनाऽनुष्ठीयमानकर्मणो विनाशसंभवात् झटिति भोग-कामनयैव कर्मानुष्ठानाच्चेत्यर्थः, द्वितीयं विकल्पं निराकरोति-न चैकमिति। अनेकजन्मसु किंचित्कृत्वा फलदानायानेकजन्मनः कारणमेकैकं कर्मेत्यपि न भवतीत्यर्थः, अत्र हेतुं पृच्छति-कस्मादिति। उत्तरम्-अनेकेष्विति। अनेकेषु जन्मसु क्रियमाणं कर्मैकैकं प्रत्येकमेवाने-

प्रसक्तः; स चाप्यनिष्ट इति, न चानेकं कर्मानेकस्य जन्मनः कारणम्, कस्मात्? तदनेकं जन्म युगपन्न सम्भवतीति क्रमेण वाच्यं; तथा च पूर्वदोषानुषङ्गः, तस्माज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जनभावेनावस्थितः प्रायणाभिव्यक्त एकप्रघट्टकेन मिलित्वा मरणं प्रसाध्य संमूर्छित एकमेव जन्म करोति, तच्च जन्म तेनैव कर्मणा लब्धायुष्कं-

भास्वती।

सिद्धान्तमाह—तस्माज्जन्मेति। बहूनि कर्माणि मिलित्वैकमेव जन्म निर्वर्त्तयन्तीति सिद्धान्त एव न्याय्यः, यतो नास्ति किञ्चिदेकं कर्म येन देहधारणं स्यात्, देहभृताञ्च बहवः सुखदुःखभोगा नैकस्मात् कर्मणः संघटेरन्निति कथं कर्माशयप्रचयः? तदाह—तस्मादिति। प्रायणं=मरणम्, प्रचयः=सञ्चयः, विचित्रः=सर्वकरणानां नानाविधचेष्टानां संस्कारात्मकत्वादतीवचित्रः, तीव्रानुभावाज्जातः पुनः पुनः कृतेभ्यः कर्मभ्यो वा जातः संस्कारः प्रधानं, ततोऽन्य उपसर्जनोऽमुख्य इत्यर्थः, तत्तद्रूपेणावस्थितः=सज्जित इत्यर्थः प्रायणेन=लिङ्गस्य स्थूलदेहत्यागरूपेण मरणेनाभिव्यक्तः, प्रायणकाले यस्मिन् क्षणे क्षीणेन्द्रियवृत्ति सत् संस्काराधारं चित्तं स्वाधिष्ठानाद् वियुक्तं भवति तस्मिन्नेव क्षण-आजीवनकृतानां सर्वेषां कर्मणां संस्काररूपेणावस्थितानां स्मृतयोऽजस्रभावे चेतस्युद्यन्ति, चेतसोऽधिष्ठानभूतेभ्यो मर्मस्थानेभ्यो विच्छिन्नभवनरूपादुद्रेकादेव युगप

तत्त्ववैशारदी।

प्रसक्तः, स चाप्यनिष्ट इति; कर्मवैफल्येन तदननुष्ठानप्रसङ्गाद्, यदैकजन्मसमुच्छेद्ये कर्मण्येकस्मिन् फलक्रमानियमादनाश्वासस्तदा कैव कथा बहुजन्मसमुच्छेद्ये कर्मण्येकस्मिन् तत्र ह्यवसराभावाद् विपाककालाभाव एव साम्प्रतिकस्येति भावः, तृतीयं विकल्पमपाकरोति—"न चानेकं कर्मानेकस्य जन्मनः कारणम्" इति। तत्र हेतुमाह—"तद्" इति। तदनेकं जन्म युगपन्न सम्भवत्ययोगिन इति क्रमेण वाच्यम्, यदि हि कर्मसहस्रं युगपज्जन्मसहस्रं प्रसुवीत तत एव कर्मसहस्रप्रक्षयादवशिष्टस्य विपाककालः फलक्रमनियमश्च स्यातां, न त्वस्ति जन्मनां यौगपद्यम् एवमेव प्रथमपक्ष एवोक्तं दूषणमित्यर्थः, तदेवं पक्षत्रये निराकृते पारिशेष्यादनेकं कर्मैकस्य जन्मनः कारणमिति पक्षो व्यवतिष्ठत इत्याह—"तस्माज्जन्म"

पातञ्जलरहस्यम्।

यति—एतदुक्तमिति। ब्रह्महत्याऽऽदिवदेकैकहत्याऽऽदिना जनितं तस्यानन्तजन्महेतुत्वादेकेन बहुकालव्यापिना कर्मणाऽवरुद्धमन्यकर्मजातस्य फलायापर्याप्तमित्याह—वैकल्येनेति। तत्रैव कैमुतिकत्वमाह—यदैवेति। बहुजन्मसमुच्छेद्यं=बहुजन्मभोगनाश्यं—

"श्वश्रृगालखरोष्ट्राणां ब्रह्महा योनिमृच्छति"

इत्यादेरित्यर्थः, अयोगिनः=कायव्यूहं कर्त्तुमशक्तस्येत्यर्थः, जन्मोक्तं कायादिभिः संबन्ध इति, प्रथमपक्षोक्तावशिष्टस्य स्थितिरिति। कर्माशयवद्वासना एकरूपा नेत्याह—क्लेशेति। ननु

वार्त्तिकम्।

कस्यासंख्यजन्मनः कारणम् अतोऽवशिष्टस्य तदितरस्य तद्विरुद्धफलस्य कर्मण इति यावदिति, तृतीयं विकल्पं निराकरोति—न चानेकं कर्मेति। पृच्छति—कस्मादिति। उत्तरम्—तदनेकमिति। तथा चेति। प्रथमपक्षोक्तदोषस्यानाश्वासस्य प्रसङ्ग इत्यर्थः, तदेवं पक्षत्रये दूषिते चतुर्थपक्षं सिद्धान्तयति—तस्मादिति। तस्माज्जन्मारभ्यामरणपर्यन्तकालं विहितनिषिद्धैर्यो धर्माधर्मसमूहो गुणप्रधानभावमापन्न उत्पादितः स मरणकाल आरब्धकर्मभोगसमाप्त्या लब्धावसरः सन्नेकप्रयत्नेन मिलित्वा स्वफलदानार्थं मरणं प्रसाध्य सम्मूर्च्छितः प्रवृद्धवेग एकमेव जन्म

भवति, तस्मिन्नायुषि तेनैव कर्मणा भोगः सम्पद्यत इति, असौ कर्माशयो जन्मायुर्भोगहेतुत्वात् त्रिविपाकोऽभिधीयत इति, अत एकभविकः कर्माशय उक्त इति,

भास्वती।

स्सर्वस्मृतिसमुद्भवः स्याद् देहसम्बन्धशून्येऽजडीभूते चेतसीति, उक्तञ्च—

"शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्मसु" इति,

तदा क्षणावच्छिन्ने काले सर्वासां स्मृतीनां यः समुदयः स एव एकप्रघट्टकेन = एकप्रयत्नेन मिलित्वोत्थानम्, संमूर्छितः पिण्डीभूत एकघन इव, स्थूलदेहत्यागानन्तरमेवम्भूतात् कर्माशयादेकं दिव्यं वा नारकं वा जन्म भवति, स हि—उपभोगदेहो मनः-प्रधानत्वात् स्वप्नवत्, श्रूयते च—"स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणी"-ति, न हि तस्मिन् प्रेतनिकाये स्थूलदेहारम्भकः कर्माशयो विपच्येत नापि कर्माशयप्रचयो-भवेत्, तत्र च चेतोमात्राधीनानां पूर्वकर्मणां फलभूतः सुखदुःखभोगस्तद्वासनाप्रचयश्च स्यात्, यथा स्वप्ने मनःप्रधाने चित्तक्रिया च तद्भवः सुखदुःखभोगश्च तद्वत्, तदनन्तरमवशिष्टात् स्थूलदेहारम्भकात् कर्माशयात् स्थूलकर्मदेहधारणं स्यात्, स्थूलसूक्ष्मदेहानामायुस्तथाऽऽयुषि सुखदुःखमोहभोगश्च तत्कर्माशयादेव भवति, स्थूलजन्मन्यत्युत्कटैः पुण्यपापैः दृष्टजन्मवेदनीयावायुर्भोगावपि स्याताम्,

तत्त्ववैशारदी।

इति। जन्म च प्रायणं च जन्मप्रायणे तयोरन्तरं = मध्यं तस्मिन्, विचित्रसुखदुःखफलोपहारेण विचित्रः, यदत्यन्तमुद्भूतमनन्तरमेव फलं दास्यति तत्प्रधानं, यत्तु विलम्बेन तदुपसर्जनम्, प्रायणं = मरणं तेनाभिव्यक्तः = स्वकार्य्यारम्भणाभिमुख्यमुपनीत, एकप्रघट्टकेन = युगपत्, संमूर्छितः = जन्मादिलक्षणे कार्य्ये कर्त्तव्य एकलोलीभावमापन्न एकमेव जन्म करोति, नानेकम्, तच्च जन्म = मनुष्यादिभावः, तेनैव कर्मणा लब्धायुष्कं = कालभेदान्नियतजीवनं च भवतीति, तस्मिन्नायुषि तेनैव कर्मणा भोगः = सुखदुःखसाक्षात्कारः स्वसम्बन्धितया संपद्यत इति, तस्मादसौ कर्माशयो जात्यायुर्भोगहेतुत्वात् त्रिविपाकोऽभिधीयते, औत्सर्गिकमुपसंहरति—"अत एकभविकः कर्माशय उक्त" इति। एको भव एकभवः "पूर्वकालैक"इत्यादिना समासः, एकभवोऽस्यास्तीति मत्वर्थीयष्ठन्, क्वचित्पाठः—"ऐकभविक"इति। तत्रैकभवशब्दाद्

पातञ्जलरहस्यम्।

वासना कर्मणः सूक्ष्मरूपविशेषोक्तेत्याशङ्क्याह—य इति। स्तनपानादिप्रवृत्तौ ये स्मृतिहेतवः ते वासनाः, कर्मणि तु नैवं किन्तु विपाकहेतुमात्रं, विनाशो धर्मेण पापमपनुदतीति

वार्त्तिकम्।

गुणप्रधानभावापन्नः स्वफलयोग्यं करोति नानेकमित्यर्थः, मरणं च लिङ्गदेहस्य स्थूलदेहादुत्क्रमणं न तु नाशो गमनश्रुतेः, नाशस्य भोगाहेतुतया कर्माजन्यत्वस्वाभाविकत्वयोर्भाष्ये वक्ष्यमाणत्वाच्च, ननु केवलजन्मना किं प्रयोजनं तत्राह—तच्च जन्मेति। आयुषोऽपि न स्वतः पुरुषार्थत्वमत आह—तस्मिन्नायुषीति। असाविति। जन्महेतुरित्यर्थः, अन्यो हि भोगमात्रविपाको भवतीति वक्ष्यति, औत्सर्गिकमुपसंहरति—अत इति। एको भवोऽस्मिन्कार्यतयाऽस्तीत्येकभविकः कर्माशयसमूहः पूर्वाचार्यैरुक्त इत्यर्थः, ऐकभविक इति पाठे त्वेकभविकं कर्म तज्जन्यादृष्टं चैकभविकमित्यर्थः, नन्वेवं स्वर्गिनारकिणां कथं पुनर्जन्मादि स्यात् स्वर्गादिशरीरे धर्माद्यनुत्पत्तेः प्राचीनसर्वकर्मणां च तत्रैव समापनादिति चेद् ? न—स्वर्गादिजनककर्मणामेव ब्राह्मणस्थावरादियोनिकाभपर्यन्तफलश्रवणात् ब्राह्मणादिकालविशेषस्यैव फलस्यैक-

दृष्टजन्मवेदनीयस्त्वेकविपाकारम्भी भोगहेतुत्वाद्, द्विविपाकारम्भी वाऽऽयुर्भोगहेतुत्वाद्, नन्दीश्वरवन्नहुषवद्वा इति, क्लेशकर्मविपाकानुभवनिमित्ताभिस्तु वासनाभिरनादिकालसंमूर्छितमिदं चित्तं चित्रीकृतमिव सर्वतो-

भास्वती ।

एवमुत्तरजन्मारम्भकस्य कर्माशयस्य तत्पूर्वस्थूलजन्मनि निर्वर्तनादैकभविकः कर्माशय इत्युत्सर्गोऽनुज्ञातः, एको भवो = जन्म; एकभवः, एकभवे निष्पन्नः सञ्चितो वैकभविकः, तत्राऽदृष्टजन्मवेदनीयः कर्माशय एव त्रिविपाकः, दृष्टजन्मवेदनीयो न तथा, कस्मात्तदाह—दृष्टेति । दृष्टजन्मकृतस्य कर्मणश्चेत्तज्जन्मनि विपाकस्तदा जातिरूपो विपाको न स्यात् तस्मात्तस्यायूरूपो भोगरूपो वा एको विपाकः, आयुर्भोगरूपो वा द्वौ विपाकौ भवेताम्, एकविपाकस्य दृष्टान्तो नहुषः, द्विविपाकस्य च नन्दीश्वरः, नहुषनन्दीश्वरयोर्न-जन्मरूपो विपाको जातः, नहुषस्य च दिव्यायुरपि न नष्टं किन्तु तस्मिन्नायुषि सर्पत्वप्राप्तिजन्यो दुःखभोगः सञ्जातः, नन्दीश्वरस्य पुनर्दिव्यावायुर्भोगौ जातौ,

कर्माशय एकभविको, वासना त्वनेकभवपूर्विका, चित्तमनादि प्रवर्त्तमानम्, तस्मात्तस्य जात्यायुर्भोगा असङ्ख्येयाः, ततश्च चित्तस्य क्लेशकर्मादिसंस्कारा असङ्ख्याताः, क्लेशाश्च कर्मविपाकाश्च क्लेशकर्मविपाकास्तेषामनुभवरूपान्निमित्ताज्जाताः स्मृतिफला वासनाः, क्लेशकर्मविपाकौ चेतरेतरसहायौ तस्मात् प्राधान्यात् कर्मविपाकानुभवजन्यत्वेऽपि वासनानां-

तत्त्ववैशारदी ।

भवार्थे ठक् प्रत्ययः, एकजन्मावच्छिन्नमस्य भवनमित्यर्थः, तदेवमौत्सर्गिकैकभविकस्य त्रिविपाकत्वमुक्त्वा दृष्टजन्मवेदनीयस्यैहिकस्य कर्मणस्त्रिविपाकत्वं व्यवच्छिनत्ति—"दृष्ट" इति । नन्दीश्वरस्य खल्वष्टवर्षावच्छिन्नायुषो मनुष्यजन्मनस्तीव्रसंवेगाधिमात्रोपायजन्मा पुण्यभेद-आयुर्भोगहेतुत्वाद् द्विविपाको,नहुषस्य तु पार्ष्णिप्रहारविरोधिनाऽगस्त्यस्येन्द्रपदप्राप्तिहेतुनैव कर्मणाऽऽयुषो विहितत्वादपुण्यभेदो भोगमात्रहेतुः, ननु यथैकभविकः कर्माशयस्तथा किं क्लेशवासना भोगानुकूलाश्च कर्मविपाकानुभववासनाः तथा च मनुष्यस्तिर्य्यग्योनिमापन्नो न तज्जातीयोचितं भुञ्जीतेत्यत आह—"क्लेशकर्म" इति । संमूर्छितम् = एकलोलीभावमापन्नम्,

पातञ्जलरहस्यम् ।

श्रुत्युक्तः, सहन्ते वह्निकणिकामित्युक्तं,—

"कदा चित्सुकृतं कर्म कूटस्थमिव तिष्ठति,"

इत्युक्तिमाश्रित्याह—चिरमवस्थानमिति । त्रित्वं विभजते—शुक्लः परपीडारहितत्वात्, सर्वस्य पुण्यसंवलितस्यापि पापस्य तन्मध्यपतितानां तद्ग्रहणेन ग्रहणादिति न्यायेनाह—कृष्ण-

वार्त्तिकम् ।

भविकत्वनियमादिति, त्रिविपाकं कर्मोक्त्वैवाद्विविपाके कर्मणी प्राह—दृष्टजन्मेति । नन्दीश्वरवन्नहुषवच्चेति दृष्टान्तद्वयं पूर्वोपन्यासक्रमेणोक्तम्, अत्र तु व्युत्क्रमेण योजनीयं प्रतिज्ञाक्रमेणोदाहरणौचित्यात्, नन्दीश्वरस्य ह्यष्टवर्षायुर्मनुष्यजन्मनः पुण्यविशेषेणायुर्भोगरूपं विपाकद्वयं देवसंबन्ध्युत्पन्नं नहुषस्य चेन्द्रत्वसंपादककर्मणैव दीर्घायुष्ट्वस्य लाभात् पापविशेषेण केवलं सर्पभोगरूप एक एव विपाक उत्पन्न इति, तत्र च नन्दीश्वरनहुषयोर्मनुष्यशरीरस्यैव वार्द्धकादिवद्देवसर्परूपपरिणामान्तराद् न जन्मान्तरमपूर्वदेहानुत्पादादिति, नन्वेवं कर्माशयवज्ज्ञानवासनाऽप्यैकभविक्येव स्यात् तथा च "तासामनादित्वं चाशिषो नित्यत्वादि"त्यागामिसूत्रे वासनानामनादित्ववचनं नोपपद्येतेत्याशङ्कां परिहरति—क्लेशकर्मेति । क्लेशकर्मणो-

**मत्स्यजालं ग्रन्थिभिरिवाततमित्येता अनेकभवपूर्विका वासनाः, यस्त्वयं-कर्माशय एव एवैकभविक उक्त इति, ये संस्काराः स्मृतिहेतवस्ता वासना-स्ताश्चानादिकालीना इति, यस्त्वसावेकभविकः कर्माशयः स नियतविपाक-**

भास्वती।

ता हि क्लेशैः परामृष्टाः सत्योऽपि प्रचीयन्ते, ताभिर्वासनभिरनादिकालं यावत् संमूर्छितम् = एकलोलीभूतमेकघनं भूत्वा प्रवर्त्तमानमित्यर्थः, चित्तं चित्रीकृतमिव सर्वतो ग्रन्थिभिराततं मत्स्यजालमिव,

उत्सर्गाः सापवादास्ततः कर्माशय एकभविक इत्युत्सर्गस्यापि सन्त्यपवादाः, तान् वक्तुमुपक्रमते—यस्त्विति। नियतोऽबाधितो निमित्तान्तरेणासङ्कुचित इति यावद् विपाको यस्य स नियतविपाकः कर्माशयः, कर्माशयश्चेन्नियतविपाकस्तथाऽदृष्टजन्मवेदनीयः स्यात्तदैव स सम्यगेकभविकः स्यात, अन्यथैकभविकत्वस्यापवादः, कथं ? तद् दर्शयति-य इति। कृतस्याविपक्वस्य नाश इत्यस्योदाहणं क्षमया क्रोधसंस्कारनाशः, द्वितीया गतिर्बलवता प्रधानकर्मणा सहावापगमनम्, एकत्र फलीभाव इत्यर्थः, दुर्बलस्य कर्मणो धान्यप्राये क्षेत्रे धान्येन सहोसमुद्गादिवत्, तृतीया गतिर्नियतविपाकेन प्रधानकर्मणाऽभिभवः, ततश्च विपाककालालाभाच्चिरमवस्थानम्, एतास्तिस्रो गतीरुदा-

तत्त्ववैशारदी।

धर्माधर्माभ्यां व्यवच्छेत्तुं वासनायाः स्वरूपमाह—"ये संस्कारा" इति। औत्सर्गिकमैकभविकत्वं क्व चिदपवदितुं भूमिकामारचयति—"यस्त्वसौ" इति। तुशब्देन वासनातो व्यवच्छिनत्ति-दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायम् = एकभविकत्वनियमो, न त्वदृष्टजन्मवेदनीयस्य किम्भूतस्य ? अनियतविपाकस्येति, हेतुं पृच्छति—"कस्माद्" इति। हेतुमाह—"या हि" इति। एकां तावद् गतिमाह—"कृतस्य" इति। द्वितीयामाह—"प्रधान" इति। तृतीयामाह—"नियत" इति। तत्र प्रथमां विभजते—"तत्र कृतस्य" इति। संन्यासिकर्मभ्योऽशुक्लाकृष्णेभ्योऽन्यानि त्रीण्येव कर्माणि कृष्णशुक्लकृष्णशुक्लानि, तदिह तपःस्वाध्याया-

पातञ्जलरहस्यम्।

भोगयोगादिति। इतरेषां पापानामभावः विनाशः, ननु कष्टं कर्मेत्यनुभवात्स्वाध्यायाध्ययन-

वार्त्तिकम्।

विपाकस्व योऽनुभवश्चित्तवृत्तिनिवहो ज्ञानरूपस्तन्निष्पादिताभिर्ज्ञानरूपवासनाभिरनादिकालेषु संमूर्छितमुपचितं। पुष्टमिति यावत्, अत एव विविधरूपाभिस्ताभिः पटवत् सर्वतश्चित्रितमिव चित्तं ग्रन्थिभिरायतं मत्स्यजालमिव वर्त्तत इत्यत एता वासनो अनेकभवपूर्विकाः स्वीक्रियन्ते। अन्यथा मनुष्ययोन्यनन्तरं देवतिर्यग्योनिभोगानुपपत्तेः मनुष्यजन्मनि तद्वासनाऽनुपपत्तेः, एवं भववासनानां च मनुष्यजन्मनैव क्षयादित्यर्थः, अत्र वासनानां-जीवमत्स्यबन्धकचित्तजालग्रथितत्वेन रूपणात्,

"भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्वसंशया"—

इत्यादिश्रुतावपि हृदयग्रन्थिर्वासनैव न त्वाधुनिककल्पिताहंकारादिरिति सिद्धम्, कर्माशयाख्याद्धर्माधर्मरूपात्संस्काराद्वासनानां वैलक्षण्यमाह—ये संस्कारा इति। ताश्चानादिकालीना इत्युपसंहारः, औत्सर्गिकमेकभविकत्वं क चिदपवदितुं भूमिकां रचयति—यस्त्वसाविति। नियतः स्वाभाविको विघ्नशून्यः तादृशो विपाको यस्य स तथा, स चावन्ध्योऽनन्यशेषः कर्मान्तरानभिभूतश्च कर्माशयस्तद्विपरीतश्चानियतविपाक इत्यर्थः, अयं चार्थोऽनियतविपाकश्चैविष्यभाष्ये व्यक्तीभविष्यति, तत्राऽदृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियम-

श्चानियतविपाकश्च, तत्राद्दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियमो न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य, कस्माद् ? यो ह्यदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतिः-कृतस्याविपक्वस्य नाशः, प्रधानकर्मण्या-वापगमनं वा, नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानमिति, तत्र कृतस्याविपक्वस्य नाशो यथा शुक्लकर्मोदयादिहैव नाशः कृष्णस्य, यत्रेदमुक्तं—

"द्वे द्वे ह वै कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽपहन्ति,

भास्वती।

द्वयोर्द्योतयति—तत्रेति। श्रुतिमुदाहरति—द्वे द्वे इति। पुरुषाणां कर्म द्वे द्वे द्विविधं पापं पुण्यञ्चेति, तत्र पापकस्यैको राशिः, तदन्यः पुण्यकृतः शुक्लकर्मण एको राशिः पापकमुपहन्ति, तत् तस्मात् सुकृतानि कर्माणि कर्त्तुमिच्छस्व = इच्छेत्यर्थः,

तत्त्ववैशारदी।

दिसाध्यः शुक्लकर्माशय उदित एवादत्तफलस्य कृष्णस्य नाशकः अविशेषाच्च शबलस्यापि कृष्णभागयोगादिति मन्तव्यम्, तत्रैव भगवानाम्नायमुदाहरति—"यत्रेदम्" इति। द्वे द्वे ह वै कर्मणी = कृष्णकृष्णशुक्ले अपहन्तीति सम्बन्धः, वीप्सया भूयिष्ठता सूचिता, कस्येत्यत—आह—"पापकस्य" इति। पापकस्य पुंस इत्यर्थः, कोऽसावपहन्तीत्यत आह—"एको राशिः-पुण्यकृतः" इति। समूहस्य समूहिसाध्यत्वात्, तदनेन शुक्लः कर्माशयस्तृतीय उक्तः, एतदुक्तं भवति—ईदृशो नामायं परपीडाऽऽदिरहितसाधनसाध्यः शुक्लः कर्माशयो यदेकोऽपि सन् कृष्णान् कृष्णशुक्लांश्चात्यन्तविरोधिनः कर्माशयान् भूयसोऽपि हन्ति, तत् = तस्माद्, इच्छस्वेति छान्दसत्वादात्मनेपदम्, शेषं सुगमम्, अत्र च शुक्लकर्मोदयस्यैव स कोऽपि महिमा यत-इतरेषामभावो, न तु स्वाध्यायादिजन्मनो दुःखाद् न हि दुःखमात्रविरोध्यधर्मोऽपि तु स्व-

पातञ्जलरहस्यम्।

जनितदुःखभोगात् तन्नाशोऽस्तु कृतं पुण्योदयमहिम्नेत्याशङ्क्याह-न हीति। स्वजन्यदुःखभोग-

वार्त्तिकम्।

इति। एकभविकत्वनियम इत्यर्थः न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य चेति, सुगमम्, दृष्टजन्मवेदनीयस्य भवाहेतुत्वेनैकभविकत्वाभावः स्पष्ट एवेत्यतोऽनियतविपाकस्यैवैकभविकत्वनियमाभावे हेतुं पृच्छति—कस्मादिति। उत्तरं—यो ह्यदृष्टेति। दृष्टजन्मवेदनीयस्यकभविकत्वशङ्का नास्तीत्याशयेनैवाह—अदृष्टजन्मवेदनीयस्येति। स्वरूपाख्यानमात्रं न तु दृष्टजन्मवेदनीयस्यानियतविपाकत्वं नास्तीत्यादिः कश्चिदाशयः संभवति प्रयोजनाभावात्, यो ह्यदृष्टजन्मवेदनयोग्यो नियतविपाकभिन्नः स त्रिविध इत्यर्थः, यथाश्रुते वक्ष्यमाण-स्याविपक्वनष्टस्य संग्रहानुपपत्तेः, तिसृष्वेकां गतिमाह-कृतस्येति। अपरिपक्वस्यादत्तफलकस्य विनाश इत्यर्थः, तथा च तस्य नास्त्येकभविकत्वमित्याशयः, द्वितीयामाह—प्रधानेति। प्रधानकर्मणा यागादिना सहैव तदङ्गानां पशुहिंसाऽऽदीनां स्वफलदानाय च फलप्राप्तिः प्रधानकर्मण्युपगमनं, यथा धान्यबीजैः सहोत्पन्नानां तृणबीजानां तैः सहैव कुसूलमध्यस्थापितानां धान्यबीजेन सहैव वपनप्राप्तिः न स्वातन्त्र्येण तद्वत् परोपसर्जनतयाऽनुष्ठितत्वाद् न स्वातन्त्र्येण फलदानमिति, तथा च प्रधानकर्मातिशयस्य यदा बलवत्तरकर्मान्तरेणाभिभवस्तदा तदुपसर्जनस्यापि नैकभविकत्वमित्याशयः, तृतीयां गतिमाह—नियतविपाकेति। तत्र प्रधानं नाङ्गि किं तु बलवत्तरम्, नियतविपाकेन प्रधानकर्मणा स्वविरुद्धफलदेनाभिभूतस्य प्रतिबद्धस्य चिरमवस्थानं द्वित्रिचतुरादिजन्मसु प्रसुप्ततयाऽवस्थानमित्यर्थः, तथा च तस्य नैकभविकत्वमित्याशयः, एतास्वाद्यामुदाहरति-तत्र कृतस्येति। शुक्लः कर्माशयः धर्मः, कृष्ण-

**तदिच्छस्व कर्माणि सुकृतानि कर्तुमिहैव ते कर्म कवयो वेदयन्ते,**
**प्रधानकर्मण्यावापगमनम्--यत्रेदमुक्तं--**
**"स्यात् स्वल्पः सङ्करः सपरिहारः स प्रत्यवमर्षः, कुशलस्य नापकर्षा-**

भास्वती ।

छान्दसमात्मनेपदम्, इहैव ते = तुभ्यं कर्म इहलोक एव पुरुषकारभूमिरिति कवयो योगाक्रान्तप्रज्ञा वेदयन्ते पश्यन्तीति, द्वे द्वे इत्यभ्यासो बहुपुरुषाणां विचित्रकर्मराशिसूचनार्थः, द्वितीयगतेरुदाहरणं—यत्रेति । उक्तं—"पञ्चशिखाचार्येण" अकुशलमिश्रपुण्यकारिणोऽयं प्रत्यवमर्शः, ममाकुशलः स्वल्पः सङ्करः = पुण्येन सङ्कीर्णो बहुपुण्यमिश्र इत्यर्थः, सपरिहारः प्रायश्चित्तादिना, स प्रत्यवमर्शोऽनुशोचनीय इत्यर्थः, मम भूयिष्ठकुशलस्यापकर्षायाभिभवाय नालमसमर्थ इत्यर्थः, यतो मे बह्वन्यत् कुशलं कर्मास्ति यत्र = येन सहेत्यर्थः, अयमकुशल आवापं गतः = विपक्कः स्वर्गेऽप्यपकर्षमल्पं करिष्यतीति,

तत्त्ववैशारदी ।

कार्य्यदुःखविरोधी, न च स्वाध्यायादिजन्यं दुःखं तत्कार्य्यं, तत्कार्य्यत्वे स्वाध्यायादिविधानानर्थक्यात् बद्धलादेव तदुत्पत्तेः अनुत्पत्तौ वा कुम्भीपाकाद्यपि विधीयेत, अविधाने तदनुत्पत्तेरिति सर्वं चतुरस्रम्, द्वितीयां गतिं विभजते-"प्रधान"इति । प्रधाने कर्मणि ज्योतिष्टोमादिके तदङ्गस्य पशुहिंसाऽऽदेरावापगमनम्, द्वे खलु हिंसाऽऽदेः कार्य्ये, प्रधानाङ्गत्वेन विधानात् तदुपकारः, "मा हिंस्यात्सर्वा भूतानि" इति हिंसायाः निषिद्धत्वादनर्थश्च, तत्र प्रधानाङ्गत्वेनानुष्ठानादप्रधानमेवेत्यतो न झगित्येव प्रधाननिरपेक्षा सती स्वफलमनर्थं प्रसोतुमर्हति किन्त्वारब्धविपाके प्रधाने साहायकमाचरन्ती व्यवतिष्ठते, प्रधानसाहायकमाचरन्त्याश्च स्वकार्य्ये बीजमात्रतयाऽवस्थानं प्रधाने कर्मण्यावापगमनम्, "यत्रेदमुक्तं" पञ्चशिखेन-स्वल्पः सङ्करः = ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसाऽऽदिजन्मनाऽनर्थहेतुनाऽपूर्वेण सपरिहारः = शक्यो हि कियता प्रायश्चित्तेन परिहर्तुम्, अथ प्रमादतः प्रायश्चित्तमपि नाचरितं-

पातञ्जलरहस्यम् ।

नाश्यो न तु दुःखभोगमात्रनाश्य इत्याह-अपि त्विति । वाक्कायमनःक्षोभादिरूपं स्वाध्यायार्थं-जातं दुःखं तत्पापान्तरजं, तस्याध्ययनस्य धर्ममात्रकार्यता, विपक्षे बाधकमाह-तत्कार्यत्व इति । अधर्मस्तत्कार्यं वा दुःखं न विधीयते शास्त्रेणेत्याह—तद्बलादिति । पापः पापेनेति श्रुतेः, पापसंस्कारबलादेव पापोत्पत्तिस्ततो दुःखं न तु तद्द्वयं विधीयते, अतिप्रसङ्गेनेष्टापत्ति-

वार्त्तिकम् ।

श्चाधर्मः तयोराद्येनोत्तरस्य नाशे श्रुतिमुदाहरति—यत्रेदमिति । पुण्यपापरूपे द्वे कर्मणी पुरुषेषु द्विविधे अवधारयितव्ये, द्वे द्वे इति वीप्सा पुरुषभेदात् कर्मभेदमभिप्रेत्योक्ता, यतः पुण्यकृतः पुण्यनिमित्त एको मुख्यो राशिः समूहस्य समूहैकार्यत्वात् पापकस्य पापराशेरपहन्ति चोरस्य निहन्तीतिवत् कर्मणि षष्ठी, तस्मात्सुकृतानि कर्माणि कर्तुमिच्छस्व तच्च कर्म इह लोक एव ते तुभ्यं कवयो वेदयन्ते प्रतिपादयन्ते न तु लोकान्तर इति श्रुत्यर्थः, इच्छस्वेति छान्दसत्वादात्मनेपदम्, द्वितीयां गतिमुदाहरति—प्रधानेति । यत्र यस्मिन्विषये पञ्चशिखाचार्येणेदं वक्ष्यमाणमुक्तं तदेव प्रधानकर्मण्यावापो गमनमित्यन्वयः, "स्यात्स्वल्प" इत्यादिवाक्यस्यायमर्थः, हिंसाऽऽदिजन्यपापेन यागाद्यपूर्वस्य स्वल्प एव संकरः स्यात्सोऽपि सपरिहारः स्वल्पेनैव प्रायश्चित्तेन परिहर्तुं शक्यते यदि च प्रमादतः प्रायश्चित्तं न क्रियते स प्रत्यवमर्षः, बहुसुखमध्ये अन्यद् दुःखं मर्षणयोग्यं भोजननान्तरीयकदुःखवत्, अतः कुशलस्य कर्मणोऽपकर्षाय हेयत्वाय नालं न पर्याप्तः, संकर इति । शेषं करिष्यतीत्यन्तं पञ्चशिखवाक्यं सुगमम्, तृतीयां गति-

याऽलं, कस्मात्? कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यति" इति,

"नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानम्, कथमिति? अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्मणः समानं मरणमभि-

भास्वती।

तृतीयां गतिं व्याचष्टे—कथमिति। ये ह्यदृष्टजन्मवेदनीया नियतविपाकाः कर्मसंस्कारास्तेषामेव मरणं समानं=साधारणं सर्वेषां तादृशसंस्काराणामेकं मरणमेवेत्यर्थः, अभिव्यक्तिकारणम्, न त्वदृष्टजन्मवेदनीयोऽनियतविपाक इत्येवंजातीयकस्य कर्मसंस्कारस्येति, यतः स संस्कारो नश्येद् वा=आवापं वा गच्छेद्, अथो वा चिरमप्यासीत सञ्चित-

तत्त्ववैशारदी।

प्रधानकर्मविपाकसमये विपच्यते, तथाऽपि यावन्तमसावनर्थं प्रसूते तावान् स प्रत्यवमर्षः मृष्यन्ते हि पुण्यसंभारोपनीतसुखसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम् अतः कुशलस्य=महतः पुण्यस्य, नापकर्षाय=प्रक्षयाय, अलं=पर्य्याप्तः,पृच्छति—"कस्माद्" इति। उत्तरं—"कुशलम्" इति। कुशलं हि मे=पुण्यवतो बह्वन्यदस्ति=प्रधानकर्मविपाकतया व्यवस्थितं दीक्षणीयाऽऽदिर्दक्षिणाऽन्तं, यत्रायं=संकरः स्वल्पः, स्वर्गेऽपि =अस्य फले, सङ्कीर्णपुण्यलब्धजन्मनः स्वर्गात् सर्वथा दुःखेनापरामृष्टाद् अपकर्षम् अल्पम्= अल्पदुःखसंभेदं करिष्यतीति, तृतीयां गतिं विभजते—"नियत" इति। बलीयस्त्वेनेह प्राधान्यमभिमतं न त्वङ्गितया, बलीयस्त्वं च नियतविपाकत्वेनान्यदाऽनवकाशत्वाद्, अनियतविपाकस्य तु दौर्बल्यमन्यदा सावकाशत्वात् चिरमवस्थानं बीजभावमात्रेण न पुनः प्रधानोपकारितया तस्य स्वतन्त्रत्वात्, ननु प्रायणमेकमेव कर्माशयोऽभिव्यज्यत इत्युक्तमिदानीं तच्चिरावस्थानमुच्यते तत्कथं परं पूर्वेण न विरुध्यत इत्याशयवान् पृच्छति—"कथम्" इति।

पातञ्जलरहस्यम्।

धुनीते—यागादिविधाने यथा धर्मः तत्फलञ्च सुखं जायते तद्वत्कुम्भीपाकः तज्जन्यं दुःखं बलाज्जायेत इति न सर्वे सुखिनः स्युरिति भावः,

"त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः"

इति स्मृतिमाश्रित्य पुनराह—प्रधान इत्यादिपर्याप्तइत्यन्तेन, तदुपकारः=प्रधानोपकारः तर्हि स्वातन्त्र्येण फलदातृ स्यादिति चेत्तत्राह—तत्र प्रधानेति। न द्रागिति। तत्क्षणात्, आरब्धविपाके फलरूपेण परिणते साहायकमग्नीषोमीयपशुजन्याङ्गापूर्वेण स्वकार्यं दुरितापूर्वजदुःखार्थमिश्रमेवावापगमनं न्यग्भाव इत्यर्थः, असौ=अग्नीषोमीयजा हिंसा, अनर्थं=दुःखं, संभेदं= मिश्रणं, प्राधान्यं बलीयस्त्वं दृष्टं यथा भीमस्य युधिष्ठिरादिपञ्चानां नरके, आङ्गितयेति। तथादर्शनस्य प्रारब्धभोक्तृज्ञानिन इव नियतविपाकत्वेन कालान्तरे भोगसिद्धेः, तदुक्तं—

"प्रारब्धस्य फले ह्यन्ते भोगो ज्ञानं च कर्मणः।
अविरोधस्तयोर्युक्तो विरोधस्त्वितरस्य हि"॥ इति,

अनियतविपाकस्य बलीयसा बाधितत्वेन दुर्बलत्वात् कूटस्थतया स्थितिरित्याह—चिरम-

वार्त्तिकम्।

मुदाहरति—नियतेति। उत्कटत्वरूपं बलवत्त्वमेव प्रधानत्वम्, नन्वेवं कर्मविशेषस्य चिरमवस्थाने सति पूर्वोक्तसर्वकर्मणामेकदैव प्रायणादभिव्यक्तिः कथमुपपद्यत इत्याशयेन शङ्कते—कथमिति। सिद्धान्तमाह—अदृष्टेति। कर्मणः कर्मसामान्यस्य, समानमेकम्, न त्वदृष्टेति। अदृष्टजन्मवेदनीयस्येति प्रसङ्गादुक्तम्, अत्रानियतविपाकस्य वेति वाशब्दः क्व चित्तिष्ठति स वाशब्दोऽप्यर्थः, गतित्रयमुपसंहरति—यत्त्विति। उपासीत=प्रतीक्षेत, विपाकं विपाकारम्भकं-

व्यक्तिकारणमुक्तं, न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य, यत्त्वदृष्टजन्मवेदनीयं कर्मानियतविपाकं तन्नश्येद्, आवापं वा गच्छेद्, अभिभूतं वा चिरमप्युपासीत यावत्समानं कर्माभिव्यञ्जकं निमित्तमस्य न विपाकाभिमुखं करोति इति, तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्मगतिर्विचित्रा दुर्विज्ञाना चेति, न चोत्सर्गस्यापवादान्निवृत्तिरिति, एकभविकः कर्माशयोऽनुज्ञायत इति(१) ॥ १३ ॥

भास्वती ।

स्तिष्ठेद्, यावन्न सरूपं किञ्चित् कर्म तं संस्कारं विपाकाभिमुखं करोति, समानमभिव्यञ्जकमस्य निमित्तं निमित्तभूतं कर्मेत्यन्वयः, कुत्र देशे कस्मिन् काले कैर्वा निमित्तैः किञ्चन कर्म विपक्वं भवेत् तद्विशेषावधारणं दुःसाध्यं योगजप्रज्ञाऽपेक्षत्वात, कर्माशय एकभविक इत्युत्सर्गो य आचार्यैः प्रतिज्ञातो न स उक्तेभ्योऽपवादेभ्यो निवर्त्तेत, यत उत्सर्गाः सापवादा इति ॥ १३ ॥

तत्त्ववैशारदी ।

उत्तरम्—"अदृष्ट" इति । जात्यभिप्रायमेकवचनम्, तदितरस्य गतिमुक्तामवधारयति—"यत्त्वदृष्ट" इति । शेषं सुगमम् ॥ १३ ॥

पातञ्जलरहस्यम् ।

वस्थानमिति ॥ १३ ॥

वार्तिकम् ।

न्याविरुद्धकर्मान्तरमिति शेषः, उपासनस्यावधिमाह —यावदिति । अस्य समानमविरुद्धं कर्माभिव्यक्तौ निमित्तं यावन्नतत्फलोन्मुखीकरोतीत्यर्थः,

"यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोगं च शोकं च माकरी हन्ति सप्तमी"–

त्यादिवाक्यानि तथा कर्मगतेर्दुर्विज्ञानत्ववचनानि चैतादृशकर्मविषयाण्येवेत्याह—तद्विपाकस्येति । अभिभूतकर्मविपाकस्यैव कुत्र कदा केन निमित्तविशेषेण भविष्यतीत्यवधारयितुमशक्यत्वादियमभिभूतकर्मगतिश्चित्रा अद्भुतरूपा दुर्विज्ञाना चेत्यर्थः, नन्वेवमेकभविकत्वं क्षतमित्याशङ्क्याह —न चोत्सर्गस्येति । निवृत्तिः क्षतिरित्यर्थः, क्वचिदपवादेऽप्येकभविकत्वमौत्सर्गिकमेवानुमन्यतेऽस्माभिरित्यर्थः, न चैवमप्यपवादाशङ्कयाऽनाश्वासतादवस्थ्यम्, अपवादस्य स्वानुष्ठानमात्रनिमित्तकतया तद्भित्त्वैव शक्यपरिहारत्वादिति, यच्चाधुनिकवेदान्तिभिरेकभविकमतं व्यभिचारेण दूषितं तदज्ञानादेव, औत्सर्गिकतामात्रस्य भाष्यकृतोक्तत्वादिति सर्वं सुस्थम् ॥ १३ ॥

(१) इतीति । अयमत्र निष्कर्षः—प्रथमं तावत् कर्माशयो द्विविधो दृष्टजन्मवेदनीयोऽदृष्टजन्मवेदनीयश्च, अर्थाद् वर्त्तमानजन्मभोग्यो भविष्यज्जन्मभोग्यश्च, द्विविधोऽप्येष पुनर्द्विधा—नियतविपाकोऽनियतविपाकश्च, अत्र चतुर्विधेष्वेषु—

यो ह्यदृष्टजन्मवेदनीयो नियतविपाकः स जन्मायुर्भोगहेतुत्वात् त्रिविपाकः, एकभवोऽस्यास्ति कार्यत्वेनेत्येकभविकः साधारणनियमानुसारित्वादौत्सर्गिकश्चोच्यते,

एतदभिप्रायकमेव—

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि"
"अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्"

इत्यादिशास्त्रम्,

**ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥**

ते = जन्मायुर्भोगाः, पुण्यहेतुकाः सुखफलाः, अपुण्यहेतुका दुःखफला-

भास्वती ।

त इति । पुण्यं यमनियमदयादानानि तद्धेतुका जन्मायुर्भोगाः सुखफला अनुकूलवेदनीया भवन्ति, सुखात्मभोगाज्जन्मायुषी प्रार्थनीये भवत इत्यर्थः, तद्विपरीता-

तत्त्ववैशारदी ।

उक्तं क्लेशमूलत्वं कर्मणः, कर्ममूलत्वञ्च विपाकानाम्, अथ विपाकाः कस्य मूलं ? येनामी त्यक्तव्या इत्यत आह—"ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वाद्" इति, सूत्रं व्याचष्टे— "ते जन्मायुर्भोगा" इति, यद्यपि जन्मायुषोरेव ह्लादपरितापपूर्वभावितया तत्फलत्वं, न

पातञ्जलरहस्यम् ।

यथा क्लेशकर्मणोर्हेतुकार्यते कर्मविपाकयोरपि तथा विपाकस्य किं मूलमस्तीति येन त्यक्तव्यास्ते तत्राह—'ते ह्लादतापपरितापफलाः पुण्यापुण्यहेतुत्वात्', तत्र जात्यायुर्भोगा ये पुण्या-

वार्त्तिकम् ।

इदानीमुक्ताभ्यां कर्मतद्विपाकाभ्यां क्लेशानां मुख्यफलमाह—

"ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्", ते विपाकाः सर्व एव समुचितसुखदुःखफलकाः समुचितपुण्यपापहेतुकत्वादित्यर्थः, अत्र सुखावच्छेदेन पुण्यहेतुका दुःखावच्छेदेन पापहेतुका-इति विभज्य प्रतिपादयति—ते जन्मायुरित्यादिना । सुखदुःखयोश्च फलत्वं भोग्यतयेति प्रागेव व्याख्यातं, विपाकान्तरगतभोगश्च शब्दाद्याकारवृत्तिरेवेति तस्यापि सुखदुःखहेतुत्वमुपपन्नम्, तदेवमनेकसूत्रैः प्रोक्तमविद्याया दुःखनिदानत्वं न्यायाचार्यैरेकसूत्रेणैवाभिहितं, "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग" इति, का... ज्ञानादेव

यस्तु दृष्टजन्मवेदनीयोऽनियतविपाकः स भगवत्तदीयजनकृपाऽऽदितस्तदपराधाच्चात्युत्कटसुकृतदुष्कृतरूपोऽत्रैव जन्मनि भोगस्यायुषो वोभयोर्वा हेतुत्वादेकविपाको द्विविपाको वा भवत्यस्य कादाचित्कत्वादपवादकः कथ्यते किल,

एतदाशयकमेव—

"त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः।
अत्युग्रपुण्यपापानामिहैव फलमश्नुते" ॥

इत्यादिवचनजातम्,

यश्चादृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतिः—अत्राद्या तु कृतस्याविपक्वस्य नाशः, प्रमाणं चात्र "द्वे द्वे ह वै कर्मणी" इत्यादिर्भगवती श्रुतिरेव, द्वितीया तावत् प्रधानकर्मण्यावापः—अर्थाद् यथा तृणबीजानां प्रधानधान्यबीजैः साकमेवोत्पत्तिकुसूलादिस्थितिवपनानि न स्वातन्त्र्येण तथैव प्रधानयागादिफलोदयसमय एव तदङ्गपशुहिंसाऽऽदेरपि फलादिः, इयमेव गतिः "स्यात् स्वल्पः सङ्कर" इत्यादिना पञ्चशिखाचार्येणोक्ता, तृतीया च—नियतविपाकत्वेनान्यदाऽनवकाशत्वनिबन्धनबलीयस्त्वेन प्राधान्यभाजा कर्मणाऽभिभूतस्य निर्बलत्वेन चिरमवस्थितिः,

एवं चास्य निर्बलस्य स्वरूपेणानियतत्वात् पूर्वशरीरावच्छिन्नमरणकालेऽभिव्यक्ततजन्मावच्छिन्नायावत्कर्मकूटस्य सम्भूयसम्मूर्छनेऽपि न विरोधस्तेषां नियतत्वाद्, एनामेव गतिमनुरुन्धानानि "गहना कर्मणो गतिः" "दैवी विचित्रा गतिः" इत्यादीनि वचनानि सन्ति,

यश्च तुरीयत्वेनावशिष्टोऽस्ति—दृष्टजन्मवेदनीयो नियतविपाकः सोऽपि भविष्यत्यादृष्टैरुक्तस्यादृष्टजन्मवेदनीयनियतविपाकस्यैवोदितत्वावस्थाशालित्वेनोक्तप्राय इति निखिलमवदातम् ।

इति, यथा चेदं दुःखं प्रतिकूलात्मकमेवं विषयसुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः ॥ १४ ॥

भास्वती ।

अपुण्यहेतुकाः, अनुकूलात्मसुखमपि विवेकिभिर्योगिभिर्दुःखपक्षे निःक्षिप्यते वक्ष्यमाणेन हेतुना ॥ १४ ॥

तत्त्ववैशारदी ।

तु भोगस्य ह्लादपरितापोदयानन्तरभाविनस्तदनुभवात्मनः, तथाऽप्यनुभाव्यतया भोग्यतया भोगकर्मतामात्रेण भोगफलत्वमिति मन्तव्यम्, नन्वपुण्यहेतुका जात्यायुर्भोगाः परितापफला भवन्तु द्वयाः प्रतिकूलवेदनीयत्वात्, कस्मात्पुनः पुण्यहेतवस्त्यज्यन्ते सुखफला अनुकूलवेदनीयत्वाद्, न चैषां प्रत्यात्मवेदनीयाऽनुकूलता शक्या सहस्रेणाप्यनुमानागमैरपाकर्तुम्, न च ह्लादपरितापौ परस्पराविनाभूतौ, यतो ह्लाद उपादीयमानेऽवर्जनीयतया परितापोऽप्यापतेत्, तयोर्भिन्नहेतुकत्वाद् भिन्नरूपत्वाच्चेत्यत आह—“यथा चेदम्” इति। यद्यपि न पृथग्जनैः प्रतिकूलात्मतया विषयसुखकाले संवेद्यते दुःखं, तथाऽपि योगिभिस्तत्संवेद्यत इति ॥ १४ ॥

पातञ्जलरहस्यम् ।

स्ते सुखहेतवोऽपुण्या दुःखहेतव इति सूत्रार्थः, तत्र भोगस्याकिञ्चित्करत्वमाशङ्क्य सुखदुःखसाक्षात्काररूपस्य भोगस्यानुभाव्येन भोग्येन विषये यः सम्बन्धोऽस्तीति तस्य भोगफलत्वमित्यर्थः पुण्यमुदर्कानर्थहेतुः कार्यत्वादपुण्यवदिति चेत्तत्र सर्वजनीनानुभवविरोध इत्याह-न चैषामिति। ननु मधुविषसंपृक्तदुःखानुविद्धत्वात् सुखमपि हेयमिति चेत्तत्राह-न चाह्लादेति। भिन्नरूपत्वमनुकूलप्रतिकूलवेदनीयत्वेन विशेषः, पृथग्जनैः भ्रान्तैः, अहिस्पर्शो यथा बालानां सुखदस्तथाऽत्यन्तमनुरागिणामिति भावः ॥ १४ ॥

वार्त्तिकम् ।

हि कार्यानुत्पाद इति, तदेवं दुःखनिदानतया क्लेशानां हेतुत्वमुक्तम्, ननु सत्र विपाकाः कथं-सुखदुःखफलकाः ब्रह्मलोकादौ दुःखासंभिन्नसुखमस्त्यादित्याशङ्क्य परिहरति -यथा चेदमिति। यथा चेदं परिदृश्यमानं रोगादिदुःखं प्रतिकूलात्मकत्वेन्यस्वभावं भवति एवं सर्वत्रैव विषयसुखकालेऽपि दुःखं योगिनां प्रतिकूलात्मकं तिष्ठतीत्यर्थः, दुःखतत्साधनयोरेकरूपेण ग्रहणाय प्रतिकूलात्मकमित्युक्तम्, मूढानां दुःखसमुद्रमग्नानां सुखनान्तरीयकसूक्ष्मदुःखेषु दृष्टिर्नास्तीति योगिन इत्युक्तम्, तथा च लौकिकदुःखमिव विषयसुखमपि दुःखशबलतया दुःखत्वेन हेयमेवेति भावः, यद्यपि स्वर्गादौ सुखमधिकं तथाऽप्यल्पमपि दुःखं बलवद्द्वेषविषयो भवति, बलवत्त्वं च सुखाभिलाषाभिभावकत्वम्, तथा च सांख्यसूत्रम्--“यथा दुःखाद् द्वेषः पुरुषस्य न तथा सुखादभिलाष” इति, अस्मिन्सूत्रे सुखदुःखयोरेव कर्मविपाकफलत्ववचनाद् जीवन्मुक्तानामपि प्रारब्धविपाकेषु सुखदुःखे शारीरे भवत एव आभिमानिके तु न भवतः तत्कारणक्लेशाभावादिति सिद्धान्तः, तथा च श्रुतिः—“न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति” इति,

“आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंचरेदि”ति च,

स्मृतिश्च—

‘वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यत’ इति ॥ १४ ॥

कथन्तदुपपद्यते—

**परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥**

सर्वस्यायं रागानुविद्धश्चेतनाचेतनसाधनाधीनः सुखानुभव इति तत्रा-

भास्वती ।

सर्वस्येति । रागेणानुविद्धः = सम्प्रयुक्तः, चेतनानि = पुत्रादीनि, अचेतनानि = गृहादीनि, साधनानि = उपकरणानि तेषामधीनः सुखानुभवस्तथा द्वेषमोहजोऽप्यस्ति कर्माशय. इत्येवं रागद्वेषमोहजो मानसः कर्माशय इत्यस्माभिरुक्तम्, ततः शारीरोऽपि कर्माशयो-भवति, यतो भूतानि प्राणिनोऽनुपहत्य = नोपहत्य, अस्माकमुपभोगो न सम्भ-

तत्त्ववैशारदी ।

प्रश्नपूर्वकं तदुपपादनाय सूत्रमवतारयति—कथं तदुपपद्यत इति ।

"परिणामेत्यादि—विवेकिन" इत्यन्तं सूत्रम्, परिणामश्च तापश्च संस्कारश्च एतान्येव दुःखानि तैरिति, परिणामदुःखतया विषयसुखस्य दुःखतामाह—"सर्वस्यायम्" इति । न खलु सुखं रागानुवेधमन्तरेण सम्भवति न ह्यस्ति सम्भवो न तत्र तुष्यति ।तच्च तस्य सुखमिति, रागस्य च प्रवृत्तिहेतुत्वात्प्रवृत्तेश्च पुण्यापुण्योपचयकारित्वात् तत्रास्ति रागजः कर्मा-

पातञ्जलरहस्यम् ।

पृच्छति—कथमिति । उत्तरयति—तदित्यादिना—"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिन" इति, द्वन्द्वान्ते श्रूयमाणः प्रत्येकमभिसंबध्यत इति न्यायेनाह—एतान्येव दुःखानीति ।

"रमणान्ते च या मतिः,
सा यदि स्थिरतां याति को न मुच्येत बन्धनाद्" इति-

स्मृतेर्यत्र स्त्रीरतिसुखं परिणामे दुःखं तत्र किमन्यत्, कष्टं कर्मेत्यनुभवादाह—प्रवृत्तेश्चेति । "यन्मनसा ध्यायति तद्वाचाऽभिलपति कर्मणा चोपपादयती"ति श्रुतिमाश्रित्याह-

वार्त्तिकम् ।

सूत्रान्तरमवतारयितुं सुखस्यापि ज्ञानिदृष्ट्या दुःखत्वे हेतुं पृच्छति—कथमिति । तदुपपादकतयोत्तरसूत्रमवतारयति—तदुपपद्यत इति—

"परिणामतापसंस्कारदुःखैर्गुणवृत्त्यविरोधाच्च दुःखमेव सर्वं विवेकिनः" परिणामश्च तापश्च संस्कारश्च तज्जानि दुःखानि तैः संबन्धात् तत्कारणत्वादिति यावत्, तथा गुणवृत्त्यविरोधाच्चार्थेता दुःखसंभिन्नत्वाच्च प्रकृतितत्कार्यसुखादिकं सर्वं दुःखमेव विवेकिनः, सुखदुःखतत्त्वसाक्षात्कारिणा मतमिति वाक्यार्थः, प्रतिपदं च व्याख्या भाष्ये भविष्यति, एवकारेण चानुकूलात्मकसुखरूपता व्यवच्छिन्ना, यद्यप्ययोगिनोऽपि दुःखमेव सर्वं तथाऽपि स मूढत्वात्सुखकाले दुःखतया न जानाति योगी तु सुखकालेऽपि तस्य दुःखात्मकत्वं पश्यतीति प्रतिपादयितुं विवेकिन इत्युक्तम्, ननु सुखसाधनतया सुखसंभिन्नतया च सुखमेव कथं सर्वं न भवतीति चेद् न—दुःखेषु बलवद्द्वेषस्योक्तत्वात्, सामान्यतो बाहुल्यस्याप्यत्र नियमाकत्वाच्च "वैशेष्यात्तद्वाद" इति न्यायात्, तदुक्तं विष्णुपुराणे—

"कलत्रमित्रपुत्रार्थगृहक्षेत्रधनादिकैः ।
क्रियते न तथा भूरि सुखं पुंसां यथाऽसुख" मिति,

संसारे च सुखापेक्षया च दुःखबाहुल्यं जैगीषव्यावट्यसंवादे व्यक्तीभविष्यतीति, तत्र परिणामदुःखहेतुतया सुखस्यापि दुःखतां प्रतिपादयति—सर्वस्यायमिति । उत्सर्गतः सर्वलोकस्य-

**स्ति रागजः कर्माशयः, तथा च द्वेष्टि दुःखसाधनानि मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति कर्माशयः, तथा चोक्तम्—नानुपहत्य भूतान्युपभोगः सम्भवतीति हिंसाकृतोऽप्यस्ति शारीरः कर्माशय इति, विषयसुखं चावि-**

भास्वती ।

वति तस्मात् कायिककर्मजातः शारीरः कर्माशयोऽप्युत्पद्यत उपभोगरतस्य, रागादिमनोभावमात्राज्जातो मानसः कर्माशयस्तथा मिलितेन मानसेन शारीरेण च कर्मणा निष्पन्नः शारीरः कर्माशयः, विषयेति । एतत्पादस्य पञ्चमसूत्रभाष्ये विषयसुखमविद्येत्युक्तमस्माभिरित्यर्थः, येति । न केवलं विषयसुखमेव सुखं किन्तु—अस्ति निरवद्यं-

तत्त्ववैशारदी ।

शयः, असतोऽनुपजननात्, तदा च सुखं भुञ्जानस्तत्र सक्तो विच्छिन्नावस्थेन द्वेषेण द्वेष्टि दुःखसाधनानि, तानि परिहर्त्तुमशक्तो मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति कर्माशयः, द्वेषवन्मोहस्यापि विपर्ययापरनाम्नः कर्माशयहेतुत्वमविरुद्धम्, ननु कथं रक्तो द्वेष्टि मुह्यति वा रागकाले द्वेषमोहयोरदर्शनादित्यत आह—"तथा चोक्तम्" इति । विच्छिन्नावस्थान् क्लेशानुपपादयद्भिरस्माभिः, तदनेन वाङ्मनसप्रवृत्तिजन्मनो पुण्यापुण्ये दर्शिते इति, रागादिजन्मनः कर्तव्यमिदमिति मानसस्य सङ्कल्पस्य साभिलापत्वेन वाचनिकत्वस्याप्यविशेषाद्, यथाहुः—

"साभिलाषश्च सङ्कल्पो वाच्यार्थान्नातिरिच्यते"—

इति, शारीरमपि कर्माशयं दर्शयति— "नानुपहत्य" इति । अत एव धर्मशास्त्रकाराः—

पातञ्जलरहस्यम् ।

मानसप्येति ।

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति

स्मृतिमाश्रित्याह–शारीरमपि "चुल्लीकण्डनीपेषणीमार्जनीचोदकुम्भीतिपञ्चसूनेति श्रुतिमाश्रित्याह–नानुपहत्येति।बहूनामनुग्रहो न्याय्य इत्याशङ्क्ते–स्यादेतदिति। शतमप्यन्धा-

वार्त्तिकम् ।

सुखानुभवकाले तत्र सुखे रागो जायते रागाच्च सुखमिदं मे स्थिरं भवतु परमेश्वर!मा नश्यत्वित्यादि संकल्पात्मको मानसः कर्माशयो धर्माधर्मरूपो भवति, कर्माशयाच्च जन्मादिदुःखमिति प्रागेवोक्तमित्यर्थः, सुखभोगकाले रागजकर्माशयवद् द्वेषमोहजोऽपि कर्माशयः परिणामदुःखहेतुरस्तीत्याह—तथा च द्वेष्टीति । तथा च सुखभोगकाले तद्विरोधितया दुःखसाधनानि द्वेष्टि सुखभ्रंशे दुःखं मे मा भूत् शत्रुश्च मे नश्यत्वित्यादिरूपेण, तथा दुःखसाधनानि परिहर्तुमशक्तो मुह्यति चेत्यतो द्वेषमोहकृतोऽप्यस्ति कर्माशय इत्यर्थः, रागद्वेषमोहानां च प्रवृत्त्यादिद्वारेणैव साक्षादप्यदृष्टहेतुत्वमस्तीति, तथा चोक्तमिति—सुखस्य रागानुबद्धत्वं च मयैवोक्तं सुखानुशयी राग इति सूत्रे सुखाभिज्ञस्येत्यादिभाष्येणेत्यर्थः, मानसकर्माशयद्वारा सुखस्य परिणामदुःखत्वं प्रतिपाद्य शरीरकर्माशयद्वाराऽपि तदाह–नानुपहत्येति । शारीरः कर्माशय इति।सुखभोगकाल इति शेषः, एताभ्यां च मानसशारीराभ्यां कर्माशयाभ्यां वाचनिकोऽपि कर्माशयः शपाशीर्वादज उपलक्षणीयः, सुखस्यापि परिणामदुःखसंबन्धेन दुःखत्वेऽविद्यासूत्रं प्रमाणीकृत्योपपादयति—विषयसुखं चेत्यादिना, ननु सर्वदुःखान्त एवेदं वक्तुमुचितमिति चेन्न–सुखस्याविद्यात्वोपपादनकाल एव दृष्टद्वाराऽपि परिणामदुःखमुपदेष्टुमादावेव विषयसुखस्याविद्यात्वप्रतिपादनाद् अत्र च वक्ष्यमाणपारमार्थिकसुखव्यावर्त्तनाय विषयेत्युक्तम्, अविद्याविषयपदार्थानां बुद्धिमात्रतया सुखमविद्येत्यभेदनिर्देशः, भोगेन सुखं भवतीत्येवंरूपा

चेत्युक्तम्, या भोगेष्विन्द्रियाणां तृप्तेरुपशान्तिस्तत्सुखं या लौल्यादनुपशान्तिस्तद् दुःखं,

भास्वती।

पारमार्थिकं सुखं यद् भोगेष्विन्द्रियाणां तृप्तवैतृष्ण्याज्जाताया उपशान्तेः = अप्रवर्त्तनायाः, जायते, दुःखञ्च लौल्याद् याऽनुपशान्तिस्तद्रूपम्, किन्तु नेदं पारमार्थिकं सुखं भोगा-

तत्त्ववैशारदी।

"पञ्चसूना गृहस्थस्य" इत्याहुः, स्यादेतद्—न प्रत्यात्मवेदनीयस्य विषयसुखस्य प्रत्याख्यानमुचितं योगिनाः अनुभवविरोधादित्यत आह—"विषयसुखं चाविद्येत्युक्तम्" इति। चतुर्विधविपर्य्यासलक्षणामविद्यां दर्शयद्भिरिति, नापातमात्रमाद्रियन्ते वृद्धाः, अस्ति खल्वापाततो मधुविषसम्पृक्तान्नोपभोगेऽपि सुखानुभवः प्रत्यात्मवेदनीयः किन्त्वायत्यामसुखम्, इत्थं च दर्शितं भगवतैव—

"विषयेन्द्रियसंयोगाद् यत्तदग्रेऽमृतोपमम्।
परिणामे विषमिव तत्सुखं राजसं स्मृतम्" इति,

चोदयति—"या भोगेषु" इति। न वयं विषयाह्लादं सुखमातिष्ठामहे, किन्त्ववतृप्यतां पुंसां तत्तद्विषयप्रार्थनया परिक्लिष्टचेतसां तृष्णैव महद् दुःखं, न चेयमुपभोगमन्तरेण शाम्यति, न चास्याः प्रशमो रागाद्यनुविद्ध, इति नास्य परिमाणदुःखेनेति भावः, तृप्तेः = तृष्णाक्षयाद् हेतोः इन्द्रियाणामुपशान्तिः = अप्रवर्त्तनं विषयेष्वित्यर्थः, एतदेव व्यतिरेकमुखेन स्पष्टयति—

पातञ्जलरहस्यम्।

न पश्यन्तीति न्यायमाश्रित्याह–विषयसुखञ्चेति। नापातमात्रमुदर्कानर्थस्तदेवाह–अस्तीति।

"यत्तदग्रे विषमिव परिणामेऽमृतोपमम्।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्" इति

भगवदुक्तिमाश्रित्य—अस्ति निरुपधिसुखमित्याह—तृप्तेरिति।

"तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्"—

वार्त्तिकम्।

भोगजदुःखे सुखबुद्धिरविद्या, सा चाविद्या न तत्सूत्रे विवेचिताः अतोऽत्र तामविद्यां प्रतिपादयन्नेव प्रकारान्तरेण परिणामदुःखं दर्शयति—या भोगेष्विति। तत्रादौ पारमार्थिके सुखदुःखे कथयति—तद् दुःखमित्यन्तेन, अयं भावः–विषयसुखं पारमार्थिकसुखं न भवति दुःखबहुलत्वेन दुःखसम्भिन्नत्वेन च विवेकिनां निरुपाधिप्रियत्वाभावात्, सुखानुशयी राग इतिसूत्रानुसारेण निरुपधिप्रियत्वस्यैव सुखलक्षणत्वादिति, अतः शान्तिश्चित्तस्य व्यापारोपरमस्तन्निमित्तिका दुःखनिवृत्तिरिति यावत्, सैव पारमार्थिकं सुखं, "सुखं दुःखसुखात्यय" इति स्मरणात्, तृष्णाऽऽदिदुःखासम्भिन्नतया विशेषदर्शिनमपि निरुपधिप्रियत्वाच्च, तस्य च साधनं भोगेष्विन्द्रियाणां तृप्तिरिच्छाविच्छेद एव, तथा च श्रुतिः–"स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्ये"ति, स्मृतिश्च—

"न चाभावयतः शान्तिरशान्तस्य कुतः सुखमि"ति,

अत्र विषयसुखशब्देन चित्तस्य शान्तिनिमित्तकाल्हादोऽपि गृहीतः तस्यापि दुःखसम्भिन्नत्वेन दुःखत्वस्याविद्यालक्षणे विवक्षितत्वाद् इति, या लौल्यादिति। या चेन्द्रियाणां लौल्याद् भोगतृष्णातश्चित्तस्यानुपशान्तिर्वृत्तिचाञ्चल्यं तद्दुःखं दुःखबाहुल्येन निरुपधिद्वेष्यत्वादित्यर्थः, सुखदुःखयोस्तत्साधनयोश्चैवं निर्णये सति विषयसुखस्य तत्साधनभोगस्याविद्यकमेव सुखत्वं तत्साधनत्वं च लब्धम्, अतश्च विषयसुखस्य परिणामदुःखत्वमित्येतत्प्रघट्टके-

न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्त्तुं शक्यम्, कस्माद् ? यतो भोगाभ्यासमनु विवर्द्धन्ते रागाः कौशलानि चेन्द्रियाणामिति, तस्मादनुपायः सुखस्य भोगाभ्यास इति, स खल्वयं वृश्चिकविषभीत इवाशीविषेण दष्टो यः सुखार्थी विषयानुवासितो महति दुःखपङ्के निमग्न इति, एषा परिणामदुःखता नाम प्रतिकूला सुखावस्थायामपि योगिनमेव क्लिश्नाति, अथ का तापदुःखता ? सर्वस्य द्वेषानुविद्धश्चेतनसाधनाधीनस्तापानुभव इति, तत्रास्ति द्वेषजः कर्माशयः, सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा परिस्पन्दते, ततः परमनुगृह्णात्युपहन्ति च इति परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति, स कर्माशयो लोभान्मोहाच्च भवति,

भास्वती।

भ्यासाल्लभ्यमित्याह—न चेति । यद्वा=सर्वसुखस्य लक्षणं भोगेष्विन्द्रियाणां तृप्तिस्तर्पणम्, तज्जा या सामयिक्युपशान्तिः सा, दुःखञ्च तद्विपरीतमिति,

यत इति । रागा भोगाभ्यासं तथेन्द्रियाणां कौशलं विषयलोलतामनु विवर्धन्ते =अनुक्षणं विवर्धितां कुर्वन्ति, स इति । विषयानुवासितो विषयेषु प्रवर्त्तनकारिण्या रागादिवासनया वासितः समापन्नः, एषेति । विवेकिनः =वश्यात्मानो योगिनो भोगसुखस्येयं परिणामदुःखतां विचिन्त्य सुखसम्पन्ना अपि भोगसुखं प्रतिकूलमेव मन्यन्ते,

तत्त्ववैशारदी।

"या लौल्याद्" इति । परिहरति-"न चेन्द्रियाणाम्" इति । हेतावनोः प्रयोगः, सत्यं तृष्णाक्षयः सुखमनवद्यं, तस्य तु न भोगाभ्यासो हेतुरपि तु तृष्णाया एव तद्विरोधिन्याः, यथाहुः—

"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" इति,

शेषमतिरोहितम्, तापदुःखतां पृच्छति—"अथ का" इति । उत्तरमाह—"सर्वस्य" इति । सर्वजनप्रसिद्धत्वेन तत्स्वरूपप्रपञ्चमकृत्वा तापदुःखताऽपि परिणामदुःखतासमतया

पातञ्जलरहस्यम् :

इत्युक्तेः, लौल्यादासक्तेः अनुवर्द्धते इत्यत्रानुप्रत्यानामनेकार्थत्वमिति न्यायादाह-हेतावनोरिति । ज्ञानिनो नित्यवैरिणेति भगवदुक्तिमाश्रित्याह-सुखावस्थायामपीति । चेतनं = स्त्र्यादि, अचेतनं = वस्त्रालङ्कारादि, परिस्पन्दते चेष्टते मित्रमनुगृह्णात्यनुकूले शत्रुमपहन्ति प्रतिकूल-

वार्त्तिकम्।

नाह—न चेन्द्रियाणामित्यादिना मग्न इत्यन्तेन, भोगाभ्यासमन्विति । तथा चोक्तं-

"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" इति,

वृश्चिकेति । वृश्चिकविषभीतः कामादिक्षुद्रदुःखभीतस्तन्निवृत्त्याख्यसुखार्थी स्त्रीपुत्रादिमयमहादुःखसर्पदष्ट इति दृष्टान्तार्थः, विषयानुवासित इति । परिणामदुःखपङ्कमग्नतायां हेतुरुक्तः विषयसंस्कारसंस्कृत इत्यर्थः, परिणामदुःखमुपसंहरन्नेव विवेकिन इतिविशेषणं व्याचष्टेमाह—एषा परिणामेति । दुःखता दुःखसमूहो जनतेतिवत् प्रतिकूला = उद्वेजका, सुखावस्थायामपि योगिनमेव क्लिश्नातीति दुःखाकरोतीत्यर्थः, "भूतं पश्यन्ति बर्बरा" इति न्यायेनायोगिनस्तु भोगासकाल एव विषयसुखं दुःखाकरोति योगिनं तु स्वकाल एवानागतदुःखदर्शनेन दुःखाकरोतीति भावः, क्रमप्राप्तं तापदुःखं व्याख्यातुं पृच्छति—अथ केति । तापो दुःखं किं तापदुःखस्य दुःखसामान्यमित्यर्थः, उत्तरं—सर्वस्येति । पूर्ववदेव व्याख्येयम्, पूर्वं सुखानुभवो रागानुविद्ध उक्त इदानीं-

इत्येषा तापदुःखतोच्यते, का पुनः संस्कारदुःखता ? सुखानुभवात् सुखसंस्काराशया, दुःखानुभवादपि दुःखसंस्काराशय इति,

एवं कर्मभ्यो विपाकेऽनुभूयमाने सुखे दुःखे वा पुनः कर्माशयप्रचय इति, एवमिदमनादि दुःखःस्रोतो विप्रसृतं योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति, कस्माद् ? अक्षिपात्रकल्पो हि विद्वानिति, यथोर्णातन्तुरक्षिपात्रे

भास्वती।

एवं रागकाले सत्यपि सुखानुभवे पश्चात् परिणामदुःखता, द्वेषकाले तु तापोऽनुभूयते, परिस्पन्दते = चेष्टते, तापानुभवात् परानुग्रहपीडे ततश्च धर्माधर्मौ, किञ्च द्वेषमूलोऽपि सधर्माधर्मकर्माशयो लोभमोहसम्प्रयुक्त एवोत्पद्यते, एवं तापादादावन्ते च दुःखसन्ततिः,

एवमिति। एवं कर्मभ्यो जाते सुखावहे दुःखावहे वा विपाके तत्तद्वासनाः प्रचीयन्ते, वासनायाः पुनः कर्माशयप्रचय इति, इतरन्त्विति। इतरमयोगिनं प्रतिपत्तारं तापा अनुप्लवन्त इत्यन्वयः, किम्भूतं प्रतिपत्तारं = येन स्वकर्मणोपहतम् = उपार्जितं दुःखं तथा च दुःखमुपात्तम् उपात्तं त्यजन्तं त्यक्तं त्यक्तमुपाददानं तादृशं प्रतिपत्तारम्, तथा चानादि-

तत्त्ववैशारदी।

प्रपञ्चितेति, संस्कारदुःखतां पृच्छति का इति। उत्तरं—"सुखानुभव" इति। सुखानुभवो हि संस्कारमाधत्ते, स च सुखस्मरणं, तच्च रागं, स च मनःकायवचनचेष्टां, सा च पुण्यापुण्ये, ततो विपाकानुभवस्ततो वासनेत्येवमनादिता इति, अत्र च सुखदुःखसंस्काराशयात्तत्स्मरणं, तस्माच्च रागद्वेषौ, ताभ्यां कर्माणि, कर्मभ्यो विपाक इति योजना, तदेवं दुःखस्रोतः प्रसृतं योगिनमेव क्लिश्नाति नेतरं पृथग्जनमित्याह—"एवमिदमनादि" इति। इतरं तु त्रिपर्वाणस्तापा अनुप्लवन्त इति सम्बन्धः, आधिदैविकाधिभौतिकयोस्तापयोर्बाह्यत्वेनैकत्वं विवक्षितम्, चित्ते वृत्तिरस्या इत्यविद्या चित्तवृत्तिः, तया हातव्य एव बुद्धीन्द्रियशरीरादौ दारा-

पातञ्जलरहस्यम्।

इत्यर्थः, अहो कष्टं हि संस्कारः प्रलयेऽपि न क्षयीत्याह–सुखानुभवो हीत्यादि–अनादितेत्यन्तेन, पृथग्जनानां परिणामतापसंस्कारभेदेन त्रिपर्वाणश्चाध्यात्मिकादिभेदेन, चित्तवृत्तिविवृतस्य स्वातन्त्र्यं निराह–चित्ते वृत्तिरिति, अहङ्कारममकारयोर्विषयभेदं दर्शयति–बुद्धीत्यादिना,

वार्त्तिकम्।

च दुःखानुभवो द्वेषानुविद्ध उच्यत इत्येव विशेष इति, स कर्माशय इति। सन्तापकालीनः कर्माशयो द्वेषेणेव रागमोहाभ्यामपि पूर्ववन्मानसो भवतीत्यर्थः, मानसं परिस्पन्दनं यदुक्तं तत्कायिकहिंसाऽऽर्थमेव न तु स्वातन्त्र्येण मानसकर्माशयहेतुरतो न पौनरुक्त्यम्, यद्यपि तापदुःखतायामपि परिणामदुःखतैवात्र प्रदर्श्यते तथाऽपि पूर्वकाल उत्तरकाले च सर्वदैव दुःखत्वात् तापजदुःखस्य परिणामदुःखात् पृथङ्निर्देशः, अतः परिणामाद् दुःखमिति बोध्यम्, क्रमप्राप्तं संस्कारदुःखं पृच्छति–का पुनरिति। सुखदुःखसंस्कारजन्यदुःखसामान्यमित्यर्थः, उत्तरं–सुखानुभवादिति। अत्रेयं प्रक्रिया—आदौ सुखदुःखानुभवैस्तत्संस्काराशयोऽनुद्बुद्धसंस्कारस्ततः कालादिविशेषैस्तदुद्बोधः ततः स्मृतिस्ततो रागद्वेषौ तयोश्च प्रवृत्तिः ततश्च पुनर्दुःखमिति, ज्ञानसंस्काराद् दुःखं प्रतिपाद्य धर्माधर्मरूपात् कर्मसंस्कारादपि दुःखं प्रतिपादयति—एवं कर्मभ्य इति। सुखदुःखरूपे विपाक इत्यन्वयः, नन्वियमपि परिणामदुःखतैवेति चेत्? सत्यं तथाऽपि संस्कारपरम्पराया अनन्तदुःखप्रतिपादनाय गोबलीवर्दन्यायेनास्य दुःखस्य पृथगुपन्यासो बोध्यः, विवेकिन इति विशेषणस्याभिप्रायं विस्तरतः सकलदुःखसाधारणमाह–एवमिदमिति। स्वाभाविकतयाऽनन्तत्वलाभायानादीत्युक्तं स्रोतसो विशेषणम्, विप्रसृतमिति।

न्यस्तः स्पर्शेन दुःखयति नान्येषु गात्रावयवेषुः एवमेतानि दुःखान्य-क्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरं प्रतिपत्तारम्, इतरं तु स्वकर्मोपहृतं-दुःखमुपात्तमुपात्तं त्यजन्तं त्यक्तं त्यक्तमुपाददानमनादिवासनाविचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिवाविद्यया हातव्य एवाहङ्कारममकारा-नुपातिनं जातं जातं बाह्याध्यात्मिकोभयनिमित्तास्त्रिपर्वाणस्तापा अनुप्ल-वन्ते, तदेवमनादिदुःखस्रोतसा व्युह्यमानमात्मानं भूतग्रामं च दृष्ट्वा योगी सर्वदुःखक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यत इति,

गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः प्रख्याप्रवृत्तिस्थिति-रूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रा भूत्वा शान्तं घोरं मूढं वा प्रत्ययं-

भास्वती।

वासनाविचित्रया चित्तवृत्त्या = चित्तस्थितयेत्यर्थः, अविद्यया समन्ततोऽनुविद्धं प्रतिपत्ता-रम्, अपि च हातव्य एव देहादौ धनादौ च यावहङ्कारममकारौ तयोरनुपातिनम् = अ-नुगतं ततश्च जातं जातं पुनः पुनर्जायमानमित्यर्थः, प्रतिपत्तारमाध्यात्मिकादयस्त्रिपर्वाण-स्तापा अनुप्लवन्त इति,

न केवलं दुःखमौपाधिकमपि तु वस्तुस्वाभाव्यादपि दुःखमवश्यम्भावीत्याह-गुणेति। गुणानां या वृत्तयः सुखदुःखमोहास्तेषां विरोधादभिभाव्याभिभावकस्वभावाच्चापि विवे-किनः सर्वमेव दुःखं, कथं तदाह—प्रख्येति। प्रकाशक्रियास्थितिस्वभावा बुद्धिरूपेण

तत्त्ववैशारदी।

पत्यादौ चाहङ्कारममकारानुपातिनमिति, तदत्र न सम्यग्दर्शनादन्यत्परित्राणमस्तीत्याह— "तदेवम्" इति। तदेवमौपाधिकं विषयसुखस्य परिणामतः संस्कारतस्तापसंयोगाच्च दुःख-त्वमभिधाय स्वाभाविकमादर्शयति—"गुणवृत्तिविरोधाच्च इति। व्याचष्टे-प्रख्या इति।

पातञ्जलरहस्यम्।

"निचाय्य तं मृत्युमुखात् प्रमुच्यते" "तरति शोकमात्मवित्" "तमेव विदित्वाऽति-मृत्युमेती"त्यादिश्रुतिमाश्रित्याह-तदेवमिति स्वाभाविकं = निरुपाधिकमिति,

"यावदेताननतीत्य त्रीन् ब्रह्मभूयाय कल्पत"-

इत्युक्तिमाश्रित्याह-गुणेति। त्रिगुणानां सत्त्वरजस्तमसां वृत्तयोऽपि दुःखरूपा आविर्भा-वतिरोभावाभ्यां सुखदुःखमोहात्मकतया चेत्याह—गुणवृत्तिविरोधाच्चेति। प्रख्या = प्रकाशः,

वार्त्तिकम्।

विस्तीर्णमित्यर्थः, अक्ष्णः पात्रेणाधारेण गोलकेन तुल्यो विद्वानित्युक्तं विवृणोति-यथोर्णेति। एतानि भाविदुःखानीतरमयोगिनं प्रतिपत्तारं शब्दादिना परिणामदुःखज्ञातारमप्यविद्वांस-मित्यर्थः, इतरं तु वर्त्तमानकाल एव क्लिश्नन्तीत्याह-इतरं त्विति। इतरं तु योगिनं त्रिपर्वा-णस्तापा अनु स्वोत्पत्त्यनन्तरमेव प्लवन्ते व्याप्नुवन्तीत्यन्वयः, न तु पूर्वमिति शेषः, आधि-भौतिकाधिदैविकाध्यात्मिकरूपाणि पर्वाणि येषां तापानां ते तथा त्रिपर्वत्वं हेतुगर्भविशेष-णम्, बाह्येति। बाह्यशब्देनाधिभौतिकाधिदैविकयोर्ग्रहणम् इतरस्य विशेषणान्तरमनादीत्या-दि-अनुपातिनमित्यन्तम्, अनादिवासनाभिर्विचित्रया नानारूपया चित्तवृत्त्या चित्तनिष्ठया-ऽविद्ययाऽनुविद्धं लिप्तमिव, अत एव हातव्येऽपि देहेन्द्रियादावहङ्कारममकारवन्तमित्यर्थः, आत्मनोऽविद्याऽस्मिताऽऽद्यभावप्रतिपादनाय इवेत्याद्युक्तम्, शेषमतिरोहितम्, परिणामादि-दुःखत्रयस्य साक्षिणो ज्ञानेन यत्फलं तदपि प्रसङ्गादाह-तदेवमिति। सुगमम्, गुणवृत्त्यविरोधा-च्चेति हेतुं व्याख्यातुकामो योजयति—गुणेति। गुणानां सत्त्वादीनां ये वृत्त्यतिशयास्तेषामेव

त्रिगुणमेवारभन्ते चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम्, रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते, सामान्यानि त्वतिशयैः सह प्रवर्त्तन्ते,

भास्वती।

परिणतास्त्रयो गुणा इतरेतरसहायाः सुखं दुःख मूढं वा प्रत्ययं जनयन्ति, तस्मात् सर्वे सुखादिप्रत्ययास्त्रिगुणात्मानः, तथा च गुणवृत्तेश्चलत्वात् सत्त्वप्रधानं सुखचित्तं परिणममानं रजःप्रधानं दुःखचित्तं भवतीति दुखमवश्यम्भावि, यथोक्तम्—"सुखस्यानन्तरं दुःखमि"ति, एतदेव व्याचष्टे—रूपेति। धर्मादयोऽष्टौ बुद्धे रूपाणि, सुखदुःखमोहाश्च बुद्धेर्वृत्तयः, तत्र किञ्चिद् अतिशयि बुद्धिरूपं बुद्धिवृत्तिर्वा विरुद्धेनान्येन बुद्धे रूपेण वृत्त्या वाऽभिभूयते; एतस्मादेव धर्मरूपस्य यमनियमस्य सुखरूपस्य वा प्रत्ययस्य नास्त्येकतानता, किञ्च धर्मसुखादयोऽधर्मदुःखादिभिर्विरुद्धाभिर्बुद्धे रूपवृत्तिभिः सम्भिद्यन्ते, सामान्यानीति। तथा च सामान्यान्यप्रबलानि वृत्तिरूपाणि त्वतिशयैः समुदाचरद्भिर्वृत्तिरूपैः सह प्रवर्त्तन्ते वृत्तिं लभन्ते, सुखेन सहोपसर्जनीभूतं दुःखमपि प्रवर्त्तत इत्यर्थः,

तत्त्ववैशारदी।

प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिरूपेण परिणता गुणाः = सत्त्वरजस्तमांसि परस्परानुग्रहतन्त्राः शान्तं = सुखात्मकं, घोरं = दुःखात्मकं, मूढं = विषादात्मकमेव प्रत्ययं = सुखोपभोगरूपमपि त्रिगुणमारभन्ते, न च सोऽपि तादृशप्रत्ययरूपोऽस्य परिणामः स्थिर इत्याह—"चलञ्च गुणवृत्तमिति क्षिप्रपरिणामिचित्तमुक्तम्" इति, नन्वेकः प्रत्ययः कथं परस्परविरुद्धशान्तघोरमूढ़त्वान्येकदा प्रतिपद्यत इत्यत आह—"रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुद्ध्यन्त"-

पातञ्जलरहस्यम्।

प्रवर्तकञ्च रज इत्युक्ते रजसः प्रवृत्तिः, गुरु वरणकमेव तम इत्युक्ते गुरुत्वं स्थितिः, रूपशब्दः स्वभावपरः, एवंस्वभावास्ते क्षणमपरिणम्य न तिष्ठन्ति,

"अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः"—

इत्युक्तिमाश्रित्याह—परस्परेणेति। प्रत्ययो = बुद्धिः धर्मादिभावाष्टकप्रतीतिहेतुत्वाद्,

वार्त्तिकम्।

विरोध एकदाऽनवस्थानं न तु न्यूनाधिकभावेन वृत्तीनां विरोधोऽस्ति; अतः प्राधान्येन सत्त्वपरिणामे सुखात्मकचित्तवृत्तावपि तदुपसर्जनतया रजोंऽशपरिणामभूतं दुःखमप्यल्पमस्त्येवेति दुःखसम्भिन्नत्वात्सर्वं सुखाद्यपि दुःखमेव विवेकदृष्ट्येति तस्य दलस्यार्थः, गुणवृत्तिविरोधादिति प्रामादिकपाठे तु गुणवृत्त्यतिशयस्यैव विरोधादित्यर्थः, तदेतद्व्याचष्टे—प्रख्याप्रवृत्तीति। प्रख्या प्रकाशः, प्रवृत्तिः क्रिया, स्थितिः स्तम्भः, धर्मधर्म्यभेदात्तद्रूपाः सत्त्वादयो बुद्धिरूपेण परिणतागुणाः परस्परसाहाय्याः सन्तः शान्त्यादिरूपं प्रत्ययं वृत्तिं त्रिगुणं सुखदुःखमोहवन्तमेवारभन्ते सुखादीनां सत्त्वादिकार्यत्वात्, यः कश्चन प्रत्ययः शान्तो वा घोरो वा मूढो वा भवति स सर्वोऽपि त्रिगुण एव नैकैकमात्रगुण इत्यर्थः, शान्तादिपरिभाषात्रयं च सुखदुःखमोहाधिक्यमात्रेणेति, तथा च सुखवत्यपि प्रत्यये दुःखमस्त्येव, अत एकप्रत्ययोपादानत्वेन सुखेऽपि दुःखस्याविभागलक्षणाभेदो हरीतक्यामिव षण्णां रसानामिति, प्रत्ययश्च बुद्धेर्वृत्तिः प्रदीपशिखावत् बुद्धेः शिखा द्रव्यरूपा 'भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पती'ति सांख्यसूत्राद्, अतः प्रत्ययस्य सुखादिगुणवत्ता घटत इति, ननु सुखकाले सूक्ष्मो दुःखात्मको रजःपरिणामो नियमेन भवतीत्यत्र किं मानं तत्राह—चलं चेति। प्रदीपावयवानामिव बुद्ध्यवयवानांगुणानां वृत्तं क्रिया चञ्चला प्रतिक्षणमन्याऽन्या च भवति न तु निर्व्यापारा गुणास्तिष्ठन्ति

**एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति गुणप्रधानभावकृतस्त्वेषां विशेष इति, तस्माद्**

भास्वती ।

एवमित्युपसंहरति, सुखञ्च सत्त्वप्रधानं न तद् रजस्तमोभ्यां वियुक्तं सर्वेषां प्राकृतभा-

तत्त्ववैशारदी ।

इति । रूपाणि = अष्टौ भावा धर्मादयः, वृत्तयः-सुखाद्याः, तदिह धर्मेण विपच्यमानेनाधर्मस्तादृशो विरुद्ध्यते, एवं ज्ञानवैराग्यैश्वर्यैः सुखादिभिश्च तादृशान्येव तद्विपरीतानि विरुध्यन्ते, सामान्यानि त्वसमुदाचरद्रूपाण्यतिशयैः समुदाचरद्भिः सहाविरोधात्प्रवर्त्तन्त इति, ननु गृह्णीम एतत्-तथाऽपि विषयसुखस्य कुतः स्वाभाविकी दुःखतेत्याह—"एवमेत" इति । उपादानाभेदादुपादानात्मकत्वाच्चोपादेयस्याप्यभेद इत्यर्थः, तत्किमिदानीमात्यन्तिकमेव तादात्म्यं, तथा च बुद्धिव्यपदेशभेदौ न कल्पेते इत्यत आह—"गुणप्रधान" इति । सामान्यात्मना गुणभावोऽतिशयात्मना च प्राधान्यं, तस्मादुपाधितः स्वभावतश्च दुःखमेव सर्वं-

पातञ्जलरहस्यम् :

यथा धानुष्कादयः परस्परविरुद्धा अपि शत्र्वभिभवायैकवाक्यतां गच्छन्ति तद्वदित्याह—सामान्यानि त्विति । समुदाचरद्रूपाणि स्वस्वकार्याभिमुखान्यपि निदानमुपादानकारणमविद्याख्येयं तस्या हानमभिभवो न तु नाशः ज्ञानस्य प्रकाशत्वेन सूर्यादेरन्धकाराद्यभिभावकता दृष्टेति भावः, तस्य हेतुर्विवेकख्यातिरूपं तद्वद् ज्ञानं तस्योपायो योगशास्त्रमित्यार्दाति कृत्वा शास्त्रं प्रवृत्तमथ योगानुशासनमिति संक्षेपार्थः, तत्र हेयहानहानोपायाधिगन्तव्यमिति पूर्वोक्तं-स्वभाष्यं प्रमाणयन्नाह—इदमपि शास्त्रमित्यादिना, तत्राधिगन्तव्यो मोक्ष इति, सम्यग्दर्शनं-

वार्त्तिकम् ।

अतस्तान्त्रिकैश्चित्तं क्षिप्रपरिणाम्युक्तमित्यर्थः, यद्यपि सर्वं जडवस्तु प्रतिक्षणपरिणामि तथाऽपि स्पष्टत्वाभिप्रायेण चित्तमिति विशेषवचनम्, तथा च चित्तगतस्य सत्त्वस्य वृत्तिकाले रजसो वृत्तिरावश्यकीति भावः, नन्वेक एव प्रत्ययः कथं विरुद्धसुखादित्रयात्मकः स्यात्तत्राह—रूपातिशया इति । बुद्धे रूपाण्यष्टौ भावा धर्मादयो धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याणि, वृत्तयश्च द्रव्यरूपाः शान्तादिनामकाः परिणामास्तेषामतिशया उत्कर्षा एव परस्परं-विरुध्यन्ते यदा धर्म उत्कृष्यते तदा नाधर्म उत्कृष्यते, एवं यदा ज्ञानादि तदा नाज्ञानादि तथा शान्ताद्युत्कर्षकाले घोराद्युत्कर्षश्च विरुध्यते सामान्यानि त्वपकृष्टान्यतिशयैः सह प्रवर्त्तन्त एवेत्यर्थः, ननु भवतु चित्तस्य सुखात्मकप्रत्यये दुःखत्वं सुखात्मकेषु शब्दादिविषयेषु कुतो दुःखत्वं येन सर्वं दुःखं स्यादित्यत आह —एवमेत इति । यथा चित्तस्य प्रत्यया एवमेव सर्वे पदार्थाः सर्वरूपाः सुखदुःखमोहधर्मका भवन्तिः अत एते गुणाः सत्त्वादयो घटादिरूपेणापि परिणताः परस्परसाहित्येनोत्पादितसुखदुःखमोहात्मकप्रत्यया इत्यर्थः, न हि विषयगतविशेषं विना विषयसंबन्धमात्रेण सुखाद्यात्मकचित्तवृत्तिरुदेतुमर्हति; अव्यवस्थाऽऽपत्तेः, विषयगतविशेषस्य चित्तगतसुखादिनियामकत्वे विशेषः सुखादिरूप एव विषयेषु कल्प्यते कार्यानुरूपस्यैव कारणस्यौचित्याद्, अतो विषयेऽपि सुखादिधर्मान्तरं सुखादिवत्सिध्यतीति भावः, ननु सुखदुःखे रूपादिवद्विषयधर्मौ स्यातां मोहस्तु ज्ञानरूपः कथं विषयधर्मः स्यादिति चेन्न-अतस्मिंस्तदाकारतामात्रस्यैव मोहशब्दार्थत्वात्, सा च विषयेष्वप्यस्ति महदादिविकाराकारतायाः प्रकृतावपारमार्थिकत्वात्, तदुक्तं मोक्षधर्मे—

"जगन्मोहात्मक विद्धि अव्यक्तं व्यक्तसंज्ञकम्", इति,

अपि च सर्वकार्याणां बुद्ध्यात्मत्रिगुणात्मकमहत्तत्त्वस्य परिणामत्वादपि मोहवत्त्वमिति, ननु सर्वे यदि सर्वरूपास्तर्हि सर्वं सुखात्मकमपि स्यादिति न दुःखस्यापि हेयत्वं स्यादित्याशङ्कायामाह—गुणप्रधानेति । तथा च दुःखबहुलतया दुःखप्राधान्याद् दुःखमेव सर्वं-

**दुःखमेव सर्वं विवेकिन इति, तदस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्या, तस्याश्च सम्यग्दर्शनमभावहेतुः,**

**यथा चिकित्साशास्त्रं चतुर्व्यूहं रोगो रोगहेतुः आरोग्यं भैषज्यमिति, एवमिदमपि शास्त्रं चतुर्व्यूहमेव तद्यथा-संसारः संसारहेतुः मोक्षो मोक्षोपाय इति, तत्र दुःखबहुलः संसारो हेयः, प्रधानपुरुषयोः संयोगो हे-**

भास्वती।

वानां त्रिगुणात्मकत्वाद्, एवं वस्तुस्वभावादपि दुःखमोहवियुक्तं ताभ्यां वा अग्रसिष्यमाणं सुखं नास्तीति विवेकिनः सर्वमेव दुःखमिति संप्रज्ञा जायते,

तदिति। महतो दुःखसमूहस्याविद्याप्रभवबीजमुत्पत्तेर्बीजम्, शेषमतिरोहितम्, तत्रेति। हातुर्ग्रहीतुः स्वरूपं प्रकृतं रूपं चिद्रूपत्वमित्यर्थः, नोपादेयं = न बुद्ध्यादीनामुपादानत्वेन ग्राह्यम्, नापि स्वप्रकाशो द्रष्टा सम्यग् हेयः = अपलाप्यो बुद्ध्यादिसर्गाय द्रष्टृसत्ताया निमित्तता न त्याज्येत्यर्थः, न हि स्वप्रकाशद्रष्टुरूपदर्शनं बिनाऽऽत्मभावः

तत्त्ववैशारदी।

विवेकिन इति दुःखं हेयं प्रज्ञावताम्, न च तन्निदानहानमन्तरेण तद्धेयं भवितुमर्हति, न चापरिज्ञातं निदानं शक्यं हातुमिति मूलनिदानमस्य दर्शयति—"तदस्य" इति। दुःखसमुदायस्य प्रभवः = उत्पत्तिर्यतस्तद्बीजमित्यर्थः, तदुच्छेदहेतुं दर्शयति-'तस्याश्च' इति। इदानीमस्य शास्त्रस्य सर्वानुग्रहाय प्रवृत्तस्य तद्विधेनैव शास्त्रेण सादृश्यं दर्शयति "यथा" इति। चत्वारो व्यूहाः = संक्षिप्ता अवयवरचना यस्य तत्तथोक्तम्, ननु दुःखं हेयमुक्त्वा संसारं हेयमभिदधतः कुतो न विरोध इत्यत आह-"तत्र दुःखबहुल" इति यत्कृत्वाऽविद्या संसारं करोति तदस्या अवान्तरव्यापारं संसारहेतुमाह—"प्रधानपुरुषयोः" इति। मोक्षस्वरूपमाह—"सं-

पातञ्जलरहस्यम्।

योगशास्त्रजमित्यर्थः, व्यक्ताव्यक्तज्ञविज्ञानादिति सांख्योक्तेः संप्रज्ञातासंप्रज्ञातसमाधिजन्यमविरूपं परवैराग्यमहकृतमात्मप्रतियोगिकबुद्ध्यनुयोगिकविवेकसाक्षात्काररूपं सम्यग्दर्शनं—ततो मुक्तिरिति भावः, तयोरनादिः संयोगश्चेन्न स्यात् कुतः क्लेशपरम्परा कुतो वा जन्ममरणादिप्रवाहः, तथा च प्राप्ताप्राप्तविवेकेन संयोगस्य योग्यतायां सत्यामपि फलानुत्पादनलक्षणस्तिरोभावो मोक्ष इत्याह-मोक्षे मुक्तस्य स्वरूपमुपादेयं चेद् जन्यत्वेन हेतुवादः, हाने तु विनाश उच्छेदवाद इति विमृश्य अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा इति श्रुतिमाश्रित्याह-शाश्वतवाद इति। सम्यग्दर्शनं वेदार्थः, न ह्यात्मनः स्वरूपतो नाशोऽस्तीत्यविनाशी, वै अवधा-

वार्त्तिकम्।

मिदं सुखं वैशेष्यात्तद्वाद इतिन्यायेनेति भावः, उपसंहरति—तस्मादिति। तस्मात् परिणामेत्यादिसौत्रहेतुज्ञानादित्यर्थः, तदेवमत्र ध्यानादेर्व्युत्थितचित्तस्य योगसाधनं क्रियायोगमुक्त्वा तत्फलप्रसङ्गेन क्लेशास्तद्धानोपायाश्च तेषां हेयत्वाय दुःखनिदानत्वं दुःखं च प्रतिपादितम्, इदानीं संक्षेपेणोक्तं समग्रशास्त्रार्थं विस्तरेण सूत्रकारः पुनर्वदति सूत्रजातैः शास्त्रसमाप्तिपर्यन्तैः, तान्यवतारयितुं तेषां विषयजातमादौ सामान्यतः संकलय्य दर्शयति—तदस्येति। तत्तस्मादस्य दृश्यसामान्यरूपस्य दुःखसमूहस्योत्पत्तेर्बीजं मुख्यनिमित्तकारणमविद्या प्रथमक्लेशः तस्याश्चाविद्याया अत्यन्तोच्छेदहेतुस्तत्त्वज्ञानमतश्चिकित्साशास्त्रवदिदं योगशास्त्रं चतुर्व्यूहं चत्वारो व्यूहा हेयादीनां राशयः प्रतिपाद्या अस्मिन्निति चतुर्व्यूहमित्यर्थः, रोगादितुल्यत्वं प्रतिपादयन्नेव तेषां व्यूहानां स्वरूपाण्याह-तत्र दुःखेति। संसरत्यस्मिन्निति संसारोऽत्र प्रपञ्चः, ननु दुःखमेव हेयमिति वक्ष्यति तत्कथं संसारो हेय उच्यते? तत्राह—दुःखबहुल इति। दुःखबहुलत्वात्संसार एव दुःखमित्यर्थः, प्रधानेति। नन्वविद्या दुःखहेतुरित्युक्त्वाऽत्र

यहेतुः, संयोगस्यात्यन्तिकी निवृत्तिर्हानं, हानोपायः सम्यग्दर्शनम् ,तत्र हातुः स्वरूपमुपादेयं हेयं वा न भवितुमर्हतीति, हाने तस्योच्छेदवादप्रसङ्ग उपादा-

भास्वती।

प्रवर्त्तेत, तस्माद् द्रष्टुर्निर्विकारनिमित्तताऽनुपादानकारणता च ग्राह्या, स एव सम्यग्दर्शनरूपः शाश्वतवादः = निर्विकारः शाश्वतो द्रष्टाऽऽत्मभावस्य मूलं निमित्तमिति वाद इत्यर्थः, द्रष्टुरपलाप उच्छेदवादः, तद्वादस्तु हेयो यतः स्वेन स्वस्योच्छेदरूपो मोक्षो न न्यायेन सङ्गतः, द्रष्टुरुपादानवादे तु तस्य विकारशीलतारूपो हेतुवादः, उपादानकारणता-

तत्त्ववैशारदी।

योगस्य" इति। मोक्षोपायमाह—"हानोपाय" इति।

केचित्पश्यन्ति हातुः स्वरूपोच्छेद एव मोक्षः, तथाऽऽहुः—

"प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिन" इति,

अन्ये तु सवासनक्लेशसमुच्छेदाद्विशुद्धविज्ञानोत्पाद एव मोक्ष इत्याचक्षते, तान् प्रत्याह—"तत्र" इति। तत्र हानं तावद् दूषयति—"हाने तस्य" इति। न हि कश्चित्प्रेक्षावानात्मोच्छेदाय यतते, ननु दृश्यन्ते तीव्रगदोन्मूलितसकलसुखा दुःखमयीमिव मूर्त्तिमुद्वहन्तः स्वोच्छेदाय यतमानाः, सत्यं केचिदेव ते, न त्वेवं संसारिणो विविधविचित्रदेवाद्यानन्दभोगभोगिनः, तेऽपि च मोक्षमाणा दृश्यन्ते, तस्मादपुरुषार्थप्रसक्तेर्न हातुः स्वरूपोच्छेदो मोक्षोऽभ्युपेयः, अस्तु तर्हि हातुः स्वरूपमुपादेयमित्यत आह—"उपादाने च हेतुवाद" इति। उपादाने हि कार्य्यत्वेनानित्यत्वे सति मोक्षत्वादेव च्यवेत, अमृतत्वं हि मोक्षः, नापि विशुद्धो विज्ञानसन्तानो भवत्यमृतः, सन्तानिभ्यो व्यतिरिक्तस्य सन्तानस्य वस्तुसतोऽभावात्,

पातञ्जलरहस्यम्।

रणे, दृक्शक्तिः पुरुष इति सिद्धान्ते शक्तेरपि नाशो नास्तीत्यनुच्छित्तिधर्मेति धर्मतो दृष्टः पाकेन परमाणोरिति भाष्यार्थः, तत्र मतान्याह—केचिदिति।

ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे—

इति श्रुतिमाश्रित्याह-अमृतत्वं हीति। तस्य सन्तानस्य क्षणिकसन्तानिभ्योऽन्यत्वे निराश्रयत्वाद् भ्रमत्वापत्तिस्तदभिन्नत्वे तेषां क्षणिकत्वेन संततेर्विनाशात् संतानस्यापि तथा

वार्त्तिकम्।

संयोगः कथं दुःखहेतुः साध्यत इति चेद् , व्यापारकथनायेत्यत्रेहि, अविद्या हि बुद्धिपुरुषसंयोगाख्यजन्मद्वारैव दुःखहेतुः कार्यकारणाभेदेन च सैव बुद्धिरत्र प्रधानशब्दार्थः द्रष्टृदृश्ययोः संयोगो हेयहेतुरित्यागामिसूत्रादिति, संयोगस्येति। उक्तसंयोगस्यात्यन्तिकी निवृत्तिरेव हानं दुःखहानमिति यावत्, तच्चरमकारणत्वादित्यर्थः, हानोपाय इति। सम्यग्दर्शनमिति। प्रकृतिपुरुषविवेकसाक्षात्कारो दुःखहानोपायो मोक्षोपाय इत्यर्थः, असंप्रज्ञातयोगस्त्वाशुतरमोक्षार्थमेवापेक्ष्यत इत्याशयः, तेनायं योगो हानोपायतयाऽत्र नोक्तः,

ये तु नास्तिका मन्यन्ते-संयोगहानं न मोक्षः किं तु चित्तरूपस्यात्मनस्त्याग एव मोक्षः, किं चासंसारिविज्ञानसन्तानोच्छेदेन जीवन्मुक्तविज्ञानसन्तानलाभ एव मोक्ष इति तन्मतनिरसनपूर्वकं स्वशास्त्रस्यैव सम्यग्दर्शनत्वमवधारयति—तत्र हेति। तत्र चतुर्व्यूहमध्यआत्मनो हानमुपादानं वा न पुरुषार्थ इत्यर्थः, इतिशब्दस्य हेतुवाद इत्यनन्तरमन्वयः, उक्तार्थे हेतुमाह—हाने तस्येति। तस्य हाने स्वत्यागे हि स्वोच्छेदवचनं प्रसज्येत मुख्यत्यागस्य भेदतन्त्रत्वेनात्मन्यसंभवात् तच्चायुक्तं स्वनाशस्य लोके पुरुषार्थत्वादर्शनात् स्वीयतयैव सुखदुःखाभावयोः पुरुषार्थत्वादित्यर्थः, स्वयं म्रियमाणोऽपि दुःखहानार्थमेवाग्निप्रवेशादौ प्रवर्त्तते न तु स्वनाशार्थमित्यर्थः, हेतुवाद इति। हेतुः स्वरूपस्य स कारणतावादः स्यात्, तथा च भावकार्यत्वेन विनाशित्वप्रसङ्ग इत्यर्थः, उभयेति। इत्यतो-

नेच हेतुवाद उभयप्रत्याख्यानेच शाश्वतवाद इत्येतत् सम्यग्दर्शनम् १५

तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते—

**हेयं दुःखमनागतम् ॥ १६ ॥**

दुःखमतीतमुपभोगेनातिवाहितं न हेयपक्षे वर्त्तते, वर्त्तमानं च स्वक्षणे भोगारूढमिति न तत् क्षणान्तरे हेयतामापद्यते, तस्माद् यदेवानागतं-

भास्वती।

वाद इत्यर्थः, सोऽपि हेय इति दिक् ॥ १५ ॥

तदिति । हेयहेयहेतुहानहानोपाया इत्येतच्छास्त्रं चतुर्व्यूहम्, तत्र हेयं तावन्निरूपयति, सुगमम् । ननु सौकुमार्यमधिकतरदुःखाय भवतीत्यक्षिपात्रकल्पस्वान्तानां योगिनां किन्नु क्लेशाः पृथग्जनेभ्यो भूयिष्ठा इति शङ्का व्यर्था, दृश्यते तु लोक आयतिचिन्ता-

तत्त्ववैशारदी।

सन्तानिनां चानित्यत्वात्, तस्मात्तथा यतितव्यं यथा शाश्वतवादो भवति, तथा च पुरुषार्थत्वमपवर्गस्येत्याह- "उभयप्रत्याख्याने" इति । तस्मात्स्वरूपावस्थानमेवात्मनो मोक्ष इत्येतदेव सम्यग् दर्शनम् ॥ १५ ॥

तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते—"हेयं दुःखमनागतम्" । अनागतमिति–अतीतव-

पातञ्जलरहस्यम्।

त्वं नापीशसंतानापत्तिर्मोक्षः आपत्तेः संयोगत्वे तस्य वियोगावसानत्वात्पुनर्बाधापत्तिस्तादात्म्ये चेशकोटौ प्रवेशे स्वाभावः स्वस्मिन्नीशस्य प्रवेश ईशाभाव इति न प्रकारान्तरस्थितिरिति समनन्तरप्रत्ययसहकारिप्रत्ययाधिपतिप्रत्ययालम्बनप्रत्ययैश्चक्षुर्भिर्मनआलोकेन्द्रियविषयनामभिः प्रवृत्तिज्ञानैरनास्कन्दितत्वं विशुद्धत्वमित्यर्थः, उक्तोऽविनाशी इत्यादिश्रुत्या अनादिर्नाम प्रागभावाप्रतियोगिनी सती ध्वंसाप्रतियोगिनीत्यर्थः ॥ १५ ॥

चतुर्व्यूहतां सूत्रारूढां करोति–"हेयं दुःखमनागतम्"अतीतवर्तमानयोर्दुःखयोर्भोगैकनाश्य-

वार्त्तिकम्।

हानोपादानोभयनिषेधे स्वयं नित्यतावाद एव परिशेषात्सिध्यतीति, अत एतदेव यथोक्तचतुर्व्यूहशास्त्रं सम्यग्दर्शनं सम्यग्दृश्यतेऽनेनेति व्युत्पत्त्येत्यर्थः ॥१५॥

इदानीं वक्ष्यमाणसूत्रगणमवतारयति—तदेतदिति । तदेतच्छास्त्रं चतुर्व्यूहमिति क्रमेणाभिधीयते प्रतिपाद्यते सूत्रकारेणेत्यर्थः,

"हेयं दुःखमनागतम्", अनागतमिति विशेषणस्य फलमाह—दुःखमतीतमित्यादिना, अतिवाहितमतिक्रान्तमतः सिद्धतया तद्धानं न पुरुषार्थः तथा वर्त्तमानमपि स्वसत्ताकाले भुज्यत एवेति त्वया वक्तुं न शक्यते, स्वोत्तरोत्पन्नगुणेन च तृतीयक्षणे स्वयमेव नङ्क्ष्यतीति तद्धानार्थः प्रयासो विफल इत्यर्थः, नन्वेवमनागतस्यापि हेयत्वं न घटते परचित्तदुःखस्य स्वचित्ते स्वत एवाभावात्, स्वचित्तवृत्तेश्चानागतदुःखस्यावश्यभावित्वात्, अन्यथा सत्त्वप्रमाणाभावादिति चेन्न—स्वचित्तस्यैवानागतदुःखस्य कारणोच्छेदेनानुत्पत्त्या हेयत्वाद् वर्त्तमानलक्षणमप्राप्तस्याप्यानागतदुःखस्य चित्तनाशेन नाशात्कदा चिद्वर्त्तमानोऽपि चानागतधर्मोऽनुमानात्सिध्यति सर्वं सर्वात्मकमिति भाष्यकारेण तृतीयपादे सर्वत्रैव परिणामिवस्तुनि विकारजननशक्तेः कार्यानागतावस्थारूपाया जलभूम्यादिदृष्टान्तैः शान्तोदिताव्यपदेश्येत्यादिसूत्रेऽनुमेयत्वादिति, शेषं पूर्वसूत्रे व्याख्यातप्रायम्, अस्माच्च सूत्रादात्यन्तिकी दुःखनिवृत्तिरेव मोक्ष इति सिद्धम्, अस्मिन्सूत्रे दुःखं मुख्यमेव ग्राह्यं मुख्यस्यैव स्वतो हेयत्वात्, तद्धानं च समवायसंबन्धेन यद्यपि पुरुषे नित्यसिद्धं तथाऽपि भोग्यतारूपस्वत्वसंबन्धेन धनादीनामिव

दुःखं तदेवाक्षिपात्रकल्पं योगिनं क्लिश्नाति, नेतरं प्रतिपत्तारम्, तदेव हेयतामापद्यते ॥ १६ ॥

तस्माद् यदेव हेयमित्युच्यते तस्यैव कारणं प्रतिनिर्दिश्यते—

**द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥**

द्रष्टा = बुद्धेः प्रतिसंवेदी पुरुषः, दृश्याः = बुद्धिसत्त्वोपारूढाः सर्वे धर्माः,

भास्वती ।

हीना मूढा अशेषदुःखभाजो भवन्ति, प्रेक्षावन्तः पुनरनागतं विधास्यमाना बहुसौख्यभाजो भवन्तीति,तथैवानागतदुःखस्य प्रतीकारेच्छवो योगिनो दुःखस्यान्तं गच्छन्तीति१६।

तस्मादिति । हेयस्य दुःखस्य कारणं द्रष्टृदृश्ययोः संयोगः, यतः स्वप्रकाशेन द्रष्ट्रा सहसंयोगाद् बुद्धिस्थमचेतनं दृश्यं दुःखं वृत्तितां लभते, द्रष्टेति । द्रष्टा बुद्धेः = आत्मबुद्धेरस्मीतिभावस्येत्यर्थः, प्रतिसंवेदी = प्रतिवेत्ता,

कारणादिजड़भावयुक्तोऽचेतनात्मविज्ञानांशो येन स्वप्रकाशेन प्रतिसंधात्रा मामहं जानामीति स्वप्रकाशवद् भूयत इति, स एव बुद्धिप्रतिसंवेदी स च पुरुषः,

दृश्या इति । बुद्धिसत्त्वोपारूढाः सत्तामात्र आत्मनि बुद्धावुपारूढा अभिमानेनोपा-

तत्त्ववैशारदी ।

र्तमाने व्यवच्छिन्ने, तत्रोपपत्तिमाह—"दुःखमतीतम्" इति । ननु वर्तमानमुपभुज्यमानं न भोगेनातिवाहितमिति कस्मान्न हेयमित्यत आह—"वर्त्तमानं च" इति । सुगमम् ॥ १६ ॥

हेयमुक्तं, तस्य निदानमुच्यते—"द्रष्टृदृश्ययोः संयोगो हेयहेतुः" द्रष्टृस्वरूपमाह—"द्रष्टा बुद्धेः प्रतिसंवेदी" इति । चितिच्छायाऽऽपत्तिरेव बुद्धेः बुद्धिप्रतिसंवेदित्वमुदासीनस्यापि पुंसः, नन्वेतावताऽपि बुद्धिरेवानेन दृश्येत, न दृश्येरन् शब्दादयोऽत्यन्तव्यवहिता इत्यत आह—"दृश्या बुद्धिसत्त्व" इति । इन्द्रियप्रणालिकया बुद्धौ शब्दाद्याकारेण परिणतायां दृश्यायां-

पातञ्जलरहस्यम् ।

स्वादनागतमेवाक्षिक्षुण्णशारकल्पं योगिनमेवाक्षिपतीति योगिना तत्प्रतीकारे यतितव्यमिति, अतिवाहितं = नाशितमिति, प्रतिपत्तारं भोक्तारमिति सूत्रभाष्ययोरर्थः ॥ १६ ॥

निदानं = निमित्तकारणं, सूत्रारूढं करोति—द्रष्टृदृश्ययोः संयोगो हेयहेतुरिति, बुद्धेः प्रतिसंवेदी बुद्धिगतधर्माधर्मादिभावाभिमानी चितिच्छायापत्तेरिति भ्रमः तत्संसर्गात्यन्ताभाववत्पुंसः, न हि जपालौहित्यं स्फटिके वास्तवमिति भावः, ननु पुंसो बुद्धिमात्रसंवेदिता तु कुतस्त्या न हि स्फटिके जपारुण्ये भात्यपि जपागतरसपरिमाणादिरस्तीति चेत्तत्राह-दृश्या-

वार्त्तिकम् ।

तद्धानं न नित्यमिद्धमिति तेन संबन्धेन तद्धानं पुरुषार्थ इत्याशयः, तथा हि वक्ष्यति-'तस्मिन्निवृत्ते पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते' इति, तदेतदुक्तं सांख्यन्यायया: "त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इति, "दुःखात्यन्तविमोक्षोऽपवर्गः" इति च, यत्तु-

आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्-

इत्येवंविधवाक्यजातं तद् दुःखनिवृत्त्याख्यमुखपरमेव तदानीमभोग्यसुखस्यापुरुषार्थत्वात्, "सुखं दुःखसुखात्यय"इतिपरिभाषया रूढिबाधनाच्च ॥ १६ ॥

हेयस्य सूत्रं व्याख्याय क्रमप्राप्तहेयहेतुप्रतिपादकं सूत्रमवतारयति—तस्माद्यदेव हेयमिति ।

"द्रष्टृदृश्ययोः संयोगो हेयहेतुः", द्रष्टृपदार्थमाह—द्रष्टेति । बुद्धेः प्रतिसंवेदनं संवेदनस्य बुद्धिवृत्तेः प्रतिबिम्बः, प्रतिध्वनिवदयं प्रयोगः, सोऽस्यास्तीति बुद्धिसाक्षीति फलितार्थः,

तदेतद् दृश्यमयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन भवति

भास्वती ।

नीता इत्यर्थः, भोगरूपा विवेकरूपाश्च धर्मा दृश्याः, तदिति । संनिधिमात्रोपकारि= परस्परासङ्कीर्णमपि सन्निकर्षादेव यदुपकरोति, न चात्र सान्निध्यं दैशिकम्, द्रष्टुर्देशातीतत्वाद्, देशस्तु दृश्योऽतः स द्रष्टुर्विषयिणोऽत्यन्तविभिन्नः, श्रूयते च—अनणु-अह्रस्वम्-अदीर्घम्-अबाह्यम्-अनन्तरमित्यादि, तादृशेन द्रष्ट्रा सह दैशिकसंयोगो मूढैरेव कल्प्यते नाभियुक्तैः, सान्निध्यन्त्वेकप्रत्ययगतत्वमेव यदनुभूयते "ज्ञाताऽहमि"ति प्रत्यये, एकक्षण एव ज्ञातुर्ज्ञेयस्य च या सङ्कीर्णोपलब्धिस्तदेव सान्निध्यं स एव संयोगः,

प्रकाश्यप्रकाशकत्वाद् दृश्यद्रष्ट्रोः स्वस्वामिरूपः सम्बन्धः, दृश्यं स्वं स्वकार्यं द्रष्टा च

तत्त्ववैशारदी ।

भवन्ति शब्दादयोऽपि धर्मा दृश्या इत्यर्थः,

ननु तदाकारापत्त्या बुद्धिः शब्दाद्याकारा भवतु, पुंसस्तु बुद्धिसम्बन्धेऽभ्युपगम्यमाने परिणामित्वम्, असम्बन्धे वा कथं तेषां बुद्धिसत्त्वोपारूढानामपि शब्दादीनां दृश्यत्वं, न हि दृशिनाऽसंस्पृष्टं दृश्यं दृष्टमित्यत आह—"तदेतद् दृश्यम्" इति । प्रपञ्चितमिदमस्माभिः प्रथमपाद एव यथा चित्याऽसम्पृक्तमपि बुद्धिसत्त्वमत्यन्तस्वच्छतया चितिबिम्बोद्ग्राहितया समापन्नचैतन्यमिव शब्दाद्यनुभवतीति, अत एव च शब्दाद्याकारपरिणतबुद्धिसत्त्वोपनीतान् सुखादीन् भुञ्जानः स्वामी भवति द्रष्टा, तादृशं चास्य बुद्धिसत्त्वं स्वं भवति, तदेतद् बुद्धिसत्त्वं-शब्दाद्याकारवद् दृश्यमयस्कान्तमणिकल्पं पुरुषस्य स्वं भवति दृशिरूपस्य स्वामिनः,

पातञ्जलरहस्यम् ।

बुद्धीति । तत्रानुभवाभावेऽपि न हि दृष्टेऽनुपपन्नं नामेति न्यायेनाह-इन्द्रियेत्यादिना, ननु मरकतक्षिप्ते दुग्धे मरकतच्छायं दृष्टं न तु तदाधारं पात्रं मरकताकारमिति शङ्कते-नन्विति । तदाकारा—शब्दाद्याकारा, परिणाम्यसम्बन्धे परिणतानां शब्दादीनां कथं भानमित्याक्षेपं विवृणोति—न हीत्यादिना, चितिसम्बन्धो नास्ति अथ च दृष्टं चिद्भास्यमित्यतिप्रसङ्ग-इत्याक्षेपः, भ्रान्तेः पुरुषधर्मत्वान्न हि दुर्घटं किमपि दृश्यते, असंक्रान्ता अपरिणामिनी चितिरित्युक्तं स्मारयन्नाह—चित्याऽसंपृक्तमपीत्यादि—द्रष्टेत्यन्तेन,

"अहङ्कारविमूढात्मा कर्ताहमितिमन्यते"

इतिभगवदुक्तेः, तादृशं=चितिच्छायापन्नशब्दाद्याकारमित्यर्थः, चुम्बकं यथा लौहभ्रम-

वार्त्तिकम् ।

दृश्यपदार्थमाह—दृश्या बुद्धिसत्त्वेति । बुद्धिसत्त्वस्यापि दृश्यत्वेनात्र विशेषणं विवक्षितं-धर्मा इति च बुद्ध्यारूढत्वेन बुद्धिधर्मत्वमभिप्रेत्योक्तं न तु बुद्धिकार्यत्वाभिप्रायेण प्रधानादेरपि दृश्यत्वेन तत्त्यागानौचित्याद् उत्तरसूत्रे प्रधानस्यैव मुख्यतो दृश्यत्ववचनाच्च, यद्यपि बुद्ध्यारूढो भवन् पुरुषोऽपि दृश्यः तथाऽपि तस्य निर्दुःखतया तद्दर्शनं न हेयहेतुरित्याशयेनात्र दृश्यमध्ये पुरुषं न गणयिष्यतीति, तथा च सुखदुःखमोहात्मकदृश्यवत्या बुद्ध्या सह द्रष्टुः साक्षिणः काष्ठाग्निवत् संबन्धो बन्धाख्यः पुरुषस्य दुःखहेतुरिति सूत्रार्थः; न तु बुद्ध्यारूढैर्दृश्यैर्द्रष्टुर्ज्ञानरूपः संयोगो हेयहेतुरत्र विवक्षितः, "स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोग" इत्यागामिसूत्रेणास्य संयोगस्य ज्ञानहेतुत्वेनैव लक्षणीयत्वाद् न तु ज्ञानरूपत्वेनेति, अस्माच्च सूत्राद् बुद्ध्यात्मसंयोगवद् घटाद्यात्मसंयोगोऽपि भोगहेतुर्बोध्यः, भोक्तृभोग्यसंयोगस्यैव सामान्यतो भोगहेतुतया लाघवेनौचित्याद्, विषयभोगे च बुद्ध्यवच्छेदेन विषयसंयोगस्य हेतुत्वान्नातिप्रसङ्ग इति; अस्य च संयोगस्य पुरुषार्थो हेतुरिति वक्तुं सकलपुरुषार्थवत्त्वरूपं स्वत्वं बुद्धौ पुरुषस्य प्रतिपादयति—तदेतदिति । न च "तस्य हेतुरविद्ये"त्यागामिसूत्रेणैव संयोगस्य

**पुरुषस्य स्वं दृशिरूपस्य स्वामिनः, अनुभवकर्मविषयतामापन्नमन्यस्वरूपेण प्रतिलब्धात्मकं स्वतन्त्रमपि परार्थत्वात्परतन्त्रम्, तयोर्दृग्दर्शनश-**

भास्वती ।

स्वामीति, अनुभूयते च—"बोद्धाऽहं मम बुद्धिरि"ति, अनुभवेति । द्रष्टुरनुभवविषयः = ज्ञाताऽहमित्यनुभाव्यता प्रकाश्यतेत्यर्थः, तथा च—कार्यविषयः = कर्त्ताहऽमिति कार्यता, इत्येवंविषयतामापन्नं दृश्यमन्यस्वरूपेण = पौरुषभासा चेतनवद् भवनात् पुरुषस्योपमयेत्यर्थः, प्रतिलब्धात्मकं प्रतिभासमानं लब्धसत्ताकमित्यर्थः, स्वतन्त्रमिति । दृश्यं त्रिगुणस्वरूपेण स्वतन्त्रं तथा च परार्थत्वात् = पुरुषोपदर्शनवशाद् बुद्ध्यादिरूपेण परिणतत्वात् परतन्त्रं = द्रष्टृतन्त्रम्, अर्थौ भोगापवर्गौ ताभ्यां बुद्ध्यादेर्वृत्तिता, तौ च पुरुषोपदर्शनमापेक्षौ, तस्माद् बुद्ध्यादि दृश्यं परार्थम्, यथा—गवादयः स्वतन्त्रा अपि मनुजाधीनत्वाद् मनुजतन्त्रास्तद्वद्,

तयोरिति । दुःखं दृश्यमचेतनम्, तच्च द्रष्ट्रा सह संयोगमन्तरेण न ज्ञातं स्यात्, त-

तत्त्ववैशारदी।

कस्माद्—"अनुभव" इति । अनुभवकर्मविषयतामापन्नं यतः, अनुभवो = भोगः पुरुषस्य, कर्म = क्रिया, तद्विषयताम् = भुज्यमानताम्, आपन्नं यस्मादतः स्वं भवतीत्यर्थः, ननु स्वयंप्रकाशं बुद्धिसत्त्वं कथमनुभवविषय इत्यत आह—"अन्यस्वरूपेण" इति । यदि हि चैतन्यरूपं वस्तुतो बुद्धिसत्त्वं स्याद् भवेत् स्वयंप्रकाशं किन्तु स्वं = चैतन्यादन्यज्जडरूपं तेन प्रतिलब्धात्मकं, तस्मात्तदनुभवविषयः, ननु यस्य हि यत्र किञ्चिदायतते तत्तदधीनं, न च बुद्धिसत्त्वस्य पुरुषमुदासीनं प्रति किञ्चिदायतत इति कथं च तत्तन्त्रं, तथा च न तस्य कर्मेत्यत आह—"स्वतन्त्रमपि" इति । परार्थत्वात् = पुरुषार्थत्वात्, परतन्त्रं = पुरुषतन्त्रम्, नन्वयं दृग्दर्शनशक्त्योः सम्बन्धः स्वाभाविको वा स्यान्नैमित्तिको वा, स्वाभाविकत्वे संबन्धिनोर्नित्यत्वादशक्योच्छेदः सम्बन्धः, तथा च संसारनित्यत्वं, नैमित्तिकत्वे तु क्लेशकर्मतद्वासनानामन्तःकरणवृत्तितया सत्यन्तःकरणे भावादन्तःकरणस्य च तन्निमित्तत्वे परस्पराश्रयप्रसङ्गादनादित्वस्य च सर्गादावसम्भवादनुत्पाद एव संसारस्य स्यात्, यथोक्तं—

पातञ्जलरहस्यम् ।

णहेतुस्तथा पुंगतकर्तृत्वाद्याकारारोपे बुद्धिसत्त्वम्, अकर्ता कर्तेवावस्थित इति श्रुतेः, तस्य भासा सर्वमिदं विभातीति श्रुतेराह—यदि हीति । तेन = चैतन्येन, प्रतिलब्धात्मकं = लब्धचैतन्यम्, उपसंहरति—तस्मात्तदिति । सर्वश्चासावनुभवश्चेत्यात्मा सर्वानुभूरिति श्रुतेस्तस्य विषयो भास्य इति प्रधानकार्यत्वेन स्वतो जडत्वादिति भावः, असङ्गो ह्ययं पुरुष इति श्रुतेरसङ्गे पुंसि बुद्धिकृतोपकाराभावात् कथं परार्थतेति चेत्? समाधत्ते—स्वतन्त्रमपीति । वस्तुतोऽनुपकार्येऽपि स्वतोजडस्य स्वार्थाभावात् परार्थतेत्यर्थः, सम्बन्धस्य कार्याकार्यत्वे विकल्प्यानादित्वेन समाधातुं शङ्कते—नन्विति । कस्मिन्सति किं स्यादित्याह—स्वाभाविकत्व इति । ततः किं? तत्राह—तथा चेति । कार्यत्वपक्षमादत्ते—नैमित्तिकत्वइति । क्लेशादिनिमित्तत्वे त्वाह—परस्परेति । सर्गादाविति । सर्गः सृष्टिः, तस्य स्वीकारे कुतोऽनादितेत्यर्थः, अनुत्पादः कारणाभावादिति भावः, सम्मतिमाह—यथोक्तमिति । कर्तृकर्माधीनत्वात् क्रियायाः तदभावे कथं क्रियेति, हेयहेतुः संसा-

वार्त्तिकम् ।

कारणं वक्ष्यत इति नास्ति संयोगकारणापेक्षेति वाच्यम्? अविद्याया अपि पुरुषार्थसमाप्तिद्वारैव बन्धहेतुताया वक्ष्यमाणत्वाद् इति, तदेतदित्यादेरयमर्थः—तद् बुद्धिसत्त्वम् एतज्जगद्दृश्यं यत्रास्तीत्येतद् दृश्यम् अतोऽयस्कान्तवत्संनिधिमात्रेणोपकारितया स्वयं दृश्यतया च ज्ञानमात्रस्वरूपस्य स्वामिनः पुरुषस्य स्वमात्मीयं भवतीति, ननु बुद्धेः कथमन्यः स्वामी स्वीक्रि-

क्त्योरनादिरर्थकृतः संयोगो हेयहेतुः=दुःखस्य कारणमित्यर्थः, तथा

भास्वती ।

स्मादृ द्दग्दर्शनशक्त्योः संयोग एव हेयस्य दुःखस्य कारणम्, संयोगस्त्वनादिर्बीजवृक्षवद्, विवेकेन वियोगदर्शनादविवेकः संयोगस्य कारणम्, अविवेकः पुनरनादिस्तस्माद्धेयस्य दुःखस्य हेतुभूतः संयोगोऽप्यनादिरिति, तथेति । तदित्यत्र "पञ्चशिखाचार्य"सूत्रम्, तत्सं-

तत्त्ववैशारदी ।

"पुमानकर्त्ता येषान्तु तेषामपि गुणैः क्रिया ।
कथमादौ भवेत्तत्र कर्म तावन्न विद्यते" ॥
मिथ्याज्ञानं न तत्रास्ति रागद्वेषादयोऽपि वा ।
मनोवृत्तिर्हि सर्वेषां न चोत्पन्नं मनस्तदा ॥ इति—

शङ्कामपनयति—"तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुः" इति, सत्यं न स्वाभाविकः सम्बन्धः नैमित्तिकस्तु, न चैवमादिमान्, अनादिनिमित्तप्रभवतया तस्याप्यनादित्वात्, क्लेशकर्मतद्वासनासन्तानश्चायमनादिः, प्रतिसर्गावस्थायां च सहान्तःकरणेन प्रधानसाम्यमुपगतोऽपि सर्गादौ पुनस्तादृगेव भवति, वर्षापाय इवोद्भिज्जभेदो मृद्भावमुपगतोऽपि पुनर्वर्षासु पूर्वरूप इत्यसकृदावेदितं प्राक्, भावितया संयोगस्याविद्या कारणं, स्थितिहेतुतया पुरुषार्थः कारणं, तद्वशेन तस्य स्थितेः, तदिदमुक्तम् "अर्थकृत" इति ।

पातञ्जलरहस्यम् ।

रस्य हेयत्वे स एव कारणं संयोगः, उद्भिज्जभेदो मण्डूकादिः, अपवर्गे विज्ञानहेतुके द्वयोरपि पुम-

वार्त्तिकम् ।

यते सैवापरतन्त्वा स्वयं द्रष्ट्री स्वार्थैव भवतु तत्राह—अनुभवकर्मेत्यादि । यतः कर्मकर्तृविरोधेन स्वदृश्यत्वानुपपत्त्याऽनुभवाख्यं यत्पुरुषस्य कर्म तद्विषयतामापन्नं सदेवान्यरूपेण पुरुषचैतन्येन प्रतिलब्धात्मकं सिद्धसत्ताकम्, अन्यरूपेणान्यप्रयोजनेन लब्धस्थितिकं वाऽतः स्वतन्त्रं पुरुषानाश्रितमपि परार्थत्वात् परतन्त्रं परस्य स्वमित्यर्थः, तदेवं दृश्याख्यभोग्यात्मकाखिलपुरुषार्थस्य बुद्धिनिष्ठत्वे सिद्धे स एव पुरुषार्थोऽनागतावस्था बुद्धिपुरुषयोः संयोगे हेतुरिति वदन् सूत्रवाक्यार्थमाह—तयोरिति । तयोः स्वस्वामिनोः, दृश्यतेऽनयेति दर्शनं बुद्धिः, अनादिश्चात्र प्रवाहरूपेण पुरुषार्थकृतत्ववचनात्, ननु पुरुषार्थसंयोगाङ्गीकारे सत्यपरिणामित्वभङ्ग इति चेन्न—सामान्यगुणातिरिक्तधर्मोत्पत्तेरेव व्यवहारानुसारेण परिणामशब्दार्थत्वावधारणात्, घटाद्यसंयोगाद्यैराकाशस्य द्वित्वादिभिश्च पुरुषस्य परिणामव्यवहाराभावात्, पद्मपत्रस्थतोयेन पद्मपत्रस्यापरिणामासंयोगादिश्रवणाच्च, संयोगविभागसंख्याऽऽद्यस्तु द्रव्यसामान्यगुणा इति, अपि च श्रुतिस्मृत्योः सुखादिरूपाः परिणामा एव पुरुषे नाभ्युपगम्यन्ते, मनोऽन्वयव्यतिरेकेण मनस्येव लाघवतस्तत्कल्पनात् मनसोऽवच्छेदकत्वं परिकल्प्यान्यत्र तत्कल्पने गौरवात, संयोगादिकं प्रति तु द्रव्यत्वेनैव हेतुतया पुरुषस्यापि तत्संभवात्, पुरुषस्य द्रव्यत्वं चानाश्रितत्वतः परिमाणतश्च सिद्धमिति, यद्यपि कारणावस्थबुद्धिः पुरुषश्च विभुः, तथाऽपि तयोः संयोगः परिच्छिन्नगुणान्तरावच्छेदेन संभवत्येव महदाद्यखिलपरिणामानां त्रिगुणसंयोगं विनाऽनुत्पत्तेः, स च संयोगजः संयोगः न तु कर्मजः, अवयवसंयोगादवयविसंयोगवदवच्छेदकाभूतगुणसंयोगादेव विभुनोः संयोगोत्पत्तेः, भूतलस्य घटसंयोगेन घटावच्छिन्नाकाशसंयोगोत्पत्तिवद् वैशेषिकशास्त्रे विभुनोः संयोगश्च साक्षादेव निषिद्धः न तु संयोगजः संयोग इति, यदि चात्मनः संयोग एव नास्तीति स्वीक्रियेत तर्हि प्रकृतिपुरुषसंयोगात्सृष्टिस्तद्वियोगतश्च प्रलय इति श्रुतिस्मृतिसूत्राणि नोपपद्येरन्, न च भोक्तृभोग्ययोग्यतैवौपचारिकोऽत्र संयोगो वक्तव्यः तस्याः स्वस्वामिभावरूपत्वेनानादितया कार्यत्वस्याऽसाऽनुपपत्तेः, किं च तस्या अविनाशित्वे ज्ञाननाश्यत्ववचनविरोधः नाशित्वे परिणामः पुरुष-

चोक्तं-"तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः" कस्माद् ? दुःखहेतोः परिहार्य्यस्य प्रतीकारदर्शनात्, तद्यथा-पादतलस्य भेद्यता, कण्टकस्य भेत्तृत्वम्, परिहारः—कण्टकस्य पादानधिष्ठानं पादत्राणव्यवहितेन वाऽधिष्ठानम्, एतत् त्रयं यो वेद लोके स तत्र प्रतीकारमारभमाणो भेदजं दुःखं नाप्नोति, कस्मात् ? त्रित्वोपलब्धिसामर्थ्यादिति,

भास्वती।

योगस्य = द्रष्ट्रा सह बुद्धेः संयोगस्य हेतुरविवेकाख्यस्तस्य विवर्जनात्, दुःखप्रतीकारमु-

तत्त्ववैशारदी।

"तथा चोक्तम्" इति। पञ्चशिखेन, तत्संयोगः = बुद्धिसंयोगः, स एव हेतुर्दुःखस्य तस्य विवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः, अर्थात् तदवर्जने दुःखमित्युक्तं भवति, तत्रैवात्यन्तप्रसिद्धं निदर्शनमाह—"तद्यथा" इति। पादत्राणम् = उपानत्, स्यादेतद्—गुणसंयोगस्तापहेतुरित्युच्यमाने गुणानां तापकत्वमभ्युपेयं, न च तपिक्रियाया अस्त्यादेरिव कर्तृस्थोभावो येन तप्यमन्यन्नापेक्षेत, न चास्यास्तप्यतया पुरुषः कर्म, तस्यापरिणामितया क्रियाजनितफलशालित्वायोगात्, तस्मात् तपेस्तप्यव्यासस्य तन्निवृत्तौ निवृत्तिमवगच्छामः, ज्वल-

पातञ्जलरहस्यम्।

र्थयोर्नाशे केवली पुमान् "विमुक्तश्च विमुच्यत" इतिश्रुतेः स्वतो विमुक्तोऽप्यविद्यावशादमुक्त इवेत्यर्थः, आत्यन्तिक इति। शरीरं षडिन्द्रियाणि षड् विषया षड् बुद्धयः सुखदुःखे इत्युद्द्योतकरोक्तैकविंशतिदुःखस्य प्रहाणिरिति भावः, तत्र शरीरं दुःखायतनत्वात् दुःखम्, इन्द्रियादीनि स्वष्टादश दुःखसाधनत्वात् दुःखं, सुखं दुःखानुषङ्गात्, दुःखञ्च स्वरूपत इति, अत एवोक्तं स-

वार्त्तिकम्।

स्य स्यादिति, ननु संयोगस्वीकारे पुरुषस्यासंगताक्षतिरिति चेन्न-पुष्करपत्रे पुरुषदृष्टान्ते संयोगसत्त्वेऽपि असंगत्वाऽभ्युपगमात्, स्वाश्रयविकारहेतुसंयोगस्यैव सङ्गत्वात्, पुरुषे च तादृशसंयोगास्वीकारादिति, तस्मात् पुरुषार्थनिमित्तको बुद्धिपुरुषयोः संयोगो भवति स एव च जन्मरूपतया दुःखहेतुरिति सिद्धम्, स च संयोगविशेषः परमेश्वरस्य योगमाया योगीन्द्रैरप्यचिन्त्या श्रुतिस्मृतिगम्या न विशेषतस्तर्कगोचरो भवति, यया खलु नित्यमुक्तमसङ्गमविद्याऽऽदिरहितं विभुचिन्मात्रमात्मानं जीवजातमीश्वरो निबध्नाति, तथा चोक्तम्—

"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदि"ति,
सेयं भगवतो माया यन्नयेन विरुध्यते।
ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनमि"ति

च, संयोगस्य दुःखहेतुत्वे पञ्चशिखाचार्यस्य संवादमाह—तथा चोक्तमित्यादिना प्रतीकार इत्यन्तेन, तयोर्बुद्धिपुरुषयोः संयोगो दुःखहेतुस्तस्य परिवर्जनादत्यन्तोच्छेदाद् दुःखस्यात्यन्तिकः प्रतीकार उच्छेदः स्यादित्यर्थः, नन्वनादिकालप्रवृत्तस्य दुखहेतुसंयोगस्योच्छेदो न शक्यसंभावन इत्याशयेन पृच्छति प्रसङ्गात्तच्छक्यत्वमवधारयितुं—कस्मादिति। उत्तरम्—दुःखहेतोरिति। परिहार्यस्येत्यनेन प्रकृत्यादिनित्यव्यावृत्तिः, तथा च दुःखहेतुत्वनित्यत्वलिङ्गेन संयोगस्य शक्योच्छेदकत्वम् अनुमेयमित्याशयः, दुःखहेतोः प्रतीकार्यत्वे लौकिकमुदाहरणमाह —तद्यथेति। भेद्यत्वं भेदजदुःखभागित्वं भेत्तृत्वं च भेदद्वारा दुःखहेतुत्वं पदानधिष्ठानं पादेनानारोहणम्, पादत्राणमुपानत्, तद्व्यवहितेनवा पदा कण्टकस्यारोहणमित्यर्थः, एतत्त्रयं दुःखाश्रयदुःखहेतुतत्परीहारोपायरूपमित्यर्थः, यो वेदेत्यनेनैतत्त्रयज्ञानस्य प्रतीकारहेतुत्वं वदन्नेतत्त्रयं मुमुक्षुभिर्ज्ञेयमित्यपि सूचितवान्, ननु तापो दुःखमिति पर्यायः तथा च दृष्टान्ते यथा भेद्यभेत्तृप्रतीकाररूपं त्रितयमस्ति नैवं दार्ष्टान्तिके तत्रैकस्या बुद्धेरेव तप्यतापकोभयरूपताऽभ्युपगमात् पुरुषस्य निर्दुःखत्वादित्याक्षिपति—कस्मादिति। सिद्धान्तमाह—त्रित्वो-

**अत्रापि तापकस्य रजसः सत्त्वमेव तप्यं, कस्मात्? तपिक्रियायाः कर्मस्थत्वात्, सत्त्वे कर्मणि तपिक्रिया, नापरिणामिनि निष्क्रिये क्षेत्रज्ञे, दर्शितविषयत्वात्, सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽनुतप्यत इति दृश्यते॥१७॥**

भास्वती ।

दाहरणेन स्फोटयति, सुगमम्, अत्रापीति । अत्रापि = परमार्थपक्षेऽपि कण्टकरूपस्य तापकस्य रजसोऽनुभवयुक्तपादतलवत् प्रकाशशीलं सत्त्वं तप्यं, कस्मात् तपिक्रियायाः कर्मस्थत्वाद् विकारयोग्यद्रव्यस्थत्वादित्यर्थः, सत्त्वरूपे कर्मण्येव तपिक्रिया सम्भवेन्न निष्क्रिये द्रष्टरि, यतो द्रष्टा दर्शितविषयः सर्वविषयस्य प्रकाशकस्ततः स न परिणमते, यथा जलस्य चाञ्चल्यात् तद्भासको बिम्बभूतः सूर्यो द्विरूप इव प्रतिभासते, न च तेन सूर्यस्य वास्तवं द्वैरूप्यं तथा सुखदुःखयोर्भासकः पुरुषः सुखी दुःखी चेति प्रतीयत इति, तदाकारानुरोधी = बुद्धिवत् प्रतीयमान इत्यर्थः ॥ १७ ॥

तत्त्ववैशारदी ।

नविरहेणेव धूमाभावमित्यत आह—"अत्रापि तापकस्य" इति । गुणानामेव तप्यतापकभावः, तत्र मृदुत्वात्पादतलवत्सत्त्वं तप्यं, रजस्तु तीव्रतया तापकमिति भावः, पृच्छति—"कस्माद्" इति । कस्मात्सत्त्वमेव तप्यं, न तु पुरुष इत्यर्थः, उत्तरं—"तपिक्रियाया" इति । तत्किमिदानीं पुरुषो न तप्यते, तथा चाचेतनस्यास्तु सत्त्वस्य तापः, किं नश्छिन्नमित्यत आह—"दर्शितविषयत्वात्सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽप्यनुतप्यत" इति, दर्शितविषयत्वमनुतापहेतुः, तच्च प्राग् व्याख्यातम् ॥ १७ ॥

पातञ्जलरहस्यम् ।

वं दुःखं विवेकिन इति, अहं दुःखीत्यनुभवमादाय पृच्छति–कस्मादिति । उत्तरमाह–तपीति ।

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारते—

तिस्मृतेः का गतिरिति शङ्कते–तत् किमिति । गुणातीतः स उच्यत इति स्मृतिमाश्रित्य समाधत्ते–दर्शितविषयत्वादिति । तद्गतं तापमनुसंधत्ते ध्यायतीव लेलायतीवेति श्रुतेः बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव बुद्धौ लेलायन्त्यां चेष्टमानायामात्मा चेष्टते भजत इत्यर्थः, तथा च शाङ्करं पुत्रे सकलेऽहमेव सकल इत्याद्यशेषस्वप्रचारसाक्षिण्यारोपप्रतीत्यन्तं भाष्यम् ॥ १७ ॥

वार्त्तिकम् ।

पलब्धीनि । बाह्यदुःखस्थल उक्तत्रयोपलब्धिबलादन्तर्दुःखस्थानेऽपि, त्रयसिद्धिरिति भावः, तस्य प्रकारमाह—अत्रापीति । अत्रापि दार्ष्टान्तिकेऽपि, अयं भावः–बुद्धेरेकत्वेऽपि त्रिगुणात्मकत्वादंशत्रयमस्ति, तत्र रजोंऽशस्तापकः सत्त्वांशस्तप्यो बुद्धिपुरुषयोर्वियोगश्च दुःखप्रतीकार इति त्रयमुपपन्नमिति, ननु पुरुष एव कथं न तप्यो भवतीत्याशयेन पृच्छति—कस्मादिति । सिद्धान्तमाह—अत्रापीत्यादिना–क्षेत्रज्ञ इत्यन्तेन, कर्मस्थत्वात् कर्मतन्त्रत्वात् सकर्मकत्वादिति यावत्, कर्मत्वं च क्रियाव्याप्यत्वं दुःखव्याप्यत्वं वा परिणामिनि न संभवतीत्यर्थः, वृत्तिव्याप्यत्वं तु विषयतारूपमपरिणामिन्यपि संभवतीत्यतो ज्ञानक्रियाकर्मत्वं पुरुषस्योपपद्यत इति विशेषः, यच्च पुरुषस्य स्वज्ञेयत्वं तदपि स्वप्रतिबिम्बितबुद्धिवृत्तिव्याप्यत्वमेवेति न तत्रापि परिणामापेक्षेति, नन्वेवं कथं दुःखनिवृत्तिः पुरुषार्थः परदुःखस्याहेयत्वात्, न च पुरुषनिष्ठत्वभ्रमाद् दुःखं हेयं स्यादिति वाच्यम्? विदुषामपि दुःखहानार्थमसंप्रज्ञातार्थितायाः स्वीकारादित्याशङ्क्य समाधत्ते—दर्शितविषयत्वादित्यादिना, पुरुषो यतो दर्शितविषयो बुद्धिसत्त्वेन निवेदितविषयोऽतः सत्त्वे तप्यमाने प्रतिबिम्बरूपेण बुद्धिसत्त्वसमानाकारो भवेन्न तु तप्यत इति मूढैर्दृश्यते अनुतप्यत इवेत्यर्थः, न हि स्वाकारप्रतिबिम्बनातिरिक्तं विषयनिवेदनमपरिणामिनि संभवति, प्रतिपादितं चैतद्वृत्तिसारूप्यमितरत्रेति सूत्रे, तथा च

दृश्यस्वरूपमुच्यते—

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं—**
**भोगापवर्गार्थं दृश्यम् ॥ १८ ॥**

प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः, स्थितिशीलं तम इति, एते गुणाः

भास्वती।

दृश्येति सूत्रमवतारयति—प्रकाशशीलमिति । पौरुषचैतन्येन चेतनावद्भवनं प्रकाशस्तदेव शीलं स्वभावो यस्य तद् द्रव्यं सत्त्वम्, चित्तेन्द्रियेषु यः सामान्यबोधरूपो भावो ग्राह्ये वस्तुनि च यः प्रकाश्यधर्मः स एव प्रकाशः, अवस्थाऽन्तरताप्राप्तिः क्रिया तच्छीलं रजसः, प्रकाशक्रिययो रुद्धावस्था स्थितिस्तच्छीलं तमसः, एत इति । एते सत्त्वादयो-

तत्त्ववैशारदी।

दृश्यं व्याचष्टे—"प्रकाशेत्यादि—दृश्यम्" इत्यन्तेन सूत्रेण, सत्त्वस्य हि भागः प्रकाशस्तामसेन भागेन दैन्येन वा राजसेन वा दुःखेनानुरज्यते, एवं राजसादिष्वपि द्रष्टव्यम्, ताद्-

पातञ्जलरहस्यम्।

अजामेकामितिश्रुतिमाश्रित्य सूत्रं पठति-"प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यमि"ति, प्रकाशक्रियास्थितिशीलं त्रिगुणात्मकं प्रधानं भूतानि पृथिव्यादिपञ्चकं तन्मात्रपञ्चकम् इन्द्रियाणि त्रयोदश तदात्मकं तदुपादानं दृश्यमिति सूत्रार्थः, तत् किमर्थं पुंसो भोगापवर्गार्थं भोगकाले संयोगो हेतुः मोक्षे च वियोगः, एवंधर्माणो गुणा इत्यर्थः, अन्ये त्वेतद्विदुरमृतास्तेये भवन्तीतरे दुःखमेवापयन्तीति पुंसां बहुत्वश्रुतिरन्योन्यात्मजातय-

वार्त्तिकम्।

प्रतिबिम्बरूपेण भोगाख्यसंबन्धेन विदुषामपि दुःखस्य हेयत्वान्न पुरुषार्थासंभवदोष इति भावः, ये तु पुरुषस्य भोक्तृत्वमपि नेच्छन्ति तेषामेवाधुनिकवेदान्तिब्रुवाणामयं दोषः ॥१७॥

इदानीं द्रष्टृदृश्यसंयोगानां त्रयाणामेव स्वरूपं सूत्रकारो वक्ष्यति, तत्र दृश्यरूपप्रतिपादकं सूत्रमवतारयति-दृश्यस्वरूपमुच्यत इति । अत्र पाठक्रमवैपरीत्येनादौ दृश्यकथनस्येदं बीजं दृशिमात्र इत्यागामिसूत्रे मात्रशब्देनाखिलदृश्यभेदतो द्रष्टा प्रतिपादनीयः, तत्र च प्रतियोगिनां दृश्यानां ज्ञानमादावपेक्ष्यत इति, पूर्वसूत्रे च प्राधान्यादादौ द्रष्टुरुपन्यास इति बोध्यम्,

"प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्" प्रलये प्रकाशादिकार्याभावाच्छीलपदोपादानं प्रकाशो बुद्ध्यादिवृत्तिरूपालोको भौतिकालोकश्च, क्रिया यत्नश्चलनं च, स्थितिः प्रकाशक्रियाभ्यां यथोक्ताभ्यां शून्यत्वं तयोः प्रतिबन्ध इति यावत्, तच्छीलं गुणत्रयमिति विशेष्यपदमत्रोत्तरसूत्रे गुणपर्वाणीति विभागवचनाल् लभ्यते, अत एव भाष्यकारैरेते गुणा इति व्याख्यास्यन्ते, तादृशेषु गुणेषु प्रमाणमाह—भूतेति । भूतेन्द्रियात्मकं स्थूलसूक्ष्मरूपाणां भूतानां स्थूलसूक्ष्मरूपाणां चेन्द्रियाणां कारणं तेन महदाद्यखिलकार्यकारणत्वमेव लब्धं तच्च गुणेषु तेषां प्रकाशादिरूपतायां च प्रमाणं त्रिगुणात्मकानां च जडकार्याणां त्रिगुणात्मकजडकारणं विनाऽनुपपत्तेरिति, गुणानां कार्यमुक्त्वा स्वरूपसत्ताप्रयोजकं प्रयोजनमाह—भोगापवर्गार्थमिति । भोगापवर्गप्रयोजनवदिति सूत्रार्थः, नन्वेवं गुणत्रयस्यैव दृश्यत्वं प्राप्तं न तु विकाराणामिति चेन्न—गुणपर्वतयोत्तरसूत्रेण तेषामपि संग्राह्यत्वादिति, तदेतत्सूत्रं व्याचष्टे—प्रकाशशीलमिति । ननु सत्त्वादिगुणा एव चेत् प्रकाशादिशीला दृश्यत्वेनात्रोक्तास्तर्हि प्रकृत्यवचनात् सूत्रकारस्य न्यूनता, तथा सत्त्वादिगुणानामेव भूतेन्द्रियात्मकत्वस्वीकारात् प्रकृतिसिद्धान्तक्षतिर्वैयर्थ्यादित्याशङ्क्य गुणा एव प्रकृतिशब्दवाच्याः न तु तदतिरिक्ता प्रकृतिरस्तीत्यवधारयति—एते गुणा इति। सत्त्वादयो गुणा एते प्रकृतिशब्दवाच्या भवन्ति प्र-

परस्परोपरक्तप्रविभागाः संयोगविभागधर्माण इतरेतरोपाश्रयेणोपार्जितमूर्तयः परस्पराङ्गाङ्गित्वेऽप्यसंभिन्नशक्तिप्रविभागास्तुल्यजातीयातुल्यजाती-

भास्वती ।

गुणाः = पुरुषस्य बन्धनरज्जव इत्यर्थः, सत्त्वादीनि द्रव्याणि, न तानि द्रव्याश्रया गुणाः, तेभ्यो व्यतिरिक्तस्य गुणिनोऽभावादिति वेदितव्यम्, ते गुणाः परस्परोपरक्तप्रविभागाः सत्त्वादीनां सात्त्विकराजसादिप्रविभागाः परस्परोपरक्ताः सात्त्विको भावो रजस्तमोभ्यामनुरञ्जितः, तथा—राजसास्तामसाश्च भावाः, ते च गुणा द्रष्ट्रा सह संयोगवियोगधर्माणः, तथा चेतरेतरेषामुपाश्रयेण सहायतयेत्यर्थः, उपार्जिता मूर्त्तयो भूतेन्द्रियाणि द्रव्याणि यैस्ते, गुणाः परस्परसहाया एव भूतेन्द्रियरूपेण परिणमन्ते, ते च नित्यं परस्पराङ्गाङ्गिनोऽविनाभाविसाहचर्यात, तथा सन्तोऽपि तेषां शक्तिप्रविभागोऽसम्भिन्नः = असङ्कीर्णः, यतः सत्त्वस्य प्रकाशशक्तिर्न क्रियास्थितिभ्यां सम्भिद्यते, प्रकाशक्रियास्थितयोऽङ्गाङ्गिन्योऽपि प्रत्येकं— पृथग्विधा इत्यर्थः, यथा श्वेतरक्तकृष्णवर्णमय्यां रज्जौ श्वेतादीनि सूत्राणि पृथग् वर्त्तन्ते तद्वत्, तुल्येति । असङ्ख्यसात्त्विकभावानामुपादानभूता प्रकाशशक्तिस्तेषां तुल्यजातीया—

तत्त्ववैशारदी ।

दमुक्तं—"परस्परोपरक्तप्रविभागा" इति, पुरुषेण सह संयोगविभागधर्माणः = यथाऽऽम्नायते—

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति,

इतरेतरोपाश्रयेणोपार्जिता मूर्त्तिः = पृथिव्यादिरूपा यैस्ते तथोक्ताः, स्यादेतत्—सत्त्वेन शान्तप्रत्यये जनयितव्ये रजस्तमसोरपि सत्त्वाङ्गत्वेन तत्र हेतुभावादस्ति सामर्थ्यमिति, यदाऽपि च रजस्तमसोरङ्गित्वं तदाऽपि शान्त एव प्रत्यय उदीयेत, न घोरो नापि मूढो वा सत्त्वप्राधान्य इवेत्यत आह—"परस्पराङ्गाङ्गित्वेऽप्यसंभिन्नशक्तिप्रविभागा" इति, भवतु शान्ते प्रत्यये जनयितव्ये रजस्तमसोरङ्गभावस्तथाऽपि नैषां शक्तयः सङ्कीर्य्यन्ते, कार्य्यासङ्कराद्धि यो हि शक्तीनामसङ्करः, असङ्कीर्णेन च समुदाचरता रूपेण शान्तघोरमूढरूपाणि कार्य्याणि दृश्यन्त इति सिद्धं शक्तीनामसंभेद इति,

पातञ्जलरहस्यम् ।

इत्यर्थः, समर्थस्य क्षेपायोगादिति न्यायेन शङ्कते—स्यादेतदिति । सति सामर्थ्येऽपि—

पुरुषार्थ एव हेतुर्न केन चित् कार्यते करणमि—

त्युक्तेः पुंसा पुमर्थविघातापत्तेः, न वरोपघाताय कन्योद्वाह्येतिन्यायादिति भावः, असंभिन्नशक्तिप्रविभागाः क्षितिसलिलादयः तत्सहकारिणो न तु त्रिदण्डवत् स्वातन्त्र्यं,— नन्वेवं सुन्दोपसुन्दवद् नश्येद् दूरे कार्यमित्याह—तथाऽपीति । धानुष्ककार्यात्मकादिवदस-

वार्त्तिकम् ।

धीयतेऽस्मिन्कार्यजातमित्यादिव्युत्पत्त्या प्रधानप्रकृत्यादिशब्दैरुच्यन्त इत्यन्वयः, तथा च सांख्यसूत्रं "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वादि"ति, सत्त्वादिषु गुणत्वं च पुरुषोपकरणत्वात्त्रन्धकत्वाच्च न तु प्रकाशक्रियाऽऽदिवत् परसमवेतत्वादिति भावः,प्रधानशब्दवाच्यत्वोपपादनाय गुणानामेव जगत्कारणत्वानित्यत्वादिकं हेतुगर्भविशेषणरुपपादयति—परस्परेति । सत्त्वस्य प्रविभागोऽधिकभागः स्वल्पाभ्यां च रजस्तमोभ्याम् उपरक्तः संसृष्टः, एवं रजसः तमसइत्येवं परस्परोपरक्तप्रविभागाः तथा संयोगविभागधर्माणः परस्परं संयोगविभागस्वभावाः, एतेन गुणानां द्रव्यत्वं सिद्धम्, तथेतरेतरसाहाय्येनोत्पादितावयविनः कार्यकारणाभेदेन चारम्भवादाद्विशेषः, ननु यदीतरसाहाय्येन सव गुणाः सर्वेकार्यकारणानि तर्हि सत्त्वादेरपि क्रियाऽऽदिहेतुत्वेन सक्रियत्वाद्यापत्त्या प्रकाशादिशक्तिसाङ्कर्यमिति ? तत्राह—परस्पराङ्गाङ्गित्वेऽपीति ।

यशक्तिभेदानुपातिनः प्रधानवेलायामुपदर्शितसन्निधाना गुणत्वेऽपि च

भास्वती ।

तेषाञ्चातुल्यजातीयशक्ती क्रियास्थिती, एवं राजसतामसयोर्भावयोः, असङ्कीर्णा अपि ताः सम्भूयकारिण्यस्त्रिगुणशक्तयः परस्परमनुपतन्ति सहकारिरूपेण वर्त्तन्त इत्यर्थ, गुणकार्याणां-तुल्यजातीयाश्चातुल्यजातीयाश्च याः शक्तयः प्रकाशक्रियास्थितयस्तासां येऽशेषा भेदास्ते-षामनुपातिनो गुणाः सहकारिणः समन्विता भूत्वाऽसमन्विता भूत्वा वेत्यर्थः, तदुक्तं-भवति, गुणानां शक्तिप्रविभागा असङ्कीर्णा अपि शक्यभावोत्पादनविषये ते सर्वे सम्भू-यकारिणः, प्रधानवेलायां = कस्य चिद् गुणस्य प्राधान्यकाले स कार्यजननोन्मुख इतरयोः प्रधानगुणयोः पृष्ठत एव वर्त्तते, अतस्ते गुणाः स्वस्वप्राधान्यवेलायामुपदर्शितसन्निधानाः = उपदर्शितं स्वानुभावेन ख्यापितं सन्निधानं निरन्तरावस्थानं यैस्तथाविधाः, गुणत्व इति ।

तत्त्ववैशारदी ।

स्यादेतद्—असम्भेदश्चेत् शक्तीनां न संभूयकारित्वं गुणानां न जातु भिन्नशक्तीनां संभूय कार्य्यकारित्वं दृष्टम्, न हि तन्तुमृत्पिण्डवीरणादीनि घटादीन् सम्भूय कुर्वन्ति इत्यत आह-"तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिन" इति । यद्यपि तुल्यजातीय उपादानशक्तिर्ना-न्यत्र, सहकारिशक्तिस्त्वतुल्यजातीये, घटे तु जनयितव्ये न वीरणानामस्ति सहकारिशक्तिर-पीति न तैस्तन्तूनां सम्भूयकारितेति भावः, तुल्यजातीयातुल्यजातीयेषु शक्येषु ये शक्तिभेदा-स्ताननुपतितुं शीलं येषां ते तथोक्ताः "प्रधानवेलायाम्" इति । दिव्यशरीरे जनयितव्ये सत्त्वं-गुणः प्रधानम्, अङ्गे रजस्तमसी, एवं मनुष्यशरीरे जनयितव्ये रजः प्रधानम्, अङ्गे सत्त्वत-मसी, एवन्तिर्य्यक्शरीरे जनयितव्ये तमः प्रधानम्, अङ्गे सत्त्वरजसी, तेनैते गुणाः प्रधानत्व-वेलायामुपदर्शितसन्निधानाः = कार्य्योपजननं प्रत्युद्भूतवृत्तय इत्यर्थः, प्रधानशब्दश्च भावप्रधानः, यथा "द्व्येकयोर्द्विवचनैकवचने" इत्यत्र द्वित्वैकत्वयोरिति, अन्यथा द्व्येकेष्विति स्याद्, ननु तदा प्रधानमुद्भूततया शक्यमस्तीति वक्तुम्; अनुद्भूतानां तु तदङ्गानां सद्भावे किम्प्रमाणमि-त्यत आह—"गुणत्वेऽपि च" इति । यद्यपि नोद्भूतास्तथाऽपि गुणानामविवेकित्वात्संभूय का-

पातञ्जलरहस्यम् ।

म्भेदोऽसङ्करः इत्यर्थः, तथा चेत्सम्भूयकारिताविरोध इति शङ्कते—स्यादेतदिति । न हि दृष्टेऽनुपपन्नमित्याह-यद्यपीति । यद्यपि ते गुणाः प्रकाशप्रवृत्तिस्थितिशीलतयाऽन्योन्यविरुद्ध-शक्तयोऽपि प्रधानान्तर्भावेणाविरुद्धशक्तयोऽनुमीयन्त इत्याह-प्रधानवेलायामित्यादि-उच्यत-इत्यन्तेन, प्रत्ययमन्तरेणेति । सर्वप्रत्ययनिमित्तत्वाददृष्टस्य, प्रत्ययोऽदृष्टमिति । भूतभावेने-त्यादि व्याख्यातं मया पूर्वमिति, भोगस्तु सुखसाक्षात्कार इत्याह-तत्रेष्टेति—सर्वं दुःखं-विवेकिनः इत्युक्तिमाश्रित्याह—अविभागापन्नमिति भाष्यार्थः,

वार्त्तिकम् ।

अन्योन्याङ्गाङ्गिभावेनोत्पादितेऽपि द्रव्ये प्रकाशगुणः सत्त्वस्यैव क्रियागुणो रजस एव स्थि-तिगुणस्तमस एवेत्यतो न प्रकाशादिशक्तिविभागस्य संभेदः संमिश्रणमित्यर्थः, तथा तुल्य-जातीयातुल्यजातीयशक्तिभेदानुपातिनः सत्त्वादिजात्या सजातीया विजातीयाश्च ये सहका-रिशक्तिविशेषाः तदनुपातिनस्तेषामविशेषणोपष्टम्भकस्वभावा इत्यर्थः, एतेन सत्त्वादीनि व्य-क्तिरूपेणानन्तानि, त्रिगुणत्वादिव्यवहारस्तु सत्त्वत्वादिजातिमात्रेण वैशेषिकाणां नवद्रव्य-व्यवहारवदिति सिद्धम्, अत एव लघुत्वादिधर्मैरन्योन्यं साधर्म्यं वैधर्म्यं च गुणानामिति सां-ख्यसूत्रेण सत्त्वादीनां साधर्म्यवैधर्म्ये लघुत्वादिरूपे प्रदर्शिते इति, तथा प्रधानवेलायां स्व-स्वप्राधान्यकालेऽभिव्यक्तसांनिध्या विकारेषु भवन्ति तथा गुणत्वेऽपीतरोपसर्जनतादशाया-मपि व्यापारमात्रेण तथा विषयविधयाऽयस्कान्तमणिवच्चित्तस्याकर्षकाः, वक्ष्यति हि—अ-

व्यापारमात्रेण प्रधानान्तर्णीतानुमितास्तिताः पुरुषार्थकर्त्तव्यतया प्रयुक्तसामर्थ्याः सन्निधिमात्रोपकारिणोऽयस्कान्तमणिकल्पाः प्रत्ययमन्तरेणैकतमस्य वृत्तिमनुवर्त्तमानाः प्रधानशब्दवाच्या भवन्ति, एतद् दृश्यमित्यु-

भास्वती ।

गुणत्वेऽप्राधान्येऽपि च व्यापारमात्रेण सहकारितया प्रधानगुण इतरयोरस्तित्वमनुमीयते सत्त्वकार्येषु बोधेष्वप्रधानयो रजस्तमसोः सत्ता बोधान्तर्गतक्रियाजाड्याभ्यामनुमीयत इत्यर्थः, पुरुषेति । पुरुषार्थता पुरुषसाक्षितेत्यर्थः, कार्यसमर्था अपि गुणाः पुरुषसाक्षितां विना महदादिकार्याणि न निर्वर्त्तयन्ति तस्मात् पुरुषसाक्षितया ते प्रयुक्तसामर्थ्याः = अधिकारवन्तः, ते च द्रष्ट्रा सहालिप्ता अपि तत्सान्निध्यादेवोपकारिणोऽयस्कान्तमणिवत्,

प्रत्ययेति । प्रत्ययः = स्वस्योद्भूतवृत्तिता याः कारणम्, तदभाव एकतमस्योद्भूतवृत्ति-

तत्त्ववैशारदी ।

रित्वाच्च व्यापारमात्रेण सहकारितया प्रधानेऽन्तर्णीतं सद् अनुमितमस्तित्वं येषां ते तथोक्ताः, ननु सन्तु गुणाः सम्भूय कारिणः समर्थाः, कस्मात्तत्पुनः कुर्वन्ति, न हि समर्थमित्येव कार्य्यं जनयति, मा भूदस्य कार्य्योपजननं प्रति विराम इत्यत आह—"पुरुषार्थकर्त्तव्यतया" इति । ततो निर्वर्त्तितनिखिलपुरुषार्थानां गुणानामुपरमः कार्य्यानारम्भणमित्युक्तं भवति, ननु पुरुषस्यानुपकुर्वतः कथं पुरुषार्थेन प्रयुज्यत इत्यत आह—"सन्निधिमात्रोपकारेण" इति । ननु धर्माधर्मलक्षणमेव निमित्तं प्रयोजकं गुणानां, किमुच्यते पुरु-

पातञ्जलरहस्यम् ।

पुरुषार्थ एव हेतुर्न केन चित् कार्यते करणमि,

त्युक्तिं स्मारयन्नाह—ततो निर्वर्तितेति । न तूपकार्यं विकृत्यैवोपकारकः कृतकृत्यो बीजमिव क्षितिसलिलादि,' अविकार्योऽयमुच्यत इति स्मृतेः कथं पुरुषार्थेन प्रमुच्यत इति तत्राह—सन्निधिमात्रेणेति । वस्तुतस्तु चुम्बकसन्निधाने लोहस्यैव भ्रमणं दृष्टं तदत्र विपरीतमतो राजवदेव-

वार्त्तिकम् ।

यस्कान्तमणिकल्पा विषयाः अयःसधर्मकं चित्तमिति, तथा प्रत्ययमन्तरेणाभिव्यक्तिं विना स्वानभिव्यक्तिकाल इति यावत्, तदानीमेकतमस्य यस्य कस्य चिद् गुणान्तरस्य वृत्तिमनु सूक्ष्मवृत्तिमन्तः वृत्त्यतिशयानामेव विरोधस्योक्तत्वादिति विशेषणवर्गार्थः, एतद् दृश्यमित्युच्यत इति । एतद्गुणत्रयमेव कार्यकारणभावापन्नं दृश्यमुच्यते नास्ति ततोऽतिरिक्तं दृश्यान्तरमित्यर्थः, एत एव च गुणा न्यायवैशेषिकाभ्यां द्रव्याष्टकरूपेण विभज्यन्ते, वेदान्तिभिस्तु मायेत्युच्यते, मायां तु प्रकृतिं विद्यादिति श्रुतेः, तदुक्तं बृहद्वासिष्ठे—

'नामरूपविनिर्मुक्तं यस्मिन्संतिष्ठते जगत् ।
तमाहुः प्रकृतिं के चित् मायामन्ये परे त्वणूनि'ति,

स्यादेतत्—यदि त्रिगुणातिरिक्ता प्रकृतिर्नास्ति तदाऽजामेकां लोहितशुक्लकृष्णामित्यादिश्रुत्युक्तं प्रकृतेरेकत्वादिकं व्याहन्येत, तथा—

'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्'—

इत्यादिनोक्तो' व्यापकत्वाक्रियत्वनिरवयवत्वादिरूपश्च सांख्यादिसिद्धान्तो व्याहन्येत, तथा

'एते प्रधानस्य गुणास्त्रयः स्युरनपायिन'—

इत्यादिस्मृतिपरम्परासु प्रधानस्य गुणानां चाधाराधेयभावहेतुहेतुमद्भावयोर्वचनं नोपपद्येत, तथा—

'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवा'—

वार्त्तिकम्।

इति गीतादिवाक्योक्तं सत्त्वादेः प्रकृतिकार्यत्वं चानुपपन्नम्, तथाऽष्टाविंशतितत्त्वपक्षोऽपि नोपपद्येतेति? अत्रोच्यते-पुरुषभेदेन सर्गभेदेन च भेदाभाव एव प्रकृतेरेकत्वमजाऽऽदिवाक्यैस्तन्मूलकसांख्यादिभिश्च प्रतिपाद्यते; अजावाक्येन तथातात्पर्यावधारणात्, भोग्यभोक्त्रोर्हि मध्ये भोग्या गुणा भोग्यत्वाभोग्यत्वाभ्यां सर्गभेदेन भिद्यन्ते, एते भोगार्हा एते च नेति मुक्तपुरुषोपकरणानामप्यन्यपुरुषभोग्यत्वात्, भोक्तारस्तु पुरुषाः भोक्तृत्वाभोक्तृत्वाभ्यां सर्गभेदेन भिद्यन्ते पूर्वसर्गमुक्ता नोत्तरसर्गे भोक्तारः किं त्वन्य एवेति, अतः प्रकृतिरेका पुरुषस्त्वनेक इत्युच्यते, तथा त एव गुणाः सर्वसर्गेषु स्रष्टारो भवन्ति, महदादिविकाराणां तु सर्गभेदेन भिन्नत्वं स्पष्टमेव, अतीतव्यक्तेः पुनरनुदयस्य वक्ष्यमाणत्वादिति, यदि तु प्रकृतिरेकैव व्यक्तिः स्यात् तदा निमित्तमप्रयोजकं प्रकृतीनामिति प्रकृतिबहुत्वसूत्रविरोधः इन्द्रो मायाभिः पुरुरूप ईयत— इत्यादिश्रुतिविरोधश्चेति, व्यापकत्वं च प्रकृतेः कारणत्वसामान्येनैव बोध्यम्, कारणशून्यप्रदेशाभावाद् गन्धादेः पृथिव्यादिव्यापकत्ववत्, महदादिकं तु सामान्येनापि न व्यापकमिति, अत एवांशभेदेन प्रकृतेर्व्यापकत्वपरिच्छिन्नत्वयोरभ्युपगमा"जात्यन्तरपरिणामः प्रकृत्यापूरादि"त्यागामिसूत्रोक्तः प्रकृत्यापूरो घटत इति, प्रकृतेरक्रियत्वं चाध्यवसायाभिमानादिरूपप्रतिनियतकार्यशून्यत्वमेव न तु चलनादिकर्मशून्यत्वं—

'प्रधानात् क्षोभ्यमाणाच्च तथा पुंसः पुरातनात्।
प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मक'—
मित्यादिस्मृतिषु प्रकृतेरपि चलनापरनामकक्षोभावगमात्,
'प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि!॥
चेष्टा यतः स भगवान् काल इत्यभिधीयत'—

इति स्पष्टं क्रियास्मरणाच्च, यत्तु क्वचित्पुरुषस्यापि क्षोभः श्रूयते स संयोगोन्मुखत्वेन गौणः प्रकृतिकर्मणैव संयोगोत्पत्तेरिति, प्रकृतेर्निरवयवत्ववाक्यानि चारम्भकावयवनिषेधकानि न तु वनांशवृक्षतुल्यानामंशानां निषेधकानि, एतेन एते प्रधानस्य गुणा इत्यादिवाक्यान्यप्युपपादितानि वनतुल्यस्य प्रधानस्यांशिनः पनसाम्रदाडिमादितुल्यस्य गुणद्रव्यस्यांशत्वाभ्युपगमाद् इति, यच्च सत्त्वादीनां प्रकृतिकार्यत्ववचनं तद्व्यवहाराभिप्रायेण प्रकाशादिफलोपहितत्वेनैव हि सत्त्वादिव्यवहारो दृश्यत इति; अन्यथा गुणनित्यत्वसिद्धान्तव्याघाताद्, अखण्डैकप्रकृतेर्विचित्रपरिणामासंभवाच्च संभवे वा महदादिकार्यान्तराणामपि केवलप्रकृतेरेव संभवाद् गुणकल्पनावैयर्थ्यम्, किं च गुणरूपावच्छेदभेदादेव तत्संभव इति चेद्? न-तथा सति गुणेभ्य एव सर्वकार्योपपत्त्या तदतिरिक्तप्रकृतिवैयर्थ्यम्, किं च यदि गुणत्रयातिरिक्ता प्रकृतिः स्यात् तदा—

"गुणसाम्यमनुद्रिक्तमन्यूनं च महामते!।
उच्यते प्रकृतिर्हेतुः प्रधानं कारणं परम्"—

इत्यादिस्मृतिषु "सत्त्वरजस्तमसां साम्यावस्था प्रकृति"रिति सांख्यसूत्रे च साम्यावस्थगुणानां प्रकृतित्ववचनमाञ्जस्येन नोपपद्येत, नोपपद्यते च 'विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि' 'ते व्यक्तसूक्ष्मा गुणात्मानः' 'परिणामक्रमसमाप्तिर्गुणाना' मित्यादिसूत्रेषु भाष्ये च गुणानामेव मूलकारणत्ववचनमित्यादिदूषणं स्यादिति, साम्यावस्था च न प्रकृतिलक्षणे विशेषणमपि तु यदा कदा चित्संबन्धेनोपलक्षणम्, काकवन्तो देवदत्तस्य गृहा इतिवत्, सा च न्यूनाधिकभावेनासंहननावस्था = अकार्यावस्थेति यावत्, तदुपलक्षितगुणत्वं च प्रकृतिलक्षणं महदादिव्यावृत्तं तेन सर्गकालेऽपि गुणानां प्रकृतित्वोपपत्त्या न प्रकृतिनित्यताक्षतिः, तापात्यस्य सदैकरूप्येण साम्यावस्थाशून्यत्वेऽपि तत्र प्रकृतिलक्षणातिव्याप्तिरिति दिक्, गुणेषु प्रमाणोपदर्शकं भूतेन्द्रियात्मकमिति विशेषणं व्याचष्टे-तदेतद्भूतेति। भूतभावेनेत्यस्य

च्यते. तदेतद् दृश्यं भूतेन्द्रियात्मकं = भूतभावेन-पृथिव्यादिना सूक्ष्मस्थूलेन परिणमते, तथेन्द्रियभावेन = श्रोत्रादिना सूक्ष्मस्थूलेन परिणमत इति, तत्तु नाप्रयोजनम्, अपि तु प्रयोजनमुररीकृत्य प्रवर्त्तत इति भोगापवर्गार्थं हि तद् दृश्यं पुरुषस्येति, तत्रेष्टानिष्टगुणस्वरूपावधारणम् अविभागापन्नं-

भास्वती।

कस्य वृत्तिमनुवर्त्तमानाः = अनुवर्त्तनशीलाः, एवंशीला दृश्या गुणाः प्रधानशब्दवाच्या भवन्तीति,

गुणानां कार्यरूपेण व्यवस्थितिमाह—तदिति। गुणप्रवर्त्तनस्य प्रयोजनमाह—तत्त्विति। भोगायापवर्गाय वा गुणानां प्रवृत्तिः, निष्पन्नयोश्च तयोस्तेषामव्यक्ततारूपा निवृत्तिः, तत्रेति भोग इष्टानिष्टगुणस्वरूपावधारणम् "अहं सुखी, अहं दुःखी"ति, गुणकार्यस्वरूपस्यावधारणम्, तत्र भोगे द्रष्ट्रा सह सुखदुःखबुद्धेरविभागापत्तिः = सङ्कीर्णताऽविवेको वेति, अहं सुखी अहं दुःखीत्यात्मबुद्धेरपि यो द्रष्टा स भोक्ता, तस्य भोक्तुः स्वरूपावधारणं—

तत्त्ववैशारदी।

पार्थप्रयुक्ता इत्यत आह—"प्रत्ययमन्तरेण" इति। एकतमस्य = सत्त्वस्य रजसस्तमसो वा प्रधानस्य स्वकार्य्ये प्रवृत्तस्य वृत्तिम् इतरे प्रत्ययं = निमित्तं धर्मादिकं विनैवानुवर्त्तमानाः, यथा च वक्ष्यति—"निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवद्" इति, एते गुणाः प्रधानशब्दवाच्या भवन्तीति सम्बन्धः, प्रधीयते विधीयते विश्वं कार्य्यमेभिरिति व्युत्पत्त्या, एतद् दृश्यमुच्यते, तदेवं गुणानां शीलमभिधाय तस्य कार्य्यमाह—"तदेतद्" इति। सत्कार्य्यवादसिद्धौ यद् यदात्मकं तत् तेन रूपेण परिणमत इति, भूतेन्द्रियात्मकत्वं दीपयति,—"भूतभावेन" इत्यादिना, "भोगापवर्गार्थम्" इति सूत्रावयवमवतारयति—"तत्तु नाप्रयोजनम्" इति। भोगं विवृणोति—"तत्र" इति। सुखदुःखे हि त्रिगुणाया बुद्धेः स्वरूपं, तस्यास्तथात्वेन परिणामात्, तथाऽपि गुणगततयाऽवधारणेन भोग इत्यत आह—"अविभागापन्नम्" इति।

वार्त्तिकम्।

विवरणं पृथिव्यादिनेति, तत्राप्यवान्तरविशेषमाह—सूक्ष्मस्थूलेनेति। तन्मात्राणि सूक्ष्माणि पृथिव्यादीनि महाभूतानि स्थूलपृथिव्यादीनि, इन्द्रियभावेनेत्यस्य विवरणं श्रोत्रादिनेति, तत्राप्यवान्तरविशेषमाह—सूक्ष्मस्थूलेनेति। महदहंकारौ सूक्ष्मेन्द्रियमेकादश च स्थूलेन्द्रियाणि, इन्द्रियस्य संघात ईश्वरस्य कारणत्वादित्यर्थः, भोगापवर्गार्थमिति गुणस्यैवा परं विशेषणं, मोक्षोपपादकं व्याचष्टे-तत्तु नाप्रयोजनमित्यादिना, तद् गुणत्रयं न प्रयोजनशून्यं सद् भूतेन्द्रियरूपेण प्रवर्त्तते; अपि तु प्रयोजनं स्वीकृत्यैव प्रवर्त्तत इत्यतस्तादृशं गुणत्रयं पुरुषस्य भोगापवर्गार्थं हि भोगापवर्गफलकमेवेत्यर्थः, भोगापवर्गौ व्याचष्टे-तत्रेष्टानिष्टेति। इष्टानिष्टगुणाः सुखदुःखात्मकाः शब्दादयः तत्स्वरूपावधारणं तदाकारा बुद्धिवृत्तिः न तु पुरुषनिष्ठः साक्षात्कारः बुद्धिनिष्ठतायाः वक्ष्यमाणत्वात्, स हि तत्फलस्य भोक्तेत्यनेन पुरुषनिष्ठस्य भोगान्तरस्य वक्ष्यमाणत्वात् पुरुषनिष्ठभोगस्य चित्स्वरूपतया नित्यत्वेन न फलत्वमसाऽस्तीति भावः, शब्दादिवृत्तिकाले विवेकख्यातिसत्त्वे वक्ष्यमाणापवर्ग एवेति तादृक्शब्दादिव्यावृत्त्यर्थमविभागापन्नमिति विशेषणं पुरुषेण सहाविविक्तम्, अहंकारेण ममेत्यात्मनिष्ठतयाऽभिमन्यमानमिति यावत्, जीवन्मुक्तस्य भोगाभास एव, अहं शृणोमीत्याद्यभिमन्यमानकर्मस्वेव शब्दादिवृत्तेर्गुणेषु भोगव्यवहारात्, भोक्तुरिति। भोक्तुः पुरुषस्य यत्स्वरूपमुपाधिविविक्तचैतन्यं तदाकारा बुद्धिरपवर्गः,

आदौ तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात्।
कृच्छ्रक्षयात् तृतीयस्तु व्याख्यातं मोक्षलक्षणम्—

भोगः, भोक्तुः स्वरूपावधारणमपवर्ग इति, द्वयोरतिरिक्तमन्यद् दर्शनं नास्ति, तथा चोक्तम् "अयन्तु खलु त्रिषु गुणेषु कर्त्तृषु अकर्त्तरि च पुरुषे तुल्यातुल्याजातीये चतुर्थे तत्क्रियासाक्षिण्युपनीयमानान् सर्वभावानुपपन्नाननुपश्यन्न दर्शनमन्यच्छङ्कत" इति, तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धा-

भास्वती।

गुणेभ्यः पृथक्त्वावधारणं विवेकख्यातिरित्यर्थः, अपवर्गः, अपवृज्यते मुच्यते गुणाधिकारस्त्यज्यते वाऽनेनेत्यपवर्गः, विवेकाविवेकरूपयोर्ज्ञानयोरतिरिक्तमन्यज् ज्ञानं नास्तीत्यत्र "पञ्चशिखाचार्येणो"क्तम्—अयमिति। अयं मूढो जनस्त्रिषु गुणेषु कर्तृषु सत्सु तत्त्रयापेक्षया चतुर्थेऽकर्त्तरि, गुणकार्यरूपाया आत्मबुद्धेस्तुल्यातुल्यजातीये, उक्तञ्च—

तत्त्ववैशारदी।

एतच्चासकृदावेदितम्, अपवर्गं विवृणोति—"भोक्तुरिति। अपवृज्यतेऽनेनेत्यपवर्गः, प्रयोजनान्तरस्याभावमाह—"द्वयोः" इति। "तथा चोक्तं पञ्चशिखेन—"अयन्तु खलु" इति।

वार्त्तिकम्।

इति पञ्चशिखवाक्याद्, अपवृज्यतेऽनेनेति व्युत्पत्तेर्वेत्यर्थः, ननु भोगापवर्गातिरिक्तार्थमपि दृश्यं कथं न भवतीत्याकाङ्क्षायामाह—द्वयोरिति। दर्शनं बुद्धिवृत्तिः, अविभागापन्नतायां पञ्चशिखाचार्यसंवादमाह—तथा चोक्तमिति। अयं लोकेषु गुणेषु सर्वकर्त्तृषु सत्सु गुणत्रयापेक्षया चतुर्थे तुरीये पुरुषे गुणव्यापाराणां जाग्रदादीनां साक्षिमात्रे कर्त्तर्युपनीयमानान् बुद्ध्याः समर्प्यमाणान् गुणपरिणामान् तत्रैव पुरुषे उपपन्नान् युक्तिसिद्धानिव पश्यन् मूढो न गुणेभ्योऽन्यद्दर्शनं चैतन्यं शङ्कते संभावयत्यपीत्यर्थः, अत्र विवेकाग्रहणे भिन्नत्वे च हेतुस्तुल्यातुल्यजातीय इति पुरुषविशेषणम्, बुद्धिपुरुषयोर्द्वयोरपि स्वच्छत्वसूक्ष्मत्वादिना साम्याद् गुणपुरुषयोस्तुल्यजातीयत्वं जडाजडत्वपरिणामित्वापरिणामित्वादिभिश्च वैजात्यमित्याशयः, अत्र भाष्ये गुणत्रयापेक्षया पुरुषस्य चतुर्थत्ववचनाद् अन्यान्यपि तुरीयवाक्यानि जाग्रदाद्यवस्थसत्त्वादिगुणत्रयापेक्षया साक्षित्वमेव पुरुषस्य तुरीयावस्थां वदन्तीति सिद्धम्, तथा च स्मर्यते—

"सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत्।
प्रस्वापनं तु तमसा तुरीयं त्रिषु संततम्"

इति, ननूक्तयोर्भोगापवर्गयोर्गुणकार्यतया गुणनिष्ठत्वेन कथं पुरुषस्य भोगापवर्गार्थं दृश्यमित्युक्तमित्याशङ्कते—तावेताविति। यतो बुद्धिकृतावन्वयव्यतिरेकाभ्यां बुद्धिकार्यावतोऽवयवेन बुद्धावेव वर्त्तमानौ न तु पुरुषनिष्ठावित्यादिरर्थः, दृष्टान्तप्रदर्शनपूर्वकं परिहरति—यथेत्यादिना। पुरुष स्वामित्वाज्जयादिवत् तौ व्यपदिश्येते इति वाक्यार्थः, बन्धमोक्षौ यथोक्तभोगापवर्गौ, स हि तत्फलस्येति। बुद्धिगतयोर्विषयावधारणपुरुषावधारणयोः फलस्य सुखादिरूपस्य भोक्ता स्वप्रतिबिम्बितस्य साक्षी; अतस्तयोः स्वामीत्यर्थः, अत्र(१) पुरुषस्यापि स्वातन्त्र्येण भोगस्योक्तत्वात् स्वरूपप्रतिष्ठा वा चितिशक्तिरिति शास्त्रप्रान्तसूत्रे पुरुषस्य स्वतोऽपि मोक्षस्य वक्ष्यमाणत्वाच्च पुरुषस्य भोगापवर्गौ न निराक्रियेते बुद्धिगतभोगापवर्गयोः स्वतोऽपुरुषार्थत्वाच्च करणव्यापारस्य पुरुषार्थतासिद्धान्ताच्च, अपि तु परिणामरूपौ यथोक्त-

(१) अत्रेति। "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति"-शास्त्रशेषसूत्रेण चरमपक्षस्य मुख्यमोक्षत्वस्वारस्याद् "मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरि"त्यादिप्रमाणैश्च भोगस्यापि पुरुषे भक्त्या सूचनम्,

एतदाशयक एव भिक्षुक्तो भोगः पुंसि केनाप्याक्षिप्तो नितरामविवेकनिबन्धनः।

वेव वर्त्तमानौ कथं पुरुषे व्यपदिश्येते इति ? यथा विजयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्येते स हि तस्य फलस्य भोक्तेति, एवं-बन्धमोक्षौ बुद्धावेव वर्त्तमानौ पुरुषे व्यपदिश्येते, स हि तत्फलस्य भोक्तेति, बुद्धेरेव पुरुषार्थापरिसमाप्तिर्बन्धः, तदर्थावसायो मोक्ष इति, एतेन ग्रहणधारणोहापोहतत्त्वज्ञानाभिनिवेशा बुद्धौ वर्त्तमानाः पुरुषेऽध्यारोपि-

भास्वती।

"न स बुद्धेः सरूपो नात्यन्तं विरूप" इति,

गुणक्रियारूपवृत्तिसाक्षिणि पुरुषे, उपनीयमानान् = बुद्ध्या समर्प्यमाणान् सर्वभावान् सुखदुःखादीनित्यर्थः, उपपन्नान् = सांसिद्धिकान् स्वाभाविकानित्यर्थः, अनुपश्यन् = जानंस्ततोऽन्यद् महदात्मनः परं दर्शनं ज्ञमात्रमस्तीति न शङ्कते न जानाति, भोगमेव जानाति नापवर्गम्,

तदिति। व्यपदिश्येते = अध्यारोपितौ भवतः, अवसायः = समाप्तिः, सुगममन्यत्, एतेनेति। ग्रहणं = स्वरूपमात्रेण बाह्यान्तरविषयज्ञानम्, धारणं = गृहीतविषयस्य चेतसि स्थितिः, ऊहनं = धृतविषयस्योत्थापनं स्मरणं वा, अपोहः = स्मरणारूढविषयेषु कियतामपनयनम्, तत्त्वज्ञानम् = ऊहापोहपूर्वकं नामजात्यादिभिः सह पदार्थविज्ञानम्, अभिनिवेशः = तत्त्वज्ञानानन्तरं हेयोपादेयत्वनिश्चयपूर्वकं प्रवर्त्तनं निवर्त्तनं वा, एते बुद्धिभेदा एव, अतो बुद्धौ वर्त्तमानाः पुरुषे चैतन्येऽध्यारोपितसद्भावाः = अध्यारोपित उपचरितः स-

तत्त्ववैशारदी।

ननु वस्तुतो भोगापवर्गौ बुद्धिकृतौ बुद्धिवर्त्तिनौ च कथं तदकारणे तदनधिकरणे च पुरुषे व्यपदिश्येते इत्यत आह-"तावेतौ" इति। भोक्तृत्वं च पुरुषस्योपपादितम्, अग्रे च वक्ष्यते, परमार्थतस्तु "बुद्धेरेव पुरुषार्थापरिसमाप्तिर्बन्ध" इति, एतेन = भोगापवर्गयोः पुरुषसम्बन्धित्वकथनमार्गेण, ग्रहणादयोऽपि पुरुषसम्बन्धिनो वेदितव्याः, तत्र स्वरूपमात्रेणार्थज्ञानं ग्रहणं,-तत्र स्मृतिः = धारणं, तद्गतानां विशेषाणामूहनमूहः, समारोपितानां च युक्त्याऽपनयोऽपोहः,

वार्त्तिकम्।

भोगापवर्गावेव पुरुषस्य निराक्रियेते, अत एव तावेतावित्यनेन भोगापवर्गौ विशेषितौ भाष्यकारेणेति, पुरुषाणां च संसारिणां मुख्य एव भोगो बुद्धिवृत्त्यविविक्तः सुखादिसाक्षात्कारः, जीवन्मुक्तेश्वरयोस्तु गौणो भोगः, सुखादिसाक्षात्कारमात्ररूप इतीश्वरलक्षणसूत्रे प्रतिपादितमस्माभिरिति, यदि च पुरुषे पृथग्भोगमोक्षौ न स्वीक्रियेते तदा—

"कार्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते",
"मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः"—

इत्यादि वाक्यानि नोपपद्येरन्निति दिक्, बुद्धेरेव परमौ बन्धमोक्षावपि दर्शयति—बुद्धेरेवेति। बुद्धिरूपेण परिणतानां गुणानामेवेत्यर्थः, तदर्थावसायो विवेकख्यात्या पुरुषार्थसमाप्तिः, तथा च यथोक्तभोगापवर्गरूपैः पुरुषार्थैः संबन्धो बुद्धेर्बन्धो वियोगश्च मुक्तिरिति भावः, एतौ च बुद्धेः परमबन्धपरममुक्ती, पूर्वोक्तौ तु भोगापवर्गावपरबन्धजीवन्मुक्ती इत्यविरोधः, एतेनेति। एतेन शब्दादिविषयभोगविवेकख्यात्योः पुरुषेष्वौपचारिकत्वेन ग्रहणादयोऽपि पुरुषेषूपचरितसत्ताका वेदितव्या इति शेषः, ग्रहणं स्वरूपमात्रेणार्थज्ञानं, धारणा चिन्तनम् ऊहोऽर्थगतविशेषाणां वितर्कणमपोहो वितर्कितमध्ये विचारतः कियतां निराकरणं तत्त्वज्ञानं वितर्कितमध्य एव विचारतः कियद्विशेषावधारणम् अभिनिवेशस्तदाकारताऽऽपत्तिरिति, प्रकृतस्य

तत्सद्भावाः स हि तत्फलस्य भोक्तेति ॥ १८ ॥

दृश्यानां तु गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—

**विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥**

तत्राकाशवाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्राणामविशेषाणां विशेषाः, तथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि, एकादशं मनः सर्वार्थम्, इत्येतान्य-

भास्वती ।

भावोऽस्तित्वं येषान्ते, पुरुषो हि तत्फलस्य = अध्यारोपफलस्य वृत्तिबोधस्य भोक्ता = बोद्धेति ॥ १८ ॥

दृश्येति । स्वरूपं = कार्यस्वरूपं, भेदः = कार्यभेदः, तत्रेति । तन्मात्रपञ्चकमस्मिता चेति षट् पदार्था अविशेषा इत्यस्मिञ्छास्त्रे परिभाषिताः, तथा च ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि सङ्कल्पकं मनः, पञ्चभूतानि चेति षोडश विशेषाः, एत इति । एते षडविशेषाः परिणामाः सत्तामात्रस्यात्मनः = अस्मीति ज्ञानमात्रस्येत्यर्थः, सत्ताज्ञानयोरविनाभावित्वात्, आत्मसत्तामात्र आत्मबोधमात्रश्चेति पदद्वयं समार्थकम्, तादृशश्चात्मभावो महान् = अ-

तत्त्ववैशारदी ।

ताभ्यामेवोहापोहाभ्यां तदवधारणं तत्त्वज्ञानं, तत्त्वावधारणपूर्वं हानोपादानमभिनिवेशः॥१८॥

दृश्यानां गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—

"विशेषेत्यादि—पर्वाणीत्यन्तं" सूत्रम्, येषाम् अविशेषाणां = शान्तघोरमूढलक्षणरहि-

पातञ्जलरहस्यम् ।

दृष्टान्तः साधुरिति भावः, उपपादितं परार्थत्वात् प्रधानादेरित्यत्र ॥ १८ ॥

"विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि", अविशेषाणां पञ्चतन्मात्राणां विशेषा भूम्यादयः, तथा मनोऽन्तान्येकादशेन्द्रियाण्यविशेषस्याहङ्कारस्य विशेषाः, अलिङ्गमात्रस्य महदहङ्कारौ विशेषौ, प्रकृतौ सर्वेषां लयादलिङ्गं प्रधानमिति चतुर्विंशतिपर्वा गुणावस्था इति सूत्रार्थः,

वार्त्तिकम् ।

योगस्य भूमिकारूपतयैव चित्तपरिणामा अत्र गणिता एतैश्चान्येऽपीच्छाकृत्यादय उपलक्षणीया इति ॥ १८ ॥

नन्वनेन सूत्रेण गुणानामेव दृश्यत्वं प्रोक्तं न तु विकाराणामिति न्यूनतानिरासाय प्रवर्त्तमानं सूत्रान्तरमवतारयति—दृश्यानां त्विति । स्वरूपभेदावधारणार्थम् = अवान्तरभेदप्रतिपादनार्थमित्यर्थः,

"विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि", गुणात्मको वंशस्तस्य।लिङ्गादिविशेषान्तं पर्वचतुष्टयं बीजाङ्कुरवदवस्थाभेदाः नात्यन्तं भिन्ना अतो गुणेष्वेव सर्वदृश्यानामन्तर्भाव-इति सूत्रकारस्याशयः, कार्यैः कारणान्यनुमीयन्त इत्याशयेन विशेषादिक्रमेण पर्वगणनम्,

तत्र यस्य यस्याविशेषस्य यो यो विशेषस्तमाह—तत्राकाशेति । आकाशादीनि भूतानि शब्दादितन्मात्राणां शान्तादिविशेषशून्यशब्दादिधर्मकसूक्ष्मद्रव्याणामत एवाविशेषसंज्ञकानां-विशेषा अभिव्यक्तशान्तादिविशेषकाः परिणामाः, यथाक्रममिति शेषः, तथेति । विशेषा—इत्यागामिनाऽन्वयः, मनस इन्द्रियमध्यप्रवेशे हेतुगर्भविशेषणं सर्वार्थमिति । सर्वेषां दशेन्द्रियाणामर्था एवार्था यस्येति मध्यमपदलोपी समासः, मनःसहकारेणैव श्रोत्रादीनां शब्दादिग्राहकत्वादिति, अहंकारस्याविशेषत्वे हेतुगर्भविशेषणम्—अस्मितालक्षणस्येति। अभिमानमात्रधर्मकस्य श्रवणस्पर्शनदर्शनादिरूपविशेषरहितस्याहंकारस्येति शेषः, पिण्डीकृत्य विशेषपर्वो-

स्मितालक्षणस्याविशेषस्य विशेषाः, गुणानामेष षोडशको विशेषपरिणामः, षड् अविशेषाः,=तद्यथा शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रञ्च, इत्येकद्वित्रिचतुष्पञ्चलक्षणाः शब्दादयः पञ्चावि-

भास्वती ।

भिमानैरनियत इत्यर्थः, अहमेवमहमेवमित्यभिमानैरात्मभावः सङ्कोचमापद्यते, अस्मीति-प्रत्ययमात्रे तदभावात् स महानबाधितस्वभावः सङ्कोचहीन इति, तस्य महत आत्मनः षडविशेषपरिणामाः, महतोऽहङ्कारः, अहङ्कारात् पञ्चतन्मात्राणीति क्रमेणेति । यदिति । यदविशेषेभ्यः परं पूर्वोत्पन्नं तल्लिङ्गमात्रम्=स्वकारणयोः पुम्प्रधानयोर्लिङ्गमात्रं ज्ञापकमित्यर्थः, महत्तत्त्वम् पुरुषस्य लिङ्गं चेतनत्वं ग्रहीतृत्वं वा प्रधानस्य लिङ्गं त्रिगुणाऽऽत्मख्यातिरिति, स्मर्यते च—

"अलिङ्गां प्रकृतिं त्वाहुर्लिङ्गैरनुमिमीमहे ।
तथैव पौरुषं लिङ्गमनुमानाद्धि मन्यते" ॥ इति,

तत्त्ववैशारदी ।

तानां ये विशेषाः=विकारा एव न तु तत्त्वान्तरप्रकृतयस्तेषां तानाह—तत्राकाश" इति । उत्पादक्रमानुरूप एवोपन्यासक्रमः, अस्मितालक्षणस्याविशेषस्य सत्त्वप्रधानस्य बुद्धीन्द्रियाणि विशेषाः रजःप्रधानस्य तु कर्मेन्द्रियाणि, मनस्तूभयात्मकमुभयप्रधानस्येति मन्तव्यम्, अत्र च पञ्च तन्मात्राणि बुद्धिकारणकान्यविशेषत्वाद् अस्मितावद् इति, विकारहेतुत्वं चाविशेषत्वं-तन्मात्रेषु चास्मितायां चाविशिष्टम् सङ्कलय्य विशेषान् परिगणयति—"गुणानामेष" इति । अविशेषानपि गणयति—"षड्" इति । सङ्कलय्योदाहरति—'तद् यथा' इति । विद्धं—द्यपरं परेणेति गन्ध आत्मना पञ्चलक्षणः, रस आत्मना चतुर्लक्षणः, रूपमात्मना त्रिलक्षणं,-स्पर्श आत्मना द्विलक्षणः, शब्दः शब्दलक्षण एवेति, कस्य पुनरमी षडविशेषाः कार्य्य-

पातञ्जलरहस्यम् ।

सांख्यमते सर्वाणीन्द्रियाणि सात्त्विकानीति प्रतितन्त्रसिद्धान्तेन तन्मतं व्यवच्छिन्नमत आह—अस्मितालक्षणस्येति तत्र तामसाहङ्कारात्तन्मात्राण्यत्र महत्तत्वोपादानानीत्याह—बुद्धीति । युक्तिमप्याह—अविशेषत्वादिति । हेत्वन्तरमाह—विकारेति । विकारः षोडशको गणः तत्र यथा पञ्चभ्यः पञ्चभूतानीति तन्मात्राणि महाभूतानां कारणं तथाऽहङ्कारोऽपीन्द्रियाणाम् इत्याह—नीति । अहङ्कारोऽप्यविशेष इत्याह—षष्ठश्चेति । युक्तिमप्याह —एत-इति । बुद्धिसत्त्वं पुरुषश्चेतयते साहङ्कारा बुद्धिः पुरुषमुपभोजयति,

वार्त्तिकम् ।

पसंहरति—गुणानामिति । एवं पञ्चभूतैकादशेन्द्रियगणः षोडशसंख्याको गुणानां विशेषाख्यः परिणाम इत्यर्थः, नन्विन्द्रियवत्तन्मात्राण्यहंकारस्य विशेषाः कथं नोक्ताः शब्दस्पर्शादिविशेषवत्त्वादिति चेन्न—विशेषमात्रस्यैवात्र विशेषपरिभाषणात् तन्मात्राणां तु भूतानामविशेषाअपि भवन्तीति, अविशेषपदं व्याचष्टे—षड् अविशेषा इति । षड् गणयति—शब्दतन्मात्रमित्यादिना—अस्मितामात्र इत्यन्तेन, एकद्वित्रीति । लक्ष्यतेऽनेनेति लक्षणं धर्मः तन्मात्राणां-द्रव्यत्वलाभाय लक्षणपदं तथा चात्तरोत्तरतन्मात्रेषु पूर्वपूर्वतन्मात्राणां हेतुत्वाच्छब्दतन्मात्रं शब्दमात्रधर्मकं तत्कार्यतया स्पर्शतन्मात्रं शब्दस्पर्शोभयधर्मकम्, एवं क्रमेणैकैकलक्षधर्मवृद्धिरित्यर्थः, एतेषु च मात्रशब्दैः शान्तादिविशेषस्यैव व्यावृत्तिर्न तु गुणान्तरसंपर्कस्य एकद्वित्र्यादिलक्षणत्ववचनात्,

तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ।
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः—

शेषाः, षष्ठश्चाविशेषोऽस्मितामात्र इति, एते सत्तामात्रस्यात्मनो महतः षडविशेषपरिणामाः, यत् तत्परमविशेषेभ्यो लिङ्गमात्रं महत्तत्त्वम्, तस्मि-

भास्वती ।

लिङ्गमात्रो महानात्मा यथोक्तलिङ्गमात्रस्वभावः, तस्मिन् महदात्मन्यवस्थाय = सूक्ष्मरूपेण कारणसंसृष्टा अहङ्कारादयोऽवस्थाय, ततः परं तेऽविशेषविशेषरूपां विवृद्धिकाष्ठां = चरमां विवृद्धिम्, अनुभवन्ति प्राप्नुवन्तीत्यर्थः, प्रतिसंसृज्यमाना विलोमपरिणामक्रमेण च लीयमाना महदात्मन्यवस्थाय = महत्तत्त्वरूपतां प्राप्याव्यक्ततां प्रतियन्तीति । गुणानामव्यक्ततायाः किं स्वरूपं ? तदाह-यदिति । निःसत्ताऽसत्तं = निष्क्रान्ताः

तत्त्ववैशारदी ।

मित्यत आह—एते सत्तामात्रस्यात्मन" इति । पुरुषार्थक्रियाक्षमं सत् तस्य भावः सत्ता,

पातञ्जलरहस्यम् ।

सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्ममिति ।

वार्त्तिकम् ।

इति विष्णुपुराणाच्चेति,

ननु तन्मात्रेषु परस्परं कार्यकारणभावे सिद्ध एव कारणगुणक्रमेणोत्तरोत्तरं गुणवृद्धिः सेत्स्यति तत्रैव तु किं प्रमाणं श्रुतिस्मृत्योः स्थूलभूतेष्वेवाकाशादिक्रमेण कारणतासिद्धेरिति चेद् ? आकाशादिस्थूलभूतेभ्यो वाय्वाद्युत्पत्तिदर्शनेन सूक्ष्मेऽपि भूते तथा कार्यकारणभावकल्पनस्यौचित्यमिति, एतानि च तन्मात्राणि तामसाहंकाराच्छब्दादिक्रमेणोत्पद्यन्त इति बोध्यम्, अस्मितामात्रोऽभिमानवृत्तिकः, तेनेन्द्रियभावापन्नाहंकारव्यावृत्तिः, एते सत्तामात्रस्येति । सत्ता विद्यमानता व्यक्ततेति यावत्, व्यक्ततामात्रं महत्तत्त्वमाद्यकार्यत्वात्, प्रलये हि सर्वं विकारद्रव्यम् अतीतानागतरूपाभ्यामेव तिष्ठति न तु विद्यमानतया, अत आद्यविकारोऽङ्कुरवद्यो महान् सर्गादौ सत्तां लभते स सत्तामात्रमुच्यते स च सत्सामान्यतया सत्तामात्रमुच्यते सद्विशेषाणामहंकारादीनां तदानीमभावात्, अत एव यास्कमुनिना शब्दादिषड्भावविकारमध्ये जन्मान्तरमस्तितैव विकार उक्तः, तथा च संसारवृक्षस्यास्तितामात्रपरिणामो महत्तत्त्वं वृद्धिपरिणामस्त्वहंकारादिरिति, एवंभूतस्य सर्वविकाराणामात्मनः स्वरूपस्य महतो महत्तत्त्वस्य बुद्ध्याख्यस्य परिणामाः षड् अविशेषसंज्ञका इत्यर्थः अविशेषत्वं च सामान्यत्वम्, यद्यपि षोडशविशेषाणां सामान्यत्वं महत्तत्त्वप्रकृत्योरप्यस्ति तथाऽप्यस्ति विशेषशब्दः पङ्कजादिशब्दवद्योगरूढः षट्स्वेवेति, अत्र षण्मध्ये तन्मात्राणां बुद्धिपरिणामित्वमहंकारद्वारैव मन्तव्यं "सूक्ष्मविषयत्वं चालिङ्गपर्यवसानमि"ति सूत्रे भाष्येण तथा व्याख्यातत्वादिति, लिङ्गमात्रपदं व्याचष्टे—यत्तत्परमिति । अविशेषेभ्यो यत्परं पूर्वोत्पन्नं वंशस्योद्भित्पर्ववज्जगदङ्कुरो महत्तत्त्वं तल्लिङ्गमात्रमित्यर्थः, लिङ्गमखिलवस्तूनां व्यञ्जकं तन्मात्रं महत्तत्त्वम्, महत्तत्त्वं हि स्वयंभ्वादिपुंसः कार्यब्रह्मण उपाधिभूतं सर्गादौ सर्वं जगद्भासयदेवोदेति सुप्तोत्थितचित्तवत्, ज्ञानानिरिक्तस्तु व्यापारः पश्चादेवाहंकारादुत्पन्नो भवत्यतो लिङ्गमात्रमित्युच्यते, तथा च स्मृतिः—

ततोऽभवन्महत्तत्त्वमव्यक्तात् कालचोदितात् ।
विज्ञानात्मात्मदेहस्थं विश्वं व्यञ्जंस्तमोनुद इति,

कश्चित्तु लयं गच्छतीति लिङ्गपदस्यार्थमाह—तत्तु प्रमाणादर्शनादुपेक्षितम्, अहंकारादेरपि लयगमनेन महत्तत्त्वमात्रे लिङ्गमात्रप्रयोगानौचित्याच्च, तथा लिङ्गमात्रमिति मात्रशब्दार्थानुपपत्तेश्चेति, तस्मिंस्तत्त्वे महच्छब्दप्रयोगबीजमहङ्कारादिखिलविकाराधारत्वमाह—तस्मिन्निति । तस्मिन्सूक्ष्मरूपे ते पूर्वोक्ता अविशेषविशेषाः पदार्था अवस्थयाऽनागता-

**एते सत्तामात्रे महत्यात्मन्यवस्थाय विवृद्धिकाष्ठामनुभवन्ति, प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय यत्तन्निःसत्तासत्तं-**

भास्वती।

सत्ता असत्ता च यस्मात्तत्, सत्ता = पुरुषार्थक्रियाभिरनुभूतता, असत्ता = पुरुषार्थक्रियाऽयोग्यता, महदादिवत् सत्त्वाहीनत्वेऽपि नालिङ्गस्य तद्योग्यताया भावादसत्ता, निःस-

तत्त्ववैशारदी।

तन्मात्रं महत्तत्त्वम्, यावती का चित्पुरुषार्थक्रिया शब्दादिभोगलक्षणा सत्त्वपुरुषान्यताख्यातिलक्षणा वाऽस्ति सा सर्वा महति बुद्धौ समाप्यत इत्यर्थः, आत्मन इति स्वरूपोपदर्शनेन तुच्छत्वं निषेधति, प्रकृतेरयमाद्यः परिणामो वास्तवो, न तु तद्विवर्त्त इति यावत्, यत्तत्परं = विप्रकृष्टकालम् अविशेषेभ्यस्तदपेक्षया सन्निकृष्टकालेभ्यो लिङ्गमात्रं महत्तत्त्वं— तस्मिन् एते = षडविशेषाः सत्तामात्रे महत्यात्मन्यवस्थाय सत्कार्य्यसिद्धेर्विवृद्धिकाष्ठामनुभवन्ति = प्राप्नुवन्ति, ये पुनरविशेषाणां विशेषपरिणामास्तेषां च धर्मलक्षणावस्थाः परिणामा इति, सेयमेषां विवृद्धिकाष्ठा परिणामकाष्ठेति, तदेवमुत्पत्तिक्रममभिधाय प्रलयक्रममाह—"प्रतिसंसृज्यमाना" इति। प्रतिसंसृज्यमानाः = प्रलीयमानाः, स्वात्मनि लीन-

पातञ्जलरहस्यम्।

सांख्योक्तिमाश्रित्याह-यावतीति। धर्मलक्षणावस्थापरिणामित्वे विशेषाणां तत्त्वान्तराकारपरिणामो नास्त्येवेति कृत्वोक्तं षोडशकस्तु विकार एवेति स्मारयन्नाह—

वार्त्तिकम्।

वस्थया स्थित्वोत्तरोत्तरवंशपर्वाणीव विवृद्धिकाष्ठां स्थावरजङ्गमानां प्राप्नुवन्ति

"महान्प्रादुरभूद् ब्रह्मा कूटस्थो जगदङ्कुर"—

इति स्मृतेः, तथा प्रतिसंसृज्यमानाः प्रलीयमानाश्च, ते तस्मिन्नेवावस्थयाऽतीतावस्थयाऽनुगता भूत्वा तेनैव सह यत्तत्प्रसिद्धसाम्यावस्थगुणत्रयरूपमलिङ्गं तत् प्रधानाख्यमूलकारणं प्रतियन्ति प्रकृतौ लीयन्त इत्यन्वयः, एतेन महत्तत्त्वोपाधिकस्य कार्यब्रह्मणोऽपि जगत्सृष्टिस्थितिलयहेतुत्वं प्रसङ्गाद्व्याख्यातम्, प्रधानस्यासङ्गत्वोपपादनायाव्यक्तमिति विशेषणं, स्वयमव्यक्ततया न परस्परव्यञ्जकमित्यलिङ्गमित्याशयः, पुरुषात्पराभिमतशरीरादिभ्यश्च व्यावर्त्तनाय निःसत्तासत्तं विशेषणम्, निर्गते पारमार्थिके सत्तासत्ते यस्मादिति विग्रहः, कूटस्थनित्यत्वादि पारमार्थिकं सत्,

"सतोऽस्तित्वे च नासत्ता नास्तित्वे सत्यता कुतः"।

"तस्मान्न विज्ञानमृतेऽस्ति किंचित् क्व चित्कदा चिद् द्विज! वस्तुजातम्।
यच्चान्यथात्वं द्विज! याति भूयो न तत्तथा तत्र कुतो हि सत्त्वम्"—

इति गारुडवैष्णवादिवाक्येभ्यः सत्तासामान्याभावस्यैव पारमार्थिकासत्त्वत्वसिद्धेः, तच्च सत्त्वं प्रधाने नास्ति महदाद्यखिलविकाररूपैः प्रलयेऽप्यसत्त्वात् सूक्ष्मदृष्ट्या तु परिणामितया प्रतिक्षणं तत्तद्धर्मरूपेणापायाच्च, तथा च श्रुतिस्मृतयः 'चैतन्यं चिन्मात्रं सत्'

'क्षणं न संतिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्त्तमान'—

इत्याद्या इति, यथा च सत्तया वर्जितमेवासत्तयाऽपि पारमार्थिक्या वर्जितं सत्तासामान्याभावस्यैव पारमार्थिकासत्त्वात्, तच्च प्रधाने नास्ति नित्यत्वादर्थक्रियाकारित्वात् श्रुतिस्मृत्यनुमानादसिद्धत्वाच्च, इत्थमेव च सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं मायाऽऽख्यं प्रधानमिति वेदान्तसिद्धान्तोऽप्यवधारणीयः,

"नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी",

निःसदसद् निरसद् अव्यक्तमलिङ्गं प्रधानं तत्प्रतियन्तीति, एष तेषां लिङ्ग-

भास्वती ।

दसत् = तन्न सद् महदादिवदनुभवयोग्यो भावः, नाप्यसत् = शक्तिरूपत्वान्नाविद्यमानः पदार्थः, निरसद् = भावपदार्थविशेषः, अव्यक्तं = सर्वव्यक्तिहीनम्, अलिङ्गं निष्कारणत्वान्न तत् कस्य चित् स्वकारणस्य लिङ्गमनुमापकम्, एष इति । एष महानात्मा तेषां-

तत्त्ववैशारदी ।

विशेषा अविशेषास्तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय = निलीय सहैव महता तेऽविशेषा अव्यक्तम् अन्यत्र लयन्न गच्छतीत्यलिङ्गं प्रतियन्ति, तस्यैव विशेषणं "निःसत्ताऽसत्तम्" इति, सत्त्वं = पुरुषार्थक्रियाक्षमत्वम्, असत्ता = तुच्छता, निष्क्रान्तं सत्ताया असत्तायाश्च यत्तथोक्तम्, एतदुक्तं भवति-सत्त्वरजस्तमसां साम्यावस्था न क्व चित्पुरुषार्थे उपयुज्यत इति न सती, नापि गगनकमलिनीवत् तुच्छस्वभावा; तेन नासत्यपीति, स्यादेतद्-अव्यक्तावस्थायामप्यस्ति महदादि तदात्मना, न हि सतो विनाशो, विनाशे वा न पुनरुत्पादः, न ह्यसत उत्पाद इति महदादिसद्भावात्पुरुषार्थक्रिया प्रवर्त्तेत, तत्कथं निःसत्त्वमव्यक्तमित्यत आह-"निःसदसद्" इति । निष्क्रान्तं कारणं सतः कार्य्यात्, यद्यपि कारणावस्थायांसदेव शक्त्यात्मना कार्य्यं तथाऽपि स्वोचितामर्थक्रियामकुर्वदसदित्युक्तम्, न चैतत्कारणंशशविषाणायमानकार्य्यमित्याह—"निरसद्" इति । निष्क्रान्तम् असतस्तुच्छरूपात्कार्य्यात्, तथा हि सति व्योमारविन्दमिवास्मान्न कार्य्यमुत्पद्येतेति भावः,

प्रतिसर्गमुक्तमुपसंहरति —"एष तेषाम्" इति । एष = इत्यनन्तरोक्तात् पूर्वस्य परामर्शः,

पातञ्जलरहस्यम् ।

तथा चोक्तं पुरेति। अलिङ्गमिति यौगिकमित्याह-अव्यक्तमिति। शङ्कते-स्यादेतदिति। समाधत्ते-निरिति। योग्यतासत्त्वेऽपि वह्नेरिवास्तु दाहकत्वं न भोगहेतुः प्रलयकालप्रतिबन्धादित्याह-न चैतदिति। यदौपाधिकं तदनित्यं दृष्टं यथा प्रतिबिम्बादीत्याह-लिङ्गमात्रेति।

वार्त्तिकम् ।

इत्यादित्यपुराणादिषु मायाऽऽख्यप्रकृतेः पारमार्थिकसत्त्वादिरूपेणानिरूप्यत्ववचनाच्च, न तु प्रपञ्चस्यात्यन्ततुच्छता; अत्यन्तविनाशिता वा वेदान्तसिद्धान्तः 'नाभाव उपलब्धेः' 'भावे चोपलब्धेः' इति वेदान्तसूत्राभ्यामेवात्यन्ततुच्छताया निराकरणात्, "सत्त्वाच्चावरस्य" "असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात्" "वैधर्म्याच्च न स्वप्नादिवदि"त्यादियथाश्रुतवेदान्तसूत्रेभ्यः प्रपञ्चस्य सदसद्रूपताया एव सिद्धेश्च, धर्मान्तरेणातीतानागतधर्मेण, शास्त्रेषु स्वप्नादिदृष्टान्ताश्च क्षणभङ्गुरत्वपारमार्थिकासत्त्वांशेनैवेति बोध्यम्, न हि स्वप्नगन्धर्वनगरादयोऽप्यत्यन्तासन्तः स्वप्नादावपि साक्षिभास्यमानसपदार्थाभ्युपगमात्, अन्यथा 'सन्ध्ये सृष्टिराह हीति' वेदान्तसूत्रेणैव स्वप्ने सृष्ट्यवधारणं विरुध्येत न स्वप्नादिवदिति वेदान्तसूत्रे च जाग्रत्प्रपञ्चस्य केवलमानसत्वमेव निराकरोति, एतेन स्वप्नादिदृष्टान्तैः प्रपञ्चस्य मनोमात्रत्वाभ्युपगमः नवीनवेदान्तिनामपसिद्धान्त एव, वेदान्तसूत्रेणापि स्वप्नतुल्यत्वाभावनिर्णयात्, तस्माद्यथोक्तमेव प्रपञ्चस्यासत्त्वं ब्रह्ममीमांसाया अपि सिद्धान्तः समानतन्त्रसिद्धत्वाच्चेति दिक्, कश्चित्त्वत्रोत्तरविशेषणे चार्थक्रियाकारित्वमेव सत्त्वंविवक्षितं तच्च प्रलये प्रकृतितद्विकारयोर्नास्तीत्याह तन्न(१)—ईश्वरान्यपुरुषस्याप्येवमसत्तया तद्व्यावृत्त्यसम्भवात्, जीवेष्वपि हि विषयप्रकाशनव्यापारोपरम एवासत्ता लयः स्वापः प्रलयेऽस्तीश्वरप्रकरणे श्रुतिस्मृतिषु प्रसिद्ध इति प्रधानस्य पारमार्थिकसदसत्त्वाभावोपपत्तये

(१) तन्नेति। गौणमुख्यसाधारणार्थक्रियाकारित्वरूपसत्त्वाभिप्रायां भिक्षूक्तिमनवबुध्य, मुख्यं तदादाय कृतः कस्यापाक्षेपोऽनादेयः प्रेक्षावद्भिः।

वार्त्तिकम्।

तद्विकाराणामपि पारमार्थिक्यौ सदसत्त्वे न स्त इति प्रतिपादयितुं प्रधानस्य विशेषणान्तरं-निःसदसदिति, निर्गते सदसती यस्मादिति विग्रहः, निःसन्निरसदिति पाठेऽप्ययमेवार्थः, प्रधानवृत्ति हि यद्विकारजातं तत्पारमार्थिकसन्न भवति परिणामित्वेन स्वधर्मैः प्रतिक्षणविनाशाद् आद्यन्तयोर्व्यक्त्यवस्थयाऽप्यसत्त्वाच्च, 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्',

"अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत !।
अव्यक्तनिधनान्येव तत्र का परिदेवने"—

त्यादिश्रुतिस्मृतयश्च विकाराणां नित्यतारूपं सत्त्वं निराकुर्वन्ति, अत्र च श्रुतौ विकाराणामाद्यन्तयोर्नाममात्रावशेषत्वेनास्थिरतयव तदपेक्षया स्थिरत्वरूपं सत्यत्वं कारणस्य विवक्षितम्, 'नित्यो नित्यानां सत्यस्य सत्य'मिति श्रुत्यन्तरे तादृशार्थसिद्धेः, न पुनर्विकाराणामत्यन्ततुच्छतया; मृद्विकारस्य ब्रह्मविकारदृष्टान्तत्वानुपपत्तेः, न हि लोके मृद्विकारस्यात्यन्ततुच्छत्वं सिद्धमस्ति येन ब्रह्मकार्यप्रपञ्चतुच्छत्वे दृष्टान्तता तस्य स्यादिति, यथा प्रधानवृत्तिकार्यजातमत्यन्तसन्न भवति एवमत्यन्तासदपि न भवति अतीतानागतादिरूपैः सदा सत्त्वात्, तद्धेदं तर्ह्यव्याकृतमासीत्'

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वत—

इत्यादिश्रुतिस्मृतिभ्य इति,

नन्वेवं सविकारस्य प्रधानस्य सदसत्त्वप्रतिषेधे सति प्रकृतेः सदसदात्मकताप्रतिपादकश्रुतिस्मृतिशतव्याकोपः "सदसद्बाधाबाधाभ्यामि"ति सांख्यसूत्रविरोधश्चेति ? मैवम्-तथाविधवाक्यानां व्यक्तरूपव्यावहारिकसदसत्तापरत्वात्, सांख्यसूत्रे च बाधाबाधौ रूपभेदेन सार्वकालिकाविति, तदुक्तं—

जगन्मयी भ्रान्तिरियं न कदाऽपि न विद्यते।
विद्यते न कदा चिच्च जलबुद्बुदवत् स्थितम्—

इति, भ्रान्तिरिति पारमार्थिकभ्रममाश्रित्य ज्ञानज्ञेययोरभेदविवक्षयोक्तम्, अत एव गौतमसूत्रं 'तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिरि'ति तात्त्विकमिथ्याबुद्धिरनित्यपदार्थज्ञानं च प्रधानं मिथ्याज्ञानं प्रसिद्धमिथ्याज्ञानं शुक्तिरजतादिज्ञानमिति, पारमार्थिकभ्रमलक्षणं च तदभाववति तत्प्रकारत्वमसद्विषयकता वा तदुभयमपि परिणामिनित्यपदार्थबुद्धिष्वप्यस्तीति, व्यावहारिकपारमार्थिकभेदेन सत्ताऽऽदिद्वैविध्यं च विष्णुपुराणादिषु प्रसिद्धं, यथा—

सद्भाव एषो भवते मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्।
एतच्च यत्संव्यवहारभूतं तथाऽपि चोक्तं भुवनाश्रितं तद्—

इति, तृतीया च लोकसिद्धा प्रातिभासिक्यपि सत्ता शुक्तिरजतस्वाप्नपदार्थानां मनोमात्रपरिणामानामिति, यत्तु परमात्मचैतन्यस्यैव सत्त्वं न तु जीवचैतन्यानामपीति वेदान्तरहस्यं 'नाऽन्योऽतोऽस्ति द्रष्टा श्रोता मन्ता बोद्धे' त्यादि श्रुतिसिद्धं तत्तु लयशून्यत्वरूपामतिपारमार्थिकसत्तामभिप्रेत्यैव बोध्यम्, प्रलये हि परमात्मनि प्रकृतिपुरुषयोर्व्यापारोपरमरूपो लयो भवति—

प्रकृतिः पुरुषश्चोभौ लीयेते परमात्मनी—

त्यादिवाक्येभ्यः, परमात्मा च सदाजाग्रत्स्वरूपतया लयशून्य इति स एव परमार्थसन्न प्रकृतिपुरुषाविति वेदान्तमहावाक्यमर्यादा, एतेन सदसत्त्वयोर्विरोधादेकात्रासंभव इत्यप्यपास्तम्, व्यवहारपरमार्थभेदेन कालभेदेनावच्छेदभेदेन स्वरूपभेदेन प्रकारभेदेन च तयोरविरोधादिति, तदेवं श्रुतिन्यायसिद्धं सत्यत्वमिथ्यात्वविभागमविदुषामाधुनिकवेदान्तिब्रुवाणां—

मात्रः परिणामः, निःसत्ताऽसत्त्वश्चालिङ्गपरिणाम इति अलिङ्गावस्थायां न पुरुषार्थो हेतुः, नालिङ्गावस्थायामादौ पुरुषार्थता कारणं भवतीति न तस्याः

भास्वती।

विशेषाविशेषाणां लिङ्गमात्रः परिणामोऽव्यक्तता चालिङ्गपरिणामः, अलिङ्गेति। अलिङ्गावस्थाऽवस्थितानां गुणानां सत्ताविषये न पुरुषार्थो हेतु कारणम्, यतोऽलिङ्गावस्थायां—स्थितानां गुणानामादौ = उत्पत्तिविषये न पुरुषार्थता कारणम्, ततस्तस्या अव्यक्तावस्थाया न पुरुषार्थः कारणम्,

पुरुषार्थता बुद्धिभेद एव, बुद्धिस्तु गुणपुरुषसंयोगजाता, अतो न पुरुषार्थतया गुणकारणम्, पुरुषार्थताऽकृतत्वादस्यावलिङ्गावस्था नित्या त्रयाणां गुणानां या विशेषाविशेषालिङ्गमात्रा अवस्थास्तासामादौ = उत्पत्तावित्यर्थः पुरुषार्थता कारणम्, सा च पुरुषार्थता हेतुर्निमित्तकारणं विशेषादीनाम्, तस्माद्धेतुप्रभवास्ते विशेषादयोऽनित्या इति।

तत्त्ववैशारदी।

लिङ्गमात्राद्यवस्था पुरुषार्थकृतत्वादनित्या, अलिङ्गावस्था तु पुरुषार्थेनाकृतत्वान्नित्येत्यत्र हेतुमाह—"अलिङ्गावस्थायाम्" इति। कस्मात्पुनर्न पुरुषार्थो हेतुरित्यत आह—"नालिङ्गावस्थायाम्" इति, भवतिना = विपर्ययेण विषयि ज्ञानमुपलक्षयति, एतदुक्तं भवति—एवं हि पुरुषार्थताकारणमलिङ्गावस्थायां ज्ञायेत, यद्यलिङ्गावस्था शब्दाद्युपभोगं वा सत्त्वपुरुषान्यताख्यातिं वा पुरुषार्थं निर्वर्त्तयेत्, तन्निर्वर्त्तने हि न साम्यावस्था स्यात्, तस्मात् पुरुषार्थ-

पातञ्जलरहस्यम्।

अलिङ्गावस्था त्वनौपाधिकत्वाद्बिम्बवन्नित्येत्याह-अलिङ्गेति। तर्हि माऽस्त्वलिङ्गावस्था, अकिञ्चित्करत्वात्तस्या इति चेन्न-कार्योन्नेया सेत्याह-भवतिनेति। स्वरूपं सति इति वर्तत एवान्यथा कदाऽपि पुमर्थादि न स्यान्नासतो भाव इत्युक्तेः का तर्ह्यनित्यावस्थेति चेदाविर्भावति-

वार्त्तिकम्।

प्रपञ्चात्यन्तासत्यत्वादिरूपाश्रयसिद्धान्ता नास्तिकमतानुसारिणो मुमुक्षुभिर्दूरतः परिहरणीयाः, समानन्यायेनान्यत्र सिद्धान्तानामेव ब्रह्ममीमांसासिद्धान्तत्वादिति सर्वं समञ्जसम्, लिङ्गमात्रपरिणाममुपसंहरति—एष तेषामिति। तेषां गुणानामित्यर्थः, अलिङ्गं पर्व व्याचष्टे—निःसत्तासत्त्वं चेति। निःसत्तासत्त्वमित्युक्ते यः पदार्थः, सोऽलिङ्गनामा गुणानां परिणामः स च साम्यावस्थानात्मको गुणेभ्योऽतिरिक्त इति तस्य गुणपरिणामत्वमुपपद्यते, तस्यां च साम्यावस्थायां प्रधानवाचिशब्दा धर्मधर्म्यभेदेन महदादिव्यावृत्त्यर्थमेवात्र श्रुतिस्मृत्योश्च प्रयुज्यते, परमार्थतस्तु गुणा एव तदुपलक्षिताः प्रधानम्, भाष्ये गुणानामेव प्रधानत्वस्योक्तत्वादिति, इदानीं पर्वणां गुणानां च परस्परवैधर्म्यभेदो व्युत्पादनीयः-तत्रादावलिङ्गावस्थारूपस्य पर्वणः पर्वत्रयाद् गुणेभ्यश्च वैधर्म्यं प्रतिपादयति अलिङ्गावस्थायामिति। पुरुषार्थो विषयभोगविवेकख्याती तत्कार्यौ सुखदुःखाभावौ च स पुरुषार्थो नालिङ्गावस्थां प्रति हेतुः यतोऽलिङ्गावस्थायामादौ सृष्टेः प्राक् पुरुषार्थता पुरुषार्थभावः कारणं कारणत्वाभिमतो नोत्पद्यत इत्यर्थः, दुःखनिवृत्तिव्यावर्तनाय कारणमित्युक्तम्, प्रलयकाले दुःखनिवृत्तेः कर्मक्षयादेवोपपत्तेः प्रलयाप्रयोजनतया दुःखनिवृत्तिः प्रलयकारणं न भवतीत्याशयः, उपसंहरति—न तस्या इति। एतदुक्तं भवति-व्यक्तावस्थायां गुणेभ्यः शब्दाद्युपभोगादिरूपः पुरुषार्थो जायतेऽतः स तस्यामनागतावस्थः कारणं भवतु साम्यावस्थायां तु न तज्जन्यः कश्चन पुरुषार्थोऽस्तीत्यतो नास्याः पुरुषार्थः कारणमिति, एतावता किमित्यत आह—नासौ पुरुषार्थकृतेति। नित्या-

**पुरुषार्थता कारणं भवतीति, नासौ पुरुषार्थकृतेति नित्याऽऽख्यायते, त्रयाणान्त्ववस्थाविशेषाणामादौ पुरुषार्थता कारणं भवति, स चार्थो हेतुर्निमित्तं कारणं भवतीत्यनित्याऽऽख्यायते, गुणास्तु सर्वधर्मानुपातिनो न**

भास्वती ।

गुणा इति । सर्वधर्मानुपातिन इति हेतुगर्भविशेषणमिदम्, महदादिसर्वव्यक्तीनां—

तत्त्ववैशारदी ।

कारणत्वमस्या न ज्ञायत इति नास्याः पुरुषार्थता हेतुः, उपसंहरति—"नासौ" इति । इति = तस्मादर्थे, अनित्यावस्थामाह—"त्रयाणाम्" इति । त्रयाणां = लिङ्गमात्राविशेषविशेषाणामित्यर्थः, पर्वस्वरूपं दर्शयित्वा गुणस्वरूपमाह—"गुणास्तु" इति । निदर्शनमाह—

पातञ्जलरहस्यम् ।

रोभावाख्येत्याह-त्रयाणामिति । एतान्येव पर्वाणि शक्तीनां महत्वादीनामाविर्भावतिरोभावाषेवोपजननापायशब्दार्थौ, अचेतनं जलादि प्रवर्त्तमानं क्रमापेक्षां न करोतीति दृष्टं, तद्वदत्रापि स्यादिति चेत् न—प्रकृतेर्महान् महतोऽहङ्कारः—

वार्त्तिकम् ।

ऽऽख्यायत इति, शास्त्रेष्विति शेषः, नित्या स्वाभाविकी अनैमित्तिकत्वेन पर्वत्रयापेक्षया स्थिरा, स्वाभाविकत्वेऽपि धर्मादिभिः प्रतिबन्धोऽत्र गुणानां साम्यरूपः परिणाम इति भावः, अव्यक्तावस्थायाश्च स्वाभाविकत्वं न व्यक्तावस्थाऽपेक्षया बहुकालावस्थायित्वमेव नित्यत्वं-सत्यत्वापरनामकं व्यवहारे सिद्धम्, 'धर्मो नित्यः सुखदुःखे त्वनित्ये' इत्यादिभारतादिव्यवहारात्, ईदृशनित्यत्वं च गीतादिषूक्तम्—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ! ।
अव्यक्तनिधनान्येव तत्र का परिदेवना—

इत्यादिभिरिति, अथ वा सर्वदा सत्त्वरूपं नित्यत्वमेवात्राप्यर्थोऽस्तु सर्गेऽपि गुणसाम्यस्यात्यन्ततोऽनुच्छेदात्, अंशत एव वैषम्येणावरणरूपस्य गुणसाम्यस्य सर्वदा सत्त्वात्, अन्यथा साम्यावस्थाया अत्यन्तोच्छेदे पर्वत्वानुपपत्तेश्च, अनेन हि सूत्रेण ऊर्ध्वमूलमधः-इत्यादिगीताम् अव्यक्तमूलप्रभव इत्यादिमोक्षधर्मादिकं चानुसृत्य संसाररूपो गुणवृक्ष एव चतुष्पर्वतया निरूपितः तस्य च वंशतुल्यस्य गुणवृक्षस्यावरणानां पूर्वपूर्वतत्त्वानामंशत एवोत्तरतत्त्वरूपेण परिणामो भवति समुद्रस्यांशतः फेनादिरूपतावत् न तु दध्ना दुग्धस्येव पूर्वपूर्वतत्त्वस्य सर्वांशेन परिणाम उत्पन्नकार्यस्य कारणेन पुनरापूरणार्थं तु कारणानां स्वकार्यावरकतयाऽवस्थानं सिध्यति, तस्मात्सर्गकालेऽपि बहिरलिङ्गावस्थावस्थानात्तस्या नित्यत्वमिति, ननु प्रकृतिमादायाष्टावेवावरणानि ब्रह्माण्डस्य श्रूयन्ते न तु तन्मात्राण्यपीति चेन्न-सूक्ष्मस्थूलयोरेकत्वविवक्षयाऽष्टधाऽऽवरणवचनात् अत एव भागवतद्वितीयस्कन्धे परब्रह्मगतौ पञ्चभूतानां बहिस्तन्मात्रावरणे गतिरुक्ता इन्द्रियाणि चाकारणत्वान्नावरणानि तेषामुत्पत्तिस्तु तन्मात्रसमानदेशा यथा तिलसमानदेशा सूक्ष्मतैलोत्पत्तिरिति दिक्, इतरस्मिन्नवस्थात्रये त्वनित्यत्वरूपं वैधर्म्यमाह-त्रयाणामिति । आदौ उत्पत्तौ उपादानकारणत्वव्यवच्छेदार्थमाह-सर्वार्थ इति । अनित्या त्रिधा अवस्थेति शेषः, शेषं सुगमम्, पर्वसु नित्यानित्यत्वरूपंवैधर्म्यमुक्त्वा पर्विणां गुणानां पर्वभ्यो वैधर्म्यमाह-गुणास्त्विति । गुणास्तु सत्त्वादयः सर्वविकारेष्वनुगता अत उत्पत्तिविनाशशून्या अनुपचरितनित्या इत्यर्थः, अलिङ्गावस्थाऽपि हि नैवं नित्येति, ननु त्रिगुणात्मकप्रकृतेर्नित्यत्वे—

"प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥
तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम !"

**प्रत्यस्तमयन्ते, नोपजायन्ते, व्यक्तिभिरेवातीतानागतव्ययागमवतीभिर्गुणान्वयिनीभिरुपजनापायधर्मका इव प्रत्यवभासन्ते, यथा देवदत्तो दरिद्राति, कस्माद् ? यतोऽस्य म्रियन्ते गाव इति, गवामेव मरणात्तस्य दरिद्राणं न स्वरूपहानादिति समः समाधिः, लिङ्गमात्रम् अलिङ्गस्य प्रत्यासन्नं-**

भास्वती ।

मूलस्वभावाद् गुणाः सर्वधर्मानुपातिनस्तस्मात्ते न प्रत्यस्तमयन्ते लयं गच्छन्ति न चोपजायन्ते, अतीतानागताभिस्तथा व्ययागमवतीभिः = क्षयोदयवतीभिस्तथा च गुणान्वयिनीभिः = प्रकाशक्रियास्थितिमतीभिर्महदादिव्यक्तिभिर्गुणा उपजनापायधर्मका इव = लयोदयशीला इव प्रत्यवभासन्ते, दृष्टान्तमाह—यथेति । यथा देवदत्तस्य दरिद्राणं = दुर्गतत्वं तस्य गवामेव मरणान्न तु स्वरूपहानात् तथा गुणानामप्युदयव्ययौ, समः समाधिः = सङ्गतिरिति । लिङ्गेति । लिङ्गमात्रमलिङ्गस्य प्रधानस्य प्रत्यासन्नम् = अव्य-

तत्त्ववैशारदी ।

"यथा देवदत्त" इति । यत्रात्यन्तभिन्नानां गवामुपचयापचयौ देवदत्तोपचयापचयहेतुस्तत्र कैव कथा गुणेभ्यो भिन्नाभिन्नानां व्यक्तीनामुपजनापाययोरित्यर्थः, ननु सर्गक्रमः किमनियतो ? नेत्याह—"लिङ्गमात्रम्" इति । न खलु न्यग्रोधधाना अह्नायैव न्यग्रोधशाखिनं सान्द्रं-

पातञ्जलरहस्यम् ।

"भूमिरापोनलो वायुः खम्मनो बुद्धिरेव च"—

इत्यादिप्रमाणकत्वात् इत्याह—न खल्वित्यादि—युक्त्यागमसिद्धत्वादित्यन्तेन, सान्द्रो-

वार्त्तिकम् ।

इत्यादिस्मृतिषु प्रकृतेर्व्ययोत्पत्तिवचनं कथमुपपद्येत तत्राह-व्यक्तिभिरेवेति । गुणान्वयिनीभिर्गुणधर्मैः कार्यव्यक्तिभिरेवातीताद्युपचयान्तपरिणामवतीभिर्हेतुभिर्जन्मविनाशवन्त इव ते गुणाः प्रतीयन्ते कार्यकारणविभागात् न तु तेषां स्वतो जन्मविनाशौ स्त इत्यर्थः, तथा च स्वानुगतानां व्ययादिनैव गुणात्मकप्रकृतेर्व्ययादिव्यवहार इत्याशयः, परिणामस्तु प्रकृतेः, पारमार्थिकत्वे सति व्याप्यानामुत्पत्तिविनाशयोः व्यापकेषु व्यवहारे दृष्टान्तमाह-यथेति । दरिद्राति क्षीणो भवति इति, समः समाधिरिति । इदं समाधानं दार्ष्टान्तिकेऽपि समानमित्यर्थः, ननु तथाऽपि प्रकृतेर्नित्यत्वं नोपपद्यते 'भूयश्चान्ते विश्वमायानिवृत्तिः'

'प्रकृतिःपुरुषश्चोभौ लीयेते परमात्मनि'

इत्यादिवाक्येभ्य इति चेत्, दत्तोत्तरत्वात् कार्यविनाशेन तत्रापि तन्निवृत्तिवचनात्, व्यापारोपरमाख्यलयस्यैव पुरुषसाहचर्येण तत्रावधारणाच्च,

"वियोजयत्यथान्योन्यं प्रधानपुरुषावुभौ ।
प्रधानपुंसोरनयोरेष संहार ईरितः"—

इति कौमवाक्याच्च, अन्यथा न्यायानुग्रहेण बलवतीभिः प्रकृतिनित्यताश्रुतिभिर्विरोधाच्च, एवमेव प्रकृतिपुरुषयोः पुराणेषु श्रूयमाणोत्पत्तिरन्योन्यसंयोगेनाभिव्यक्तिरेव बोध्या,

संयोगलक्षणोत्पत्तिः कथ्यते कर्मजा तयोरिति स्मृतेः,

तथा चोक्तम्—

"न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ।
त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः"—

इति, इदानीं प्रकृत्यादीन् स्वस्वकार्यैरनुमापयितुं पर्वशब्दसूचितमलिङ्गादीनामविरलक्रमं दर्शयति-लिङ्गमात्रमिति । प्रत्यासन्नमव्यवहितकार्यम्, तत्रेति । तद्धि लिङ्गमात्रं तत्रालिङ्गे-

तत्र तत्संसृष्टं विविच्यते क्रमानतिवृत्तेः, तथा षडविशेषा लिङ्गमात्रे संसृष्टा-विविच्यन्ते परिणामक्रमनियमात्, तथा तेष्वविशेषेषु भूतेन्द्रियाणि संसृष्टानि विविच्यन्ते तथा चोक्तं—पुरस्ताद् न विशेषेभ्यः परं तत्त्वान्तर-

भास्वती।

वद्दितकार्यम्, तत्र प्रधाने तल्लिङ्गमात्रं संसृष्टमविभक्तं सद् विविच्यते पृथग् भवति, क्रमस्यानतिवृत्तेः=वस्तुस्वाभाव्याद् यथा भवितव्यं तदनतिक्रमाद् यथायोग्यक्रमत-एवोत्पद्यत इत्यर्थः, एवञ्च परिणामक्रमनियता अविशेषविशेषभावा उत्पद्यन्ते, तथा चोक्तमिति, पुरस्ताद्=एतत्सूत्रभाष्यस्यादौ, नेति। विशेषेभ्यः परं=तदुत्पन्नं—

तत्त्ववैशारदी।

शाद्वलदलजटिलं शाखाकाण्डनिपीतमार्त्तण्डचण्डातपमण्डलमारभन्ते, किन्तु क्षितिसलिल-तेजःसम्पर्कात् परम्परोपजायमानाङ्कुरपत्रकाण्डतालादिक्रमेण, एवमिहापि युक्त्यागमसिद्धः क्रमश्चास्थेय इति, कथं भूतेन्द्रियाण्यविशेषसंसृष्टानीत्यत आह—"तथा चोक्तं पुरस्ताद्" इति। इदमेव सूत्रं प्रथमं व्याचक्षाणैः, अथ विशेषाणां कस्मान्न तत्त्वान्तरपरिणाम उक्त—इत्यत आह—"न विशेषेभ्य" इति। तत्किमिदानीमपरिणामिन एव विशेषास्तथा च

पातञ्जलरहस्यम्।

निविडशाद्वलः हरिद्वर्णपत्रः जटिलः शिफायुक्तः निपीतः स्वच्छायया मार्तण्डः सूर्यः तस्य चण्डाः प्रचण्डाः तीक्ष्णा ये आतपचया समूहा निपीता इव येन वटशाखिना तमारभन्ते जनयन्ति अन्हाय झटित्येव, न किन्तु क्षित्यादिभिरुपकृता न्यग्रोधधाना, वटबीजैकदेशदार्ष्टान्तिकमाह—एवमिहेति। कथमिति प्रश्ने, इदमेव सूत्रं विशेषादि-पर्वाणीत्यन्तं, ननु परिणामत्वाविशेषात् किमिति तत्त्वान्तरं नारभन्ते भूम्यादयः तनुविस्तार इत्यस्य रूपं तत्त्वं जगन्मण्डलव्या-

वार्त्तिकम्।

ऽलिङ्गावस्थप्रधानेऽव्यक्तरूपेणाविभक्तमित्यतस्ततो विविच्यते विभक्तं भवति, तत्र हेतुः क्रमेति। क्रमस्य पौर्वापर्यस्य कदाऽप्यनतिक्रमादित्यर्थः, यदि हि कारणे ह्यनागतावस्था-भिरसतामप्युत्पत्तिः स्यात् तर्हि अविशेषात्सर्वं सर्वत्रोत्पद्येत तथाऽतीतमप्युत्पद्येत, न च प्रागभावः कारणम्, अभावस्यासिद्धेः, किं चाभावस्य निमित्तकारणत्वाभ्युपगमे तस्यैवोपा-दानकारणत्वमपि स्यात्, तथा च जितं शून्यवादिभिः, अथाभावस्योपादानत्वं न दृष्टमिति चेत्, तुल्यं निमित्तत्वेऽपि, अत उपादानतावन्निमित्तत्वमपि नाभावस्य, तस्मात्कार्यजनन-शक्तिरेवानागतावस्थारूपिणी कार्यरूपेण परिणमत इति, तदनेन भाष्येण सत्कार्यवादः प्रसा-धितः, तथेत्याद्यप्येवं व्याख्येयम्, महदादिभिः प्रकृत्याद्यनुमानप्रकारश्च सांख्यसूत्रैरुक्तो-ऽस्माभिरपि तद्भाष्ये प्रपञ्चितो विस्तरभयात्तु नेह प्रस्तूयत इति, तथा चोक्तम्-पुरस्तादिति। यथा विशेषेभ्योऽवान्तरभेदभिन्ना विशेषा जायन्ते तथा पुरस्तादस्यैव सूत्रस्यादावुक्तमि-त्यर्थः, ननु कथं गुणपर्वणां चतुर्धा विभागः सूत्रकारेण कृतः ब्रह्माण्डस्थावरजङ्गमरूपः पर्वणा-मानन्त्यादित्याशङ्क्य ब्रह्माण्डादीनां सर्वेषां विशेषकार्याणां विशेषेष्ववान्तर्भावमाह-न विशे-षेभ्य इति। विशेषेभ्यः परमुत्तरभावि तत्त्वान्तरं तत्त्वभेदः नास्ति अतो विशेषाणां तत्त्वा-न्तरपरिणामो नास्तीत्यर्थः, अतो ब्रह्माण्डादिकं सर्वं विशेषपर्वणैव गृहीतमिति भाव, तत्त्वत्वं-च द्रव्यत्वं तत्त्वान्तरत्वं च स्वावृत्तिद्रव्यत्वमाक्षाद्व्याप्यजातिमत्त्वम्, पञ्चविंशतितत्त्वेषु पञ्चविंशतिजात्यनङ्गीकारे च तत्त्वान्तरत्वं स्वावृत्तिद्रव्यविभाजकोपाधिमत्त्वमिति, नन्वेवं-तत्त्वभेदात्कथमन्तःकरणस्यैकत्वं तत्र तत्रोक्तं घटेतेति, उच्यते-यथा विशेषाख्यपञ्चतत्त्वास्मि-कैकैव पृथिवी प्रागुत्पद्यते ततः तस्याः खननमन्थनादिना पार्थिवे जलतेजसी अभिव्यक्तमात्रे भवत एवं तत्त्वत्रयात्मक एवादौ महान् जायते पश्चाच्च तस्याहङ्कारादिर्वृत्तिभेद इति, तर्हि कि-

ऽस्ति इति विशेषाणां नास्ति तत्त्वान्तरपरिणामः, तेषान्तु धर्मलक्षणावस्थापरिणामा व्याख्यायन्ते ॥ १९ ॥

भास्वती ।

तत्त्वान्तरं न दृश्यते ततस्तेषां नास्ति तत्त्वान्तरपरिणामः, सन्ति च तेषां धर्मलक्षणावस्थापरिणामाः प्रभूताख्याः, न हि भौतिकद्रव्येषु षड्जर्षभनीलपीतादेरन्यथात्वं दृश्यते तस्मात्तानि न भूतेभ्यस्तत्त्वान्तराणीति ।। १९ ॥

तत्त्ववैशारदी ।

नित्याः प्रसज्येरन्नित्यत आह—"तेषान्तु" इति ॥ १९ ॥

पातञ्जलरहस्यम् ।

पित्वरूपं, ते त्वष्टौ गन्धतन्मात्रान्ता एवारम्भकाः षोडशकस्तु गणस्तत्त्वान्तरत्वेऽपि नारम्भको विकृतिरूपत्वादेवं पुरुषस्तु न प्रकृतिरपरिणामित्वादसम्भूयकारित्वाच्च, तर्हि विशेषाणामनारम्भकत्वे गोघटादीनां जन्यजनकताऽनापत्तिरिति चेत्? तत्राह-तेषां त्विति । धर्मो घटादिः, लक्षणपरिणामोऽतीतवर्तमानभविष्यत्ता, अवस्था नूतननूतनतमत्वादीत्यर्थः ॥ १९ ॥

वार्तिकम् ।

विशेषाणां परिणामा एव न सन्ति? नेत्याह—तेषां त्विति । व्याख्यास्यन्त इति । सूत्रकारेणोत्तरपाद इति शेषः, स्यादेतत्—महदादिक्रमेणोक्तः सृष्टिप्रकार आकाशादिक्रमबोधकश्रुतिविरोधाद्धेयः श्रुतौ तन्मात्राद्यश्रवणेन ते पदार्थाश्च कल्पिताः मन्वादिस्मृतयश्च सांख्यकल्पनानुवादेन धर्मादिपरा एव न प्रकृत्यादिपरा इति न स्मृतिभिरपि प्रकृत्यादिसिद्धिरिति,

अत्रोच्यते—गुणत्रयात्मिका प्रकृतिस्तावत् मूलकारणतया मैत्रेयोपनिषदि श्रूयते, यथा—'तमो वा इदमेकमास तत्परं स्यात् तत्परेणेरितं विषमत्वं प्रयाति एतद्वै रजसो रूपं तद्रजः खल्वीरितं विषमत्वं प्रयाति एतद्वै रजसो रूपं तद्रज खल्वीरितं विषमत्वं प्रयाति एतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवेरितं तमसः संप्रास्रवत् तत्सांशोऽयं यश्चेतितामात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायलिङ्गः प्रजापतिस्तस्य प्रोक्ता अस्यास्तनवो ब्रह्मा रुद्रो विष्णु'रित्यादि, तथा गर्भोपनिषदि चतुर्विंशतितत्त्वान्यनेन क्रमेणोक्तानि, यथा—'अष्टौ प्रकृतयः षोडश विकाराः, शरीरम्' इति, तथा प्रश्नोपनिषदि च—'एवं ह वै तत्सर्वं परे आत्मनि संप्रतिष्ठते पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च' त्यादिना परमात्मनि सर्वं त्रयोविंशतितत्त्वं तिष्ठति समुद्रे नदनदीवदित्युक्तम्, अतश्चतुर्विंशतितत्त्वानि प्रत्यक्षश्रुत्या स्मृत्यनुमेयश्रुत्या च सिद्धानि, अद्वैतश्रुतिस्तु न तासां बाधिका व्यवहारपरमार्थभेदेन विषयभेदात्, व्यावहारिकाद्वैतश्रुतीनां चाविभागलक्षणाभेदपरतायां एव नदीसमुद्रादिदृष्टान्तैरवगमादिति, तेषां च महदादीनां सृष्टिक्रमोऽपि श्रुतौ पाठक्रमादवधार्यते,

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी"—

इत्यादिषु, यच्च तैत्तिरीयके वियदादिसृष्टिः श्रूयते, तत्र वियतः प्राग्बुद्ध्यादिसृष्टिः पूरणीया स्मृत्युन्नेयश्रुत्येकवाक्यतया छान्दोग्ये वियद्वायुपूरणवदिति, किं च सांख्योक्तसृष्टिक्रमे स्पष्टैव श्रुतिरस्ति, यथा गोपालतापनीये, 'एकमेवाद्वितीयं ब्रह्मासीत् तस्मादव्यक्तमेवाक्षरं तस्मादक्षरान्महत् महतो वै अहङ्कारस्तस्मादेवाहङ्कारात् पञ्च तन्मात्राणि तेभ्यो भूतादीनीति, वेदान्तसूत्रैरपि बुद्ध्यादिक्रमेणैव सृष्टिरुक्ता तत्र नवीनानां कुव्याख्या चास्माभिस्तत्राष्य एवापास्तेति, तदेवं सांख्यशास्त्रे प्रपञ्चितानि चतुर्विंशतितत्त्वानि अत्र संक्षेपतः सूत्रद्वयेनोक्तानि, एतेषां च स्वरूपादिकं तत्रैव प्रदर्शितं संक्षेपतस्त्वत्राप्युच्यते, पञ्च भूतान्येका-

व्याख्यातं दृश्यम्, अथ द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते—

**द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥२०॥**

वार्त्तिकम् ।

दशेन्द्रियाणि च प्रसिद्धान्येव तन्मात्राणि भूतानां साक्षात् कारणानि शब्दादिमत्सूक्ष्मद्रव्याणि अतस्तानि सूक्ष्मभूतान्यपि क्वचिदुच्यन्ते, महदहङ्कारौ च मोक्षधर्मे लक्षितौ, यथा—

"हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतः ।
महानिति च योगेषु विरिञ्चिरिति चाप्युत ॥
धृतं चैकात्मकं येन कृत्स्नं त्रैलोक्यमात्मना ।
तथैव विश्वरूपत्वाद्विश्वरूप इति श्रुतः ॥
एष वै विक्रियाऽऽपन्नः सृजत्यात्मानमात्मना ।
अहङ्कारं महातेजाः प्रजापतिमहङ्कृतम्" ॥

इत्यादि, अत्र चोपासनार्थं शक्तिशक्तिमदभेदेनोपाध्योर्नामादिकमुपाधिमत्त्वेन तयोरुक्तं मनुष्यपश्वादिनामरूपादिवत्, स्मृत्यन्तरेषु सांख्ययोगयाश्चाविवेकतो जडवस्तुन्येव तद्व्यवहारः, ज्ञानैश्वर्यादिरूपमहत्तत्त्वस्याभिमानरूपाहङ्कारस्य चान्तःकरणधर्मत्वादिति, प्रकृतिस्तु त्रयोविंशतितत्त्वकारणानि सत्त्वादिनामकसूक्ष्मद्रव्याणि असंख्यातानि गुणशब्दश्च तेषु पुरुषोपकरणत्वात् पुरुषबन्धकत्त्वाच्च प्रयुज्यते, तच्च गुणत्रयं सुखदुःखमोहधर्मकत्वात् सुखदुःखमोहात्मकमुच्यते, पुरुषाणां सर्वार्थसाधकत्वाद्राजामात्यवत्प्रधानमुच्यते जगदुपादानत्वात्प्रकृतिर्जगन्मोहकत्वाच्च मायेत्युच्यते, वैशेषिकादिभिश्च स्वस्वपरिभाषया परमाण्वज्ञानादिशब्दैश्चोच्यते इति, तदुक्तं वासिष्ठे—

"नामरूपविनिर्मुक्तं यस्मिन् संतिष्ठते जगत् ।
तमाहुः प्रकृतिं केचिन्मायामेके परे त्वणून्"—

इत्यादिनेति, एषु च त्रयोविंशतितत्त्वानि सर्गादौ स्थूलसूक्ष्मशरीरद्वयरूपेण परिणमन्ते, तत्र स्थूलं पञ्चभूतेभ्यः सूक्ष्मं च शेषेभ्यः तयोश्च सूक्ष्मं काष्ठवच्चैतन्याभिव्यञ्जकत्वात् पुरुषस्य लिङ्गशरीरमित्युच्यते तच्चाहङ्कारस्य बुद्धौ प्रवेशात्सप्तदशावयवकं सांख्यशास्त्रे प्रोक्तं- 'सप्तदशैकं लिङ्ग'मिति, अत्र एकत्वं समष्टयभिप्रायेणोक्तम्, 'व्यक्तिभेदः कर्मविशेषादि' त्युत्तरसूत्रेण व्यक्तिरूपत एकस्यैव लिङ्गशरीरस्य व्यक्तिभेदवचनात्, अयं च व्यष्टिसमष्टिभावो न वनवृक्षवत् किं तु पितापुत्रवदेव,

"तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह ।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः"—

इतिमन्वादिवाक्यैर्हिरण्यगर्भस्य शरीरद्वयांशैरेवाखिलपुंसां शरीरद्वयोत्पत्तिरिति सिद्धेः, वनवृक्षयोस्तु नैवं कार्यकारणभावोऽस्तीति दिक् ॥ १९ ॥

सूत्रान्तरमवतारयति—व्याख्यातमिति ।

"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" दृशिरत्र न गुणः किंतु प्रकाशस्वरूपं द्रव्यं—

"ज्ञानं नैवात्मनो धर्मो न गुणो वा कथं चन ।
ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः—

इत्यादिस्मृतेः, अग्न्यौष्ण्यादिषु च भेदाभेदावेव, औष्ण्याग्रहणेऽपि चक्षुषाऽग्निग्रहणात् पुरुषस्तु ज्ञानग्रहणं विना न गृह्यत इति, मात्रशब्देन पूर्वसूत्रोक्तप्रकाशक्रियाऽऽदिगुणव्यावृत्तिः तेनैव च सर्वेषां शेषगुणानामन्तर्भावः शुद्धशब्देन च भूतेन्द्रियात्मकत्वव्यावृत्तिः, शुद्धेऽपि- बुद्ध्यभेदभ्रमोपपादनाय शेषविशेषणम्, अत्र च परिणामित्वपारार्थ्याचेतनत्वादीनि बुद्धेरशुद्धिः तद्राहित्यं च पुरुषस्य शुद्धिरिति भाष्ये व्यक्तीभविष्यति, प्रत्ययानुपश्यः प्रत्ययसमानाकारताऽऽपन्न इव सन् बुद्धिवृत्तिसाक्षीत्यर्थः, अनेन विशेषेण द्रष्टरि प्रमाणं चोक्तमिति, शुद्धोऽपी-

**दृशिमात्र इति = दृक्शक्तिरेव विशेषणापरामृष्टेत्यर्थः, स पुरुषो बुद्धेः प्रतिसंवेदी, स बुद्धेर्न सरूपो नात्यन्तं विरूप इति, न तावत्सरूपः, कस्माद् ?**

भास्वती ।

दृशीति । विशेषणैः = स्वरूपद्योतकैः, लयोदयशीलैर्धर्मैरपरामृष्टा दृक्शक्तिः = ज्ञमात्रोऽन्यबोद्धृनिरपेक्षः स्वबोधमात्र एव द्रष्टा पुरुषः, स च बुद्धेः = आत्मबुद्धेरस्मीतिमात्रविज्ञानस्य प्रतिसंवेदी प्रतिसंवेदनहेतुः, यथा दर्पणः प्रतिबिम्बहेतुस्तथाऽस्मीतिबोधस्य भामहं जानामीत्यात्मको य उत्तरक्षणे दृशिबोधस्तस्य हेतुभूतः पूर्णः स्वबोध एव प्रतिसंवेदिशब्देन लक्ष्यते, द्रष्टुः प्रत्ययानुपश्यत्वेन साक्षित्वेन बुद्धिर्लब्धसत्ताका, कस्माद् ? द्रष्टा बुद्धेर्विरूपोऽपि नात्यन्तं विरूपो बुद्धिवत् प्रतीयमानत्वात् किञ्चित् सारूप्यमपरिणामित्वादैरूप्यमित्याह—नेति । ज्ञाताज्ञातविषयत्वाद् बुद्धिः परिणामिनी, गोविषयाकारा गो-

तत्त्ववैशारदी ।

व्याख्यातं दृश्यम्, द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते-"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" इति,

व्याचष्टे—"दृशिमात्र" इति । विशेषणानि = धर्मास्तैरपरामृष्टा, तदनेन मात्रग्रहणस्य तात्पर्यं दर्शितम्, स्यादेतद्-यदि सर्वविशेषणरहिता दृक्शक्तिर्न तर्हि शब्दादयो दृश्येरन्, न हि दृशिनाऽसंस्पृष्टं दृश्यं भवतीत्यत आह—"स पुरुष"इति । बुद्धिदर्पणे पुरुषप्रतिबिम्बसंक्रान्तिरेव बुद्धिप्रतिसंवेदित्वं पुंसः, तथा च दृशिच्छायाऽऽपन्नया बुद्ध्या संसृष्टाः शब्दादयो भवन्ति दृश्या इत्यर्थः, स्यादेतत्—पारमार्थिकमेव बुद्धिचैतन्ययोरैक्यं कस्मान्नोपेयते किम-

पातञ्जलरहस्यम् ।

संगतिमाह—व्याख्यातमिति । "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्य" इति, दृशिमात्रः दृक्शक्तिः शक्तिशक्तिमतोरभेदात् दृगेवेत्यर्थः, शुद्धोऽपि द्रष्टा कुतः यतः प्रत्ययानुपश्यः प्रत्ययं प्रतीयत इति बुद्धिस्थमर्थं शब्दादिकमनुपश्यतीति बुद्धिदर्पणे चितिच्छायाऽऽपत्त्या तद्गतधर्माद्यष्टौ स्वात्मनि मन्यमानेव शुक्लेऽपि स्फटिके लौहित्यवदिति सूत्रार्थः, परबुद्धौ प्रतिबिम्बद्वारा विशतीव, नीरूपस्य प्रतिबिम्बायोगादत एव दुग्धक्षिप्तमरकतमणिर्यथा दुग्धं स्वच्छायं करोति तद्वदत एव बुद्धावेवात्मबुद्धिर्बाह्यानामिति भावः, बुद्ध्यात्मनोः संबन्धः सत्यः संबन्धत्वाद् दुग्धमरकतयोरिवेति शङ्कते—

वार्त्तिकम् ।

स्यादिभाष्यस्य फलान्तरं च भाष्यकारो व्याख्यास्यति, दृशिमात्रशब्दार्थमाह—दृक्शक्तिरेवेति । प्रलयमोक्षादौ जीवानां दर्शनाख्यचैतन्यफलोपधानं नास्तीति शक्तिपदोपादानम्, एवशब्दार्थमाह—विशेषणापरामृष्टेति । बिशिष्यते व्यावर्त्यते द्रव्यान्तरादेभिरिति विशेषणानि विशेषगुणाः वैशेषिकशास्त्रोक्ताः तैः कालत्रयेऽप्यसंबद्धा इत्यर्थः, तेन संयोगसंख्यापरिमाणादिसत्त्वेऽप्यक्षतिः, द्रष्टेति लक्ष्यपदं बुद्धिव्यावृत्ततया व्याचष्टे-स पुरुष इति । संवेदिन्या बुद्धेः प्रतिसंवेदी पुरुषः संवेदनमर्थाकारवृत्तिः तस्याः प्रतिसंवेदनं प्रतिध्वनिवत्प्रतिबिम्बं यत्र स पुरुष इत्यर्थः, बुद्धेः साक्षीति तु पर्यवसितोऽर्थः, एतेन प्रतिबिम्बरूपयाऽऽरोपितक्रियया कल्पितं दर्शनकर्तृत्वं द्रष्टृत्वमित्यपि सूचितम्, आत्मनो ज्ञानस्वरूपत्वं च—

"यथा दीपः प्रकाशात्मा स्वल्पो वा यदि वा महान् ।
ज्ञानात्मानं तथा विद्यादात्मानं सर्वजन्तुषु-

इत्यादिवाक्यशतानुग्रहेण लाघवतर्कानुग्रहेण चात्मत्वादिरूपव्यतिरेक्यादिलिङ्गैरनुमेयं ज्ञानाश्रयत्वकल्पने धर्मधर्मिभावापन्नवस्तुद्वयकल्पनागौरवात्, अहं जानामीतिप्रत्ययस्तु अहं गौर इति भ्रमशतान्तःपातितयाऽप्रामाण्यशङ्काऽऽस्कन्दितत्वेन यथोक्तानुमानापेक्षया दुर्बल-

**ज्ञाताज्ञातविषयत्वात्, परिणामिनी हि बुद्धिः, तस्याश्च विषयो गवादि-र्घटादिर्वा ज्ञातश्चाज्ञातश्चेति परिणामित्वं दर्शयति, सदाज्ञातविषयत्वन्तु**

भास्वती ।

ज्ञानरूपा बुद्धिर्नष्टगोज्ञाना घठाकारा घटज्ञानरूपा भवतीति दृश्यते, एवं ज्ञाताज्ञातविष-यत्वं ततश्च परिणामित्वम्, पदेति । पुरुषविषयाऽऽत्मबुद्धिः सदाज्ञातस्वभावा यतोऽज्ञाता-

तत्त्ववैशारदी ।

नया तच्छायाऽऽपत्त्येत्यत आह—"स बुद्धेर्न सरूप" इति । तथाऽसरूपस्य तच्छायाऽऽप-त्तिरपि दुर्घटेत्यत आह—"नात्यन्तं विरूप" इति । तत्र सारूप्यं निषेधति-"न तावद्" इति । हेतुं पृच्छति—"कस्माद्" इति । सहेतुकं वैरूप्ये हेतुमाह—"ज्ञाताज्ञात" इति । परिणामिनी बुद्धिर्यस्मात्तस्माद् विरूपा, यदा खल्वियं शब्दाद्याकारा भवति तदा ज्ञातोऽस्या-शब्दादिलक्षणो भवति विषयः, तदनाकारत्वे त्वज्ञातः, तथा च कदाचिदेव तदाकारतां दधती परिणामिनीति, प्रयोगश्च भवति-बुद्धिः परिणामिनी ज्ञाताज्ञातविषयत्वाच्छ्रोत्रादिवदिति, तद्वैधर्म्यं पुरुषस्य तद्विपरीतत्वाद् हेतोः सिध्यतीत्याह—"सदाज्ञात"इति । स्यादेतत्-सदा-

पातञ्जलरहस्यम् ।

स्यादेतदिति । नन्न सावयवत्वमुपाधिरित्याह—स बुद्धेरिति । अपरिणामिनः पुंसः परिणामिनी बुद्धिः विरूपाऽपि स्फोटवत् शब्दा अर्थाकाराः, पुत्रवती जायेत्युच्यते, आत्मा वा इदमग्र आसीत् पुरुषविधः सोऽकामयत जाया मे स्यादथ प्रजायेयेतिश्रुतेः, तद्यथा एक एवात्माऽविद्यावशात् स्वं पुत्रः जायेति त्रित्वं प्राप्तः तद्वत् सांख्यपुरुषोऽपि प्रत्ययानुपश्य-इति, प्रयोगप्यनुमानमस्मिन्नर्थ इत्याह—बुद्धिरित्यादि, यस्तु परिणामी स कदा चित् परिणमते कदा चिन्नेति ज्ञाताज्ञातविषयो, यस्त्वपरिणामः स सदाज्ञातविषय एव ततश्च न तस्योपरमः क्रियाया इति, ज्वलन्तीव प्रभा मणेरिति मोक्षधर्ममाश्रित्य तदा पुंसो विषयोपरमाख्यकैवल्यकत्वमिति शङ्कते—स्यादेतदिति । परिदीपयति द्रढयति, दुःखा-

वार्त्तिकम् ।

इति दिक्, बुद्धिपुरुषयोर्विवेकप्रतिपादनाय तयोरभेदभ्रमोपपादनाय च तयोर्वैरूप्यसारूप्यप्रति-पादकतया क्रमेण शुद्धोऽपीत्यादिविशेषणद्वयं व्याचष्टे-स न बुद्धेः सरूपो नात्यन्तं विरूप इति, पारमार्थिकसारूप्याभावः शुद्धोऽपीत्याद्यदलार्थः, प्रतिबिम्बरूपापारमार्थिकसारूप्यं च शेषदला-र्थः, तथा च परिणामित्वादिरूपबुद्धिसारूप्याभाव एव शुद्धिः बुद्धिवृत्तिसारूप्यमेव च प्रत्ययानुप-श्यत्वमित्यायातम्, सारूप्याभावसारूप्ये क्रमेण प्रतिपादयति-न तावदित्यादिना । कस्मादि-त्यस्योत्तरं-परिणामिनी हि बुद्धिरिति । परिणामित्वे हेतुर्ज्ञाताज्ञातविषयत्वादिति, ज्ञातेत्याद्युक्तं विवृणोति-तस्याश्चेति । तस्या बुद्धेश्चो हेतौ, गवादिरिति । गोशब्दः शब्दवाची, अतो गवादिघ-टादिपदाभ्यां धर्मधर्मिसामान्यपरतया धर्मधर्मिरूपाणामशेषाणां बुद्धिविशेषाणां ग्रहणम्, ज्ञातो-वृत्तिव्याप्यस्तदन्यश्चाज्ञातः, दर्शयति अनुमापयतीत्यर्थः, अयं भावः-बुद्धिः परिणामिनी स्यात् तदैव कदा चित् बुद्धिः शब्दाद्याकारा भवति कदा चिच्च नेत्युपपद्यते, न च पुरुष इव बुद्धावपरि-णामित्वेऽपि विषयस्य प्रतिबिम्बनमेव विषयाकारताऽस्तु ततश्च प्रतिबिम्बकादाचित्कत्वेन ज्ञा-ताज्ञातविषयत्वमुपपद्येतेति वाच्यम्? स्वप्रध्यानादौ विषयासान्निध्येन तत्प्रतिबिम्बासंभवात्, शास्त्रेषु बुद्धौ विषयप्रतिबिम्बवचनं तु तत्समानाकारपरिणाममात्रेणातो बुद्धेरर्थग्रहणस्या-नित्यतया तस्या अर्थाकारपरिणामोऽनुमीयत इति, बुद्धेः परिणामित्वं दर्शयित्वा तदभावं-पुरुषे दर्शयति—सदाज्ञातेति, सदा ज्ञातो विषयो बुद्धिवृत्तिरूपो येन तस्य भावः सदाज्ञात-विषयत्वं, परिदीपयति अनुमापयति, यदि हि पुरुषः परिणामी स्यात् तदा जाड्यपरिणामेन कदा चित्पुरुषस्य विषयो बुद्धिवृत्तिरज्ञाताऽपि तिष्ठेत् ततश्च वर्त्तमानाया अपि घटादिवृत्तेरज्ञा-नसंभवात् घटादिकं निश्चिनोमि न वेत्यादिसंशयः स्यात्, तथा योग्यानुपलब्ध्या घटादिज्ञाना-

**पुरुषस्यापरिणामित्वं परिदीपयति, कस्माद् ? न हि बुद्धिश्च नाम पुरुषवि-षयश्च स्याद् गृहीताऽगृहीता चेति सिद्धं पुरुषस्य सदा ज्ञातविषयत्वम् ; ततश्चापरिणामित्वमिति, किञ्च परार्था बुद्धिः संहत्य कारित्वात्, स्वार्थः**

भास्वती।

ऽन्मबुद्धिर्न कल्पनीया, किञ्च स्वस्या भासकं पौरुषं प्रकाशं विषित्योत्पन्ना बुद्धिः सदैव ज्ञाताऽहमितिरूपा न तद्विपरीता, पुरुषस्य विषयभूता बुद्धिस्तथा च स्वस्याः प्रकाशकं पुरुषं त्रिषित्योत्पन्ना पुरुषविषया बुद्धिरभेदेनैवात्र व्यवहृतेति वेदितव्यम्, सदैव पुरुषाज् ज्ञाताऽहमेतन्मात्रप्राप्तेः पुरुषोऽपरिणामी ज्ञस्वरूपः, श्रूयते च न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति,

कस्मादिति। बुद्धिस्तथा या च भवति पुरुषविषयः तादृशी बुद्धिगृहीताऽगृहीता, द्रष्टा ज्ञाता, तेन चाज्ञाता न स्यात् सदैव पुरुषदृष्ट्या ज्ञाता वा स्यादित्यर्थः, इति हेतोः पुरुषस्य सदा ज्ञातविषयत्वं सिद्धम्, कदा चिद् ज्ञाता कदा चिदज्ञाता इति चेद् बुद्धिरभविष्यत् तदा तत्प्रकाशकोऽपि कदा चिद् ज्ञः कदा चिदज्ञ इत्येवं परिणामी अभविष्यत्, ननु निरोधकाले बुद्धिर्न गृहीता भवति व्युत्थाने च भवति, अतो भवत्वात्मा ज्ञाता चाज्ञाता चेति शङ्का निस्सारा, कस्माद् ? निरोधे बुद्धेरप्यभावाद् नास्ति तस्या ग्रहणम्, एवं गृहीताऽप्यबुद्धिरज्ञातेति न सिध्येद्, बुद्धिपुरुषयोर्वैरूप्ये युक्त्यन्तरमाह—किञ्चेति।

तत्त्ववैशारदी।

ज्ञातविषयश्चेत्पुरुषो, न तर्हि केवली स्यादित्याशयवान् पृच्छति—"कस्माद्" इति। उत्तरं—"न हि बुद्धिश्च नाम इति। बुद्ध्यग्रहणयोरस्ति सहसंभवो निरोधावस्थायामत उक्तं विरोधसूचनाय—"पुरुषविषयश्च" इति। तेनाद्यश्चकारो बुद्धिं विषयत्वेन समुच्चिनोति, परिशिष्टौ तु विरोधद्योतकौ चकाराविति,

प्रयोगस्तु,—पुरुषोऽपरिणामी सदा सम्प्रज्ञातव्युत्थानावस्थयोर्ज्ञातविषयत्वाद् यः परिणामी नासौ सदाज्ञातविषयो भवति यथा श्रोत्रादिरिति व्यतिरेकी हेतुः, अपरमपि वैधर्म्यमाह—"किञ्च परार्था" इति। बुद्धिः खलु क्लेशकर्मवासनाऽऽदिभिर्विषयेन्द्रियादिभिश्च

पातञ्जलरहस्यम्।

भावोऽपि नाज्ञातः पुरुषार्थतयेष्यत इति न्यायेनाह—बुद्धिश्च नामेति। बुद्धिश्च भविष्यत्यज्ञाता चेति दुर्घटमित्यर्थः, निरोधावस्थायां प्रलयसमाध्योः संप्रज्ञातः सविकल्पकसमाधिव्युत्थानं-

वार्त्तिकम्।

भावनिश्चयश्च न स्यात्, अज्ञातवृत्तिसत्तासंभवादिति भावः, नन्वेतावता भोक्तुर्ज्ञानं परिणामो माऽस्तु सुखादिपरिणामाभावस्तु कथं तेनानुमाप्यत इति चेत्? उच्यते-शब्दादिनिश्चयरूपस्य परिणामस्य बुद्धौ सिद्ध्यैव तत्कार्याणाम् इच्छाकृतिसुखदुःखादृष्टसंस्कारादीनां बुद्धिधर्मत्वेनैव सिद्धेः, सामानाधिकरण्यप्रत्यासत्त्या कार्यकारणभावे लाघवादिति, ननु न पुरुषस्यापि सदाज्ञातविषयत्वं प्रलयादौ स्वविषयस्य बुद्धिवृत्तेरदर्शनादित्याक्षिपति—कस्मादिति। समाधत्ते—न हीति। न हि पुरुषविषयो बुद्धिवृत्तिरपि शब्दादिवत्स्याच्च तिष्ठेच्च, अथ वा अगृहीता गृहीता च कालभेदेन भवतीत्यर्थः, तथा च स्मर्यते—

"न चिद्प्रतिबिम्बाऽस्ति दृश्याभावादृते किल।
क चिन्नाप्रतिबिम्बेन किलादर्शोऽवतिष्ठते-"इति,

तथा च प्रलयादौ वृत्त्याख्यविषयाभावादेव तां न पश्यतीति भावः, उपसंहरति—इति सिद्धमिति। परिणामित्ववदेव परार्थत्वापरार्थत्वरूपमपि वैधर्म्यं बुद्धिपुरुषयोर्दर्शयति—

**पुरुष इति तथा सर्वार्थाध्यवसायकत्वात्, त्रिगुणा बुद्धिः त्रिगुणत्वादचेतनेति, गुणानां तूपद्रष्टा पुरुष इति, अतो न सरूपः, अस्तु तर्हि विरूप इति,**

भास्वती।

ज्ञानेच्छाकृतिसंस्कारादीनां संहत्य कारित्वोत्पन्ना बुद्ध्यादयः परार्थाः परस्यैकस्य विज्ञातुरुपदर्शनाद् एकप्रयत्नेन मिलित्वा भोगापवर्गकार्यकारिणः, विज्ञातृपुरुषस्तु स्वार्थो न कस्य चिदर्थो; द्रष्टारमाश्रित्य भोगापवर्गौ चरितौ भवत इति दर्शनात्, तथेति। तथा सर्वेषां प्रकाशक्रियास्थितिस्वभावानामर्थानामध्यवसायकत्वात् = अर्थाकारपरिणता सती निश्चयकरणादित्यर्थः, बुद्धिस्त्रिगुणा ततश्चाचेतना दृश्या, पुरुषस्तु गुणानामुपद्रष्टा स्वबोधरूप इत्यतः पुरुषो न बुद्धेः सरूपः, अस्त्विवति। नाप्यत्यन्तं विरूपो यतः

तत्त्ववैशारदी।

संहत्य पुरुषार्थमभिनिर्वर्त्तयन्ती परार्था, प्रयोगश्च—परार्था बुद्धिः संहत्य कारित्वात् शयनासनाभ्यङ्गवदिति, पुरुषस्तु न तथेत्याह—"स्वार्थः पुरुष" इति। सर्वं पुरुषाय कल्पते, पुरुषस्तु न कस्मै चिदित्यर्थः, वैधर्म्यान्तरमाह—"तथा सर्वार्थ" इति। सर्वान् अर्थान् शान्तघोरमूढांस्तदाकारपरिणता बुद्धिरध्यवस्यति, सत्त्वरजस्तमसां चैते परिणामा इति सिद्धा त्रिगुणा बुद्धिरिति, न चैवं पुरुष इत्याह—"गुणानां तूपद्रष्टा पुरुष" इति। तत्प्रतिबिम्बितः पश्यति, न तु तदाकारपरिणत इत्यर्थः, उपसंहरति—"अत" इति। "अस्तु तर्हि विरूप-

पातञ्जलरहस्यम्।

संसारावस्था तयोरिति शेषः, परार्थ इति न्यायेनाह-किञ्चेति। परार्थं विवृणोति-बुद्धिरित्यादिना, संघातस्य परार्थत्वादिति न्यायं स्मारयति-प्रयोगश्चेत्यादिना, पुंसि तद्वैलक्षण्यमाह-पुरुषस्त्विवति। इतोऽपि तयोर्वैलक्षण्यमित्याह-वैधर्म्येति-बुद्धेस्त्रैगुण्ये हेतुमाह-सर्वेत्यादि-बुद्धिरित्यन्तेन,

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमस—

इति स्मृतेः, सर्वेऽनर्था बुद्धिधर्मास्तेषां विकारा इत्यर्थः, असङ्गो ह्ययं पुरुष निर्गुणश्चेति श्रुतेरात्मा न तथा इत्याह—न चैवमिति। कथं तर्हि बुद्धेः संवेदी पुरुष इति तत्राह—त-

वार्त्तिकम्।

किं चेति। बुद्धिः परार्था स्वभिन्नस्य भोगादिसाधनं संहत्यकारित्वात् = सहकारिसापेक्षव्यापारकत्वात् शय्याऽऽसनशरीरादिवत्, पुरुषश्च स्वार्थः स्वस्य च भोगादिसाधनम् उक्तहेत्वभावाद् यन्नैवं यथा स एव दृष्टान्त इत्यर्थः, बुद्धेर्हि व्यापारो विषयग्रहणादिरिन्द्रियादिसापेक्षः शय्याऽऽदीनामपि शयनादिकार्यं भूम्यादिसापेक्षं, पुरुषस्य सुखादिप्रकाशनं च व्यापार एव न भवति स्वरूपतो नित्यत्वात्, नापि सुखादिसत्त्वे तत्प्रकाशार्थं पुरुषः सहकारिणोऽपेक्षत इति भावः, बुद्ध्यादेः परार्थत्वे च श्रुतिः—'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवती' त्यादि, अत्र कश्चित्—स्वार्थ इति साध्यस्य न परार्थ इत्यर्थमाह—तन्न-भृत्यचेतनस्यापि स्वामिचेतनार्थत्वदर्शनात्, परार्थत्वमेव तु परमात्मार्थत्वमिति चेत् नाचेतनत्वरूपं वैधर्म्यान्तरमाह—तथा सर्वार्थेति। सुखदुःखमोहात्मकांस्त्रिगुणान् सर्वार्थान् गृह्णती बुद्धिरपि तदाकारतया त्रिगुणा सत्त्वादिगुणत्रयमयीत्यनुमीयते, त्रिगुणत्वाच्च पृथिव्यादिवदचेतनेति सिद्धम्, गुणानां तूपद्रष्टा पुरुषो द्रष्टृबुद्धिसान्निध्येन बुद्धिवृत्तिप्रतिबिम्बमात्रतो गुणद्रष्टा भवति न गुणाकारपरिणामेन बुद्धिवदिति अतो न स त्रिगुणः, ततश्चेतन इति शेषः, उपसंहरति—अत इति। अतो वैधर्म्यत्रयान्न बुद्धिसरूपः पुरुष इत्यर्थः, एतावता शुद्ध-इति व्याख्यातम्, ननु सर्वाभिमाननिवृत्त्यर्थं सामान्यत एव दृग्दृश्यविवेकः प्रतिपादनीयः

नात्यन्तं विरूपः, कस्मात्? शुद्धोऽप्यसौ प्रत्ययानुपश्यो, यतः प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्नतदात्माऽपि तदात्मक इव प्रत्यवभासते, तथा चोक्तम्—"अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेर-

भास्वती।

स शुद्धोऽपि परिणामित्वादिशून्योऽपि प्रत्ययानुपश्यो बौद्धं=बुद्धिविकारं प्रत्ययं=ज्ञानवृत्तिम्, अनुपश्यति=उपद्रष्टा सन् प्रकाशयति, ततो बुद्ध्यात्मक इव प्रत्यवभासते=प्रतीयते, यथा राज्ञा सह सम्बन्धात् कश्चित् पुरुषो राजपुरुषो भवति, तथा पुरुषोपदर्शनालब्धसत्ताका बुद्धिरपि पौरुषेयी भवतीति बुद्धिः कथञ्चित् पुरुषसदृशी, अनुभूयते च—द्रष्टाऽहं ज्ञाताऽहमित्यादि, एवमचेतनाऽपि बुद्धिर्मामहं जानामीत्यध्यवस्यति, ततः स्वबोधस्वरूपः पुरुष इव प्रतीयते, तथा चोक्तं 'पञ्चशिखाचार्येण—अपरिणामिनी हि भोक्तृशक्तिर्भोक्ता सुखदुःखभोगभूतबुद्धेर्द्रष्टेत्यर्थः, ततोऽप्रतिसङ्क्रमा बुद्धेरुपादानरूपेण प्रतिसङ्क्रमशून्या=प्रतिसञ्चारशून्येत्यर्थः, परिणामिन्यर्थे=बुद्धिवृत्तौ प्रतिसङ्क्रान्ता इव तद्वृत्तिं=बुद्धिवृत्तिम्, अनुपतति=तस्या अनुरूप इव प्रतीयत इत्यर्थः, एवं पुरुषस्य बुद्धिसारूप्यम्, बुद्धेः पुरुषसारूप्यमाह=तस्याश्च बुद्धिवृत्तेः प्राप्तचैतन्योपग्रहरूपायाः=प्राप्तश्चैतन्योपग्रह-

तत्त्ववैशारदी।

इति, नात्यन्तं विरूपः, कस्माद्, यतः शुद्धोऽपि प्रत्ययानुपश्यः"=यथा चैतत्तथोक्तं "वृत्तिसारूप्यमितरत्र" इत्यत्र' तथा चोक्तं पञ्चशिखेन"—अपरिणामिनी हि भोक्तृशक्तिः=आत्मा, अत एव बुद्धावप्रतिसङ्क्रमा च, परिणामिनि बुद्धिरूपेऽर्थे सङ्क्रान्तेव तद्वृत्तिं=बुद्धिवृत्तिम् अनुपतति, नन्वसङ्क्रान्ता कथं सङ्क्रान्तेव कथं वा वृत्तिं विनाऽनुपततीत्यत आह—"तस्याश्च" इति। प्राप्तश्चैतन्योपग्रहः=उपरागो येन रूपेण तत्तथाप्राप्तचैतन्योपग्रहं रूपं-

पातञ्जलरहस्यम्।

दिति। निरवयवत्वसावयवत्वेन जडाजडयोः संयोगतादात्म्याभावादहं सुखीत्यादिभ्रम इत्या-

वार्त्तिकम्।

तत्किमिति बुद्धिपुरुषयोरेव वैधर्म्यं प्रतिपाद्यत इति चेद् न, बुद्धिरेव पुरुषस्य साक्षाद् दृश्या बुद्ध्यारूढतयैवान्येषां दृश्यत्वात् तस्यामेव साक्षादभिमानः तत्सम्बन्धादेवान्यत्राभिमानात्, मृतदेहे सुषुप्त्यवस्थप्राणे च चैतन्याभावस्य स्पष्टत्वात्, एकैकेन्द्रियघातेऽपि चैतन्योपलब्धेः इन्द्रियाणामप्यचैतन्यस्य स्पष्टत्वात्, अतो बुद्धिविवेकादेव सर्वाभिमाननिवृत्तिरित्याशयेन बुद्धिवैधर्म्यमेव पुरुषेषु प्रायशः प्रतिपाद्यते, किञ्च बुद्ध्यतिरिक्तेभ्य आत्मविवेकस्य न्यायवैशेषिकाभ्यामेव सिद्धत्वेन बुद्धितो विवेक एव सांख्ययोगयोरसाधारणं कृत्यमिति, अत्यन्तवैरूप्यं निराकर्त्तुमुत्थापयति—अस्तु तर्हीति। यत इत्यस्य पूर्वेणान्वयः, प्रत्ययानुपश्य इत्येतद्व्याचष्टे—प्रत्ययं बौद्धमिति। बुद्धिवृत्तिमनुपश्यतीत्यर्थः, ननु बुद्धिद्रष्टृत्वेऽपि कथं नात्यन्तंबुद्धिवैरूप्यं तत्राह—तमनुपश्यन्निति। यतस्तमनुपश्यन्नतः पुरुषोऽतदात्माऽपि परमार्थतो बुद्ध्यसरूपोऽपि तत्सरूप इव प्रकाशते तदनुकारी भवति स्फटिक इव जपासरूप इत्यर्थः, अर्थाकारत्वस्यैवार्थग्रहणरूपतयाः बुद्धिस्थले सिद्धत्वादित्यर्थः, प्रतिबिम्बरूपेण च मिथ्यासारूप्येण न पारमार्थिकासारूप्यविरोधः, यथोक्तयोः सारूप्यवैरूप्ययोः पञ्चशिखाचार्यवाक्यं प्रमाणमति—तथा चोक्तमिति। भोक्तृशक्तिर्बुद्धिवत्परिणामिनी न भवति तथा बुद्धिवत्स्वविषये संक्रान्ता उपरक्ताऽपि च भवति विकारहेतुसंयोगस्यैवोपरागत्वात् बुद्धिविकारप्रतिबिम्बेनैवोपपत्तौ पुरुषस्य विकारकल्पनावैयर्थ्यात्, आभ्यां विशेषणाभ्यां वैरूप्यं दर्शितम्, इदानीं सा-

नुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते ॥ २० ॥

## तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

भास्वती।

श्चिदवभासः प्राप्तचैतन्योपग्रहस्तदेव स्वरूपं यस्यास्तस्या अचेतनाऽपि चैतन्यवतीव प्रतिभासमाना या बुद्धिवृत्तिस्तस्या इत्यर्थः, अनुकारमात्रतया नीलमणिव्यवहितस्य तत्प्रकाशकसूर्यादेर्यथा नीलिमा तथा बुद्धेरनुकारमात्रता=प्रकाशकतेत्यर्थः, तथा बुद्धिवृत्त्यविशिष्टा=चित्तवृत्तिभिः सहाविशिष्टाऽभिन्नेव ज्ञानवृत्तिः=यद्वा चितिशक्त्या सहाविशिष्टा बुद्धिवृत्तिरेव ज्ञानवृत्तिरित्याख्यायते चिद्वृत्तिरित्याख्यायतेऽविवेकिभिरिति, ज्ञानशब्दो ज्ञमात्रवाची, चितिशक्तिरेवात्र ज्ञानवृत्तिः ॥ २० ॥

पुरुषस्य भोगापवर्गरूपार्थमन्तरेण नास्ति दृश्यस्यान्यत् साक्षाज्जायमानं रूपं कार्य-

तत्त्ववैशारदी।

यस्याः सा तथोक्ता, एतदुक्तं भवति—यथा निर्मले जलेऽसंक्रान्तोऽपि चन्द्रमाः संक्रान्तप्रतिबिम्बतया संक्रान्त इव; एवमत्राप्यसंक्रान्ताऽपि संक्रान्तप्रतिबिम्बा चितिशक्तिः संक्रान्तेव तेन बुद्ध्यात्मत्वमापन्ना बुद्धिवृत्तिमनुपततीति, तदनेनानुपश्य इति व्याख्यातम्, तामनुकारेण पश्यतीत्यनुपश्य इति ॥ २० ॥

द्रष्टृदृश्ययोः स्वरूपमुक्त्वा स्वस्वामिलक्षणसंबन्धाङ्गं दृश्यस्य द्रष्टृर्थत्वमाह—"तदर्थ एव

पातञ्जलरहस्यम्।

ह—प्रत्ययानुपश्य इति। प्रत्ययं बौद्धमिति प्रत्येतव्यान् बुद्धिधर्मान् धर्मादीनित्यर्थः, केवलमुत्पद्यते ज्ञानमित्याह—तथा चोक्तमित्यादि—आख्यायत इत्यन्तेन ॥ २० ॥

तदर्थ एव दृश्यस्य बुद्ध्यादेरात्मा स्वरूपमुत्पत्त्यादि वा तदर्थः=द्रष्टृर्थ इति सूत्रार्थः,

वार्त्तिकम्।

रूप्यं दर्शयितुमादौ बुद्धेश्चिद्रूपत्वमुपपादयति—परिणामिन्यर्थ इति। परिणामिनि स्वस्वार्थे विषये बुद्धौ प्रतिबिम्बरूपेण संक्रान्तेवोपरक्तेव सती तद्वृत्तिं विषयाद्याकारामनुपतति चेतनामिव करोति यथा सूर्यो जलेऽनुपतन् जलं सूर्यमिव करोति तद्वत्,अनेन बुद्धे रूपं दर्शयित्वा-पुरुषस्य बुद्धिसारूप्यं दर्शयति—तस्याश्चेति। हिशब्दोऽवधारणे,तस्या अपि भोक्तृशक्तेर्ज्ञानवृत्तिर्ज्ञानरूपा वृत्तिर्बुद्धिवृत्त्यविशिष्टैवेत्याख्यायते इत्यन्वयः, अत्र हेतुः प्राप्तेति, उपग्रह उपरागः, उक्तरीत्याप्राप्तचैतन्योपरागकल्पाया बुद्धिवृत्तेरनुकारिणी प्रतिबिम्बोद्ग्राहिणी तन्मात्रतयेति ज्ञानवृत्तेर्विशेषणम्, तथा च परस्परप्रतिबिम्बात् द्वयोरपि चेतनत्वसुखादिपरिणामकत्वरूपं सारूप्यमित्यर्थः, आख्यायत इत्यनन्तरमितिशब्दः पूरणीयः, तदनेन सूत्रेण जीवेश्वरसाधारण्येनैव चिन्मात्रत्वमुक्तम्, तथा च श्रुतिस्मृती—'चेतामात्रः प्रतिपुरुषं क्षेत्रज्ञः'

ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते।

ज्ञानात्मकमिदं विश्वं न ज्ञानाद्विद्यते।परम्—

इति,ये तु वैशेषिकादयो ज्ञानाश्रयमात्मानं मन्यन्ते ते श्रुतिस्मृतिविरोधेनोपेक्षणीयाः, किंच लाघवात् प्रतिपुरुषमेकैकमात्रव्यक्तिनित्यज्ञानसिद्धौ तस्याश्रयो गौरवात् न कल्प्यते जानामीतिप्रत्ययस्य संयोगसम्बन्धेनैवोपपत्तेः,यथा हीन्धनं तेजस्वीति प्रत्ययः संयोगसम्बन्धेन प्रमा तथैव बुद्धौ ज्ञानाख्यद्रव्यसंयोगसंबन्धेन ज्ञानवत्त्वप्रत्ययः प्रमैव लोकानामहमितिप्रत्यये चावश्यं बुद्धिरपि भासते अनादिमिथ्याज्ञानवासनाऽऽख्यदोषस्य प्रतिबन्धे मानाभावात्, अतोऽहं जानामीत्यविदुषां प्रत्ययोऽहमंशे भ्रमो ज्ञानवत्त्वांशे प्रमेत्यावयोः समानमेव, विदुषां तु जानामीति प्रत्ययोऽसिद्ध एव, परमेश्वरस्य सर्वज्ञत्वादिव्यवहारस्तु लोकव्यवहारादिति, अधिकंतु सांख्यभाष्यादौ प्रोक्तमिति दिक् ॥ २० ॥

दृशिरूपस्य पुरुषस्य कर्मरूपतामापन्नं दृश्यमिति तदर्थ एव दृश्यस्यात्मा = स्वरूपं भवतीत्यर्थः, ॥ २१ ॥

भास्वती।

वा तस्मात् पुरुषार्थ एव दृश्यस्यात्मा = स्वरूपमिति सूत्रार्थः, भोगरूपेण विवेकरूपेण वा गुणा दृश्या भवन्तीत्यर्थः,

दृशीति। कर्मरूपतां = भोगापवर्गरूपताम्, तदिति। तत्स्वरूपं = दृश्यस्वरूपं भोगापवर्गरूपा बुद्धिरित्यर्थः, परस्वरूपेण = विज्ञातृस्वरूपेण प्रतिलब्धात्मकं = लब्धसत्ताकम्, एतदुक्तं भवति सुखदुःखबोधः, अहं सुखी-अहं दुःखीत्याद्याकारेणात्मबुद्धिगतेन द्रष्ट्रैव प्रतिसंवेद्यते, तत्प्रतिसंवेदनाच्च तेषां ज्ञानं सत्ता वा ततस्ते पररूपेण लब्धसत्ताका विज्ञाता-वा, चरिते भोगापवर्गार्थे चित्तवृत्तीनां निरोधाच्च भोगापवर्गरूपा वृत्तयः पौरुषभासा प्रकाशिता भवन्ति, ननु तदा सतीनां वृत्तीनां किमत्यन्तनाश इत्यतस्योत्तरमाह—स्वरूपहानाद् = सुखदुःखादिप्रमाणादिमहदादिस्वरूपनाशात् ते नश्यन्ति न च विनश्यन्ति न

तत्त्ववैशारदी।

दृश्यस्यात्मा" इति। व्याचष्टे—"दृशिरूपस्य" इति। दृशिरूपस्य पुरुषस्य = भोक्तुः कर्मरूपतां = भोग्यताम् आपन्नं दृश्यम् इति = तस्मात् तदर्थ एव = द्रष्ट्रर्थ एव दृश्यस्यात्मा भवति, न तु दृश्यार्थः, ननु नात्माऽऽत्मार्थ इत्यत आह—"स्वरूपं भवति" इति। एतदुक्तं-भवति—सुखदुःखात्मकं दृश्यं भोग्यं, सुखदुःखे चानुकूलयितृप्रतिकूलयितृणी तत्त्वेन तदर्थ एव व्यवतिष्ठेते विषया अपि हि शब्दादयस्तादात्म्यादेव चानुकूलयितारः प्रतिकूलयितारश्च, न चैषामात्मैवानुकूलनीयः प्रतिकूलनीयश्च, स्वात्मनि वृत्तिविरोधाद्, अतः पारिशेष्याच्चितिशक्तिरेवानुकूलनीया च प्रतिकूलनीया च, तस्मात्तदर्थमेव दृश्यं न तु दृश्यार्थम्, अतश्च तदर्थ एव दृश्यस्यात्मा, न दृश्यार्थः ॥ २१ ॥

पातञ्जलरहस्यम्।

संगतिमाह—द्रष्टृदृश्ययोरिति। ननु स्त्रीपुंसयोरन्योन्यार्थता दृष्टा तद्वत् किं न स्यात्तत्राह—नन्विति। तत्रोभयस्य चेतनतयाऽस्तु, अत्र तु बुद्ध्यादेरचेतनत्वान्न तथा परार्थता; स्वात्मनि क्रियाविरोधाच्च स्वार्थताऽपीति भावः, एतदेव विवृणोति-एतदुक्तमित्यादिना, न वै सांशस्यांशानामात्मायत्ततेत्यर्थः, भूम्याद्यष्टस्वसंभावितत्वादभावादप्रसक्तेर्यथा शब्दे व्योमैकगुणे; तथाऽत्राभावादसंभवात् स्वात्मन्यप्रसक्तपुमर्थतैवेत्याह-पारिशेष्यादिति। तत्रैवान्वयव्यति-

वार्त्तिकम्।

बुद्ध्यतिरिक्ते द्रष्टरि प्रमाणमाह सूत्रकारः—

"तदर्थ एव दृश्यस्यात्मा",तस्य पुरुषस्यार्थः प्रयोजने भोगापवर्गावेवार्थः प्रयोजनं यस्य स तथेति मध्यमपदलोपी समासः, भोगापवर्गप्रयोजनकमेव दृश्यस्य स्वरूपं कार्यकारणात्मकं गुणत्रयं न स्वार्थमित्यर्थः, तथा च गुणाः परार्थाः संहत्यकारित्वात् शय्याऽऽदिवदित्यनुमानेन बुद्ध्याद्यतिरिक्तस्य पुरुषाख्यस्य परस्य सिद्धिरिति भावः, इदं चानुमानं पूर्वसूत्रे व्याख्यातम्, तदर्थमेव दृश्यमित्येतावन्मात्रेणैव निर्वाहेऽप्यात्मपदं धात्वर्थे दर्शने तदर्थत्वान्वयभ्रमनिरासाय प्रयुक्तमिति,, तदर्थत्वे युक्तिं वदन् सूत्रं व्याचष्टे—दृशिरूपस्येति। यतो दृशिरूपस्य पुरुषस्य यत् कर्मैव कर्म दर्शनं तद्विषयतां गतमेव वस्तु दृश्यं भवति, दर्शनं च सर्ववस्तूनां प्रयोजनमिति सर्वसंमतमतस्तदर्थमेव दृश्यस्य गुणादेः स्वरूपं भवति तिष्ठतीत्यर्थः, न हि परप्रयोजनकं वस्तु परप्रयोजनं विना क्षणमपि स्थातुं क्षमते नित्यमनित्यं वा प्रयोजनं विना कस्यापि परार्थस्यावस्थानादर्शनेन पुरुषार्थस्य तत्स्थितिहेतुत्वसिद्धेरिति भावः, अनेन च सूत्रेण

तत्स्वरूपं तु पररूपेण प्रतिलब्धात्मकं भोगापवर्गार्थतायां कृतायां-पुरुषेण न दृश्यत इति स्वरूपहानादस्य नाशः प्राप्तो न तु विनश्यति, कस्माद् ?

**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वाद् ॥ २२ ॥**

भास्वती।

तेषामत्यन्तनाशः, ते च तदा गुणस्वरूपेण तिष्ठन्ति, अन्यैरकृतार्थपुरुषैर्दृश्यन्त इति ॥२१॥

कृतार्थमिति। एकं पुरुषमित्यनेन पुरुषबहुत्वमातिष्ठते, नाशः पुरुषार्थहीनाऽव्यक्तावस्था, यौगपदिकस्य बहुज्ञानस्यैको द्रष्टेति मतं सर्वेषामनुभवविरुद्धत्वादकल्पनीयं युक्तिहीनत्वाद्वास्थेयम्, अनुभूयते च सर्वैर्वर्त्तमानस्यैकज्ञानस्यैक एव द्रष्टेति, अतः प्रवर्त्ततेऽयं-युक्तः प्रवादः, यदेकदा बहुक्षेत्रेषु वर्त्तमानानां बहुज्ञानानां बहवो ज्ञातार इति, "पुरुष एवेदं-सर्वम्" इति, "एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च" इत्यादिश्रुतीनामात्मा पुरुषश्च न द्रष्टृमात्रवाची किन्तु प्रजापतिवाची, श्रूयते च—

"ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता" इति, स्मर्यते च—

"स सृष्टिकाले प्रकरोति सर्गं संहारकाले च तदत्ति भूयः।
संहृत्य सर्वं निजदेहसंस्थं कृत्वाऽप्सु शेते जगदन्तरात्मा" इति,

तत्त्ववैशारदी।

यत् स्वरूपमस्य यावत्पुरुषार्थमनुवर्त्तते, निवर्त्तिते च पुरुषार्थे निवर्त्तत इत्याह-"तत्स्वरूपंतु" इति। स्वरूपं तु दृश्यस्य जडं, पररूपेण = आत्मरूपेण चैतन्येन प्रतिलब्धात्मकम् = अनुभूतस्वरूपं, भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यते = भोगः = सुखाद्याकारशब्दाद्यनुभवः, अपवर्गः = सत्त्वपुरुषान्यताऽनुभवः, तच्चैतदुभयमप्याजानतो जडाया बुद्धेः पुरुषच्छायाऽऽपत्त्येति पुरुषस्यैव, तथा च पुरुषभोगापवर्गयोः कृतयोर्दृश्यस्य भोगापवर्गार्थता समाप्यत इति भोगापवर्गार्थतायां कृतायामित्युक्तम्, अत्रान्तरे चोदयति-"स्वरूपहानाद्" इति। परिहरति—"न तु विनश्यति" इति,

नन्वत्यन्तानुपलभ्यं कथं न विनश्यतीत्याशयवान् पृच्छति—"कस्माद्" इति। सूत्रेणोत्तरमाह—"कृतार्थमित्यादिना—तदन्यसाधारणत्वादित्यन्तेन"। कृतोऽर्थो यस्य पुरुषस्य स-

पातञ्जलरहस्यम्।

कारेवाह—यदिति-समाप्यत इत्यन्तेन, आजानतः = अनादितः ॥ २१ ॥

कृतं तु यावत् कर्तव्यं स्मर्तव्यमवशिष्यत इतिन्यायेनाशङ्क्य सूत्रेण समाधत्ते—

"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्", कृतार्थं कृतसाक्षात्कारं नरं प्रति पृथिव्यभिभूतसुवर्णभास्वरत्वादिवद् न व्यक्तमेव स्याद्दर्शनं गतमप्यन्यस्य दृश्यत्वे न वर्तते कुतः तस्य दृश्यस्य बुद्ध्यादेरप्राप्तकैवल्यमकृतार्थं प्रति भोगदत्वेनसाधारणत्वात्सम नत्वादग्नौ यथा विस्फुलिङ्गाः प्रभवन्ति स्वरूपास्तथा सर्वे प्राणा इति श्रुतेरिति सूत्रार्थः, नष्टमदर्शनमपि

वार्त्तिकम्।

चैतन्याधीना सत्ता दृश्यस्य न स्वत इति सिद्धम् ॥ २१ ॥

सूत्रान्तरमवतारयितुमुपक्रमते—तत्स्वरूपमिति। ननु दृश्यस्वरूपं यदि परस्य पुरुषस्य रूपेण दर्शनेन निमित्तेन तदर्थं प्रति लब्धात्मकं लब्धसत्ताकं तर्हि भोगापवर्गार्थतायां भोगापवर्गरूपे पुरुषस्यार्थसमूहे कृते सति पुरुषेण न दृश्यत इति कृत्वा स्वरूपत्यागान्नाशोऽत्यन्तोच्छेदोऽस्य गुणादेः प्रसक्त इत्यर्थः, प्रयोजनसमाप्त्या हि प्रयोजनकारि नाश्यत इति धर्माधर्मवासनाचित्तादिस्थले दृष्टं, तथा च प्रकृतिनित्यत्वसृष्ट्यादिप्रवाहानुच्छेदनित्यैश्वर्यादिसिद्धान्तहानिरिति पूर्वः पक्षः, अत्र सिद्धान्तमाह—न तु विनश्यतीति। पृच्छति—कस्मादिति।

कृतार्थमेकं पुरुषं प्रति दृश्यं नष्टमपि = नाशं प्राप्तमपि अनष्टं तद् अन्यपुरुषसाधारणत्वात्, कुशलं पुरुषं प्रति नाशं प्राप्तमप्यकुशलान् पुरुषान् प्रत्यकृतार्थमिति तेषां दृशेः कर्मविषयतामापन्नं लभत एव पररूपेणात्मरूप-

भास्वती।

ब्रह्मा तस्यान्तरात्मभूतो देव एक इति वादः साङ्ख्यसम्मतः श्रुतिस्मृतिप्रतिपादितश्चेति दिक्, "अजामेकाम्" इत्यादिश्रुतौ पुरुषस्य बहुत्वमुक्तम्, कुशलमिति, छग-

तत्त्ववैशारदी।

तथा, तं प्रति नष्टमप्यनष्टं तद् दृश्यम्, कुतः? सर्वान् पुरुषान् कुशलान् अकुशलान् प्रति साधारणत्वाद्, व्याचष्टे-"कृतार्थमेकम्" इति। नाशः = अदर्शनं, अनष्टं तु दृश्यमन्यपुरुष-

पातञ्जलरहस्यम्।

तत् तिरोभावमात्रं—

'महतः परमव्यक्तं बुद्धिरव्यक्तमेव च,

वार्त्तिकम्।

अत्र प्रत्युत्तरं सूत्रं पठति—

"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात", व्याचष्टे—कृतार्थमिति। बुद्ध्या कृतः समापितोऽर्थो यस्येति कृतार्थमेकं कं चिन्मुक्तपुरुषं प्रति गुणादिकं नष्टं प्रयोजनाकरणात् राज्ञो-राज्यवन्नष्टमपि सामान्यतो न नष्टं तस्मिन्नकृतार्थे अन्यपुरुषे च तस्य साधारणत्वादित्यर्थः, योजितं सूत्रं तात्पर्यतो व्याचष्टे—कुशलमित्यादिना—रूपमितीत्यन्तेन, कुशलं कल्याणमुक्तम्, अकृतोऽर्थो येनेत्यकृतार्थं, शेषं व्याख्यातप्रायम्, सोऽयं सूत्रार्थः श्रुत्याऽप्यनुगृहीतो, यथा—

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य"—

इति। तदनेन सूत्रेण प्रकृतिनित्यत्वं पुरुषबहुत्वं च प्रतिपादितम्, तथा पुरुषभेदात् प्रकृतेर्बहुत्वं नास्तीत्येवंरूपं प्रकृतेरेकत्वं च प्रतिपादितं विज्ञानवादादिनिरासायेति, नन्वेवं—

'यथा घटीकुम्भकभण्डलुस्थमाकाशमेकं बहुधा हि भिन्नम्।
तथा पुबाहुः स च काशिपोऽहमन्ये च देहेषु शरीरभेदै'रि-

त्येवंविधश्रुतिस्मृतिशतोक्तं सर्वात्मनामैक्यं विरुद्धमिति चेन्न—तादृशवाक्यैः प्रकरणभेदेन क चिद्वैधर्म्यलक्षणाभेदप्रतिपादनात्, सर्वात्मनामवैधर्म्यज्ञानेनैवापरिणामितया बुद्ध्याद्यभिमाननिवृत्तितो मोक्षसिद्धेः, क चिच्चाविभागलक्षणाभेदप्रतिपादनात्, ततश्चैकस्यैव परमात्मनो मुख्यात्मता सिध्यतीति, एतच्च सर्वं ब्रह्ममीमांसाभाष्ये श्रुतिभाष्यादिषु च प्रपञ्चितमस्माभिः, न पुनस्तादृशवाक्यानां जीवात्मपरमात्माखण्डतापरत्वं सम्भवति बन्धमोक्षानुपपत्तिरूपसत्तर्कानुग्रहेण बलवद्भिर्भेदग्राहकश्रुतिस्मृतिशतैर्विरोधात्, 'अधिकं तु भेददर्शनात्' 'अंशो नानाव्यपदेशा'दिति ब्रह्ममीमांसामारभ्य सर्वदर्शनसूत्रैरतिस्फुटमात्मभेदप्रतिपादनेन भेदस्यैव श्रुत्यर्थत्वावधारणाच्च, अपि च सर्वात्मनामैक्यमात्रज्ञानान्न संसाराभिमाननिवृत्तिः सम्भवति, एकस्मिन्नेवाकाशेऽवच्छेदभेदेन शब्दतदभाववद् एकस्मिन्नेवात्मनि अवच्छेदेन संसारासंसारयोः सम्भवात्, विवेकज्ञानापेक्षणे च तत एवाभिमाननिवृत्तेरैक्यज्ञानस्य न दृष्टद्वारा मोक्षहेतुत्वं स्यात् नाप्यात्मैक्यज्ञानात् सर्वात्मब्रह्मोपासनं संभवति साक्षात् कुक्कुरत्वादिदृष्ट्याऽत्र ब्रह्मणो निन्दाया एव प्रसङ्गात्, जडवर्गेष्वविभागलक्षणाभेदेनोपासनाया अवश्यकल्प्यत्वेन चेतनवर्गेष्वपि तथवौचित्याच्च, तस्मात् प्रयोजनाभावात् नात्माखण्डताप्रतिपादने श्रुतिस्मृत्योस्तात्पर्यम्, अधिकं तु ब्रह्ममीमांसायामस्माभिराधुनिकवेदान्तिब्रुवमतखण्डनावसरे प्रतिपादितमिति दिक्। तदेवं विशेषाविशेषेत्यादिसूत्रगणेन द्रष्टुः पुरुषस्य स्वत एव दर्शनशक्तेश्च बुद्धेः कारणरूपेण नित्यत्वे सिद्धे तयोः संयोगः प्रवाहरूपेणानादिरिति सा-

मिति, अतश्च दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यात इति, तथा

भास्वती ।

मम् । अतश्चेति । अकुशलानां दृश्यदर्शनं स्यात् तच्च संयोगमन्तरेण न स्यादतः, तथा च दृग्दर्शनशक्त्योः = द्रष्टृदृश्ययोः कारणहीनयोर्नित्यत्वात् स संयोगोऽनादिः, अनाद्याः सनिमित्ता भावाः प्रवाहरूपेणैवानादयः स्युर्बीजवृक्षवद् , द्रष्टृदृश्ययोः संयोगोऽप्यविद्यानिमित्तकत्वात् प्रवाहरूपेणानादिर्न चैकव्यक्तिकानादिः, दृश्यते च परिणामिन्या बुद्धेर्वृत्तिरूपेण लयोदयशीलता, यदा सा लीना तदा वियोगो यदा विपर्ययसंस्कारवशात्तु पुनरुदिता तदा संयोगः, एवं बीजवृक्षवदनेकव्यक्तिकस्य संयोगस्यानादिप्रवाहः, विद्यारूपनिमित्ताद्-विद्यानाश आत्यन्तिको वियोग इत्युपरिष्टात् प्रतिपादितः, तथा चोक्तं "पञ्चशिखाचार्येण"–धर्मिणामिति । धर्मिणां सत्त्वादिगुणानां परिणामिनित्यानां कूटस्थनित्यैः क्षेत्रज्ञैः पुरुषैः सहानादिसंयोगाद् धर्ममात्राणां सर्वेषां महदादीनां द्रष्ट्रा सह संयोगोऽनादिः, अनादिरपि

तत्त्ववैशारदी ।

साधारणत्वात् तस्माद् दृश्यात्परस्यात्मनश्चैतन्यं रूपं तेन, तदिह श्रुतिस्मृतीतिहासपुराणप्रसिद्धमव्यक्तमनवयवमेकमनाश्रयं व्यापि नित्यं विश्वकार्यशक्तिमद्, यद्यपि कुशलेन तं प्रति कृतकार्य्यं न दृश्यते तथाऽप्यकुशलेन दृश्यमानं न नास्ति, न हि रूपमन्धेन न दृश्यत इति चक्षुष्मताऽपि दृश्यमानमभावप्राप्तं भवति, न च प्रधानवदेक एव पुरुषः, तन्नानात्वस्य जन्ममरणसुखदुःखोपभोगमुक्तिसंसारव्यवस्थया सिद्धेः, एकत्वश्रुतीनां च प्रमाणान्तरविरोधात्कथञ्चिद्देशकालविभागाभावेन भक्त्याऽप्युपपत्तेः, प्रकृत्येकत्वपुरुषनानात्वयोश्च श्रुत्यैव साक्षात्प्रतिपादनाद्,

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति श्रुतिः,

अस्या एव श्रुतेश्चानेन सूत्रेणार्थोऽनूदित इति, यतो दृश्यं नष्टमप्यनष्टं पुरुषान्तरं प्रत्यस्ति अतो दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यातः, अत्रैवागमिनामनुमतिमाह— "तथा चोक्तम्" इति । धर्मिणां गुणानाम्, आत्मभिरनादिसंयोगाद् धर्ममात्राणां = महदादीनामप्यनादिः संयोग इति, एकैकस्य महदादेः संयोगोऽनादिरप्यनित्य एव यद्यपि, तथाऽपि सर्वेषां महदादीनां नित्यः पुरुषान्तराणां साधारणत्वादत उक्तं—"धर्ममात्राणाम्" इति ।

पातञ्जलरहस्यम् ।

इत्यादि तत्र मानमित्याह—तदिहेति । अनवयवं त्रिगुणावयवत्वेऽप्यनारब्धत्वात्

एक एव तु भूतात्मा भूते भूते व्यवस्थितः,
इतिश्रुतेरेक एवात्मेति चेन्नेत्याह—

न चेति—सिद्धेरित्यन्तेन, सर्वजनीनपुरुषबहुत्वानुभवविरोधात् श्रुतेरर्थवादत्वमित्याह—एकत्वेति । नित्यविभूनामात्मनां देशकालकृतविभागाभावे वनसेनाऽऽदिवदेकत्वमुपचरितमित्याह—कथञ्चिदिति । तयोरेकत्वानेकत्वे श्रुतिमाह—अजामिति । एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्तीतिश्रुत्यन्तरात्, सा चान्या प्रकृतेरिति व्याख्या न साध्वीति भावः, प्रासङ्गिकमाह—अतो दृगिति । धर्ममात्राणां धर्मलक्षणावस्थापरिणतत्वेन शास्त्रेषु व्याख्यानमुपपन्नमित्याह—अतश्चेति । विनाशित्वेऽपि भावरूपाणां गुणानामनादित्वं न घटेत ततश्च तत्कार्यबुद्धेः ततश्च बुद्धिपुरुषसंयोगस्येति भावः, बुद्धिपुरुषसंयोगस्य प्रवाहरूपेणानादित्वे पञ्चशिखाचार्यसंवादमाह—तथा चोक्तमिति । धर्मिणां गुणानां पुरुषैः सहानादिसंयोगादिति तु गुणनित्यत्वं विना धर्मसामान्यानां बुद्ध्यादीनां संयोगानादित्वं न घटत इति प्रतिपादनाय प्रदर्शितम्, तदेवं प्रकाशप्रवृत्तीत्यादिसूत्रैः पञ्चविंशतितत्त्वान्यत्र संक्षेपतो वि-

चोक्तं-"धर्मिणामनादिसंयोगाद् धर्ममात्राणामप्यनादिः संयोग"इति ॥२२॥

संयोगस्वरूपाभिधित्सयेदं सूत्रं प्रववृते—

**स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥**

भास्वती ।

संयोगो न नित्यः प्रवाहरूपत्वान्निमित्तजन्यत्वाच्च, संयोगस्तु न भावस्तस्मात्तस्याभावो-वियोगरूपः स्यात् संयोगकारणस्य नाशे सति, भावस्यैवाभावः सत्कार्यवादविरुद्धो न सम्बन्धपदार्थस्येत्यवगन्तव्यम् ॥ २२ ॥

संयोगेति । स्वरूपस्यासामान्यविशेषस्याभिधित्सया = अभिधानेच्छया पुरुष-इति पुरुषोपदर्शनान्महत्तत्त्वानां व्यक्तत्वं तथा च पुरुषविषया बुद्धिर्ज्ञाताऽहं भोक्ताऽह-

तत्त्ववैशारदी ।

मात्रग्रहणेन व्याप्तिं गमयति, अत एतद् भवति, यद्यप्येकस्य महतः संयोगोऽतीततामापन्नस्त-थाऽपि महदन्तरस्य पुरुषाणां संयोगो नातीत इति नित्य उक्तः ॥ २२ ॥

तदेवं तादर्थ्ये संयोगकारणे उक्ते प्रासङ्गिके प्रधाननित्यत्वे संयोगसामान्यनित्यत्वे हेतौ चोक्ते, संयोगस्य यत्स्वरूपम् = असाधारणो विशेष इति यावत् तदभिधित्सयेदं सूत्रं प्रव-वृते "स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोग" इति । यतो दृश्यं तदर्थमतस्तज्जनितो-

पातञ्जलरहस्यम् ।

धर्मपदवाच्यता ॥ २२ ॥

महत्तत्त्वादीनामभिधित्सया वक्तुमिच्छयेति,

स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः, आत्मात्मीयधनज्ञातिषु स्वमित्यभिधा-नात् स्वमात्मीयं प्रधानादि तेन दृश्यशक्त्या प्रधानादिस्वामिनः पुंसोऽनादिसंयोगः स दृश्य-स्यानात्मनो जडस्योपलब्धिर्भोगाख्या स्वरूपोपलब्धिश्च मोक्षाख्या तयोर्हेतुरनादिसंयोगः संयोगस्य वियोगावसानत्वाद् भोगाय संयुक्तोऽपि पुमानपवृज्यते चेति सूत्रार्थः, अकर्ता कर्त-वानवस्थ इति श्रुतेः यथा जपागतलौहित्यासंसर्ग्यपि स्फटिको लोहितः स्फटिक इति तदुप-कार्यत्वेनैवोपलभ्यते तद्वदसङ्गोऽप्यात्मा तद्धर्मवानिवोपलभ्यत इत्याह-यत इत्यादि-हेतुरित्य-

वार्त्तिकम् ।

वेकेनोक्तानि विस्तरस्तु सांख्यदर्शने द्रष्टव्यः, प्रकृतिपुरुषविवेकस्यैव मुख्यतस्तत्र प्रतिपाद-नात् अत्र योगस्यैवेति ॥ २२ ॥

द्रष्टृदृश्ययोः स्वरूपमुक्तम् इदानीं तत्संयोगस्य स्वरूपप्रदर्शकं सूत्रमुत्थापयति-संयोगस्व-रूपेति । द्रष्टृदृश्ययोः संयोगसामान्यं न हेयहेतुः प्रलयमोक्षादिसाधारण्याद् अतः संयोगगत-विशेषावधारणायेदं सूत्रं प्रववृत इत्यर्थः,

"स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः", स्वशक्तिर्दृश्यं भोग्यतायोग्यत्वात् स्वामिशक्तिर्द्रष्टा भोक्तृयोग्यत्वात् तयोः स्वरूपोपलब्धौ हेतुर्यः संयोगविशेषः स एव द्रष्टृदृश्य-संयोगोऽत्र हेयहेतुरुक्त इत्यर्थः, विभुना द्रष्टृदृश्यसंयोगसामान्यस्य सार्वकालिकत्वेन हेया-हेतुत्वादिति भावः, स च संयोगविशेषो बुद्धिद्वारकः दृश्यबुद्धिसत्त्वोपाधिरूपः सर्वे धर्मा इति पूर्वभाष्यात्, अतो दृश्यवत्या बुद्ध्या संयोग एवात्र संयोगविशेषः,

"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण"—

इत्येवंविधश्रुत्यादिभ्यो लिङ्गदेहात्मसंयोगादेवात्मनो विषयदर्शनावगमादिति, एतेन भो-क्तृभोग्ययोग्यतैव द्रष्टृदृश्ययोरनादिः संबन्धः संयोगाङ्गीकारे पुरुषस्य परिणामित्वापत्तेरिति कस्य चित् प्रलापः सूत्रस्वरसाद्धेयः, तथा सति स्वस्वामिभावः संयोग इत्येव सूत्रौचित्यात् संयोगस्यानाद्येकव्यक्तित्वे सत्यागामिसूत्राभ्यामुत्पत्तिविनाशवचनानुपपत्तेश्च चेतनत्वा-

पुरुषः स्वामी दृश्येन स्वेन दर्शनार्थं संयुक्तः तस्मात्संयोगाद् दृश्यस्योपलब्धिर्या स भोगः, या तु द्रष्टुः स्वरूपोपलब्धिः सोऽपवर्गः, दर्शनकार्य्यावसानः संयोग इति दर्शनं वियोगस्य कारणमुक्तं, दर्शनमदर्शनस्य प्रति-

भास्वती।

मित्याद्याकारोत्पद्यते, ततः पुरुषः स्वामी बुद्धिश्च स्वमिति, दर्शनार्थं संयुक्तो दर्शनफलकः संयोग इत्यर्थः, तच्च दर्शनं द्विविधं भोगोऽपवर्गश्चेति, दर्शनकार्येति । दर्शनकार्यावसानः संयोगः = विवेकेन दर्शनस्य परिसमाप्त्या संयोगस्याप्यवसानं स्यात्, तस्माद् विवेकदर्शनं वियोगस्य कारणम्, नात्रेति । अदर्शनप्रतिद्वन्द्विना दर्शनेनादर्शनं नाश्यते, ततश्चित्तवृत्तिनिरोधस्ततो मोक्ष इत्यतो न दर्शनं मोक्षस्याव्यवहितं कारणं यदा नोपादानकारणम्, दर्शनस्यापि नाशे मोक्षसम्भवात्, किन्तु तन्निर्वर्त्तकत्वाद् दर्शनं व्यवहितकारणं कैवल्यस्य, किञ्चेति । किंलक्षणकमदर्शनमित्यत्र शास्त्रगतानष्टौ विकल्पानुत्थाप्य निरूपयति—

तत्त्ववैशारदी।

पकारं भजमानः पुरुषस्तस्य स्वामी भवति, भवति च दृश्यमस्य स्वम्, स चानयोः संयोगः शक्तिमात्रेण व्यवस्थितस्तत्स्वरूपोपलब्धिहेतुः, तदेतद्भाष्यमवद्योतयति, "पुरुष" इति । पुरुषः स्वामी योग्यतामात्रेण दृश्येन स्वेन योग्यतयैव दर्शनार्थं संयुक्तः, शेषं सुगमम्, स्यादेतद्—द्रष्टुः स्वरूपोपलब्धिरपवृज्यतेऽनेनेत्यपवर्ग उक्तः, न च मोक्षः साधनवान्; तथा सत्ययं मोक्षत्वादेव च्यवेतेत्यत आह—"दर्शनकार्य्यावसान" इति । दर्शनकार्य्यावसानो बुद्धिविशेषेण सह पुरुषविशेषस्य संयोग इति दर्शनं वियोगकारणमुक्तम्, कथं पुनर्दर्शनकार्य्यावसानत्वं संयोगस्येत्यत आह—"दर्शनम्" इति । ततः किमित्यत आह—"अदर्शनम्"

पातञ्जलरहस्यम्।

न्तेन, तदर्थः पुमर्थः, हेतुमात्रेण कार्योन्नेयत्वेन यज्जन्यं तदनित्यमिति तर्कसहकृतायाः नास्त्यकृतः कृतेनेति श्रुतेश्चेत्याशङ्कते–न चेति। मुचेः बन्धविश्लेषात्मकत्वमादायाह–दर्शनेति। संयोगस्य वियोगावधित्वमुक्तमत्रोत्पत्तिमाकाङ्क्षति कथमिति–आलोकान्धकारयोरिव विद्याऽविद्ययोर्नित्यविरोधिन्योर्नैवोपपत्तिरिति, अस्यानर्थहेतोः प्रहाणायेति शाङ्करभाष्यमादायाह–अदर्शनस्यैव दर्शनान्निवृत्तेर्यतो ज्ञानमज्ञानस्यैव निवर्त्तकमिति स्मृतेः, यथा यजतिषु येयजामहे कुर्यान्नानुयाजेष्विति यजतिष्वनुयाजभिन्नेषु येयजामहे कुर्यादिति पर्युदासः द्विविधभोगापवर्गौ

वार्त्तिकम्।

चैतन्यत्वातिरिक्तस्य प्रतिनियतस्य योग्यस्य ज्ञानावच्छेदकस्यानिरूपणाच्च, तयोश्च मोक्षकालसाधारण्येन हेयाहेतुत्वात्, यदि च स्वभुक्तवृत्तिवासनावत्त्वं प्रवाहरूपेण च वासनाया अनादित्वं तदेव च संयोग इत्युच्यते, तथाऽपि तादृशसंयोगस्य भाष्यवक्ष्यमाणमविद्यावासनाजन्यत्वादिकं न घटेतैव यथाश्रुतसंयोगत्यागानौचित्यादिकं चेति, यच्चोक्तं संयोगेन परिणामित्वमिति तत्परिणामलक्षणाज्ञानात् संयोगविभागमात्रेणाकाशादौ परिणामव्यवहाराभावेन सामान्यगुणातिरिक्तधर्मोत्पत्तिरेव परिणाम इत्युक्तत्वात् अन्यथा प्रतिसर्गं प्रकृतिपुरुषयोः संयोगविभागौ श्रुतिस्मृत्योः श्रूयमाणौ विरुध्येताम्, न हि प्रतिसर्गं योग्यतोत्पादविनाशौ घटेतां पुरुषस्य परिणामप्रसङ्गात्, यथाश्रुतसंयोगविभागयोरेवोत्पादादिकमौचित्याच्चेति दिक् सूत्रार्थं विवृणोति—पुरुषइत्यादिना—सोऽपवर्ग इत्यन्तेन, संयुक्त इति । भवतीति शेषः, सूत्रे स्वरूपपदं च विवेकख्यातिपर्य्यन्तस्य दर्शनसामान्यस्य संयोगजन्यत्वप्रतिपादनायेति, इदानीं "विवेकख्यातिरविप्लवा हानोपाय" इति "तस्य हेतुरविद्ये"ति चागामिसूत्रद्वयार्थोऽनेनैव सूत्रेणोपपादित इत्येतत्क्रमेण प्रतिपादयति–दर्शनकार्येत्यादिना । कृतकृत्यस्य प्रयोजनाभावेनाव-

**इन्धीति अदर्शनं संयोगनिमित्तमुक्तं नात्र दर्शनं मोक्षकारणम्, अदर्शनाभावादेव बन्धाभावः स मोक्ष इति, दर्शनस्य भावे बन्धकारणस्यादर्शनस्य नाश इत्यतो दर्शनज्ञानं कैवल्यकारणमुक्तम्, किञ्चेदमदर्शनं नाम ? किं गुणा-**

भास्वती।

( १ ) किं गुणानामधिकारः कार्यारम्भणसामर्थ्यमदर्शनम् ?, नेदमदर्शनस्य सम्यग् लक्षणम्, यदा गुणकार्यं विद्यते तदाऽदर्शनमपि विद्यते, एतावन्मात्रमत्र याथार्थ्यम्, नेदमदर्शनं सम्यग् लक्षयति, 'यावद्दाहस्तावज्ज्वर' इत्युक्तिर्यथा न सम्यग् ज्वरलक्षणं तद्वद्,

( २ ) आहोस्विदिति द्वितीयं विकल्पमाह—दृशिरूपस्य स्वामिनो यो दर्शितविषयस्य = दर्शितः शब्दादिरूपो विवेकरूपश्च विषयो येन चित्तेन तादृशस्य प्रधानचित्तस्यापवर्गरूपस्यानुत्पादः, विवेकस्यानुत्पाद एवादर्शनमित्यर्थः, तद्धि स्वस्मिंश्चित्ते भोगापवर्गरूपं दृश्ये विद्यमानेऽपि न दर्शनं नोपलब्धिरपवर्गस्येत्यर्थः, इदमपि न सम्यग् लक्षणम्, यथा—"स्वास्थ्यस्याभाव एव ज्वरः" इति ज्वरलक्षणं न सम्यक् समीचीनम्,

( ३ ) किमिति। गुणानामर्थवत्ताऽदर्शनमिति तृतीयो विकल्पः, अत्र यद्दर्शनस्यानागतरूपेणावस्थानं स्वस्य कारणे त्रैगुण्ये तदेवादर्शनम्, इदमपि न सम्यग् लक्षणमदर्शनस्य, गुणानामर्थवत्त्वं तथा दर्शनञ्चाविनाभावीति वाक्यं यथाऽर्थमपि न तदुल्लेखमात्रमेव सम्यग्

तत्त्ववैशारदी

इति। अदर्शनम् = अविद्या संयोगनिमित्तमुक्तम्, उक्तमर्थं स्पष्टयति—"नात्र इति, ननु दर्शनमदर्शनं विरोधि विनिवर्त्तयतु, बन्धस्य कुतो निवृत्तिरित्यत आह—"दर्शनस्य" इति। बुद्ध्यादिविविक्तस्यात्मनः स्वरूपावस्थानं मोक्ष उक्तो, न तस्य साधनं दर्शनमपि त्वदर्शननिवृत्तिरित्यर्थः, असाधारणं संयोगे हेतुमदर्शनविशेषं ग्रहीतुमदर्शनमात्रं विकल्पयति "कि-

पातञ्जलरहस्यम्।

निवर्त्तते दग्धपटस्येव प्रावरणायासमर्थता, भाविनावनागतावस्थौ, अव्यपदेश्यतया = अना-

वार्त्तिकम्।

स्थानासंभवेन दर्शनरूपकार्यावसानः संयोग इत्यतो दर्शनं द्रष्टृस्वरूपोपलब्धिर्वियोगकारणमर्थादनेन सूत्रेणोक्तमुपपादितं तथा दर्शनमदर्शनस्य प्रतिद्वन्द्वि विरोधीत्यतोऽदर्शनं संयोगहेतुरित्यप्यर्थादुक्तमुपपादितम्, दर्शनादर्शनयोर्विरोधेन विरुद्धयोरेव वियोगसंयोगयोस्तदुभयकार्यत्वौचित्यादित्यर्थः, ननु अदर्शनं संयोगकारणं तर्हि अदर्शनाभावादेव संयोगविनिवृत्त्यात्मको मोक्षो भविष्यति कथं दर्शनमपि मोक्षहेतुरुच्यते इत्याशङ्कायामाह--नात्र दर्शनमिति। अस्मच्छास्त्रे दर्शनं तत्त्वज्ञानं न मोक्षकारणं गौरवात् विराधादिभिर्व्यवधानेन मोक्षाव्यवहितप्राक्काले ज्ञाने नियमासंभवात् किं तु अदर्शनस्य वक्ष्यमाणरूपस्याभावादेव द्रष्टृदृश्यसंयोगाभावः स एव मोक्ष इत्यर्थः, एतेन मोक्षस्यानिमित्तिकतया स्वाभाविकत्वरूपं नित्यत्वं लब्धम्, नन्वेवं विवेकख्यातिरविप्लवा हानोपाय इत्यग्रिमसूत्रविरोधो दर्शनं वियोगस्य कारणमिति स्वोक्तिविरोधश्च तत्राह-दर्शनस्य भाव इति। सुगमम्, उक्तं शास्त्रे, तथा च तत्त्वज्ञानं मोक्षे प्रयोजकमात्रमिति, उत्तरसूत्रेणासाधारणं संयोगहेतुमदर्शनमवधारयितुमुक्तादर्शनं विकल्प्य पृच्छति-किं चेदमिति। किं पुनः संयोगकारणत्वेनोक्तमदर्शनमित्यर्थः, नामेति वाक्यालङ्कारे, यद्यपि संयोगो दर्शनकारणमितिसूत्रणाद्दर्शनस्यानुत्पाद एव संयोगहेतुतयाऽत्र प्रसक्तो नान्यः, तथाऽपि तत्समनियततया अन्येषामपि संशयकोटित्वं बोध्यम्, तत्र प्रथमो विकल्पः किं गुणानामिति। गुणानां सत्त्वादीनाम् अधिकारः कार्यारम्भणसामर्थ्यम्, सामान्यतया कार्यविशेषजननशक्तिरित्यर्थः, ततोऽपि हि संसारहेतुसंयोगविशेषो जायत इति

नामधिकारः १ आहो स्विद् दृशिरूपस्य स्वामिनो दर्शितविषयस्य प्रधानचित्तस्यानुत्पादः, स्वस्मिन् दृश्ये विद्यमाने दर्शनाभावः २ किमर्थवत्ता गुणानाम् ३ अथाविद्या स्वचित्तेन सह निरुद्धा स्वचित्तस्योत्पत्तिबीजम् ४

भास्वती ।

लक्षणम्, यद् व्यापकं तद्रूपमित्यत्र व्याप्ते रूपस्य चाविनाभावित्वेऽपि न तत्कथनादेव रूपं लक्षितं भवेदिति,

( ४ ) अथेति । अविद्या प्रतिक्षणं प्रलये च स्वचित्तेन = स्वाधारभूतचित्तस्य प्रत्ययेन सह निरुद्धा = संस्काररूपेण स्थिता स्वचित्तस्य साऽविद्या प्रत्ययस्योत्पत्तिर्बीजमिति चतुर्थोविकल्प एव समीचीनः, सनिमित्तस्य संयोगस्य च सम्यगवधारणसमर्थः,

( ५ ) पञ्चमं विकल्पमाह—किमिति । स्थितिसंस्कारक्षये या गतिसंस्कारस्याभिव्यक्तिः, यस्यां सत्यां परिणामप्रवाहः प्रवर्त्ततेऽदर्शनञ्च दृश्यते तदेवादर्शनम्, अत्रेदं शास्त्रवचनम्—उदाहरन्त्येतद्वादिनः प्रधानमित्यादि, प्रधीयते जन्यते महदादिविकारसमूहोऽनेनेदम्" इति । पर्य्युदासं गृहीत्वाऽऽह—"किं गुणानामधिकार" इति । अधिकारः = कार्य्यारम्भणसामर्थ्यं, तते हि संयोगः संसारहेतुरुपजायते, प्रसज्यप्रतिषेधं गृहीत्वा द्वितीयं विकल्पमाह—"अहोस्विद्" इति । दर्शिनो विषयः शब्दादिः सत्त्वपुरुषान्यता च येन चित्तेन तस्य तद्विषयस्यानुत्पादः, एतदेव स्फोरयति–'स्वस्मिन्" इति । दृश्ये = शब्दादौ सत्त्वपुरुषान्यतायां चेति, तावदेव प्रधानं विचेष्टते न यावद् द्विविधदर्शनमभिनिर्वर्त्तयति, निष्पादितोभयदर्शनं तु विनिवर्त्तत इति, पर्य्युदास एव तृतीयं विकल्पमाह—"किमर्थवत्ता गुणानाम्" इति । सत्कार्य्यवादसिद्धौ हि भाविनावपि भोगापवर्गावव्यपदेश्यतया स्त इत्यर्थः, पर्य्युदास एव चतुर्थं विकल्पमाह—"अथाविद्या" इति । प्रतिसर्गकाले स्वचित्तेन सह निरुद्धा = प्रधा-

तत्त्ववैशारदी ।

पातञ्जलरहस्यम् :

गततया, चतुर्थे विकल्पे वासनैव दर्शनमित्याह—चतुर्थमिति ।

"भावान्तरमभावो हि कया चित्तु व्यपेक्षया"

इतिन्यायात्, प्रतिसर्गकाले प्रलये बीजाङ्कुरन्यायेनाह–स्वं = चित्तोत्पत्तिबीजमिति, तदन्यत्वं नञर्थ इत्याह–अन्येति । सर्वदा सत्त्वं सत्त्वतया रजो रजस्तया तमस्तमस्तयेति साम्यावस्थोक्ता स्थितिः संस्कारः तस्य क्षये विमर्दे गतिः संस्कारोन्मुखत्वं यथा दुग्धस्य मधुररसरूपान भिभवेऽपि दधनि रूपरसान्तरत्वमित्यर्थः, तत्र मतान्तरमाह–यत्रेदमिति । प्रधानं यौगिकं प्रधीयते ऽस्मिन् विश्वविकारः, विश्वविकारहेतुत्वात् स्थित्यैव वर्तमानं न

वार्त्तिकम् ।

द्वितीयं विकल्पं परित्यज्य सर्वविकल्पेषु बन्धकत्वगुणयोगेनादर्शनशब्दो गौणः, द्वितीयं विकल्पमाह—आहोस्विदिति । अदर्शनमित्यत्र दर्शनशब्दस्य करणसाधनत्वप्रतिपादनाय दृशिरूपस्य स्वामिनो दर्शितविषयस्येति चित्तविशेषणं दृशिस्वरूपाय स्वामिने दर्शितो विषयो येन तस्येत्यर्थः, उक्तमेव विवृणोति—स्वस्मिन्निति । स्वस्मिंश्चित्ते पुरुषार्थरूपेण दृश्ये शब्दादिवृत्तौ सत्त्वपुरुषान्यतावृत्तौ च सति यो दर्शनाभावश्चित्तवृत्त्यभाव इत्यर्थः, मोक्षकालीनं दर्शनाभावं व्यावर्त्तयितुं सत्यन्तम्, संयोगाहेतुतया तु ताहशमदर्शनं नात्र विचारणीयं चित्ते हि पुरुषार्थसत्त्वाश्रमेवादर्शनं संयोगहेतुर्भवति इति भावः, व्यर्थतया द्वितीयविकल्पस्य विशेष्यभागपरित्यागमात्रेण तृतीयं विकल्पमाह—किमर्थवत्तेति । सत्कार्यसिद्धेर्भाविभोगापवर्गयोरव्यपदेश्ययोः स्वकारणेषु गुणेषु अवस्थानमित्यर्थः, चतुर्थं विकल्पमाह—अथाविद्येति । पञ्चमी अविद्या प्रलयकाले स्वचित्तेन सह गुणेषु लीना वासनारूपेण स्वाश्रयचित्तस्योत्पत्ति-

किं स्थितिसंस्कारक्षये गतिसंस्काराभिव्यक्तिः, यत्रेदमुक्तं—"प्रधानं स्थित्यैव वर्त्तमानं विकाराकरणादप्रधानं स्यात्, तथा गत्यैव वर्त्तमानं विकारनित्यत्वादप्रधानं स्यात्, उभयथा चास्य प्रवृत्तिः प्रधानव्यवहारं लभते नान्यथा, कारणान्तरेष्वपि कल्पितेष्वेष समानश्चर्चः"

भास्वती।

नेति प्रधानम्, प्रधानं चेत् स्थित्या वर्त्तमानमव्यक्तरूपेणावस्थानस्वभावकं स्याद्=अभविष्यत्, तदा विकाराकरणादप्रधानं स्यान्मूलकारणं नाभविष्यत्, तथा गत्यैव वर्त्तमानं विकारावस्थायां यदैव वर्त्तमानस्वभावकं चेदभविष्यत्तदा विकारनित्यत्वादप्रधानमभविष्यत, तस्मादुभयथा=स्थित्या गत्या चेत्यर्थः, प्रधानस्य प्रवृत्तिस्तत्तश्च प्रधानव्यवहारं मूलकारणत्वव्यवहारं लभते नान्यथा, अन्यद् यद् यद् वस्तु कारणरूपेण कल्पितं भवति, तत्र तत्र एष समानश्चर्चः=विचार इति, अस्मिन् विकल्पे मूलकारणस्य स्वभावमात्रमेवोक्तं न च तन्मात्रकथनं व्यवहितकार्यस्य संयोगस्य स्वरूपं लक्षयेदिति, यथा विकारशीलाया मृत्तिकायाः परिणामविशेषो घट इति, न चैतद् घटद्रव्यस्य सम्यग् विवरणम्,

तत्त्ववैशारदी।

नसाम्यमागता वासनारूपेण, स्वं चित्तोत्पत्तिबीजम् तेन दर्शनादन्याऽविद्यावासनैवादर्शनमुक्ता, पर्य्युदास एव पञ्चमं विकल्पमाह"—किंस्थितीति" इति। स्थितिसंस्कारस्य=प्रधानवर्त्तिनः साम्यपरिणामपरम्परावाहिनः क्षये, गतिः=महदादिविकारारम्भः, तद्धेतुः संस्कारः प्रधानस्य गतिसंस्कारस्तस्याभिव्यक्तिः=कार्य्योन्मुखत्वम्, तदुभयसंस्कारसद्भावे मतान्तरानुमतिमाह—"यत्रेदमुक्तम्" इति—ऐकान्तिकत्वं व्यासेधद्भिः, प्रधीयते=जन्यते विकारजातमनेनेति प्रधानं, तच्चेत्स्थित्यैव वर्त्तेत न कदा चिद् गत्या ततो विकाराकरणान्न प्रधीयते तेन किञ्चिदित्यप्रधानं स्याद्, अथ गत्यैव वर्त्तेत नाकदा चिदपि स्थित्या तत्राह—

पातञ्जलरहस्यम्।

विकरोति, प्रकरोति इति प्रधानं प्रकृतिरिति व्युत्पत्त्यङ्गीकारादित्याह-प्रधानमिति। गत्यैव चेत् सर्वदा कुर्वदेव वर्त्तते तथा च साम्यावस्था न गतिरित्याह-न कदा चिदिति। विकारोविनश्येन्न प्रलयः स्यादित्यनैकान्तिकः पक्षः;

"यत्रावयोः समो दोषः परिहारोऽपि वा समः।
नैकस्तत्रानुयोक्तव्यस्तादृगर्थविचारणे"—

वार्त्तिकम्।

बीजमित्यर्थः, तथा चाविद्यावासनैवादर्शनमिति, अयमेव पक्षः सिद्धान्तो भविष्यति, पञ्चमं विकल्पमाह—किं स्थितीति। प्रधाननिष्ठस्यासाम्यपरिणामहेतोः स्थितिसंस्कारस्य क्षये सति गतिसंस्कारस्य महदादिरूपविसदृशपरिणामहेतोरभिव्यक्तिरित्यर्थः, तयैव हि प्रकृतिक्षोभद्वारा पुंप्रकृत्योः संयोगो जन्यते इति, तदुभयसंस्कारसद्भावे मतान्तरं प्रमाणयति—यत्रेदमिति। स्थित्यै गत्यै इति तादर्थ्ये चतुर्थी, एवकारौ च तयोः पश्चादध्याहार्यो, स्थित्यैवेति पाठे तु विशेषणे तृतीया इति, तथा च प्रधानं चेत् स्थितिमात्रेण वर्त्तेत तदा विकाराजनकत्वान्न प्रधानं स्यात् मूलकारणत्वं हि प्रधानत्वमिति, तथा गतिमात्रेण चेद्वर्त्तेत तदा महदादीनामपि प्रकृतिवदेव नित्यत्वापत्त्या किं कस्य मूलं स्यादिति न व्यवहारः संभवत्यत उभयथा स्थितिगतिभ्यामेव प्रधानस्यावस्थानं प्रधानव्यवहारं लभते कार्यतया न पुनरन्यथेत्यर्थः, न केवलं मूलकारण एवायं स्थितिगत्योः कालभेदेन निर्णायको विचारः किं तु कल्पितेषु विकाररूपेषु कारणभेदेषु महदादिष्वेव चर्चो विचारः समान इति प्रसङ्गादवधारयति-नास्तिकानां-

५ दर्शनशक्तिरेवादर्शनमित्येके "प्रधानस्यात्मख्यापनार्था प्रवृत्तिः" इति

भास्वती।

( ६ ) षष्ठं विकल्पमाह—दर्शनेति। एके वदन्ति—दर्शनशक्तिरेवादर्शनम्, ते हि प्रधानस्यात्मख्यापनार्था प्रवृत्तिरित्यनया श्रुत्या स्वपक्षं प्रतिपुष्णन्ति, श्रुतावप्युक्तं—प्रधानस्यात्मख्यापनार्था प्रवृत्तिरिति, ख्यापनं = दर्शनं, तदर्था चेददर्शनरूपा प्रवृत्तिस्तदा

तत्त्ववैशारदी।

"तथा गत्यैव" इति। क्व चित्पाठः स्थित्यै गत्यै—इति चतुर्थी, एवकारश्च द्रष्टव्यः, स्थित्यै चेन्न वर्त्तेत न क्व चिद्विकारो विनश्येत्, तथा च भावस्य सतोऽविनाशिनो नोत्पत्तिरपीति विकारत्वादेव च्यवेत, एवञ्च न प्रधीयतेऽत्र किञ्चिदित्यप्रधानं स्यात्, तदुभयथा स्थित्या गत्या चास्य प्रवृत्तिः प्रधानव्यवहारं लभते, नान्यथा = एकान्ताभ्युपगमे, न केवलं प्रधाने कारणान्तरेष्वपि = परब्रह्मतन्मायापरमाण्वादिषु कल्पितेषु समानः चर्चा = विचारः, तान्यपि हि स्थित्यैव वर्त्तमानानि विकाराकरणादकारणानि स्युः गत्यैव वर्त्तमानानि विकारनित्यत्वादकारणानि स्युरिति च, पर्य्युदास एव च षष्ठं कल्पमाह— "दर्शनशक्तिरेव" इति। यथा प्रजापतिव्रते "नेक्षेतोद्यन्तमादित्यम्" इति अनीक्षणप्रत्यासन्नः सङ्कल्पो गृह्यते। एवमिहापि दर्शननिषेधे तत्प्रत्यासन्ना तन्मूला शक्तिरुच्यते, सा च दर्शनं भोगादिलक्षणं प्रसोतु द्रष्टारं दर्शने योजयतीति, अत्रैव श्रुतिमाह— 'प्रधानस्य' इति। स्यादेतत्-प्रधानमात्मख्यापनार्थं प्रवर्त्तत इति श्रुतिराह—न त्वात्मदर्शनशक्तिः प्रवर्त्तत इत्यत आह—"सर्वबोध्यबोधसमर्थं" इति। प्राक् प्रवृत्तेः प्रधानस्य नात्म-

पातञ्जलरहस्यम्।

इतिन्यायेनाह-ब्रह्मवादे मायावादे परमाणुवादेऽपीति—परेति। ब्रह्म नित्यं करोति चेन्मुक्तिप्रलयानुपपत्तिः, न करोति चेत् सृष्ट्याद्यनुपपत्तिरेवं मायावादेऽपि, परमाणुवादे तु ते नित्याः संयोगसहकृताः सदा कुर्वन्ति चेत् प्रलयाभावो न चेत् सृष्ट्यभावो नियमानुपपत्तेरव्यवस्थेति, षष्ठं पक्षमाह—दर्शनशक्तिरिति। ज्ञानेच्छाकृतीनां परस्परान्वयाद् अज्ञातस्य कृत्यसाध्यत्वेनेच्छैव लभ्यत इत्याह—संकल्प इति। ब्रह्मचारिव्रतस्यानुष्ठेयत्वेनाभावापर्यवसानादिति भावः, असुरामित्रादिवद्भावकार्योपादानत्वाद्भावभूतेत्याह—सा चेति। जामातरमिव कन्येत्याह-द्रष्टारमिति। सोऽकामयत बहु स्यामितिवत् प्रधानप्रवृत्तिरात्मार्थेत्याह-प्रधानस्येति। पश्यन्वैतन्न पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येद् इति श्रुतिमाश्रित्याह-सर्वबोध्येति। ऐक्यनिवृत्त्यर्था प्रवृत्ति-

वार्त्तिकम्।

कुर्वद्रूपतावादमपाकर्तुं कारणान्तरेष्वपीति, स च चर्चो यथा मृदादिकं यदि स्थित्यैव निवृत्त्यैव वर्त्तेत तर्हि कदाऽपि घटानुत्पादनेन कारणत्वहानिः, यदि गत्यैव प्रवृत्त्यैव वर्त्तेत तदा मृद्धटयोर्द्वयोरेव तुल्यकालतया कार्यकारणव्यवस्थाऽनुपपत्तिरतो विकाररूपकारणमपि स्थितिगत्युभयवदेवेति, षष्ठविकल्पमाह—दर्शनशक्तिरेवेति। पुरुषायात्मानं दर्शयितुं या क्षमता सा दर्शनशक्तिः सैव चादर्शनमित्यर्थः, इयं च शक्तिर्विवेकख्यात्यनुत्पादरूपा संयोगहेतुस्तथा चोक्तं-सांख्यकारिकया—

'दृष्टाऽहमित्युपरमत्यन्येति,

"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।

पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति,

तृतीयविकल्पस्थस्य शब्दादिवृत्त्यनुत्पादस्य त्यागादस्य ततो भेदः, प्रधानस्य दर्शनशक्तौ श्रुतिं प्रमाणयति—प्रधानस्येति। कालुषशाखास्थेयं श्रुतिः, सप्तमं विकल्पमाह—सर्वबो-

**श्रुतेः, सर्वबोध्यबोधसमर्थः प्राक् प्रवृत्तेः पुरुषो न पश्यति, सर्वकार्य्यक-रणसमर्थं दृश्यं तदा न दृश्यत इति ६ उभयस्याप्यदर्शनं धर्म इत्येके, तत्रेदं-**

भास्वती।

प्रवृत्तेः शक्तिरूपावस्थैवादर्शनमित्येषां नयः, अस्मिंल्लक्षणेऽपि पूर्वदोषप्रसङ्गः, आतपाज्जातं-शस्यमित्युक्तिर्न तण्डुलस्य सम्यग्बोधाय भवति, अदर्शनं चित्तधर्मस्तस्य व्यवहि-तमूलकारणस्य प्रधानस्य स्वभावकथनमेव नानवद्यं तल्लक्षणम्,

( ७ ) सप्तमं विकल्पमाह—उभयस्येति। उभयस्य द्रष्टुर्दृश्यस्य च धर्मोऽदर्शन-मित्येक आतिष्ठन्ते, तत्र = तन्मते, इदम् = अदर्शनं, तैरेवं सङ्गतं क्रियते, तद् यथा—दर्शनं = ज्ञानं द्रष्टृदृश्यसापेक्षं तस्मात्तद्दर्शनं तद्भेदोऽदर्शनञ्चापि तदुभयस्य धर्म इति, द्रष्टृ-दृश्यापेक्षमदर्शनमित्युक्तिर्यथार्थाऽपि न तु तादृशा दृशाऽदर्शनं व्याकर्त्तव्यम्,

तत्त्ववैशारदी।

ख्यापनमात्रं प्रवृत्तौ प्रयोजकमसामर्थ्ये तदयोगात्, तस्मात्सामर्थ्यं प्रवृत्तेः प्रयोजकमिति श्रुत्याऽर्थादुक्तमित्यर्थः, दर्शनशक्तिः प्रधानाश्रयेत्यङ्गीकृत्य षष्ठः कल्पः, इमामेवोभयाश्रया-मास्थाय सप्तमं कल्पमाह—"उभयस्याप्यदर्शनम्" इति। उभयस्य = पुरुषस्य च दृश्यस्य चादर्शनं = दर्शनशक्तिर्धर्म इत्येके, स्यादेतद्—मृष्यामहे दृश्यस्येति, तस्य सर्वशक्त्याश्रय-त्वात्, न द्रष्टुरिति पुनर्मृष्यामः, न हि तदाधारा ज्ञानशक्तिः, तत्र ज्ञानस्यासमवायाद्, अन्यथा परिणामापत्तिरित्यत आह—"तत्रेदम्" इति, भवतु दृश्यात्मकं, तथाऽपि तस्य जड-त्वेन तद्गतशक्तिकार्य्यं दर्शनमपि जडमिति न शक्यं तद्धर्मत्वेन विज्ञातुं, जडस्य स्वयमप्र-

पातञ्जलरहस्यम्।

रित्युक्तं तत्प्रवृत्त्यनुसारेण, दृश्यत इति। तस्मात्सामर्थ्यमिति। समर्थस्य क्षेपायोगात् सर्वदा सृष्टेरनुपरमप्रसङ्ग इति चेन्न-प्रलयकालप्रतिबन्धादिति भावः, इमां = शक्तिम्, उभये = पुंप्र-कृती, तदन्यत्वमादायाह-अदर्शनं दर्शनशक्तिर्धर्म इति। अनधीनत्वसामान्यादित्यर्थः, परिणा-मित्वात् प्रकृतेर्धर्मवत्त्वेऽपि पुंसोऽपरिणामित्यात् कुतः तस्य धर्मवत्तेति शङ्कते-स्यादेतदिति। औपाधिकतादात्म्यसम्बन्धमादाय समाधत्ते—दृश्यस्येति। यथाऽस्मन्मते भूतलस्वरू-पोऽप्यभावः प्रतियोग्यपेक्षया धर्मत्वेन भासते घटाभाववद् भूतलमिति यथा बुद्धेः सवेदी पुरुष-इत्युक्त्याऽदर्शनं दृश्यशक्तिः पुङ्गतचितिरूपप्रत्ययापेक्षया धर्मत्वेन भासते तथाऽदर्शनं दृक्-शक्तिः दृश्यप्रत्ययापेक्षया दृश्यभावकतया धर्मत्वेन पुरुषस्य चैतन्यमिति योजना, तदन्यत्वं-नञर्थोऽत्रेति, सङ्गतिमाह-दर्शनमिति। अस्य पुंसो यज् ज्ञानं तस्य दृश्यविषयकत्वाद् दृश्य-

वार्त्तिकम्।

भ्येत्यादिनाऽवभासत इत्यन्तेन, सर्वबोधे समर्थोऽपि पुरुषः प्रधानप्रवृत्तेः प्राक् न पश्यति इत्ये-कमदर्शनं पुरुषनिष्ठमपरं च सर्वकार्याणां करण उत्पादने समर्थं स्वरूपयोग्यमपि दृश्यं प्रधानं-तदा प्राक् प्रधानप्रवृत्तेः पुरुषेण न दृश्यत इति दृश्यनिष्ठमदर्शनमित्येवमुभयस्याप्यदर्शनं धर्म-इत्येक आहुरित्यर्थः, एतदेवात्रादर्शनमिति शेषः, ननु जडानामदर्शनात्मकत्वात् कथं तेषामद-र्शनं धर्मः स्याद् अभावस्याधिकरणस्वरूपत्वाद् अव्यभिचारेण लाघवादेकत्वसिद्धेश्च, कथं वा दृशिस्वरूपस्य पुरुषस्यादर्शनं घटते प्रकाशरूपस्याप्रकाशरूपत्वासंभवाद् इत्याशङ्क्य समा-धत्ते—तत्रेदमिति। तत्रादर्शनद्वयमध्ये इदमेकमदर्शनं दृश्यस्वरूपभूतमपि दृश्यधर्मत्वेन विशिष्टं भवति तत्र हेतुः पुरुषप्रत्ययापेक्षमिति, पुरुषप्रत्ययं बोधमपेक्ष्य तद्विषयतयेति यावत्, तथेति। तथा पुरुषस्य निर्धर्मत्वान् सदा प्रकाशरूपत्वाच्च चानात्मभूतमप्यदर्शनं पुरुषधर्मत्वे-नैव लौकिकबुद्ध्याऽवभासते, तत्र हेतुः दृश्यप्रत्ययापेक्षमिति, दृश्यप्रत्ययमपेक्ष्य दृश्यगोचरप्रत्य-

दृश्यस्य स्वात्मभूतपि पुरुषप्रत्ययापेक्षं दर्शनं दृश्यधर्मत्वेन भवति, तथा पुरुषस्यानात्मभूतमपि दृश्यप्रत्ययापेक्षं पुरुषधर्मत्वेनेव दर्शनमवभासते द-र्शनज्ञानमेवादर्शनमिति केचिदभिदधति इत्येते शास्त्रगताः (१) विकल्पाः, तत्र

भास्वती ।

( ८ ) अष्टमं विकल्पमाह—दर्शनेति । केचिद्वदन्ति—विवेकव्यतिरिक्तं यद्दर्शनज्ञानं-शब्दादिरूपं तदेवादर्शनम्, ज्ञानकाले द्रष्टृदृश्ययोः संयोगस्यावश्यम्भावित्वेऽपीन्द्रियादा-वभिमानरूपस्य विपर्ययस्य फलमेव ज्ञानं तस्माच्च ज्ञानं संयोगहेतोरदर्शनस्य स्वरूपं भवितुमर्हतीति,

तत्त्ववैशारदी ।

काशकत्वाद्, अतो दृशेरात्मनः प्रत्ययं = चैतन्यच्छायापत्तिमपेक्ष्य दर्शनं दृश्यधर्मत्वेन भव-ति = विज्ञायते, विषयेण विषयिण उपलक्षणात्, नन्वेतावताऽपि दृश्यधर्मत्वमस्य ज्ञानस्य भवति, न तु पुरुषधर्मत्वमपीत्यत आह—"तथा पुरुषस्य" इति । सत्यं पुरुषस्यानात्मभूत-मेव, तथाऽपि दृश्यबुद्धिसत्त्वस्य यः प्रत्ययः = चैतन्यच्छायाऽऽपत्तिस्तमपेक्ष्य पुरुषधर्मत्वेनेव न तु पुरुषधर्मत्वेन. एतदुक्तं भवति—चैतन्यबिम्बोद्ग्राहितया बुद्धिचैतन्ययोरभेदाद् बुद्धिध-र्माश्चैतन्यधर्मा इव चकासतीति, अष्टमं कल्पमाह—"दर्शनज्ञानम्" इति । ज्ञानमेव शब्दा-दीनामदर्शनं, न तु सत्त्वपुरुषान्यताया इति केचिद्, यथा चक्षू रूपे प्रमाणमपि रसादाव-प्रमाणमुच्यते,

पातञ्जलरहस्यम् ।

धर्मतैवोचिता न तु पुंधर्मता तत् कथं पुंधर्मतोच्यत इति शङ्कते—नन्वेतावतेति । औपचारिक-त्वेन समाधत्ते—सत्यमित्यादिना, ।जडत्वाद् बुद्धिसत्वस्य चितिच्छायापत्त्या यद्भानं तत्पु-

वार्त्तिकम् ।

याभावेनेति यावत्, अष्टमविकल्पमाह—दर्शनज्ञानमिति । ज्ञानं वासनारूपं तस्यापि दृश्य-संयोगहेतुत्वाद् न तु भोगापवर्गरूपमनागतावस्थं दर्शनमत्रोक्तम् अर्थवत्तया पौनरुक्त्यादिति, उपसंहरति—इत्येत इति । शास्त्रेष्वेतेऽज्ञानभेदास्तान्त्रिकैरुच्यन्त इत्यर्थः, संयोगभेदेन सर्वेषा-मेवादर्शनानां हेतुत्वं सिद्धान्तयन्नेव संयोगविशेषहेत्वदर्शनविशेषपरतयोत्तरसूत्रमवतारयति—तत्र विकल्पेति । तत्रादर्शने, विकल्पबहुत्वं भेदबाहुल्यमेतत्पुरुषसामान्यस्य गुणसामान्यस्य च

---

(१) विकल्पा इति । अयं भावः—अदर्शनपदार्थोऽष्टधा विकल्पः सुसंभावनः, तत्र द्वितीयस्याभाव-पर्यवसायितया प्रसज्यप्रतिषेधाश्रयित्वं परेषां भावविश्रान्ततया पर्युदासावलम्बित्वम्,

प्रसज्यप्रतिषेधपर्युदासस्वरूपं त्वधस्ताद् निरूपितचरम्, विकल्पाष्टके च तुरीयस्यैव सिद्धान्तितत्वेन शिष्टानां पूर्वपक्षीयता, निदानं चेह पुरुषार्थफलकसयोगस्याखिलपुरुषसाधारण्यमेव, तथा हि—

प्रथमेऽदर्शन संसारहेतुसंयोगजनककार्यारम्भणक्षमत्वरूपाविकारात्मता,

द्वितीये तु शब्दादिसत्त्वपुरुषान्यत्वरूपद्विविधदृश्यकर्मकदर्शनहेतुचित्ताविर्भूत्यभावः,

तृतीये च सत्कार्यवादनयेऽनागतयोरपि भोगापवर्गयोः सत्तायाः स्वरूपयोग्यता,

तुरीयेऽविद्यैव प्रलये स्वधर्मिचित्तेन समं प्रधाने विलीय तत्साम्यमुपेता वासनाऽऽत्मना स्थिता सृष्टौ तादृशचित्तस्योद्भाविका,

पञ्चमे प्रधानस्य स्थितिगत्योरेकतरनैयत्ये विकृतीनामनुदयनित्यत्वयोरापत्त्या कार्यानुरोधात् स्वभा-वद्वैविध्येऽवश्यमुपगन्तव्ये सदृशपरिणामधाराऽऽत्मनः प्रधानगस्य स्थितिसंस्कारस्य तिरोभावे विकारा-रम्भरूपगतिहेतुसंस्कारस्य कार्यप्रवणता,

विकल्पबहुत्वमेतत्सर्वपुरुषाणां गुणसंयोगे साधारणविषयम् ॥ २३ ॥

भास्वती ।

एषु विकल्पेषु द्वितीय एवाभावमात्रस्तस्मात् स एव प्रसज्यप्रतिषेधं गृहीत्वा व्याकृतः, इतर तु पर्युदासं गृहीत्वेति विवेच्यम्, इत्येते इति । एते साङ्ख्यशास्त्रगता विकल्पाः = मतभेदाः, तत्र = अदर्शनविषये, सर्वपुरुषाणां गुणसंयोग एतद् विकल्पबहुत्वं साधारणविषयमित्यन्वयः, एतदुक्तं भवति-पुरुषः सह गुणसंयोग इति यथाऽर्थं सामान्यविषयं प्रकल्प्य सर्वेषु विकल्पेषु, अदर्शनमभिहितम्, न च तेनैव हेयहेतुदर्शनं सम्यग् निरूपितं स्याद् यादृशान्निरूपणाद् दुःखहानापायो निरूपितो भवेत्, तच्च प्रत्येकं पुरुषेण सह तद्बुद्धेः संयोगस्य हेतुनिरूपणादेव साध्यम्, चतुर्थे विकल्पे तथैवादर्शनं लक्षितमिति २३

तत्त्ववैशारदी ।

एतदतो भवन्ति-सुखाद्याकारशब्दादिज्ञानान स्वसिद्ध्यनुगुणतया द्रष्टृदृश्यसंयोगमाक्षिपन्तीति, तदेवं विकल्प्य चतुर्थविकल्पं स्वीकर्तुमितरेषां विकल्पानां सांख्यशास्त्रगतानां सर्वपुरुषसाधारण्येन भोगवैचित्र्याभावप्रसङ्गेन दूषयति—"इत्येते शास्त्रगता' इति ॥ २३ ॥

पातञ्जलरहस्यम् ।

धर्मः स्वतोऽपरिणामित्वात् दूरदोषादाकाशे नीलिमेव नीलं नभ इति प्रतीतेः, एतदेव स्वहस्तयति-एतदुक्तं भवतीति, एतऽष्टौ ॥ २३ ॥

वार्त्तिकम् ।

पुरुषार्थहेतुसंयोगसामान्यं प्रति कारणतायां बोध्यम्, यस्तु प्रत्यक्चेतनस्य तत्तच्चेतनस्य स्वबुद्धिसंयोगो हेयहेतुः स्वस्वामीत्यादिप्रकृतसूत्रेणोक्तः तस्य हेतुरविद्या चतुर्थविकल्परूपमदर्शनमेवेति सूत्रेण सहान्वयः, प्रत्यक्चेतनस्येति पाठे स्वस्वबुद्ध्यनुगमशीलचेतनस्येत्यर्थः, अयं भावः—अविद्याक्षयोत्तरमपि जीवन्मुक्तस्य भोगार्थं विषयरूपेण परिणतैर्गुणैः सह संयोग उत्पद्यतेऽतो नाविद्या गुणपुरुषसंयोगसामान्ये हेतुः किं तु यथोक्ता गुणाधिकारादिरेव, स्वबुद्धिसंयोगस्तु जन्मापरनामाऽविद्यां विना न भवतीति बुद्धिपुरुषसंयोग एवासाधारण्येनाविद्याहेतुर्भवति स च बुद्धिः संयोगद्वारा द्रष्टृदृश्यसंयोगहेतुर्विद्योच्छेद्या च भवतीत्याशयेन सैवोत्तरसूत्रेण सूच्यते न गुणाधिकारादिः तस्य ज्ञानानुच्छेद्यत्वाद् एकस्य पुंसो मुक्तावपि पुरुषान्तरार्थं गुणाधिकारादितादवस्थ्याद् यदेव च पुरुषेणच्छेत्तुं शक्यते तदेव हेयनिदानमत्र प्रतिपादनीयम्; अन्यथा कालकर्मेश्वरादीनामपि हेयहेतुसंयोगकारणतया तेषामप्यत्र प्रतिपाद्यताऽऽपत्तेरिति ॥ २३ ॥

---

षष्ठेऽनुष्ठयत्वेन बाधिते प्रजापतिव्रते—

"नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदा चन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्"

इत्यादिवचनेनेक्षणाभावावगतावभावेऽनुष्ठेयत्वायोग्यत्वेनागत्याऽनीक्षणेनेदिक्षस्तत्संकल्पः यथा पर्यवस्यति तथाऽत्रापि दर्शनप्रतीपा प्रधानस्य स्वकर्मकदर्शनानुकूलता,

सप्तमे चैतन्यबिम्बवत्या बुद्धेश्चैतन्यतादात्म्येन प्रत्यायितश्चैतन्यधर्मायमाणो बुद्धिधर्मोऽतो दृश्यस्य स्वकर्मकं दर्शनं तथा पुरुषस्य स्वकर्तृकं च दर्शनमेव प्रकृतमदर्शनम्,

अष्टमे स्वपुरुषविवेकेतरवस्तुदर्शनमेवादर्शनत्वेनेह विवक्षितम्,

एवं च प्रातिस्विकपुमर्थवैलक्षण्यानुगुण्येन तुर्यस्यैवोपयोगितौचित्यमावहतीति तदन्ये सप्तापि पक्षा नोपादेया इति सक्षेपः ।

यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोगः—

## तस्य हेतुरविद्या ॥ २४ ॥

विपर्य्ययज्ञानवासनेत्यर्थः, विपर्य्ययज्ञानवासनावासिता न कार्य्यनि-

भास्वती ।

यस्त्विति । यस्तु प्रत्यक्चेतनस्य = प्रतीपमात्मविपरीतमनात्मभावमञ्चति विजानातीति प्रत्यङ् ,यद्वा-प्रति प्रतिबुद्धिमञ्चत्यनुपश्यतीति प्रत्यङ्, तद्रूपचेतनस्य प्रत्येकं पुरुषस्येत्यर्थः, स्वबुद्धिसंयोगस्तस्य हेतुरविद्या, अविद्याऽत्र विपर्ययज्ञानवासना = अतद्रूपख्यातिप्रवणचित्तप्रकृतिरूपा, तादृश्य एव वासना विपर्यस्तप्रत्ययस्य मूलहेतवस्ततस्ता एव स्वानुरूपान् प्रत्ययान् जनयेरन्, ततः प्रतिक्षणं बुद्धिपुरुषसंयोगः प्रवर्त्तते, यतो विपर्यस्तज्ञानवासनावासिता बुद्धिर्न पुरुषख्यातिरूपां कार्यनिष्ठां = कार्यावसानं प्राप्नुयात्,

तत्त्ववैशारदी ।

चतुर्थं विकल्पं निर्धारयितुं सूत्रमवतारयति—"यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोग"-इति । प्रति = प्रतीपम्, अञ्चति = प्राप्नोतीति प्रत्यङ्, असाधारणस्तु संयोग एकैकस्य पुरुषस्यैकैकया बुद्ध्या वैचित्र्यहेतुः, सूत्रं पठति—"तस्य हेतुरविद्या" इति, नन्वविद्या विपर्य्ययज्ञानं, तस्य भोगापवर्गयोरिव स्वबुद्धिसंयोगो हेतुः, असंयुक्तायां बु[द्धौ] तदनुत्पत्तेः, तत्कथमविद्या संयोगभेदस्य हेतुरित्यत आह—"विपर्य्ययज्ञानवासना" इति । सर्गान्तरीयाया अविद्यायाः स्वचित्तेन सह निरुद्धाया अपि प्रधानेऽस्ति वासना, तद्वासनावासितं च प्रधानं तत्तत्पुरुषसंयोगिनीं तादृशीमेव बुद्धिं सृजति, एवं पूर्वपूर्वसर्गेष्वित्यनादित्वाददोषः, अत एव प्रतिसर्गावस्थायां न पुरुषो मुच्यत इत्याह—"विपर्य्ययज्ञान" इति । यदा पुरुषख्याति-

पातञ्जलरहस्यम् ।

"तस्य हेतुरविद्या," तस्य बुद्धिचैतन्ययोर्यः संयोगः तद्धेतुः विपर्ययज्ञानसंस्कारसहिताऽविद्येति सूत्रार्थः, न स पुनरावर्त्तते न स पुनरावर्तत इति श्रुतिमाश्रित्याह-चरिताधिकारेति । सकार्याविद्याध्वंसो मोक्ष इति मतान्तरपरिशुद्धिमादायाह-भोगेति । प्रत्यये व्यभिचारादि-

वार्त्तिकम् ।

"तस्य हेतुरविद्या", तस्य द्रष्टृदृश्यसंयोगस्य बुद्धिपुरुषसंयोगद्वारा हेतुरविद्येत्यर्थः, भाष्यकारेण च सूत्रकारतात्पर्याभिप्रायेणैव तस्येत्यस्य बुद्धिसंयोगस्येत्यर्थ उक्तः; न तु साक्षात्तत्र्यद्रष्टृदृश्यसामान्यसंयोगस्यैव पूर्वसूत्रे प्रकृतत्वात्, बुद्धिसंयोगस्येति । अविद्या चात्रानात्मन्यात्मबुद्धिमात्रं तस्य बुद्धिसंयोगहेतुत्वाद् अनित्यादौ नित्यादिबुद्धिरूपाणामविद्यानां वक्ष्यमाणविवेकख्यातिनाश्यत्वानुपपत्तेश्च, सा चाविद्या बुद्धिसंयोगजन्यतया तदव्यवहितप्राक्काले न सम्भवतीत्यत आह—भाष्यकारो विपर्ययेति । सर्गान्तरीयाविद्यायाः स्वचित्तेन सह निरुद्धायाः प्रधाने या वासना स्थिता तया वासितं प्रधानं तत्पुरुषसंयोगिनीं तादृशीमेव बुद्धिं सृजतीत्यनादित्वान्न दोष, अविद्यावासनायां बुद्धिपुरुषसंयोगहेतुत्वे युक्तिमाह—विपर्ययेति । विपर्ययज्ञानवासनाबलात् पुरुषख्यातिरूपां कार्यनिष्ठां स्वकर्त्तव्यचरमावधिं न प्राप्नोति बुद्धिरतः स्वाधिकारतया पुनरावर्त्तते पुरुषेण संयुज्यते सा तु बुद्धिः पुरुषान्यताख्यातिपर्यन्ता सती कार्यसमाप्तिं प्राप्नोति परवैराग्योत्पादात्, ततश्च चरिताधिकारा निष्पादितकार्या निवृत्ताविद्या सती संयोगाख्यबन्धस्य कारणाभावाद् न पुनः पुरुषेण संयुज्यत इत्यर्थः, तथा चान्वयव्यतिरेकाभ्यां विपर्ययवासनाबुद्धिः पुरुषसंयोगहेतुरिति भावः, पुरुषख्यात्या चित्तस्य निवृत्तिरिति यदुक्तं तत्र नास्तिकाक्षेपं निराचिकीर्षुस्तं प्रदर्शयति—

ष्ठां पुरुषख्यातिं बुद्धिः प्राप्नोति साधिकारा पुनरावर्त्तते, सा तु पुरुषख्यातिपर्य्यवसाना कार्य्यनिष्ठां प्राप्नोति चरिताधिकारा निवृत्तादर्शना बन्धकारणाभावान्न पुनरावर्त्तते, अत्र कश्चित्-षण्डकोपाख्यानेनोद्घाटयति—मुग्धया भार्य्ययाऽभिधीयते षण्डकः, आर्य्यपुत्र! अपत्यवती मे भगिनी किमर्थं नाहमिति, स तामाह-मृतस्तेऽहमपत्यमुत्पादयिष्यामीति, तथेदं विद्यमानं ज्ञानं चित्तनिवृत्तिं न करोति विनष्टं करिष्यतीति का प्रत्याशा, तत्राचार्य्य-

भास्वती।

पुरुषख्यातौ सत्यां परवैराग्येण निरुद्धा बुद्धिर्न पुनरावर्त्तते, अत्रेति। कश्चिदुपहासक एतत् षण्डकोपाख्यानेनोद्घाटयति, सुगमम्, तत्रेति। आचार्यदेशीयः=आचार्यकल्पो वक्ति-बुद्धिनिवृत्तिः=ज्ञाननिवृत्तिरेव मोक्षो न च ज्ञानस्य विद्यमानतेत्यर्थः, यतोऽदर्शनाद्-बुद्धिप्रवृत्तिस्ततोऽदर्शनकारणाभावाद् अदर्शनरूपं कारणं तस्याभावाद् बुद्धिनिवृत्तिः, अदर्शनं बन्धकारणं=दृश्यसंयोगकारणं, तच्च दर्शनाद् विवेकाद् निवर्त्तते, यथाऽग्निः स्वाश्रयं दग्ध्वा स्वयमेव नश्यति तथा दर्शनमदर्शनं विनाश्य स्वयमेव निवर्त्तते, उपसंहरति—

तत्त्ववैशारदी।

कार्य्यनिष्ठां प्राप्ता तदा विपर्य्ययज्ञानवासनाया बन्धकारणस्याभावान्न पुनरावर्त्तत इत्याह-"सा तु" इति। अत्र कश्चित्=नास्तिकः कैवल्यं षण्डकोपाख्यानेनोपहसति—षण्डकोपाख्यानमाह—"मुग्धया" इति। किमर्थमित्यर्थशब्दो निमित्तं लक्षयति, प्रयोजनस्यापि निमित्तत्वात्, षण्डकोपाख्यानसाम्यमापादयति—"तथेदम्" इति। इदं विद्यमानं गुणपुरुषान्यताख्यातिज्ञानं चित्तनिवृत्तिं न करोति, परवैराग्येण ज्ञानप्रसादमात्रेण ससंस्कारं निरुद्धं विनष्टं करिष्यतीति का प्रत्याशा, यस्मिन् सत्येव यद् भवति तत्तस्य कार्य्यं न तु यस्मिन्नसतीति भावः, अत्रैकदेशिमतेन परिहारमाह—"तत्राचार्य्यदेशीय" इति। ईषदपरिसमाप्त आचार्य्य आचार्य्यदेशीयः, आचार्य्यस्तु वायुप्रोक्ते कृतलक्षणः—

"आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरते यस्मादाचार्य्यस्तेन चोच्यते" इति,

भोगविवेकख्यातिरूपपरिणतबुद्धिनिवृत्तिरेव मोक्षः, न च बुद्धिस्वरूपनिवृत्तिः, सा च

पातञ्जलरहस्यम्।

त्याह-न च बुद्धीति। सा तादृशी निवृत्तिः, विवेकख्यातिपर्यन्तं चित्तचेष्टितमिति दर्शयन्नाह-

वार्त्तिकम्।

अत्र कश्चिदिति। षण्डकोपाख्यानेन दृष्टान्तेनोद्घाटयति आक्षिपतीत्यर्थः नपुंसकाख्यानमेवाह—मुग्धयेत्यादिना-उत्पादयिष्यतीत्यन्तेन, सः=षण्डकः, तां=भार्याम्, विनष्टमिति। विनष्टंपरवैराग्येण निरुद्धं ज्ञानं चित्तनिवृत्तिरूपं मोक्षं करिष्यतीति नास्ति प्रत्याशेत्यर्थः, उपेक्षासूचनाय पूर्वाचार्यमुखेनात्र सिद्धान्तमाह—तत्रेति। ईषदसमाप्त आचार्य आचार्यदेशीयः, उपेक्षणीये प्रत्युत्तरदानमात्रेणाचार्यदेशीयत्वम्, आचार्यश्च वायौ प्रोक्तः—

"आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते"—इति,

नन्विति सम्बोधने, एतदुक्तं भवति—ज्ञानं न साक्षान्मोक्षहेतुरस्माभिरिष्यते किंत्वविद्याख्यादर्शननिवृत्तितत्कार्यनिरोधयोगद्वारा, तथा च विनष्टमपि ज्ञानं बुद्धिपुरुषवियोगरूपमोक्षव्यापारद्वारा कारणं सम्भवत्येवेति, ननु यद्ययमाचार्यदेशीयः तर्हि किं बुद्धिचि-

देशीयो वक्ति-ननु बुद्धिनिवृत्तिरेव मोक्षः, अदर्शनकारणाभावाद् बुद्धिनिवृत्तिः, तच्चादर्शनं बन्धकारणं दर्शनान्निवर्त्तते, तत्र चित्तनिवृत्तिरेव मोक्षः, कथमस्थान एवास्य मतिविभ्रमः ॥ २४ ॥

हेयं दुःखं हेयकारणं च संयोगाख्यं सनिमित्तमुक्तमतः परं हानं वक्तव्यम्—

## तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम् ॥२५॥

भास्वती ।

तत्रेति । तत्र = मोक्षविषये, या चित्तस्य निवृत्तिः स एव मोक्षः, अतोऽस्योपहासकस्यास्थाने = अयुक्त एव मतिविभ्रम इति ॥ २४ ॥

सूत्रमवतारयति—हेयमिति । तस्येति । अदर्शनस्याभावः = दर्शनेन नाशः सत्य-

तत्त्ववैशारदी ।

धर्ममेघान्तविवेकख्यातिप्रतिष्ठाया अनन्तरमेव भवति, सत्यपि बुद्धिस्वरूपमात्रावस्थान-इत्यर्थः, एतदेव स्फोरयति-"अदर्शन" इति । अदर्शनस्य बन्धकारणस्याभावाद् बुद्धिनिवृत्तिः, तच्चादर्शनं बन्धकारणं दर्शनान्निवर्त्तते, दर्शननिवृत्तिस्तु परवैराग्यसाध्या, सत्यपि बुद्धिस्वरूपावस्थाने मोक्ष इति भावः, एकदेशिमतमुपन्यस्य स्वमतमाह—"तत्र चित्तनिवृत्तिरेव मोक्ष" इति । ननूक्तं दर्शने निवृत्तेऽचिराच्चित्तस्वरूपनिवृत्तिर्भवतीति कथं दर्शनकार्यत्यत आह—"कथमस्थान एवास्य मतिविभ्रम" इति । अयमभिसन्धिः—यदि दर्शनस्य साक्षाच्चित्तनिवृत्तौ कारणभावमङ्गीकुर्महि तत एवम् उपालभ्येमहि, किन्तु विवेकदर्शनं प्रकर्षकाष्ठां प्राप्तं निरोधसमाधिभावनाप्रकर्षक्रमेण चित्तनिवृत्तिमत्पुरुषस्वरूपावस्थानोपयोगीत्यातिष्ठामहे तत्कथमुपालभ्येमहीति ॥ २४ ॥

तदेवं व्यूहद्वयमुक्त्वा तृतीयव्यूहाभिधानाय सूत्रमवतारयति—"हेयं दुःखम्" इति । "तदभावात्संयोगाभावो हानं तद् दृशेः कैवल्यम्" इति सूत्रं व्याचष्टे—"तस्य" इति ।

पातञ्जलरहस्यम् ।

सत्यपीति । "प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छ"इति स्मारयन्नाह-दर्शननिवृत्तिस्त्विति । तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति श्रुतिमाश्रित्याह-अयमभिसंधिरिति । प्रारब्धक्षयापेक्षा संप्रज्ञातसमाधेरुपलक्षणमिति, विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण इति श्रुत्यन्तराद् , उपालम्भमपि उपहासास्पदमित्यर्थः ॥ २४ ॥

"तदभावात्संयोगाभावो हानं तत् दृशेः कैवल्यं," तस्या अदर्शनरूपाया अविद्याया अभावादभिभवात् सुवर्णे पृथिव्यभिभूततैजसभास्वरत्ववदिति, संयोगाभावे त्वात्यन्तिकब-

वार्त्तिकम् ।

त्वादिनामकान्तःकरणनिवृत्तिर्मोक्ष एव न भवतीत्याशङ्कायामाह--तत्र चित्तेति । चित्तनिवृत्तिर्मोक्षो भवत्येव किंतु तत्रास्थान एवास्य नास्तिकस्य बुद्धिव्यामोहा व्यर्थ इत्यतोऽत्रोपेक्षणीये समाधातृत्वादेवाचार्यदेशीय उक्त इत्यर्थः ॥ २४ ॥

तदेवं हेयहेयहेतुरूपं व्यूहद्वयं व्याख्याय तृतीयव्यूहस्य सूत्रमवतारयति—हेयमिति । निमित्तमविद्या,

"तदभावात्संयोगाभावो हानं तद् दृशेः कैवल्यम्", तस्या अविद्याया अभावाद्विनाशाद् बुद्धिपुरुषसंयोगनिवृत्तिद्वारा द्रष्टृदृश्यसंयोगनिवृत्तिः दुःखहानमित्युच्यते कार्यकारणयोरभेदोपचारात्, तस्य पुरुषार्थत्वायोक्तं तद् दृशेः कैवल्यमिति, तदेव च हानं पुरुषस्य कैवल्यमित्यप्युच्यत इत्यर्थः, इममेव सूत्रार्थं भाष्यकारः प्रकारान्त

तस्यादर्शनस्याभावाद् बुद्धिपुरुषसंयोगाभावः = आत्यन्तिको बन्धनोपरम इत्यर्थः, एतद् हानं, तद् दृशः कैवल्यं = पुरुषस्यामिश्रीभावः, पुनरसंयोगो गुणैरित्यर्थः, दुःखकारणनिवृत्तौ दुःखोपरमो हानं, तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम् ॥ २५ ॥

अथ हानस्य कः प्राप्त्युपाय इति—

**विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥**

सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः, सा त्वनिवृत्तमिथ्याज्ञाना प्लवते,

भास्वती ।

ज्ञानस्यैव जनिष्यमाणता, ततः संयोगस्याप्यभावोऽत्यन्ताभावः साततिकोऽसंयोगो न पुनः संयोग इत्यर्थः, पुरुषस्य बुद्ध्या सहामिश्रीभावः = महदादेरव्यक्तताप्राप्तिरित्यर्थः, ततश्च दृशेः कैवल्यं = केवलता द्वैतहीनता, स्पष्टमन्यत् ॥ २५ ॥

अथेति हानोपायमाह—सत्त्वेति । अस्मीतिप्रत्ययमात्रं बुद्धिसत्त्वमधिगम्य ततोऽन्यस्तस्यापि साक्षी पुरुष इत्येतन्मात्रानुभूतिर्विवेकख्यातिः, तन्मयत्वात्तदा तद्विवेकस्य चेतसस्तन्मयत्वात्, तदा तद्विवेकस्य प्रख्यातिः सा तु ख्यातिरनिवृत्तमिथ्याज्ञाना = अहंबुद्धिममत्वबुद्ध्यस्मीतिबुद्धिरूपेभ्यो विपर्यस्तप्रत्ययेभ्य इत्यर्थः, प्लवते, यदा विपर्ययसंस्का-

तत्त्ववैशारदी ।

अस्ति हि महाप्रलयेऽपि संयोगाभावोऽत उक्तमात्यन्तिक इति, दुःखोपरमो हानमिति पुरुषार्थता दर्शिता, शेषमतिरोहितम् ॥ २५ ॥

हानोपायलक्षणं चतुर्थं व्यूहमाख्यातुं सूत्रमवतारयति—"अथ" इति । "विवेकख्यातिरविप्लवा हानोपाय" इति । आगमानुमानाभ्यामपि विवेकख्यातिरस्ति, न चासौ व्युत्थानं तत्संस्कारं वा निवर्त्तयति, तद्वतोऽपि तदनुवृत्तेः, इति तन्निवृत्त्यर्थम् "अविप्लवा"

पातञ्जलरहस्यम् ।

दुःखोपरमो हानं तदेव हानं दृशेरात्मनः कैवल्यं गुणैः पुनरसङ्गत्वं चेति सूत्रार्थः, व्यूहत्रयं संसारोऽविद्या चेति । तत्त्यागो मोक्षः, हेयञ्च दुःखमिति, यावद्वासनाराहित्यमात्यन्तिकता ॥ २५ ॥

"विवेकख्यातिरविप्लवा हानोपायः" विवेकख्यातिः सत्त्वपुरुषान्यताधीः, तस्या अविप्लवता-दग्धबीजस्येव पुनर्वासनाऽजनकता दृशेर्मोक्षोपाय इति सूत्रार्थः, श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतिमाश्रित्याह-आगमेति । निदिध्यासनान्तानि पुंप्रकृतिसाध्यत्वेनात्मतत्त्वा-

वार्त्तिकम् ।

रणाह—तस्येति । बुद्धिपुरुषसंयोगशब्देन कार्यकारणाभेदाद् द्रष्टृदृश्ययोः संयोगोऽपि ग्राह्यः प्रलयकालीनवियोगव्यावर्त्तनायात्यन्तिक इति विशेषणं बन्धनोपरमस्य, एतद्धानमिति पूर्वेण सहान्वेति, तद् दृशेः कैवल्यमित्येतद्व्याचष्टे— तद् दृशेरिति । तद्धानं-गुणैः बुद्धिगुणैः दुःखादिभिः पुनरसंयोगः प्रतिबिम्बरूपेणासम्बन्ध इत्यर्थः, स एव च दुःखभोगनिवृत्तिरूपः स्वतः पुरुषार्थरूप इति भावः, सूत्रस्य फलितार्थमाह—दुःखेति-हानमित्यन्तेन, व्याख्याने कैवल्यशब्दार्थ 'तदा द्रष्टुः स्वरूपेऽवस्थान'मिति गतसूत्रं प्रमाणयति-तदेति । तदा दुःखनिवृत्तौ, अस्य च हानव्यूहस्य चतुर्थपादे विस्तरो भविष्यतीत्यत्र दिङ्मात्रेण स उक्तः ॥ २५ ॥

अतः परं हानोपायव्यूहश्चतुर्थपादस्यापि कियत्पर्यन्तं वाच्यस्तत्र चतुर्थव्यूहप्रतिपादनसूत्रमवतारयति—अथेति । बुद्धिसंयोगनिवृत्तिरेव साक्षाद् दुःखहाने कारणं-

यदा मिथ्याज्ञानं दग्धबीजभावं बन्ध्यप्रसवं सम्पद्यते तदा विधूतक्लेशरजसः सत्त्वस्य परे वैशारद्ये परस्यां वशीकारसञ्ज्ञायां वर्त्तमानस्य विवेकप्रत्ययप्रवाहो निर्मलो भवति, सा विवेकख्यातिरविप्लवा हानस्योपायः, ततो मिथ्याज्ञानस्य दग्धबीजभावोपगमः पुनश्चाप्रसव इत्येष मोक्षस्य मार्गो हानस्योपाय इति ॥ २६ ॥

## तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥

भास्वती ।

रक्षयान्मिथ्याज्ञानं बन्ध्यप्रसवं भवति = विपर्ययप्रत्ययान् न प्रसूत इत्यर्थः, तथा च परवशीकारसंज्ञायां वशीकारवैराग्यस्य परावस्थायामित्यर्थः, वर्त्तमानस्य योगिनस्तदा विवेकख्यातिरविप्लवा भवति, सा तु दुःखहानस्य प्राप्त्युपायः, शेषमतिरोहितम् ॥ २६ ॥

तत्त्ववैशारदी ।

इति । विप्लवो = मिथ्याज्ञानं तद्रहिता, एतदुक्तं भवति—श्रुतमयेन ज्ञानेन विवेकं गृहीत्वा युक्तिमयेन च व्यवस्थाप्य दीर्घकालनैरन्तर्यसत्कारासेवितायाः भावनायाः प्रकर्षपर्यन्तं समाधिजा साक्षात्कारवती विवेकख्यातिर्निवर्त्तितसवासनमिथ्याज्ञाना निर्विप्लवा हानोपाय इति, शेषं भाष्यं सुगमम् ॥ २६ ॥

विवेकख्यातिनिष्ठायाः स्वरूपमाह सूत्रेण—"तस्य सप्तधा प्रान्तभूमिः प्रज्ञा" इत्यनेन, व्याचष्टे—"तस्य" इति । प्रत्युदितख्यातेः = वर्त्तमानख्यातेर्योगिनः, प्रत्याम्नायः = परामर्शः,

पातञ्जलरहस्यम् ।

विषयकाणीति तद्विषयकाविद्यानिवर्तकत्वात् प्रमाणप्रमेयमात्राधीनस्य ज्ञानस्यैवैकचन्द्रसाक्षात्कारनिवर्तकतावदित्याह-अविप्लवेति ॥ २६ ॥

विषयनिष्ठितायास्तस्याः स्वरूपमाह—"तस्य सप्तधा प्रान्तभूमिः प्रज्ञा", तस्य विवेकगा-

वार्त्तिकम् ।

विवेकख्यातिस्तु बुद्धिसंयोगहेतुत्वविद्यानिवर्त्तकत्वेन परम्परयेति प्राप्तिशब्देन सूचितम्,

"विवेकख्यातिरविप्लवा हानोपायः", साक्षात्कारनिष्ठारूढत्वलाभायाविप्लवेति विशेषणम्, तत्राविप्लवशब्दात् कथमेतल्लभ्यत इत्याकाङ्क्षायामाह—प्लवते मिथ्याज्ञानसंस्कारवशात् मिथ्याज्ञानेनान्तराऽभिभूयत इत्यर्थः, यदेति । यदा तु साक्षात्कारदशायां सूक्ष्ममिथ्याज्ञानमनागतावस्थं दग्धबीजतुल्यावस्थं तस्य विवरणं बन्ध्यप्रसवं बन्ध्यप्रसवसामर्थ्यं भवति तदा विधूतक्लेशारूयधूलेर्बुद्धिसत्त्वस्यात एव परवैशारद्ये वैलक्षण्ये अस्यैव विवरणं परस्यां वशीकारसंज्ञायां 'परमाणुपरममहत्त्वान्तोऽस्य वशीकार' इति सूत्रोक्तायामिच्छाऽप्रतिघातरूपायां वर्तमानस्य विवेकख्यातिप्रवाहो निर्मलो मिथ्याज्ञानाकलुपितो भवति, अतः सा विवेकख्यातिरविप्लवोच्यते, सा परमसाक्षात्काररूपिणी हानोपाय इत्यर्थः, केन द्वारेण हानोपाय इत्याकाङ्क्षायामाह—तत इति । ततो विवेकख्यातेः कारणाद् मिथ्याज्ञानस्य सूक्ष्मरूपस्य दग्धबीजताप्राप्तिः, ततश्च पुनरप्रसव इति कृत्वा एष विवेकख्यातिरूपचित्तनिवृत्त्यादिरूपमोक्षस्य पन्थाः, अस्य विवरणं हानोपाय इत्यर्थः, नन्वेवं ज्ञानादेव दुःखहानाख्यमोक्षवचनाद् असंप्रज्ञातयोगस्य किं प्रयोजनमिति चेन्न—परवैराग्यजासम्प्रज्ञातयोगस्याप्यत्र ज्ञानद्वारतया मोक्षहेतुत्वाशयादिति ॥ २६ ॥

तस्या विवेकख्यातेरविप्लवाख्यनिष्ठाया लक्षणमाह—

"तस्य सप्तधा प्रान्तभूमिः प्रज्ञा", तस्य विवेकख्यातिरूपहानोपायस्य प्रान्तभूमिका-

तस्येति = प्रत्युदितख्यातेः प्रत्याम्नायः, सप्तधेति = अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति, तद्यथा-परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति, क्षीणा हेयहेतवो न

भास्वती ।

तस्येतीति । तस्य सप्तधा—प्रान्तभूमिः = प्रान्ता भूमयो यस्याः सा, प्रज्ञेति । प्रत्युदितख्यातेः = उपलब्धविवेकस्य योगिनः प्रत्याम्नायः = तादृशं योगिनं परामृशतीत्यर्थः, प्रज्ञेयाभावाद्, यदा प्रज्ञा परिसमाप्ता भवति तदा सा प्रान्तभूमिप्रज्ञेत्युच्यते, सा च चित्तस्याशुद्धिरूपावरणमलापगमाद् = अविवेकप्रत्ययानुत्पादे सति च विषयभेदाद् विवेकिनः सप्तप्रकारा भवति, तद् यथा—

( १ ) परिज्ञातमिति । हेयस्य सम्यग्ज्ञानात् तद्विषयायाः प्रज्ञाया निवृत्तिरित्येतद्रूपख्यातिः,

( २ ) क्षीणेति । क्षेतव्यताविषयायाः प्रज्ञाया या निवृत्तिस्तस्या उपलब्धिः,

तत्त्ववैशारदी ।

अशुद्धिरेवावरणं चित्तसत्त्वस्य तदेव मलं तस्यापगमात्, चित्तस्य प्रत्ययान्तरानुत्पादे = तामसराजसव्युत्थानप्रत्ययानुत्पादे, निर्विप्लवविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति, विषयभेदात्प्रज्ञाभेदः, प्रकृष्टोऽन्तो यासां भूमीनाम् = अवस्थानां तास्तथोक्ताः, यतः परं नास्ति सम्प्रकर्षः, प्रान्ता भूमयो यस्याः प्रज्ञायाः = विवेकख्यातेः सा तथोक्ता, ता एव सप्तप्रकाराः प्रज्ञाभूमीरुदाहरति "तद्यथा" इति । तत्र पुरुषप्रयत्ननिष्पाद्यासु

पातञ्जलरहस्यम् ।

साक्षात्कारयोगिनो योगिनः चित्तस्य प्रत्ययान्तरानुत्पादे सति प्रज्ञा ज्ञानमुत्पद्यते सा सप्तप्रकारिकाति सूत्रार्थः, ननु प्रज्ञा ज्ञानं तस्यैकरूपत्वात् कथं सप्तधात्वं-तत्राह-विषयभेदादिति । तास्वपि प्रकृतिसाध्याः चतस्र उदाहरति—

"तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम्",

इत्युक्तिमाश्रित्याह-यावदिति । प्रामाणिकं प्रधानमारभ्यान्त्यावयविघटपर्यन्त प्रान्त-

वार्त्तिकम् ।

रूपिणी प्रज्ञा सप्तधेत्यर्थः, तदेतद्व्याचष्टे—तस्येतीति । तच्छब्दोक्तहानोपायस्य स्वरूपाख्यानं प्रत्युदितख्यातेरिति, अन्यथा तस्येतिपुंल्लिङ्गानुपपत्तेः, प्रत्याम्नायः परामर्शः, न चात्र प्रत्युत्पन्नख्यातेः पुरुषस्य परामर्श इत्यर्थः सम्भवति पुरुषस्य पूर्वसूत्रेष्वप्रस्तुतत्वात्, सप्तधेत्येतद्व्याख्यातुं गृह्णाति—सप्तधेतीति । अशुद्ध्येति । अशुद्धिविपर्ययाख्याऽविद्या तत्कार्यपापादिकं चोत्तरसूत्रभाष्यात् सैवावरणरूपो मलस्तदपगमाच्चित्तस्य प्रत्ययान्तराणां विवेकख्यात्यन्येषामनुत्पादे सति परवैराग्यजान्निरोधयोगादुत्थानदशायां सप्ताकारा प्रज्ञा विवेकिनो निष्पन्नज्ञानस्य लिङ्गं भवतीत्यर्थः, एवकारोऽयोगव्यवच्छेदे प्रकारन्यूनता नास्तीत्यर्थः, एकस्या एव प्रज्ञायाः सप्तप्रकारत्वमुदाहरति—तद्यथेत्यादिना, प्रथमं प्रकारमाह—परिज्ञातमिति । परिज्ञातं साक्षात्कृतं मुमुक्षुभिर्हेयं नास्यामवशिष्टं पुनर्ज्ञेयमस्तीत्यर्थः, द्वितीयं प्रकारमाह—क्षीणा इति । ततश्च हेयहेतवोऽविद्याकामकर्मादयो विवेकसाक्षात्कारेण मम क्षीणा इत्यादिरर्थः, तृतीयं प्रकारमाह—साक्षात्कृतमिति । ततश्चाविद्यादिक्षयादुत्पन्नेन निरोधसमाधिना हेतुना व्युत्थानकाले दुःखहानरूपो भाविमोक्षो मया साक्षात्कृतः देहपातानन्तरमेतादृशा मे मोक्षो भवितेति सजातीयसाक्षात्कार एव सजातीयान्तरसाक्षात्कारविनाशे परि-

पुनरेतेषां क्षेतव्यमस्ति, साक्षात्कृतं निरोधसमाधिना हानम्, भावितो विवेकख्यातिरूपो हानोपायः इत्येषा चतुष्टयी कार्य्या विमुक्तिः प्रज्ञायाः, चित्तविमुक्तिस्तु त्रयी—चरिताधिकारा बुद्धिः गुणा गिरिशिखरकूटच्युता इव

भास्वती ।

( ३ ) साक्षादिति । निरोधाधिगमात् परगतिविषयायाः प्रज्ञायाः समाप्तिः,

( ४ ) भावितो निष्पादितो विवेकख्यातिरूपो हानोपायः, न पुनर्भावनीयमन्यदस्तीति प्रज्ञायाः प्रान्तता, एषा चतुष्टयी कार्या = प्रयत्ननिष्पाद्या विमुक्तिः, "कार्यविमुक्ति"रिति पाठे तु कार्यात् प्रयत्नाद् विमुक्तिरित्यर्थः, त्रयी चित्तविमुक्तिः, चित्तात् प्रत्ययसंस्काररूपाद् विमुक्तिः = आभिः प्रज्ञाभिश्चित्तस्य प्रतिप्रसव इत्यर्थः, एता अप्रयत्नसाध्याः कार्यविमुक्तिसिद्धौ स्वयमेवोत्पद्यन्ते,

( ५ ) तत्राद्यायाः स्वरूपं बुद्धिश्चरिताधिकारा = मदीया बुद्धिर्निष्पन्नार्थेत्युपलब्धिः,

( ६ ) द्वितीयां चित्तविमुक्तिप्रज्ञामाह—गुणा इति । बुद्धेर्गुणाः सुखाद्याः स्वकारणे

तत्त्ववैशारदी।

चतसृषु भूमिषु प्रथमामुदाहरति—"परिज्ञातं हेयम्" इति । यावत्किल प्राधानिकं तत्सर्वं परिणामतापसंस्कारैर्गुणवृत्तिविरोधाद् दुःखमेवेति हेयं, तत्परिज्ञातम्, प्रान्ततां दर्शयति—"नास्य पुनः किञ्चिदपरिज्ञेयमस्ति" इति, द्वितीयामाह—"क्षीणा" इति । प्रान्ततामाह—"न पुनः" इति । तृतीयामाह—"साक्षात्कृतम्" इति । प्रत्यक्षेण निश्चितं मया सम्प्रज्ञातावस्थायामेव निरोधसमाधिसाध्यं हानं, न पुनरस्मात्परं निश्चेतव्यमस्तीति शेषः, चतुर्थीमाह—"भावित" इति । भावितो = निष्पादितो विवेकख्यातिरूपो हानोपायो, नास्याः परं भावनीयमस्तीति शेषः, एषा चतुष्टयी कार्य्या विमुक्तिः = समाप्तिः, कार्य्यतया प्रयत्नव्याप्यता दर्शिता, क्व चित्पाठः कार्य्यविमुक्तिरिति, कार्यान्तरेण विमुक्तिः प्रज्ञाया इत्यर्थः, प्रयत्ननिष्पाद्यानुनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह—चित्तविमुक्तिस्तु त्रयी" इति ।

पातञ्जलरहस्यम् ।

पदं सर्वत्रानुषज्याह-प्रान्ततामिति । चरिताधिकारः कर्माशयः तद्रहितः,

"यो गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते",

वार्त्तिकम् ।

चितः, असम्प्रज्ञातयोगदृष्टान्तेन कैवल्यमपि दृष्टप्रायमिति फलितार्थः, यथाश्रुते निरोधसमाधौ हानसाक्षात्कारानुपपत्तिर्वृत्त्यभावादिति असम्प्रज्ञातकालीनश्च दुःखाभावो योग्यानुपलब्ध्या व्युत्थाने साक्षात्क्रियते, यदि ह्यसम्प्रज्ञातेऽपि दुःखं स्यात् तदाऽनुभूयेत ततश्च सुप्तोत्थान इव व्युत्थाने स्मर्यतेति, अथ वा निरोधसमाधिना निष्पाद्यं हानं मोक्षो हानगोचरसम्प्रज्ञातेन साक्षात्कृतमित्यर्थः, चतुर्थं प्रकारमाह—भावित इति । ततश्च फलनिष्पत्त्या विवेकख्यातिरूपो हानोपायो भावितो निष्पादितः फलनिष्पत्त्यैव साधनस्य सिद्धेरिति, वस्तुतस्तु भावित इत्यादिप्रकारस्य द्वितीयस्थल एव पाठ आञ्जस्येन क्रमोपपत्तेः, एषेति । एषा प्रान्तभूमिप्रज्ञाया विषयो हेयज्ञानसमाप्त्यादिरूपा चतुष्टयी प्रज्ञायाः प्रज्ञाऽऽख्यतत्त्वज्ञाननिमित्तात् पुंसां कार्यमुक्तिः कार्याद्विमुक्तिः कर्त्तव्यसमाप्तिः जीवन्मुक्तिरित्यर्थः, इयं परवैराग्यरूपा चित्तनाशस्याद्यभूमिकारूपा, चित्तेति । चित्ताद्विमुक्तिः चित्तविमुक्तिः परममुक्तिः साऽपि प्रान्तभूमिप्रज्ञाया विषयः त्रिविधा भवति, चित्तविमुक्तिस्तु स्वयमेव भवति न तत्र साधनापेक्षेत्याशयेन पृथगुपन्यासः, तत्राद्यां चित्तविमुक्तिमाह—चरिताधिकारा बुद्धिरिति ।

ग्रावाणो निरवस्थानाः, स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति, न चैषां विप्रलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति, एतस्यामवस्थायां गुणसम्बन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुषः, इति एतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते, प्रतिप्रसवेऽपि चि-

भास्वती।

बुद्धौ प्रलयाभिमुखास्तेन=कारणेन चित्तेन सहास्तं गच्छन्ति, अस्याः प्रान्तभूमितामाह—न चैषामिति। प्रयोजनाभावाद्=बुद्ध्या मे प्रयोजनं नास्तीति परवैराग्येण ख्यातेरित्यर्थः, अस्यां प्रलीयमाना मे बुद्धिर्न पुनरुदेतीति ख्यातिः स्यात्,

(७) तृतीयामाह—एतस्यामिति। सप्तम्यां प्रान्तप्रज्ञायां पुरुषो गुणसम्बन्धातीतत्वादिस्वभाव इतीदृशख्यातिमच्चित्तं भवति, ततः परतरस्य प्रज्ञेयस्याभावादस्याः प्रान्तता, श्रूयते च—

"पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति,

एतामिति। पुरुषः=योगी कुशलः=जीवन्मुक्त इत्याख्यायते, तदा जीवन्नेह विद्वान् मुक्तो भवति, दुःखेनापरामृष्टो मुक्त इत्युच्यते, शाश्वती दुःखप्रहाणिरस्य योगिनः

तत्त्ववैशारदी।

प्रथमामाह—"चरिताधिकारा बुद्धिः" इति। कृतभोगापवर्गकार्येत्यर्थः, द्वितीयामाह—

पातञ्जलरहस्यम्।

इत्युक्तिमाश्रित्याह-एतस्यामित्यादि-गुणातीतत्वादित्यन्तेन, सर्वे जीवाः भोगलम्पटत्वादकुशलाः, अयं तु कुशलो बीभत्सेभ्य आगमापायिभ्य इन्द्रियादिभ्यः सक्तिव्यतिरिक्तो भवतीति कुशलो भगवदुक्तं योगः कर्मसु कौशलमिति कथं हेतुषु कर्मसु फलासङ्गरहितत्वान्न बद्धो भव-

वार्त्तिकम्।

समाप्तभोगापवर्गा भवति बुद्धिरित्यर्थः, इयं परवैराग्यरूपा चित्तनाशस्याद्यभूमिकारूपा, द्वितीयामाह—गुणा इति। बुद्धेर्गुणाः संसारसुखदुःखादयः स्वकारणे सत्त्वादित्रिगुणमयप्रकृतौ लीयमानास्तेन चित्तेन सहात्यन्तलयं गच्छन्ति, तत्र दृष्टान्तो—गिरीति। गिरिशिखरकूटाच्च्युताः शिला इवावस्थातुमक्षमा इत्यर्थः, एषा च लिङ्गशरीरस्य विनश्यदवस्था द्वितीयभूमिका, तृतीयामाह—न चैषामिति। न चैषां संस्कारसुखादीनां पुनरुद्भवोऽस्ति पुरुषार्थसमाप्त्या प्रयोजनाभावाद् इत्यत एतस्यामवस्थायां पुरुषो बुद्ध्यादिगुणसम्बन्धविशेषशून्यः स्वरूपमात्रज्योतिः निर्विषयकचिज्ज्योतिस्स्वरूपोऽमल औपाधिकतमोमालिन्यरहितः केवली केवलेषु मुक्तेष्वविभागी भवतीत्यर्थः, इयं चात्यन्तिकलयनिष्पत्तिरूपा विदेहकैवल्यस्य चरमभूमिका, इमां त्रिविधां चित्तभूमिं भाविनीमेव जीवन्मुक्तदशायां विशुद्धचित्तो योगी साक्षात्करोतीति बोध्यम्, तदेवं सप्तविषयत्वात्सप्तप्रकारा प्रज्ञा व्याख्याता, इदानीं सूत्रतात्पर्यार्थमाह—एतां सप्तविधामिति। प्रज्ञावानित्यनुक्त्वा प्रज्ञामनुपश्यन्निति निरभिमानताप्रतिपादनायोक्तं, बुद्धिवृत्तिं प्रज्ञां साक्षिभावेनैव जीवन्मुक्तः पश्यति न त्वभिमन्यत इत्याशयः, कुशलः कल्याणोऽकल्याणबुद्धिपत्नीपरित्यागादिति, ज्ञानिनो जीवन्मुक्तस्य लक्षणं सूत्रेणोक्तं तत्प्रसङ्गात्स्वयं परममुक्तस्य ततो विशेषमाह—प्रतिप्रसव इति। चित्तस्यात्यन्तंलयेऽपि कुशल इत्येव भवति, अथ दुःखादिभिः सत्त्वादिभिश्च कुशलगुणैरत्यन्तवियोगादित्यर्थः, एवकारेण जीवन्मुक्तदशायामपि बाधितमकुशलं तिष्ठतीत्युक्तम्, अत एव चाख्यायत इत्यनेन जीवन्मुक्तावस्थायां गौणं कुशलत्वं व्याख्यायतान्न भवतीत्यनेन मुख्यं कुशलत्वमुच्यते।

त्तस्य मुक्तः कुशल इत्येव भवति, गुणातीतत्वादिति ॥ २७ ॥

सिद्धा भवति विवेकख्यातिर्हानोपायः, न च सिद्धिरन्तरेण साधनमित्येतदारभ्यते—

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥२८॥**

भास्वती ।

करामलकवदायत्ता भवति, तथा लीलया च दुःखातीतायामवस्थायामवस्थानसामर्थ्यान्नासा दुःखेन स्पृश्यतेऽतो जीवन्नपि मुक्तो भवति, उक्तञ्च—

"यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते" इति,

चित्तस्य प्रतिप्रसवे = पुनरुत्थानहाने प्रलये मुक्तः कुशलः = विदेहमुक्तो भवति गुणातीतत्वात = त्रिगुणसम्बन्धाभावादिति ॥ २७ ॥

हानस्योपायो या विवेकख्यातिः सा सिद्धा भवतीत्युक्ता, न च सिद्धिरन्तरेण साधनम्, अतस्तत्साधनमभिधास्यते, सुगमम्, क्षयक्रमानुरोधिनी = क्रमतः क्षीयमाणाया-

तत्त्ववैशारदी ।

"गुणा" इति । प्रान्ततामाह—"न चैषाम्" इति । तृतीयामाह—"एतस्यामवस्थायाम्" इति । एतस्यामवस्थायां जीवन्नेव पुरुषः कुशलो मुक्त इत्युच्यते, चरमदेहत्वादित्याह—

"एताम्" इति । अनौपचारिकं मुक्तमाह—"प्रतिप्रसवे" इति । प्रधानलयेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति ॥ २७ ॥

तदेवं चतुरो व्यूहानुक्त्वा तन्मध्यपतितस्य हानोपायस्य विवेकख्यातेर्गोदोहनादिवत् प्रागसिद्धेः असिद्धस्य चोपायत्वाभावात् सिद्ध्युपायान् वक्तुमारभत इत्याह—"सिद्धा"

पातञ्जलरहस्यम् ।

र्तांति कुशलतेत्यर्थः, गोदोहनादिति । गोदोहनेन पशुकामः प्रणयेदित्यत्र सिद्धेनैव गोदोहेन यथा प्रणयनं तथा प्रसिद्धस्यैव विवेकख्यातिरूपस्य ज्ञानस्य मुक्तिहेतुतेति भावः ॥ २७ ॥

"योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः",

"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" ।

धमण पापमपनुदतीतिश्रुतिमाश्रित्याह-अशुद्धिक्षये सति दीप्तिः बुद्धिपराकाष्ठा, तस्या-अवधिमाह-आविवेकख्यातेः साक्षात्कारपर्यन्तायाः, तरति शोकमात्मविद् इति श्रुतेरिति, तत्र धर्मो द्विविधः--योगानुष्ठानजो यागाद्यनुष्ठानजन्मेति, उभयमपि तत्त्वधीहेतुः,

वार्त्तिकम् ।

इति, यत्तु गीतायां—

"सर्वारम्भपरित्यागी गुणातीतः स उच्यते"—इति

ज्ञानिनोऽपि गुणातीतत्वमुक्तं तद्गुणाभिमानशून्यतामात्रं परमेश्वरस्य निर्गुणत्ववदिति ॥ २७ ॥

अतः परं शास्त्रसमाप्तिपर्यन्तं हानोपायव्यूहस्याशेषविशेषास्तत्प्रसङ्गेनैव च हानव्यूहस्य विशेषाश्च व्याख्येया., तत्रादौ विवेकख्यात्युपायप्रतिपादकं सूत्रजातमवतारयति—सिद्धेति । सिद्धा निष्पन्ना ऽविप्लवेति यावत्,

"योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः," सामान्यतो ज्ञानं श्रवणमननाभ्यामपि भवतीति दीप्तिपदं, दीप्तिश्चात्र श्रुतामतविशेषग्रहणम्, अत्र योगाङ्गानुष्ठानादित्यनेन वक्ष्यमाणयमादीनां योगाङ्गत्वमपि ज्ञानाङ्गतावदेव विवक्षितम्, अन्यथा "तदपि बहिरङ्गं-

**योगाङ्गानि = अष्टावभिधायिष्यमाणानि, तेषामनुष्ठानात् पञ्चपर्वणो-विपर्य्ययस्याशुद्धिरूपस्य क्षयः = नाशः, तत्क्षये सम्यग्ज्ञानस्याभिव्यक्तिः, यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्वमशुद्धिरापद्यते, यथा यथा च क्षीयते तथा तथा क्षयक्रमानुरोधिनी ज्ञानस्यापि दीप्तिर्विवर्द्धते, सा खल्वेषा विवृद्धिः प्रकर्षमनुभवति आ विवेकख्यातेः = आ गुणपुरुषस्व-**

भास्वती।

मशुद्धौ क्रमतश्च विवर्धमाना ज्ञानस्य दीप्तिर्भवतीत्यर्थः, योगाङ्गेति। यैरुपादाननिमित्तैः कश्चित् पदार्थो जात इति ज्ञायते, तानि तस्य कारणानि, तच्च कारणं नवधा-तत्रोत्पत्ति-

तत्त्ववैशारदी।

इति। तत्राभिधास्यमानानां साधनानां येन प्रकारेण विवेकख्यात्युपायत्वं तद् दर्शयति-सू-त्रेण—"योगेत्यादिना—ख्यातेरित्यन्तेन", योगाङ्गानि हि यथायोगं दृष्टादृष्टद्वारेणाशुद्धिं क्षिणवन्ति पञ्चपर्वणो विपर्य्ययस्येत्युपलक्षणं पुण्यापुण्ययोरपि जात्यायुर्भोगहेतुत्वेनाशुद्धि-रूपत्वादिति, शेषं सुगमम्, नानाविधस्य कारणभावस्य दर्शनाद् योगाङ्गानुष्ठानस्य कीदृशं-

पातञ्जलरहस्यम्:

"सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते",

इति भगवतोक्तेः,—

"पूर्वं परमजातत्वादबाधित्वैव जायते।
परस्य नान्यथोत्पादान्न त्वबाधेन जीवनम्"॥

इति न्यायेनाह-पञ्चपर्वणः—

"तमो मोहो महामोहस्तामिश्रो ह्यन्धसंज्ञकः—

इत्यस्य विपर्ययस्य तत्त्वधीप्रतिबन्धकस्य पूर्वभाविनो योगानुष्ठानेनालोकेनेव तमोऽभिभवे रूपसाक्षात्कारो नान्येष्विति, अशुद्धिरूपे नष्टे ज्ञानाभिव्यक्तिरित्यनुभवारूढं करोति-यथा

वार्तिकम्।

निर्बीजस्ये"त्यागामिसूत्रे योगाङ्गतायां विशेषस्याप्रकृताभिधानताप्रसङ्गात्, ननु योगाङ्गा-नि योगसाधनानि तानि च पूर्वोक्तनया पुनर्नाकाङ्क्ष्यन्त इति चेन्न—कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादित्यादिभाष्येणैव दत्तोत्तरप्रायत्वात्, पूर्वपादे ह्युत्तमाधिकारिणाम् अभ्या-सवैराग्ये एव योगयोः साधनमुक्तं, ततश्च मध्यमाधिकारिणां तपःस्वाध्यायेश्वरप्रणिधाना-न्यपि केवलानि साधनान्येतत्पादस्यादावुक्तानि, अतः परं मन्दाधिकारिणां यमादीन्यपि योगसाधनानि वक्तव्यानि ज्ञानसाधनप्रसङ्गेनेत्यपौनरुक्त्यम्, यद्यपि ज्ञानमप्यसम्प्रज्ञातयोग-साधनतयाऽस्मिन् शास्त्रे प्रतिपादितं तथाऽपि तद्योगसामान्येऽङ्गं न भवति सम्प्रज्ञाताहेतु-त्वात्, अतो योगसामान्यस्य ज्ञानस्य चोभयोरेव तुल्यवदङ्गतयाऽत्र यमादीन्यष्टावेव योगा-ङ्गतया प्रतिपादयिष्यन्त इति, सूत्रं व्याचष्टे—योगाङ्गानीति। विपर्ययस्येति। योगाङ्गतया विपर्ययशब्देन तत्कार्यं पापादिकमपि ग्राह्यं तस्याप्यशुद्धिरूपत्वात्,

"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः।
यथाऽऽदर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनि—इति

स्मृतेः, नाशश्चात्र तनुता, तथा तथा तनुत्वमशुद्धिरापद्यत इत्युत्तरवाक्यात् क्लेशतनू-करणार्थश्चेत्युक्तसूत्राच्च, अतो न ज्ञानेनैव क्लेशानामत्यन्तोच्छेद इति सिद्धान्तव्याघातः, अ-नुरोधिनो = अनुसारिणी, दीप्तिः = सूक्ष्मग्राहिता, गुणपुरुषेति। गुणास्त्रयः सत्त्वादयः, पुरुषश्च जीवेश्वरावित्यर्थः, एतेन जिज्ञासामात्रद्वारा यमनियमान्तर्गतसर्वकर्मणां ज्ञानहेतुत्वजिज्ञासाऽ-

रूपविज्ञानादित्यर्थः, योगाङ्गानुष्ठानमशुद्धेर्वियोगकारणं, यथा परशुश्छेद्यस्य, विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्मः सुखस्य, नान्यथा कारणम्, कति चैतानि कारणानि शास्त्रे भवन्ति, नवैवेत्याह तद्यथा—

"उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम्" इति,

तत्रोत्पत्तिकारणं मनो भवति विज्ञानस्य, स्थितिकारणं मनसः पुरुषा-

भास्वती ।

कारणमुपादानाख्यम्, अन्यच्च निमित्तकारणम्, तत्रेति । विज्ञानस्योपादानं मनः, मन-

तत्त्ववैशारदी ।

कारणत्वमित्यत आह—"योगाङ्गानुष्ठानम्" इति । अशुद्ध्या वियोजयति-बुद्धिसत्त्वमिति, अशुद्धेर्वियोगकारणम्, दृष्टान्तमाह—"यथा परशुः" इति । परशुः छेद्यं वृक्षं मूलेन वियोजयति, अशुद्ध्या वियोजयद् बुद्धिसत्त्वं विवेकख्यातिं प्रापयति, यथा धर्मः सुखस्य तथा योगाङ्गानुष्ठानं विवेकख्यातेः प्राप्तिकारणं नान्येन प्रकारेणेत्याह—विवेकख्यातेस्तु" इति । नान्यथेतिप्रतिषेधश्रवणात् पृच्छति—"कति चैतानि" इति । उत्तरं—"नवैव" इति । तानि

पातञ्जलरहस्यम् ।

यथेति । तत्त्वमापद्यते क्षीणत्वात्प्राप्तिकारणं धर्ममेघवैराग्यं तद्द्वारा तद्विना न कारणमित्याह-नान्यथा कारणमिति । साक्षात्कारणम् आत्ममनःसंयोगस्य ज्ञानासमवायिकारणतया ह्रीधीर्धीरेतत्सर्वं मन एवेतिश्रुतेरुपादानकारणतया च ज्ञानं मनःकारणमित्याह--तत्रोत्पत्तीति ।

वार्त्तिकम् ।

नन्तरं च कर्म त्याज्यमनुत्पन्नज्ञानेनापीति वेदान्तिब्रुवाणां मतं दुर्मतं मन्तव्यम्, विपर्ययतानवद्वारा यमनियमान्तर्गतकर्मणां ज्ञानहेतुत्वसिद्धेरिति, अत एव

"कर्मणा सहिताज् ज्ञानात् सम्यग्योगोऽभिजायते ।
ज्ञानं च कर्मसहितं जायते दोषवर्जितम्"—इति ।

कौर्मादिषु कर्मणां ज्ञानसाहित्येनानुष्ठानं सिद्धम्, यद्यपि विषयान्तरसञ्चाराख्यप्रतिबन्धनिवृत्तिरूपतया सम्प्रज्ञातोऽपि ज्ञानकारणं तथाऽप्यशुद्धिक्षयद्वारा योगाङ्गानुष्ठानानामेव ज्ञानदीप्तिहेतुत्वमस्ति न योगस्येत्यङ्गपदोपादानमिति, ननु नानाविधकार्यकारणभावदर्शनाद् योगाङ्गान्यशुद्धिक्षयं प्रति ज्ञानं प्रति च कीदृशं कारणमित्याकाङ्क्षायामाह—योगाङ्गानुष्ठानमशुद्धेरिति । अशुद्धेः कारणं वियोगरूपेणातिशयेनेत्यर्थः, अयं भावः—सत एव वस्तुनोऽतिशयहेतुः कारणमुच्यते असदुत्पादस्यानभ्युपगमात्, तथा च सत्येवाशुद्धिवियोगाख्ये नातीतावस्थारूपेणातिशयेन योगाङ्गानां कार्येति, एवं दृष्टान्तेऽपि बोध्यम्, विवेकख्यातेस्तु प्राप्तिकारणमिति । प्राप्तिरूपातिशयाधायकतया विवेकख्यातेः कारणमित्यर्थः, प्राप्तिश्चोत्पत्तौ प्रतिबन्धनिवर्त्तनम्, तत्र दृष्टान्तमाह—यथेति । नान्यथा कारणमिति । न वैशेषिकाणामिवोत्पत्तिकारणमस्मन्मते, धर्मादीनां निमित्तकारणानां प्रतिबन्धनिवृत्तिकारणत्वसिद्धान्तादित्याशयः, 'निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवदि'ति सूत्रे चैतद् व्यक्तीभविष्यति, विवेकख्यातेरुत्पत्तौ च चित्तमेव कारणं स्वत एव सर्वार्थग्रहणसामर्थ्यादिति, पृच्छति—कति चैतानीति । उत्तरं, नवैवेत्याहेति । पूर्वाचार्यगण इति शेषः, कारिकोक्तानि नव कारणानि यथोक्तक्रममुदाहरति–तत्रेति । ज्ञानस्य वृत्तिरूपस्योत्पत्तिरूपातिशयेन मनः कारणंसम्भवति उपादानत्वादित्यर्थः, आप्तिकारणं च नोत्पत्तौ साक्षात्कारणं किं तु प्रतिबन्धनिवृत्तिद्वारेति, घटादिषु दण्डादीनि च पूर्वोक्ताप्तिकारणमध्य एव प्रवेशनीयानि, उत्पत्तिकारणत्व-

र्थता शरीरस्येवाहार इति, अभिव्यक्तिकारणं यथा रूपस्यालोकस्तथा रूपज्ञानं, विकारकारणं मनसो विषयान्तरं यथाऽग्निः पाक्यस्य, प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य, प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः,

भास्वती।

एव परिणतं विज्ञानमुत्पादयतीति, अभिव्यक्तिः = उद्घाटकेन प्रकाश आलोको रूपज्ञान-

तत्त्ववैशारदी।

दर्शयति कारिकया— "तद्यथोत्पत्ति" इति। अत्रोदाहरणान्याह- "तत्रोत्पत्तिकारणम्" इति। मनोविज्ञानमव्यपदेश्यावस्थातोऽपनीय वर्त्तमानावस्थामापादयदुत्पत्तिकारणं विज्ञानस्य, स्थितिकारणं मनसः पुरुषार्थता = अस्मिताया उत्पन्नं मनस्तावदवतिष्ठते न यावद् द्विविधं पुरुषार्थमभिनिर्वर्त्तयति, अथ निर्वर्त्तितपुरुषार्थद्वयं स्थितेरपैति तस्मात्स्वकारणादुत्पन्नस्य मनसोऽनागतपुरुषार्थता स्थितिकारणम्, दृष्टान्तमाह— "शरीरस्येवाहार" इति। प्रत्यक्षज्ञाननिमित्तम् इन्द्रियद्वारा स्वतो वा विषयस्य संस्क्रिया = अभिव्यक्तिः, तस्याः कारणं यथा रूपस्यालोकः, विकारकारणं मनसो विषयान्तरम्, = यथा हि मृकण्डोः समाहितमनसो वल्लकीविपञ्च्यमानपञ्चमस्वरश्रवणसमनन्तरमुन्मीलिताक्षस्य सुरूपलावण्ययौवनसम्पन्नामप्सरसमुम्लोचामीक्षमाणस्य समाधिमपहाय तस्यां सक्तो मनो बभूवेति, अत्रैव निदर्शनमाह- "यथाऽग्निः" इति। यथाऽग्निः पाक्यस्य = तण्डुलादेः कठिनावयवसन्निवेशस्य प्रशिथिलावयवसंयोगलक्षणस्य विकारस्य कारणम्, सत एव विषयस्य प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य इति, ज्ञायत इति ज्ञानम् अग्निश्चासौ ज्ञानं चेति अग्निज्ञानं तस्येति, एतदुक्तं भवति—वर्त्तमानस्यैवाग्नेर्विषयस्य प्रत्ययकारणतया कारणमिति, "प्राप्तिकारणम्"। औत्सर्गिकी निरपेक्षाणां कारणानां कार्य्यक्रिया प्राप्तिः, तस्याः कुतश्चिदपवादोऽप्राप्तिः, यथा निम्नोपसर्पणस्वभावानामपां प्रतिबन्धः सेतुना; तथेहापि बुद्धिसत्त्वस्य सुखप्रकाशशीलस्य स्वाभाविकी सुखविवेकख्यातिजनकता प्राप्तिः, सा कुतश्चिदधर्मात्तमसो वा प्रतिबन्धान्न भवति, धर्माद्

पातञ्जलरहस्यम्।

उपादानत्वेन स्थितिहेतुरपीत्याह-स्थितीति। आलोकवद् यथाऽऽलोकोऽसंतमसि रूपमेवं व्यक्तिहेतुविवेकख्यातेरुत्पादकमशुद्धेर्वियोगकारणम्, एकस्यां प्रमदातनौ कुणपः कामिनी

वार्त्तिकम्।

मुपादानकरणत्वमिति, स्थितीति। भोगापवर्गरूपं पुरुषार्थसामान्यं मनसः स्थितिरूपातिशयेन कारणं भवति पुरुषार्थसमाप्तौ मनसः स्वयमेव लयादित्यर्थः, अत्र प्राधान्येनैव मनउदाहृतं पुरुषार्थस्य सर्वभोग्यानामेव स्थितिहेतुत्वादिति, अभिव्यक्तीति। आलोकरूपज्ञानं च रूपस्याभिव्यक्तिरूपातिशयेन कारणमित्यर्थः, अभिव्यक्तिश्च बुद्धिवृत्तिः पौरुषेयबोधश्च, तत्र बुद्धिवृत्तावालोकः कारणं पौरुषेयबोधे च रूपज्ञानं बुद्धिवृत्तिरूपमिति विभागः, विकारकारणमिति। एकाग्रस्य मनसो विषयान्तरं स्वगोचररागादिविकाररूपातिशयेन कारणं भवतीत्यर्थः, प्रत्ययकारणमिति। प्रत्ययः सम्प्रत्ययः प्रामाण्यनिश्चय इति यावत्, तथा च पर्वते वह्निरस्तीति शब्दादिना यदग्निज्ञानं तस्य सम्प्रत्ययकारणं पर्वते धूमदर्शनमित्यर्थः, यथाश्रुतेऽग्निज्ञानस्येत्यत्र ज्ञानशब्दवैयर्थ्याद्, आनुमानिकज्ञानस्याप्यभिव्यक्तिमध्य एव प्रवेशाच्च, प्राप्तिकारणमिति। आप्तिः प्राप्तिरित्येक एवार्थः, एतद्व्याख्यातम्, वियोगेति। एतदपि व्याख्यातम्, ननु वियोगकारणे कारणव्यवहार एव नास्तीति चेन्न—मशकार्थोऽयं धूम इत्यादिव्यवहारदर्शनात्, कर्मकार्ययोरेकार्थतयाऽशेषधातुकर्मणामेव कार्यत्वाच्चेति, अन्यत्वकारणमिति। रूपभेदकारणमित्यर्थः, ननु विकारकारणादस्य को भेद इति चेत्? उच्यते—सुवर्णादेः

वियोगकारणं तदेवाशुद्धेः, अन्यत्वकारणं यथा सुवर्णस्य सुवर्णकारः, एवमेकस्य स्त्रीप्रत्ययस्य अविद्या मूढत्वे, द्वेषो दुःखत्वे, रागः सुखत्वे, तत्त्वज्ञानं माध्यस्थ्ये, धृतिकारणं शरीरमिन्द्रियाणां तानि च तस्य महाभूतानि

भास्वती।

ऽभिव्यक्तिकारणं द्रव्याणां प्रातिस्विकरूपज्ञानस्येति शेषः, विकारकारणं = विकारो नात्र धर्मान्तरोदयमात्रः किन्त्विष्टोऽनिष्टो वा प्रकटविकारः, प्रत्ययकारणं = हेतुरूपमनुमापकं का-

तत्त्ववैशारदी।

योगाङ्गानुष्ठानाद्वा तदपनये तदप्रतिबद्धवृत्तिस्वभावत एव तज्जनकतया तदाऽऽप्नोति, यथा वक्ष्यति = "निमित्तमप्रयोजकं प्रकृतीनां, वरणभेदस्तु ततः क्षेत्रिकवद्" इति, तदेवं विवेकख्यातिलक्षणकार्य्यापेक्षया प्राप्तिकारणमुक्तम्, अवान्तरकार्य्यापेक्षया तदेव वियोगकारणमित्याह- "वियोगकारणम्" इति। अन्यत्वकारणमाह—"यथा सुवर्णस्य सुवर्णकार" इति। कटककुण्डलकेयूरादिभ्यो भिन्नाभिन्नस्य भेदविवक्षया कटकादिभिन्नस्याभेदविवक्षया कटकादभिन्नस्य सुवर्णस्य कुण्डलादन्यत्वम्, तथा च कटककारी सुवर्णकारः कुण्डलादभिन्नात्सुवर्णादन्यत् कुर्वन्नन्यत्वकारणम्, अग्निरपि पाक्यस्यान्यत्वकारणं यद्यपि; तथाऽपि धर्मिणो- धर्मयोः पुलाकत्वतण्डुलत्वयोर्भेदाविवक्षया धर्मयोरुपजनापायेऽपि धर्म्यनुवर्त्तत इति न तस्यान्यत्वं शक्यं वक्तुम् इति विकारकारणत्वमुक्तम्, इति न सङ्करः, न च संस्थानभेदो धर्मिणोऽन्यत्वकारणमिति व्याख्येयम्, सुवर्णकार इत्यस्यासङ्गतेः, बाह्यमन्यत्वकारणमुपन्यस्याध्यात्मिकमुदाहरति—"एवमेकस्य" इति। अविद्या = कमनीयेयं कन्येत्यादिज्ञानम्, सम्मोहयोगात्स एव स्त्रीप्रत्ययो मूढो = विषण्णो भवति चैत्रस्य मैत्रस्य पुण्यवतो बत कलत्ररत्नमेतन्न तु मम भाग्यहीनस्य इति, एवं सपत्नीजनस्य तस्यां द्वेषः स्त्रीप्रत्ययस्य दुःखत्वे, एवं मैत्रस्य तस्या भर्तुः रागस्तस्यैव स्त्रीप्रत्ययस्य सुखत्वे, तत्त्वज्ञानं = त्वङ्मांसमेदोऽस्थिमज्जसमूहः स्त्रीकायः स्थानबीजादिभिरशुचिरिति, विवेकिनां माध्यस्थ्ये = वैराग्ये कारणमिति, धृतिकारणं = शरीरमिन्द्रियाणां विधारकम्, इन्द्रियाणि च शरीरस्य सामान्यकरणवृत्तिर्हि प्राणाद्या वायवः पञ्च, तदभावे शरीरपाताद्, एवं मांसादिकायाङ्गानामपि परस्परविधार्य्यविधारकत्वम्, एवं महाभूतानि = पृथिव्यादीनि, मनुष्यवरुणसूर्यगन्धर्वहशशिलोकनिवासिनां शरीराणां तानि च परस्परम्, पृथिव्यां हि गन्धरसरूपस्पर्शशब्दगुणायां पञ्च महाभूतानि परस्परं विधार्य्यविधारकभावेनावस्थितानि, अप्सु चत्वारि, तेजसि त्रीणि- द्वे च मातरिश्वनीति, तैर्य्यग्योनमानुषदैवादीनि च विधार्यविधारकभावेनावस्थितानि,

पातञ्जलरहस्यम्।

भस्य इति तिस्रो विकल्पना इत्युक्तिमाश्रित्याह-एवमेकस्येति। कामुकस्य पुरुषान्तरस्य विषादो मोहः सपत्न्या द्वेषः स्वपत्यू रागः, रेतःशोणितयोरियं परिणतिरिति तत्त्वधीर्माध्यस्थ्ये औदासीन्ये इति। इन्द्रियाश्रयं शरीरमित्युक्तिमाश्रित्याह-महाभूतानीति। तानि च शरी-

वार्त्तिकम्।

कटकादिरूपतात्यागेन कुण्डलादिरूपतायां यत्कारणं तत्सुवर्णादेर्विकारकारणमुच्यते तदेव च कारणं कटकादेरन्यत्वकारणमुच्यते कटकादिविनाशपूर्वकमन्येषां कुण्डलादीनामुत्पादनात् अतः कार्यभेदेनैकस्यैव वस्तुनो द्विधा कारणत्वमिति, सुवर्णस्येति। सुवर्णपिण्डादेरित्यर्थः, सुवर्णस्य सर्वविकारानुगतत्वेन सुवर्णान्यत्वाकारणत्वात्, अतोऽस्य विकारकारणात् भेदात् सुवर्णपिण्डं कुण्डलं करोति इत्यादिप्रत्ययश्चास्यां कारणतायां प्रमाणमिति, बाह्यमन्यत्वकारणमुदाहृत्यान्तरमप्यन्यत्वकारणमुदाहरति-एवमेकस्येति। स्त्रीप्रत्ययस्य = आकारपरिणतबु-

शरीराणां, तानि च परस्परं सर्वेषां, तैर्य्यग्यौनमानुषदैवतानि च परस्परार्थत्वाद्, इत्येवं नव कारणानि, तानि च यथासम्भवं पदार्थान्तरेष्वपि योज्यानि, योगाङ्गानुष्ठानं तु द्विधैव कारणत्वं लभत इति ॥ २८ ॥

तत्र योगाङ्गान्यवधार्य्यन्ते—

भास्वती ।

रणम्, अन्यरूपेण बुभुत्सा यत्रेप्सिता तत्रान्यत्वसाधकानि निमित्तानि–अन्यत्वकारणम्, तथैव धृतिकारणम्, उदाहरणैः स्पष्टमन्यत् ॥ २८ ॥

यमादीन्यष्टौ योगाङ्गान्यवधारयति—तत्रेति । अङ्गसमष्टिरेवाङ्गी, न चाङ्गेभ्यः पृथ-

तत्त्ववैशारदी ।

नन्वाधाराधेयभावरहितानां कुतस्तत्त्वमित्यत आह—"परस्परार्थत्वाद्" इति । मनुष्यशरीरं हि पशुपक्षिमृगसरीसृपस्थावरोपयोगेन ध्रियते, एवं व्याघ्रादिशरीरमपि मनुष्यपशुमृगादिशरीरोपयोगेन, एवं पशुपक्षिमृगादिशरीरमपि स्थावराद्युपयोगेन, एवं देवशरीरमपि मनुष्योपहृतच्छागमृगकपिञ्जलमांसाज्यपुरोडाशसहकारशाखाप्रस्तरादिभिरिज्यमानं तदुपयोगेन, एवं देवताऽपि वरदानवृष्ट्यादिभिर्मनुष्यादीनि धारयतीत्यस्ति परस्परार्थत्वमित्यर्थः, शेषं सुगमम् ॥ २८ ॥

सम्प्रति न्यूनाधिकसङ्ख्याव्यवच्छेदार्थं योगाङ्गान्यवधारयति—"तत्र योगाङ्गान्यव-

पातञ्जलरहस्यम् ।

राणि सर्वस्य कार्यं स्यात, सर्वं सर्वस्य कारणमित्युक्तिमाश्रित्याह–परस्परार्थत्वादिति ! उत्पादकाशुद्धिक्षयत्वेन द्विधेत्यर्थः ॥ २८ ॥

वार्त्तिकम् ।

द्विद्रव्यस्य वृत्त्याख्यस्यैकजातीयस्य मूढत्वादिधर्माणामन्यत्वे भिन्नत्वेऽविद्याऽऽदिचतुष्टयं कारणमित्यर्थः, तत्र मोहः कर्त्तव्याकर्त्तव्यशून्यता दुःखत्वसुखत्वे दुःखित्वसुखित्वे माध्यस्थ्यं रागद्वेषमोहशून्यता, धृतिकारणमिति । शरीरमिन्द्रियाणाम् आश्रयविधया धारकं तानि चेन्द्रियाणि तस्य शरीरस्य योगक्षेमनिर्वाहकत्वेन धारकाणि, एवं पृथिव्यादीनि महाभूतान्याधारतयैव शरीराणां धारकाणि, तानि च परस्परं सर्वेषामिति, तानि च महाभूतान्यन्योन्यं सर्वेषां सर्वाणि धारकाणि आकाशं वायोर्धारकं वक्रवात्या च छिद्राकाशस्य धारिका छिद्रस्य तत्तन्त्रत्वात् तदाश्रितत्वाच्च, एवं वायुस्तेजोधारकः तेजश्चावरणादिरूपमण्डान्तर्वर्त्तिवायूनां धारकमित्यादिरूपेण व्याख्येयम्, तथा तैर्यग्योनमानुषदैवतानि च शरीराणि परस्परं धारकाणि ; आश्रयाश्रयिभावाभावेऽपि यज्ञवृष्ट्यादिभिरन्योन्यमुपकारकत्वात्,

'देवान् भावयतानेन ते देवा भावयन्तु व' --

इत्यादिभ्य इत्यर्थः, अथैवं स्थितिकारणाद् धृतिकारणस्य कथं भेद इति ? उच्यते—कार्यानुप्रवेशाप्रवेशाभ्याम् अवान्तरभेदात् स्थितिहेतुर्हि पुरुषार्थोहारादिर्मतः शरीराद्यविभक्तः सन्नेव तानि स्थापयति धृतिहेतुश्च शरीरादिरिन्द्रियादीननुप्रविश्यैव तानि धारयतीति महान् विशेष इति, उपसंहरति— इत्येवमिति । यथायोग्यमेभिरेव कारणत्वैरविद्याकर्मजीवेश्वरादीनां सर्वकारणत्वप्रतिपादिकाः श्रुतिस्मृतयो व्याख्येया इत्याशयवानाह—तानि च यथासम्भवमिति । आधुनिकास्तु–उत्पाद्यविकार्याप्यसंस्कार्यरूपैश्चतुर्विधं कार्यमाहुः, तैस्तु नवानामेव कार्याणां चतुर्धा विभागः कृत इति, प्रकृतमुपसंहरति—योगाङ्गेति ॥ २८ ॥

सूत्रान्तरमवतारयति—तत्रेति ।

**यमनियमासनप्राणायामप्रत्याहारधारणा-**
**ध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥**

यथाक्रममेतेषामनुष्ठानं स्वरूपं च वक्ष्यामः ॥ २६ ॥

तत्र—

**अहिंसासत्यमस्तेयब्रह्मचर्य्यापरिग्रहा यमाः ॥ ३० ॥**

तत्राहिंसा = सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः, उत्तरे च यमनि-

भास्वती ।

गङ्गी अस्ति, यमादीनां सर्वेषां चित्तस्थैर्यकरत्वाच्चित्तनिरोधरूपस्य योगस्य तान्यङ्गानि, तत्राप्यस्त्यन्तरङ्गबहिरङ्गरूपो भेद इति, यथा—पञ्चाङ्गस्य प्राणस्याद्यमङ्गं "प्राण"संज्ञयाऽभिहितं तथा योगाख्यस्य समाधेरपि चरमाङ्गं समाधिशब्देन संज्ञितमिति ॥ २९ ॥

तत्रेति । सर्वथा कायेन मनसा वाचा सर्वदा प्राणात्ययादिसङ्कटकालेऽपीत्यर्थः, स्था-

तत्त्ववैशारदी ।

धार्य्यन्त" इति "यमेत्यादि-अङ्गानीत्यन्तं" सूत्रम्, अभ्यासवैराग्यश्रद्धावीर्य्यादयोऽपि यथायोगमेतेष्वेव स्वरूपतो नान्तरीयकतया चान्तर्भावयितव्याः ॥ २९ ॥

यमनियमाद्यङ्गान्युद्दिश्य यमनिर्देशकं सूत्रमवतारयति—"तत्र" इति । "अहिंसेत्यादि-यमा"इत्यन्तं सूत्रम्, योगाङ्गमहिंसामाह-"सर्वथा" इति । ईदृशीमहिंसां स्तौति—"उत्तरे च" इति । तन्मूला इति = अहिंसामपरिपाल्य कृता अप्यकृतकल्पाः; निष्फलत्वादित्यर्थः,

पातञ्जलरहस्यम् ।

अष्टावङ्गानीतिप्रसिद्धिमाश्रित्याह-यमेति । स्पष्टम् ॥ २९ ॥

यम उपरम इत्यस्य रूपं यमा इति, उपरम्यन्ते निवर्त्यन्ते विषयेभ्यो मनसेन्द्रियाणीति यमास्ते चाहिंसाऽऽदयः पञ्चेत्याह-तत्रेति । उत्तरे च नत्र, तन्मूलाऽहिंसा, एतदेव

वार्त्तिकम् ।

"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि", पूर्वपादोक्तान्यन्तरङ्गाणि अभ्यासवैराग्यश्रद्धाप्राणायामादीन्यस्य पादस्यादावुक्तानि मध्यमसाधनानि, तपःस्वाध्यायेश्वरप्रणिधानानि अत्यन्तबहिरङ्गैरनुक्तसाधनैः सह पिण्डीकृत्य योगज्ञानोभयसाधनतयाऽत्रोच्यन्त इत्यपौनरुक्त्यम्, क्रियासाधननिरूपणं तूत्तमसध्यमाधमाधिकारभेदात्, तत्र वैराग्यस्य सन्तोषे प्रवेशः श्रद्धाऽऽदीनां च तपआदिषु परिकर्मणां च धारणाऽऽदित्रिक इति, श्रवणमननयोश्च प्रमाणविधयैव ज्ञानहेतुत्वं साक्षादस्तीत्याशयेनाशुद्धिक्षयद्वारकेषु ज्ञानसाधनेषु न ते परिगणिते इति मन्तव्यम्, भाष्ये यथाक्रममेषामनुष्ठानमिति कर्तव्यमिति शेषः, अयं तूत्सर्ग एव ईश्वरप्रसादाज्जितोत्तरभूमिकस्य नाधरभूमिषु विनियोग इति भाष्ये वक्तव्यत्वात्, अन्यथा बहिरङ्गान्तरङ्गविभागप्रतिपादनवैयर्थ्यापत्तेश्चेति ॥ २९ ॥

उत्तरसूत्रजातमवतारयति—स्वरूपं चेति । स्वरूपं च यथाक्रममेषामतः परं वक्ष्यामइत्यर्थः,

तत्र "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः", योगाङ्गभूतां प्रकृष्टामहिंसां लक्षयति—तत्राहिंसा सर्वथेति । आश्रमविहितनित्यकर्माविरोधेनेति विशेषणीया, शौचादिषु क्षुद्रजन्तुहिंसाया अपरिहार्यत्वात्, अत एव योगिनां प्राणायामादिकं तत्पापक्षालनाय नित्यतया शास्त्रे विहितमिति, अहिंसाया अविरोधेनैव सत्यादयो यमनियमा अनुष्ठेया इति प्रतिपादनाय तस्याः श्रेष्ठत्वमाह—उत्तरे चेति । तन्मूला इति । सैव मूलं प्रयोजनं येषामिति विग्रहः,

**यमास्तन्मूलास्तत्सिद्धिपरतया तत्प्रतिपादनाय प्रतिपाद्यन्ते, तदवदातरूपकरणायैवोपादीयन्ते, तथा चोक्तं—"स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपाम् अहिंसां करोति" सत्यं=यथाऽर्थे वाङ्मनसे,**

भास्वती।

वरजङ्गमादिसर्वप्राणिनामनभिद्रोहः=पीडनबुद्धिराहित्यमित्येव योगाङ्गभूताऽहिंसा, उत्तरे च **यमनियमास्तन्मूलाः**=साऽहिंसा मूलं येषान्ते, **तत्सिद्धिपरतया**=तस्या अहिंसायाया सिद्धिपरता तया सिद्धिपरत्वेन हेतुनेत्यर्थः, तत्प्रतिपादनाय=अहिंसानिष्पत्तये, प्रतिपाद्यन्ते=गृह्यन्ते, तदवदातकरणायैव=अहिंसाया निर्मलीकरणायैव, उपादीयन्ते योगिभिरिति शेषः, तथा चोक्तम्—स इति। ब्रह्मविद् यथा यथा बहूनि व्रतानि समादित्सते=समादातुमिच्छति, तथा तथा प्रमादकृतेभ्यः=क्रोधलोभमोहकृत्येभ्यः, हिंसाऽऽदिनिदानेभ्यः=कर्मभ्यो निवर्त्तमानः स तामेवाहिंसामवदातरूपां निर्मलां करोतीति, सत्यमिति। यथाऽर्थे वाङ्मनसे, प्रमाणप्रमितविषयाणामेव मनसोपादानं नाप्रमितस्येति यथाऽर्थं मनः, यन्मनसि स्थितं तस्यैवाभिधानं नान्यस्येति यथाऽर्था वाक्, परत्रेति। परत्र स्व-

तत्त्ववैशारदी।

तत्सिद्धिपरतयैवानुष्ठानम्, अहिंसा चेन्मूलमुत्तरेषां कथं तेऽहिंसासिद्धिपरा इत्यत आह—"तत्प्रतिपादनाय" इति। सिद्धिः=ज्ञानोत्पत्तिरित्यर्थः,

स्यादेतद्—अहिंसाज्ञानार्था यद्युत्तरे, कृतं तैरन्यत एव तदवगमादित्यत आह—"तदवदात" इति। यद्युत्तरे नानुष्ठीयेरन् अहिंसा मलिना स्यादसत्यादिभिरित्यर्थः, अत्रैवागमिकानां सम्मतिमाह—"तथा चोक्तम्" इति। सुगमम्, सत्यलक्षणमाह—"यथाऽर्थे वाङ्मनसे" इति। यथाशब्दं साकाङ्क्षं पूरयति-"यथा दृष्टम्" इति। प्रतिसम्बन्धिनं तथाशब्दं-

पातञ्जलरहस्यम्।

करोत्यन्तेन स्पष्टयतीत्यर्थः, यथाऽर्थे अर्थाव्यभिचारिणी प्रत्यक्षमनुमानं च शाब्दं चेति त्रयाणामविप्लवो यत्र तत्सत्यम्, एतदेव द्रढयति—परत्रेत्यादि—ब्रूयादित्यन्तेन, म्लेच्छो वा यदपशब्द इत्युक्तेः, आर्यं प्रति म्लेच्छभाषा प्रतिपत्तिबन्ध्या ज्ञानाजननी यथाऽङ्गुल्यग्रे हस्तियूथशतमास्त इति, अस्तेयं सप्रतियोगिकमाह-स्तेयमिति। गुप्तेन्द्रियस्य जुगुप्सितस्य सर्वदा गोपनीयस्य वस्त्रादिना वा, तच्चाष्टधा—

वार्त्तिकम्।

अतोऽहिंसासिद्धिपरतयैव शास्त्रेषु इतरयमनियमाः प्रतिपाद्यन्त इति तत्सिद्धिपरतयैवेत्यस्य विवरणम्, तत्प्रतिपादनायेति। सत्यादिभिरहिंसा सिध्यतीति प्रतिपादनायेति तस्यार्थः, तथा तदवदातरूपकरणायाहिंसा निर्मलीकरणायैव योगिभिरुपादीयन्तेऽनुष्ठीयन्ते चेत्यर्थः, शौचतपआद्यकरणे च नरकादिना हिंसाऽप्यन्ततोऽस्तीति मन्तव्यम्, तथा चेत्यादि, सुगमम्, तथा मोक्षधर्मेऽप्युक्तम्—

"यथा नागपदेऽन्यानि पदानि पदगामिनाम्।
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे॥
एवं सर्वमहिंसायां धर्मार्थमपि धीयते।" इति,

सत्यं लक्षयति—सत्यमिति। यथाऽर्थत्वं व्याचष्टे-यथा दृष्टमिति। दर्शनादीनां प्रमात्वमपि विवक्षितम्, भ्रान्ता वेति वक्ष्यमाणत्वात्, अज्ञाननिमित्तकपापान्तरवद् भ्रान्तिनि-

यथा दृष्टं यथाऽनुमितं यथा श्रुतं तथा वाङ् मनश्चेति, परत्र स्वबोधसङ्क्रान्तये वागुक्ता सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिबन्ध्या वा भवेदिति, एषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय, यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत् पापमेव भवेत्, तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टतमं प्राप्नुयात्, तस्मात्परीक्ष्य सर्वभूतहितं सत्यं ब्रूयात्,

भास्वती ।

बोधसङ्क्रान्तये या वाक् प्रयुज्यते सा वाग् यदि वञ्चिता = वञ्चनाय प्रयुक्ता, भ्रान्ता = भ्रान्तिजननाय सत्याच्छादनाय प्रयुक्ता, तथा प्रतिपत्तिबन्ध्या = अस्पष्टार्थपदैरुच्यमानत्वात् स्वबोधाच्छादिका न स्यात्तदा सत्यं भवेन्नान्यथा, मनसि तात्त्विकसत्याधानं मनोभावस्य च ऋज्वा स्पष्टया प्रतिबोधसमर्थया च वाचा भाषणं सत्यसाधनमित्यर्थः, एषेति । किञ्च—एषा यथार्थाऽपि वाग् न परोपघाताय प्रयोक्तव्या, स्मर्यते च—

तत्त्ववैशारदी ।

प्रतिक्षिपति—"तथा वाङ् मनश्च" इति । विवक्षायां कत्तव्यायाम् इति, अन्यथा तु न सत्यम्, एतत्सोपपत्तिकमाह—"परत्र" इति । परत्र पुरुषे स्वबोधसङ्क्रान्तये = स्वबोधसदृशबोधजननाय वाग् उक्ता = उच्चारिता, अतः सा यदि न वञ्चिता = वञ्चिका यथा द्रोणाचार्य्येण स्वतनयाश्वत्थाममरणम्, आयुष्मन् सत्यधन ! अश्वत्थामा हतः ? इति पृष्टस्य युधिष्ठिरस्य प्रतिवचनं हस्तिनमभिसन्धाय, सत्यं हतोऽश्वत्थामेति तदिदमुक्तस्योत्तरं न युधिष्ठरस्य स्वबोधं सङ्क्रामयति स्वबोधो ह्यस्य हस्तिहननविषय इन्द्रजन्मा, न चासौ सङ्क्रान्तः, किन्त्वन्य एव तस्य तनयवधबोधो जात इति, भ्रान्ता वा = भ्रान्तिजा, भ्रान्तिश्च विवक्षासमये वा ज्ञेयार्थावधारणसमये वा, प्रतिपत्त्या बन्ध्या प्रतिपत्तिबन्ध्या यथाऽऽर्य्यान् प्रति म्लेच्छभाषा प्रतिपत्तिबन्ध्या निष्प्रयोजना वा स्यादिति यथाऽनपेक्षिताभिधाना वाक्, तत्र हि परत्र स्वबोधस्य सङ्क्रान्तिरप्यसङ्क्रान्तिरेव, निष्प्रयोजनत्वादिति, एवंलक्षणमपि सत्यं परापकारफलं सत्याभासं न तु सत्यमित्याह—"एषा" इति । तद्यथा—सत्यतपसस्तस्करैः सा-

पातञ्जलरहस्यम् ।

"श्रवणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च" इति,

वार्त्तिकम् ।

मित्तकासत्यस्यापि पापत्वौचित्यात्, मनश्चेति । मनश्च तथा तात्पर्ययुक्तमित्यर्थः, तेन यदा दृष्टादिविपरीतार्थबोधने तात्पर्यं तदा यथाऽर्था वागसत्यैव भवति यथाऽश्वत्थामा हत इति युधिष्ठिरवाक्यं, तत्र हि गजविषये वाक्यस्य सत्यत्वेऽपि मनसो न सत्यत्वं दृष्टविपरीतद्रोणपुत्रहनने तात्पर्यादिति, सत्यस्योदाहरणं सामान्यत आह—परत्रेत्यादिना-इतीत्यन्तेन, इतिशब्दात्पूर्वं तदा सत्यमिति पूरणीयम्, स्वविनोदाय गीतावाक्यादीनां परप्रतिपत्तिबन्ध्यत्वादावपि नासत्यत्वमित्यतस्तद्व्यावर्त्तनार्थं परत्र स्वबोधसंक्रान्तय इत्युक्तम्, वञ्चिता विपरीतार्थबोधनेच्छया प्रयुक्ता भ्रान्ता भ्रमेण प्रयुक्ता प्रतिपत्तिबन्ध्या अप्रसिद्धपदादिभिर्न बोधजननक्षमेत्यर्थः, यथोक्तसत्यलक्षणे लोकहितत्वमपि विशेषणं देयमित्याह—एषेति । एषा वाक् प्रवृत्ता ब्रह्मणा निर्मिता, अतो यदि च, एवमपि यथाऽर्थाऽपि, अभिधीयमानोच्चार्यमाणेत्यादिरर्थः, सा च वाक् यथा दस्युभिः सार्थगमनं पृष्टस्य सार्थगमनाभिधानम् इत्यादिरूपा, पुण्याभासेन पुण्यवत्प्रतीयमानेन, तत्र हेतुः पुण्यप्रतिरूपकेणेति पुण्यसदृशेनेत्यर्थः, कष्टं दुःखात्मकं तमो नरकमित्यर्थः, सत्यं यथाऽर्थं ब्रूयादित्यर्थः, अत्र चासत्यनिवृत्तिमात्रं सत्यशब्देन वित्र-

**स्तेयम्=अशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं, तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति, ब्रह्मचर्यम्=गुप्तेन्द्रियस्योपस्थस्य संयमः, विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रह, इत्येते यमाः ॥ ३० ॥**

भास्वती ।

"सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः" इति,

हिंसादूषितं सत्यं पुण्याभासमेव, तेन पुण्यप्रतिरूपकेण=पुण्यवत् प्रतीयमानेन सत्येन कष्टं तमः=कष्टबहुलं निरयं प्राप्नुयाद्, स्तेयमिति । न हि चौर्यविरतिमात्रमस्तेयं किन्तु—अग्रहणीयविषयेऽस्पृहारूपं तत्, ब्रह्मचर्यमिति । गुप्तानि=रक्षितानि संयतानि चक्षुरादीन्द्रियाणि येन तादृशस्य स्मरणकीर्त्तनादिरहितस्य यमिन उपस्थेन्द्रियसंयमो-ब्रह्मचर्यम्, विषयाणामिति । अर्जनरक्षणादिषु दोषो दुःखं तद्दर्शनाद् देहरक्षाऽतिरिक्तस्य विषयस्यास्वीकरणमपरिग्रहः, स्मर्यते च—"प्राणयात्रिकमात्रः स्याद्" इति ॥ ३० ॥

तत्त्ववैशारदी ।

र्थगमनं पृष्टस्य सार्थगमनाभिधानमिति, अभिधीयमाना=उच्चार्य्यमाणा, शेषं सुगमम्, अभावस्य भावाधीननिरूपणतया स्तेयलक्षणमाह—"स्तेयमशास्त्रपूर्वकम्" इति । विशेषेण सामान्यं लक्ष्यत इत्यर्थः, मानसव्यापारपूर्वकत्वाद्वाचनिककायिकव्यापारयोः प्राधान्यान्मनोव्यापार उक्तः, 'अस्पृहारूपम्' इति । ब्रह्मचर्य्यस्वरूपमाह—"गुप्त" इति । संयतोपस्थोऽपि हि स्त्रीप्रेक्षणतदालापकन्दर्पायतनतदङ्गस्पर्शनसक्तो न ब्रह्मचर्य्यवानिति, तन्निरासायोक्तं—"गुप्तेन्द्रियस्य" इति । इन्द्रियान्तराण्यपि तत्र लोलुपानि रक्षणीयानीति, अपरिग्रहस्वरूपमाह—"विषयाणाम्" इति । तत्र सङ्गदोष उक्तः 'भोगाभ्यासमनु विवर्द्धन्ते रागाः कौशलानि चेन्द्रियाणाम्' इति, हिंसालक्षणश्च दोषः "नानुपहत्य भूतान्युपभोगः सम्भवति" इति, अशास्त्रीयाणामयत्नोपनतानामपि विषयाणां निन्दितप्रतिग्रहादिरूपार्जनदोषदर्शनात्, शास्त्रीयाणामप्युपार्जितानां च रक्षणादिदोषदर्शनादस्वीकरणमपरिग्रहः ॥ ३० ॥

पातञ्जलरहस्यम् ।

स्त्रीविषयेन्द्रियाणि लोलुपानि रक्षणीयानीति भावः ॥ ३० ॥

वार्त्तिकम् ।

क्षितं तस्यैव तदसम्भवात् अन्यथाऽसत्यस्य वचनेऽपि यमप्रसङ्गाच्चेति, अस्तेयं लक्षयितुमभावस्य प्रतियोगिनिरूपणाधीननिरूपणतयाऽऽदौ स्तेयं लक्षयति=स्तेयमिति । प्रतिग्रहव्यावर्त्तनायाशास्त्रपूर्वकमिति, अत्र चौर्येणापि स्वत्वं जायत इत्यवगम्यते, अथ वा स्वीकरणं ममेति बुद्धिमात्रं भ्रमसाधारणमिति, तत्प्रतिषेधस्तन्निवृत्तिस्तथाऽप्यस्पृहामुपलक्ष्याह—सस्पृहारूपमिति । ब्रह्मचर्यं लक्षयति—गुप्तेति । गुप्तेन्द्रियस्येति स्वोक्तस्य विवरणमुपस्थस्येति, संयम-इत्यत्रोपसर्गेणान्येन्द्रियसाहित्यमुपस्थस्य ग्राह्यं तेनोपस्थस्य विषये सर्वेन्द्रियव्यापारोपरम-इति लक्षणम्, तथा चोक्तं दक्षसंहितायाम्—

"ब्रह्मचर्यं सदा रक्षेदष्टधालक्षणं पृथक् ।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥" इति,

प्रकृष्टमीक्षणं प्रेक्षणं रागपूर्वकं दर्शनमित्यर्थः, अपरिग्रहं लक्षयति—विषयाणामिति ।

ते तु—

**जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ३१**

तत्राहिंसा जात्यवच्छिन्ना-मत्स्यबन्धकस्य मत्स्येष्वेव नान्यत्र हिंसा, सैव देशावच्छिन्ना=न तीर्थे हनिष्यामीति, सैव कालावच्छिन्ना=न चतुर्दश्यां न पुण्येऽहनि हनिष्यामीति, सैव त्रिभिरुपरतस्य समयावच्छिन्ना=देवब्राह्मणार्थे नान्यथा हनिष्यामीति, यथा च क्षत्रियाणां युद्ध एव हिंसा नान्यत्रेति, एभिर्जातिदेशकालसमयैरनवच्छिन्ना अहिंसाऽऽदयः सर्वथैव परिपालनीयाः, सर्वभूमिषु-सर्वविषयेषु, सर्वथैवाविदितव्यभिचाराः सार्व-

भास्वती ।

ते त्विति । यमानुष्ठानस्य विशेषमाह—सार्वभौमा यमा महाव्रतमित्युच्यते, सुग-

तत्त्ववैशारदी ।

सामान्यत उक्ता यादृशाः पुनर्योगिनामुपादेयास्तादृशान् वक्तुं सूत्रमवतारयति-"ते तु" जातीत्यादि-महाव्रतान्तं" सूत्रम् , सर्वासु जात्यादिलक्षणासु भूमिषु विदिताः सार्वभौमाः,

पातञ्जलरहस्यम् ।

जात्याद्यवच्छिन्नासु चतसृषु हिंसासु योगिनामत्यन्ता प्रवृत्तिः सा महाव्रतमिति परिभाषितमिति परिभाषासूत्रम् , एवं सत्यं यत्र त्रैवर्णिकानां वधस्तत्र मिथ्या प्रवक्तव्यमिति, तदपि

वार्त्तिकम् ।

परिग्रहे हिंसाऽऽद्या अपि दोषास्तेषां दर्शनादिति विशेषणं दम्भाशक्त्यादिनिमित्तकास्वीकरणेऽतिव्याप्तिनिरासायेति, हिंसा चात्र दातृप्रभृतीनां बोध्या ॥ ३० ॥

उक्तानां यमानां विशेषप्रतिपादकं सूत्रं पूरयित्वा पठति-ते त्विति—

"जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्", समयः संकेतो वक्ष्यमाणनियमविशेष इति यावत्, जात्यादिभिश्चतुर्भिरनवच्छिन्नास्ते यमाः सार्वभौमाः सर्वास्ववस्थासु अनुगता अतो महाव्रतमितिसंज्ञिता इत्यर्थः, अन्वर्थसंज्ञायाः फलं च प्रकृष्टयोगिभिरेवमनुष्ठानमिति, मुख्यमहिंसाऽऽख्ययममाश्रित्य जात्यवच्छिन्नादीन् व्याचष्टे-तत्राहिंसेति । जातिर्मत्स्यत्वादिः तया परम्परया अवच्छिन्ना मत्स्याद्यतिरिक्तस्याहिंसेत्यर्थः, एवमुत्तरास्वपि परम्परयैवावच्छिन्नत्वं बोध्यम्, सैव देशेति । सैवाहिंसैव,एवमुत्तरयोरपि, त्रिभिरुपरतस्येति साङ्कर्यनिरासायोक्तम्, त्रिभिर्जात्याद्यवच्छेदैः परम्परया शून्यस्य पुरुषस्येत्यर्थः, समयावच्छिन्नस्योदाहरणद्वयमाह—देवेति । यथा चेति । यथा चेत्यर्थः, अहिंसाया इवान्येषामपि यमानां जात्याद्यवच्छिन्नत्वमूहनीयमित्याशयः, सूत्रतात्पर्यार्थमाह—एभिरिति । सार्वभौमशब्दस्यार्थमाह-सर्वभूमिष्विति । सर्वभूमिष्वित्यस्य विवरणं सर्वविषयेष्विति, विषया जात्यादयो यथोक्ताः, अस्यापि विवरणं सर्वथैवेत्यादि, ननु कुशसमिदाहरणादिवैधहिंसानामपि परित्यागे नित्यकर्मबाधेन प्रत्यवायापत्तिरिति ? मैवम्—

सर्वाणि भूतानि सुखे रमन्ते सर्वाणि दुःखेषु तथोद्विजन्ति ।
तेषां भयोत्पादनजातखेदः कुर्यान्न कर्माणि हि जातवेदः ॥

इति मोक्षधर्मादिवाक्यैर्जातवेदस्योत्पन्नात्मज्ञानस्य योगिनः कारुणिकस्य बाह्यकर्मत्यागानुज्ञयाऽयोगिनामेव बाह्यकर्माकरणे प्रत्यवायाद् योगरूपस्यैव नित्यकर्मणो मन्वादिभिर्विहितत्वाच्च, यथा मनौ—

"एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः ।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥" इति,

भौमा महाव्रतमित्युच्यते ॥ ३१ ॥

## शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥३२॥

तत्र शौचं मृज्जलादिजनितं मेध्याभ्यवहरणादि च बाह्यम्, आभ्यन्तरं चित्तमलानामाक्षालनम्, सन्तोषः = सन्निहितसाधनादधिकस्यानुपादित्सा, तपः = द्वन्द्वसहनं, द्वन्द्वश्च = जिघत्सापिपासे, शीतोष्णे, स्थानासने

भास्वती ।

मम्, समयः = नियमः, अविदितव्यभिचाराः = स्खलनशून्याः ॥ ३१ ॥

नियमान् व्याचष्टे—तत्रेति । मेध्याभ्यवहरणादि = मेध्यानां पवित्राणां पर्युषितपूतिवर्जितानामभ्यवहरणमाहारः, आदिशब्देनामेध्यसंसर्गविवर्जनमपि ग्राह्यम्, बाह्याशौचादपि चित्तमालिन्यम्, ततो बाह्यं शौचमपि विहितम्, चित्तमलानां = मदमानमात्सर्येर्ष्याऽसूयामुदितादीनां क्षालनम्, सन्तोषः सन्निहितसाधनात् = प्राप्तविषयाद्, अधिक-

तत्त्ववैशारदी ।

अहिंसाऽऽदय इति । अन्यत्राप्यवच्छेद ऊहनीयः, सुगमं भाष्यम् ॥ ३१ ॥

शौचादिनियममाचष्टे-शौचेत्यादि-नियमा इत्यन्तं सूत्रम्, व्याचष्टे—"शौचम्" इति । आदिशब्देन गोमयादयो गृह्यन्ते गोमूत्रयावकादि मेध्यं, तस्याभ्यवहरणादि, आदिशब्दाद् ग्रासपरिमाणसङ्ख्यानियमादयो ग्राह्याः, मेध्याभ्यवहरणादिजनितमिति वक्तव्ये, मेध्या-

पातञ्जलरहस्यम् ।

योगिनां निषिद्धमिति, तत्र समाध्यादिना निर्वहति चेत् तदा महाव्रतमिति भावः ॥ ३१ ॥

नियम्यन्ते कर्त्तव्यतया बुद्धौ निश्चीयन्तेऽमी इति नियमास्तान् सर्वान् हि सूत्रारूढान् करोति,

"मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरमि"ति,

द्विविधं शौचमिति । गोमूत्रयावकं = गोमूत्रसिद्धं यवान्नम्, अभ्यवहरणं = भक्षणं तथा

वार्त्तिकम् ।

अत एव वशिष्ठेन बाह्याभ्यन्तरकर्मणोर्विकल्प उक्तः—

"बाह्यमाभ्यन्तरं चेति द्विविधं कर्म वैदिकम् ।
तयोरन्यतरत् कुर्यान्नित्यं कर्म यथाविधि ॥" इति,

तयोश्चाभ्यन्तरं कर्म हिंसाऽऽद्यभावाद् ऐकाग्र्यरूपत्वाच्च श्रेष्ठं गीतादिषूक्तम्—

'श्रेयान् द्रव्यमयाद्यज्ञाद् ज्ञानयज्ञः परंतप' !

इत्यादिना भाष्यकारश्च वैधहिंसाया अपि पापहेतुत्वमग्रे प्रतिपादयिष्यति, 'शौचादिषु चापरिहार्या हिंसा चाश्रमविहिता वे'ति न तया व्रतलोपः स्वाश्रमधर्माविरोधित्वेन विशेषितत्वादिति ॥ ३१ ॥

यमान् व्याख्याय नियमान् व्याचष्टे—

"शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः", स्थूलशरीरस्यैव बाह्यान्तररूपेणादौ द्विविधं बाह्यशौचं दर्शयति-मृज्जलेति । मेध्यं गोमूत्रयवाग्वादि तेषां भक्षणं मेध्याभ्यवहरणम् आदिशब्दादुपवासादयो ग्राह्याः, मानसमपि शौचमाह-आभ्यान्तरमिति । सत्त्वस्वभावस्य चित्तस्य मला रागद्वेषादयस्तेषां मैत्र्यादिना प्रक्षालनं प्रसाद इति प्रागुक्तमित्यर्थः, सन्तोषं व्याचष्टे-संनिहितेति । अत्यावश्यकप्राणयात्रानिर्वाहकविद्यमानसाधनादतिरिक्तस्यालिप्सेत्यर्थः, द्वन्द्वसहिष्णुतेति । शास्त्रोक्तरीत्या निद्वर्षं द्वन्द्वसेवनमित्यर्थः, द्वन्द्वान्याह-जिघत्सेति ।

काष्ठमौनाकारमौने च, व्रतानि चैव यथायागं कृच्छ्रचान्द्रायणसान्तपनादीनि, स्वाध्यायः = मोक्षशास्त्राणामध्ययनं प्रणवजपो वा, ईश्वरप्रणिधानं = तस्मिन् परमगुरौ सर्वकर्मार्पणं-

"शय्यासनस्थोऽथ पथि व्रजन् वा स्वस्थः परिक्षीणवितर्कजालः ।

भास्वती ।

स्यानुपादित्सा = तुष्टिमूला ग्रहणेच्छाशून्यता, उक्तञ्च—

"सर्वतः सम्पदस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतेव भूः" इति,

तपः = द्वन्द्वजदुःखसहनम्, स्थानं = निश्चलावस्थानम्, तज्जमासनजञ्च यद् दुःखं तस्य सहनम्, काष्ठमौनम् = सर्वविज्ञप्तित्यागः, आकारमौनम् = वाग्विज्ञप्तित्यागः, ईश्वरप्रणिधानम् = ईश्वरे सर्वकर्मार्पणम् = कर्मफलाभिसन्धिशून्यता, संन्यस्तफलस्य निष्कामस्य योगिनो लक्षणमाह—शय्येति । सर्वावस्थाऽवस्थितो योगी स्वस्थः = आत्म-

तत्त्ववैशारदी ।

व्यवहरणादि चेत्युक्त.म्, कार्य्यं कारणोपचारात्, चित्तमलाः = मदमानासूयाऽऽदयः, तदपनयो मनःशौचम् प्राणयात्रामात्रहेतोरभ्यधिकस्यानुपादित्सा सन्तोषः प्रागेव स्वीकरणपरित्यागादिति विशेषः, काष्ठमौनम् = इङ्गितेनापि स्वाभिप्रायाप्रकाशनम्, अवचनमात्रम् आकारमौनम् "परिक्षीणवितर्कजाल" इति । वितर्को वक्ष्यमाणः, संशयविपर्य्ययौ चेति, एतावता

पातञ्जलरहस्यम् ।

प्राणयात्रावतां देहे प्राणास्तिष्ठन्ति, ननु संतोषापरिग्रहयोः को विशेषस्तत्राह—प्रागिति । अर्जनादिदोषदर्शनादस्वीकरणे यदृच्छालाभसंतोषोऽपरिग्रहः, अत्र निर्वाहानतिरिक्तः परिग्रहः

वार्त्तिकम् ।

जिघत्सा = बुभुक्षा, यद्यपि शीतोष्णादिवत्परस्परविरुद्धत्वं बुभुक्षापिपासयोर्नास्ति तथाऽपि मिथुनवदेव पारिभाषिकद्वन्द्वता, स्थानमूर्ध्वावस्थानम्, आसनं चोपवेशनम्, काष्ठमौनमिङ्गितेनापि स्वाभिप्रायाप्रकाशनम्, आकारमौनं स्ववचनमात्रम्, एतानि शास्त्रोक्तव्रतेनैव सोढव्यानि न तु वृथेत्याशयेनाह-व्रतानि चैषामिति । स्वाध्यायव्याख्या सुकरा, तज्जपस्तदर्थभावनमितिप्रथमपादोक्तप्रणिधानव्यावृत्त्यर्थं द्वितीयपादाद्यसूत्रवाक्यार्थमेव प्रणिधानशब्दार्थं स्मारयति-तस्मिन्परमगुरौ सर्वकर्मार्पणमिति, एतच्च तत्रैव व्याख्यातम्, नन्वेवं तदर्थभावनरूपमेव प्रणिधानमर्थो भवतु? न-बहिरङ्गतायाः वक्ष्यमाणत्वात्, ईश्वरभावनं हि ध्यानरूपतया योगस्यान्तरङ्गमेव, त्रयमन्तर पूर्वेभ्यङ्ग इति वक्ष्यमाणसूत्रात् सर्वकर्मार्पणमेव मुख्यतो ध्येयं न त्वीश्वरतत्त्वम्, कुर्यात् कर्म संन्यासचिन्तन'मिति योगियाज्ञवल्क्यवाक्यात्,

"नाहं कर्त्ता सर्वमेतन्मनसा कुरुते तथा ।
एतद् ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥"

इति कौर्माच्च, ईश्वरस्तु सामान्यतस्तद्विशेषणतामात्रेण कर्त्तृत्वारोपेण च ध्येय इत्यतोयुक्ता तस्य योगबहिरङ्गतेति, तदेवं सूत्रगणोक्ता यमनियमा विष्णुपुराणादिष्वपि दर्शिताः,

"ब्रह्मचर्य्यमहिंसां च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां मनसो नयन् ॥
स्वाध्यायशौचसंतोषतपांसि नियतात्मवान् ।
कुर्वीत ब्रह्मणि तथा परस्मिन्प्रवणं मनः" ॥

इत्यादिभिः, एतेषु दशसु मध्य ईश्वरप्रणिधानस्य मुख्यतो योगाङ्गत्वमिति प्रतिपादनाय निर्विघ्नपरमात्मयोगहेतुत्वं तस्याह श्लोकेन-शय्यासनेति । ईश्वरप्रणिधानी तदनुग्रहात्सदैव

संसारबीजक्षयमीक्षमाणः स्यान्नित्यमुक्तोऽमृतभोगभागी" ॥

यत्रेदमुक्तं "ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" इति ॥ ३२ ॥

भास्वती ।

स्मृतिमान्, परिक्षीणवितर्कजालः = चिन्ताजालहीनः, संसारबीजस्य = अविद्यामूलकर्मणः क्षयं = निवृत्तिम्, ईक्षमाणः = क्षीयमाणं समंस्कारकर्म ईक्षमाण इत्यर्थः, नित्यतृप्तः = सदा निष्कामतानिःसङ्कल्पताजनितात्मवृत्तियुक्तः, अतोऽमृतभोगभागी = अमृतस्यात्मनः प्रत्यक्चेतनस्याधिगमात प्रमादरहिताच्चामृतभोगभाक् स्यात् ॥ ३२ ॥

तत्त्ववैशारदी ।

शुद्धाभिसन्धिरुक्तः, एते च यमनियमा विष्णुपुराण उक्ताः—

"ब्रह्मचर्य्यमहिंसां च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां मनसो नयन् ॥
स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान् ।
कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः ॥
एते यमाश्च नियमाः पञ्च पञ्च प्रकीर्त्तिताः ।
विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदा" इति ॥ ३२ ॥

पातञ्जलरहस्यम् ।

प्रोक्त इत्यंशतः परिग्रहोऽस्तीति भेदः, एते काष्ठमौनाकारमौने कर्तव्ये इति शेषः, तत्र ईश्वरप्रणिधानादिति भाष्यार्थः, निष्कामानां विमुक्तिदाः, अशुद्धिपरिक्षयादिति शेषः, धर्मेण पापमपनुदतीति श्रुतेः ॥ ३२ ॥

वार्त्तिकम् ।

योगयुक्तः स्यादिति श्लोकार्थः, स्वस्थः = परमात्मनिष्ठः, परमात्मार्पितकर्मणां मुख्यतस्तद्योगस्यैव कल्पनौचित्याद्, वितर्कजालो यो वक्ष्यमाणप्रतिपक्षभावनां विनाऽपि परिक्षीणो यस्य स तथा, संसारबीजानां संस्कारादीनां क्षयमनुदिनमुपलभमानः तथाऽमृतभोगभोगी त्यागी चेन्मुक्तिसुखानुभवितेत्येवंभूतो नित्यमुक्तः स्यादित्यर्थः, न केवलमीश्वरेऽर्पितकर्मण ऐश्वरयोग एव भवतिः अपि त्वीश्वरसाक्षात्कारद्वारा पूर्णत्वादिना तत्त्वसाक्षात्कारोऽपीत्युक्तमेव स्मारयति-यत्रेदमुक्तमिति । यत्रेश्वरयोगे, ननु यमनियमयोर्मध्ये यज्ञदानाद्यवचनान्न्यूनतेति चेद् ? न—

"देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते" ॥

इत्यादिवाक्येभ्योऽत्रानुक्तकर्मणां तपस्येवान्तर्भावात्, एवं योगिनामन्त्यागाभयदानादेरपि तपस्येवान्तर्भावः, देवब्राह्मणार्थहिंसाया अपि त्याज्यवचनेन च प्रकृष्टयोगिनां बाह्यकर्मणाम् अभावसिद्धिरिति, तदेवं यमाः पञ्च नियमाश्च पञ्च सर्वस्मृतिसिद्धाः प्रोक्ताः, तत्र यमानामभावरूपतया कालाद्यनवच्छिन्नत्वसम्भवात् सार्वभौमत्वमुक्तं; नियमानां तु प्रतिनियतकालावच्छिन्नतया न सार्वभौमत्वं सम्भवत्यतो नात्र महाव्रतरूपो विशेष उक्त इति, यथोक्तयोश्च यमनियमयोर्मध्ये निवृत्तिरूपतया शक्यसम्पादनत्वेन यमा एव परमहंसानामावश्यकाजडभरतादीनामप्यहिंसापालनस्य विष्णुपुराणादौ स्मरणाद् न तु नियमाः प्रवृत्तिरूपतया योगान्तरायत्वात्, तदुक्तं भागवते—

यमानभीक्ष्णं सेवेत नियमान् मत्परः क्व चित् ।

इति ॥ ३२ ॥

एतेषां यमनियमानाम्—

**वितर्कबाधने प्रतिपक्षभावनम् ॥३३॥**

यदाऽस्य ब्राह्मणस्य हिंसाऽऽदयो वितर्का जायेरन् हनिष्याम्यहमपकारिणम्, अनृतमपि वक्ष्यामि, द्रव्यमप्यस्य स्वीकरिष्यामि, दारेषु चास्य व्यवायी भविष्यामि, परिग्रहेषु चास्य स्वामी भविष्यामीति, एवमुन्मार्गप्रवणवितर्कज्वरेणातिदीप्तेन बाध्यमानस्तत्प्रतिपक्षान् भावयेद्-घोरेषु संसाराङ्गारेषु पच्यमानेन मया शरणमुपागतः सर्वभूताभयप्रदानेन योगधर्मः, स खल्वहं त्यक्त्वा वितर्कान् पुनस्तानाददानस्तुल्यः श्ववृत्तेन इति भावयेद्, यथा श्वा वान्तावलेही तथा त्यक्तस्य पुनराददान इति, एवमादि सूत्रान्तरेष्वपि योज्यम् ॥ ३३ ॥

**वितर्का हिंसाऽऽदयः कृतकारितानुमोदिता लोभक्रोधमोह-**

भास्वती ।

वक्ष्यमाणैर्वितर्कैर्यदाऽहिंसाऽऽदयो बाधिता भवेयुस्तदा प्रतिपक्षभावनया वितर्कान् निवारयेत्, सुगमं भाष्यम्, तुल्यः श्ववृत्तेन = कुक्कुरचरितेन तुल्यचरितोऽहम्, श्वेव वान्तावलेही = वान्तस्य भक्षकः, तपसो वितर्कः सौकुमार्यम्, स्वाध्यायस्य वृथावाक्यम्, ईश्वरप्रणिधानस्यानीश्वरगुणयुक्तपुरुषचारित्रभावना ॥ ३३ ॥

तत्त्ववैशारदी ।

श्रेयांसि बहुविघ्नानि' इत्येषामपवादसम्भवे तत्प्रतीकारोपदेशपरं सूत्रमवतारयति— "एतेषां यमनियमानाम्" इति । सूत्रं—"वितर्कबाधने प्रतिपक्षभावनम्" वितर्काणां भाष्ये नास्ति तिरोहितमिव किञ्चन ॥ ३३ ॥

तत्र वितर्काणां स्वरूपप्रकारकारणधर्मफलभेदान् प्रतिपक्षभावनाविषयान् प्रतिपक्षभावनास्वरूपाभिधित्सया सूत्रेणाह—"वितर्का इत्यादिना-प्रतिपक्षभावनम्"इत्यन्तेन, व्या·

पातञ्जलरहस्यम् ।

वितर्का इति । स्वाभीष्टसाधनत्वेनानुष्ठीयन्ते हिंसाऽऽदयः ते मृदुमध्याधिमात्रान्ता एका-

वार्त्तिकम् ।

उक्तेषु यमनियमेषु वक्ष्यमाणविघ्नस्य निवृत्त्युपायप्रतिपादकं सूत्रं पूरयित्वाऽवतारयति— एतेषां यमनियमानामिति ।

"वितर्कबाधने प्रतिपक्षभावनम्", वक्ष्यमाणवितर्कैर्यमादिबाधने सति वक्ष्यमाणं प्रतिपक्षभावनं कुर्यादित्यर्थः तदेतद्व्याचष्टे- यदाऽस्येति । विपरीतास्तर्का विचारा येष्विति, वितर्कसंज्ञा हिंसाऽऽदिषु तान्त्रिकी, तर्कश्चात्र विशेषणं, तथा च वितर्क्यमाणो हिंसाऽऽदिर्वितर्कः तेन बाधने स्वाभिमुखीकरणे प्रतिपक्षभावनम् उत्तरसूत्रवक्ष्यमाणं कुर्यादित्यर्थः, विपरीततर्कस्याकारमाह-हनिष्यामीत्यादिना-इतीत्यन्तेन, एवं नियमपञ्चकेऽपि, त्यक्ष्याम्यहं शौचमित्यादयो।वितर्काः द्रष्टव्याः युक्तिसाम्यात्, सूत्रतात्पर्यार्थमाह-एवमिति । एवमुन्मार्गाभिमुखेन हिंसाऽऽदिगतेन वितर्कज्वरेण ज्वलितेन बाध्यमानो योगी वितर्कविरोधिज्ञानविषयतया वितर्कप्रतिपक्षान् दुःखादिफलकत्वादीन् भावयेत् चिन्तयेद् इत्यर्थः, प्रतिपक्षभावनं व्याचष्टे—घोरेष्वित्यादिना-भावयेदित्यन्तेन, वितर्कान् हिंसाऽऽदीन्, अत्र दुःखफलत्वचिन्तनं वाक्यतात्पर्यार्थः, तुल्यत्वमेव विवृणोति—यथेति । एवमादीति । वितर्कबाधने प्रतिपक्षभावनमित्येवमादिकं सूत्रान्तरेषु = आसनप्राणायामसूत्रेस्वपि योजनीयम्, आदिशब्देनास्य सूत्रस्य व्याख्या, उत्तरसूत्रं च ग्राह्यम्, आसनादिषु च वितर्का आसनादिकं त्यक्ष्य इत्यादिरूपा इति शेषः ॥ ३३ ॥

पूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥

तत्र हिंसा तावत् कृता कारिताऽनुमोदितेति त्रिधा, एकैका पुनस्त्रिधा- लोभेन = मांसचर्मार्थेन, क्रोधेन = अपकृतमनेनेति, मोहेन = धर्मो मे भविष्यतीति लोभक्रोधमोहाः पुनस्त्रिविधाः मृदुमध्याधिमात्रा इति, एवं सप्तविंशतिभेदा भवन्ति हिंसायाः, मृदुमध्याधिमात्राः पुनस्त्रेधा-मृदुमृदुः, मध्यमृदुः, तीव्रमृदुरिति तथा मृदुमध्यः, मध्यमध्यः, तीव्रमध्य इति तथा

भास्वती ।

वितर्कान् व्याचष्टे—तत्रेति । सुगमम् ,

तत्त्ववैशारदी ।

चष्टे-"तत्र हिंसा" इति । प्राणभृद्भेदस्यापरिसङ्ख्येयत्वान्नियमविकल्पसमुच्चयाः सम्भविनो- हिंसाऽऽदिषु तत्राधर्मतः तमःसमुद्रेके सति चतुर्विधविपर्य्ययलक्षणस्याज्ञानस्याप्युदय इत्यज्ञानफलत्वमप्येतेषामिति, दुःखाज्ञानानन्तफलत्वमेव हि प्रतिपक्षभावनं, ।तद्वशादेभ्यो नि-

पातञ्जलरहस्यम् ।

शीतिः, किंप्रयोजना इत्यत्राह-दुःखाज्ञानानन्तफला इति, एषां प्रतिपक्षभावनं-हिंसा न कर्तव्या न कारयितव्या नानुमोदयितव्या इति प्रतिकूलभावनं, तत्र पक्षिलस्वामिभाष्यमुदाहरति- प्राणभृद्भेदस्यापरिसंख्येयत्वादिति, अस्य = हिंसकस्य, चेतनं = पुत्रादि, अचेतनं = धनादि, क्षीणवीर्यम् = असमर्थं स्यादित्यर्थः, जीवितस्य व्यपरोक्षणात् = जीवितस्यायुषः व्यपरोपणात् त्याजनाद् , दुःखविपाकस्य नियतत्वेन वेदनीयस्य भोगैकनाश्यत्वाद् , उच्छ्वसिति = जीवति,

वार्त्तिकम् ।

इदानीं ये वितर्काः ये वा वितर्कस्य प्रतिपक्षाः यादृशं वा तच्चिन्तनं तत्त्रयमाह—

"वितर्का हिंसाऽऽदयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्", हिंसाऽऽदय इति । वितर्काणां स्वरूपकथनं विशेषणत्रयेण, तत्तद्गतविशेषाणां कथनं सर्वथैव हेयत्वप्रतिपादनाय, दुःखादिफलकत्वकथनं च प्रतिपक्षकथनं, प्रतिपक्षान् भावयेदितिपूर्वसूत्रीयभाष्यानुपपत्त्या प्रतिपक्षभावनमित्यन्तकर्मधारयासम्भवात् , शेषेण च भावनकथनमिति, दुःखाज्ञाने एवानन्ते फले येषामिति विग्रहः, विशेषणत्रयोक्तान् विशेषान् विवृणोति—तत्र हिंसेति । कृतेति । कृता वा कारिता वाऽनुमोदिता वेत्यर्थः, तत्र कृता स्वयंनिष्पादिता कारिता कुर्वित्युक्ता, अनुमोदिता परैः क्रियमाणा साधुसाध्वित्यङ्गीकृता, कृतादीनामपि द्वितीयविशेषणोक्तं त्रैविध्यं व्याचष्टे—एकैकेति । लोभेनेत्यस्य व्याख्या—मांसचर्मार्थेन मांसचर्मादिप्रयोजनेन तथाऽपकृतमनेनेत्येवं क्रोधेन तथा मोहेन यज्ञार्थहिंसया निर्दोषो धर्मो भविष्यतीत्येवंरूपेणेत्यर्थः, यद्यपि मृदुमध्याधिमात्रा' इति हिंसाऽऽदिविशेषणं सूत्रेऽस्ति तथाऽपि लोभादेर्मृदुत्वादिनैव हिंसाऽऽदेर्मृदुत्वादिकमत्र विवक्षितमर्थसौष्ठवेनेत्याशयेन लोभादिविशेषणतया मृदुत्वादीन् व्याचष्टे— लोभक्रोधमोहा इति । लोभक्रोधमोहा एकैकाः पुनस्त्रिधा-मृदुमध्याधिमात्रा इत्यर्थः, एवमित्यादि-हिंसाया इत्यन्तमेकं वाक्यं, मृदुमध्याधिमात्रत्वात्ततोऽपि विशेष इति पूर्वपादीयसूत्रानुसारेण, यौक्तिकानपरान्विशेषान् स्वयमाह—मृदुमध्याधिमात्राः पुनस्त्रिधेति । सर्वत्र तीव्रत्वमधिमात्रता, शेषं स्पष्टम् , सा पुनर्नियमेति । मत्स्येष्वेव हिंसेत्यादिर्नियमः, एकस्मिन् दिवसे स्थावरस्य जङ्गमस्य वाऽन्यतरस्यैव हिंसा नोभयोरित्यादिर्विकल्पः, स्थावरजङ्गमयोरुभयोरेवाव्यवस्थया हिंसेत्यादिः समुच्चयः, इत्येवं नियमविकल्पसमुच्चयानाम् आनन्त्याद्धिंसाऽसंख्येयभेदेत्यर्थः, नियमाद्यानन्त्ये हेतुः-प्राणभृदिति । हिंसकानां हिंस्यानां वा-

मृदुतीव्रः मध्यतीव्रः, अधिमात्रतीव्र इति, एवमेकाशीति(१)भेदा हिंसा भवति, सा पुनर्नियमविकल्पसमुच्चयभेदादसङ्ख्येया, प्राणभृद्भेदस्यापरिसङ्ख्येयत्वादिति, एवमनृतादिष्वपि योज्यम्, ते खल्वमी वितर्का दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनं, दुःखमज्ञानञ्चानन्तफलं येषामिति प्रतिपक्षभावनम्,

भास्वती ।

सा पुनरिति । नियमो यथा क्षत्रियाणां संयुगे हिंसेति, विकल्पो यथा पि-

पातञ्जलरहस्यम् ।

पुण्येषु ज्योतिष्टोमादिजनितधर्मेष्वावापगता = जातप्रवेशा दुःखाजनकत्वेऽप्यायुःक्षयकारि-

वार्त्तिकम् ।

ऽसंख्यतया नियमादीनामनन्तप्रकारत्वमित्यर्थः, एवमिति । हिंसायामिवानृतादिरूपवितर्केष्वपि कृतकारितेत्यादिविभागा योजनीया इत्यर्थः, अज्ञानं चेति । अज्ञानं संमोहः हिंसातो-

(१) एकाशीतिभेदा इति । अत्र भाष्ये मृदुत्वादिक्रम उत्पत्त्यादिक्रमानुसारेणोक्तः, निम्नप्रदर्शितक्रमस्तु बलाबलतारतम्यानुरोधी, त्रितकेषु पूर्वं हिंसा प्रदर्श्यतेऽनेनैव प्रकारेणानृतादयोऽपि ज्ञेयाः, तत्र तावद् हिंसा—

१ अधिमात्रतीव्रलोभकृता । २ मध्यतीव्रलोभकृता । ३ मृदुतीव्रलोभकृता । ४ मध्यतीव्रलोभकृता । ५ मध्यमध्यलोभकृता । ६ मध्यमृदुलोभकृता । ७ मृदुतीव्रलोभकृता । ८ मृदुमध्यलोभकृता । ९ मृदुमृदुलोभकृता । १० अधिमात्रतीव्रक्रोधकृता । ११ मध्यतीव्रक्रोधकृता । १२ मृदुतीव्रक्रोधकृता । १३ मध्यतीव्रक्रोधकृता । १४ मध्यमध्यक्रोधकृता । १५ मध्यमृदुक्रोधकृता । १६ मृदुतीव्रक्रोधकृता । १७ मृदुमध्यक्रोधकृता । १८ मृदुमृदुक्रोधकृता । १९ अधिमात्रतीव्रमोहकृता । २० मध्यतीव्रमोहकृता । २१ मृदुतीव्रमोहकृता । २२ मध्यतीव्रमोहकृता । २३ मध्यमध्यमोहकृता । २४ मध्यमृदुमोहकृता । २५ मृदुतीव्रमोहकृता । २६ मृदुमध्यमोहकृता । २७ मृदुमृदुमोहकृता । २८ अधिमात्रतीव्रलोभकारिता । २९ मध्यतीव्रलोभकारिता । ३० मृदुतीव्रलोभकारिता । ३१ मध्यतीव्रलोभकारिता । ३२ मध्यमध्यलोभकारिता । ३३ मध्यमृदुलोभकारिता । ३४ मृदुतीव्रलोभकारिता । ३५ मृदुमध्यलोभकारिता । ३६ मृदुमृदुलोभकारिता । ३७ अधिमात्रतीव्रक्रोधकारिता । ३८ मध्यतीव्रक्रोधकारिता । ३९ मृदुतीव्रक्रोधकारिता । ४० मध्यतीव्रक्रोधकारिता । ४१ मध्यमध्यक्रोधकारिता । ४२ मध्यमृदुक्रोधकारिता । ४३ मृदुतीव्रक्रोधकारिता । ४४ मृदुमध्यक्रोधकारिता । ४५ मृदुमृदुक्रोधकारिता । ४६ अधिमात्रतीव्रमोहकारिता । ४७ मध्यतीव्रमोहकारिता । ४८ मृदुतीव्रमोहकारिता । ४९ मध्यतीव्रमोहकारिता । ५० मध्यमध्यमोहकारिता । ५१ मध्यमृदुमोहकारिता । ५२ मृदुतीव्रमोहकारिता । ५३ मृदुमध्यमोहकारिता । ५४ मृदुमृदुमोहकारिता । ५५ अधिमात्रतीव्रलोभानुमोदिता । ५६ मध्यतीव्रलोभानुमोदिता । ५७ मृदुतीव्रलोभानुमोदिता । ५८ मध्यतीव्रलोभानुमोदिता । ५९ मध्यमध्यलोभानुमोदिता । ६० मध्यमृदुलोभानुमोदिता । ६१ मृदुतीव्रलोभानुमोदिता । ६२ मृदुमध्यलोभानुमोदिता । ६३ मृदुमृदुलोभानुमोदिता । ६४ अधिमात्रतीव्रक्रोधानुमोदिता । ६५ मध्यतीव्रक्रोधानुमोदिता । ६६ मृदुतीव्रक्रोधानुमोदिता । ६७ मध्यतीव्रक्रोधानुमोदिता । ६८ मध्यमध्यक्रोधानुमोदिता । ६९ मध्यमृदुक्रोधानुमोदिता । ७० मृदुतीव्रक्रोधानुमोदिता । ७१ मृदुमध्यक्रोधानुमोदिता । ७२ मृदुमृदुक्रोधानुमोदिता । ७३ अधिमात्रतीव्रमोहानुमोदिता । ७४ मध्यतीव्रमोहानुमोदिता । ७५ मृदुतीव्रमोहानुमोदिता । ७६ मध्यतीव्रमोहानुमोदिता । ७७ मध्यमध्यमोहानुमोदिता । ७८ मध्यमृदुमोहानुमोदिता । ७९ मृदुतीव्रमोहानुमोदिता । ८० मृदुमध्यमोहानुमोदिता । ८१ मृदुमृदुमोहानुमोदिता ।

अत्र पूर्वपूर्वापेक्षयोत्तरोत्तरा क्रमेण निर्बला, सुतरां प्रायश्चित्तमपि समुचितमेतदनुपातेनैव विवेचनीयमत्र; अनृतादिषु चेति भावः ।'

तथा च हिंसकः प्रथमं तावद् वध्यस्य वीर्य्यमाक्षिपति, ततः शस्त्रादिनिपातेन दुःखयति, ततो जीवितादपि मोचयति ततो वीर्य्याक्षेपादस्य चेतनाचेतनमुपकरणं क्षीणवीर्य्यं भवति, दुःखोत्पादान्नरकतिर्य्यक्प्रेतादिषु दुःखमनुभवति, जीवितव्यपरोपणात् प्रतिक्षणं च जीवितात्यये वर्त्तमानो मरणमिच्छन्नपि दुःखविपाकस्य नियतविपाकवेदनीयत्वात्कथञ्चिदेवोच्छ्वसिति यदि च कथञ्चित्पुण्यावापगता हिंसा भवेत्तत्र सुखप्राप्तौ भवेदल्पायुरिति,

भास्वती ।

तृणां तृप्त्यर्थं शूकरं गवयं वाध्रीणं वाऽऽलभेत, समुच्चयो यथा—एकाहे स्थावरजङ्गमबलिः, तथा चेति । वध्यस्य बन्धनादिना वीर्य्यं=कायचेष्टाम्, आक्षिपति=अभिभावयति, ततः=तत्र वीर्याक्षेपाद्, अस्य=घातकस्य, चेतनं=कारणरूपम्, अचेतनं=शरीररूपम्, उपकरणं=भोगसाधनं क्षीणवीर्यं भवति, जीवितस्य=प्राणानां व्यपरोपणात्=वियोगकरणाद्, प्रतिक्षणं जीवितात्यये मुमूर्षादुरवस्थायां वर्त्तमानो मरणमिच्छन्नपि दुःखविपाकस्य नियतविपाकस्यारब्धत्वाद्=दुःखभोगस्यानुकूलं यत् कर्म तद् विपाकस्यारब्धत्वात् कष्टमयस्यायुषो वेदनीयत्वं नियतं स्यात्तस्मादेवोच्छ्वसिति न प्राणाञ्जहाति, यदीति । कथञ्चित् पुण्यात् पश्चादाचरितयाऽहिंस-

तत्त्ववैशारदी ।

वृत्तिरिति, तदेव प्रतिपक्षभावनं स्फोरयति-'वध्यस्य' इति । वध्यस्य=पश्वादेः, वीर्य्यं=

वार्त्तिकम् ।

दुःखाज्ञाने यथा भवतस्तदाह—तथा चेति । तथा हीत्यर्थः, वीर्याक्षेपो बलान्नियमनम्, एवं त्रिप्रकारहिंसनात्त्रिप्रकारमेव दुःखं हन्ता प्राप्नोति कर्मानुरूपफलोदयादिति प्रतिपादयति—ततो वीर्येति । परस्य वीर्याक्षेपात्तस्य हन्तुरपि चेतनाचेतनमुपकरणं स्त्रीपुत्रधनादिकं क्षीणवीर्यं कार्याक्षमं भवति, तथा परस्य शस्त्रादिना दुःखोत्पादनाद्धन्ताऽपि नरकादिषु याम्यशस्त्रादिना दुःखमनुभवति, तथा परस्य जीवितव्यपरोपणात् प्राणवियोजनात्तत्कर्ताऽपि प्रतिक्षणंजीवितात्ययं रोगादिना मरणावस्थां संमोहमयीमापन्नो मरणमिच्छन्नपि कथं चिदेव जीवति, ननु तदानीमेव कथं मरणं न भवति तत्राह—दुःखविपाकस्येति । दुःखरूपस्य विपाकस्य प्रतिनियतजन्मादिविपाकैरेव भोग्यत्वादित्यर्थः, तदेतद्धिंसाया अनन्तदुःखाज्ञानफलकत्वं गीतायामप्युक्तं--

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । इति,

पुत्रा ह्यग्निविस्फुलिङ्गवत पितुरंशाः, 'आत्मा वै जायते पुत्र' इति श्रुतेः, अत ईश्वरांशजीवेषु द्वेष ईश्वरद्वेष एव, किं च जीवानामप्यात्मा परमेश्वरः, अतः शरीरद्वेषेण शरीरिद्वेषवत् जीवद्वेषेण परमेश्वरस्य द्वेषो भवतीति भावः, पुण्यावापगतेति । पुण्यकर्मरूपस्य सुबीजस्य चित्तभूमावावपने गता सहावापितेत्यर्थः, धान्यबीजवपने तृणबीजानां वपनवदिति भावः, भवेदल्पायुरिति । ननु 'अहिंसन्सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः' 'तस्माद्यज्ञे वधोऽवध' इत्यादिश्रुतिस्मृतिभिर्वैधहिंसाऽतिरिक्तहिंसाया एव प्रतिषेधात् कथं वैधहिंसाया अनिष्टसाधनत्वमुच्यत इति ? अत्रोच्यते—कार्यत्वमिष्टसाधनत्वं वा विध्यर्थो न पुनरनिष्टाननुबन्धित्वमपि, राजत्वादिप्रापककर्मणां गर्भवासजन्याद्यनर्थहेतुतायाः सर्वसंमतत्वात्, न च बलवदनिष्टाननुबन्धित्वमपि विध्यर्थो वक्तुं शक्यते, अनिष्टेषु पुरुषाणां बलवद्द्वेषस्याव्यवस्थितेः, दुःखमेव सर्व-

**एवमनृतादिष्वपि योज्यं यथासम्भवम्, एवं वितर्काणां चामुमेवानुगतं विपाकमनिष्टं भावयन्न वितर्केषु मनः प्रणिदधीत प्रतिपक्षभावनाद् हेतोर्हेया वितर्काः ॥ ३४ ॥**

**यदाऽस्य स्युरप्रसवधर्माणस्तदा तत्कृतमैश्वर्यं योगिनः सिद्धिसूचकं भवति तद्यथा—**

भास्वती ।

येत्यर्थः, हिंसाऽपगताऽभिभूता भवेत तदा सुखप्राप्तावप्यल्पायुर्भवेत्, एवं वितर्काणामनुगतमनुगच्छन्तमनुमिष्टं विपाकं भावयन् न वितर्केषु हिंसाऽऽदिषु मनः प्रणिदधीत, हेयाः = त्याज्या वितर्काः ॥ ३४ ॥

यदेति । अप्रसवधर्माणो वितर्का इति शेषः, तदाऽहिंसाऽऽदीनां प्रतिष्ठेति । अहिंसा प्रतिष्ठायां=हिंसासंस्कारनाशात् तत्प्रत्ययस्य सम्यग्नाश इत्यर्थः, तत्सन्निधौ=सान्नि-

तत्त्ववैशारदी ।

प्रयत्नं कायव्यापारहेतुं, प्रथममाक्षिपति यूपनियोजनेन तेन हि पशोरप्रागल्भ्यं भवति, शेषमतिस्फुटम् ॥ ३४ ॥

उक्ता यमनियमास्तदपवादकानां च वितर्काणां प्रतिपक्षभावनातो हानिरुक्ता, सम्प्रत्यप्रत्यूहं यमनियमाभ्यासात्तत्तत्सिद्धिपरिज्ञानसूचकानि चिन्हान्युपन्यस्यति यत्परिज्ञानाद् योगी तत्र तत्र कृतकृत्यः कर्त्तव्येषु प्रवर्त्तेत इत्याह-"यदाऽस्य" इति ।

पातञ्जलरहस्यम् ।

णीति भाष्यार्थः ॥ ३३ ॥ ३४ ॥

वार्त्तिकम् ।

विवेकिन इत्युक्तत्वात्, किं च बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वेऽपि यज्ञादिनान्तरीयकहिंसायाः सामान्यतोऽनिष्टजनकत्वश्रुत्यविरोधः, अपि चावैधहिंसात्यागस्य स्वर्गादिसाधनताबोधकविधिभिर्वैधहिंसायाः स्वर्गादिसाधनताबोधकविधिभिश्च सह हिंसाया मृत्स्वाद्यनिष्टहेतुताबोधकश्रुतिस्मृतीनां नास्त्येव विरोधो येन तासु सङ्कोचः कल्प्येत; अतो युक्तमुक्तं पुण्यावापगतानामपि हिंसानामनिष्टहेतुत्वम्, पुण्यावापगतहिंसास्वपि युधिष्ठिरादीनां प्रायश्चित्तश्रवणादप्ययमेव सिद्धान्त उन्नीयते,

"तस्माद्यास्याम्यहं तात ! दृष्ट्वेमं दुःखसंनिधिम् ।
त्रयीधर्ममधर्माढ्यं किंपाकफलसंनिभम्"

इति मार्कण्डेयादिस्मृतिश्रुत्यादिभ्यश्च, अत एव स्मर्यतेऽपि—

"सर्वाणि भूतानि सुखे रमन्ते सर्वाणि दुःखेषु तथोद्विजन्ति ।
तेषां भयोत्पादनजातखेदः कुर्यान्न कर्माणि हि जातवेद"—

इति मोक्षधर्मादिष्विति, वधोऽवध इत्यादि वाक्यं तु वधाभासतापरमिति दिक्, एवमिति । अनृतादिष्वप्येवं दुःखाज्ञानफलकत्वं यथासम्भवं मरणादिकं विहाय योज्यमित्यर्थः, प्रतिपक्षभावनस्य प्रयोजनमाह—एवं वितर्काणामिति । अनुगतं नियतमेवमनिष्टं विपाकं वितर्काणां कार्यमेव चिन्तयन् योगी न वितर्केषु मनः प्रणिदधीत ददातीत्यर्थः ॥ ३४ ॥

यमनियमनिष्पत्तिसूचकानां सिद्धान्तानां प्रतिपादकानि सूत्राणि अवतारयति—प्रतिपक्षेति । हेया हातुमर्हा एवंभूता वितर्का यदाऽस्य योगिनः प्रतिपक्षभावनातो विषयसान्निध्यकालेऽप्यप्रसवस्वभावा भवन्ति तदा तत्कृतं वितर्कहानिकृतमैश्वर्यं यमादिनिष्पत्तिसूचकं भवतीत्यर्थः, तन्निष्पत्त्यवधारणे च तत्तद्भूमिषु यत्नं विहाय भूमिकान्तरेषु योगी यतमातिष्ठेतेत्येतत्प्रतिपादयितुं सर्वेष्वेव योगाङ्गेषु सिद्धिकथनम्, तद्यथा = तदैश्वर्यं यथा—

**अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥ ३५ ॥**

सर्वप्राणिनां भवति ॥ ३५ ॥

**सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥**

धार्मिको भूया इति भवति धार्मिकः, स्वर्गं प्राप्नुहीति स्वर्गं प्राप्नोति अमोघाऽस्य वाग् भवति ॥ ३६ ॥

**अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥**

सर्वदिक्स्थान्यस्योपतिष्ठन्ते रत्नानि ॥ ३७ ॥

भास्वती ।

स्याद् योगिनः सङ्कल्पप्रभावानुभाविताः सर्वे प्राणिनो वैरभावं त्यजन्तीत्यर्थः ॥ ३५ ॥

धार्मिक इति । सत्यप्रतिष्ठायां क्रियया=कर्माचरणेन यत् स्वर्गगमनादि फलं लभ्यते, योगिनो वाचैव श्रोतुर्मनसि समुदितसंस्कारात् तत्सिद्धिः, ततः "धार्मिको भूयाः" इत्याशीर्वचनादभिभूतोऽधर्ममतिर्धार्मिको भवतीति योगिनो वाचोऽमोघत्वम् ॥ ३६ ॥

सर्वेति । सर्वासु दिक्षु भ्रमतो योगिनः सकाशे चेतनाचेतनानि रत्नानि=जातौ जातावुत्कृष्टवस्तून्युपतिष्ठन्ते उपस्थाप्यन्ते च ॥ ३७ ॥

तत्त्ववैशारदी ।

"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" शाश्वतिकविरोधा अपि अश्वमहिषमूषकमार्जाराहिनकुलादयोऽपि भगवतः प्रतिष्ठिताहिंसस्य सन्निधानात्तच्चित्तानुकारिणो वैरं परित्यजन्तीति ॥ ३५ ॥

"सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्" क्रियासाध्यौ धर्माधर्मौ क्रिया, तत्फलं च स्वर्गनरकादि, एव श्रयतीत्याश्रयस्तस्य भावस्तत्त्वं तदस्य भगवतो वाचो भवतीति क्रियाऽऽश्रयत्वमाह—"धार्मिक" इति । फलाश्रयत्वमाह—"स्वर्गम्" इति । अमोघा = अप्रतिहता ३६॥

"अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्", सुबोधम् ॥ ३७ ॥

पातञ्जलरहस्यम् ।

यमादिदशानां सिद्धिसूचकानि तावद्भिः सूत्रैराह—तत्राहिंसायां सिद्धायां तत्संनिधौ वैरत्यागः, सर्वप्राणिनामिति शेषः, 'प्रशान्तश्वापदाकीर्णमित्युक्तेः ॥ ३५ ॥'

सत्यवागस्य संकल्प इति श्रुतिमाश्रित्याह—अप्रतिहता न कदा चिदर्थव्यभिचारिणीति शेषः ॥ ३६ ॥

अस्तेयसिद्धौ किं स्यात्तत्राह—स्तेयमिति'। सर्वदिक्कानि सर्वासु दिक्षूत्पन्नानि केनापि प्रकारेनाप्रार्थितानीति शेषः॥ ३७ ॥

वार्तिकम् ।

"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" प्रतिष्ठायां स्थैर्ये उक्तवितर्कासंस्पर्श इति यावत्, तस्यां सत्यां तत्सन्निधिस्थानां सर्वप्राणिनां मार्जारमूषकादीनामन्योन्यवैरत्यागो भवतीत्यर्थः ॥ ३५ ॥

"सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्" सर्वप्राणिनां भवतीत्यत्रापि शेषः, क्रिया धर्मः तस्य फलं स्वर्गादिः तयोराश्रयत्वं सर्वप्राणिनां सत्यप्रतिष्ठस्य वचनाद्भवतीत्यर्थः, तदेतद्व्याचष्टे—धार्मिक इति । धार्मिको भूया इति वचनात् संबोध्यो धार्मिको भवतीत्यादिरर्थः, अमोघेति । एवंप्रकारेणास्य योगिनो वाक् सत्या भवतीत्यर्थः, अत्र वाक् मनसोऽप्युपलक्षणम्॥३६॥

"अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्" सर्वाभ्यो दिग्भ्यो रत्नोपस्थानं सर्वरत्नोपस्थानम् , तदेतद् व्याचष्टे—सर्वदिक्कानीति ॥ ३७ ॥

## ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः ॥ ३८ ॥

यस्य लाभादप्रतिघान् गुणानुत्कर्षयति सिद्धश्च विनेयेषु ज्ञानमाधातुं-समर्थो भवतीति ॥ ३८ ॥

## अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः ॥ ३९ ॥

अस्य भवति कोऽहमासं कथमहमासं किं स्विदिदं, कथं स्विदिदं, के

भास्वती ।

यस्येति । ब्रह्मचर्यप्रतिष्ठाजातवीर्यलाभात्तद्वीर्यमप्रतिघान् गुणान् प्रतिघातरहिता ज्ञानादिशक्तिरुत्कर्षयति, तथा—ऊहाध्ययनादिभिर्ज्ञानसिद्धौ योगी विनेयेषु=शिष्येषु ज्ञान-माधातुं=हृदयङ्गमं कारयितुं समर्थो भवतीति ॥ ३८ ॥

अस्येति । देहेन सह सम्बन्धो जन्म, तस्य कथन्ता किम्प्रकारता, अपरिग्रहस्थै-र्ये=त्यक्तबाह्यपरिग्रहस्य योगिनो देहोऽपि हेयः परिग्रह इत्यनुभवस्थैर्ये जन्मकथन्ताबोधो-

तत्त्ववैशारदी ।

"ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः", वीर्य्यं=सामर्थ्यं, यस्य लाभाद् अप्रतिघान्=अप्रतीघातान्, गुणान्=अणिमादीन्, उत्कर्षयति=उपचिनोति सिद्धश्च=तारादिभि-रष्टाभिः सिद्धिभिरूहाद्यपरनामभिरुपेतो, विनेयेषु=शिष्येषु, ज्ञानं=योगतदङ्गविषयमाधातुं-समर्थो भवतीति ॥ ३८ ॥

"अपरिग्रहस्थैर्य्ये जन्मकथन्तासम्बोधः" निकायविशिष्टैर्देहेन्द्रियादिभिरभिसम्ब-न्धो जन्म, तस्य कथन्ता=किम्प्रकारता, तस्याः सम्बोधः=साक्षात्कारः, स प्रकारातीन्द्रि-यशान्तोदिताव्यपदेश्यजन्मपरिज्ञानमिति यावद् अतीतं जिज्ञासते—"कोऽहमासम्" इति । तस्यैव प्रकारभेदमुत्पत्तौ स्थितौ च जिज्ञासते—"कथमहमासम" इति । वर्त्तमानस्य जन्मनः स्वरूपं जिज्ञासते-'किंस्विद्' इति । शरीरं भौतिकं किं भूतानां समूहमात्रम्, आहोस्वित्ते-भ्योऽन्यदिति, अत्रापि कथं स्विदित्यनुषञ्जनीयम्, क्व चित्तु पठ्यत एव, 'अनागतं जिज्ञासते

पातञ्जलरहस्यम् ।

ब्रह्मचर्यसिद्धौ किं स्यात्तत्राह-ब्रह्मेति । तारादिभिः तत्त्वकौमुद्यां तार-सुतार-तारतार-रम्यक-सदामुदित-प्रमोद-प्रमुदित-प्रमोदमानाख्याभिरष्टाभिः सिद्धिभिर्विनेयेषु शिष्यादिषु ज्ञानं योगादिविषयकमित्यर्थः ॥ ३८ ॥

अपरिग्रहे सिद्धे किं स्यादित्याह-अपरीति । निकायविशिष्टैर्देवत्वादिजातिविशिष्टैः प्रका-

वार्त्तिकम् ।

"ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः" वीर्यं शक्तिविशेषं लक्षयति—यस्येति । यस्य वीर्यस्य लाभात्प्रतीघातवर्जितान् गुणान् ज्ञानक्रियाशक्तीरुत्कर्षयति योगी वर्धयति तथा सिद्धः स्वयं-ज्ञानी भूत्वा शिष्येषु ज्ञानाधानसमर्थश्च भवतीत्यर्थः ॥ ३८ ॥

"अपरिग्रहस्थैर्ये जन्म कथन्तासंबोधः" अपूर्वेण देहेन्द्रियादिसंघातेन ज्ञानहेतुः संबन्धो-जन्म तस्य कथन्ता किंप्रकारता तयोः संबन्धोः साक्षात्कारो जन्मकथंतासंबोधः, तथा च शा-न्तोदिताव्यपदेश्यानां जन्मनां स्वरूपतः प्रकारतश्च जिज्ञासामात्रेण साक्षात्कारोऽपरिग्रहस्थैर्ये भवतीत्यर्थः, तदेतद्व्याचष्टे—अस्य भवतीति । इदं सूत्रेण सहान्वेति, कोऽहमासं कथमहमा-समित्यतीतजन्मनः स्वरूपप्रकारयोर्जिज्ञासा किंस्विदित्यादिद्वयं वर्तमानजन्मनः स्वरूपप्र-कारजिज्ञासा के वा भविष्याम इत्यादिद्वयं च भाविजन्मन इति, पूर्वापरान्तमध्याः भूतभ-विष्यद्वर्त्तमानकालाः, तेष्वस्य योगिनः स्वजन्मजिज्ञासोत्पन्नमात्रेव स्वरूपेण स्वविषयेण ज्ञानेन उपावर्त्तते विशिष्टा भवति नास्त्यत्र साधनापेक्षेत्यर्थः स्वतः सर्वार्थग्रहणयोग्यस्यापि

चा भविष्यामः, कथं वा भविष्याम इति, एवमस्य पूर्वान्तपरान्तमध्येष्वा-त्मभावजिज्ञासा स्वरूपेणोपावर्त्तते, एता यमस्थैर्ये सिद्धयः ॥ ३९ ॥

नियमेषु वक्ष्यामः—

## शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥

स्वाङ्गे जुगुप्सायां शौचमारभमाणः कायावद्यदर्शी कायानभिष्वङ्गी यतिर्भवति, किञ्च परैरसंसर्गः = कायस्वभावावलोकी स्वमपि कायं जिहासुर्मृज्जलादिभिराक्षालयन्नपि कायशुद्धिमपश्यन् कथं परकायैरत्यन्तमेवाप्रयतैः संसृज्येत ॥ ४० ॥

भास्वती ।

भवति, तत्स्वरूपं—कोऽहमासमित्यादि, एवमिति । पूर्वान्तपरान्तमध्येषु = अतीतभविष्यवर्त्तमानेषु, आत्मभावजिज्ञासा = आत्मभावे = अहम्भावविषये शरीरसम्बन्धविषय इत्यर्थः, या जिज्ञासा तत्र स्वरूपज्ञानं भवतीत्यर्थः ॥ ३९ ॥

शौचादिति बाह्यशौचफलम्, स्वशरीरे जुगुप्सायां जातायां तस्य शौचमारभमाणो यतिः कायस्यावद्यदर्शी = दोषदर्शी, कायानभिष्वङ्गी = कायरागहीनो भवति, किञ्चेति । जिहासुस्त्यागेच्छुः स्वकायशुद्धिमदृष्ट्वा कथमत्यन्तमेवाप्रयतैः = मलिनैः, जुगुप्सिततमैरित्यर्थः परकायैः सह संसृज्येत = संसर्गमिच्छेदित्यर्थः ॥ ४० ॥

तत्त्ववैशारदी ।

"के वा भविष्याम" इति । अत्रापि कथं स्विदित्यनुषङ्गः "एवमस्य" इति । पूर्वान्तः = अतीतः कालः, परान्तः = भविष्यन्, मध्यः = वर्त्तमानः, तेष्वात्मनो भावः = शरीरादिसंबन्धः, तस्मिञ्जिज्ञासा ततश्च ज्ञानं यो हि यदिच्छति स तत्करोतीति न्यायात् ॥ ३९ ॥

"शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः," अनेन बाह्यशौचसिद्धिसूचकं कथितम् ॥ ४० ॥

पातञ्जलरहस्यम् ।

रः = विशेषणता कोहऽमनुष्यादिषु, उत्पादे कथं जातोऽस्मि स्थितौ केन भोगादिना जन्मवान्, ज्ञानेच्छाकृतीनां साहित्यमाह-ततश्चेति । इति यमाः पञ्च ॥ ३९ ॥

नियमान्सूत्रारूढान् कृत्वा तत्फलं च प्रथमतः शौचमाह-शौचादित्यादि, देहवित्तात् प्रमाद्यतीत्युक्तिमाश्रित्यानभिष्वङ्गी अनासक्तः, किञ्च परैरिति । काय आधेयशौचत्वादित्यादिस्मरणेन यस्य स्वकाये जुगुप्सा तस्य परकाये त्वर्थत इति, कथमित्याक्षेपः ॥ ४० ॥

वार्त्तिकम् ।

चेतसोऽतीतादीनां स्वावस्थानाम् अग्रहणं परिग्रहव्यासङ्गदोषाद् अतो परिग्रहस्थैर्यात्ताः क्षणंप्रणिधानामात्रेणैव गृह्यन्त इति भावः ॥ ३९ ॥

"शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः" शौचात् शौचस्थैर्यात्, अनेन सूत्रेण बाह्यशौचस्थैर्यस्य सिद्धिरुच्यते, जुगुप्सा कुत्सा अशुचित्वदोषदर्शनं तस्याशेषतः साक्षात्कार इति यावत्, शौचात्स्वाङ्गजुगुप्सायां युक्तिमप्याह—स्वाङ्ग इति । यतः पूर्वमल्पजुगुप्सया शौचमभ्यस्तम् अतो ऽतिशयितजुगुप्सा शौचफलं युक्तेत्याशयः, जुगुप्सां विवृणोति—कायेति । आवद्यं दोषः, तज्ज्ञानस्य फलमाह—कायानभिष्वङ्गीति । शेषं सुगमम् ॥ ४० ॥

किञ्च—

## सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-योग्यत्वानि च ॥ ४१ ॥

भवन्तीति वाक्यशेषः, शुचेः सत्त्वशुद्धिः, ततः सौमनस्यं, तत ऐकाग्र्यं, तत इन्द्रियजयः, ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवति, इत्येतच्छौच-स्थैर्यादधिगम्यत इति ॥ ४१ ॥

## सन्तोषादनुत्तमसुखलाभः ॥ ४२ ॥

भास्वती ।

अभ्यन्तरशौचफलमाह—सत्त्वेति । शुचेरिति । शुचेः = मदमानेर्ष्याऽऽदीनामाक्षालन-कृतः, सत्त्वशुद्धिः = विक्षेपकमलहीनता अन्तर्निष्ठता च ततः सौमनस्यं मानसं सौख्यमा-त्मप्रीतिरित्यर्थः, सौमनस्ययुक्तस्यैकाग्र्यं सुकरं, ततो बुद्धिस्थैर्यं मनआदीन्द्रियजयः, ततो निर्मलस्य बुद्धिसत्त्वस्यात्मदर्शने = पुरुषस्वरूपावधारणे योग्यता भवति ॥ ४१ ॥

तत्त्ववैशारदी ।

आन्तरसिद्धिसूचकमाह—"किञ्च" इति । "सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्म दर्श-नयोग्यत्वानि च," चित्तमलानामाक्षालने चित्तसत्त्वममलं प्रादुर्भवति, वैमल्याच्च तत्सौम-नस्यं = स्वच्छता, स्वच्छे तदेकाग्र्यं, ततो मनस्तन्त्राणामिन्द्रियाणां तज्जयाज्जयः तत आत्म-दर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीति ॥ ४१ ॥

"सन्तोषादनुत्तमसुखलाभः", न विद्यतेऽस्मादुत्तम इत्यनुत्तमः, यथा चोक्तं ययातिना-पुरौ यौवनमर्पयता—

पातञ्जलरहस्यम् ।

शौचस्थैर्य किं स्यात्तत्राह-सत्त्वेति । एतानि पञ्चानुभवारूढानि करोति—शुचेरित्या-दि-गम्यत इत्यन्तेन ॥ ४१ ॥

सन्तोषे सति किं स्यात्तत्राह-सन्तोषादिति । तत्र विष्णुपुराणे वचनमाह-यच्चेति । तृ-

वार्त्तिकम् ।

अत्यन्तशौचस्य सिद्धिसूचकं सूत्रमवतारयति—किं चेति ।

"सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" एतेषु क्रमं दर्शयति-शुचेरिति । क्षालितचित्तमलस्य सत्त्वशुद्धिः सत्त्वोद्रेको भवति, ततः सौमनस्यं प्रीतिः, स्वत-एवानन्दो जायते, ततश्च प्रीतचित्तस्याविक्षेपादैकाग्र्यं तत इन्द्रियजयः, ततश्चात्मदर्शनयोग्य-त्वमिति, सूत्रद्वयार्थमुपसंहरति—एतदिति । एतत्सूत्रद्वयोक्तं शौचसामान्यस्य स्थैर्यात्प्रा-प्यत इत्यर्थः ॥ ४१ ॥

"संतोषादनुत्तमसुखलाभः" नास्त्युत्तमं सुखं यस्मात्तादृशसुखस्य लाभः संतोषस्थ-र्याद्भवतीत्यर्थः, तृष्णाक्षयो हि संतोषः तृष्णाप्रतिबन्धापगमे च चित्तस्य स्वाभाविकसत्त्वा-धिक्यनिमित्तिका सुखस्वभावता स्वत एवाविर्भवति न तत्सुखे विषयापेक्षेति तन्निर्विषयं-शान्तिसुखम् आत्मसुखमुच्यते, 'ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः, श्रोत्रि यस्य चाकामहतस्ये' त्यादिश्रुतेः, ईश्वरस्य पूर्णकामत्वात् श्रोत्रियस्य च ज्ञानेन कामक्षयादु-भयोरेव वैतृष्ण्यस्य तुल्यतया समानं सुखमित्याशयः, बुद्धेः सत्त्वात्मकतया सुखस्वभावत्वेन जीवेऽपि नित्यं सुखमिदमेव गीयते स्वाभाविकस्य यावद्द्रव्यभावित्वात् तमसा पिहितत्वेन च सदाऽनभिव्यक्तत्वाद् न पुनश्चितिरेव सुखस्वरूपिणी चिन्मात्रत्वश्रुतिस्मृतिसूत्रविरोधा-देरुक्तत्वाद् इति, संतोषादभिव्यक्तसुखस्यानुत्तमत्वे स्मृतिमुदाहरति—तथा चोक्तमिति ।

तथा चोक्तम्—
"यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्" ॥ ४२ ॥

**कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥**

निर्वर्त्यमानमेव तपो हिनस्त्यशुद्ध्यावरणमलं तदावरणमलापगमात् कायसिद्धिः = अणिमाद्या, तथेन्द्रियसिद्धिः = दूराच्छ्रवणदर्शनाद्येति ॥ ४३ ॥

**स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥**

देवा, ऋषयः, सिद्धाश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति, कार्य्ये चास्य वर्त्तन्त इति ॥ ४४ ॥

---

भास्वती ।

तथेति । सन्तोषफलं व्याचष्टे—कामसुखं = काम्यविषयप्राप्तिजनितं यत् सुखम् ॥४२॥

निर्वर्त्यमानमिति । तपःसिद्धिफलं व्याचष्टे—निर्वर्त्यमानं = निष्पाद्यमानम्, आवरणमलं = सिद्धप्रकृतेरापूरणस्य प्रतिबन्धकभूता ये शारीरधर्मास्तेषां वश्यतारूपं मलम्, सामान्यतः सत्यब्रह्मचर्यादीन्यपि तपः, अत्र च योगानुकूलं द्वन्द्वसहनमेव तपःशब्देन संज्ञितम् ॥ ४३ ॥

देवा इति । स्वाध्यायशीलस्य = निरन्तरं भावनायुक्तजपशीलस्य, सम्प्रयोगः = सम्पर्को गोचर इत्यर्थः ॥ ४४ ॥

तत्त्ववैशारदी ।

"या दुस्त्यजा दुर्मतिभिर्या न जीर्य्यति जीर्य्यताम् ।
तां तृष्णां संत्यजन् प्राज्ञः सुखेनैवाभिपूर्य्यते" ॥

तदेतद् दर्शयति—"यच्च कामसुखम्" इत्यादिना ॥ ४२ ॥

तपःसिद्धिसूचकमाह—"कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः" । अशुद्धिलक्षणमावरणं-तामसमधर्मादि, अणिमाद्या – महिमा, लघिमा, प्राप्तिश्च, सुगमम् ॥ ४३ ॥

स्वाध्यायसिद्धिसूचकमाह—"स्वाध्यायादिष्टदेवतासंप्रयोगः" सुगमम् ॥ ४४ ॥

पातञ्जलरहस्यम् ।

ष्णाराहित्यं संतोष इति ॥ ४२ ॥

तपस्थैर्ये किं स्यात्तत्राह-कायेति । तपःकारणको शुद्धिक्षयः ततः कायेन्द्रियादिसिद्धिरित्यर्थः, निर्वर्त्यमानं क्रियमाणम् अणिमा लघिमा महिमा प्राप्तिः प्राकाम्यं चैव पञ्चमम् ईशित्वञ्च वशित्वं च तथा कामावसायितेत्यष्टौ सिद्धयः ॥ ४३ ॥

स्वाध्यायसिद्धावाह-स्वाध्यायादिति । ईशनं साक्षात्कारं कार्थे = अनुग्रहादौ ॥ ४४ ॥

वार्त्तिकम् ।

कामसुखं कामेभ्यो लौकिकविषयेभ्यः सुखं दिव्यं संकल्पमात्रोत्थविषयजं 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ती'त्यादिश्रुतेः, तृष्णाक्षयसुखस्य तृष्णाक्षयाभिव्यक्तसुखस्येत्यर्थः, विदेहकैवल्ये तु सुखवाक्यानि दुःखनिवृत्त्या गौणानीति ॥ ४२ ॥

"कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः" व्याचष्टे—निर्वर्त्यमानमिति, । अशुद्धिरधर्मस्तामसो गुणः सैवाणिमादिशक्तेरावरको मत इत्यर्थः, अणिमादिसिद्धीर्विभूतिपादे व्याख्यास्यति, शेषं सुगमम् ॥ ४३ ॥

"स्वाध्यायादिष्टदेवतासंप्रयोगः" संप्रयोगो दर्शनं यां देवतां द्रष्टुमिच्छति सैव दृश्या भवतीत्यर्थः, सुगमं भाष्यम् ॥ ४४ ॥

## समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

ईश्वरार्पितसर्वभावस्य समाधिसिद्धिः यया सर्वमीप्सितमवितथं जा-

भास्वती ।

ईश्वरेति । ईश्वरार्पितसर्वभावस्य = तत्प्रणिधानपरस्य सुखेनैव समाधिसिद्धिः, यया समाधिसिद्धया सम्प्रज्ञानलाभो भवति, अहिंसाऽऽदिशीलसम्पन्न एवेश्वरप्रणिधानसमर्थो भवति नान्यथा,

अहिंसाऽऽदिप्रतिष्ठायां याः सिद्धयस्तास्तपोजा मन्त्रजाश्च, प्रकृतिवैशिष्ट्यात् केषाञ्चिदहिंसाऽऽदिषु किञ्चित् साधनमत्यनुकूलं भवति, तस्य च सम्यगनुष्ठानात् तत्प्रतिष्ठाजाता सिद्धिराविर्भवति, ये तु सामान्यत एव यमनियमानुष्ठानं संरक्षन्तः समाधिसिद्धये प्रयतन्ते, तेषान्ताः सिद्धयो नाविर्भवन्तीति द्रष्टव्यम् ,

अहिंसासत्यादयस्तप एव, स्मर्यते च—

"तथाऽहिंसा परं तपः" इति,

"नास्ति सत्यसमं तपः" इति,

"ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते" इति,

तस्मात्तज्जाः सिद्धयस्तपोजा एव, जपरूपस्वाध्यायाद् मन्त्रजा सिद्धिः, शान्तस्य समाहितस्येश्वरस्य प्रणिधानाद् धारणाध्यानोत्कर्षस्ततश्च प्रणिधानं समाधिं भावयेत् , अहिंसाऽऽदयः सर्वे क्लिष्टकर्मणः प्रतनूकरणायानुष्टेयाः, यथैकस्मादपि च्छिद्रात् पूर्णघटो वारिहीनो भवति, तथाऽहिंसाऽऽदिशीलानामेकतमस्यापि सम्भेदादितरे निर्वीर्या भवन्तीति, उक्तञ्च—

तत्त्ववैशारदी ।

"समाधिसिद्धिरीश्वरप्रणिधानात्" न च वाच्यमीश्वरप्रणिधानादेव चेत्सम्प्रज्ञातस्य समाधेरङ्गिनः सिद्धिः कृतं सप्तभिरङ्गैरिति ? ईश्वरप्रणिधानसिद्धौ दृष्टादृष्टावान्तरव्यापारेण तेषामुपयोगात्, संप्रज्ञातसिद्धौ च संयोगपृथक्त्वेन दध्न इव क्रत्वर्थता पुरुषार्थता च न चैवमनन्तरङ्गता धारणाध्यानसमाधीनाम् ? सम्प्रज्ञातसिद्धौ सम्प्रज्ञातसमानगोचरतया-

पातञ्जलरहस्यम् ।

ईश्वरप्रणिधानात्किं स्यात्तत्राह—समाधीति । सप्तभिर्यमनियमाद्यैः दृष्टव्यापार "आसनेन रुजं हन्ती"त्यादिना रोगनिवृत्तिः शरीरदृढीकरणं मनस्थैर्यं चेत्यदृष्टं प्राणायामेन पातकमिति

वार्त्तिकम् ।

"समाधिसिद्धिरीश्वरप्रणिधानात्" व्याचष्टे—ईश्वरेति । ईश्वरेऽर्पितः सर्वभावः सर्वव्यापारो येन तस्य समाधिसिद्धेर्योगनिष्पत्तिर्यथा येन प्रकारेणेश्वरानुग्रहतो भवति तदुच्यते, आदौ तावद्देशाद्यन्तरस्थमपि ध्येयं सर्वं श्रवणमननकाले यथाऽर्थमेव जानाति, गुरुवाक्यादावविपर्यस्तं भवति, ततोऽस्य योगिनः प्रज्ञा समाधिकालेऽपि यथाऽर्थमेव साक्षात्करोतीत्यर्थः, एवं संप्रज्ञातसिद्धावसंप्रज्ञातसमाधिः स्वयमेव सिध्यतीति तत्र प्रदर्शितम् , न चेश्वरप्रणिधानादेव योगनिष्पत्तावितराङ्गवैयर्थ्यमिति वाच्यम् ? ईश्वरप्रणिधानस्य मोहमात्रनिवृत्तिद्वारत्ववचनात् , द्वारान्तरेण त्वङ्गान्तराणां समाधिसाधनत्वसंभवात् , अपि च ईश्वरप्रणिधानेनैव निर्विघ्नं सर्वाण्यङ्गानि संपाद्य समाधिं जनयतीति नान्याङ्गवैफल्यम् , अथ वा-अन्यान्यङ्गानीश्वरप्रणिधानद्वारा समाधिं निष्पादयन्ति इतराङ्गानां च स्वतो नैतादृशी शक्तिरस्ति इत्याशयेनेश्वरप्रणिधानस्यैव तु मुख्यतः समाधिसाधकत्वं सूत्रितमिति, बहिरङ्गत्वं त्वस्य संयमङ्गा-

नाति, देशान्तरे, देहान्तरे, कालान्तरे च ततोऽस्य प्रज्ञा यथाभूतं प्रजानातीति ।। ४५ ।।

उक्ताः सह सिद्धिभिर्यमनियमा आसनादीनि वक्ष्यामः, तत्र—

**स्थिरसुखमासनम् ॥ ४६ ॥**

तद्यथा—पद्मासनं, वीरासनं, भद्रासनं, स्वस्तिकं, दण्डासनं, सोपा-

भास्वती ।

"ब्रह्मचर्यमहिंसा च क्षमा शौचं तपो दमः ।
सन्तोषः सत्यमास्तिक्यं व्रताङ्गानि विशेषतः ॥
एकेनाप्यर्थहीनेन व्रतमस्य तु लुप्यते" । इति ।।४५।।

उक्ता इति । पद्मासनादि यदा स्थिरसुखं=स्थिरं सुखं सुखावहञ्च यथासुखमित्यर्थः,

तत्त्ववैशारदी ।

ऽङ्गान्तरेभ्योऽतद्गोचरेभ्योऽस्यान्तरङ्गत्वप्रतीतेः ईश्वरप्रणिधानमपि हीश्वरगोचरं, न सम्प्रज्ञेयगोचरमिति बहिरङ्गमिति सर्वमवदातम्, प्रजानातीति प्रज्ञापदव्युत्पत्तिर्दर्शिता ।। ४५ ॥

उत्तरसूत्रमवतारयति—"उक्ताः सह सिद्धिभिर्यमनियमा, आसनादीनि वक्ष्याम"-इति । तत्र "स्थिरसुखमासनम्", स्थिरं=निश्चलं, यत् सुखं=सुखावहं, तदासनमिति सूत्रार्थः, आस्यतेऽत्र, आस्ते वाऽनेनेत्यासनम् तस्य प्रभेदानाह—"तद्यथा" इति । पद्मासनं प्रसिद्धम्, स्थितस्यैकतरः पादो भून्यस्त एकतरश्चाकुञ्चितजानोरुपरिन्यस्त इत्येतद्वीरासनम्, पादतले वृषणसमीपे सम्पुटीकृत्य तस्योपरि पाणिकच्छपिकां कुर्य्याच्चद् भद्रासनम्, सव्यमाकुञ्चितं चरणं दक्षिणजङ्घोर्वन्तरे दक्षिणं चाकुञ्चितं वामजङ्घोर्वन्तरे निक्षिपेदेतत्स्वस्तिकम्, उपविश्य श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घोरूः पादौ प्रसार्य्य दण्डासनमभ्यसेत्, योगपट्टकयोगात्सोपाश्रयम्, जानुप्रसारितबाह्वोः शयनंपर्य्यङ्कं, क्रौञ्चनिषदनादीनि

पातञ्जलरहस्यम् ।

द्रव्यं यथा दधीति । क्रत्वर्थता दध्ना जुहोतीति होमनिर्वाहकपुरुषार्थता दध्नेन्द्रियकामस्य जुहुयादिति, अङ्गान्तरेभ्यः यमादिपञ्चकेभ्यः साक्षात् मनस्थैर्यहेतुत्वात् ॥ ४५ ॥

आसनेन रुजं हन्तीत्युक्तं; तत् किमात्मकं किंलक्षणकं चेत्याह—स्थिरेति । पाणिकच्छ-

वार्त्तिकम् ।

रकतयाऽनावश्यकतया च वक्ष्यतीति ॥ ४५ ॥

सूत्रान्तरमवतारयति—उक्ता इति ।

"स्थिरसुखमासनम्" स्थिरं निश्चलं सुखकरं च यत्तदासनम् आस्यतेऽनेन प्रकारेणेत्यासनमित्यर्थः, आसनस्य भेदानाह—तद्यथेति । तत्र पद्माद्यासनचतष्टयस्य लक्षणं वसिष्ठेनोक्तम्—

अङ्गुष्ठौ सन्निबध्नीयाद् हस्ताभ्यां व्युत्क्रमेण तु ।
ऊर्वोरुपरि विप्रेन्द्र ! कृत्वा पादतले उभे ॥
पद्मासनं भवेदेतत् सर्वेषामेव पूजितम् ।
एकपादमथैकस्मिन् विन्यस्योरौ च संस्थितः ॥
इतरस्मिंस्तथा पाद वीरासनमुदाहृतम् ।

अस्यैवार्द्धमर्द्धासनमप्युच्यते तथा—

गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत्।
पार्श्वपादौ च पाणिभ्यां दृढं बध्वा सुनिश्चलः ॥

श्रयं, पर्य्यङ्कं, क्रौञ्चनिषदनं, हस्तिनिषदनम्, उष्ट्रनिषदनं, समसंस्थानं, स्थिरसुखं, यथासुखं चेत्येवमादीति ॥ ४६ ॥

**प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥**

भवतीति वाक्यशेषः, प्रयत्नोपरमात् सिद्ध्यत्यासनं, येन नाङ्गमेजयं-

भास्वती ।

भवति तदा योगाङ्गमासनं भवति ॥ ४६ ॥

भवतीतीति । प्रयत्नोपरमात् = पद्मासनादिगतस्निरुन्नतस्थापनप्रयत्नादन्यप्रयत्नशैथिल्यं-कुर्यादित्यर्थः, मृतवत् स्थितिरेव प्रयत्नशैथिल्यम्, आनन्त्ये = परममहत्त्वे वा समापन्नो-

तत्त्ववैशारदी ।

क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात्प्रत्येतव्यानि पार्ष्णिपादाग्राभ्यां द्वयोराकुञ्चितयोरन्योन्यसंपीडनं समसंस्थानम्, येन संस्थानेनावस्थितस्य स्थैर्य्यसुखं सिद्ध्यति तदासनं-स्थिरसुखं तत् तत्रभगवतः सूत्रकारस्य संमतम्, तस्य विवरणं—"यथासुखं च" इति ।४६।

आसनस्वरूपमुक्त्वा तत्साधनमाह—"प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्", सांसिद्धिको हि प्रयत्नः शरीरधारको न योगाङ्गस्योपदेष्टव्यासनस्य कारणम्, तस्य तत्कारणत्व उपदेशवैयर्थ्यात् स्वरसत एव तत्सिद्धेः तस्मादुपदेष्टव्यस्यासनस्यायमसाधको विरोधी च स्वाभाविकः प्रयत्नः तस्य च याहच्छिकासनहेतुतयाऽऽसननियमोपहन्तृत्वात् तस्मादुपदिष्टनियमासनमभ्यस्यता स्वाभाविकप्रयत्नशैथिल्यात्मा प्रयत्न आस्थेयो, नान्यथोपदिष्टमासनं सिध्यतीति स्वाभाविकप्रयत्नशैथिल्यमासनसिद्धिहेतुः, अनन्ते वा = नागनायके

पातञ्जलरहस्यम् ।

पिकामनीरन्ध्रमङ्गुलिप्रसारितवामहस्तोपरि तथैव प्रसारितदक्षिणहस्तः किं बहुना येन केनापि संस्थानेनावस्थितस्य स्थैर्यं सुखं चेत् सिध्यति तदासनं स्थिरं सुखञ्चेति ॥ ४६ ॥

ततः किं तत्राह-प्रेति । असञ्जातविरोधित्वेनाश्रितस्य निवर्तकः शास्त्रीयप्रयत्नः, अनधिगतगन्तृत्वात् शास्त्रस्येत्याह-उपदेशवैयर्थ्यादिति । नागनायके नागानां प्रभौ, प्रभुत्वमेवाह-स्थि-

वार्त्तिकम् ।

भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् ।
जान्वोरन्तरे सम्यक् कृत्वा पादतले उभे ॥
ऋजुकायः सुखासीनः स्वस्तिकं तत्प्रचक्षते । इति,

इतराण्यासनानि · योगप्रदीपाद्युक्तानि संक्षेपात्कथ्यन्ते—दण्डासनम् = उपविश्य श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घोरुपादौ प्रसार्य दण्डवच्छयनम्, सोपाश्रयं योगपट्टयोगेनोपवेशनम्, पर्यङ्कं च जानुप्रसारितबाहोः शयनम्, क्रौञ्चनिषदनादीनि क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात् प्रत्येतव्यानि, जानुनोरुपरि हस्तौ कृत्वा कायशिरोग्रीवस्यावक्रभावेनावस्थानं समवस्थानम्, स्थिरसुखं च सूत्रोपात्तं, तस्य व्याख्यानं यथासुखमिति, आदिशब्देन मायूराद्यासनानि ग्राह्याणि, यावत्यो जीवजातयस्तावन्त्येवासनानीति संक्षेपः ॥ ४६ ॥

आसनस्थैर्यस्योपायमाह—

"प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्" प्रयत्नशैथिल्यस्य द्वारमाह—येन नाङ्गेति । बहुव्यापारानन्तरं चेदासनं क्रियते तदाऽङ्गकम्पनादासनस्थैर्यं न भवतीत्याशयः, अनन्तेति । अथ वा प्रयत्नशालित्वेऽपि पृथिवीधारिणि स्थिरतरशेषनागे समापन्नं तद्धारणया तदात्मताऽऽपन्नं चित्तमासनं निष्पादयतीत्यर्थः, तत्रानन्तानुगमत्वात् सजातीयभावनावशाद्वाऽदृष्टवि-

भवति, अनन्ते वा समापन्नं चित्तमासनं निर्वर्त्तयताति ॥ ४७ ॥

**ततो द्वन्द्वानभिघातः ॥ ४८ ॥**

शीतोष्णादिभिर्द्वन्द्वैरासनजयान्नाभिभूयते ॥ ४८ ॥

**तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः॥४९॥**

सत्यासनजये बाह्यस्य वायोराचमनं श्वासः, कोष्ठ्यस्य वायोर्निःसा-

भास्वती ।

भवेदासनसिद्धये ॥ ४७ ॥

आसनसिद्धिफलमाह—तत इति । शरीरस्य स्थैर्यादभिभूतस्पर्शादिबोधो योगी द्राक् न शीतोष्णक्षुत्पिपासाऽऽदिद्वन्द्वैरभिभूयते ॥ ४८ ॥

सतीति । सुगमं भाष्यम् , श्वासप्रश्वासप्रयत्नेन सह यच्चित्तबन्धनं तदेव योगाङ्ग-

तत्त्ववैशारदी ।

स्थिरतरफणासहस्रविधृतविश्वम्भरामण्डले समापन्नं चित्तमासनं निर्वर्त्तयतीति ॥ ४७ ॥

आसनविजयसूचकमाह—"ततो द्वन्द्वानभिघातः" निगदव्याख्यातं भाष्यम्, आसनमप्युक्तं विष्णुपुराणे—

"एवं भद्रासनादीनां समास्थानगुणैर्युतम्" इति ॥ ४८ ॥

आसनानन्तरं तत्पूर्वकतां प्राणायामस्य दर्शयँस्तल्लक्षणमाह—"तस्मिन्नित्यादि-प्राणायाम" इत्यन्तं सूत्रम् , रेचकपूरककुम्भकेष्वस्ति श्वासप्रश्वासयोर्गतिविच्छेद इति प्राणायामसामान्यलक्षणमेतदिति, तथा हि—यत्र बाह्यो वायुराचम्याऽन्तर्धार्य्यते पूरके तत्रास्ति श्वासप्रश्वासयोर्गतिविच्छेदः, यत्रापि कोष्ठ्यो वायुर्विरिच्य बहिर्धार्य्यते रेचके तत्राप्यस्ति

पातञ्जलरहस्यम् ।

रेत्यादिना, विश्वम्भरा = धरित्री ॥ ४७ ॥

आसनसिद्धौ किं स्यात्तत्राह-तत इति । द्वन्द्वानि शीतोष्णादीनि तैरासनजयान्नाभिभूयते, "आसनेन रुजं हन्ती"त्युक्तेः ॥ ४८ ॥

प्राणायामस्य विभागमादर्शयन् प्राणायामलक्षणमाह—तस्मिन्निति । आचमनं पानम् , एवम् उदर्यस्य वायोर्निस्सरणं प्राणयामः, श्वासश्च प्रश्वासश्च श्वासप्रश्वासौ तौ चासेवयेदित्याह-रेचकेति । त्रिष्वपि तयोरेव विच्छेदो विरोध इत्याह-तथा हीति । आचमने प्र-

वार्त्तिकम् ।

शेषवशाद्वेत्यन्यदेतत् ॥ ४७ ॥

आसनप्रतिष्ठायां सिद्धिमाह—

"ततो द्वन्द्वानभिघातः" भाष्यं सुगमम् ॥ ४८ ॥

क्रमप्राप्तं प्राणायाममाह—

"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" वक्ष्यमाणचतुर्विधप्राणायामस्यैवं सामान्यलक्षणं गतिविच्छेदः, शास्त्रोक्तरीत्या स्वाभाविकगतेः प्रतिषेध इत्यर्थः, स च रेचकपूरककुम्भकेष्वनुगतः, नन्वेवं प्रत्येकस्यापि प्राणायामत्वापत्त्या त्रिभिर्मिलितैरेकप्राणायाम इति—

'प्राणायामस्तु विज्ञेयो रेचकपूरककुम्भकै'—

रित्यादिवाक्योक्तं व्याहन्येतेति चेन्न—त्रयाणां पौर्वापर्येण प्रथमभूमिकायां सहानुष्ठाननियमादेकत्वव्यवहारोपपत्तेः, न तु तादृशवाक्येषु मिलितानामेव प्राणायामत्वं विवक्षितम्,

रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम् ।
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः ॥

रणं प्रश्वासः तयोर्गतिविच्छेदः = उभयाभावः प्राणायामः ॥ ४६ ॥

स तु—

**बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥**

यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः यत्र श्वासपूर्वको गत्यभावः

भास्वती ।

प्राणायामो योगस्य चित्तवृत्तिनिरोधस्वरूपत्वादिति वेदितव्यम् ॥ ४९ ॥

यत्रेति । प्रश्वासपूर्वकः = चित्ताधानप्रयत्नसहितरेचनपूर्वको गत्यभावः = यो वायोर्बहिरेव धारणं तथा वायुधारणप्रयत्नेन सह चित्तस्यापि बन्धः स बाह्यवृत्तिः प्राणायामः, नायं रेचनमात्रः किन्तु रेचकान्तनिरोधः, उक्तञ्च—

"निष्क्राम्य नासाविवरादशेषं प्राणं बहिः शून्यमिवानिलेन ।
निरुध्य सन्तिष्ठति रुद्धवायुः स रेचको नाम महानिरोधः" ॥ इति,

यत्र श्वासपूर्वकः = पूर्ववत् प्रयत्नविशेषात् पूरणपूर्वको गत्यभावः = वायोरन्तर्धारणं चि-

तत्त्ववैशारदी ।

श्वास प्रश्वासयोर्गतिविच्छेदः, एवं कुम्भकेऽपीति, तदेतद् भाष्येणोच्यते—"सत्यासनजय" इति ॥ ४९ ॥

प्राणायामविशेषत्रयलक्षणसूत्रमवतारयति—"स तु" इति । "बाह्येत्यादि-सूक्ष्म इत्य-

पातञ्जलरहस्यम् ।

श्वासस्य गत्युपरमोऽन्तर्णयने श्वासस्य गत्युपरम इत्यर्थः, यथाऽधरां भूमिं पदाऽऽक्रम्योत्तरां द्वितीयसोपानस्थानीयामधितिष्ठति तद्वदुत्तरोत्तरं यावच्चतुर्थम् ॥ ४९-५१ ॥

वार्त्तिकम् ।

इति वासिष्ठसंहिताऽऽदौ केवलकुम्भकस्यापि प्राणायामत्ववचनादिति, इदं सूत्रं व्याचष्टे—सत्यासन इति । यथा यमनियमयोरन्यकालकृतयोर्योगाङ्गत्वं नैवमासनस्य किं तु प्राणायामाद्यङ्गपञ्चकसाहित्येनेत्येतत् प्रतिपादयितुं सत्यासने इति विशेषणं तथा च सत्यासन इति समाधिसूत्रपर्यन्तम् अनुवर्त्तनीयम्, गीतादावासनोपरागेणैव ध्यानादिस्मरणादिति, अत एव चासनादीनां षडङ्गानां सहानुष्ठेयत्वेनारादुपकारकतयाऽन्तरङ्गत्वमित्याशयेन स्मृत्यादिषु क्वचित्प्रसङ्गो योग उच्यते, यमनियमयोः कालान्तरीयतयाऽत्यन्तबहिरङ्गत्वादिति, आचमनमन्तः प्रवेशः, नन्वेवं प्रवेशनिर्गमरूपयोः श्वासप्रश्वासयोः गतिरेव नास्तीत्याशयेनाह—उभयाभाव इति । तथा च गतिशब्दार्थोऽत्र न विवक्षितः स्वाभाविकश्वासप्रश्वासयोः प्रतिषेधः प्राणायाम इत्येवार्थः ॥ ४९ ॥

अवान्तरभेदप्रतिपादकमुत्तरसूत्रं पूरयित्वोत्थापयति—स त्विति ।

"बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः" स तु प्राणायामो बाह्यवृत्तिराभ्यन्तरवृत्तिः स्तम्भवृत्तिरिति त्रिविधः रेचकपूरककुम्भकभेदात्, तदुक्तं विष्णुपुराणे—

परस्परेणाभिभवं प्राणापानौ यदानिलौ ।
कुरुतः स द्विधा तेन तृतीयः संयमात्तयोः ॥ इति,

स च च त्रिविधः प्राणायामो देशकालसंख्याभिः परिदृष्टो निर्णीतो नियमितो भवति तदभ्यासवशाद् क्रमेण दीर्घसूक्ष्मसंज्ञको भवतीति सूत्रार्थः, तदेतद्व्याचष्टे—यत्रेति । वि-

स आभ्यन्तरः तृतीयः स्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद् भवति यथा तप्ते न्यस्तमुपले जलं सर्वतः सङ्कोचमापद्यते तथा द्वयोर्युगपद् भवत्यभाव इति, त्रयोऽप्येते देशेन परिदृष्टाः=इयानस्य विषयो देश इति, काले-

भास्वती ।

तस्यापि बन्धः स आभ्यन्तरवृत्तिः प्राणायामः पूरकान्तप्राणरोधो न पूरणमात्रः, यथोक्तम्—

"बाह्यस्थितं घ्राणपुटेन वायुमाकृष्य तेनैव शनैः समन्तात् ।
नाडीश्च सर्वाः परिपूरयेद् यः स पूरको नाम महानिरोधः" ॥ इति,
पूरयित्वा निरुद्धवायुर्भूत्वाऽवस्थानमेवायं पूरक इत्यर्थः,

यत्र रेचनपूरणप्रयत्नमकृत्वा पूरणरेचने अनपेक्ष्य यथाऽवस्थितवायौ सकृद् विधारणप्रयत्नाद् श्वासप्रश्वासगत्यभावः तथा च चित्तस्य वायुधारणप्रयत्नेन सह ध्येयविषये बन्धः स एव तृतीयः स्तम्भवृत्तिः प्राणायामः, अत्र स्तम्भवृत्तौ सर्वतः परिशुष्यत्तप्तोपलन्यस्तजलवद् वायुः सर्वशरीरेषु विशेषतः प्रत्येकेषु सङ्कोचमापद्यत इत्यनुभूयते, न चायं रेचकपूरकसहकारी कुम्भकः, उक्तञ्च—

"न रेचको नैव च पूरकोऽत्र नासापुटे संस्थितमेव वायुम् ।
सुनिश्चलं धारयति क्रमेण कुम्भाख्यमेतत् प्रवदन्ति तज्ज्ञाः" ॥ इति,

त्रय इति । देशेन कालेन सङ्ख्यया च परिदृष्टा बाह्याभ्यन्तरस्तम्भवृत्तिप्राणायामा-

तत्त्ववैशारदी ।

न्तं सूत्रम्, वृत्तिशब्दः प्रत्येकं सबध्यते, रेचकमाह—"तत्र प्रश्वास" इति । परकमाह—"यत्र श्वास" इति । कुम्भकमाह—"तृतीय" इति तदेव । स्फुटयति—"यत्रोभये:" इति ।

वार्त्तिकम् ।

शेषाणां सामान्यनिष्ठत्वाद् इयं सप्तमी, यत्र प्राणायामे गतिविच्छेदे प्रश्वासपूर्वकगत्यभावः प्रश्वासेन रेचकेन गतिविच्छेदः स बाह्यो बाह्यवृत्तिः प्राणायामो रेचकनामेत्यर्थः, न च रेचनं बाह्य इत्येवास्त्विति वाच्यम् प्राणस्यायामः प्राणायाम इति योगादरेणायामाख्यनिरोधस्य विशेष्यीकरणादिति, यत्र श्वासेति । यत्र श्वासेन पूरकेण गत्यभावः स आभ्यन्तरः आभ्यन्तरवृत्तिः प्राणायामः पूरकनामेत्यर्थः, स्तम्भवृत्तिरिति । यत्रोभयाभावः श्वासप्रश्वासयोरभावः सकृत्प्रयत्नादेवाभ्यासनिरपेक्षाद्भवति स स्तम्भवृत्तिः प्राणायामः कुम्भकनामेत्यर्थः, वक्ष्यमाणस्य कुम्भकभेदस्य चतुर्थप्राणायामस्य व्यावर्त्तनाय सकृत्प्रयत्नादिति विशेषणम्, स हि प्रयत्नबाहुल्येनैव भवतीति तत्रैव प्रतिपादयिष्यति, एकदैव बाह्याभ्यन्तरप्राणविलने दृष्टान्तमाह--यथा तप्त इति । द्वयोर्बाह्याभ्यन्तरदेशयोः, देशकालसंख्याभिः परिदृष्ट इति विशेषणस्यायमर्थः-एतावद्देशेन वा एतावत्कालेन वा एतावन्मात्रसंख्याभिर्वाऽवच्छिन्नो मया रेचकादिः कर्त्तव्य इत्येवमवधारित इति, तदेतद्विभज्य व्याचष्टे-त्रयोऽप्येत इति । त्रयो रेचकपूरककुम्भकाः, इयानिति । नासाग्रात् प्रादेशद्वादशाङ्गुलहस्तादपरिमितो बाह्यदेशो रेचकस्य विषयः स चेषीकातूलादिक्रियानिश्चेयः, पूरकस्य चापादतलमामस्तकमाभ्यन्तरो विषयः स च पिपीलिकास्पर्शसदृशेन स्पर्शेन निश्चेयः, कुम्भकस्य रेचकपूरकयोः बाह्याभ्यन्तरदेशौ समुच्चितावेव विषयः, उभयत्रैव प्राणस्य विलयात्, स च तूलस्य क्रियाया उक्तस्पर्शस्य चानुपलब्ध्या निश्चेय इति, कालेनेति । चक्षुर्निमेषावच्छिन्नस्य कालस्य चतुर्थभागः क्षणः तेषामियत्ताऽवधारणेनावच्छिन्नाः एतावत्क्षणान् रेचकादिः कर्त्तव्य इति नियमिता इत्यर्थ

न परिदृष्टः=क्षणानामियत्ताऽवधारणेनावच्छिन्ना इत्यर्थः, सङ्ख्याभिः परिदृष्टाः=एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातः तद्वन्निगृहीतस्यतावद्भि-

भास्वती ।

दीर्घाः सूक्ष्माश्च भवन्ति, देशेन परिदृष्टिर्यथा—इयानस्य विषयः=इयत्परिमाणदेशव्यवहितं तूलं न प्रश्वासवायुश्चालयति सूक्ष्मीभूतत्वादिति, देहाभ्यन्तरदेशेऽपि स्पर्शविशेषानुभवो देशपरिदर्शनम् , कालपरिदृष्टिर्यथा—इयतः क्षणान् यावद् धारयितव्यमिति, सङ्ख्यापरिदृष्टिर्यथा—एतावद्भिः श्वासप्रश्वासैः=तदवच्छिन्नकालेनेत्यर्थः, प्रथम उद्घातः, एतावद्भिर्द्वितीय इत्यादिः, श्वासाय प्रश्वासाय च य उद्वेगः स उद्घातः, उक्तञ्च—

"नीचो द्वादशमात्रस्तु सकृदुद्घात ईरितः ।
मध्यमस्तु द्विरुद्घातश्चतुर्विंशतिमात्रकः ॥
मुख्यस्तु यस्त्रिरुद्घातः षट्त्रिंशन्मात्र उच्यते" । इति,

श्वासप्रश्वासावच्छिन्नकालो मात्रा, द्वादशमात्रकः प्राणायामः प्रथम उद्घातो मतः,

तत्त्ववैशारदी ।

यत्रोभयोः श्वासप्रश्वाययोः सकृदेव विधारकात्प्रयत्नादभावो भवति न पुनः पूर्ववदापूरणप्रयत्नौघप्रविधारकप्रयत्नो नापि रेचकप्रयत्नौघविधारणप्रयत्नोऽपेक्ष्यते किन्तु यथा तप्त उपले निहितं जलं परिशुष्यत्सर्वतः सङ्कोचमापद्यते एवमयमपि मारुतो वहनशीलो बलवद्विधारकप्रयत्ननिरुद्धक्रियः शरीर एव सूक्ष्मीभूतोऽवतिष्ठते न तु पूरयति येन पूरकः न तु रेचयति येन रेचक इति, 'इयानस्य देशो विषयः'=प्रादेशवितस्तिहस्तादिपरिमितो, निवाते प्रदेशे इषीकातूलादिक्रियाऽनुमितो बाह्यः, एवमान्तरोऽप्यापादतलमामस्तकं पिपीलिकास्पर्शसदृशेनानुमितः स्पर्शेन निमेषक्रियाऽवच्छिन्नस्य कालस्य चतुर्थो भागः क्षणः, तेषामियत्ताऽवधारणेनावच्छिन्नः=स्वजानुमण्डलं पाणिना त्रिःपरामृश्य छोटिकाऽवच्छिन्नः कालो मात्रा ताभिः षट्त्रिंशन्मात्राभिः परिमितः प्रथम उद्घातोऽर्द्धमन्दः स एव द्विगुणीकृतो मध्यः स एव त्रिगुणीकृतस्तृतीयस्तीव्रः तमिमं संख्यापरिदृष्टं प्राणायाममाह—"संख्याभिः" इति । स्व-

वार्त्तिकम् ।

संख्याभिरपि कालनियम एव क्रियते, तथाऽपि प्रकारभेदाद्भेद इति, तत्र हि शङ्खध्वन्यादिना संख्याभिरिति । मात्राणां द्वादशादिसंख्याभिरित्यर्थः, यद्यपि कालनियमः क्रियते स कालेन परिदृष्टः यत्र च वक्ष्यमाणमात्रासंख्याभिः कालनियमः क्रियते स संख्याभिः परिदृष्ट इति, संख्याऽर्थं मात्रा च मार्कण्डेयप्रोक्ता—

निमेषोन्मेषणे मात्रा तालो लघ्वक्षरं तथा ।
प्राणायामस्य संख्याऽर्थं स्मृतो द्वादशमात्रिकः ॥ इति,

निमेषादिलघ्वक्षरान्तं मात्राप्रमाणं तदेव दर्शयत्युत्तरार्द्धेन द्वादशमात्रिको द्वादश गुणितो यः कश्चन निमेषादिरयं पदार्थः प्राणायामस्य संख्याऽर्थं स्मृत इत्यर्थः, एवं प्रणवादयोऽपि मात्रा वसिष्ठयाज्ञवल्क्यादिभिरुक्ताः, पूरकादित्रय एव द्वादशमात्रेत्ययमधमः कल्पः, यतः पूरकादिषु प्रत्येकं मात्रायाः संख्याभेदो वसिष्ठसंहितायामुक्तः—

एवं ज्ञात्वा विधानेन प्रणवेन समाहितः ।
प्राणायामत्रयं कुर्यात्पूरकुम्भकरेचकैः ॥
आकृष्य श्वसनं बाह्यात् पूरयेदिडयोदरम् ।
शनैः षोडशमात्राभिरकारं तत्र संस्मरन् ॥
मकारं मूर्त्तिमत्रापि संस्मरन् प्रणवं जपेत् ।
धारयेत् पूरितं पश्चात् चतुःषष्ट्या तु मात्रया ॥

**द्वितीय उद्घातः, एवं तृतीयः, एवं मृदुः, एवं मध्यः, एवं तीव्रः, इति सङ्ख्या-परिदृष्टः स खल्वयमेवमभ्यस्तो दीर्घसूक्ष्मः ॥ ५० ॥**

भास्वती ।

अभ्यासेन निगृहीतस्य = वशीकृतस्य प्रथमोद्घातस्यैतावद्भिः श्वासप्रश्वासैः = तदवच्छि-कालव्यापीत्यर्थः, द्वितीयश्चतुर्विंशतिमात्रक उद्घातो मध्यः, एवं तृतीय उद्घातस्तीव्रः षट्-त्रिंशन्मात्रकः, स इति । स प्राणायाम एवमभ्यस्तो दीर्घः = दीर्घकालव्यापी, तथा—सूक्ष्मः = सुसाधितत्वात् श्वासप्रश्वासयोः सूक्ष्मतया सूक्ष्म इति, सङ्ख्यापरिदृष्टिः श्वास-प्रश्वाससङ्ख्याभिः कालपरिदृष्टिरेवेति द्रष्टव्यम् ॥ ५० ॥

तत्त्ववैशारदी ।

स्थस्य हि पुंसः श्वासप्रश्वासक्रियाऽवच्छिन्नेन कालेन यथोक्तच्छोटिकाकालः समानः प्रथमो-द्घातकर्मतां नीत उद्घातो वशीकृतो विजितो निगृहीतः, क्षणानामियत्ताकालो, विवक्षितः श्वा-सप्रश्वासेयत्तासङ्ख्येति, कथञ्चिद्भेदः स खल्वयं प्रत्यहमभ्यस्तो दिवसपक्षमासादिक्रमेण देश कालप्रचयव्यापितया दीर्घः, परमनैपुण्यसमधिगमनीयतया च सूक्ष्मो न तु मन्दतया ॥ ५० ॥

वार्त्तिकम् ।

यावद्वा शक्यते तावद्धारणं जपसंयुतम् ।
पूरितं रेचयेत्पश्चात् प्रणवं ह्यनिलान्वितम् ॥
शनैः पिङ्गलया पुत्र ! द्वात्रिंशन्मात्रया पुनः ।
ध्यायन्नाद्याक्षरं तत्र प्रणवस्य समाहितः ॥ इति,

अकारोकारमकाराणां मूर्त्तयो ब्रह्मविष्णुरुद्रशरीराणि तमेतं पुराणयुक्तं मात्राभेदं सामा-न्यतो भाष्यकार आह—एतावद्भिरित्यादिना । एतावद्भिः षोडशादिभिः मात्राऽऽख्यैः पदा-र्थैः निमेषोन्मेषणादिभिः श्वासप्रवेशः पूरकः प्रथम उद्घातः, वायोरुद्धननं गतिनिरोध इति या वत्, तथा निगृहीतस्य स्तम्भितस्य वायोरेतावद्भिश्चतुःषष्ट्यादिभिर्निमेषोन्मेषणादिभिः कुम्भ-को द्वितीय उद्घातः, एवं तृतीय उद्घातोऽर्थाद्रेचकः, एतावद्भिद्वात्रिंशदादिभिर्निमेषोन्मेषणा-दिभिरित्यर्थः, अत्र प्रथमादिशब्दैः पूरकादित्रये क्रमवचनात्सौत्रः पाठक्रमोऽनुष्ठाने नादर्त्तव्यः, तथा च पूरककुम्भकरेचका इत्येवौत्सर्गिकोऽनुष्ठानक्रमः पुराणादिषु वाहुल्येन दर्शनाच्च, सृष्टौ महदादिक्रमवदिति । प्रकारान्तरेणापि संख्यापरिदृष्टत्वमाह—एवं मृदुरित्यादिना, एवम् एतावद्भिर्मात्राप्रमाणैर्मृदुः प्राणायामः एवम् एतावद्भिर्मध्यमः एवमेतावद्भिस्तीव्रः प्राणायाम इत्यपि संख्यापरिदृष्टो भवतीत्यर्थः, तदुक्तं कौर्मे—

मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रकः ।
मध्यमः प्राणसंरोधः षड्त्रिंशन्मात्रिकोऽन्तिमः ॥ इति,

अत्र पूरकादिविशेषावचनात् त्रिष्वपि प्राणायामेषु द्वादशद्वादशमात्रादिरूपैकैव संख्या-इत्येवं पृथक्कल्पः, देशकालसंख्याभिः परिदृष्ट इत्यत्र चेच्छाविकल्प एव न तु समुच्चयः, उ-दाहृतवसिष्ठवाक्यादौ केवलमात्रासंख्यायामपि प्राणायामदर्शनात्, समुच्चयानुष्ठाने तु फल-भूमा भवत्येव "भूयसि भूय" इति न्यायादिति, दीर्घसूक्ष्म इति दलं व्याचष्टे-स खल्विति । स वाह्याभ्यन्तरस्तम्भवृत्तिस्त्रिविधः प्राणायामः, एवं देशाद्यवधारणैरभ्यस्तः स दीर्घसूक्ष्मसं-ज्ञको भवतीत्यर्थः, दीर्घश्चासौ सूक्ष्मश्चेति सान्वयेयं संज्ञा, देशाद्यन्यतमनियमेन हि प्रत्यहम-भ्यस्यमानः क्रमेण कालवृद्ध्या दीर्घकालव्यापित्वेन दीर्घो भवति वायुसंचारस्यातिसूक्ष्मत-या च सूक्ष्म इति, यद्यपि अभ्यस्त इति सूत्रे नास्ति तथाऽपि दीर्घसूक्ष्मसंज्ञया अर्थाक्षिप्त एव भाष्यकारेण व्याख्यात इति, तदेवं प्राणायामस्य रेचककुम्भकपूरकाख्यविशेषत्रयमभ्यासा-द्यनुयोगेन तेषां दीर्घसूक्ष्मत्वं चोक्तम् ॥ ५० ॥

## बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥

देशकालसङ्ख्याभिर्बाह्यविषयः परिदृष्ट आक्षिप्तः तथाऽऽभ्यन्तरविषयः

भास्वती ।

देशेति । चतुर्थं प्राणायामं व्याचष्टे–देशकालसङ्ख्याभिः परिदृष्टो बाह्यविषयः= बाह्यवृत्तिः प्राणायामः, आक्षिप्तः=अभ्यासेन दीर्घसूक्ष्मभूतत्वाद् देशाद्यालोचनत्याग-आक्षेपः, तथा कृत इत्यर्थः, तथा—आभ्यन्तरवृत्तिः प्राणयामोऽप्याक्षिप्तः, उभयथा= बाह्यत आभ्यान्तरतश्चोभयथा दीर्घसूक्ष्मीभूतः, तत्पूर्वकः=दीर्घसूक्ष्मतापूर्वको भूमिज-याद्=दीर्घसूक्ष्मीभवनस्य भूमिजयात्, क्रमेण=क्रमतः, न तु तृतीयस्तम्भवृत्तिवदह्नाय,

तत्त्ववैशारदी ।

एवं त्रयो विशेषा लक्षिताश्चतुर्थं लक्षयति—"बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" व्याचष्टे-"देशकालसङ्ख्याभिः" इति । आक्षिप्तः=अभ्यासवशीकृताद् रूपादवरोपितः सोऽपि दीर्घ-सूक्ष्मः, एवं तत्पूर्वको=बाह्याभ्यन्तरविषयप्राणायामो देशकालसङ्ख्यादर्शनपूर्वकः न चासौ चतुर्थस्तृतीय इव सकृत्प्रयत्नादह्नाय जायते किन्त्वभ्यस्यमानस्तां तामवस्थां समा-पन्नः तत्तदवस्थाविजयानुक्रमेण भवतीत्याह—"भूमिजयाद्" इति । ननूभयोर्गत्यभावः स्त-

वार्त्तिकम् ।

इदानीं केवलकुम्भकरूपं प्राणायामस्य चतुर्थं विशेषमाह—

"बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः", बाह्याभ्यन्तरविषयकौ बाह्याभ्यन्तरवृत्ती पूर्वसूत्रोक्तौ रेचकपूरकौ तयोराक्षेपी=अतिक्रमी, तावतिक्रम्य त्यक्त्वा स्वयमेव केवलो वर्त्तत इति यावत्, एवंभूतो यः प्राणायामः स चतुर्थ इत्यर्थः, अस्य च केवलकुम्भक इति संज्ञा वसिष्ठ-वाक्यद्वयक्तीभविष्यति, पूर्वसूत्रोक्तस्तम्भवृत्तिस्तु नियमेन रेचकपूरकयोरन्तराल एव वर्त्तत-इति न तदतिक्रमी, रेचकपूरकविषयातिक्रमस्यापि लाभाय विषयघटितं लक्षणमुक्तम्, न तु रेचकपूरकातिक्रमीत्येवंसूत्रितम्, अयं च कुम्भको न रेचकपूरकदेशेन परिच्छिन्नः व्यापकत्वात्, नापि कालसंख्याभ्यां परिच्छिन्नः स्वेच्छया माससंवत्सरादिकालस्थायित्वात्, स च प्राणा-यामो ध्रुवस्य विष्णुपुराणे श्रूयते, तस्य हि तपसि प्राणनिरोधेन सर्वजीवप्राणनिरोधोऽभव-दिति तत्रोक्तम्, अतस्तस्य केवलकुम्भक आसीदिति, अयं चतुर्थः प्राणायामः सोपायो व-सिष्ठसंहितायामुक्तः, यथा—

प्रस्वेदं जनयेद्यस्तु प्राणायामो हि सोऽधमः ।
मध्यमः कम्पनात्प्रोक्त उत्थानं चोत्तमे भवेत् ॥
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसम्भवः ।
निश्वासोच्छ्वासकौ देहे स्वाभाविकगुणावुभौ ॥
तथाऽपि नश्यतस्तेन प्राणायामोत्तमेन हि ।
तयोर्नाशे समर्थः स्यात् कर्त्तुं केवलकुम्भकम् ॥
रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम् ।
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः ॥
सहितं केवलं वाऽपि कुम्भकं नित्यमभ्यसेत् ।
यावत्केवलसिद्धिः स्यात् तावत्सहितमभ्यसेत् ॥
केवले कुम्भके सिद्धे रेचपूरकवर्जिते ।
न तस्य दुर्लभं किं चित् त्रिषु लोकेषु विद्यते ॥ इति,

आकाशगमनादिशक्त्याविर्भावेण कामगत्वादिकं स्याद् इत्यर्थः, चतुर्थस्योत्पत्तिकर्म-कथयति—देशकालेति । बाह्यविषयो रेचको देशकालसंख्याभिरादौ परिदृष्टः पश्चाच्च दे-

परिदृष्ट आक्षिप्तः, उभयथा दीर्घसूक्ष्मः तत्पूर्वको भूमिजयात् क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायामः, तृतीयस्तु विषयानालोचितो गत्यभावः सकृदारब्ध एव देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः, चतुर्थस्तु श्वासप्रश्वासयोर्विषयावधारणात् क्रमेण भूमिजयादुभयाक्षेपपूर्वको गत्यभावश्चतुर्थः प्राणायाम इत्ययं विशेषः ॥ ५१ ॥

**ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥**

प्राणायामानभ्यस्यतोऽस्य योगिनः क्षीयते विवेकज्ञानावरणीयं कर्म,

---

भास्वती ।

उभयोः = बाह्याभ्यन्तरयोः, गत्यभावः = स्तम्भवृत्तिविशेषरूपः, चतुर्थः प्राणायाम इति शेषः, तृतीयचतुर्थयोर्भेदं विवृणोति, सुगमम्, प्रथमांशव्याख्यानेन च व्याख्यातम् ॥ ५१ ॥

प्राणायामस्य योगानुकूलं फलमाह—तत इति । व्याचष्टे—प्राणायामानिति । विवेकज्ञा-

तत्त्ववैशारदी ।

म्भवृत्तावप्यस्ति इति कोऽस्माद् विशेष इत्यत आह—"तृतीय" इति । अनालोचनपूर्वः सकृत्प्रयत्ननिर्वर्त्तितस्तृतीयः, चतुर्थस्त्वालोचनपूर्वो बहुप्रयत्ननिर्वर्त्तनीय इति विशेषः, तयोः पूरकरेचकयोर्विषयो नालोचितोऽयन्तु देशकालसङ्ख्याभिरालोचित इत्यर्थः ॥ ५१ ॥

प्राणायामस्यावान्तरप्रयोजनमाह—"ततः क्षीयते प्रकाशावरणम्" आव्रियतेऽनेन बुद्धिसत्त्वप्रकाश इत्यावरणं क्लेशः पाप्मा च, व्याचष्टे—"प्राणायामान्" इति । ज्ञायतेऽनेनेति ज्ञानं — बुद्धिसत्त्वप्रकाशः विवेकस्य ज्ञानं विवेकज्ञानं, स हि विवेकज्ञानमावृणोतीति विवे-

पातञ्जलरहस्यम् ।

प्राणायामेन पातकमित्युक्तिमाश्रित्याह—तत इति । प्रकाशशीलस्य ज्ञानस्यावरणं प्रदीपस्येव घटादिरित्यर्थः, अपाने जुह्वति प्राणान् इत्यभिभवशब्दार्थः ॥ ५२ ॥

वार्त्तिकम् ।

शादिभिः सहैवाक्षिप्तोऽतिक्रामितो भवतीति शेषः, अतश्च सूत्रे देशवाचको विषयशब्दः कालसंख्ययोरप्युपलक्षणमित्याशयः, तथाऽऽभ्यन्तरविषयः पूरकोऽपि देशादिभिरादौ परिदृष्टः पश्चाद्देशादिभिः सहैव सोऽप्याक्षिप्तो भवति, तच्चाक्षिप्तमुभयथा दीर्घसूक्ष्मो द्विविधो दीर्घसूक्ष्मश्चिरकालं देशादिभिरभ्यस्तौ रेचकपूरकाविति यावत्, तत्पूर्वकः तदुभयाक्षेपपूर्वकस्तदुभयमाक्षिपन्निति यावत्, अवान्तरालिकभूमिकाजयात् कालक्रमेण न तु शीघ्रम् उत्पद्यमान, एवंभूत उभयोः श्वासप्रश्वासयोः गतिविच्छेदश्चतुर्थः प्राणायाम इत्यर्थः, स्तम्भवृत्त्याख्यतृतीयप्राणायामाद् मिश्रकुम्भकादस्य वैलक्षण्यमाह—तृतीयस्त्विति । तृतीयस्तु गत्यभावः स्तम्भवृत्तिर्विषयेण देशेन तदुपलक्षितकालसंख्याभ्यां चानालोचितोऽनवधारितः सकृदारब्धोऽभ्यासबाहुल्यं विनैवोत्पद्यमानश्च भवति, तथा स एव तृतीयो देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मश्च भवतीति सामान्यविशेषाभ्यां तृतीयस्य रूपद्वयमुक्तम्, चतुर्थस्य तद्विपरीततामाह—चतुर्थस्त्विति । चतुर्थस्तु श्वासप्रश्वासयो रेचकपूरकयोर्देशाख्यविषयाद्यवधारणानन्तरं क्रमिकभूमिजयाद्धेतोः पूरकरेचकाक्षेपपूर्वको गत्यभाव इत्ययं चतुर्थप्राणायामे तृतीयाद्विशेष इत्यर्थः, प्राणायामस्य चापरे सगर्भागर्भादयो विशेषाः पुराणादिषु द्रष्टव्याः—

'जपध्यानयुतो गर्भी त्वगर्भस्तद्विवर्जित'—

इत्यादिवाक्यैरिति दिक् ॥ ५१ ॥

योगे जनयितव्ये प्राणायामस्य व्यापारं तत्सिद्धिसूचकमाह—

"ततः क्षीयते प्रकाशावरणम्", ततः = प्राणायामात्, सूत्रं व्याचष्टे-प्राणायामानिति । वि-

यस्तदाचक्षते—"महामोहमयेनेन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाकार्य्ये नियुङ्क्ते" इति, तदस्य प्रकाशावरणं कर्म संसारनिबन्धनं प्राणायामाभ्यासाद् दुर्बलं भवति, प्रतिक्षणं च क्षीयते, तथा चोक्तं—"तपो न परं प्राणायामात्ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्य" इति ॥ ५२ ॥

भास्वती ।

नरूपस्य प्रकाशस्यावरणमलं = क्लेशमूलं कर्म, प्राणायामेन प्राणानां स्थैर्य्याद् देहस्यापि स्थैर्यं ततश्च कर्मनिवृत्तिः, तन्निवृत्तौ तत्संस्काराणामपि क्षयः = दौर्बल्यम्, ततो ज्ञानस्य दीप्तिः, पूर्वाचार्यसम्मतिमाह—यदिति । महामोहमयेन = अविद्यया तन्मूलकर्मणा चारोपितेनान्यथाख्यातिरूपेणेन्द्रजालेन प्रकाशशीलं यथाऽर्थख्यातिस्वभावकं सत्त्वम् = बुद्धिसत्त्वमावृत्य = तदेव सत्त्वमकार्ये संसृतिहेतुभूतकार्ये नियुङ्क्ते, तदस्येति । स्पष्टम्, स्मर्यते च—

"दह्यन्ते ध्मायमानानां धातूनां हि यथा मलम् ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहाद्" ॥ इति,

तथेति । सुगमम् ॥ ५२ ॥

तत्त्ववैशारदी ।

कज्ञानावरणीयम्, भव्यगेयप्रवचनीयादीनां कर्त्तरि निपातस्य प्रदर्शनार्थत्वात् कोपनीयरञ्जनीयवदत्रापि कर्तरि कृत्यप्रत्ययः, कर्मशब्देन तज्जन्यमपुण्यं तत्कारणं क्लेशं च लक्षयति, अत्रैवागमिनामनुमतिमाह—"यत्तदाचक्षते" इति । महामोहः = रागः, तदविनिर्भागवर्त्तिन्यविद्याऽपि तद्ग्रहणेन गृह्यते, अकार्य्यम् = अधर्मः, ननु प्राणायाम एव चेत् पाप्मानं क्षिणोति कृतं तर्हि तपसेत्यत आह—"दुर्बलं भवति" इति । न तु सर्वथा क्षीयतेऽतस्तत्प्रक्षयाय तपोऽपेक्ष्यत इति, अत्राप्यागमिनामनुमतिमाह—"तथा चोक्तम्" इति । मनुरप्याह—"प्राणायामैर्दहेद् दोषान्" इति प्राणायामस्य योगाङ्गता विष्णुपुराण उक्ता—

"प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यः ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ॥
परस्परेणाभिभवं प्राणापानौ यदाऽनिलौ ।
कुरुतस्तद्विधानेन तृतीयं संयमात्तयोः" इति ॥ ५२ ॥

वार्त्तिकम् ।

वेकज्ञानावरणीयं विवेकज्ञानावरकम्, अथ वा कोपनीयेत्यादिवद् अत्रापि कर्त्तरि कृत्यप्रत्ययः भव्यगेयप्रवचनीयादीनां कर्त्तरि निपातनस्य दिङ्मात्रप्रदर्शनपरत्वात्, कर्मेति । कर्माधर्मः तस्य ज्ञानप्रतिबन्धकत्वमेव ज्ञानावरकत्वम् एतादृशं कर्म क्षीयत इत्यर्थः, कर्मणो ज्ञानावरकत्वे पूर्वाचार्यवाक्यं प्रमाणयति–यत्तदाचक्षत इति । यत्तत्कर्म एवमाचक्षते–महामोहो रागस्तन्मयेन तत्प्रचुरेणेन्द्रजालतुल्येन शब्दादिविषयेण द्वारेण प्रकाशशीलमपि बुद्धिसत्त्वमावृत्य तदेव कर्मैवाकार्ये संसारहेतुव्यापारे एव नियुङ्क्त इत्यर्थः, दुर्बलं प्रकाशावरणाक्षमं भवति, तथा प्रतिक्षणं क्षीयतेऽपचीयते चेत्यर्थः, तदुक्तं मनुना—

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥ इति,

दोषाः पापानि तत्कार्यं तमोमलविपर्ययौ च, तपः पापनाशकं कर्म, पापक्षये सति यद्भवति तदाह—तत इति । ततः पापाख्यकारणाभावान्मलानां तमसां तत्कार्याणां चापगमे ज्ञानदीप्तिश्चेत्यर्थः, ननु तपसैव पापक्षय इत्युक्तं तर्हि किं प्राणायामेनेति चेन्न—ज्ञानावरकपापक्षये प्राणामस्य श्रेष्ठोपायत्वात्, अत एव पूर्वपादे प्रकृष्टाधिकारिणः प्राणायाम एव साधनमुक्तं विक्षेपकतया तपोऽन्तराभावेऽपि तेनैव योगनिष्पत्तिसम्भवादिति ॥ ५२ ॥

किञ्च--

**धारणासु च योग्यता मनसः ॥ ५३ ॥**

प्राणायामाभ्यासादेव "प्रच्छर्दनविधारणाभ्यां वा प्राणस्य" इति वचनात् ॥ ५३ ॥

अथ कः प्रत्याहारः—

**स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥**

स्वविषयसम्प्रयोगाभावे चित्तस्वरूपानुकार इवेति=चित्तनिरोधे

भास्वती।

किञ्च—धारणासु हृदादौ चित्तबन्धनकारिणीषु योग्यता=सामर्थ्यं मनसो भवतीति प्राणायामाभ्यासादेव ॥ ५३ ॥

स्वेति। खानां स्वविषये सम्प्रयोगाभावः=चित्तानुकारसामर्थ्याद् विषयसंयोगा-

तत्त्ववैशारदी।

किञ्च "धारणासु च योग्यता मनसः" प्राणायामो हि मनः स्थिरीकुर्वन् धारणासु योग्यं करोति ॥ ५३ ॥

तदेवं यमादिभिः संस्कृतः संयमाय प्रत्याहारमारभते तस्य लक्षणसूत्रमवतारयितुं पृच्छति—"अथ" इति। "स्वेत्यादि-प्रत्याहार इत्यन्तं सूत्रम्, चित्तमपि मोहनीयरञ्जनीयको-

पातञ्जलरहस्यम्।

प्राणायामस्य फलान्तरमाह-धारणासु चेति। योग्यं वाहनादिष्वश्वमिव दान्तमित्यर्थः, प्रच्छर्दनं पूरकरेचकौ, विधारणं कुम्भकम् ॥ ५३ ॥

पाठक्रमेण प्राप्तस्य प्रत्याहारस्य प्रश्नपूर्वकलक्षणमाह-स्वविषयाः शब्दादयो दश तैः

वार्त्तिकम्।

अन्यच्च भवतीत्याह—

"धारणासु च योग्यता मनसः" प्राणायामाभ्यासादेवेति सूत्रेण सहान्वयः, प्रच्छर्दनेत्यादिप्रथमपादीयसूत्रेण प्राणायामस्य धारणायोग्यतारूपस्थितिहेतुतावचनादित्यर्थः, एतेन तस्मिन्नपि सूत्रे पूरकादित्रयात्मकः प्राणायाम एवोक्त इत्यवधारणीयम् ॥ ५३ ॥

प्रत्याहारसूत्रमवतारयति—अथ क इति—

"स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः", इन्द्रियविषयासंप्रयोगकाल इन्द्रियाणां चित्तस्वरूपानुकारितेव या भवति सा इन्द्रियाणां प्रत्याहार इत्यर्थः, जितेन्द्रियस्य हि ध्यानकाले चक्षुरादीन्यपि ध्येयवस्त्वाकारेण चित्तेन तुल्याकाराणीव भवन्ति न स्वातन्त्र्येण विषयान्तरं मनैसकीभूय सङ्कल्पयन्ति, तथा चित्ते निरोधोन्मुखे सति प्रयत्नान्तरं विनैव निरुद्धानि भवन्ति, अतस्तस्येन्द्रियाणि चित्तानुकारीणीत्युच्यन्ते, अजितेन्द्रियस्य तु चक्षुरादीनि तदानीमपि रूपादिषु मनसैव धावन्ति अतश्चित्तमेवेन्द्रियानुकारि भवति,

इन्द्रियाणां हि सर्वेषां यद्येकं क्षरतेन्द्रियम्।
तेनास्य द्रवते प्रज्ञा दृतेः पादादिवोदकम् ॥ इति-

स्मृतेरित्याशयः, अजितेन्द्रियस्यापि इन्द्रियाणि विषयभोगकाले चित्तानुकारीणि भवन्त्येवेति तद्व्यावर्त्तनाय स्वविषयासंप्रयोग इत्युक्तं ध्यानकाले च चाक्षुषादितुल्या वृत्तिश्चित्तस्यैव भवति न तु चक्षुरादीनां तेषां तु तदतिरिक्तवृत्त्यभावमात्रमतोऽनुकार इवेत्युक्तम्,

चित्तवन्निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते, यथा मधु-

भास्वती।

भावः तस्मिन् सति तदा चित्तस्वरूपानुकारवन्तीवेन्द्रियाणि भवन्ति स एव प्रत्याहारः, तदा चित्ते निरुद्ध इन्द्रियाण्यपि निरुद्धानि = विषयज्ञानहीनानि भवन्ति, अपि च—चित्तं यदन्तर्मनुते रूपं वा शब्दं वा स्पर्शादि वा, चक्षुर्ग्राह्यादीन्यपि तस्य तस्य दर्शनश्रवणादि-

तत्त्ववैशारदी।

पनीयैः शब्दादिभिर्विषयैर्न संप्रयुज्यते तदसंयोगाच्चक्षुरादीन्यपि न सम्प्रयुज्यन्त इति सोऽय-मिन्द्रियाणां चित्तस्वरूपानुकारः यत् पुनस्तत्त्वं चित्तमभिनिविशते न तदिन्द्रियाणां बाह्य-विषयविषयाणामनुकारोऽपि; अत उक्तमनुकार इवेति। स्वविषयासम्प्रयोगस्य साधारणस्य धर्मस्य चित्तानुकारनिमित्तत्वं सप्तम्या दर्शयति—"स्व" इति। अनुकारं विवृणोति—"चित्तनिरोधे" इति। द्वयोर्निरोधहेतुश्च प्रयत्नस्तुल्य इति सादृश्यम्, अत्रव दृष्टान्तमाह—"यथा मधुकरराजम्" इति। दार्ष्टान्तिके योजयति—"तथा" इति। अत्रापि विष्णुपुराणवाक्यं—

"शब्दादिष्वनुषक्तानि निगृह्याक्षाणि योगवित्।
कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः"

तस्य प्रयोजनं तत्रैव दर्शितं—

पातञ्जलरहस्यम्।

सहेन्द्रियाणां च कृत्स्नानामेकादशानामश्रोतव्यताऽस्प्रष्टव्यताऽऽदिप्रकारेणासंप्रयुक्ताना-मसम्प्रयोगेऽसंसर्गे सति यच्चित्तस्य स्वरूपानुकारे विषयाग्रहे तन्निमित्तावस्थाविषयकोपरमः परिणामराहित्यम्—

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता। इतिः

स एव प्रत्याहारो विषयेभ्यः प्रत्याहृतान्यसंयुक्तानीन्द्रियाणि भवन्तीत्यर्थः, एतदेवा-

वार्त्तिकम्।

अत एव—

पिबन्निव च चक्षुर्भ्यां पादौ संवाहयन्निव।
चित्तेन्द्रियैक्यतो ध्यायेत्तन्मूर्त्तिं विजितेन्द्रियः॥

इत्यादिस्मृतिष्वपीवशब्द एव प्रयुक्त इति, तदेतद्व्याचष्टे—स्वविषयेति। इवेतीत्यन्तस्य एष प्रत्याहार इत्यागामिनाऽन्वयः, अनुकार्यस्य कार्यरूपं लक्षणमाह—चित्तनिरोध इत्यादिना—अपेक्षन्त इत्यन्तेन, चित्तस्य वृत्तिनिरोधकाले यत्स्वयमेवेन्द्रियवृत्तिनिरोधो भवति; इदमेव परमवश्यत्वं प्रत्याहारकार्यत्वात् तल्लक्षणमित्याशयः, निरुद्धानि भवन्तीति शेषः, नेतरेन्द्रियजयवदिति। इतरे = उक्तपरमवश्यत्वादतिरिक्ता द्वितीयसूत्रवक्ष्यमाणा इन्द्रियजयाः, तेषु सत्स्वपि स्वनिरोधार्थं यथेन्द्रियाणि प्रत्याहारादिकमपेक्षन्ते नैवं यथोक्तप्रत्याहारे सति स्वनिरोधार्थं चित्तनिरोधातिरिक्तमपेक्षन्त इत्यर्थः, इन्द्रियाणां चित्तानुकारं दृष्टान्तेन प्रतिपादयति—यथा मधिवत्यादिना—निरुद्धानीत्यन्तेन, दार्ष्टान्तिके दृष्टान्तोक्तोत्पतनतुल्यो निरोधः, तेन च निवेशनतुल्यं ध्यानमप्युपलक्षणीयम् अन्यथा दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यादिप्रदर्शने न्यूनताऽऽपत्तेः, एष प्रत्याहार इति। पुरैव व्याख्यातम्, सोऽयं प्रत्याहारः सप्रयोजनो विष्णुपुराणे प्रोक्तः—

शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित्।
कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः॥
वश्यता परमा तेन जायते निष्कलात्मनाम्।
इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः॥ इति,

करराजं मक्षिका उत्पतन्तमनूत्पतन्ति, निविशमानमनु निविशन्ते, तथेन्द्रियाणि चित्तनिरोधे निरुद्धानि, इत्येष प्रत्याहारः ॥ ५४ ॥

**ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥**

शब्दादिष्वव्यसनमिन्द्रियजय इति के चित् सक्तिर्व्यसनं = व्यस्यत्येनं श्रेयस इति, अविरुद्धा प्रतिपत्तिर्न्याय्या शब्दादिसम्प्रयोगः स्वेच्छयेत्यन्ये, रागद्वेषाभावे सुखदुःखशून्यं शब्दादिज्ञानमिन्द्रियजय इति के चित्,

भास्वती।

मन्तीव भवन्ति, दृष्टान्तमाह—यथेति ॥ ५४ ॥

प्रत्याहारफलमाह-तत इति। शब्दादीति। केषाञ्चिन्मते शब्दादिपु विषयेष्वव्यसनमेवेन्द्रियजयः, व्यसनं = सक्तिः आसक्तिः = रागः, तेन श्रेयसः = कुशलाद् व्यस्यते क्षिप्यत इति, अन्ये वदन्ति—अविरुद्धा = शास्त्रविहिता, प्रतिपत्तिः = विषयभोगः, न्याय्या इति स एवेन्द्रियजय इत्यर्थः, इतरे वदन्ति-स्वेच्छया शब्दादिसम्प्रयोगः = शब्दादिभोग इत्यर्थः, एवेन्द्रियजयः,

तत्त्ववैशारदी।

"वश्यता परमा तेन जायते निश्चलात्मनाम्।
इन्द्रियाणामवश्यैस्तैर्न योगो योगसाधकः" इति ॥ ५४ ॥

अस्यानुवादकं सूत्रम्--"ततः परमा वश्यतेन्द्रियाणाम्" ननु सन्ति किमन्या अपरमा इन्द्रियाणां वश्यता या अपेक्ष्य परमेयमुच्यते? अद्धा, ता दर्शयति—"शब्दादिषु" इति। एतदेव विवृणोति-"सक्तिः" इति। सक्तिः = रागः = व्यसनं कया व्युत्पत्त्या? व्यस्यति = क्षिपति निरस्यत्येनं श्रेयस इति, तदभावोऽव्यसनं = वश्यता, अपरामपि वश्यतामाह "अविरुद्धा" इति। श्रुत्याद्यविरुद्धशब्दादिसेवनं तद्विरुद्धेष्वप्रवृत्तिः, स एव न्याय्या = न्यायादनपेता यतः, अपरामपि वश्यतामाह—"शब्दादिसम्प्रयोग" इति। शब्दादिष्विन्द्रियाणां सम्प्रयोगः स्वेच्छया भोग्येषु खल्वयं स्वतन्त्रो न भोग्यतन्त्र इत्यर्थः, अपरामपि वश्यतामाह—"रागद्वेषाभाव" इति। सुखदुःखशून्यं = माध्यस्थ्येन शब्दादिज्ञानमित्येके, सूत्रकाराभिमतां व-

पातञ्जलरहस्यम्।

नुभवारूढं करोति-यथा मधुकरराजो मधुमक्षिकाश्रेष्ठो भ्रमरविशेषः स यत्रागत्य पतति तत्रैव सर्वं गत्वा पतन्तीति दृष्टचर इत्यर्थः ॥ ५४ ॥

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तत इति-

भगवद्वाक्यार्थः, वश्यतायां मतभेदानाह-शब्दादिष्विति। यदेच्छति तदा भुङ्क्ते, उप-

वार्त्तिकम्।

अतश्च प्रत्याहार इन्द्रियधर्म इति ॥ ५४ ॥

योगे प्रत्याहारस्यावान्तरव्यापारभूतं तत्सिद्धिसूचकमाह—

"ततः परमा वश्यतेन्द्रियाणाम्", ततः प्रत्याहारादिन्द्रियाणां परमो जयो भवतीत्यर्थः, तत्र परमजयप्रतिपादनार्थं बहुविधान् पक्षानाह—शब्दादिष्वित्यादिना, व्यसनशब्दार्थमाह—सक्तिरिति। सक्तिः सङ्गो येन शास्त्रविरुद्धेऽपि विषयभोग इन्द्रियाणि प्रवर्त्तन्ते, व्यस्यति क्षिपति निरस्यत्येनं श्रेयस इति व्युत्पत्त्येति शेषः, एवं च सति शास्त्राविरुद्धा प्रतिपत्तिरेव भोगो न्याय्या एवेति पूर्वोक्तेन के चिदित्यनेनान्वयः, मतान्तरमाह—शब्दादीति। इन्द्रियविषययोः सम्प्रयोगे तदपारतन्त्र्यमित्यर्थः, मतान्तरमाह—रागद्वेषेति। रागद्वेषनिमित्तकाभ्यां-

चित्तैकाग्र्यादप्रतिपत्तिरेवेति जैगीषव्यः, ततश्च परमा त्वियं वश्यता यच्चित्त-निरोधे निरुद्धानीन्द्रियाणि, नेतरेन्द्रियजयवत्प्रयत्नकृतमुपायान्तरमपेक्षन्ते योगिन इति ॥ ५५ ॥

इति पातञ्जले सांख्यप्रवचने योगभाष्ये साधननिर्देशो-
नाम द्वितीयः पादः ॥ २ ॥

भास्वती ।

अपरमिन्द्रियजयमाह—रागेति । चित्तैकाग्र्यादप्रतिपत्तिः=इन्द्रियज्ञानरोध एवेन्द्रि-यजय इति भगवतो जैगीषव्यस्य मतम्, एषैव परमा वश्यता, अन्येषु च प्रच्छन्नलौ-ल्यं विद्यत इति ॥ ५५ ॥

इति पातञ्जलसाङ्ख्यप्रवचनभाष्यस्य टीकायां भास्वत्यां द्वितीयः पादः ।

तत्त्ववैशारदी ।

श्यतां परमर्षिसमतामाह—"चित्तस्यैकाग्र्यात्" इति । चित्तैकाग्र्यात्सहेन्द्रियैरप्रवृत्तिरेव शब्दादिष्विति जैगीषव्यः, अस्याः परमतामाह—"परमा तु" इति । तुशब्दो वश्यताऽ-न्तरेभ्यो विशिनष्टि-वश्यतान्तराणि हि विषयाशीविषसम्प्रयोगशालितया क्लेशविषसम्व-र्क्कशङ्कां नापक्रामन्ति, न हि विषविद्याविप्रकृष्टोऽपि वशीकृतभुजङ्गमो भुजङ्गममङ्के निधाय स्वपिति विस्रब्धः, इयन्तु वश्यता विदूरीकृतनिखिलविषयव्यतिषङ्गा निराशङ्कतया परमे-त्युच्यते, "नेतरेन्द्रियजयवदिति"। यथा यतमानसञ्ज्ञायामेकेन्द्रियजयेऽपीन्द्रियान्तरजयाय प्रयत्नान्तरमपेक्षन्ते, न चैवं चित्तनिरोधे बाह्येन्द्रियनिरोधाय प्रयत्नान्तरापेक्षेत्यर्थः ।

"क्रियायोगं जगौ क्लेशान् विपाकान् कर्मणामिह ।
तद्दुःखत्वं तथा व्यूहान् पादे योगस्य पञ्चकम्" इति ॥ ५५ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां 'तत्त्ववैशारद्यां'-
साधननिर्देशो नाम द्वितीयः पादः ॥ २ ॥

पातञ्जलरहस्यम् ।

स्थिते भोग्येऽनातुरोऽपि च प्रवर्तत इति स्वातन्त्र्यं भाष्यस्थमिति,

"विश्वासश्च न कर्तव्यः स्त्रीषु राजकुलेषु च" इति न्यायेनाह-न हीत्यादि-विश्रब्धइत्यन्तेन

इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दतेः पादादिवोदकम्

वार्त्तिकम् ।

सुखदुःखाभ्यां शून्यो विषयभोगस्तथेत्यर्थः, तेनाभिमानिकसुखदुःखशून्यत्वं लब्धं कायिकसु-खदुःखानां योगावस्थां विना परिहारासम्भव इति भावः, एतेषु त्रिषूत्तरोत्तरमुत्कर्षेऽपि नैते परमा इन्द्रियजया एतावन्मात्रमिन्द्रियवृत्त्यनिरोधात्, अतः सूत्रकारसंमतं परममाह—चि-त्तैकाग्र्यादिति । चित्तैकाग्र्याद्धेतोरिन्द्रियाणां याऽप्रतिपत्तिर्वृत्तिनिरोधस्तद्योग्यता स एव जय-इति जैगीषव्य इत्यर्थः, तत इति । इयं च वश्यता ततो हेतोः परमा वश्यता, यद् यतः चित्त-निरोधेनेत्यादिरर्थः, कालादिव्यावर्त्तनाय प्रयत्नकृतमिति । तथा च पूर्वसूत्रोक्तचित्तानुकारस्य

पातञ्जलरहस्यम् ।

मित्युक्तेश्च योगी यथेन्द्रियान्तरनिग्रहे यतत इत्याह—न चैवं चित्तेति ।
द्वितीयपादार्थं संकलयति तृतीयपादार्थं वक्तुं क्रियायोगमिति ॥ ५५ ॥

इति श्रीविश्वेश्वरभगवत्पादशिष्याद्वयभगवत्पादशिष्यराघवानन्दसरस्वतीविरचिते योगतत्त्ववैशारद्याख्यायाः व्याख्यायाः टीकारूपे पातञ्जलरहस्ये पञ्चपञ्चाशत्-सूत्रात्मकः द्वितीयः साधनपादः समाप्तः ॥ २ ॥

वार्त्तिकम् ।

फलं लक्षणं च, या समाधौ चित्तेन सहेन्द्रियाणां वृत्तिनिरोधयोग्यता सैव परमवश्यताऽऽख्यो जयोऽनेन सूत्रेणोक्त इति, एतादृशवश्यताऽभावेनैव सौभरिप्रभृतीनां योगभ्रंशादियं वश्यताऽपि योगनिष्पत्तिहेतुः, अत एव गीता—

यततो ह्यपि कौन्तेय ! पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥
तानि सर्वाणि सयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ इति,

तदेवं ज्ञानसाधनमुखेन योगस्यापि बहिरङ्गाणि यमादिप्रत्याहारान्तानि ससिद्धीन्यत्र पादे प्रोक्तानिः धारणादित्रयस्य सिद्धिबाहुल्यात्तु सिद्धिभिः सह तत्प्रतिपादनार्थमेव समग्रस्तृतीयपादो भविष्यति ।

इति श्रीपातञ्जलभाष्यवार्त्तिके विज्ञानभिक्षुनिर्मिते साधननिर्देशो नाम द्वितीयः पादः ॥२॥

# साङ्गे योगदर्शने

## तृतीयो विभूतिपादः

उक्तानि पञ्च बहिरङ्गाणि साधनानि धारणा वक्तव्या—

**देशबन्धश्चित्तस्य धारणा ॥ १ ॥**

नाभिचक्रे, हृदयपुण्डरीके, मूर्ध्नि ज्योतिषि, नासिकाऽग्रे, जिह्वाऽग्र-

भास्वती।

देशेति। बाह्य आध्यात्मिके वा देशे यश्चित्तबन्धः = चेतसः समास्थापनं सा धारणा,

तत्त्ववैशारदी।

प्रथमद्वितीयपादाभ्यां समाधिस्तत्साधनं चोक्तं, तृतीयपादे तत्प्रवृत्त्यनुगुणाः श्रद्धोत्पादहेतवो विभूतयो वक्तव्याः ताश्च संयमसाध्याः संयमश्च धारणाध्यानसमाधिसमुदाय इति विभूतिसाधनतया पञ्चभ्यश्च योगाङ्गेभ्यो बहिरङ्गेभ्योऽस्याङ्गत्रयस्यान्तरङ्गतया विशेषज्ञापनार्थमत्र त्रयस्योपन्यासः, तत्रापि च धारणाध्यानसमाधीनां कार्य्यकारणभावेन नियतपौर्वापर्य्यत्वात् तदनुरोधेनोपन्यासक्रम इति प्रथमं धारणा लक्षणीयेत्याह-"उक्तानि" इति। "देशबन्धश्चित्तस्य धारणा" आध्यात्मिकदेशमाह—"नाभिचक्र" इति। आदिशब्देन

पातञ्जलरहस्यम्:

तृतीये दीयते पादे तस्मै चार्घ्यं सुपुष्कलम्।
यद्दानैरिह चामुत्र योगी सिद्धिमवाप्नुयात् ॥

"देशबन्धश्चित्तस्य धारणा", संगतिमाह—उक्तानीति। प्रत्याहारान्तानि, पञ्चेति, उपादेये विषये चित्तं ध्रियतेऽनयेति धारणा न चलति चित्तमुद्दिष्टातिरिक्ते, देशानाह—नाभीति। अनाधारा = निर्विषयेति। समकर्णान्तेति। समौ यौ कर्णौ तयोरन्ते प्रान्ते विन्यस्ते युक्ते ये

वार्त्तिकम्।

योगाङ्गेषु मध्ये कियन्ति पूर्वपादे प्रोक्तानि कियन्ति चात्र पाद इत्यत्र नियामकं वदन्नेव क्रमप्राप्तं धारणासूत्रमवतारयति—उक्तानीति। बहिरङ्गान्तरङ्गत्वे अपि पादभेदेन निरूपणे नियामके इत्यर्थः,

"देशबन्धश्चित्तस्य धारणा", यत्र देशे ध्येयं चिन्तनीयं तत्र ध्यानाधारदेशविषये चित्तस्य स्थापनं तदैकाग्र्यं धारणेत्यर्थः, तदेतद्व्याचष्टे—नाभीति। मूर्ध्नि मूर्द्धस्थे ज्योतिषि, आदिशब्देन गारुडाद्युक्तदेशान्तराणि ग्राह्याणि, यथा गारुडे—

प्राङ् नाभ्यां हृदये वाऽथ तृतीये च तथोरसि।
कण्ठे मुखे नासिकाऽग्रे नेत्रभ्रूमध्यमूर्द्धसु ॥
किंचित्तस्मात्परस्मिंश्च धारणा दश कीर्त्तिताः।

मुखे जिह्वाऽग्रे, किंचित्तस्मात्परस्मिन्निति = मूर्ध्नि उपरि द्वादशाङ्गुलपरिमिते देशे लिङ्गशरीरस्य सप्राणस्य तावत्पर्यन्तं प्रदीपशिखावदवस्थानादवहितैस्तावत्पर्यन्तमेव लिङ्गशरीरानुगतोष्मोपलभ्यते वाक्यानामुपलम्भाच्च, तदुक्तं कौर्मे—

शिखाऽग्रे द्वादशाङ्गुल्ये कल्पयित्वाऽथ पङ्कजम्।

इत्यादिनेति, एतानि च नाभ्यादीनि जीवेश्वरयोर्मुख्यस्थानान्येव राज्ञः सिंहासनवत्, जीवेश्वरव्यञ्जकस्य लिङ्गशरीरस्य मुख्यस्थानत्वाद् अत एतानि धारणायाः प्रकृष्टदेशा उक्ताः, आध्यात्मिकान् ध्यानदेशानुक्त्वा बाह्यानपि संक्षेपत आह—बाह्ये वा विषय इति। चन्द्र-द्र

इत्येवमादिषु देशेषु, बाह्ये वा विषये, चित्तस्य वृत्तिमात्रेण बन्ध इति धा-

भास्वती ।

नाभिचक्रादिराध्यात्मिको देशः, तत्र साक्षादनुभवद्वारेण चित्तबन्धः, बाह्ये तु देशे वृत्तिमा-

तत्त्ववैशारदी ।

ताल्वादयो ग्राह्याः बन्धः = सम्बन्धः बाह्यदेशमाह—"बाह्ये वा" इति । बाह्ये च न स्वरू-
पेण चित्तस्य सम्बन्धः सम्भवतीत्युक्तं—वृत्तिमात्रेण = ज्ञानमात्रेणेत्यर्थः,

अत्रापि पुराणम्—

"प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् ।
वशीकृत्य ततः कुर्य्याच्चित्तस्थानं शुभाश्रये"॥

शुभाश्रयाः = बाह्या हिरण्यगर्भवासवप्रजापतिप्रभृतयः, इदं च तत्रोक्तम्—

"मूर्त्तं भगवतो रूपं सर्वोपाश्रयनिःस्पृहम् ।
एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्य्यते ॥
यच्च मूर्त्तं हरे रूपं यद्विचिन्त्यं नराधिप ! ।
तच्छ्रूयतामनाधारा धारणा नोपपद्यते ॥
प्रसन्नवदनं चारुपद्मपत्रनिभेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥
समकर्णान्तविन्यस्तचारुकुण्डलभूषणम् ।
कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥
वलीविभङ्गिना मग्ननाभिना चोदरेण च ।
प्रलम्बाष्टभुजं विष्णुमथ वाऽपि चतुर्भुजम् ॥
समस्थितोरुजङ्घं च स्वस्तिकाङ्घ्रिकराम्बुजम् ।
चिन्तयेद् ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥
किरीटचारुकेयूरकटकादिविभूषितम् ।
शार्ङ्गचक्रगदाखड्गशङ्खाक्षवलयान्वितम् ॥
चिन्तयेत्तन्मयो योगी समाधायात्ममानसम् ।
तावत् यावद् दृढीभूता तत्रैव नृप ! धारणा" ॥

पातञ्जलरहस्यम् ।

चारुकुण्डले भूषणे यत्र मूर्त्तौ मुर्छितावयवे हस्तपादादिपरिच्छिन्नावयवप्राये, अत एवोक्तं-

वार्त्तिकम् ।

र्याग्न्यादावीश्वरदेवताऽऽदिध्यानदेश इत्यर्थः, वृत्तिमात्रेणेति । वृत्तिमात्रेण न तु ध्येयकल्पन-
येत्यर्थः, तेन ध्यानादिव्यावृत्तिः, तदुक्तमीश्वरगीतायाम्—

हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वतमस्तके ।
एवमादिप्रदेशेषु धारणा चित्तबन्धनम् ॥
देशावस्थितमालक्ष्य बुद्धेर्या वृत्तिसन्ततिः ।
वृत्त्यन्तरैरसंस्पृष्टा तद्ध्यानं सूरयो विदुः ॥
एकाकारसमाधिः स्याद्देशालम्बनवर्जितः ।
प्रत्ययो ह्यर्थमात्रेण योगसाधनमुत्तमम् ॥ इति,

बन्ध इतीत्यन्तेन देशबन्धशब्दं व्याख्याय सूत्रवाक्यार्थमुपसंहरति—बन्ध इति ।
ईदृशो बन्धो धारणेत्यर्थः, इदं च धारणालक्षणं प्राथमिकपरिच्छिन्नयोगाभिप्रायेण सूचितं, यत्र
प्रथमत एवेश्वरानुग्रहाद् अपरिच्छिन्नतया जीवब्रह्मयोगो भवति तत्र देशालम्बनधारणाऽनुप-
योगात्, अतो धारणाया अन्यदपि लक्षणं गारुडादावप्युक्तम्, यथा गारुडे—

रणा ॥ १ ॥

**तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥**

तस्मिन् देशे ध्येयालम्बनस्य प्रत्ययस्यैकतानता = सदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम् ॥ २ ॥

**तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥**

ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा

---

भास्वती।

त्रेण बन्धः = तद्विषयया वृत्त्या चित्तं बध्यते ॥ १ ॥

तस्मिन्निति। धारणाऽऽयत्ते देशे ध्येयालम्बनस्य प्रत्ययस्य = वृत्तेर्या एकतानता तैलधारावदेकतानप्रवाहः प्रत्ययान्तरेणापरामृष्टः = अन्यया वृत्त्याऽसम्मिश्रः प्रवाहस्तद्ध्यानम्, एकैव वृत्तिरुदितेत्यनुभूतिरेकतानता ॥ २ ॥

ध्यानमिति। ध्यानमेव यदा ध्येयाकारनिर्भासं = ध्येयज्ञानादन्यज्ज्ञानहीनम्, प्रत्यया-

तत्त्ववैशारदी।

'एतदातिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः।
नापयाति यदा चित्तं सिद्धां मन्येत तां तदा' इति ॥ १ ॥

धारणासाध्यं ध्यानं लक्षयति—"तत्र प्रत्ययैकतानता ध्यानम्" एकतानता = एकाग्रता, सुगमं भाष्यम्, अत्रापि पुराणम्—

"तद्रूपप्रत्ययैकाग्र्यसन्ततिश्चान्यनिःस्पृहा।
तद् ध्यानं षड्भिरङ्गैः प्रथमैर्निष्पाद्यते नृप"! ॥ २ ॥

ध्यानसाध्यं समाधिं लक्षयति—"तदेव—समाधिः'

व्याचष्टे-"ध्यानमेव" इति। 'ध्येयाकारनिर्भासम्'—इति। ध्येयाकारस्य निर्भासो न

पातञ्जलरहस्यम्।

ब्रह्मभूतम् अस्त्रानुरोधेन षड्भुजत्वमभिमतमिति शेषः ॥ १ ॥

कार्यकारणभावसंगतिं प्रदर्शयन् क्रमप्राप्तं ध्यानमाह-"तत्र प्रत्ययैकतानता ध्यानम्" अनुद्दिष्टाविषयकत्वे सत्युद्दिष्टविषयकप्रत्ययप्रवाहो ध्यानमित्यर्थः ॥ २ ॥

क्रमप्राप्तं समाधिमाह-तदेवार्थमात्रेति। ध्यानस्य चित्तवृत्तिरूपस्याभाने सति तद्ग्रा-

वार्त्तिकम्।

प्राणायामैर्द्वादशभिर्यावत्कालः कृतो भवेत्।
स तावत्कालपर्यन्तं मनो ब्रह्मणि धारयेत् ॥

इत्यादि, एतदेव तु धारणासामान्यलक्षणम्, अन्यथा क्षणमात्रेणापि धारणाऽऽपत्तेः, अतः सूत्रोक्तं विशेषलक्षणमपि प्राणायामद्वादशकालावच्छिन्नत्वेन विशेषणीयमिति, ॥ १ ॥

धारणासाध्यं ध्यानमाह—

"तत्र प्रत्ययैकतानता ध्यानम्", भाष्यं सुगमम्, इदमपि ध्यानलक्षणं प्राथमिकौत्सर्गिकध्यानाभिप्रायेण सर्वत्र ध्याने देशानियमात्, अतोऽस्य गारुडे लक्षणान्तरमुक्तं—

तस्यैव ब्रह्मणि प्रोक्तं ध्यानं द्वादशधारणे-

त्यनेन, तस्यैव द्वादशप्राणायामकालेन धारितचित्तस्य द्वादशधारणाकालावच्छिन्नं चिन्तनं ध्यानं प्रोक्तमित्यर्थः, अनेन च पूर्ववत्सूत्रोक्तं विशेषलक्षणं विशेषणीयम्, ॥ २ ॥

ध्यानसाध्यं समाधिं लक्षयति—

"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" मात्रपदस्यार्थः स्वरूपशून्यमिवेत्य-

भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते ॥ ३ ॥

भास्वती।

त्मकेन स्वरूपेण शून्यमिव = ध्येयविषयस्य प्रख्यातौ तद्विषय एवास्ति नान्यद् ग्रहणादि किञ्चिदितीव ध्येयस्वभावावेशाद् भवति तदा तद्ध्यानं समाधिरित्युच्यते, विस्मृतग्रहीतृग्रहणभावो यदा ध्यायति तस्य तदा समाधिरित्यर्थः, पारिभाषिकोऽयं समाधिशब्दो ध्येयविषये चित्तस्थैर्यस्य काष्ठावाचकः, यत्र क्व चन एव सम्यक् समाधानादन्यवृत्तिनिरोध एव सामान्यतः समाधिः, समाधिरूपमिदं चित्तस्थैर्यं लब्ध्वा ग्रहीतृग्रहणग्राह्यविषयकं सम्प्रज्ञानं साधयेत्, तस्मिन् सिद्धे सम्प्रज्ञातः समाधिर्भवति, ततः सम्प्रज्ञानस्यापि निरोधात्, सर्ववृत्तिनिरोधरूपोऽसम्प्रज्ञातः समाधिः, यत्र कुत्र चित् सम्यक् चित्तस्थैर्य्यं, तथा च सम्प्रज्ञातरूपं चित्तस्थैर्यमसम्प्रज्ञातरूपमत्यन्तचित्तनिरोधश्चेति सर्वे एव समाधय इति ॥ ३ ॥

तत्त्ववैशारदी।

ध्यानाकारस्य इति, अत एवाह—"शून्यम्" इति। ननु शून्यं चेत्कथं ध्येयं प्रकाशेतेत्यत आह—इवेति। अत्रैव हेतुमाह—ध्येयस्वभावावेशाद् इति। अत्रापि पुराणं—

"तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत्।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" इति,

ध्येयाद्ध्यानस्य भेदः कल्पना, तद्धीनमित्यर्थः, अष्टाङ्गयोगमुक्त्वा—खाण्डिक्याय केशिध्वज उपसंजहार—

"क्षेत्रज्ञः करणी ज्ञानं करणं तदचेतनम्।
निष्पाद्य मुक्तिकार्य्यं वै कृतकृत्यं निवर्त्तते" इति ॥ ३ ॥

पातञ्जलरहस्यम्।

ध्येयविषयमात्रस्य स्फूर्तिरित्यत उक्तं स्वरूपशून्यमिति ॥ ३ ॥

वार्त्तिकम्।

नेन स्वयं विवृतः, तदेतद्व्याचष्टे—ध्यानमेवेति। तदा तदेव ध्यानं ध्येयस्याकारेणैव साक्षिणि निर्भासते न तु प्रत्ययाकारनिर्भासं चित्तस्य ध्येयस्वरूपावेशेनाहमिदं चिन्तयामीत्येवं प्रत्ययाकारवृत्त्यन्तरानुदयात्, तदा ध्यानमेव समाधिरुच्यत इत्यर्थः, ध्यानस्वरूपस्य वस्तुतः सत्त्वादिवशब्दप्रयोगः, तथा ध्यातृध्येयध्यानकलनावद् ध्यानं तद्रहितं च समाधिरिति ध्यानसमाध्योर्विभागः, इदं च समाधिलक्षणं पूर्वसूत्रोक्तध्यानविशेषतया देशवटितत्वेनापरिच्छिन्नसमाध्यव्यापकम् अतोऽर्थमात्रावभासनं चिन्तनमित्येव समाधिसामान्यलक्षणम्, उदाहृतेश्वरगीतावाक्ये तल्लक्षणसिद्धेः, अथ वा गारुडोक्तं यथा—

ध्यानं द्वादशपर्यन्तं मनो ब्रह्मणि योजयेत्।
तिष्ठेत्तल्लयतो युक्तः समाधिः सोऽभिधीयते ॥ इति,

अत्रापि सूत्रोक्तं विशेषलक्षणं ध्यानद्वादशगुणितकालावच्छिन्नत्वेन विशेषणीयमिति, अस्य च समाधिरूपस्याङ्गस्याङ्गियोगसंप्रज्ञातयोगादयं भेदो यदत्र चिन्तारूपतया विशेषतो ध्येयस्वरूपं न भासते; अङ्गिनि तु संप्रज्ञाते साक्षात्कारोदये समाध्यविषया अपि विषया भासन्त इति, तथा च साक्षात्कारयुक्तैकाग्र्यकाले संप्रज्ञातयोगोऽन्यदा तु समाधिमात्रमिति विभागः, अष्टानां चाङ्गानां फलद्वयं संप्रज्ञातयोगस्तद्द्वाराऽसंप्रज्ञातयोगश्चेति ॥ ३ ॥

तदेतद् धारणाध्यानसमाधित्रयमेकत्र संयमः—

**त्रयमेकत्र संयमः॥ ४ ॥**

एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते तदस्य त्रयस्य तान्त्रिकी परिभाषा संयम इति ॥ ४ ॥

**तज्जयात् प्रज्ञाऽऽलोकः ॥ ५ ॥**

तस्य संयमस्य जयात्समाधिप्रज्ञाया भवत्यालोकः यथा यथा संयमः स्थिरपदो भवति तथा तथा समाधिप्रज्ञा विशारदीभवति ॥ ५ ॥

**तस्य भूमिषु विनियोगः ॥ ६ ॥**

भास्वती ।

एकेति । एकविषयाण्येकविषये क्रियमाणानि त्रीणि साधनानि संयम इत्युच्यते, ननु समाधौ धारणाध्यानयोरन्तर्भावस्तस्मात् समाधिरेव संयमः, त्रयाणां समुल्लेखो व्यर्थ इति शङ्का एवमपनेया; ध्येयविषयस्य सर्वतः पुनः पुनः क्रियमाणानि धारणाऽऽदीनि संयम इति परिभाषितः, अतो नायं समाधिमात्रार्थकः ॥ ४ ॥

तस्येति । आलोकः = प्रज्ञाऽऽलोकस्योत्कर्ष इत्यर्थः, विशारदीभवति = स्वच्छीभवति, ज्ञानशक्तेश्चरमस्थैर्य्यात् सम्यक् च ध्येयनिष्ठत्वात् प्रज्ञाऽऽलोकः संयमाद् भवति ॥५॥

तत्त्ववैशारदी ।

धारणा ध्यानं समाधिरित्येतत्त्रयस्य तत्र तत्र नियुज्यमानस्य प्रातिस्विकसञ्ज्ञोच्चारणे गौरवं स्यादिति लाघवार्थं परिभाषासूत्रमवतारयति—"तदेतद्" इति । "त्रयमेकत्र संयमः" व्याचष्टे—"एकविषयाणि" इति । वाचकत्वशङ्कामपनयति—"तदस्य" इति तन्त्र्यते = व्युत्पाद्यते योगो येन शास्त्रेण तत् तन्त्रं, तत्र भवा तान्त्रिकी, संयमप्रदेशाः 'परिणामत्रयसंयमाद्' इत्येवमादयः ॥ ४ ॥

संयमविजयस्याभ्याससाधनस्य फलमाह-"तज्जयात्प्रज्ञाऽऽलोकः"प्रत्ययान्तरानभिभूतस्य निर्मले प्रवाहेऽवस्थानमालोकः प्रज्ञायाः, सुगमं भाष्यम् ॥ ५ ॥

पातञ्जलरहस्यम् ।

यथा धर्माधर्मयोरदृष्टमिति परिभाषा लाघवाय तथाऽत्र धारणाध्यानसमाधीनामेकविषयकाणां संयम इति परिभाषा ॥ ४ ॥

तस्याः फलमाह-तज्जयादिति । आलोको = विशदीभावः ॥ ५ ॥

वार्त्तिकम् ।

ध्यानादित्रयस्य परिभाषासूत्रम्—

"त्रयमेकत्र संयमः", अस्मिन्नेव पादे प्रोक्ततया त्रयशब्देन धारणादित्रयमेव लभ्यते, भाष्यं सुगमम्, धारणाध्यानसमाधीनां मिलितानां तत्र तत्र सूत्रेऽनया संज्ञया ग्रहणं भविष्यति, तेषु च प्रातिस्विकरूपैस्त्रयाणामुच्चारणे ग्रन्थबाहुल्यं स्यादित्याशयेन तन्त्रान्तरसिद्धसंज्ञाप्रतिपादकमिदं सूत्रम् ॥ ४ ॥

संयमसिद्धयोऽग्रे विस्तरतो वक्ष्यन्ते सांप्रतं संयमस्य योगाङ्गताप्रयोजकं द्वारमाह—

"तज्जयात्प्रज्ञाऽऽलोकः" तज्जयः संयमस्य जयः स्थैर्यं सात्म्यमिति यावत्, तस्मात्प्रज्ञाया आलोको दीप्तिर्बुद्धिः क्रमेण भवतीत्यर्थः, तदेतद्व्याचष्टे—तस्येति । स्वोक्तं विवृणोति—यथेति । वैशारद्यं चातिसूक्ष्मव्यवहिताद्यर्थानां परप्रत्यक्षीकरणसामर्थ्यमिति ॥ ५ ॥

संयमस्यानुष्ठाने विशेषमाह—

"तस्य भूमिषु विनियोगः" तस्य संयमस्य स्थूलादिपूर्वपूर्वभूमिकाजयानन्तरं सूक्ष्मा-

तस्य = संयमस्य जितभूमेर्याऽनन्तरा भूमिस्तत्र विनियोगः, न ह्यजिताधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते तदभावाच्च कुतस्तस्य प्रज्ञाऽऽलोकः, ईश्वरप्रसादाज्जितोत्तरभूमिकस्य च नाधरभूमिषु परचित्तज्ञानादिषु संयमो युक्तः, कस्मात् ? तदर्थस्यान्यत एवावगतत्वाद् भूमेरस्या इयमनन्तरा भूमिरित्यत्र योग एवोपाध्यायः, कथम् ? एवमुक्तं—

भास्वती ।

तस्येति । व्याचष्टे-अजिताधरभूमिः = अनायत्तनिम्नभूमिःयोगी, तदिति । तदभावात्

तत्त्ववैशारदी ।

क्व पुनर्विनियुक्तस्य संयमस्य फलमेतदित्यत आह—"तस्य भूमिषु विनियोगः" भूमिं विशेषयति भाष्यकारः-"तस्य इति । जिताया भूमेर्याऽन्तरा भूमिः = अवस्थाऽजिता तत्र विनियोगः स्थूलविषये सवितर्के समाधौ वशीकृते संयमेन संयमस्यात्रिजिते निर्वितर्के विनियोगः तस्मिन्नपि वशीकृते सविचारे विनियोग इत्यर्थः, एवं निर्विचारे विनियोग इत्यर्थः,अत एव स्थूलविषयसमापत्तिसिद्धौ सत्यां पुराणे तत्तदायुधभूषणापनयेन सूक्ष्मविषयः समाधिरवतारितः—

"ततः शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः ।
चिन्तयेद् भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ॥
यदा च धारणा तस्मिन्नवस्थानवती ततः ।
किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ॥
तदेकावयवं देवं सोऽहं चेति पुनर्बुधः ।
कुर्यात् ततो ह्यहमिति प्रणिधानपरो भवेद्" इति,

पातञ्जलरहस्यम् ।

नियुक्तस्य तस्य क्व फलमित्याकाङ्क्षां पूरयति-तस्येति । विजितस्थूलभूमिकस्यानन्तराभूमीराह-स्थूलेत्यादि-विचारइत्यर्थमित्यन्तेन, अस्मिन्नर्थे पुराणसम्मतिमाह—पुराण इति ।

वार्त्तिकम् ।

दिपूत्तरोत्तरभूमिकासु नियोजनं योगिना कर्त्तव्यमित्यर्थः, एतदेव व्याचष्टे—भाष्यकारस्तस्येति । अनन्तरा अव्यवहिता, क्रमेण भूमिकाऽऽरोहे युक्तिमाह-न हीति । प्रान्तभूम्यपेक्षयाऽधराऽधस्था भूमिरजिता येन सोऽजिताधरभूमिर्योगी, नहि अनन्तरभूमिमव्यवहितभूमिं विलङ्घ्याप्राप्तभूमिषु व्यवहितोत्तरभूमिषु संयमं लभते, धनुर्धरादिषु स्थूलवेधाद्यनन्तरमेव सूक्ष्मे वेधादिदर्शनात्सोपानारोहणादिषु च क्रमेणैवारोहादिदर्शनाद् अन्यथाऽधःपातात् तदभावाच्चेति, ततश्च संयमालाभात् कुतः प्रज्ञाऽऽलोकस्तत्तद्भूमिषु स्यादित्यर्थः, तथा चोक्तं-गारुडे—

स्थित्यर्थं मनसः पूर्वं स्थूलरूपं विचिन्तयेत् ।
तत्र तन्निश्चलीभूतं सूक्ष्मेऽपि स्थिरतां व्रजेत् ॥ इति,

अयं च भूमिकारोहे क्रमश्चौत्सर्गिकः कदा चिदपोद्यतेऽपीत्याह—जितान्तरेति । ईश्वरप्रसादादादावेव वशीकृतप्रकृतिपुरुषविवेकादिभूमिकस्य योगिनो नाधोभूमिषु परचित्तज्ञानादिषु परचित्तप्रत्ययादिषु प्रत्यये परचित्तज्ञानमित्याद्यागामिसूत्रवाच्येषु विराडादिस्थूलेषु वा संयमो युक्त इत्यर्थः, पृच्छति—कस्मादिति । उत्तरं—तदर्थस्येति । अधरभूमिसंयमप्रयोजनस्योत्तरभूम्यारोहणस्येश्वरानुग्रहादेवावगतत्वात् प्राप्तत्वादित्यर्थः, ननूत्सर्गात्सिद्धं क्रममुल्लङ्घ्य प्रथममुत्तरभूमिकासु संयमारम्भ एव न युक्तः तत्कथमादौ तज्जयो घटेतेति चेन्न, युञ्जमानेनादावेव 'सर्वोत्कृष्टभूमिकायां स्वचित्तस्य परीक्षणीयत्वात्, तत्संयमायोग्यतां स्व-

"योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्त्तते ।
योऽप्रमत्तस्तु योगेन स योगे रमते चिरम्" इति ॥ ६ ॥

**त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥**

भास्वती ।

प्रान्तभूमिषु संयमाभावात कुतस्तस्य योगिनः प्रज्ञोत्कर्षः, सुगममन्यत् ॥ ६ ॥

तत्त्ववैशारदी ।

कस्मात्पुनरधरां भूमिं विजित्योत्तरां विजयते विपर्य्ययः कस्मान्न भवतीत्यत आह—"न ह्यजिताधरभूमिः" इति । न हि शिलाह्रदाद् गङ्गां प्रति प्रस्थितोऽप्राप्य मेघवनं गङ्गां प्राप्नोति, ईश्वरप्रसादाजितोत्तरभूमिकस्य च" इति । कस्मात्? तदर्थस्य = उत्तरभूमिविजयप्रत्यासन्नस्य, अन्यत एव = ईश्वरप्रणिधानादेवावगतत्वाद्, निष्पादितक्रिये कर्मणि विशेषानाधायिनः साधनस्य साधनन्यायातिपाताद् इति,

स्यादेतद्-आगमतः सामान्यतोऽवगतानामप्यवान्तरविभेदानां कुतः पौर्वापर्य्यावगतिरित्यत आह—"भूमेरस्या" इति । जितः पूर्वो योग उत्तरस्य योगस्य ज्ञानप्रवृत्त्यधिगमे हेतुः, अवस्थैवावस्थावानित्यभिप्रेत्यैतद् द्रष्टव्यम् ॥ ६ ॥

कस्मात्पुनर्योगाङ्गत्वाविशेषेऽपि संयमस्य तत्र तत्र विनियोगो नेतरेषां पञ्चानामित्यत-आह'—"त्रयमन्तरङ्गं पूर्वेभ्यः" तदिदं साधनत्रयं साध्यसमानविषयत्वेनान्तरङ्गं, न त्वेवं य-

पातञ्जलरहस्यम् ।

शिलाह्रदात स्थलविशेषाद् मेघवनमपि तथैव, कारणं हि कार्यं साधयत् कारकं भवेद् नान्यथेत्याह-निष्पादितेति । अविशेषाधायिनः = अकुर्वाणस्य, साधयतीति साधनं यौगिकपदमिति न्यायः तस्यापतनमापातः ॥ ६ ॥

वार्त्तिकम् ।

स्यानुभूयैवाधरभूमिषु स्वयोग्यतामवधार्य चित्तस्य धारणीयत्वादिति, नन्वेवमधिकारिपुरुषभेदेन भूमिकाक्रमभेदात् कथं स्वयोग्यो भूमिकाक्रमो योगिभिरवधारणीय इति? तत्राह—भूमेरस्या इति । उपाध्यायो गुरुः, योगबलादेव स्वयं जानातीत्यर्थः, अत्र प्रमाणं पृच्छति-कथमिति । उत्तरम्—एवमुक्तमिति । अप्रमत्तः सिद्ध्यलम्पटः ॥ ६ ॥

आवश्यकत्वाद्यवधारणार्थं योगाङ्गेष्ववान्तरविशेषमाह-सूत्राभ्याम्—

"त्रयमन्तरङ्गं पूर्वेभ्यः", आगामिसूत्रानुरोधादत्र संप्रज्ञातसमाधेरिति पूरयित्वा व्याचष्टे—तदेतदिति । अत्र संप्रज्ञातस्येत्यत्र प्रज्ञाया विशेषणतया ज्ञानस्याप्यन्तरङ्गत्वमेतत्त्रये विवक्षितम् बीजसाम्याद् ज्ञानप्रकरणपाठाच्च, अन्तरङ्गत्वे च बीजमिदं यद्ध्येयातिरिक्तवृत्तिनिरोधरूपे संप्रज्ञाते ध्येयसंयमः साक्षादेव कारणं विषयान्तरसंचाररूपत्वात्, एवं ध्येयसाक्षात्कारेऽपि साक्षादेव विषयान्तरसंचाराख्यप्रतिबन्धनिवृत्तिद्वारा कारणमिति, प्रत्याहारान्तं—त्वङ्गपञ्चकं चित्तस्थैर्यद्वारेण परंपरयैवोभयोः कारणमिति; अत एव यस्य जडभरतादेः स्वत—एव प्राचीनकर्मवशाच्चित्तं संयमयोग्यं भवति तस्य नास्तीतराङ्गावश्यकत्वमित्युक्तं गारुडादिषु—

आसनस्थानविधयो न योगस्य प्रसाधकाः ।
विलम्बजननाः सर्वे विस्तराः परिकीर्त्तिताः ॥
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ।

इत्यादिना, अत एव जडभरतादीनां समाधिविघ्नतया बाह्यकर्मत्यागोऽपि श्रूयते, अत—एव गीतायां संयमासक्तायैवाभ्यासकर्मादीनि विशेषत उपदिष्टानि,

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥

तदेतद् धारणाध्यानसमाधित्रयम्, अन्तरङ्गं सम्प्रज्ञातस्य समाधेः, पूर्वेभ्यो यमादिसाधनेभ्य इति ॥ ७ ॥

तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

तदपि=अन्तरङ्गं साधनत्रयं, निर्बीजस्य योगस्य बहिरङ्गं, कस्मात्?

भास्वती।

तदिति। सुगमं भाष्यम् ॥ ७ ॥

तदपीति। तदभावे भावाद्, धारणाऽऽदिसबीजाभ्यासस्याभावे निवृत्तौ निर्बीजस्य

तत्त्ववैशारदी।

मादयः तस्मात्ते बहिरङ्गा इत्यर्थः, साधनत्रयस्य सम्प्रज्ञात एवान्तरङ्गत्वं न त्वसम्प्रज्ञाते तस्य निर्बीजतया तैः सह समानविषयत्वाभावात्, तेषु चिरनिरुद्धेषु सम्प्रज्ञातपरमकाष्ठाऽपरनामज्ञानप्रसादरूपपरवैराग्यानन्तरमुत्पादाच्चेत्याह—"तदेतद्" इति ॥ ७ ॥

"तदपि—जस्य" समानविषयत्वमन्तरङ्गत्वप्रयोजकमिह, न तु तदनन्तरभावस्तस्य बहिरङ्गेश्वरप्रणिधानवर्त्तितया सव्यभिचारत्वादिति स्थिते सव्यभिचारमप्यन्तरङ्गलक्षणं तद-

पातञ्जलरहस्यम्।

ज्ञानकर्मणोर्यथा मुक्ति प्रत्यन्तरङ्गत्वं ज्ञानस्य, तथाऽत्र संयम इत्याह-त्रयमन्तरङ्गमिति। एकविषयत्वादन्तरङ्गत्वं बहिरङ्गेभ्यः प्रत्याहारान्तेभ्यो विभिन्नविषयेभ्य इत्यर्थः ॥ ७ ॥

निर्बीजस्यासम्प्रज्ञातस्य समाधेरित्याह—तदपीति-बहिरङ्गत्वे युक्तिमाह—ईश्वरप्रणिधान-

वार्त्तिकम्।

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ! ॥
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव।

इत्यादिना, अभ्यासश्चात्रैव सूत्रितः, स्थितौ यत्नोऽभ्यास इति तथा ब्रह्ममीमांसायामपि, समाधिविरोधे सति गुणलोपेन गुणिन इति न्यायसिद्धा बाह्यकर्मानपेक्षोक्ता, अत एव चाग्नीन्धनाद्यनपेक्षेति सूत्रेण,

'विद्यां चाविद्यां च यस्तद्वेदोभयं सह, अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते, इति श्रुत्या ज्ञानकर्मणोः साहित्यमुक्तं तत्राङ्गाङ्गिनोरौत्सर्गिकं सहानुष्ठानमेवाभिप्रेतं-न तु मोक्षाख्यफले तयोः तुल्यवत्समुच्चयः, अविद्यया मृत्युं तीर्त्वेत्यनेन ज्ञानविप्लवनिवृत्त्याख्यमृत्युतरणद्वारेण विद्यायामेव मोक्षदायिन्यां कर्मण उपयोगावगमात्,

न केवलेन योगेन प्राप्यते परमं पदम्।
ज्ञानं तु केवलं सम्यगपवर्गप्रदायकम् ॥

इत्यादिवाक्यैर्योगशब्दोक्तकर्मनिरपेक्षाद् ज्ञानयोगादपि मोक्षसिद्धेः, अङ्गत्वं च पूर्वजन्मन्यनुष्ठितानामपि कर्मणां जडभरतादिषु सिद्धमिति, एतेन—

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां लभते परमं पदम् ॥

इत्यादिवाक्यानि अङ्गाङ्गिनोरौत्सर्गिकसहानुष्ठानपराण्येव न मोक्षं प्रति समुच्चयबाधकानीति दिक् ॥ ७ ॥

"तदपि बहिरङ्गं निर्बीजस्य", निर्बीजयोगस्यासंप्रज्ञातस्य तदपि त्रयं बहिरङ्गमेव विवेकख्यातिपरवैराग्यद्वारा परम्परया हेतुत्वेनावश्यकत्वाभावादित्यर्थः, एतदेवाह—तदभावे भावादिति। पूर्वोक्तविदेहप्रकृतिलयानां देवविशेषाणामौत्पत्तिकज्ञानवैराग्याणां संयमनैरपेक्ष्येणैव दैनंदिनप्रलयादावसम्प्रज्ञातोदयादित्यर्थः, तथा च स्मृतिः—

तदभावे भावादिति ॥ ८ ॥

अथ निरोधचित्तक्षणेषु चलं गुणवृत्तमिति कीदृशस्तदा चित्तपरिणामः—

**व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥**

---

भास्वती।

प्रादुर्भावात्, परवैराग्यमेव तस्यान्तरङ्गमुक्तम् ॥ ८ ॥

अथेति। परिणामान् व्याचष्टे—अथ निरोधचित्तक्षणेषु = निरोधचित्तं = प्रत्ययशून्यं-चित्तम्, तदा शून्यमिव भवति चित्तं परिणामश्च तस्य न लक्ष्यते तदवस्था चित्तस्य परिणामः स्यात्, गुणवृत्तस्य = गुणकार्यस्य चलत्वात् = परिणामशीलत्वात्, कथं? तदाह—व्युत्थानेति। व्युत्थानसंस्काराः = प्रत्ययरूपेण चेतस उत्थानं व्युत्थानं, विक्षिप्तैका-

तत्त्ववैशारदी।

नन्तरभावित्वमस्य नास्ति तस्माद् दूरापेताऽन्तरङ्गता संयमस्यासम्प्रज्ञात इति दर्शयितुं-तदभावे भावादित्युक्तम् ॥ ८ ॥

परिमाणत्रयसंयमादित्यत्रोपयोक्ष्यमाणपरिणामत्रयं प्रतिपिपादयिषुर्निर्बीजप्रसङ्गेन पृच्छति—"अथ" इति। व्युत्थानसम्प्रज्ञातयोश्चित्तस्य स्फुटतरपरिणामभेदप्रचयानुभवान्न प्रश्नावतारो, निरोधे तु नानुभूयते परिणामो, न चाननुभूयमानो नास्ति, चित्तस्य त्रिगुणतया चलत्वेन गुणानां क्षणमप्यपरिणामस्यासम्भवादित्यर्थः, प्रश्नोत्तरं सूत्रं—"व्युत्थान-

पातञ्जलरहस्यम्।

स्य नियमपक्षनिविष्टत्वेनानन्तरङ्गत्वादित्याह—अन्तस्येत्यादि—तदनन्तरभावित्वमस्य नास्तीत्यन्तेन, तदभावे भावादिति भाष्यं, यमाद्यष्टानामभावेऽपि केवलात् परमवैराग्यादेव भावादस्येति भावः ॥ ८ ॥

निरोधेऽभावात्तदा चित्तपरिणामोऽस्ति न वेति सन्दिहानः पृच्छति—अथेति सूत्रारम्भं-करोति—व्युत्थानेति। व्युत्थाननिरोधसंस्कारयोः सम्प्रज्ञातसंस्कारपरवैराग्यसंस्कारयोर्मध्ये

वार्त्तिकम्।

योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते।
आस्तीर्य शेषमभजत् कल्पान्ते भगवान् प्रभुः ॥ इति,

तदेतत्प्रागुक्तं भवप्रत्ययो विदेहप्रकृतिलयानामितिसूत्रेणेति ॥ ८ ॥

ज्ञानोपायप्रसङ्गेन योगाङ्गानि विस्तरतः प्रोक्तानि इदानीमङ्गभूतस्य समाधेरङ्गिनोश्च योगयोः स्वरूपभेदावधारणाय तत्तदवस्थागता विशेषा वक्तव्याः, तावतैव तयोरङ्गाङ्गिनोः प्रयोजनमपि प्रतिपादितं भविष्यति तत्राङ्गसमाधितो योगद्वयस्य विशेषावधारकसूत्रमुत्थापयति-प्रश्नमुखेन—अथेति। निरोधचित्तक्षणेषु निरोधावस्थचित्तक्षणेषु योगद्वयक्षणेष्विति यावत्, गुणव्यापारस्यास्थिरत्वाद् त्रिगुणात्मकस्य चित्तस्य निरोधक्षणेष्वपि परिणामधाराऽऽवश्यकी, स च परिणामः कीदृश इति प्रश्नः—

"व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः", असम्प्रज्ञातापेक्षया सम्प्रज्ञातोऽपि व्युत्थानं तथा च व्युत्थानं निरोधश्च योगद्वयसाधारण एवात्र ग्राह्यः, केवलस्यासम्प्रज्ञातरूपस्य निरोधस्यात्र ग्रहणे सम्प्रज्ञाताख्यनिरोधस्य परिणामाकथनान्न्यूनताऽऽपत्तेः, व्युत्थानसंस्काराभिभवश्च क्रमेण ह्रासो न तु दाहः, निरोधसंस्कारप्रादुर्भावश्च क्रमेण वृद्धिः तौ निरोधपरिणामौ निरोधकालीनपरिणामः, स च निरोधक्षणचित्तान्वयः

व्युत्थानसंस्काराश्चित्तधर्मा न ते प्रत्ययात्मका इति प्रत्ययनिरोधे न निरुद्धाः, निरोधसंस्कारा अपि चित्तधर्माः तयोरभिभवप्रादुर्भावौ = व्युत्थानसंस्कारा हीयन्ते, निरोधसंस्कारा आधीयन्ते, निरोधक्षणं चित्तमन्वेति तदेकस्य चित्तस्य प्रतिक्षणमिदं संस्कारान्यथात्वं निरोधपरिणामः, तदा

भास्वती ।

ग्न्यावस्थेति यावद्, अत्र हि—सम्प्रज्ञातरूपं व्युत्थानम्, तस्य संस्काराश्चित्तधर्माः, चित्तस्य संस्कारप्रत्ययधर्मकत्वाद्, न ते संस्कारा न निरुद्धाः = नष्टाः, निरोधसंस्काराः = निरोधजसंस्काराः परवैराग्यरूपनिरोधप्रयत्नसंस्कारा इत्यर्थः; अपि चित्तधर्मा तयोरभिभवप्रादुर्भावरूपोऽन्यथाभावः चित्तस्य निरोधपरिणामः = निरोधवृद्धिरूपः परिणामः, स च निरोधक्षणचित्तान्वयः = तदा निरोधक्षणम् = निरोध एव क्षणोऽवसरस्तदात्मकं चित्तं स निरोधपरिणामः, अन्वेति = अनुगच्छति, तादृशचित्तस्यैव धर्मिणः स परिणाम इत्यर्थः,

तत्त्ववैशारदी ।

निरोधपरिणामः" असम्प्रज्ञातं समाधिमपेक्ष्य सम्प्रज्ञातो व्युत्थानं, निरुध्यतेऽनेनेति निरोधः = ज्ञानप्रसादः परं वैराग्यं, तयोर्व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ व्युत्थानसंस्कारस्याभिभवो, निरोधसंस्कारस्याविर्भावः, चित्तस्य धर्मिणो निरोधलक्षणस्य = निरोधावसरस्य द्वयोरवस्थयोरन्वयः, न हि चित्तं धर्मि सम्प्रज्ञातावस्थायामसम्प्रज्ञातावस्थायां च संस्काराभिभवप्रादुर्भावयोः स्वरूपेण भिद्यत इति, ननु यथोत्तरं क्लेशा अविद्यामूला- अविद्यानिवृत्तौ निवर्त्तन्त इति तन्निवृत्तौ न पृथक् प्रयत्नान्तरमास्थीयते, एवं व्युत्थानप्रत्ययमूलाः संस्कारा व्युत्थाननिवृत्तावेव निवर्त्तन्त इति तन्निवृत्तौ न निरोधसंस्कारोऽपेक्षितव्य इत्यत आह—"व्युत्थानसंस्कारा" इति । न कारणमात्रनिवृत्तिः कार्य्यनिवृत्तिहेतुः मा भूत्कुविन्दनिवृत्तावपि पटस्य निवृत्तिः; अपि तु यत्कारणात्मकं यत्कार्य्यं तत्कारणनिवृत्तौ तत्कार्य्यनिवृत्तिः, उत्तरे च क्लेशा अविद्याऽऽत्मान इत्युक्तम् अतस्तन्निवृत्तौ तेषां निवृत्तिरुपपन्ना न त्वेवं प्रत्ययात्मानः संस्काराः चिरनिरुद्धे प्रत्यये सम्प्रति स्मरणदर्शनात्, तस्मात् प्रत्ययनिवृत्तावपि तन्निवृत्तौ निरोधसंस्कारप्रचय एवोपासनीय इत्यर्थः,

पातञ्जलरहस्यम् ।

पूर्वस्याभिभव उत्तरस्याविर्भावो बाधकतया स्थितिरिति निरोधं व्याप्यपि चित्तं धर्मि अन्वेत्यनुगच्छतीत्यतो निरोधपरिणामो वैराग्यसंस्कार एवानुवर्तत इति सूत्रार्थः, प्रत्ययात्मकाः = वृत्त्युपादानकारणकाः संस्काराः किन्तु चित्तपक्षनिक्षिप्तत्वेन विद्यन्त इत्यत आह—प्रत्ययनिरोधे न निरुद्धाः, एतदेव विवृणोति भाष्यकारो निरोधेत्यादि—व्याख्यातमित्यन्तेन.

वार्त्तिकम् ।

प्रत्येकं निरोधक्षणेषु एकस्मिन् स्थिरे चित्तेऽन्वित इत्यर्थः, एतच्च विशेषणं योगकाले प्रतिक्षणमेतादृशपरिणामलाभाय चित्तस्थैर्यलाभाय चोक्तम्, अत्र निरोधकाले जायमानः संस्कार एव निरोधसंस्कार इत्युक्तः तेन सम्प्रज्ञातरूपनिरोधस्य संस्काराजनकत्वेऽपि तत्कालीनप्रज्ञाजन्यसंस्कारस्यैव निरोधसंस्कारत्वमुपपन्नमिति चित्तधर्मिणो धर्मपरिणामोऽयमिति प्रतिपादनाय भाष्यकार आह—व्युत्थानसंस्काराश्चित्तधर्मा इति । ननु वृत्तिनिरोधेनैव तत्कार्यतया तत्संस्काराणामपि निरोधो भवतु तन्तुनिरोधेन पटनिरोधवत्, अतो न पृथग् व्युत्थानसंस्काराभिभवापेक्षेत्याशङ्कां समाधत्ते—न ते प्रत्ययात्मका इति । न प्रत्ययोपादानकाः; अतो न व्युत्थानसंस्काराः प्रत्ययनिरोधेऽपि निरुद्धा भवन्तीत्यर्थः, निमित्तकारणत्वादेव प्रत्ययस्येति भावः, तस्मात्प्रत्ययनिवृत्तावपि तत्संस्कारनिवृत्तिकारणं पृथगेवापेक्ष्यत इति, शेषं भाष्यं सूत्रव्या-

संस्कारशेषं चित्तमिति निरोधसमाधौ व्याख्यातम् ॥ ६ ॥

**तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥**

निरोधसंस्कारात्। निरोधसंस्काराभ्यासपाटवापेक्षा प्रशान्तवाहिता चित्तस्य भवति, तत्संस्कारमान्द्ये व्युत्थानधर्मिणा संस्कारेण निरोधधर्मसंस्कारोऽभिभूयत इति ॥ १० ॥

**सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधि-परिणामः ॥ ११ ॥**

भास्वती ।

निरोधे प्रत्ययाभावात् संस्कारधर्माणामेवात्र परिणाम एकस्य धर्मिणश्चित्तस्येति दिक् ॥ ९॥

निरोधेति । निरोधसंस्कारस्याभ्यासपाटवम् = अभ्यासेन तदाधानमित्यर्थः, तदपेक्ष्य जाता प्रशान्तवाहिता चित्तस्य भवति, प्रशान्तवाहिता = प्रशान्तरूपेण प्रत्ययहीनतया वाहिता प्रवहणशीलता, निरोधसंस्कारोपचयात् सा भवतीत्यर्थः ॥ १० ॥

सर्वार्थता = युगपदिव सर्वेन्द्रियेषु विषयग्रहणाय सञ्चरणशीलता, एकाग्रता = एक-

तत्त्ववैशारदी ।

सुगममन्यद् ॥ ९ ॥

सर्वथा व्युत्थानसंस्काराभिभवे तु बलवता निरोधसंस्कारेण कीदृशः परिणाम इत्यत आह—"तस्य प्रशान्तवाहिता संस्काराद्" व्युत्थानसंस्कारमलरहितनिरोधपरम्परामात्रवाहिता प्रशान्तवाहिता, कस्मात् पुनः संस्कारपाटवमपेक्षते न तु संस्कारमात्रमित्यत आह—"तत्संस्कारमान्द्ये" इति । तद् इति । निरोधं परामृशति, ये तु "नाभिभूयते" इति पठन्ति ते तदा व्युत्थानं परामृशन्ति ॥ १० ॥

सम्प्रज्ञातसमाधिपरिणामावस्थां चित्तस्य दर्शयति—"सर्वार्थ—समाधिपरिणामः" वि-

पातञ्जलरहस्यम् ।

अन्वयपदस्य व्याख्या संस्कारशेषमिति ॥ ९ ॥

तत्त्वपक्षपातो हि धियां स्वभाव इति न्यायेनाह—"तस्य प्रशान्तवाहिता संस्कारात्", क्षणमप्यपरिणम्य गुणा न तिष्ठन्तीति वैराग्यसंस्कारमान्द्यं कदा चित् व्युत्थानसंस्कारः प्रबलः स्यादतः सूत्रस्यार्थवादत्वपरिहाराय कर्तव्यपदमध्याहार्यं तेन प्रशान्तवाहिप्रत्ययान्तरवत्त्वमनुष्ठेयमिति शेषः ॥ १० ॥

सूत्रं-सर्वार्थता—समाधिपरिणाम इति । धर्माद्याकारता हि सर्वार्थता सा निरोध्या योग-

वार्त्तिकम् ।

स्फुटमेव व्याख्यातप्रायम् ॥ ९ ॥

ननु किमर्थं निरोधसंस्काराः कल्प्यन्त इत्याकाङ्क्षायां निरोधसंस्कारप्रमाणमाह—

"तस्य प्रशान्तवाहिता संस्कारात्", तस्य निरोधावस्थचित्तस्य प्रशान्तवाहिता निर्मलनिरोधधारया वहनं निरोधसंस्कारबलादेव भवतीत्यर्थः, अतो निरोधसंस्कारस्तत्प्रादुर्भावश्चावश्यमेष्टव्य इति भावः, अन्वयव्यतिरेकाभ्यां कार्यकारणभावं प्रतिपादयति-निरोधेत्यादि, भाष्यं सुगमम् ॥ १० ॥

निरोधरूपयोगद्वयकार्यः परिणामः व्याख्यातः, इदानीं तद्विलक्षणं योगाङ्गसमाधिकार्यं परिणामं दर्शयति—

"सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः" सर्वार्थता = विक्षिप्तता, एकाग्रता = एकमात्रविषयता तयोर्यथाक्रमं क्षयोदयौ चित्तस्य समाधिकालीनपरिणाम इत्यर्थः, अत्रा-

सर्वार्थता चित्तधर्मः, एकाग्रता चित्तधर्मः, सर्वार्थतायाः क्षयः = तिरोभाव इत्यर्थः, एकाग्रताया उदयः = आविर्भाव इत्यर्थः, तयोर्धर्मित्वेनानुगतं चित्तं, तदिदं चित्तमपायोपजननयोः स्वात्मभूतयोर्धर्मयोरनुगतं समाधीयते स चित्तस्य समाधिपरिणामः ॥ ११ ॥

**ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥**

समाहितचित्तस्य पूर्वप्रत्ययः शान्तः, उत्तरस्तत्सदृश उदितः, समाधि-

भास्वती ।

विषयता, अन्योर्धर्मयोः क्षयोदयरूपः परिणामः समाधिपरिणामः, तदिति । इदं-चित्तम् ; अपायोपजननयोः = क्षयोदयशीलयोः, स्वात्मभूतयोः स्वकीययोर्धर्मयोः = सर्वार्थतैकाग्रतयोरनुगतं भूत्वा समाधीयते = तद्धर्मपरिणामस्यानुगामी सम्प्रज्ञातसमाधिरित्यर्थः, अत्र प्रत्ययधर्माणां संस्कारधर्माणाञ्चान्यथाभावः, सर्वार्थताहीनसमाधिस्वभावेन समाधिप्रज्ञया च चित्तस्याभिसंस्कारः संप्रज्ञाताख्यः समाधिपरिणाम इति दिक् ॥ ११ ॥

तत इति । ततः = तदा समाधिकाले पुनरन्यो यः परिणामस्तल्लक्षणमाह—शान्तोदितौ = अतीतवर्त्तमानौ तुल्यप्रत्ययौ = तुल्यौ च तौ प्रत्ययौ चेति, एतदुक्तं भवति—स-

तत्त्ववैशारदी ।

क्षिप्तता सर्वार्थता, सन्न विनश्यतीति क्षयस्तिरोभावः, नासदुत्पद्यत इत्युदय आविर्भावः, आत्मभूतयोः सर्वार्थतैकाग्रताधर्मयोर्यावपायोपजनौ सर्वार्थताया अपायः, एकाग्रताया उपचयस्तयोरनुगतं चित्तं समाधीयते = पूर्वापरीभूतसाध्यमानसमाधिविशेषणम्भवतीति ॥ ११ ॥

ततः-परिणामः । ततः पुनः समाधेः पूर्वापरीभूताया अवस्थाया निष्पत्तौ सत्यां शान्तोदितौ – अतीतवर्त्तमानौ, तुल्यौ च तौ प्रत्ययौ चेति तुल्यप्रत्ययौ, एकाग्रतायान्तु द्वयोः सा-

पातञ्जलरहस्यम् ।

विरोधित्वादेकाग्रताया योगानुकूलत्वादनुष्ठेयतेत्युपदिश्यत इति तात्पर्यमित्यर्थः ॥ ११ ॥

क्षयोदयौ व्याख्यातौ, कदा चिदतीतवर्तमानप्रत्ययौ चित्ते धर्मिणि सति सदृशौ भवतः-

वार्त्तिकम् ।

पि प्रतिक्षणमित्यनुषञ्जनीयं युक्तिसाम्यात्, तदेतद्व्याचष्टे-सर्वार्थतेति। सर्वार्थताया अत्यन्तोच्छेद एकदा न भवति, नापि एकाग्रताया निष्पत्तिरेकदा भवति किं तु क्षणक्रमेणैवातः क्षयोदयौ तिरोभावाविर्भावार्थकतया व्याचष्टे—क्षय इत्यादिना-तिरोभाव इत्यर्थ इत्यन्तेन, अत्र तिरोभावाविर्भावौ ह्रासवृद्धी, ननु सर्वार्थतैकाग्रतयोर्धर्मौ कथं चित्तस्येत्युच्येते तत्राह-तयोर्धर्मित्वेनानुगतं चित्तमिति। तयोः सर्वार्थतैकाग्रतयोः, तथा च धर्मपरिणामोऽपि धर्मद्वारा धर्मिण एव भवतीत्यर्थः, उत्तरसूत्रवक्ष्यमाणपरिणामाद् व्यावर्त्य प्रकृतसूत्रवाक्यार्थभूतं परिणामं व्याचष्टे—तदिदमिति । तदिदमित्यस्य विवरणम् अनुगतमित्यन्तं, तथा च चित्तं स्वात्मभूतयोः स्वकार्ययोः सर्वार्थतैकाग्रतयोर्धर्मयोरपायकाल उपजनकाले चानुगतं यत्समाधीयते स समाधिपरिणाम इत्यर्थः, समाहितचित्तस्य तु परिणामः शेषसूत्रेण वक्ष्यत इति भावः ॥११॥

इदानीमङ्गसमाधावेव परिणामान्तरमुक्तपरिणामकालीनमाह—

"ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः" ततः सर्वार्थतायाः निःशेषतः क्षये सति, शान्तोदितावतीतोत्पद्यमानौ तुल्यप्रत्ययावेकाकारप्रत्ययौ चित्तस्यैकाग्रताकालीनः पुनः परिणामो भवति सजातीय एकैकः प्रत्ययो नश्यति अन्योऽन्य उत्पद्यत इत्येवं परिणामो भवतीत्यर्थः, तदेतद्व्याचष्टे—समाहितेति । समाध्यारूढस्य चित्तस्येत्य-

चित्तमुभयोरनुगतं पुनस्तथैव, आ समाधिभ्रेषादिति, स खल्वयं धर्मिणश्चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥

## एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥

एतेन = पूर्वोक्तेन चित्तपरिणामेन धर्मलक्षणावस्थारूपेण, भूतेन्द्रियेषु

---

भास्वती ।

माधिकाले पूर्वोत्तरकालभाविनौ प्रत्ययौ सदृशौ भवतः, अयं चित्तस्य धर्मिण एकाग्रतापरिणामः = विसदृशप्रत्ययोत्पादधर्मस्य क्षयः सदृशप्रत्ययोत्पादधर्मस्योपजन इत्ययं चित्तस्यान्यथाभावः, अस्मिन् प्रत्ययधर्माणामेवान्यथाभावः, तत्रादौ—विसदृशप्रत्ययानां-सदृशीकरणं तादृश एकाग्रतापरिणामरूपः समाधिर्भवति, ततः समाधिसंस्काराधानात् सर्वार्थतारूपा ये प्रत्ययसंस्कारास्ते क्षीयन्ते, एकाग्रतारूपाश्च प्रत्ययसंस्कारा वर्धन्ते, ततः पुनर्निरोधप्रतिलम्भे निरोधसंस्कारः प्रचीयते, व्युत्थानसंस्काराः क्षीयन्ते, एवं चित्तस्य परिणामः ॥ १२ ॥

परिणामस्तु व्यवहारभेदात् त्रिविधः—धर्मलक्षणावस्था इति । यथा चित्तस्य परि-

तत्त्ववैशारदी ।

दृश्यं, 'समाहितचित्तस्य' इति । समाधिनिष्पत्तिर्दर्शिता, तथैव = एकाग्रमेव, अवधिमाह—"आसमाधिभ्रेषाद् = भ्रंशाद् इति ॥ १२ ॥

प्रासङ्गिकं च वक्ष्यमाणौपयिकं च भूतेन्द्रियपरिणामं विभजते—"एतेन = व्याख्याताः," व्याचष्टे—"एतेन" इति । ननु चित्तपरिणतिमात्रमुक्तं न तु तत्प्रकारा धर्मलक्षणाव-

पातञ्जलरहस्यम् ।

स्तावप्येकाग्रता कथ्यते योगाविरुद्धत्वादित्याह—तत इति । तयोरवधिमाह—समाधिभ्रंशान्नाशाद्, व्युत्थाने सति तौ न स्त इति शेषः ॥ १२ ॥

अतिदेशसूत्रमेतेनेति । किमतिदिशति ? परिणामत्रयं, क्षणमपरिणम्य न तिष्ठन्तीत्युक्तिमाश्रित्यैव "प्रकृतेर्विभुत्वयागात्परिणामोऽयमद्भुत" इत्युक्तिः, क्रमप्राप्तभूतानां परिणाममाह-तत्र

वार्त्तिकम् ।

र्थः, अनेन पूर्वसूत्रोक्तचित्ताद्यवच्छेदः कृतः तत्र समाधीयमानचित्तस्यैव परिणामस्योक्तत्वादिति न पुनस्तथेत्यनेन धारावाहिक एकाग्रतासन्तान उक्तः, अवधिमाह—आसमाधीति । भ्रेषो = भ्रंशः, ॥ १२ ॥

तदेवं योगतदङ्गयोः परिणामरूपवैलक्षण्यं तयोर्विवेकाय प्रदर्शितम्, अनयैव दिशा व्युत्थानकालीना अपि चित्तपरिणामा व्याख्यातप्रायाः, इतः परिणामत्रयसंयमादित्यागामिसूत्रोपोद्घातसङ्गत्या सर्वत्र वैराग्याग्निप्रज्वलनाय च चित्तवदेवान्येष्वप्यतिदेशेनैव परिणामान्व्याचष्टे सूत्रकारः—

"एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः", धर्मैर्लक्षणैरवस्थाभिश्च परिणामा धर्मलक्षणावस्थापरिणामा एते च भाष्ये व्याख्येयाः, एत एव परिणामाः भूतेन्द्रियेषु न तु तत्त्वान्तरपरिणामा इत्यसाधारणाशयेनैवात्र प्रकृत्यादिष्विति नोक्तम्, तेन तत्त्वान्तरपरिणामवदेतेऽपि परिणामाः सर्व एव यथायोग्यं प्रकृत्यादिष्वप्यवगन्तव्याः, तथा च भाष्यकारो वक्ष्यति-एवं धर्मलक्षणावस्थापरिणामैः शून्यं क्षणमपि न गुणवृत्तमवतिष्ठते इत्येतेन सर्ववस्तुषु परिणामत्रयमिति, सूत्रं व्याचष्टे—एतेनेति । ननु चित्तपरिणाममात्रं पूर्वसूत्रेषूक्तं न तु धर्मल-

धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चोक्तो वेदितव्यः, तत्र व्युत्थाननिरोधयोर्धर्मयोरभिभवप्रादुर्भावौ धर्मिणि धर्मपरिणामो, लक्षणपरिणामश्च = निरोधस्त्रिलक्षणस्त्रिभिरध्वभिर्युक्तः स खल्वनागतलक्षणमध्वानं प्रथमं हित्वा धर्मत्वमनतिक्रान्तो वर्त्तमानं लक्षणं प्रतिपन्नो यत्रास्य स्वरूपे-

भास्वती ।

णामस्तथा भूतेन्द्रियाणामपि, तत्र धर्मपरिणामः = धर्माणामन्यथात्वम्, लक्षणपरिणामः = लक्षणं कालः, अतीतानागतवर्त्तमानकालैर्लक्षित्वा यद् भेदेन मननम् अवस्थापरिणामः = नवत्वादिरवस्थाभेदः, यत्र धर्मलक्षणभेदयोर्विवक्षा नास्ति, एष धर्मपरिणामएव वास्तवो लक्षणावस्थापरिणामौ च काल्पनिकौ, निरोधं गृहीत्वा लक्षणपरिणाममुदाहरति-निरोधस्त्रिलक्षणः त्रिभिरध्वभिरतीतानागतादिकालभेदैर्युक्तः, अनागतो निरोधोऽनागतलक्षणम् अध्वानं प्रथमं हित्वा धर्मत्वमनतिक्रान्तः = प्राग् यो निरोधोऽनागतोधर्म आसीत् स एव वर्त्तमानधर्मो भूत इत्यर्थः, यत्रास्य स्वरूपेण = व्याप्रियमाणविशेष-

तत्त्ववैशारदी ।

स्थापरिणामाः, तत्कथं तेषामतिदेश इत्यत आह—"व्युत्थाननिरोधयोः" इति । धर्मलक्षणावस्थाशब्दाः परं नोच्चारिता, न तु धर्मलक्षणावस्थापरिणामा नोक्ता इति सङ्क्षेपार्थः, तथा हि व्युत्थाननिरोधसंस्कारयोरित्यत्रैव सूत्रे धर्मपरिणाम उक्तः, इमं च धर्मपरिणामं दर्शयता तेनैव धर्माधिकरणो लक्षणपरिणामोऽपि सूचित एवेत्याह—"लक्षणपरिणाम" इति । लक्ष्यतेऽनेन लक्षणं कालभेदः, तेन हि लक्षितं वस्तु वस्त्वन्तरेभ्यः कालान्तरयुक्तेभ्यो व्यवच्छिद्यत इति, निरोधस्त्रिलक्षणः' = अस्यैव व्याख्यानं "त्रिभिरध्वभिर्युक्तः", अध्वशब्दः कालवचनः, "स खल्वनागतलक्षणमध्वानं प्रथमं हित्वा" तत्किमध्ववद् धर्मत्वमप्यतिपतति, नेत्याह—"धर्मत्वमनतिक्रान्तो वर्त्तमानं लक्षणं प्रतिपन्न" इति, य एव निरोधोऽनागत आ-

पातञ्जलरहस्यम् ।

व्युत्थानेति । सति धर्मिणि धर्माणां परस्परमन्यथाभावः यथा सुवर्णे विद्यमाने हि कटककुण्डलानामाविर्भावतिरोभावौ धर्मपरिणामः, परिणतस्य घटादेरतीतवर्तमानानागतकालसम्बन्धो-

वार्त्तिकम् ।

क्षणावस्थापरिणामा इत्याशङ्कां तद्विभागदर्शनेनापाकर्त्तुमुपक्रमते-तत्र व्युत्थानेति । तत्र तेषु मध्ये व्युत्थाननिरोधयोरभिभवप्रादुर्भावावेव चित्ते धर्मिणि धर्मपरिणामः प्रथमसूत्रेणैवोक्त- इत्यर्थः, अवस्थितस्य धर्मिणः पूर्वधर्मतिरोभावे धर्मान्तरप्रादुर्भावस्यैव धर्मपरिणामत्वमिति भावः, यद्यपि प्रथमसूत्रे व्युत्थाननिरोधसंस्कारयोरेवाभिभवप्रादुर्भावावुक्तौ तथाऽपि व्युत्थाननिरोधयोरपायोपजनावप्यर्थाल्लब्धाविति, धर्मश्च द्रव्यं गुणो वेत्यन्यदेतत्, तथा तेनैव सूत्रेणाभिभवप्रादुर्भावशब्दाभ्यां धर्मस्य लक्षणपरिणामोऽप्युक्त इत्याह-लक्षणपरिणामश्चेति । लक्षणपरिणामो हि अवस्थितस्य धर्मस्यानागतादिलक्षणत्यागे वर्त्तमानादिलक्षणलाभः स-चाभिभवप्रादुर्भाववचनेनैव लब्धः, अतीततावर्त्तमानतयोरेवाभिभवप्रादुर्भावत्वादिति भावः, तत्रादौ निरोधरूपस्य धर्मस्य प्रादुर्भावशब्दोक्तं लक्षणपरिणाममुदाहरति—निरोधस्त्रिलक्षण- इति । एतस्यैव विवरणं त्रिभिरध्वभिर्युक्त इति, क्रमेण सम्बन्धादध्वतुल्यतयाऽनागतादिभावोऽध्वेत्युच्यते, तथा धर्मिणो धर्माणां चान्योन्यं व्यावर्त्तनाल्लक्षणशब्देन च तन्त्रे परिभाषित- इति, ततः किमित्यत आह—स खल्विति । स खलु निरोधः प्रादुर्भावकाले अनागतलक्षण-रूपमध्वाख्यं हित्वेत्यादिरर्थः, अत्र सत्कार्योपपत्तये धर्मपरिणामत्वोपपादनाय च धर्मत्वमनतिक्रान्त इत्युक्तम्, स्वरूपेणावस्थितस्यैव धर्मस्य रूपान्तरापाये रूपान्तरोत्पत्तौ धर्मपरिणामव्यवहारादिति, वर्तमानावस्थामितरावस्थाद्वयाद्विविच्य दर्शयति-यत्रेति । स्वरूपेणार्थ-

णाभिव्यक्तिः, एषोऽस्य द्वितीयोऽध्वा, न चातीतानागताभ्यां लक्षणाभ्यां-वियुक्तः,

तथा व्युत्थानं त्रिलक्षणं = त्रिभिरध्वभिर्युक्तं वर्त्तमानं लक्षणं हित्वा धर्मत्वमनतिक्रान्तमतीतलक्षणं प्रतिपन्नम्, एषोऽस्य तृतीयोऽध्वा, न चानागत-वर्त्तमानाभ्यां लक्षणाभ्यां वियुक्तम्, एवं पुनर्व्युत्थानमुपसंपद्यमानमनागतं-लक्षणं हित्वा धर्मत्वमनतिक्रान्तं वर्त्तमानं लक्षणं प्रतिपन्नं यत्रास्य स्वरूपाभिव्यक्तौ सत्यां व्यापारः, एषोऽस्य द्वितीयोऽध्वा न चातीतानागताभ्यां लक्षणाभ्यां वियुक्तमिति, एवं पुनर्निरोधः, एवं पुनर्व्युत्थानमिति, तथाऽवस्थापरिणामः, तत्र निरोधक्षणेषु निरोधसंस्कारा बलवन्तो-

---

भास्वती ।

स्वरूपेणाभिव्यक्तिः, नेति । अनागतो निरोधरूपो धर्मो वर्त्तमानभूतोऽतीतो भविष्यतीति त्रिलक्षणावियुक्तः, निरोधकाले तु व्युत्थानमतीतम्, एषः = अतीतत्वम् अस्य = धर्मस्य तृतीयोऽध्वा, अतः परं व्युत्थानमित्यन्तमतिरोहितम्, उपसम्पद्यमानं = जायमानम्, तथेति । निरोधक्षणे वर्त्तमान एव निरोधधर्मो बलवानित्यत्र नास्त्यध्वभेदस्य

तत्त्ववैशारदी ।

सीत् स एव सम्प्रति वर्त्तमानो, न तु निरोधोऽनिरोध इत्यर्थः, वर्त्तमानतास्वरूपव्याख्यानं-'यत्रास्य स्वरूपेण' = स्वोचितार्थक्रियाकारणस्वरूपेण, अभिव्यक्तिः = समुदाचारः एषोऽस्य प्रथममनागतमध्वानमपेक्ष्य द्वितीयोऽध्वा, स्यादेतद्—अनागतमध्वानं हित्वा चेद्वर्त्तमानतामापन्नस्तां च हित्वाऽतीततामापत्स्यते हन्त भोरध्वनामुत्पत्तिविनाशौ स्यातां न चेष्येते न ह्यसत उत्पादो नापि सतो विनाश इत्यत आह—"न च" इति । न चातीतानागताभ्यां सामान्यात्मनाऽवस्थिताभ्यां वियुक्त इत्यर्थः, अनागतस्य निरोधस्य वर्त्तमानतालक्षणं दर्शयित्वा वर्त्तमानव्युत्थानस्यातीततां तृतीयमध्वानमाह—"तथा व्युत्थानम्" इति । तत्किं निरोध एवानागतो न व्युत्थान, नेत्याह-एवं पुनर्व्युत्थानम्" इति । व्युत्थानजात्यपेक्षया पुनर्भावो न व्यक्त्यपेक्षया, न ह्यतीतं पुनर्भवतीति स्वरूपाभिव्यक्तिः = अर्थक्रियाक्षमस्याविर्भावः स चैवंलक्षणपरिणाम उक्तस्तज्जातीयेषु पौनःपुन्येन वर्त्तत इत्याह--"एवं पुनः" इति । धर्मपरिणामसूचितमेवावस्थापरिणाममाह—"तथा-

पातञ्जलरहस्यम् ।

लक्षणपरिणामः—अतीतो घट इत्यादि, जलाहरणाद्यर्थक्रियाचक्षुरिन्द्रियादिविषयतेे अत्रातीते अतिक्रान्तत्वाद् न स्व एव, उदितो वर्त्तमानो घटस्ते प्रति समर्थः, एवं स एवाव्यपदेश्योऽनाग-

वार्त्तिकम् ।

क्रियाकारित्वेनाभिव्यक्तिरुपलब्धिरित्यर्थः, स चानागतापेक्षया द्वितीयोऽध्वेति शिष्यव्युत्पादनाय प्रसङ्गादाह—एषोऽस्येति । असदुत्पादसद्विनाशयोः प्रतिषेधायाह—न चेति । निरोधक्षण एव निरोधस्य लक्षणपरिणामं दर्शयित्वा व्युत्थानस्यापि दर्शयति–तथा व्युत्थानमिति । सर्वं पूर्ववत्, विशेषस्तु वर्तमानतां हित्वाऽतीततां प्राप्त इति तृतीयोऽध्वेति च, एवं व्युत्थानकालेऽपि व्युत्थाननिरोधयोः लक्षणपरिणामौ क्रमेण दर्शयति–एवं पुनर्व्युत्थानमुपसम्पद्यमानमिति । उपसम्पद्यमानं जायमानं तच्च व्यक्त्यन्तरम् अतीतव्यक्तेरनुत्पादस्य वक्ष्यमाणत्वात्, अन्यत्सर्वं पूर्ववत्, एवं पुनर्निरोध इति। अत्र एवमित्यनेन तथा व्युत्थानमित्यादिवाक्योक्ता निरोधस्य तृतीयाध्वप्रक्रिया निर्दिष्टा अतो न निरोधतृतीयावस्थाकथनाभावशून्यतेति, इदं च व्युत्थाननिरोधपरिणामचक्रम् अपवर्गपर्यन्तमेवेति संक्षेपेणाह—एवं पुनर्व्युत्थान-

भवन्ति दुर्बला व्युत्थानसंस्कारा इति, एष धर्माणामवस्थापरिणामः तत्र धर्मिणो धर्मैः परिणामो, धर्माणां लक्षणैः परिणामो, लक्षणानामप्यवस्थाभिः परिणाम इति, एवं धर्मलक्षणावस्थापरिणामैः शून्यं न क्षणमपि गुणवृत्तम-

भास्वती।

वर्धमानत्वस्य च विवक्षा; किन्तु काञ्चिदवस्थामपेक्ष्य भेदवचनं कृतम् भवति, ईदृशो भेदोऽवस्थापरिणामः, तत्र भूतेन्द्रियादिधर्मिणो नीलपीतान्ध्यादिधर्मैः परिणमन्ते, नीलादिधर्माः पुनरतीतादिलक्षणैः परिणता इति मन्यन्ते, बलवानयं वर्त्तमानो दुर्बलोऽयमतीत इत्येवं लक्षणान्यवस्थाभिर्भिन्नानीति व्यवह्रियन्ते, एवमिति। गुणवृत्तम् = महदादिगुण-

तत्त्ववैशारदी।

ऽवस्था" इति। धर्माणां = वर्त्तमानाध्वनां बलवत्त्वाबलवत्त्वे अवस्था, तस्याः प्रतिक्षणं तारतम्यं परिणामः, उपसंहरति—"एष" इति। परिणामभेदानां सम्बन्धिभेदान्निर्धारयति तन्त्रानुभवानुसारात्—"तत्र धर्मिण" इति। तत्किमेष परिणामो गुणानां कादाचित्को? नेत्याह—"एवम्" इति। कस्मात्पुनरयं परिणामः सदातन इत्यत आह "चलञ्च" इति। चो—हेत्वर्थे, वृत्तं = प्रचारः, एतदेव कुत इत्यत आह-गुणस्वाभाव्यम्" इति। उक्तम्—अत्रैव पुरस्तात् सोऽयं त्रिविधोऽपि चित्तपरिणामो भूतेन्द्रियेषु सूत्रकारेण निर्दिष्ट-

पातञ्जलरहस्यम्।

तश्चेदसमर्थः ते प्रति योग्यताऽभावादिति, अवस्थापरिणामो नाम नूतननूतनतमत्वादि स्थावरे; जङ्गमे तु बाल्ययौवनवृद्धत्वादि, परिणामपदमन्त्ये पठितत्वात् त्रिषु सम्बध्यत इत्याह—तथा

वार्त्तिकम्।

र्मिति, व्युत्थानादिरित्यर्थः, चित्तधर्मस्य लक्षणपरिणामं प्रदर्श्य तल्लक्षणस्यावस्थापरिणामं-तस्य प्रशान्तवाहिता संस्कारादिति सूत्रे व्याख्यातं दर्शयति—तथाऽवस्थापरिणाम इति। उच्यत इति शेषः, संस्कारयोर्बलवत्त्वदुर्बलत्त्वे च घटस्य नवपुराणताऽऽदिवद् वृद्धिह्रासौ उत्पत्तिविनाशरूपत्वे लक्षणपरिमाणामाङ्गेदानुपपत्तेः, लक्षणस्यैव नवपुराणत्वादिनाऽवस्थापरिणाम इति वक्ष्यमाणाच्च, ननु द्रव्यस्यैव वृद्धिक्षयौ दृष्टौ न गुणस्येति चेन्न—रूपादीनामपि वृद्धिह्रासानुभवाद् रूपभेदकल्पने च गौरवात् तदेव रूपमिदानीं प्रवृद्धमिति प्रत्यभिज्ञाऽनुपपत्तेश्चेति, तस्मात्संस्कारस्यादृष्टादेश्चास्ति अवस्थापरिणामः ज्ञानेच्छाऽऽदिषु चोत्पत्तिविनाशानुभवात् क्षणद्वयमात्रस्थायित्वेऽपि द्वितीयक्षणे वर्त्तमानलक्षणस्यावस्थापरिणामो भवति क्षणत्वेनैव परिणामहेतुत्वाद् अन्यथा सर्ववस्तूनाम्प्रतिक्षणपरिणामस्य वक्ष्यमाणस्यानुपपत्तेः, एतेनोत्तरवृत्तिविभुविशेषगुणस्यैव ज्ञानादिनाशकत्वेनैकाग्रतादशायामपि ज्ञानस्य बहुक्षणस्थायित्वान्नावस्थापरिणामसम्भव इत्यपास्तम्, तदेवं परिणामत्रयं व्याख्याय तेषामाधारव्यवस्थामाह-तत्र धर्मिण इत्यादिना, लक्षणानामप्यवस्थाभिरिति। यद्यपि अवस्थानामपि बाल्यादीनां लक्षणपरिणामोऽस्ति तथाऽपि यथोक्तक्रमे न काऽप्यनुपपत्तिः, ननु वर्त्तमानलक्षणस्य नवपुराणाद्यवस्थापरिणामोऽस्तु; अनागतातीतलक्षणयोस्तु कीदृशोऽवस्थाभेदः स्यादिति? उच्यते—शीघ्रभविष्यत्ताविलम्बभविष्यत्ताऽऽदिरूपो विशेषस्तयोरपि लक्षणयोरनुमीयते सत्त्वादिवदेव गुणत्वेन प्रतिक्षणपरिणामित्वसिद्धेरिति, यथोक्तैश्चित्तपरिणामैः सर्ववस्तूनां परिणाममतिदिशन् वैराग्याग्निप्रज्वलनार्थं तेषां प्रतिक्षणपरिणामित्वं दर्शयति-एवं धर्मलक्षणेति। तदुक्तं मन्वादौ—

घोरेऽस्मिन् हतसंसारे नित्यं सततघातिनाम्।
कदलीस्तम्भनिःसारे संसारे सारमार्गणम्॥
यः करोति स संमूढो जलबुद्बुदसन्निभे। इति,

वतिष्ठते चलञ्च गुणवृत्तं, गुणस्वाभाव्यन्तु प्रवृत्तिकारणमुक्तं गुणानामिति, एतेन भूतेन्द्रियेषु धर्मधर्मिभेदात् त्रिविधः परिणामो वेदितव्यः, परमार्थतस्त्वेक एव परिणामः धर्मिस्वरूपमात्रो हि धर्मो धर्मिविक्रियैवैषा धर्मद्वारा

भास्वती ।

विकारः, सदैव परिणामि, गुणवृत्तस्य चलत्वे हेतुर्गुणस्वाभाव्यम् , क्रियाशीलं रज इत्यनेन तत्तूक्तम्, क्रियारूपा प्रवृत्तिर्दृश्यस्यान्यतमो मूलस्वभावः, एतेनेति । धर्मधर्मिभेदभिन्नेषु भूतेन्द्रियेषूक्तस्त्रिविधः परिणामो व्यवहारप्रतिपन्नः, परमार्थतस्तु = यथाऽर्थत एक एव धर्मपरिणामोऽस्त्यन्यौ काल्पनिकावित्यर्थः, कथं ? तदाह—धर्मः = ज्ञातगुणः, धर्मी = ज्ञातगुणानामाश्रयः, कारणस्य धर्मः कार्यस्य धर्मी, अतो धर्मो धर्मिस्वरूपमात्रः = घटत्वादिधर्मास्तद्धर्मिमृत्स्वरूपा एवेत्यर्थः, धर्मिणो विक्रिया परिणामः, धर्मद्वारा धर्मा-

तत्त्ववैशारदी ।

इत्याह—"एतेन" इति । एष त्रिविधः परिणामो धर्मधर्मिभेदात् = धर्मधर्मिणोर्भेदमालक्ष्य तत्र भूतानां पृथिव्यादीनां धर्मिणां गवादिर्घटादिर्वा धर्मपरिणामः, धर्माणां चातीतानागतवर्तमानरूपता लक्षणपरिणामः, वर्तमानलक्षणापन्नस्य गवादेर्बाल्यकौमारयौवनवार्धक्यमवस्थापरिणामः, घटादीनामपि नवपुरातनताऽवस्थापरिणामः, एवमिन्द्रियाणामपि धर्मिणां तत्तन्नीलाद्यालोचनं धर्मपरिणामो, धर्मस्य वर्त्तमानताऽऽदिर्लक्षणपरिणामो, लक्षणस्य रत्नाद्यालोचनस्य स्फुटत्वास्फुटत्वादिरवस्थापरिमाणः सोऽयमेवंविधो भूतेन्द्रियपरिणामो धर्मिणो धर्मलक्षणावस्थानां भेदमाश्रित्य वेदितव्यः, अभेदमाश्रित्याह—"परमार्थतस्तु" इति । तु—शब्दो भेदपक्षाद्विशिनष्टि, पारमार्थिकत्वमस्य ज्ञाप्यते न त्वन्यस्य परिणामस्य निषिध्यते, कस्मात् ? "धर्मिस्वरूपमात्रो हि" इति । ननु यदि धर्मिविक्रियैव धर्मः, कथं तद्भेदप्रत्ययो = लोके परिणामेष्वित्यत आह—"धर्मद्वारा" इति । धर्मशब्देन धर्मलक्षणावस्थाः परिगृ-

पातञ्जलरहस्यम् ।

ह्येत्यादि—अवस्थापरिणाम,इत्यन्तेन, इन्द्रियाणां परिणामत्रयमाह—एवमिन्द्रियाणामिति । धर्मस्यालोचनादेः—आलोचितमिदमालोच्यत आलोचयिष्यत इति, रत्नतत्त्वस्यैकालोचनेन निर्णेतुमशक्यत्वात् प्राचीनालोचनं वर्तमानोपकारीत्याह—रत्नाद्यालोचनस्येति । त्रिविधपरिणतिमुपसंहरति—सोऽयमिति । तत्रायोगपरिच्छेद इत्याह—न त्वन्यस्य परिणामित्वं निषि-

वार्त्तिकम् ।

गुणवृत्तं गुणानां सत्त्वादीनां व्यापारः स्वकार्यैर्धर्मादिपरिणामैः क्षणमपि शून्यं नावतिष्ठते, प्रतिक्षणं परिणामं जनयतीत्यर्थः, ननु व्यापाराभावदशायामपरिणामित्वं स्यात् तत्राह—चलं च गुणवृत्तमिति । चलमिति भावप्रधानो निर्देशः, चाञ्चल्यं हि गुणानां स्वभाव इत्यर्थः, ननु प्रतिक्षणं चाञ्चल्ये प्रमाणं किमित्याकाङ्क्षायामाह—गुणस्वाभाव्यं त्विति । राज्ञो हि गुणानामुपकरणानां भृत्यादीनां स्वाम्यर्थं प्रतिक्षणमेव व्यापारो दृश्यते: अतो गुणस्वभावतैव पुरुषगुणानामपि सत्त्वादीनां,प्रतिक्षणप्रवृत्तौ प्रमाणमुक्तं पूर्वाचार्यैरित्यर्थः, गुणत्वं च परस्यैव भोगापवर्गहेतुत्वमिति, चित्तदृष्टान्ते परिणामत्रयं व्याख्याय दार्ष्टान्तिकेऽपि तद्व्याख्यातुमारभते—एतेनेति । धर्मधर्मिभेदादिति । धर्मधर्मिभेदमाश्रित्येत्यर्थः, तत्र पृथिव्यादीनां धर्मिणां घटादिर्धर्मपरिणामः, घटादीनां धर्माणां वर्त्तमानातीतते लक्षणपरिणामः, वर्त्तमानादिलक्षणानां च त्रयाणामपि बाल्ययौवनादिरवस्थापरिणाम इति, ननु त्रयोऽपि कथं परिणामा भूतेन्द्रियेषूच्यन्ते तेषु धर्मिषु,धर्ममात्रपरिणामादिति, तत्राह—परमार्थतस्त्विति । एक एव परिणामः त्रयोऽपि धर्मिपरिणाम एव यतो धर्मिस्वरूप एव धर्मोऽतो धर्मिपरिणाम एवैष लक्षणादिपरिणामो धर्मादेरित्यवान्तरमेव विभज्यत इत्यर्थः,

प्रपञ्च्यत इति, तत्र धर्मस्य धर्मिणि वर्त्तमानस्यैवाध्वस्वतीतानागत-वर्तमानेषु भावान्यथात्वं भवति, न द्रव्यान्यथात्वं, यथा सुवर्णभाजनस्य भित्त्वाऽन्यथाक्रियमाणस्य भावान्यथात्वं भवति न सुवर्णान्यथात्वमिति,

अपर आह—धर्मानभ्यधिको धर्मी पूर्वतत्त्वानतिक्रमात् पूर्वापरावस्था-

भास्वती।

न्तरोदयद्वारा प्रपञ्च्यते व्यज्यते, तत्रेति। धर्मिणि वर्त्तमानस्य धर्मस्य त्रिष्वध्वसु भावान्यथात्वम् = अवस्थाऽन्यत्वम् भवति न द्रव्यान्यथात्वम् = एकरूप एव धर्मोऽतीतोऽनागतो वा वर्त्तमानो वा भवतीत्यर्थः, यथा—सुवर्णभाजनस्य भित्त्वाऽन्यथाक्रियमाणस्य = मुद्गरादिना भित्त्वा कुण्डलादिरूपेणान्यथा क्रियमास्य, भावान्यथात्वम् = संस्थानान्यथात्वं-धर्मान्तरोदयेनेत्यर्थो भवति न सुवर्णद्रव्यस्यान्यथात्वम्,

अपर आह—इति। धर्मेभ्योऽनभ्यधिकः = अनतिरिक्तोऽभिन्न इत्यर्थः, धर्मी, पूर्वतत्त्वस्य = पूर्वस्य प्रत्ययरूपस्य धर्मिणस्तत्त्वानतिक्रमात् = स्वभावानतिक्रमाद्, यो भवतां धर्मी सोऽस्माकं प्रत्ययधर्मो यस्तु भवतां धर्मः सोऽस्माकं प्रतीत्यधर्मः, अतः सर्वं धर्म एवेत्येकान्ताभेदवादिनां मतम्, ते च वदन्ति—यदि धर्मी धर्मेभ्यो-भिन्नः स्यात् तदा स कूटस्थः स्याद् यतो धर्मा एव परिणमन्ते तर्हि तेषु समान्यतोऽनुगतो धर्मी परिणामहीनः स्यादिति, एतद् विवृणोति—पूर्वेति। पूर्वापरावस्थाभेदम् =

तत्त्ववैशारदी।

च्यन्ते तद्द्वारेण धर्मिण एव विक्रियेत्येका चासङ्कीर्णा च तद्द्वाराणामभेदेऽपि धर्मिणः परस्परासङ्करात्, ननु धर्मिणो धर्माणामभिन्नत्वे धर्मिणोऽध्वनां च भेदे धर्मिणोऽनन्यत्वेन धर्मेणापीह धर्मिवद् भवितव्यमित्यत आह—"तत्र धर्मस्य" इति। भावः = संस्थानभेदः सुवर्णादेर्यथा भाजनस्य रुचकस्वस्तिकव्यपदेशभेदो भवति, तन्मात्रमन्यथा भवति, न तु द्रव्यं सुवर्णमसुवर्णतामुपैति, अत्यन्तभेदाभावादिति वक्ष्यमाणोऽभिसन्धिः,

एकान्तवादिनं बौद्धमुत्थापयति-"अपर आह" इति। धर्मा एव हि रुचकादयस्तथो-

वार्त्तिकम्।

इदानीं प्रतिक्षणपरिणामे क्षणिकताऽऽदिप्रसङ्गमपाकर्तुं परिणामत्रयं क्रमेण परीक्षणीयम्, तत्रादौ धर्मपरिणामः परीक्ष्यते-तत्र धर्मस्येत्यादिना, तत्र तेषु परिणामेषु मध्ये धर्मिणि सत एव धर्मस्यातीताद्यवस्थासु धर्मिणो भावान्यथात्वं धर्मान्यथात्वमेव भवति न द्रव्यान्यथात्वं स्वरूपान्यथात्वे हि प्रतिक्षणं परिणामेन क्षणिकताऽऽपत्त्या प्रत्यभिज्ञाऽऽद्यनुपपत्तिरिति भावः, सुवर्णस्य भावान्यथात्वं भाजनादिरूपधर्मापाये कटकादिधर्माभिव्यक्तिरिति, प्रत्यभिज्ञाबलेन च सुवर्णसामान्यस्य सर्वविकारानुगतस्य सिद्धिः तत्सामान्यं चावयविरूपो धर्मीति, वैशेषिकास्तु सुवर्णस्यान्यथात्वेऽवयवसंयोगनाशात् पूर्वसुवर्णव्यक्तिर्नश्यत्येव प्रत्यभिज्ञा तु जातिविषयेति तन्न-एवं सति प्रतिक्षणमवयवोपचयापचयाभ्यामवयवसंयोगविभागस्यावश्यकत्वेन शरीराद्यखिलवस्तूनां क्षणिकत्वापत्तेर्ब्रह्मणाऽप्यपरिहार्यत्वात् जात्यैव सर्वत्र प्रत्यभिज्ञोपपत्तौ प्रत्यभिज्ञया घटादिस्थैर्यमिति स्वसिद्धान्तविरोधापत्तेश्च, तस्मादवयवसंयोगनाशो न द्रव्यनाशहेतुः किं तु वह्न्यादौ तृणारणिमण्यादिवदव्यवस्थितमेव फलबलात्कारणं कल्पनीयम्, अथ वा विजातीयोऽवयवविभागविशेष इति स्वरूपान्यथात्ववादिबौद्धैर्धर्मिपरिणामे प्रोक्तं दूषणं निराकर्तुमुत्थापयति—अपर आहेति। धर्मी धर्मेभ्योऽतिरिक्तो न भवति अत्यन्ताभिन्न इत्यर्थः, अत्र हेतुः-पूर्वतत्त्वानतिक्रमात् पूर्वतत्त्वस्य धर्मिणोऽनतिक्रमापत्तेः कौटस्थ्यापत्तेरिति यावत्, एतदेव विवृणोति-पूर्वापरेति। धर्मी यद्यन्वयी

भेदमनुपतितः कौटस्थ्येन विपरिवर्त्तेत यद्यन्वयी स्याद् इति, अयमदोषः कस्माद् ? एकान्तानभ्युपगमात् तदेतत् त्रैलोक्यं व्यक्तेरपैति कस्माद् ? नि-

भास्वती ।

धर्मान्यत्वरूपम्, अनुपतितोऽनुपातिमात्रः सन् भवतां धर्मी कौटस्थ्येन = निर्विकार-नित्यत्वेन, विपरिवर्त्तेत = परिणामस्वरूपं हित्वा कूटस्थरूपेण परिवर्त्तेत, यदि स धर्मी अन्वयी = सर्वधर्मानुगत एकः स्यात्,

उत्तरमाह—अयमदोषः = एषा शङ्का निःसारा, कस्माद् एकान्तानभ्युपगमाद् = एकान्तनित्यं दृश्यद्रव्यमिति वादस्यानभ्युपगमाद् = अस्मन्मतेऽस्वीकारात्, तदेत-दिति । अस्मन्मते—दृश्यद्रव्यं परिणामनित्यं न कूटस्थनित्यम्, तदेतत् त्रैलोक्यम् व्यक्तभावः व्यक्तेः = व्यक्तावस्थायाः, अपैति = अपगच्छति लीयत-इति यावत्, कस्य चिद् व्यक्तभावस्यैकस्वरूपेण नित्यत्वप्रतिषेधात्, अपेतः = लीनः, अप्यस्ति कस्य चिद् विनाशप्रतिषेधात् = अत्यन्तनाशास्वीकारात्,

तत्त्ववैशारदी ।

त्पन्नाः परमार्थसन्तो न पुनः सुवर्णं नाम किञ्चिदेकमनेकेष्वनुगतं द्रव्यमिति यदि पुनर्निवर्त्त-मानेष्वपि धर्मेषु द्रव्यमनुगतं भवेत्ततो न चितिशक्तिवत्परिणमेतापि तु कौटस्थ्येनैव विप-रिवर्त्तेत, परिणामात्मकरूपं परिहाय रूपान्तरेण कौटस्थ्येन परिवर्त्तनं परिवृत्तिः यथा चितिश-क्तिरन्यथाऽन्यथाभावं भजमानेष्वपि गुणेषु स्वरूपादप्रच्युता कूटस्थनित्यैवं सुवर्णाद्यपि स्याद् न चेष्यते तस्मान्न द्रव्यमतिरिक्तं धर्मेभ्य इति,

परिहरति—"अयमदोष" इति । "कस्मादेकान्तानभ्युपगमाद्" यदि चितिशक्तिरिव द्रव्यस्यैकान्तिकीं नित्यतामभ्युपगच्छेम तत एवमुपालभ्येमहि न त्वैकान्तिकीं नित्य-तामातिष्ठामहे, किन्तु तदेतत् त्रैलोक्यं न तु द्रव्यमात्रं व्यक्तेः = अर्थक्रियाकारिणो रू-पादपैति कस्माद् ? "नित्यत्वप्रतिषेधात्" प्रमाणेन, यदि हि घटो व्यक्तेर्नापेयात् कपालश-

पातञ्जलरहस्यम् ।

ब्यते, क्षणिकाः सर्वभावा नानुगतं किञ्चिदस्तीति यद्यस्ति चितिरिव न परिणमेत इत्याशङ्कां-निराह—एकान्तानभ्युपगमात् = भेदाभेदस्वीकाराद्, व्यक्तेरपैति इत्युपलब्ध्यर्थक्रियाऽऽदाना-दयो न स्युः, कूटस्थनित्यत्वप्रतिषेधाद्विपरिणम्योपलब्ध्यादयः स्युः, एतदेव सोपपत्तिकमाह—संसर्गादिति । अस्य = लोकस्य, संसर्गात् कारणे लीनत्वादनुपलब्धिरिति, कारणलय एव कार्य-

वार्त्तिकम् ।

धर्मेषु स्यात्तर्हि पूर्वापरसकलावस्थाभेदेऽप्यनुगततयाऽतीताद्यवस्थायामपि सत्त्वप्रसङ्गात् कौटस्थ्येनैव तिष्ठेत् चितिशक्तिवद् नित्यत्वकूटस्थत्वयोरेकार्थत्वात् तच्च तवाप्यनिष्टमि-त्यर्थः, परिहरति—अयमदोष इति । एकान्ततेति । एकान्तनित्यत्वानभ्युपगमादित्यर्थः, एकान्तेन सर्वथा स्वरूपतो धर्मतश्च नित्यत्वमेव कौटस्थ्यमस्माभिरप्युपेयते तच्च चितिशक्ते-रेव न तु धर्मरूपेणानित्यस्य धर्मिण इत्यर्थः, विकारव्यावृत्तं प्रकृतेर्नित्यत्वं सतोऽतीतानागता-वस्थाशून्यत्वम् इति, स्वरूपतो धर्मतश्च नित्यानित्योभयरूपत्वं प्रपञ्चस्येति प्रतिपादयति—तदेतदिति । तदेतत्त्रैलोक्यं कार्यकारणात्मकं चतुर्विंशतितत्त्वानि सकार्याणीति यावत्, यथा-योग्यं धर्मरूपेण स्वतश्च व्यक्तेर्वर्त्तमानावस्थातोऽपैति नित्यत्वप्रतिषेधात् 'नैवेह किञ्चनाग्र-आसीत्' असद्वा इदमग्रआसीदित्यादिश्रुतिभिः,

'व्यक्ताव्यक्तात्मिका तस्मिन्प्रकृतिः सम्प्रतीयते'—

इत्यादिस्मृतिभिः, यत्सावयवं तदनित्यं घटादिवदित्यनुमानेनेत्यर्थः, नन्वेवमत्यन्तोच्छेद-

स्यत्वप्रतिषेधाद् अपेतमप्यस्ति विनाशप्रतिषेधात् संसर्गाच्चास्य सौक्ष्म्यं,-सौक्ष्म्याच्चानुपलब्धिरिति,

भास्वती ।

संसर्गात् = कारणाविविक्तरूपेणावस्थानाच्चास्य सूक्ष्मता ततश्चानुपलब्धिर्नात्यन्तनाशा-

तत्त्ववैशारदी ।

केरा चूर्णादिष्ववस्थास्वपि व्यक्तो घट इति पूर्ववदुपलब्ध्यर्थक्रिये कुर्यात् तस्मादनित्यं-त्रैलोक्यमस्तु—तर्हि नित्यमेवोपलब्ध्यर्थक्रियारहितत्वेन गगनारविन्दवदतितुच्छत्वादित्यत-आह—"अपेतमप्यस्ति" इति । नात्यतुन्तच्छता येनैकान्ततोऽनित्यं स्यादित्यर्थः, कस्माद् ? "विनाशप्रतिषेधात्" प्रमाणेन, तथा हि—यत् तुच्छं न तत्कदा चिदप्युपलब्ध्यर्थ-क्रिये करोति, यथा गगनारविन्दं; करोति चैतत् त्रैलोक्यं कदा चिदप्युलब्ध्यर्थ-क्रिये इति, तथोत्पत्तिमद्द्रव्यत्वधर्मलक्षणावस्थायोगित्वादयोऽप्यत्यन्ततुच्छगगननलिननर-विषाणादिभ्यावृत्ताः सत्त्वहेतव उदाहार्य्याः, तथा च नात्यन्तनित्यो येन चितिशक्तिवत्कूट-स्थनित्यः स्यात्, किन्तु कथञ्चिन्नित्यः, तथा च परिणामीति सिद्धम्, एतेन मृत्पिण्डाद्यव-स्थासु कार्य्याणां घटादीनामनागतानां सत्त्वं वेदितव्यम्—स्यादेतद्—अपेतमप्यस्ति चेत्का-र्य्यं कस्मात्पूर्ववन्नोपलभ्यत इत्यत आह—"संसर्गाद्" इति । संसर्गात्—स्वकारणलयात्,

पातञ्जलरहस्यम् ।

स्थानामव्यक्तिशक्तितेत्युक्तम्, अभिभवानभिभवाभ्यां नासदुत्पद्यते किञ्चिन्नक्षत्रादेर्नवनी-तादेरिवेति शेषः, एतदेवानुभवारूढं करोति-लक्षणेत्यादि-अवियुक्त इत्यन्तेन, तत्र दृष्टान्त-

वार्त्तिकम् ।

एवास्तु तत्राह—अपेतमिति । अपेतमतीतमपि प्रकृत्यादिधर्मिरूपेणातीतरूपेण चास्ति वि-नाशप्रतिषेधाद् अत्यन्तोच्छेदप्रतिषेधात् "तद्धैक आहुरसदेवैकमग्र आसीदि".त्यत्यन्तोच्छेद-माशङ्क्य कथमसतः सजायेत सत्त्वेव सोम्येदमग्र आसीदिति श्रुत्या तत्प्रतिषेधादित्यर्थः, विनाशित्वे सत्यनादिभावत्वानुपपत्तेरिति, यद्यपि सत्त्वेवेति श्रुतौ सच्छब्दार्थः परमात्मैव तदैक्षतेत्युत्तरवाक्यात् तथाऽपि सदेकीभावेनेदमासीदितिवचनादस्य प्रपञ्चस्यापि प्रलये सत्त्वं-सिद्धमेव, एवं तद्धेदं तर्ह्यव्याकृतमासीत्तमसैवेदमासीत्,

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्-

इत्यादिश्रुतिस्मृतयोऽप्यत्यन्तोच्छेदनिषेधिका उदाहार्याः, युक्तिश्चासदुत्पादे शशशृङ्गाद्यु-त्पत्तिप्रसङ्गबन्धमोक्षाद्यनुपपत्त्यादिरूपा ग्राह्या, नन्वपेतमपि चेदस्ति कथं नोपलभ्यते तत्रा-ह-संसर्गाच्चेति । अस्य विकारजातस्य स्वस्वकारणेषु प्रकृत्यादिषु संसर्गादविभागाख्यात् कार्यस्य सौक्ष्म्यमव्यक्तता तस्माच्चास्यानुपलब्धिः सूक्ष्मताया लौकिकसाक्षात्कारप्रतिबन्ध-कत्वादित्यर्थः, तदेवं कार्यकारणाभेदेन प्रकृत्यादीनां सर्वेषां परिणामिनां प्रकारभेदेन नित्या-नित्योभयरूपत्वव्यवस्थापनात्तेषां सदसद्रूपत्वं सिद्धान्तितं "सदसत्ख्यातिर्बाधाबाधाभ्या-मि"ति सांख्यसूत्रानुसाराद्, इदमेव च जडानां व्यावहारिकं सत्त्वं पुराणादौ गीयते, यच्च निःसत्तासत्त्वं प्रधानमिति भाष्यकारैः प्रागुक्तं तत् पारमार्थिकसत्त्वासत्त्वाभिप्रायेणेत्यस्मा-भिस्तत्रैव व्याख्यातम्, एतेनात्मैव सन्नन्यत्सर्वमसदिति श्रुतिस्मृतिवादा अप्यविरुद्धा-एकान्तनित्यत्वस्यैव पारमार्थिकसत्तात्वात्तच्च कूटस्थनित्यस्यैवास्ति; असत्तासम्पर्कराहि-त्याद् न तु व्यवहारसत्ता प्रकृत्यादीनामिति, इत्थमेव च—

"नासद्रूपा न सद्रूपा माया नैवोभयात्मिका ।
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी" ॥

इत्यादिवाक्यान्यपि सङ्गच्छन्ते न पुनराधुनिकवेदान्तिब्रुवाणामनिर्वचनीयतावादेऽपि, तैर्हि

लक्षणपरिणामो धर्मोऽध्वसु वर्तमानोऽतीतोऽतीतलक्षणयुक्तोऽनागतवर्त्तमानाभ्यां लक्षणाभ्यामवियुक्तः तथाऽनागतोऽनागतलक्षणयुक्तो वर्त्तमानातीताभ्यां लक्षणाभ्यामवियुक्तः तथा वर्त्तमानो वर्त्तमानलक्षणयुक्तोऽतीतानागताभ्यां लक्षणाभ्यामवियुक्त इति,

यथा पुरुष एकस्यां स्त्रियां रक्तो न शेषासु विरक्तो भवतीति,

अत्र लक्षणपरिणामे सर्वस्य सर्वलक्षणयोगादध्वसङ्करः प्राप्नोतीति परै-

भास्वती।

दिति। लक्षणेति। भविष्यरागो वर्त्तमानो भूत्वाऽतीतो भवतीति त्र्यध्वयोगरूपः परिणामभेदो वाच्यो भवति, एतदेव स्फोरयति—यथेति। अत्रेति। एतत् परे एवं दूषयन्ति—सर्वस्यैकदा सर्वलक्षणयोगेऽध्वसङ्करः = त्रिकालसङ्करः प्राप्नोतीति, अस्य परिहारो-रागकाले द्वेषोऽपि विद्यते, उभययोर्वर्त्तमानत्वेऽपि न सङ्करः, तदाऽनभिव्यक्तो द्वेषो भविष्यो भूतो वेति वाच्यो भवत्येवं व्यवहारसिद्धिरेव लक्षणपरिणामः, धर्माणां धर्मत्वं त्रिकालशीलगुणत्वमित्यर्थः, अप्रसाध्यम् = असाधनीयं प्राक् साधितत्वादित्यर्थः, सति च = सिद्धे धर्मत्वे लक्षणभेदोऽपि वाच्यो भवति, अन्यथा व्यवहारासिद्धेः, यतो न वर्त्तमानकाल एवास्य धर्मस्य धर्मत्वम् = क्रोधकाले रागस्यावर्त्तमानत्वेऽपि चित्तं भविष्यरागधर्म-

तत्त्ववैशारदी।

सौक्ष्म्यं = दर्शनानर्हं, ततश्चानुपलब्धिरिति, तदेवं धर्मपरिणामं समर्थ्य लक्षणपरिणाममपि लक्षणानां परस्परानुगमनेन समर्थयते—"लक्षणपरिणाम" इति। एकैकं लक्षणं लक्षणान्तराभ्यां समनुगतमित्यर्थः, नन्वेकलक्षणयोगे लक्षणान्तरे नानुभूयेते, तत्कथं तद्योग इत्यत आह—"यथा पुरुष" इति। न ह्यनुभवाभावः प्रमाणसिद्धमपलपति, तदुत्पाद एव तत्र तत्सद्भावे प्रमाणमसत उत्पादासम्भवान्नरविषाणवदिति,

परोक्तं दोषमुत्थापयति—"अत्र लक्षणपरिणाम"इति। यदा धर्मो वर्त्तमानस्तदैव यद्यतीतोऽनागतश्च तदा त्रयोऽप्यध्वानः सङ्कीर्य्येरन्, अनुक्रमेण चाध्वनां भावेऽसदुत्पादप्रसङ्ग इति भावः,

पातञ्जलरहस्यम्।

माह-यथा पुरुष इति। विरक्तोऽनुरागात्यन्ताभावाद् इति भाष्यं, टीकायां परिहरतीत्यस्या-

वार्त्तिकम्।

मायाऽऽख्यजगत्कारणस्यापि विनाशोऽत्यन्ततुच्छत्वमेव वा परमार्थत इष्यते तन्मते च सनातनत्ववचनविरोध इति दिक्,

धर्मपरिणामं परीक्ष्य लक्षणपरिणामः परीक्ष्यते—लक्षणपरिणाम इति। अध्वसु वर्तमान इति। धर्माणां नित्यत्वमुक्तं नित्यत्वं विनाऽतीतानागतलक्षणयोगासम्भवात्, अत्र एकैकलक्षणाभिव्यक्तिकालेऽपि धर्मो लक्षणान्तराभ्यां सूक्ष्माभ्यां वियुक्तो न भवतीति समुदायार्थः, तथा धर्मा इव लक्षणान्यपि नित्यान्येवेति नात्यन्तासदुत्पत्तिसदत्यन्तोच्छेदयोः प्रसङ्ग इति भावः, नन्वेकलक्षणाभिव्यक्तिकाले लक्षणान्तरयोरनुपलम्भादभाव एव युक्त इत्याशङ्कायां तयोरुपलब्धिमानुमानिकीं दर्शयति—यथेति। न शेषासु विरक्त इति। रागस्य भावित्वे सति विरक्तव्यवहारादर्शनात् तथा चैकविषयकरागाभिव्यक्तिकालेऽपि विषयान्तररागस्यात्यन्तमभावो नास्तिः अतो रागस्यैकलक्षणाभिव्यक्तिकालेऽन्ययोः सत्ता सिध्यत्यनुमानादित्यर्थः,

लक्षणपरिणामेऽपि परोक्तदूषणमुद्भावयति—अत्रेति। सर्वस्यानागतादेर्वर्त्तमान-

**दोषश्चोद्यत इति, तस्य परिहारः-धर्माणां धर्मत्वमप्रसाध्यं, सति च धर्मत्वे लक्षणभेदोऽपि वाच्यो न वर्त्तमानसमय एवास्य धर्मत्वम्, एवं हि न चित्तं रागधर्मकं स्यात्, क्रोधकाले रागस्यासमुदाचारादिति,**

**किञ्च त्रयाणां लक्षणानां युगपदेकस्यां व्यक्तौ नास्ति सम्भवः, क्रमेण**

भास्वती।

कमिति वाच्यं भवतीत्यर्थः, कस्य चिद् धर्मस्य समुदाचारात्=व्यक्त्यभावात्, तद्धर्मवानयं धर्मीति वाच्यो भवति नाधुनाऽन्यधर्मवानिति च, एवं क्रोधकाले क्रोधधर्मवच्चित्तं न रागधर्मकमित्युच्यते, न च तद्वचनाच्चित्तं भविष्यरागधर्महीनमित्युक्तं भवतीत्यर्थः,

किञ्चेति। अतीतानागतावध्वानाववर्त्तमानौ, अतीतश्च बभूवान् अनागतश्च व्यङ्ग्यः, एवं त्रयाणां भेदः, तद्भेदस्य च वाचकत्वेनातीतादिशब्दा व्यवह्रियन्ते, अतो युगपदेकस्यां

तत्त्ववैशारदी।

परिहरति—"तस्य परिहार" इति। वर्त्तमानतैव हि धर्माणामनुभवसिद्धा, ततः प्राक्पश्चात्कालसम्बन्धमवगमयति, न खल्वसदुत्पद्यते, न च सद्विनश्यति, तदिदमाह—"एवं हि न चित्तम्"इति। क्रोधोत्तरकालं हि चित्तं रागधर्मकमनुभूयते, यदा च रागः क्रोधसमयेऽनागतत्वेन नासीत्तत्कथमसावुत्पद्येतानुत्पन्नश्च कथमनुभूयेतेति, भवत्वेवंतथाऽपि कुतोऽध्वनामसङ्कर इति पृच्छति—"किञ्च" इति। किंकारणमसङ्कर? च=

पातञ्जलरहस्यम्।

यमर्थः-प्रधानस्य त्रयाणां गुणानाञ्च साम्यावस्थाया अविच्युतेरित्यर्थः, अथ वा चित्ततदध्व-

वार्त्तिकम्।

दिसर्वलक्षणयोगादनागतादिकमपि वर्त्तमानं स्यादित्यध्वनां सङ्करः प्रसक्तः, क्रमिकत्वे चासदुत्पादप्रसङ्गः इति शेषः, अतो वर्त्तमानमात्रलक्षणकं सर्वं वस्तु पूर्वोत्तरकालयोस्तु तस्याभावमात्रम् अभावप्रतियोगित्वादेव चातीतत्वादिव्यवहार इति, तत्रादौ धर्मेषु लक्षणत्रयसम्बन्धमेव व्यवस्थापयति—धर्माणामिति। धर्माणां तावत् धर्मत्वंप्राक्साधितत्वान्न साधनीयं, सिद्धे च धर्मत्वे धर्माणां लक्षणं भेदो लक्षणबहुत्वमपि वक्तव्यं न पुनरद्धैवेनाशिकोक्तं वर्त्तमानमात्रमेकं लक्षणं यतो न वर्त्तमानसमयमात्रेऽस्य धर्मस्य धर्मत्वं किं त्वतीतादिसमयेऽपीति शेषः, अत्र हेतुमाह—एवं हीति। हि यस्माद्, एवं वर्त्तमानकाल एव धर्मत्वे सति सर्वमेव चित्तं न रागधर्मकं विरक्तमिति यावत् विरक्तव्यवहारयोग्यं स्यात् क्रोधकाले रागस्यासमुदाचाराद् अनाविर्भावादित्यर्थः, अयं भावः—यथा यदा कदा चिद्रागसत्त्वेन भवन्मते चित्तं रक्तमिति व्यवहारः तथा यदा कदा चिद्रागाभावेन चित्तं विरक्तमिति व्यवहारः स्यादिति, अतोऽतीतादिकालेऽपि रागादेश्चित्तादिधर्मत्वाद् धर्माणां त्रिलक्षणकत्वं सिद्धं, यच्च तैरुच्यतेऽभावप्रतियोगितामात्रेणातीतादिव्यवहार इति, तदपि हेयम् असति घटे ध्वंसप्रतियोगित्वादिरूपस्यातीतत्वस्य वृत्त्यनुपपत्तेः संयोगित्वादिवत्प्रतियोगित्वादेरपि सम्बन्धिद्वयसत्त्वं विनाऽनुपपत्तेः सदसतोः सम्बन्धादर्शनाद् ध्वंसप्रागभावयोरसिद्धेश्च, घटो वर्त्तमान इतिवत् घटोऽतीतो भविष्यन्निति प्रत्ययाभ्यां घटावस्थाविशेषयोरेव सिद्धेः, अन्यथा भावाभावस्याप्यतिरिक्तत्वादिप्रसङ्ग इत्यादयश्च दोषाः स्वयमूहनीयाः,

तदेवं धर्माणां लक्षणत्रयं व्यवस्थाप्येदानीं तत्साङ्कर्यं परिहरति-किंचेति। त्रयाणामनागतादिलक्षणानामेकदैकस्मिन् वस्तुनि सम्भवोऽभिव्यक्तिर्नास्ति किं तु स्वाभिव्यञ्जकदण्डचक्रादिवस्त्वञ्जनतुल्यं यस्य एवम्भूतस्य लक्षणस्य क्रमेण भावोऽभिव्यक्तिर्भवेदिति नाभिव्यक्तौ साङ्कर्यं, स्वरूपतस्तु साङ्कर्यमिष्यत एवेत्यर्थः, अव्यक्तयोर्लक्षणयोर्व्यक्तेन

तु स्वव्यञ्जकाञ्जनस्य भावो भवेदिति,

उक्तं च—"रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुद्ध्यन्ते, सामान्यानि त्वतिशयैः सह प्रवर्त्तन्ते, तस्मादसङ्करः, यथा रागस्यैव क्वचित्समुदाचार इति न तदानीमन्यत्राभावः, किन्तु केवलं सामान्येन समन्वागत इत्यस्ति तदा तत्र तस्य भावः, तथा लक्षणस्येति,

न धर्मी त्र्यध्वा, धर्मास्तु त्र्यध्वानः, ते लक्षिता अलक्षिताश्च तान्ता·

भास्वती।

व्यक्तौ तेषां सम्भव इत्युक्तिर्विरुद्धा, स्वव्यञ्जकाञ्जनो धर्मोऽनागतत्वं हित्वा वर्त्तमानत्वं प्राप्नोति ततोऽतीतो भवतीति क्रम एवास्मिन् लक्षणपरिणामवचनेऽध्याहार्योऽस्तीत्यर्थः, उक्तञ्च पञ्चशिखाचार्येण = रूपेति। प्राग्व्याख्यातम्, अतिशयिनां समुदाचरतां रूपा-

तत्त्ववैशारदी।

पुनरर्थे, उत्तरमाह—"त्रयाणाम्" इति। त्रयाणां लक्षणानां युगपन्नास्ति सम्भवः, कस्मिन् एकस्यां = चित्तवृत्तौ क्रमेण तु लक्षणानामेकतमस्य स्वव्यञ्जकाञ्जनस्य भावो-भवेत् = सम्भवेत्, लक्ष्याधीननिरूपणतया लक्षणानां लक्ष्याकारेण तद्वृत्ता, अत्रैव पञ्चशिखाचार्यसम्मतिमाह—"उक्तञ्च" इति। एतच्च प्रागेव व्याख्यातम्, उपसंहरति—"तस्माद्" इति। आविर्भावतिरोभावरूपविरुद्धधर्मसंसर्गादसङ्करोऽध्वनामिति, दृष्टान्तमाह—"यथा रागस्य" इति। पूर्वं क्रोधस्य रागसम्बन्धावगमो दर्शित इति, इदानीन्तु विषयान्तरवर्त्तिनो-रागस्य विषयान्तरवर्त्तिना रागेण सम्बन्धावगम इति, दार्ष्टान्तिकमाह—"तथा लक्षणस्य" इति। ननु सत्यप्यनेकान्ताभ्युपगमे भेदाऽस्तीति धर्मलक्षणावस्थाऽन्यत्वे तदभिन्नस्य धर्मि-णोऽप्यन्यत्वप्रसङ्गः, स एव च नेष्यते-तदनुगमानुभवविरोधादित्यत आह—"न धर्मी त्र्य-

पातञ्जलरहस्यम्।

नामत एवोक्तम् अतीतिलक्षणयुक्तम् अनागतवर्तमानाभ्यामित्यादि, न धर्मी त्र्यध्वा धर्माश्च

वार्त्तिकम्।

लक्षणेन सह नास्ति विरोध इत्यत्र पञ्चशिखवाक्यं प्रमाणयति—उक्तं चेति। धर्माद्यैश्वर्यान्तान्यष्टौ चित्तस्य रूपाणि, वृत्तयश्च ज्ञानाद्याश्रयाः शान्तघोरमूढाश्चित्तपरिणामास्तेषामतिशयोऽभिव्यक्तिरूपोत्कटतेति, इदं च वाक्यं गुणवृत्त्यविरोधाच्च दुःखमेव सर्वमिति सूत्रे व्याख्यातम्,

उपसंहरति—तस्मादिति। असङ्करे दृष्टान्तमाह—यथेति। रागस्यैवेति। धर्माणां-लक्षणत्रयसम्बन्ध उदाहृतस्यैव रागस्यैवेत्यर्थः, क्वचिद्विषयेऽन्यत्र विषयान्तरेऽभावः सामान्याभाव इत्यर्थः, दार्ष्टान्तिकमाह—तथा लक्षणस्येतीति। क्वचित्समुदाचार इत्यादिरर्थः, अयं च लक्षणपरिणामो न धर्मिणः किं तु धर्माणामेवेत्येवं धर्मपरिणामाद्विशेषमाह—न धर्मीति। नन्वयं लक्षणपरिणामो लक्षणेऽस्ति न वा, आद्येऽनवस्था; अन्त्ये लक्षणपरिणामे परिणामलक्षणासम्भवः—पूर्वलक्षणातीततायां लक्षणान्तराभिव्यक्तेरेव लक्षणपरिणामत्वादिति मैवम्—बीजाङ्कुरवत्प्रामाणिकत्वेनास्या अनवस्थाया अदोषत्वात्, अन्यथा धर्मस्य धर्मस्तस्यापि धर्म इत्याद्यनवस्थाया अपि दोषत्वापत्त्या धर्मधर्मिभावादिरपि न सिध्येदिति, अधिकं तु निर्वितर्केतिसूत्रे प्रोक्तम्, तदेवं सर्वधर्माणां सदैव लक्षणत्रयसम्बन्धोऽस्तिः अभिव्यक्तिस्तु त्रयाणां क्रमिकेति सिद्धम्,

स्यादेतत्—लक्षणाभिव्यक्तेरपि नित्यत्वात्कथं क्रमिकत्वं तत्र क्रमिकत्वसम्भव वा किमपराद्धं लक्षणक्रमिकत्वेन? अत्रोच्यते—नित्यानित्योभयरूपत्वस्योक्तत्वया नित्यत्वेऽपि सर्वकार्यस्यानित्यरूपेण क्रमः सम्भवति, लक्षणानामपि क्रमश्चेष्यत एव लक्षणाभिव्यक्तिक्रमस्तु

मवस्थाम्प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्दिश्यन्तेऽवस्थान्तरतो न द्रव्यान्तरतः, यथैका रेखा शतस्थाने शतं दशस्थाने दशैकं चैकस्थाने, यथा चैकत्वेऽपि स्त्री माता चोच्यते दुहिता च स्वसा चेति,

अवस्थापरिणामे कौटस्थ्यप्रसङ्गदोषः कैश्चिदुक्तः, कथम्? अध्वनो-

भास्वती।

र्दीनां वर्त्तमानलक्षणत्वं, तद्विरुद्धानाञ्चातीतादिलक्षणत्वमित्यस्मादसङ्करत्वं सिद्धमित्यर्थः, नेति। न धर्मी त्र्यध्वा = यद् द्रव्यं धर्मीति मन्यते न तत् त्र्यध्वा, ते धर्मास्ते तु = त्र्यध्वानः, ते लक्षिताः = अभिव्यक्ता वर्त्तमानाः, अलक्षिताः = अवर्त्तमाना अनभिव्यक्ताः, तान्ताम् = अभिव्यक्तिमनभिव्यक्तिमवस्थां प्राप्नुवन्तोऽन्यत्वेन = अतीतादिलक्षणेन प्रतिनिर्दिश्यन्ते, तत्तदवस्थाऽन्तरता न द्रव्यान्तरतः, अवस्थेति। परोक्तं दोपमुत्थापयति-

तत्त्ववैशारदी।

ध्वा" इति। यतस्तद्भिन्ना धर्मास्त्र्यध्वानः, धर्माणामध्वत्रययोगमेव स्फोरयति—"ते" इति। लक्षिताः = अभिव्यक्ता वर्त्तमाना इति यावत्, अलक्षिताः = अनभिव्यक्ता अनागता अतीता इति यावत्, तत्र लक्षितां तां तामवस्थां बलवत्त्वदुर्बलत्वादिकां प्राप्नुवन्तोऽन्यत्वेन निर्दिश्यन्तेऽवस्थान्तरतो न द्रव्यान्तरतः, अवस्थाशब्देन धर्मलक्षणावस्था उच्यन्ते, एतदुक्तं भवति-अनुभव एव धर्मिणो धर्मादीनां भेदाभेदौ व्यवस्थापयति, न ह्यैकान्तिकेऽभेदे धर्मादीनां धर्मिणो धर्मिरूपवद् धर्मादित्वं, नाप्यैकान्तिके भेदे गवाश्ववद् धर्मादित्वम्, स चानुभवोऽनैकान्तिकत्वमवस्थापयन्नपि धर्मादिपूपजनापायधर्मकेष्वपि धर्मिणमेकमनुगमयन् धर्मांश्च परस्परतो व्यावर्त्तयन् प्रत्यात्ममनुभूयत इति, तदनुसारिणो वयं न तमतिवर्त्त्य स्वेच्छया धर्मानुभवान् व्यवस्थापयितुमीश्महे इति, अत्रैव लौकिकं दृष्टान्तमाह—"यथैका रेखा इति। यथा तदेव रेखास्वरूपं तत्तत्स्थानापेक्षया शतादित्वेन व्यपदिश्यत एवं तदेव धर्मिस्वरूपं तत्तद्धर्मलक्षणावस्थाभेदेनान्यत्वेन प्रतिनिर्दिश्यत इत्यर्थः, दार्ष्टान्तिकार्थे दृष्टान्तान्तरमाह-"यथा चैकत्वेऽपि" इति।

अत्रान्तरे परोक्तं दोपमुत्थापयति-"अवस्था" इति। अवस्थापरिणामे = धर्मलक्षणावस्थापरिणामे, कौटस्थ्यदोषप्रसङ्ग उक्तो धर्मिधर्मलक्षणावस्थानाम्, पृच्छति-"कथम्" इति। उत्तरमाह-"अध्वनो व्यापारेण" इति। दध्नः किल योऽनागतोऽध्वा तस्य

वार्त्तिकम्।

लक्षणासाङ्कर्याय प्रकृते प्रदर्शितः, अधिकस्तु निर्वितर्कसमापत्तिसूत्रेऽस्माभिः प्रोक्त इति दिक्,

लक्षणपरिणामं परीक्ष्यावस्थापरिणामं परीक्षितुं धर्मगतं विभागमाह—ते लक्षिता इति। लक्षिता व्यक्ता वर्त्तमाना इति यावत् अलक्षिता अव्यक्ता अतीतानागता इति यावत्, तां तां बाल्ययौववार्धकाद्यवस्थां प्राप्नुवन्तोऽन्योन्यमन्यत्वेन भेदेनोच्यन्ते बालोऽयं न युवेत्यादिरूपेण, स च निर्देशोऽवस्थान्तरतोऽवस्थाभेदादेव न तु द्रव्यभेदादित्यर्थः, तथा च पूर्वावस्थापायेऽवस्थान्तरप्राप्तिः सिद्धा, सैव चावस्थापरिणाम इति भावः, यद्यप्येतादृशोऽवस्थापरिणामोऽनागतातीलक्षणयोरपि पूर्वमुक्तः, तथाऽपि वर्तमानलक्षणस्यैवावस्थापरिणामः स्फुटमुपलभ्यत इत्याशयेन वर्त्तमानलक्षणमालम्ब्यैव स उदाहृत इति, धर्मिण एकत्वेऽपि निमित्तभेदेनान्यत्वव्यवहारे दृष्टान्तमाह-यथैकेति। यथा-एकत्वव्यञ्जिका रेखा = अङ्कविशेषो यदा बिन्दुद्वयोपरि तिष्ठति तदा शतमिदं नैकमिति व्यवह्रियते, तयोरेकबिन्दुलोपे च दशेदं न शतमिति व्यवह्रियते अवशिष्टबिन्दुस्थाने चैकत्वव्यञ्जकरेखान्तरदाने सत्येकादशेदं न दशेतीत्यर्थः, दृष्टान्तान्तरमाह-यथा चेति। उच्यत इति। पुत्रपिताभ्रातृभिर्जनकत्वादिनिमित्तभेदाद्भेदेनेति शेषः,

व्यापारेण व्यवहितत्वाद्, यदा धर्मः स्वव्यापारं न करोति तदाऽनागतो,-यदा करोति तदा वर्त्तमानो, यदा कृत्वा निवृत्तस्तदाऽतीत, इत्येवं धर्मधर्मिणोर्लक्षणानामवस्थानां च कौटस्थ्यं प्राप्नोतीति परैर्दोष उच्यते,

नासौ दोषः-कस्माद् ? गुणिनित्यत्वेऽपि गुणानां विमर्दवैचित्र्यात्,

भास्वती।

अध्वनो व्यापारेण=वर्त्तमानाध्वलक्षितस्यान्यस्य धर्मस्य व्यापारेण यदा व्यवहितः कश्चिद् धर्मः स्वव्यापारं न करोति तदाऽनागतः, तद्व्यवधानरहितो यदा व्याप्रियते तदा वर्त्तमानः, यदा कृत्वा निवृत्तस्तदाऽतीत इति प्राप्ते शङ्को वक्ति भवन्नय एवं धर्मधर्मिलक्षणावस्थानां सदा सत्त्वात तेषां नित्यताऽऽयायात् ततश्च चितिवत् कौटस्थ्यमिति, अस्य परिहारः-नासौ दोषः कस्माद् ? नित्यत्वमेव कौटस्थ्यमिति न वयं सङ्गिरामहे, अस्मन्नये-नित्यत्वमेव न कौटस्थ्यम्, नित्यता सदा सत्ता, तादृगपि द्रव्यं परिणमते यथा त्रैगुण्यम्, गुणिनित्यत्वेऽपि=गुणमपेक्ष्य गुणिनो नित्यत्वेऽपि=अविनाशित्वेऽपि, गुणानां=धर्माणां विमर्दवैचित्र्यात्=विमर्दाल्लयोदयरूपविकारशीलत्वाद् वैचित्र्यम्=आनन्त्यम्,

तत्त्ववैशारदी।

व्यापारः=क्षीरस्य वर्त्तमानत्वं तेन व्यवहितत्वाद् हेतोः, यदा धर्मः=दधिलक्षणः स्वव्यापारं=दाधिकाद्यारम्भं क्षीरे सन्नपि न करोति तदाऽनागतः, यदा करोति तदा वर्त्तमानः, यदा कृत्वा निवृत्तः सन्नेव स्वव्यापाराद् दाधिकाद्यारम्भात्तदाऽतीत, इत्येवं त्रैकाल्येऽपि सत्त्वाद् धर्मधर्मिणोर्लक्षणानामवस्थानां च कौटस्थ्यं प्राप्नोति, सर्वदा सत्ता हि नित्यत्वं, चतुर्णामपि च सर्वदा सत्त्वेऽसत्त्वे वा नोत्पादः तावन्मात्रं च लक्षणं कूटस्थनित्यतायाः, न हि चितिशक्तेरपि कूटस्थनित्यायाः कश्चिदन्यो विशेष इति भावः,

परिहरति—"नासौ दोषः" इति। नासौ दोषः, कस्मात् गुणिनित्यत्वेऽपि गुणानां-विमर्दः=अन्योऽन्याभिभाव्याभिभावकत्वं तस्य वैचित्र्यात्, एतदुक्तं भवति—यद्यपि सर्वदा सत्त्वं चतुर्णामपि गुणिगुणानां ; तथाऽपि गुणविमर्दवैचित्र्येण तदात्मभूततद्विकाराविर्भावतिरोभावभेदेन, परिणामशालितया न कौटस्थ्यं, चितिशक्तेस्तु न स्वात्मभूतविकाराविर्भावतिरोभाव इति कौटस्थ्यम्, यथाऽऽहुः—

"नित्यं तमाहुर्विद्वांसो यत्स्वभावो न नश्यति" इति,

वार्त्तिकम्।

अवस्थापरिणामेऽपि बौद्धोक्तं दूषणमुदाहरति—अवस्थेति। अवस्थापरिणामाभ्युपगमे धर्मिधर्मलक्षणावस्थानां चतुर्णामेव कौटस्थ्यापत्तिरित्यर्थः, तत्र हेतुं पृच्छति--कथमिति। उत्तरम्—अध्वनो व्यापारेण व्यवहितत्वादिति, व्यापारनिमित्तेनैव सर्ववस्तुष्वनागताद्यध्वनामन्योन्यं व्यवहितत्वाभ्युपगमात् विभागाभ्युपगमात् न तु भावरूपेण धर्मलक्षणयोः सदा सत्त्वस्येष्टत्वादित्यर्थः, अधुना विभागस्य व्यापारनिमित्तकत्वं विवृणोति—यदा धर्म इत्यादिना-तदा अतीत इत्यन्तेन, धर्मशब्दोऽत्राश्रितमात्रवाची, न करोति न करिष्यतीत्यर्थः, आद्यन्ताध्वनोर्विभागस्य व्यापारनिमित्तकत्वं व्यापाराभावनिमित्तकत्वेन परम्परयेति भावः, एवं च सति पूर्वधर्मातीततायां धर्मान्तराभिव्यक्तिरित्येवंरूपपरिणामलक्षणान्नित्यत्वमवस्थानामपि भवद्भिर्वक्तव्यं न तु विनाशः, अवस्थानां च नित्यत्वे किमप्यनित्यं न स्यादित्येवं धर्म्मधर्म्यादिकं सर्वं जगत् कूटस्थं स्यादिति परैर्दोष उच्यत इति,

उपसंहारः-नित्यत्वमात्रं न कौटस्थ्यं किं त्वेकान्तनित्यत्वमित्याशयेन पूर्ववदुक्तदोषं परिहरति—नासौ दोष इति। कौटस्थ्यदोषो नास्तीत्यर्थः, गुणनित्यत्वेऽपीति।

तत्र—

शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥

योग्यताऽवच्छिन्ना धर्मिणः शक्तिरेव धर्मः, स च फलप्रसवभेदानुमितसद्भाव एकस्यान्योऽन्यश्च परिदृष्टः,

भास्वती।

योग्यतेति। धर्मिणो योग्यताऽवच्छिन्ना=योग्यता=प्रकाशयोग्यता, क्रियायोग्यता स्थितियोग्यता चेति, एताभिर्ज्ञेययोग्यताभिरवच्छिन्ना = तत्तद्योग्यतामात्रस्य या प्रातिस्विकी जननशक्तिरित्यर्थः, स एव धर्मः, तस्य च धर्मस्य यथायोग्यफलप्रसवभेदात् सद्भावः=पूर्वंपशास्तित्वमनुमानप्रमाणेन ज्ञायते, एकस्य च धर्मिणोऽन्योऽन्यश्च बहुसङ्ख्यात इति यावद् धर्मः परिदृश्यते, अत्रेदमूहनीयम्—पदार्थनिष्ठो ज्ञातभावो धर्मः, धर्मेणैव पदार्था ज्ञायन्ते, अतो-धर्माः, प्रमाणादिसर्ववृत्तिविषयाः, ते च मूलतस्त्रिविधाः—प्रकाशधर्माः, क्रियाधर्माः, स्थि-

तत्त्ववैशारदी।

यस्यैष त्रिविधः परिणामस्तं धर्मिणं सूत्रेण लक्षयति—"तत्र शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी"। धर्मोऽस्यास्तीति धर्मी नाविज्ञाते धर्मे स शक्यो ज्ञातुमिति धर्मं दर्शयति—"योग्यता" इति। धर्मिणो=द्रव्यस्य मृदादेः, शक्तिरेव=चूर्णपिण्डघटाद्युत्पत्तिशक्तिरेव धर्मः तेषां तत्राव्यक्तत्वेन भाव इति यावत्, नन्वेवमव्यक्ततया सन्तस्ते ततः प्रादुर्भवन्तूदकाहरणादयस्तु तैः स्वकारणादनासादिताः कुतः प्राप्ता इत्यत उक्तं—"योग्यताऽवच्छिन्ना, इति। याऽसौ घटादीनामुत्पत्तिशक्तिः सोदकाहरणादियोग्यताऽवच्छिन्ना, तेनोदकाहरणादयोऽपि घटादिभिः स्वकारणादेव प्राप्ता इति नाकस्मिका इति भावः, अथ वा, के धर्मिण इत्यत्रोत्तरं योग्यताऽवच्छिन्ना धर्मिण इति, को धर्म इत्यत्रोत्तरं शक्तिरेव धर्मः, तेषां-योग्यतैव धर्म इत्यर्थः, अतस्तद्वान् धर्मीति सिद्धं भवति, तत्सद्भावे प्रमाणमाह—"स च फल-

पातञ्जलरहस्यम्।

तस्य स्वरूपं पृच्छति—कोऽयमिति। अवस्थितेत्याद्युत्तरं, तं सूत्रारूढं करोति—तत्रेति। अतीतवर्तमानागतानां नामानि शान्तोदिताव्यपदेश्यानि तास्ववस्थासु परस्परविलक्षणत्वानुगतो धर्मी चित्ताख्यः, अनुरूपोपादानं विनोपादेया एते न तिष्ठन्ति शरीरं विना यथा बाल्य-

वार्त्तिकम्।

तत् सूत्रं तत्रेति पूरयित्वा पठति—तत्रेति। तत्र तेषु परिणामेषु तेषां परिणामानामिति यावत्, धर्मीति सूत्रेण सहान्वयः,

"शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी" 'अतीतवर्त्तमानानागतधर्मेष्वनुपाती वर्त्तमानरूपेणानुगतो धर्मीत्यर्थः, अत्राव्यपदेश्येति विशेषणं धर्मधर्मिणोर्विवेकप्रदर्शनाय, तथा च वर्त्तमानत्वावर्त्ततानत्ववैधर्म्येण धर्मिणो धर्मस्य च विवेक इति भावः, धर्मशब्दार्थं व्याचष्टे—योग्यतेति। दग्धशक्तेरपि संग्रहाय योग्यताऽवच्छिन्नेत्युक्तम्, वर्त्तमानता स्वरूपयोग्यतेत्यर्थः, तेनातीतादिसाधारण्यलाभः, एवकारो वर्त्तमानादिविशेषव्यवच्छेदार्थः, शक्तित्वं चानागन्तुकत्वम्, तथा चाग्नेर्दाहशक्तिवद्धर्मा अपि धर्मिणि यावद्द्रव्यभाविनः; न हि शक्तिवियोगः शक्तिमतोऽस्ति शक्तिशक्तिमतोरभेदादिति भावः, धर्मशब्दार्थमुक्त्वा तस्य शान्तादितोपपादनायानभिव्यक्तिदशायामपि सत्तां साधयति—स चेति। स च धर्मः शक्तिरूपः फलप्रसवात् तदानुमिताव्यक्तावस्थक इत्यर्थः, आकस्मिकत्वे हि मृदेव घटस्तन्तुष्वेव पट इत्यादिर्भेदः फलस्य प्रसवे न स्याद् अतो अनादित्वं वक्तव्यम् अनादित्वाच्चानन्तत्वमिति भावः, एकानेकत्ववैधर्म्येणापि धर्मधर्मिविवेकायाह—एकस्येति। स च धर्म एकस्य धर्मिणोऽनेकोऽपि दृष्ट इ-

तत्र वर्त्तमानः स्वव्यापारमनुभवन् धर्मो धर्मान्तरेभ्यः शान्तेभ्यश्चाव्यपदेश्येभ्यश्च भिद्यते, यदा तु सामान्येन समन्वागतो भवति तदा धर्मिस्वरूपमात्रत्वात्कोऽसौ केन भिद्येत, तत्र त्रयः खलु धर्मिणो धर्माः—शान्ता उदिता अव्यपदेश्याश्चेति, तत्र शान्ता ये कृत्वा व्यापारानुपरताः, सव्यापारा उदिताः, ते चानागतस्य लक्षणस्य समनन्तरा, वर्त्तमानस्यानन्तरा अतीताः, किमर्थमतीतस्यानन्तरा न भवन्ति वर्त्तमानाः, पूर्वपश्चिमताया-

भास्वती ।

तिधर्माश्चेति, ते पुनस्त्रितया वास्तवाश्चारोपिताश्च तथाऽवास्तववैकल्पिकाश्चेति, सर्वे एते पुनर्लक्षणभेदाच्छान्ता वा उदिता वा अव्यपदेश्या वेति विभज्यन्ते, तत्र कति चिद् धर्मा उदिताः शान्ता अव्यपदेश्याश्चासङ्ख्याता इति, तत्रेति। वर्त्तमानधर्मा अव्यापारकृताः, अती-

तत्त्ववैशारदी ।

प्रसवभेदानुमित" इति । एकस्य = धर्मिणः अन्यश्चान्यश्च = चूर्णपिण्डघटादिरूप इत्यर्थः, कार्य्यभेददर्शनाच्च भिन्न इति यावत्, परिदृष्टः = उपलब्धः, तत्रानुभवारोहिणो वर्त्तमानस्य मृत्पिण्डस्य शान्ताव्यपदेश्याभ्यां मृच्चूर्णमृद्घटाभ्यां भेदमाह—"तत्र वर्तमान" इति । यदि न भिद्येत पिण्डवत् तर्हि चूर्णघटयोरपि तद्वदेव स्वव्यापारव्याप्तिप्रसङ्ग इति भावः, अव्यक्तस्य तु पिण्डस्य नोक्तं भेदसाधनं सम्भवतीत्याह–"यदा तु" इति । कोऽसौ केन = भेदसाधनेन भिद्येत इति, तदेवं धर्माणां भेदसाधनमभिधाय तं भेदं विभजते–"तत्र यः खलु" इति । उदिता इति = वर्तमाना इत्यर्थः, अध्वनां पौर्वापर्य्यं निगमयति—"ते च" इति । चोदयति = "किमर्थम्" इति । किंनिमित्तमतीतस्यानन्तरा न भवन्ति वर्तमाना इत्यर्थः, हेतुमाह–"पूर्वपश्चिमताया अभावाद्" इति । विषयेण विषयिणोमनुपलब्धि सूचयति, अनुपलम्भमेवोपलम्भ-

पातञ्जलरहस्यम् ।

यौवनवृद्धत्वानि न स्युः, योग्यतैव शक्तिरिति धर्म इति च कथ्यते, शक्तौ प्रमाणं कार्यान्नतिरित्याह–स चेति । शान्तादयश्च परस्परं भिद्यन्ते न तु धर्मीत्याह–एकस्येति । अन्वयमुक्त्वा व्यतिरेकमाह—यदा त्विति । समनन्तरः कार्यं वर्तमानस्य तं प्रति पूर्वत्वाद् न त्वतीतोऽतीत-

वार्त्तिकम ।

त्यर्थः, सूत्रतात्पर्यविषयं धर्माद् धर्मिणो विवेकमुपपाद्यादौ धर्माणामेवान्योन्यं प्रतिपादयति–तत्रेति । तेषु धर्मेषु मध्ये वर्त्तमानो धर्मो धर्मान्तरेभ्यो वर्त्तमानातिरिक्तधर्मेभ्यः शान्ताव्यपदेश्यरूपेभ्यो भिद्यते विविच्यते वर्त्तमानत्वावर्त्तमानत्ववैधर्म्यादिति शेषः, वर्त्तमान इत्यस्य विवरणं स्वव्यापारमनुभवन्निति, नन्वेवं किं धर्माणामन्योन्यमत्यन्तमेव भेदो न तु भेदाभेदौ ? नेत्याह–यदा त्विति । यदा तु शान्ताव्यपदेश्यावस्थायां धर्मः सामान्येनाभिव्यक्तविशेषराहित्येन धर्मिण्यनुगतो विलीनो भवति तदा धर्मिस्वरूपमात्रतयाऽवस्थानाद् धर्म्यविभागादिति यावत्,कोऽसौ धर्मः केन व्यापारेण भिद्येत = अयोगिभिर्विविच्येत धर्मस्य तल्लक्षणस्य वाऽनुपलम्भादतस्तदानीमविभागलक्षणाभेदोऽपि भवतीत्यर्थः, एतेन च भाष्यकृता ब्रह्माद्वैतमपि वेदान्तोक्तं व्याख्यातप्रायम्, प्रलये सर्ववस्तूनां परमात्मन्यविभागात् यथाऽकाशेऽभ्राणामिति, तथा च श्रुतिः—स यथा सर्वासामपां समुद्र एकायनमित्यादिना समष्टिजीवस्य प्रलयं प्रदर्श्यात्माद्वैतमाह—यत्र हि द्वैतमिव भवति तदेतर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति, इदानीं शान्तोदिताव्यपदेश्यशब्दार्थं व्याचष्टे—तत्र त्रय इति । तदिदं व्याख्याय तस्य पाठक्रमात् क्रमभ्रमं परिहर्त्तुमाह—ते चानागतस्येति । एवं वक्ष्यमाणाव्यपदेश्येऽपि पाठक्रमो नादर्त्तव्य इत्याह—वर्त्तमानस्यानन्तरा अतीता इति पाठक्रमः, कथं त्यज्यत इत्याशयेन पृच्छति—किमर्थमिति । उत्तरम्—पूर्वपश्चिमताया अभावादिति । पूर्वपश्चिम-

अभावाद्, यथाऽनागतवर्तमानयोः पूर्वपश्चिमता नैवमतीतस्य तस्मान्नातीतस्यास्ति समनन्तरः, तदनागत एव समनन्तरो भवति वर्त्तमानस्येति,

अथाव्यपदेश्याः के ? सर्वं सर्वात्मकमिति, यत्रोक्तं "जलभूम्योः पारि-

भास्वती ।

तानागता धर्मा धर्मिणि सामान्येन = अभिन्नभावेन समन्वागताः, तदा ते धर्मिस्वरूपमात्रेण तिष्ठन्ति, यथा घटत्वधर्मे उदिते पिण्डत्वचूर्णत्वादयो मृत्स्वरूपेणैव तिष्ठन्ति तत्र ग्रयमिति । सुगमम् , तदिति । तत् = तस्मात् ॥ १४ ॥

अथेति । अव्यपदेश्या धर्मा असङ्ख्याताः, तैः सर्ववस्तूनां सर्वसम्भवयोग्यता, अत्रो-

तत्त्ववैशारदी ।

वैधर्म्येण दर्शयति-"यथाऽनागतवर्त्तमानयोः" इति । उपसंहरति—"तद्" इति । तत् = तस्मात् , अनागत एव समनन्तरः पूर्वत्वेन भवति वर्तमानस्य नातीतः, अतीतस्य वर्तमानः पूर्वत्वेन समनन्तरो नाव्यपदेश्यः,

तस्मादध्वनां यविष्ठोऽतीत इति सिद्धम् , स्यादेतद्-अनुभूयमानानुभूततयोदितातीतौ शक्यावुन्नेतुमव्यपदेश्यास्तु पुनर्धर्मा अव्यपदेश्यतयैव शक्या नोन्नेतुमित्याशयवान् पृच्छति- "अथ" इति । अव्यपदेश्याः के ऽपु समीक्षामहे-अत्रोत्तरमाह-"सर्वं सर्वात्मकम् इति, यत्रो-

पातञ्जलरहस्यम् ।

त्वादेवेति भावः, यविष्ठो = निकृष्टः, के चिन्नास्तिका इति प्रश्नार्थः, आपोमयः पृथिवीमय इति

वार्त्तिकम् ।

द्वारादित्यर्थः, तदेव विवृणोति—यथेति । नैवमतीतस्येति । वर्त्तमानेन सहेति शेषः, तथा चानागतावस्थायाः प्रागभावस्थानीयाया वर्त्तमानावस्थायां हेतुत्वादतीतावस्थाऽनन्तरं वर्त्तमानावस्था न भवतीत्यर्थः, उदिताव्यपदेश्यरूपपाठक्रमत्यागेऽपीदमेव बीजमिति भावः, उपसंहरति- तस्मादिति । समनन्तरः पश्चिमो लक्षणभेद इति शेषः, तत्त्वतोऽनागत एव वर्त्तमानस्य समनन्तरः पूर्वो भवतीत्यर्थः, एतेन सत्कार्यवादेऽपि पूर्वाभिव्यक्तो घटादिर्न पुनरुत्पद्यत इति सिद्धान्तः स्मर्त्तव्यः, नन्वनागतवर्तमानयोः कार्यकारणभाव एव किं प्रमाणमिति चेत् ? शृणु- यद्यतीतस्य पुनर्वर्त्तमानता स्यात् तर्हि निर्मोक्षः स्यात् , विनष्टान्तःकरणाविद्याकर्मादीनां पुनरुद्भवेन मुक्तस्यापि संसारोदयसम्भवात् , किं च यद्यतीतोऽपि घटः पुनर्वर्त्तमानः स्यात्तदा स एवायं घट इति कदा चित्प्रत्यभिज्ञायेत; अतो योग्यानुपलब्ध्याऽतीतव्यक्त्यनुन्मज्जनं निर्णीयत इति, अत्रानागतातीतावस्थयोः प्रागभावध्वंसरूपयोः कार्योत्पादकानुत्पादकत्ववैधर्म्यवचनाद् अव्यक्तावस्थाया एवावान्तरभेदावनागतातीतते परस्परविलक्षणे इति मन्तव्यम् , नन्वेवमतीतस्य पुनरनुत्पादादतीतसत्त्वकल्पना व्यर्थेति चेत् ? न- लोकानतीतान्द्रक्ष्ये स्वदेह इत्यादिवाक्यशतसिद्धयोगिप्रत्यक्षान्यथानुपपत्त्या तत्सिद्धेः विषयतत्सन्निकर्षयोः प्रत्यक्षहेतुत्वात् , न चातीतार्थस्मरणमेवास्त्विति वाच्यम् , पूर्वाननुभूतस्यापि योगिना दर्शनात् 'ये तु योगजधर्मस्यापि सन्निकर्षत्वमिच्छन्ति तेषामप्यसत्पदार्थे सन्निकर्षानुपपत्तिः प्रत्यक्षं प्रति सन्निकर्षनानात्वेनाननुगमेन हेतुताग्रहानुपपत्तिश्च, ज्ञानादेर्विषयताऽऽदिरूपोऽपि सम्बन्धोऽसति न सम्भवति सतोरेव सम्बन्धदर्शनादिति, प्रत्यक्षादिषु संयोगादिरेव प्रत्यासत्तिः योगजधर्मेण चाधर्मतमआदिप्रतिबन्धमात्रं क्रियत इति दिक्, शान्तोदितौ व्याख्यायाव्यपदेश्यं व्याख्यातुं पृच्छति—अथाव्यपदेश्याः क इति । ये व्यापारान् करिष्यन्ति तेऽव्यपदेश्या इति वक्तुं न शक्यतेः अकरिष्यमाणव्यापारकस्यापि केवलानागतलक्षणस्य वस्तुनः स्वीकारादित्यतः प्रकारान्तरेणाव्यपदेश्यं लक्षयति-सर्वं सर्वात्मकमिति । सर्वात्मकं सर्वेशक्तिकं, तथा च सर्वत्र परिणामिन्यवस्थिताः सर्वविकारजननशक्तय एवाव्यपदेश्या इत्यर्थः, ननु वर्तमानाती-

णामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टं, तथा स्थावराणां जङ्गमेषु जङ्गमानां-स्थावरेषु" इति, एवं जात्यनुच्छेदेन सर्वं सर्वात्मकमिति, देशकालाकारनि-

भास्वती ।

क्तं पूर्वाचार्यैः—जलभूम्योः परिणामभूतं रसादि वैश्वरूप्यं विचित्ररसादिस्वरूपं स्थावरे-पूद्भिज्जेषु दृष्टं, तथा स्थावराणां विचित्रपरिणामो जङ्गमप्राणिषूद्भिज्जेषु, जङ्गमानामपि तथा स्थावरपरिणामः, एवं जात्यनुच्छेदेन = जलभूम्यादिजातेरनुच्छेदेन, धर्मिरूपेण जला-दिजातेर्वर्त्तमानत्वं तेनेत्यर्थः, सर्वं सर्वात्मकमिति । देशेति । सर्वस्य सर्वात्मकत्वेऽपि न हि

तत्त्ववैशारदी ।

कम्" इति । तदेवोपपादयति-"जलभूम्योः" इति । जलस्य हि रसरूपस्पर्शशब्दवतः, भूमेश्च गन्धरसरूपस्पर्शशब्दवत्याः पारिणामिकं वनस्पतिलतागुल्मादिषु मूलफलप्रसव-पल्लवादिगतरसादिवैश्वरूप्यं दृष्टम्, सोऽयमनेकात्मिकाया भूमेरनीदृशस्य वा जलस्य न परिमाणामो भवितुमर्हति, उपपादितं हि नासदुत्पद्यत इति, तथा स्थावराणानां ज-ङ्गमेषु = मनुष्यपशुमृगादिषु रसादिवैचित्र्यं दृष्टम् उपभुञ्जाना हि ते फलादीनि रूपादिभेदसम्प-दमासादयन्ति, एवं जङ्गमानां पारिणामिकं स्थावरेषु दृष्टं रुधिरावसेकात्किल दाडिमीफलानि तालफलमात्राणि भवन्ति, उपसंहरति-"एवम्"इति। एवं सर्वं जलभूम्यादिकं सर्वरसाद्यात्मकं,-तत्र हेतुमाह-"जात्यनुच्छेदेन" इति । जलत्वभूमित्वादिजातेः सर्वत्र प्रत्यभिज्ञायमानत्वना-नुच्छेदाद्, ननु सर्वं चेत् सर्वात्मकं हन्त भोः सर्वस्य सर्वदा सर्वत्र सर्वथा सन्निधानात्समानका-लीना भावानां व्यक्तिः प्रसज्ज्येत न खलु सन्निहिताविकलकारणं कार्य्यं विलम्बितुमर्हतीत्यत-आह—"देशकाल" इति । यद्यपि कारणं सर्वं सर्वात्मकं तथाऽपि यो यस्य कार्य्यस्य देशः

पातञ्जलरहस्यम् ।

श्रुतेः, समर्थस्य क्षेपायोगादिति न्यायमाश्रित्याह-ननु सर्वं चेदिति ।समाधत्ते-यद्यपीति । तेषां-

वार्त्तिकम् ।

तावस्थयोरनुभवस्मरणे प्रमाणे स्तः, शक्त्याख्यायां त्वनागतावस्थायां किं प्रमाणं किं वा सर्वत्र सर्वशक्तिमत्त्वे प्रमाणमित्याकाङ्क्षायामाह—यत्रोक्तमिति। अभिव्यक्तिरितीत्यन्तेना-न्वयः, यत्र सर्वं सर्वशक्तिमदित्यत्रार्थे पूर्वाचार्यैरिदं वक्ष्यमाणं प्रमाणमुक्तमित्यर्थः, तत्रादौ प्रत्यक्षस्थले शक्तिमनुमापयति—जलभूम्योरिति । स्थावरेषु रसादिभिः मधुराम्लसुरभ्यसुर-भिमृदुकठिनत्वादिभिर्यदनन्तरूपत्वं तज्जलपृथिव्योः परिणामनिमित्तकमित्यन्वयव्यतिरेका-भ्यां प्रत्यक्षतो दृष्टम् अतो जलभूमी स्थावरात्मिके स्थावरशक्तिमत्या इति भावः, शक्ति-विनाऽपि कार्यकरणेऽतिप्रसङ्गात् तथा जङ्गमेषु यद्वैश्वरूप्यं स्थावराणां परिणामनिमित्तकं दृष्टं-मनुष्यादीनां धान्यादिस्थावरकार्याणां धान्यादिविशेषैः रूपादिविशेषदर्शनात्, तथा स्थाव-राणां यद्वैश्वरूप्यं तज्जङ्गमानां परिणामनिमित्तकं दृष्टं-गोमयदुग्धादिभिर्धान्यचम्पकादीनां-स्थावराणां विचित्ररूपरसादिदर्शनादित्यर्थः, एवमादिदृष्टान्तैः सर्वेषु वस्तुषु सर्वविकारजन-नशक्तिः सिध्यतीत्याह—इत्येवमिति । यथा जलादिस्थावराद्यात्मकम् एवमन्यदपि सर्व-विकारात्मकं तच्छक्तिमत्, नन्वतीतकार्ये शक्तिमत्त्वं नास्ति भाविवस्तूनामित्यत उक्तम्, जात्यनुच्छेदेनेति । यद्यप्यतीतकार्यव्यक्तय उच्छिन्नास्तथाऽपि तज्जातीयसत्त्वस्यानुच्छेदादि-त्यर्थः, तथा च सर्वात्मकत्वं सर्वजातीयशक्तिमत्त्वमेवात्र विवक्षितमिति भावः, एतेनान्यद्रव्य-स्य परिणामव्यक्तीनामन्यत्राभावेऽपि न नियमभङ्गः तज्जातीयव्यक्त्यन्तरजननशक्तिसम्भ-वादिति, तदेतदुक्तं विष्णुपुराणे—

यथा च पादपो मूलस्कन्दशाखाऽऽदिसंयुतः ।
आदिबीजात्प्रभवति बीजान्यन्यानि वै ततः ॥

मित्तासंबन्धान्न खलु समानकालमात्मनामभिव्यक्तिरिति, य एतेष्वभिव्य-

भास्वती।

सर्वपरिणामोऽकस्माद् भवति स तु देशादिनियमितो भवति, देशकालाकारनिमित्तापब-न्धाद्=अयोग्यदेशादिप्रतिबन्धकाद् न समानकालमेकदा आत्मनाम्=भावानामभि-

तत्त्ववैशारदी।

यथा कुङ्कुमस्य कश्मीरः; तेषां सत्त्वेऽपि पञ्चालादिषु न समुदाचार इति न कुङ्कुमस्य पञ्चा-लादिष्वभिव्यक्तिः, एवं निदाघे न प्रावृषः समुदाचार इति न तदा शालीनाम्, एवं न मृगी

पातञ्जलरहस्यम्।

शब्दादिगुणपञ्चकानां सत्त्वेऽपि देशवैगुण्येन पञ्चालादौ न समुदाचारः=सामग्रीसत्त्वमतस्तत्र कुङ्कुमस्य न जन्मेत्याह—नेति। देशव्यभिचारमुक्त्वा कालव्यभिचारमाह—एवं निदाघ-

वार्त्तिकम्।

सम्भवन्ति ततस्तेभ्यो भवन्त्यन्ये परे द्रुमाः।
तेऽपि तल्लक्षणद्रव्यकारणानुगता मुने!॥
एवमव्याकृतात्पूर्वं जायन्ते महदादयः।
सम्भवन्ति सुरास्तेभ्यस्तेभ्यश्चाखिलजन्तवः॥ इति,

यदि च सर्वत्र सर्वसजातीयवस्तुजननशक्तिर्न स्वीक्रियते तदा कथमेकस्मादेव चतु-र्मुखशरीरादखिलदेवदानवनरपश्वादिसमुद्भवः कथं वाऽगस्त्यजाठराग्नेः समुद्रशोषणं कथं वा ब्रह्मविष्णुरुद्रपार्वतीशरीरादिषु विश्वरूपदर्शनम्, योगिनां च स्वशरीरमनसोरनन्ता विभूतय-उपपद्येरन्? किं बहुना—

उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥

इत्यादिवाक्यैः सर्वप्राणिशरीरे सर्वजातीयवस्तुसत्तावचनं शक्तिरूपतां विनाऽऽञ्जस्येन नो-पपद्येत, अर्जुनादिभिश्च शक्तिरूपेणावस्थितं भाविभीष्मवधादिकमेव कृष्णादिशरीरे कालात्मके दिव्यचक्षुषा दृष्टं योगिभिरतीतानागतमिवेति, एतेन स इदं सर्वं भवति तस्मात्सर्वमभवदिति श्रुतेः ब्रह्मविदः सर्वाभावरूपा श्रुत्युक्ता सिद्धिरुपपादिता, तथा जीवोपाधावपि या महैश्वर्यश-क्तिमत्त्वाज्जीवानामीश्वरत्वप्रतिपादकश्रुतिस्मृतय उपपन्नाः, तथा त एते सत्याः अनृतापिधा-ना इति श्रुतिरपीति मन्तव्यम्, नन्वेवं सर्वत्र सर्वजातीयशक्त्यङ्गीकारे कथमेकदा न नाना-विकारोत्पत्तिः कथं वा शिलाशकलादपि नाङ्कुरोत्पत्तिरस्मदादिशरीराच्चतुर्मुखादिवत् सङ्कल्प-मात्रेण नाखिलप्राण्युत्पत्तिरित्याशङ्कां परिहरति—देशकालेति। देशो भूर्लोकादिः कालः कलियुगादिराकारः संस्थानम् अवयवसंयोगविशेषः निमित्तमधर्मादिस्तैरपबन्धात् प्रतिब-न्धाद् एकदा कारणेषु न विरुद्धानामात्मभूतशक्तीनामभिव्यक्तिर्वर्त्तमानलक्षणपरिणाम इत्य-र्थः, एतेन च प्रतिबन्धवचनेनान्या अपि उक्ताशङ्काः परिहृताः सहकारिविरहादित्यर्थ इत्यपि कश्चित्, तस्यापि प्रतिबन्धनिमित्तकविलम्बे पर्यवसानं 'निमित्तमप्रयोजकं प्रकृतीनां वरणभे-दस्तु ततः क्षेत्रिकवद्' इत्यागामिसूत्रे सर्वेषां निमित्तकारणानां स्वतन्त्रायाः प्रकृतेः परिणा-मेषु प्रतिबन्धनिवर्त्तकतामात्रावगमादिति, अतः शिलाशकलान्नाङ्कुरोत्पत्तिरवयवसंयोगविशे-षस्याङ्कुरोत्पत्तिप्रतिबन्धकत्वाद् अस्मदादिशरीरान्नाखिलप्राण्युत्पत्तिरधर्मप्रतिबन्धात्, ब्रह्मा-ण्डादिशक्तिमतश्च घटादेर्ब्रह्माण्डाद्युत्पादनं विनैव प्रायशो नाशदर्शनात् सा शक्तिः समुत्पन्नः घटादिना सहैव नश्यति; आधारनाशात्, कदा चिन्नहुषशरीरादीनां सर्पादिभाववत् परमेश्वरा-दिसङ्कल्पो घटादीनामपि प्रकृत्यापूरवशाद् अव्यवस्थिताखिलपरिणामो भवत्येव, तथा चोक्तं-

कानभिव्यक्तेषु धर्मेष्वनुपाती सामान्यविशेषात्मा सोऽन्वयी धर्मी, यस्य तु

भास्वती ।

व्यक्तिः, देशकालापबन्धो नैकस्मिन् देशे नीलपीतयोर्धर्मयोर्युगपदभिव्यक्तिः, आकारापबन्धः = न हि चतुरस्रमुद्रया त्रिकोणलाञ्छनम् , निमित्तम् = अन्यदुद्भवकारणम् , यथाऽभ्यासादेव चित्तस्थितिरित्यादि, अभ्यासरूपनिमित्तापबन्धाद् न चित्तस्य स्थितिः स्यात्, अभिव्यक्तेः प्रतिबन्धभूतादयोग्यदेशादेरपगमादेवाभिव्यक्तिर्नाकस्माद् ,

य इति । यः पदार्थ एतेषूक्तलक्षणेष्वभिव्यक्तानभिव्यक्तेषु धर्मेष्वनुपाती = तादृशाः सर्वे धर्मा यन्निष्ठा इति बुध्यते स सामान्यविशेषात्मा=सामान्यरूपेण स्थिता अतीतानागता धर्माः, विशेषरूपेणाभिव्यक्ता वर्त्तमानधर्मास्तदात्मा=तत्स्वरूपः, अन्वयी=बहुधर्माणामाश्रयरूपो व्यवह्रियमाणः पदार्थो धर्मी,

यस्य त्विति । "एकतत्त्वाभ्यास" इति सूत्रव्याख्याने यत् कृतं वैनाशिकदर्शनखण्डनं-

तत्त्ववैशारदी ।

मनुष्यं प्रसूते, न तस्यां मनुष्याकारसमुदाचार इति, एवं नापुण्यवान् सुखरूपं भुङ्क्ते, न तस्मिन् पुण्यनिमित्तस्य समुदाचार इति, तस्माद् देशकालाकारनिमित्तानाम् अपबन्धाद् = अपगमान्न समानकालम्, आत्मनां = भावानाम् अभिव्यक्तिरिति, तदेवं धर्मान् विभज्य तेषु धर्मिणोऽनुगमं दर्शयति—"य एतेषु" इति । सामान्यं = धर्मिरूपं, विशेषः = धर्मः, तदात्मा = उभयात्मक इत्यर्थः, तदेवमनुभवसिद्धमनुगतं धर्मिणं दर्शयित्वा तमनिच्छतो वैनाशिकस्य क्षणिकं विज्ञानमात्रं चित्तमिच्छतोऽनिष्टप्रसङ्गमुक्तं स्मारयति-"यस्य तु" इति ।

पातञ्जलरहस्यम् ।

श्रुतिमाश्रित्याह-जलभूम्योरिति । जलस्य चतुर्गुणस्य पारिणामिकं करकादि तत्र रसान्ताश्चत्वारो गुणा उपलभ्यन्ते, गन्ध एकोऽधिको भूमौ पञ्चगुणायां, तर्कमाह-नासदिति । अन्नाद्रेतः रेतसः पुरुष इति श्रुतिमाश्रित्याह-उपभुञ्जाना इति । रुधिरं जङ्गमेष्वेवेति भावः, समर्थस्य क्षेपायोगादिति न्यायमाश्रित्याह-ननु सर्वं चेदिति । समाधत्ते-यद्यपीति । तेषां शब्दादिगुणपञ्चकानां पञ्चालादौ सत्त्वेऽपि देशवैगुण्ये न समुदाचारः सामग्रीसत्त्वमतस्तत्र न कुङ्कुमस्य जन्मेत्याह-नेति । देशव्यभिचारमुक्त्वा कालव्यभिचारमाह-एवं निदाघ इति । समुदाचारः = प्रकटता, योनिगतवैजात्यमाह—न मृगीति ।

आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म एव च--

इत्यभिधानादाह—आत्मनां भावानामिति, बौद्धमतमुत्थाप्य दूषयति-यस्येति । "ना-

यार्त्तिकम् ।

लौकिकैरपि—

विषमप्यमृतं क्व चिद्भवेदमृतं वा विषमीश्वरेच्छयेति,

एतेन तथा ज्ञानेन पुरुषार्थसमाप्त्या चित्तस्यात्यन्तिकलयकालेऽनागतदुःखमपि शक्तिरूपं चित्तेन सहैव नश्यतिः अतो हेयं दुःखमनागतमिति सूत्रोक्तमनागतदुःखस्य हेयत्वमुपपन्नम् , एवं च सति विकाराणां क्व चिल्लक्षणमात्रमपि भवत्यनागतातीततारूपमिति वक्तव्यम्, अन्यथाऽनागतदुःखस्य हेयत्वानुपपत्तेः, परेषामनागतदुःखस्य हानं हि सिद्धत्वान्न पुरुषार्थः, अस्मिंश्चानागतदुःखमभावितया न घटेतेति, पदार्थान् व्याख्याय समग्रं सूत्रार्थमाह—य एतेष्विति । अन्वयी सर्वधर्मान्वयी स्थिर इत्यर्थः, तथा चाभिव्यक्तानभिव्यक्तत्ववैधर्म्येण धर्मधर्मिणोर्विवेक इति सूत्रतात्पर्यार्थः, तदेवमन्योन्यवैधर्म्याद्धर्मेभ्योऽतिरिक्ततया धर्मी प्रसाधितः, इदानीं तदनभ्युपगमे भाष्यकारो बाधकमप्याह—यस्य त्विति । धर्ममात्रमित्यनेनैव क्षणिकत्वमप्यायातम्, अनेकक्षणस्थायित्वे हि क्षणसम्बन्धरूपधर्मवत्त्वमेव

धर्ममात्रमेवेदं निरन्वयं तस्य भोगाभावः, कस्माद्? अन्येन विज्ञानेन कृतस्य कर्मणोऽन्यत्कथं भोक्तृत्वेनाधिक्रियेत? तत्स्मृत्यभावश्च नान्यदृष्टस्य स्मरणमन्यस्यास्तीति, वस्तुप्रत्यभिज्ञानाच्च स्थितोऽन्वयी धर्मी यो धर्मान्यथात्वमभ्युपगतः प्रत्यभिज्ञायते तस्मान्नेदं धर्ममात्रं निरन्वयम् इति ॥१४॥

**क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥**

एकस्य धर्मिण एक एव परिणाम इति प्रसक्ते क्रमान्यत्वं परिणामा-

भास्वती।

तत् सङ्क्षेपतो वक्ति, सुगमम्, वैनाशिकनये—भोगाभावः, स्मृत्यभावः, तथा च—योऽहमद्राक्षं सोऽहं स्पृशामीति प्रत्यभिज्ञाऽसङ्गतिरिति प्रसज्येत, तस्मात् स्थितः=अस्त्यन्वयी धर्मी यो धर्मान्यथात्वमभ्युपगतः=यो धर्मेष्वेकरूपेण स्थितो यस्य च धर्मोऽन्यथात्वं प्राप्नोतीत्यनुभूयमानः प्रत्यभिज्ञायते, तस्मान्नेदं विश्वं धर्ममात्रं, प्रतीतिमात्रं निरन्वयम्=शून्यमूलकमित्यर्थः ॥ १४ ॥

एकस्येति। एकस्य धर्मिण एकस्मिन्नेव क्षण एक एव परिणाम इति प्रसक्ते=प्राप्त इत्य-

तत्त्ववैशारदी।

"वस्तुप्रत्यभिज्ञानाच्च" इति। न हि देवदत्तेन दृष्टं यज्ञदत्तः प्रत्यभिजानाति तस्माद् यश्चानुभविता स एव प्रत्यभिज्ञातेति ॥ १४ ॥

"क्रमान्यत्वं परिणामान्यत्वे हेतुः" किमेकस्य धर्मिण एक एव धर्मलक्षणावस्थालक्षणः परिणाम उत बहवो धर्मलक्षणावस्थालक्षणाः परिणामाः? तत्र किं प्राप्तम्—एकत्वाद् धर्मिण एक एव परिणामः, न हि एकरूपात्कारणात् कार्य्यभेदो भवितुमर्हति, तस्याकस्मिकत्वप्रसङ्गाद् इति, एवं प्राप्त उच्यते—"क्रमान्यत्वात्परिणामान्यत्वम्" एकस्या मृदश्चूर्णपिण्डघटकपालकणाकारपरिणतिपरम्परा क्रमवती लौकिकपरीक्षकैरध्यक्षं समीक्ष्यते, अन्यच्चेदं चूर्णपिण्डयोरानन्तर्य्यम्, अन्यच्च पिण्डघटयोः, अन्यच्च घटकपालयोः, अन्यच्च कपालकणयोः, एकत्र परस्यान्यत्र पूर्वत्वाद्, सोऽयं क्रमभेदः परिणाम एकस्मिन्ननवकल्पमानः परिणामभेदमापादयति, एकोऽपि च मृद्धर्मी क्रमोपनिपतिततत्तत्सहकारिसमवधानक्रमेण क्रमवर्ती परिणामपरम्परामुद्वहन् नैनामाकस्मिकयतीति भावः, धर्मपरिणामान्यत्ववल्लक्षणपरिणामान्यत्वेऽवस्थापरिणामान्यत्वे च समानं क्रमान्यत्वं हेतुरिति, तदेवद्भाष्येणावद्योत्यते—"एकस्य

पातञ्जलरहस्यम्।

न्यदृष्टं स्मरत्यन्य" इति न्यायमाश्रित्याह—न—हीति ॥ १४ ॥

एकस्या सामग्र्या एकं कार्यं दृष्टमित्याशङ्क्य समाधत्ते—"क्रमान्यत्वं परिणामान्यत्वे हेतुः" तदेवानुभवारूढं करोति—तद्यथाऽऽदि—क्रमइत्यन्तेन, क्रमः=आनन्तर्यमित्यर्थः, सः=

वार्त्तिकम्।

पदार्थमात्रस्य स्यादिति, धर्ममात्रमित्यस्य विवरणं निरन्वयमिति निर्धर्मिकमित्यर्थः, धर्मिनिराकरणादात्मा क्षणिकविज्ञानमित्यायातं तथा च प्रथमपादोक्तमेव दूषणमाह—तस्य भोगाभाव इति। शेषं सुगमम् ॥ १४ ॥

नन्वस्तु धर्मी धर्मातिरिक्तः तथाऽप्येकस्य धर्मिण एक एव परिणामोऽस्तु एकस्य नानापरिणामाङ्गीकारे सहकारिभेदकल्पनागौरवादित्याशङ्कायामेकस्य धर्मिणः परिणामभेदं साधयति—एकस्य धर्मिण आगामिसूत्रवक्ष्यमाणपरिणामत्रयसिद्धये—

"क्रमान्यत्वं परिणामान्यत्वे हेतुः" एकस्य धर्मिणः परिणामनानात्वे क्रियाभेदो हेतुर्लिङ्गमित्यर्थः, आशङ्कापूर्वकं सूत्रं व्याचष्टे—एकस्येति। भवतीति सिद्धान्त इति शेषः, हेतुत्वं-

न्यत्वे हेतुर्भवतीति, तद् यथा चूर्णमृत्, पिण्डमृद्, घटमृत, कपालमृत्, कणमृद्, इति च क्रमः, यो यस्य धर्मस्य समनन्तरो धर्मः स तस्य क्रमः, पिण्डः प्रच्यवते घट उपजायत इति धर्मपरिणामक्रमः, लक्षणपरिणामक्रमो· घटस्यानागतभावाद्वर्त्तमानभावक्रमः, तथा पिण्डस्य वर्त्तमानभावादतीतभावक्रमः, नातीतस्यास्ति क्रमः, कस्मात्? पूर्वपरतायां सत्यां समनन्तरत्वं सा तु नास्त्यतीतस्य, तस्माद् द्वयोरेव लक्षणयोः क्रमः, तथाऽवस्थापरिणामक्रमोऽपि घटस्याभिनवस्य प्रान्ते पुराणता दृश्यते सा च

भास्वती।

र्थः, परिणामान्यत्वस्य गोचरीभूतस्य कारणं क्षणिकान्यत्वक्रमः, य इति। क्रमलक्षणमाह—कस्य चिद् धर्मस्य समनन्तरधर्मः=अव्यवहितपरवर्त्ती धर्मः, पूर्वस्य क्रम इत्यर्थः, यथा=पिण्डेत्यस्य धर्मपरिणामक्रमस्तत्पश्चाद्भावी घटधर्मः, तथाऽवस्थेति। न च घटस्य पुराणताऽत्र जीर्णता, जीर्णता हि धर्मपरिणामः, एकधर्मलक्षणाक्रान्तस्य घटस्योत्पत्तिकालमपेक्ष्य भेदविवक्षयोच्यतेऽभिनवोऽयं पुराणोऽयमिति, घटस्य देशान्तरावस्थानमप्यवस्थापरिणामः, उदाहरणमिदं घटस्वरूपामेकामुदितधर्मसमष्टिं गृहीत्वोक्तम्, तत्र वर्त्तमानलक्षणकघटत्वधर्मस्य नास्ति धर्मान्तरत्वं नास्ति च लक्षणान्यत्वम्, तथाऽपि च यः परिणामो-वक्तव्यो भवति सोऽवस्थापरिणाम इति दिक्, धर्मिरूपेण मतस्य घटधर्मिणः परिणामो यत्र वक्तव्यो भवेत् तत्र विवर्णताजीर्णताऽऽदयोऽपि धर्मपरिणामः स्यात, सा चेति। सा च

तत्त्ववैशारदी।

धर्मिण" इति। क्रमक्रमवतोरभेदमास्थाय स तस्य क्रम इत्युक्तं "तथाऽवस्थापरिणामक्रम"-इति। तथा हि कीनाशेन कोष्ठागारे प्रयत्नसंरक्षिता अपि हि व्रीहयो हायनैरतिबहुभिः पाणिस्पर्शमात्रविशीर्य्यमाणावयवसंस्थानाः परमाणुभावमनुभवन्तो दृश्यन्ते न चायमभिनवानामकस्मादेव प्रादुर्भवितुर्महति, तस्मात् क्षणपरम्पराक्रमेण सूक्ष्मतमसूक्ष्मतरसूक्ष्मबृहद्-बृहत्तरबृहत्तमादिक्रमेण प्राप्तेषु विशिष्टोऽयं लक्ष्यत इति, तदिदं क्रमान्यत्वं धर्मधर्मिभेदमपे-

पातञ्जलरहस्यम्।

पदार्थधर्मः, न तु पदार्थः, पिण्डः प्रच्यवते घट उपजायते जन्मवान् स्यात्, एवञ्च जायते अस्ति वर्द्धते परिणमत इति चतुष्टयं स्थिते धर्मिणि धर्मचिन्तेति न्यायात् तृतीयः—अ

वार्त्तिकम्।

प्रतिपादयितुमादौ धर्मपरिणामविषये धर्मिणः क्रमं दर्शयति—चूर्णेति। एकैव मृत् प्रथमं चूर्णमृत्तिष्ठति ततः पिण्डमृद्भवति ततश्च घटमृदिति घटोत्पत्तौ मृद्धर्मिणः क्रमं प्रतिपाद्य घटलयेऽपि मृदः क्रममाह—कपालमृत्कणमृदिति। चशब्देनान्यपरिणामविषयेऽपि क्रमः समुच्चीयते सर्वत्र मृच्छब्दो मृद्धर्मिण एकत्वप्रतिपादनार्थः, एकस्य सामान्यात्मकस्य मृद्धर्मिणोऽनङ्गीकारे मृदित्यनुगतप्रत्ययो न स्यादिति भावः, ननु धर्माणामेव क्रमः पौर्वापर्यात्मा सम्भवति न तु धर्मिण इत्याशङ्कायां प्रकृतेः क्रमं लक्षयति—यो यस्येति। यस्य धर्मिणो धर्मान्तरस्य समनन्तरो यो धर्मः स एव तस्य धर्मिणः क्रम इत्यर्थः, तथा च मृदेकैव चूर्णं भूत्वा पश्चात् पिण्डो भवतीत्येकः क्रमः, पश्चाच्च घट इत्यादिक्रमैर्मृद्धर्मिण एव क्रमबहुत्वमिति भावः, धर्माणां क्रमस्यैवात्र विवक्षितत्वे तु तेषां क्रमनानात्वेऽप्येकस्य धर्मिणः परिणामबहुत्वं न सिध्यतीति भाष्यकाराशयः, परिणामत्रयेऽपि क्रममुदाहरति—पिण्डः प्रच्यवत इत्यादिना, नातीतस्यास्ति क्रम इति, लक्षणाल् लक्षणान्तरप्राप्तिरूपः क्रमो नातीतस्येत्यर्थः, धर्मपरिणाम इवावस्थापरिणामे प्रतिक्षणक्रमो न प्रत्यक्षीक्रियत इति तमनुमानेन साधयति—घटस्याभिनवस्येति।

क्षणपरम्पराऽनुपातिना क्रमेणाभिव्यज्यमाना परां व्यक्तिमापद्यत इति धर्मलक्षणाभ्यां च विशिष्टोऽयं तृतीयः परिणाम इति, त एते क्रमाः धर्मधर्मिभेदे सति प्रतिलब्धस्वरूपा धर्मोऽपि धर्मी भवत्यन्यधर्मस्वरूपापेक्षयेति, यदा तु परमार्थतो धर्मिण्यभेदोपचारस्तद्द्वारेण स एवाभिधीयते धर्म-

भास्वती।

पुराणता=तत्कालावच्छिन्नाः सर्वेऽवस्थापरिणामा इत्यर्थः, क्षणपरम्पराऽनुपातिना=क्षणपरम्पराऽनुगामिना, क्रमेण=क्षणव्यापिपरिणतिक्रमेणेत्यर्थः, अभिव्यज्यमाना परां व्यक्तिं=लोकगोचरत्वमित्यर्थः,आपद्यत इति। धर्मलक्षणाभ्यां विशिष्टः=धर्मलक्षणभेदविवक्षाऽसत्त्वेऽपि तदन्यो यदवस्थाऽपेक्षया भेदवचनं स तृतीयोऽयं परिणामः, त एत इति। एते क्रमा धर्मधर्मिभेदे सति प्रतिलब्धस्वरूपा न्यायेनानुचिन्तनीयाः कथं तद् व्याख्यातप्रायम्, धर्मोऽपि धर्मी भवत्यन्यधर्मापेक्षया, यथा-घटो धर्मी जीर्णताऽऽदयस्तस्य धर्माः, मृद् धर्मी पिण्डत्वघटत्वादयस्तस्य धर्माः, भूतधर्मा धर्मिणस्तेषां भौतिकानि धर्माः, तन्मात्रधर्मा धर्मि-

तत्त्ववैशारदी।

क्षत एवेत्याह—"त एत" इति। आ विकारेभ्य आ च लिङ्गाद् आपेक्षिको धर्मधर्मिभावो,-मृदादेरपि तन्मात्रापेक्षया धर्मत्वादित्याह—"धर्मोऽपि" इति। यदा परमार्थधर्मिण्यलिङ्गेऽभेदोपचारप्रयोगः, तद्द्वारेण=सामानाधिकरण्यद्वारेण धर्म्येव धर्म इति यावत्, तदेक एव परिणामो धर्मिपरिणाम एवेत्यर्थः, धर्मलक्षणावस्थानां धर्मिस्वरूपाभिनिवेशात्, तदनेन

पातञ्जलरहस्यम्।

वस्थेति, धर्मधर्मिता हि सापेक्षा प्रतियोग्यनुयोगिवदित्याह—धर्मोऽपीति=द्वये=द्विप्रकाराः, परिदृष्टा प्रत्ययात्मकाः प्रत्यक्षा इति; अपरिदृष्टा अनुमेयाः, नाभावो विद्यते सत इत्युक्तिमाश्रित्याह-ते च सप्तैव सप्तप्रकाराः ताननुगमयति-निरोध इत्यादिना,

वार्त्तिकम्।

प्रान्त इति शेषः, सा चेति। सा च पुराणता क्षणपरम्पराऽनुपातिना प्रतिक्षणं भिन्नेन स्वरूपसत्ताक्रमसमूहेनैवाभिव्यज्यमाना भवन्ती चरमावस्थायां स्फुटप्रत्यक्षगोचरतामेति, अतः पुराणताऽभिव्यक्तिहेतुतया प्रतिक्षणमवस्थापरिणामोऽनुमीयत इति शेषः, प्रतिक्षणपरिणामतो यत्सिध्यति तदाह—धर्मलक्षणाभ्यामिति। विशिष्टोऽतिशयितः धर्मलक्षणपरिणामयोः प्रतिक्षणमनुत्पादादवस्थापरिणामस्य च प्रतिक्षणमुत्पादादित्यर्थः, तथा चोक्तं मनुना—

घोरेऽस्मिन्हन्त संसारे नित्यं संसारपायिनि, इति

स्मृत्यन्तरेषु च—

नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते॥

इत्यादि च, पुराणे चात एव चतुर्विधः प्रलय उक्तः—

नित्यो नैमित्तिकश्चेति प्राकृतात्यन्तिकौ तथा इति,

नित्यः प्रतिक्षणं जायमानः, एतेन स्वप्नमायाऽऽदिदृष्टान्ता अपि प्रपञ्चस्य क्षणभङ्गुरत्वेनैव श्रुतिस्मृतिष्वभिप्रेता इति, सूत्रतात्पर्यार्थमाह—त एत इति। प्रतिलब्धस्वरूपाः प्राप्तसम्भवा इतरथा तु नेत्यर्थः, ननु धर्मिणोऽपि घटादेः कपालादिधर्मत्वात् कथं धर्मधर्मिणोर्भेद इति? तत्राह—धर्मोऽपीति। तथा च यो यस्य धर्मी स तस्माद्भिन्न इत्येव नियम इत्यर्थः, नन्वेवं धर्मधर्मिलक्षणानां परिणामभेदे कथमेकस्याः प्रकृतेः सर्वे परिणामा इति श्रूयते—

'इत्येषा प्रकृतिः सर्वा व्यक्ताव्यक्तस्वरूपिणी'—

**स्तदाऽयमेकत्वेनैव क्रमः प्रत्यवभासते,**
**चित्तस्य द्वये धर्माः–परिदृष्टाश्चापरिदृष्टाश्च,**
**तत्र प्रत्ययात्मकाः परिदृष्टाः, वस्तुमात्रात्मका अपरिदृष्टाः, ते च सप्तैव**

भास्वती।

णस्तेषां भूतधर्मास्तु धर्माः, अभिमानो धर्मी तन्मात्रेन्द्रियाणि तस्य धर्माः, लिङ्गमात्रस्य धर्मोऽहङ्कारः, प्रधानं धर्मि लिङ्गं तस्य धर्मः, न च त्रैगुण्यं कस्य चिद् धर्मः, अतः परमार्थतो मूलधर्मिणि प्रधाने धर्मधर्मिणोरभेदोपचार एकत्वप्रतीतिस्तद्द्वारेण=अभेदोपचारद्वारेण सः=मूलधर्मी एवाभिधीयते धर्म इति, तदाऽयं क्रमः–एकत्वेन=परिणामक्रमेणैव प्रत्यवभासते, गुणानामभिभाव्याभिभावकरूपा तदैका विक्रिया वक्तव्या भवतीत्यर्थः, चित्तस्येति।

तत्त्ववैशारदी।

धर्मिणो दूरोत्सारितं कूटस्थनित्यत्वमित्युक्तप्रायम्, धर्मपरिणामं प्रतिपादयन् प्रसङ्गेन चित्तधर्माणां प्रकारभेदमाह—"चित्तस्य" इति। परिदृष्टाः=प्रत्यक्षाः, अपरिदृष्टा=परोक्षाः, तत्र प्रत्ययात्मकाः प्रमाणादयो रागादयश्च, वस्तुमात्रा इत्यप्रकाशरूपतामाह—स्यादेतद्–

पातञ्जलरहस्यम्।

ननु कथ—

वार्त्तिकम्।

त्यादिस्मृतिषु, तत्राह–यदा त्विति। यदा तु परमार्थधर्मिणि प्रधानेऽभेदोपचारेण निमित्तेन सर्वोऽपि धर्मः स एवाभिधीयते तदाऽयं क्रम एकत्वेन एकनिष्ठत्वेनैव प्रतीयत इत्यर्थः, परमार्थधर्मित्वं च साक्षात्परम्परया सर्वविकाराश्रयत्वं, तच्च प्रधानस्यैवास्तीत्यन्ये, अपारमार्थिकधर्मिणआपेक्षिकत्वात्, यथा परिणामिनां सत्यत्वं यथा वा ब्रह्ममीमांसायां जीवानामात्मत्वमपारमार्थिकं तयोरपि शशशृङ्गदेहाद्यापेक्षिकत्वादिति भावः, अत्र प्रधानस्यैव पारमार्थिकधर्मिकत्वं वदद्भिः भाष्यकारैः परमात्मन एव निरतिशयसतोऽनापेक्षिकात्मनश्च पारमार्थिकसत्त्वंपारमार्थिकात्मत्वं च श्रुतिस्मृतिसिद्धमनुमतं न्यायसाम्यादिति ध्येयम्, तथाऽभेदोपचारवचनाद् धर्मधर्मिणोर्भेद एव पारमार्थिकः, अविभागमात्रं त्वभेद इत्यप्युक्तमिति, तदित्थं सूत्रगणेन प्रपञ्चः प्रकृतिपरिणाम इति सिद्धान्तितम्, तत्र चारम्भवादिभिः सहास्माकं धर्मधर्म्यभेदसत्कार्ययोरेव विरोधो न तु प्रपञ्चस्याचेतनसूक्ष्मद्रव्योपादानकत्वेऽपि तैरभेदप्रत्ययनियामकस्याविभागलक्षणस्वरूपस्यानङ्गीकारात् प्रागभावध्वंसयोरङ्गीकाराच्च, ये तु प्रपञ्चस्य ब्रह्मविवर्त्ततावादिनस्तैः सह च नास्माकं विरोधलेशोऽपि वर्त्तते मायापरिणामस्य प्रपञ्चस्य परमात्मन्यतात्त्विकताया अस्माभिरपीष्टत्वात्, 'इन्द्रो मायाभिः पुरुरूप ईयते'

"बहुरूप इवाभाति मायया बहुरूपया।
रममाणो गुणेष्वस्या ममाहमिति बध्यते"—

इत्यादिश्रुतिस्मृतिषु मायाविकारस्यैव परमात्मन्यध्यारोपावगमात्, शुक्तौ बुद्धिपरिणामरजतारोपवद् बध्यत इति अंशत इत्यर्थः, यदि च मायायामपि विवर्त्तत्वं प्रपञ्चस्य कश्चिद्वदेत् तदपि परमार्थाभिप्रायेणेष्यत एवास्माभिः मायाऽपेक्षया तत्कार्याणामनित्यत्वेन तामपेक्ष्य मिथ्यात्वाद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रौतदृष्टान्तैरेवमेव सिध्येदिति, तदेवं चित्तपरिणामप्रसङ्गेन सर्ववस्तूनां भूतेन्द्रियशब्दोपलक्षितानां त्रिविधः परिणामः सूत्रकारेण प्रतिपादितः, तत्र सूत्रकारैश्चित्तस्य निरोधव्युत्थानसंस्काररूपावेव परिणामौ प्रतिपादितौ, न सर्वं इति न्यूनताः तस्याः परिहाराय परिणामात्मकान् चित्तधर्मानशेषतः प्रकरणसमाप्त्यवसरे दर्शयति–चित्तस्य द्वय इति। परिदृष्टापरिदृष्टाः=प्रत्यक्षाप्रत्यक्षाः, प्रत्ययात्मका इति। प्रत्ययो वृत्तिपरिणामविशेषो यः साक्षिणि प्रतिबिम्बाधानक्षमः स च ज्ञानेच्छाकृतिसुखदुःखादिमान् प्रदीपशिखावद् द्रव्यरूपः परिणामविशेषः तदात्मकाः तद्रूपा–

भवन्ति; अनुमानेन प्रापितवस्तुमात्रसद्भावाः

"निरोधधर्मसंस्काराः परिणामोऽथ जीवनम् ।
चेष्टा शक्तिश्च चित्तस्य धर्मा दर्शनवर्जिता" इति ॥१५॥

भास्वती ।

चित्तस्य द्वये = द्विविधा धर्माः परिदृष्टाः=अनुभूयमानाः प्रमाणादिप्रत्ययरूपाः, अपरिदृष्टाः= वस्तुमात्रात्मकाः संस्काररूपेण स्थितिस्वभावास्तत्कार्येण लिङ्गेन तत्सत्ताऽनुमीयते, ते यथा निरोधः=संस्कारशेषः, धर्मः=धर्माधर्मकर्माशयः, संस्कारः = वासनारूपः, परिणामः= असंविदितविक्रिया, जीवनम्-चित्तेन प्राणप्रेरणा,

श्रूयते च—

"मनः कृतेनायात्यस्मिच्छरीरे" इति,

चेष्टा = अविदिता क्रिया, शक्तिः = क्रियाजननी, इत्येते सप्त दर्शनवर्जिताश्चित्तधर्माः ॥ १९ ॥

तत्त्ववैशारदी ।

अपरिदृष्टाश्चेन्न सन्त्येवेत्यत आह—"अनुमानेन" इति । अनुमानेन प्रापितो वस्तुमात्रेण सद्भावो येषां ते तथोक्ताः, पश्चान्मानसाधर्म्यादागमोऽप्यनुमानं, सप्तापरिदृष्टान् कारिकया संगृह्णाति—"निरोध" इति । निरोधो वृत्तीनाम् = असम्प्रज्ञातावस्था चित्तस्यागमतः संस्कारशेषभावोऽनुमानतश्च समधिगम्यते, धर्मग्रहणेन पुण्यापुण्ये उपलक्षयति, क्व चित्कमति पाठस्तत्रापि तज्जनिते पुण्यापुण्ये एव गृह्येते, ते चागमतः सुखदुःखोपभोगदर्शनाद्वाऽनुमानतो गम्येते, संस्कारस्तु स्मृतेरनुमीयते, एवं त्रिगुणत्वाच्चित्तस्य चलं च गुणवृत्तमिति प्रतिक्षणपरिणामोऽनुमीयते, एवं जीवनं = प्राणधारणप्रयत्नभेदोऽसंविदितश्चित्तस्य धर्मः श्वासप्रश्वासाभ्यामनुमीयते, एवं चेतसश्चेष्टा = क्रिया तथा तथा तैस्तैरिन्द्रियैः शरीरप्रदेशैर्वा सम्प्रयुज्यते साऽपि तत्संयोगादेवानुमीयते, एवं शक्तिरप्युद्भूतानां कार्य्याणां सूक्ष्मावस्था चेतसो धर्मः स्थूलकार्य्यानुभवादेवानुमीयत इति ॥ १९ ॥

पातञ्जलरहस्यम् ।

मागमोऽनुमानं प्रत्यक्षानुमानयोः पश्चादित्याह-पश्चादिति ।

सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चेति—

सांख्योक्तेः, जीवनं प्राण इत्यन्तःकरणत्रयस्य धर्म इत्यर्थः, दर्शनवर्जिता ज्ञानवर्जिता- वध्नाति सप्तभी रूपैर्मोचयत्येकरूपेणेति सांख्योक्तेः ॥ १९ ॥

वार्त्तिकम् ।

इत्यर्थः, वस्तुमात्रेति । परमाणुतद्रूपवत् प्रतिबिम्बाधानाक्षमतया साक्षिण्याभासमाना इत्यर्थः, ते चापरिदृष्टाः, अनुमानेनेति । अनुमानेन साधिता वस्तुमात्रतया सत्ता येषां सप्तानामित्यर्थः, सप्त दर्शयति-निरोधेति । निरोधो वृत्तिनिरोधः संस्कारजनकत्वेन निवृत्तियत्नवञ्ञावरूपोऽनुमीयत इति प्रागेवोक्तम्, धर्मश्चादृष्टसामान्यं भोगवैचित्र्यादनुमीयते संस्कारश्च स्मृतिहेतुतयाऽनुमीयते परिणामश्चित्तस्योपचयापचयादिर्वृत्त्युत्कर्षापकर्षादिभिरनुमीयते, एतच्च छान्दोग्ये स्पष्टम्—'अन्नमयं हि सोम्य मन' इत्यत्र, जीवनं प्राणनादिरूपव्यापारविशेषः सुषुप्तावपि श्वासप्रश्वासाभ्यामनुमीयते, चेष्टा चित्तस्य सञ्चारः, स च जाग्रत्स्वप्नसुषुप्त्यादिहेतुभ्यां चित्तस्य चक्षुरादिदेशसंयोगवियोगाभ्यामनुमीयते, यद्यपि चित्तस्य विभुत्वं तथाऽपि बाह्यसत्त्वादुपष्टम्भेनोपचयापचयवच्छ्रोत्रस्यैवौपाधिकी क्रियाऽप्यस्तीति भावः, शक्तिः ध्यानादिसामर्थ्यं तच्च तत्कार्येणानुमीयते, यद्यपि कार्यजननशक्तिः सर्वपरिणामिष्वनुमेयैव भवति तथाऽपि चित्तस्याखिलधर्मप्रसङ्गेन चित्तसमधिकृत्योक्ता ॥ १९ ॥

अतो योगिन उपात्तसर्वसाधनस्य बुभुत्सितार्थप्रतिपत्तये संयमस्य विषय उपक्षिप्यते--

**परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥**

धर्मलक्षणावस्थापरिणामेषु संयमाद् योगिनां भवत्यतीतानागतज्ञानं- धारणाध्यानसमाधित्रयमेकत्र संयम उक्तः, तेन परिणामत्रयं साक्षा-

भास्वती ।

अत इति । अतोऽतः परमुपात्तसर्वसाधनस्य = संयमसिद्धस्य बुभुत्सितार्थप्रतिपत्तये= जिज्ञासितविषयबोधाय संयमस्य विषय उपक्षिप्यते उपदिश्यत इत्यर्थः, धर्मेति । क्षणव्यापी परिणाम एव सूक्ष्मतमो विशेषो विषयस्य, संयमेन तस्य तत्क्रमस्य च साक्षात्करणात् सर्वभावानां निमित्तोपादानं साक्षात् कृतं भवति ततश्चातीतानागतज्ञानम् , धारणेति । तेन = संयमेन परिणामत्रयं साक्षात् क्रियमाणं सर्वतो विषयस्य क्रमतो धारणां प्रयोज्य ततो ध्यायेत् ततः समाहितो भूत्वा साक्षात् कुर्याद् , एवं क्रियमाणे तेषु विषयेष्व-

तत्त्ववैशारदी ।

अतः परमापादपरिसमाप्तेः संयमविषयस्तद्वशीकारसूचनी विभूतिश्च वक्तव्या, तत्रोक्तप्रकारं परिणामत्रयमेव तावत्प्रथममुपात्तसकलयोगाङ्गस्य योगिनः संयमविषयतयोपक्षिपति- "परिणामत्रयसंयमादतीतानागतज्ञानम्"

ननु यत्र संयमस्तत्रैव साक्षात्करणं तत्कथं परिणामत्रयसंयमोऽतीतानागते साक्षात्कारयेदित्यत आह—"तेन" इति । तेन परिणामत्रयं साक्षात्क्रियमाणं तेषु परिणामेष्वनुगते ये

पातञ्जलरहस्यम् ।

अष्टाङ्गे संयतस्य योगिनः पादावधि संयमसाध्या विभूतय इति दर्शयितुमाह–परीति । तेषु परिणामेषु धारणादित्रयेण विवक्षितार्थसिद्धिः संयमसाक्षात्कारयोर्न भिन्नविषयता यथा

वार्त्तिकम् ।

पादसमाप्तिपर्यन्तानि संयमसिद्धिसूत्राण्यवतारयति—अतो योगिन इति । ज्ञानसाधनानि योगाङ्गानि विस्तरेण व्याख्यातानि, योगकालीनावस्थाश्च चित्तस्य परिणामरूपा योगनिष्पत्त्याद्यवधारणाय दर्शिताः, अतः परं बुभुत्सितानां योगिभिर्जिज्ञासितानामर्थानां साक्षात्काराय यमादिसाधनसम्पन्नस्य योगिनः संयमविषय उपक्षिप्यते, उभयत्र संयमाद्यथा सिद्धिर्भवति तत्सर्वं विशिष्य प्रदर्श्यते पादसमाप्तिपर्यन्तमित्यर्थः, अत्र बुभुत्सितार्थप्रतिपत्तय इति वचनात् तत्तद्विभूतिकामैरेव ते संयमा कर्त्तव्याः केवलमुमुक्षुभिस्तु सत्त्वपुरुषान्यतामात्रसंयमः कर्त्तव्यः परवैराग्यायेति सूचितम् , एताश्च विभूतयः संयमसिद्धिसूचिका अपि ज्ञेयाः,

"परिणामत्रयसंयमादतीतानागतज्ञानम्" अस्य धर्मिणोऽयं धर्मपरिणामस्तस्य चायं लक्षणपरिणामः, लक्षणस्य चायं नवपुराणाद्यवस्थापरिणाम इत्येवमनुक्षणं यत्र कुत्र चिदर्थे संयमात्तत्साक्षात्कारे सति तदितरार्थानामपि धर्मादिपरिणामेष्वतीतानागतज्ञानं सङ्कल्पमात्रेण प्रणिधानक्लेशादेव भवतीत्यर्थः, अन्यविषयकसंयमात् प्रतिनियतपदार्थान्तरसाक्षात्कारश्च योगजधर्मबलाद्भवतीति शास्त्रप्रामाण्यादवधार्यते धर्मविशेषात्स्वर्गविशेषवत् तपोजन्यसिद्धिवत् भुवनज्ञानं सूर्ये संयमादिति वक्ष्यमाणसिद्धिवच्च, कश्चित्तु–समानविषयत्वानुरोधात् संयमविषययोरेवातीतानागतयोः साक्षात्कारो भवतीत्यर्थ इत्याह--तन्न–तर्हि तत्संयमात्तज्ज्ञानमित्येव सामान्यतः सूत्रं युज्येत, संयमस्य स्वविषयगोचरसाक्षात्कारजनकत्वनियमाद् , अपि च परिणामत्रयं साक्षात्क्रियमाणं तेष्वतीतानागतज्ञानं सम्पादयतीति भाष्ये पौनरुक्त्य-

त्क्रियमाणमतीतानागतज्ञानं तेषु सम्पादयति ॥ १६ ॥

**शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥**

तत्र वाग्वर्णेष्वेवार्थवती, श्रोत्रं च ध्वनिपरिणाममात्रविषयम्, पदं पुन-

भास्वती ।

तीतानागतं ज्ञानं सम्पादयति ॥ १६ ॥

शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करः = यो वाचकः शब्दः स एवार्थस्तदेव च ज्ञानमिति सङ्कीर्णता, तत्प्रविभागसंयमात् = प्रत्येकं विभज्य संयमात् सर्वभूतानां-रुतज्ञानम् = उच्चारितशब्दार्थज्ञानं भवेदिति सूत्रार्थः, तत्रेति । व्याचष्टे—तत्रैतद्विषये वागिन्द्रियं वर्णात्मकशब्दोच्चारणरूपकार्यवत्, श्रोत्रविषयः = ध्वनिमात्रः, न तु तदर्थः, पदं = वर्णात्मकं यदर्थाभिधानं यथा=घटादि, नादानुसंहारबुद्धिनिर्ग्राह्यम् = नादानां-वर्णानामनुसंहारबुद्धिः = एकत्वापादनबुद्धिः तया निर्ग्राह्यं वर्णानेकतः कृत्वा बुद्ध्या

तत्त्ववैशारदी ।

अतीतानागते तद्विषयं ज्ञानं सम्पादयति, परिणामत्रयसाक्षात्करणमेव तदन्तर्भूतातीतानागतसाक्षात्करणात्मकमिति न विषयभेदः संयमसाक्षात्कारयोरित्यर्थः ॥ १६ ॥

अयमपरः संयमस्य विषय उपक्षिप्यते—"श-नम्" । अत्र वाचकं शब्दमाचिख्यासुः प्रथमं तावद् वाग्व्यापारविषयमाह—"तत्र" इति । वाग् = वागिन्द्रियं वर्णव्यञ्जकमष्टस्थानकं, यथाऽऽह—

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" इति,

सा वाग् वर्णेष्वेव यथालोकप्रतीतिसिद्धेष्वर्थवती, न च वाचक इत्यर्थः, श्रोत्रव्यापारविषयं निरूपयति—"श्रोत्रम्" इति । श्रोत्रं पुनर्ध्वनेरुदानस्य वागिन्द्रियाभिघातिनो यः परिणतिभेदो वर्णात्मा तेनाकारेण परिणतं तन्मात्रविषयं, न तु वाचकविषयमित्यर्थः, यथा-लोकप्रतीति सिद्धेभ्यो वर्णेभ्यो वाचकं भिनत्ति—"पदम्" इति । पदं पुनर्वाचकं नादानुसंहा-

पातञ्जलरहस्यम् ।

घटं-करोमीत्यत्र ज्ञानेच्छाकृतीनामित्यर्थः ॥ १६ ॥

वार्त्तिकम् ।

मपि स्यादिति, भाष्ये तेष्विति । धर्मलक्षणावस्थापरिणामेषु सर्ववस्तुसाधारणेष्वित्यर्थः, शेषं सुगमम् ॥ १६ ॥

संयमान्तरस्य सिद्ध्यन्तरमाह—

"शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्" गौरित्यादिः शब्दो, गौरित्यादिरर्थो 'गौरित्यादिः प्रत्ययः, तेषां वक्ष्यमाणं संकेतरूपादध्यासात्संकरोऽविवेकाग्रहणं भवति, वस्तुतस्तु तेषां भेदोऽस्तिः अतस्तेषां प्रविभागे भेदे संयमात्साक्षात्कृते सति सर्वभूतानां रुतानि ज्ञायन्ते, अयं काकादिरिममर्थमेवं प्रतीत्यानेन शब्देन कथयतीत्येवमित्यर्थः, यद्यपि साक्षात्कृते सतीति सूत्रे नास्ति तथाऽपि संस्कारसाक्षात्करणादित्युत्तरसूत्रेण साक्षात्कारपर्यन्तस्यैव संयमस्य सिद्धिकथनात्सर्वत्र सूत्रे संयमस्य साक्षात्कारद्वारकत्वं व्याख्येयम्, अत एव भाष्यकारोऽप्यनेकसूत्रे दृग्दर्शनार्थसाक्षात्कारपर्यन्ततां संयमस्य व्याख्यास्यति, त्रिविधैरेव शब्दैरर्थप्रत्यययोस्तेषां शब्दानामन्योन्यं च संकरं दर्शयितुं शब्दानामेवादौ त्रैविध्यं दर्शयति भाष्यकारः—तत्र वागिति । तत्र शब्दमध्ये वागि-

नादानुसंहारबुद्धिनिर्ग्राह्यम् इति, वर्णा एकसमयासम्भवित्वात्परस्परनिरनुग्रहात्मानस्ते पदमसंस्पृश्यानुपस्थाप्याविर्भूतास्तिरोभूताश्चेति प्रत्येकमपदस्वरूपा उच्यन्ते, वर्णः पुनरेकैकः पदात्मा सर्वाभिधानशक्तिप्रचितः सहकारि-

भास्वती ।

पदं गृह्यत इत्यर्थः, वर्णा इति । एकसमयासम्भवित्वाद् = पूर्वोत्तरकालक्रमेणोच्चार्यमाणत्वाद्, न चैकसमयभाविनो वर्णाः ततस्ते परस्परनिरनुग्रहात्मानः = परस्परासङ्कीर्णाः, तत्समाहाररूपं पदम् असंस्पृश्य = अनुपस्थाप्य; अनिर्मायेत्यर्थः, आविर्भूतास्तिरोभूताश्च भवन्तः प्रत्येकमपदरूपा उच्यन्ते, वर्ण इति । एकैकव-

तत्त्ववैशारदी ।

रबुद्धिनिर्ग्राह्यं यथाप्रतीति सिद्धान् नादान् वर्णान् प्रत्येकं गृहीत्वाऽनु = पश्चाद् या संहरति = एकत्वमापादयति गौरित्येतदेकं पदमिति, तया पदं गृह्यते यद्यपि प्राच्योऽपि बुद्धयो वर्णाकारं पदमेव प्रत्येकं गोचरयन्ति तथाऽपि न विशदं प्रथते चरमे तु विज्ञाने तदतिविशदमिति नादानुसंहारबुद्धिनिर्ग्राह्यमुक्तम्, यस्तु वैयात्यादेकपदानुभवमविज्ञाय वर्णानेव वाचकानातिष्ठते तं प्रत्याह—"वर्णा" इति । ते खल्वमी वर्णाः प्रत्येकं वाच्यविषयांधियमादधीरन् नागदन्तका इव शिक्यावलम्बनं संहता वा ग्रावाण इव पिठरधारणम्? न तावत्प्रथमः कल्पः–एकस्मादर्थप्रतीतेरनुत्पत्तेः, उत्पत्तौ वा द्वितीयादीनामनुच्चारणप्रसङ्गः, निष्पादितक्रिये कर्मणि विशेषानाधायिनः साधनस्य साधनन्यायातिपातात्; तस्माद् द्वितीयः परिशिष्यते, सम्भवति हि ग्राव्णां संहतानां पिठरधारणमेकसमयभावित्वाद्, वर्णानां तु यौगपद्यासम्भवोऽतः परस्परमनुग्राह्यानुग्राहकत्वायोगात्सम्भूयापि नार्थधियमादधते, ते पदरूपमेकमसंस्पृशन्तस्तादात्म्येनात एवानुपस्थापयन्त आविर्भूतास्तिरोभूता–अयःशलाकाकल्पाः प्रत्येकमपदस्वरूपा उच्यन्ते, यदि पुनः पदमेकं तादात्म्येन संस्पृशेयुर्वर्णास्ततो नोक्तदोषप्रसङ्ग इत्याह—"वर्णः पुनरेकैकः पदात्मा" इति । सर्वाभिधानशक्तिप्रचितः = सर्वाभिरभिधानशक्तिभिर्निचितो, गौः, गणः, गौरं, नग, इत्यादिषु हि गकारो गोत्वाद्यर्थाभिधायिषु दृष्ट इति तत्तदभिधानशक्तिः, एवं सोमः शोचिरित्यादिष्वौकारा-द्यर्थाभिधायिषु पदेष्वोवर्णो दृष्टः सोऽपि तत्तदभिधानशक्तिः, एवं सर्वत्रोहनीयम्, स चैकैको-

पातञ्जलरहस्यम् ।

तत्र गौरित्यादिशब्दः श्रोत्रैकग्राह्यः, अर्थो द्रव्यं त्वक्चक्षुर्ग्राह्यं, शेषाणि पञ्चविषयाणीत्युक्तेः स्वमते पृथिव्यादिसमूहे शब्दार्थप्रत्ययानामितरेतराध्यासो घटाद्यर्थः, तथा च पाण्यादिचतुष्टयग्राह्यः, शब्दादयः पञ्च प्रत्येकं श्रोत्रादिपञ्चेन्द्रियग्राह्याः, ज्ञानं मानसम्बोद्धं साक्षिग्राह्यञ्चेति पदपदार्थज्ञानानि अयःशलाकासदृशानि परस्परमसङ्कीर्णानि यद्यपि पदवृत्तौ तादात्म्याध्यासवशादेकपात्रस्थजलदुग्धयोरिव सङ्कीर्णानि तेष्वेकैकसंयमत्रयधारणात् पिपीलिकादिमनुष्यान्तेषु ये परप्रत्ययार्थाः शब्दाः तेषां पिपीलिकाशब्दोऽयं मनुष्यशब्दोऽयमिति योगिनां ज्ञानं भवतीति सूत्रार्थः, उच्चरितप्रध्वंसिनां वर्णानां समसमयवर्त्तित्वं नास्तीत्याह–वर्णा इति । एकस्मिंस्तिष्ठति तदन्यस्य स्थितिरनुग्रहः ते वर्णाः पदं स्फोटाख्यं व्यङ्ग्यं नित्यञ्च पद्यतेऽर्थोऽनेनेति, नित्यानित्ययोः सम्बन्धो नास्तीत्याह–असंस्पृश्येति। जन्मविनाशशालिन इत्याह–आविरिति। अत एवाह–अपदस्वरूपा इति । वर्णस्वरूपमाह–वर्ण इति। पदात्मा गकारादिरोकारादिसहकारेण पदस्फोटं व्यञ्जन् निर्वाहकत्वेन पदात्मा सर्वस्य गोगणगमनगन्धादेर्याऽभिधायकशक्तिबोधकता तया प्रतीतो युक्तः वर्णान्तरमोकारादिः प्रतियोगी द्वितीयोऽनुयोगिनो गकारस्य

वार्त्तिकम् ।

न्द्रियं वर्णेष्वेव प्रयोजनवत् शब्देषु मध्ये वागिन्द्रियजन्यः शब्दो वर्ण एव न तु शङ्खादि-

वर्णान्तरप्रतियोगित्वाद् वैश्वरूप्यमिवापन्नः पूर्वश्चोत्तरेणोत्तरश्च पूर्वेण विशेषे

भास्वती।

र्णाः = प्रत्येकं वर्णः, पदात्मा = पदानामुपादानभूतः सर्वाभिधानशक्तिप्रचितः = सर्वाभि-
नशक्तिः प्रचिता सञ्चिता यस्मिन् सः = सर्वाभिधानशक्तिसम्पन्नः, सहयोगिवर्णान्तरप्रति-
सम्बन्धी भूत्वा वैश्वरूप्यमिवापन्नः = असङ्ख्यपदरूपमापन्नमिव, पूर्वोत्तररूपविशेषणाव-

तत्त्ववैशारदी।

वर्णो गकारादिः सहकारि यद्वर्णान्तरमोकारादि तदेव प्रतियोगि = प्रतिसम्बन्धि यस्य तत्त-
थोक्तस्तस्य भावस्तत्त्वं तस्माद्वैश्वरूप्यं = नानात्वमिवापन्नो न तु नानात्वमापन्नस्तस्य त-
त्त्वादेव, पूर्वो वर्णः = गकार उत्तरेणौकारेण गणादिपदेभ्यो व्यावर्त्त्य उत्तरश्चौकारो गकारेण
शोचिरादिपदेभ्यो व्यावर्त्त्य विशेषे = गोत्ववाचके गोपदस्फोटेऽवस्थापितोऽनुसंहारबुद्धौ
अयमभिसन्धिः—अर्थप्रत्ययो हि वर्णैर्नियतक्रमतया परस्परमसम्भवद्भिरशक्यः कर्त्तुम्,
न च संस्कारद्वाराऽग्नेयादीनामिव परमापूर्वं वा स्वर्गं वा जनयितव्येऽनियतक्रमाणामपि
साहित्यमर्थबुद्ध्युपजनने वर्णानामिति साम्प्रतम् ? विकल्पासहत्वात्, स खल्वयं वर्णानुभव-
जन्यः संस्कारः स्मृतिप्रसवहेतुः, अन्यो वाऽग्नेयादिजन्य इवापूर्वाभिधानः, न तावदनन्तरः,
कल्पनागौरवापत्तेः, स एव तावददृष्टपूर्वः कल्पनीयस्तस्य च क्रमवद्भिर्वर्णानुभवैरेकस्य
जन्यत्वं न सम्भवतीति तज्जातीयानेकावान्तरसंस्कारकल्पनेति गौरवम्, न चैष ज्ञापकहेत्व-
ङ्गमज्ञातस्तदङ्गतामनुभवतीति, न खलु संबन्धोऽर्थप्रत्यायनाङ्गमज्ञातोऽङ्गतामुपैति, स्मृति-
फलप्रसवानुमितस्तु संस्कारः स्वकारणानुभवविषयनियतो न विषयान्तरे प्रत्ययमाधा-
तुमुत्सहते, अन्यथा यत्किञ्चिदेवैकमनुभूय सर्वः सर्वं जानीयाद् इति, न च प्रत्येकवर्णानुभ-
वजनितसंस्कारपिण्डलब्धजन्मस्मृतिदर्पणसमारोहिणो वर्णाः समधिगतसहभावा वाचका-
इति साम्प्रतं ? क्रमाक्रमविपरीतक्रमानुभूतानां तत्राविशेषेणार्थधीजननप्रसङ्गाद्, न चैतत्स्मर-
णज्ञानं पूर्वानुभववर्त्तिनीं परम्परतां गोचरयितुमर्हति ? तस्माद् वर्णेभ्योऽसम्भवन्नर्थप्रत्यय-
एकपदानुभवमेव स्वनिमित्तमुपकल्पयति, न चैष पदेऽपि प्रसङ्गः ? तद्धि प्रत्येकमेव प्रय-
त्नभेदभिन्ना ध्वनयो व्यञ्जयन्तः परस्परविसदृशतत्तत्पदव्यञ्जकध्वनिभिस्तुल्यस्थानकरण-
निष्पन्नाः सदृशाः सन्तोऽन्योन्यविसदृशैः पदैः पदमेकं सदृशमापादयन्तः प्रतियोगिभेदेन
तत्सादृश्यानां भेदात्तदुपधानादेकमप्यनवयवमपि सावयवमिवानेकात्मकमिवावभासयन्ति,
यथा नियतवर्णपरिमाणसंस्थानं मुखमेकमपि मणिकृपाणदर्पणादयो विभिन्नवर्णपरिमाणसं-
स्थानमनेकमादर्शयन्ति, न परमार्थतः सादृश्योपधानकल्पिता भागा एव निर्भागस्य पदस्य
वर्णाः, तेन तद्बुद्धिर्वर्णात्मना पदभेदे स्फोटमभेदमेव निर्भागमेव सभेदमिव सभागमिवाल-
म्बते; अतो गोपदस्फोटभेदस्यैकस्य गकारो भागो गौरादिपदस्फोटसादृश्येन न निर्द्धारयति,
स्वभागिनमित्योकारेणविशिष्टो निर्धारयति, एवमोकारोऽपि भागः शोचिरादिपदसदृशतया न
शक्तो निर्द्धारयितुं स्वभागिनं गोपदस्फोटमिति गकारेण विशिष्टो निर्द्धारयति, असहभावि-
नामपि च संस्कारद्वारेणास्ति सहभाव इति विशेष्यविशेषणभावोपपत्तिः, न च भिन्नविषय-
त्वं संस्कारयोः, भागद्वयविषययोरनुभवयोस्तज्जन्मनोश्च संस्कारयोरेकपदविषयत्वात्, केवल-
भागानुभवेन पदमव्यक्तमनुभूयतेऽनुसंहारधिया तु भागानुभवयोनिसंस्कारलब्धजन्मना
व्यक्तमिति विशेषः, अव्यक्तानुभवाश्च प्राञ्चः संस्काराधानक्रमेण व्यक्तमनुभवमादधाना दृष्टा-

पातञ्जलरहस्यम्।

तत्त्वादिति, जराराजादिष्वेवमेवेत्याह-पूर्व इति। सास्नाऽऽदिमन्तं गोपिण्डम्, एकनिर्भासः

वार्त्तिकम्।

शब्दो नापि वाचकं पदमित्यर्थः, उरआदिषूत्पद्यमानः शब्दो वर्णः—

ऽवस्थापित इत्येवं बहवो वर्णाः क्रमानुरोधिनोऽर्थसङ्केतेनावच्छिन्ना इयन्त-एते सर्वाभिधानशक्तिपरिवृत्ता गकारौकारविसर्जनीयाः सास्नाऽऽदिमन्तमर्थं द्योतयन्तीति, तदेतेषामर्थसङ्केतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको-बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य संकेत्यते, तदेकं पदमेकबुद्धिविषय-

भास्वती ।

स्थापित इत्येवंरूपा बहवो वर्णाः क्रमानुरोधिनः=पूर्वोत्तरक्रमसापेक्षाः, अर्थसङ्केतेनावच्छिन्नाः=सङ्केतीकृतार्थमात्रवाचकाः, इयन्त एते=एतत्संख्यकाः, सर्वाभिधानसमर्था अपि गकारादिवर्णाः, तन्निर्मितं गौरिति पदं सङ्केतीकृतं सास्नाऽऽदिमन्तमर्थं द्योतयन्तीति,

तदेतेषां वर्णानामर्थसङ्केतेनावच्छिन्नानामुपसंहृताः=एकीकृता ध्वनिक्रमा येषां तादृशानां य एको बुद्धिनिर्भासः=बुद्धावेकत्वख्यातिस्तत् पदम्, तच्च वाच्यस्य वाचकं कृत्वा सङ्केत्यते,

तदेकमिति । गौरित्येकः स्फोट इति, एकबुद्धिविषयत्वात् पदमेकम्, तच्च एकप्रयत्नोत्थापितम्, अभागम्, अक्रमम्, अवर्णम्, क्रमत उच्चायमाणानां वर्णानामयौगपदिकत्वाद् बौद्धम्=बुद्धिनिर्माणम्, अन्त्यवर्णस्य शेषोच्चारितस्य वर्णस्य प्रत्ययव्यापारेण स्मृतावुपस्थापितम्, तच्च पदम् परत्र प्रतिपिपादयिषया=प्रज्ञापनेच्छया वक्तृभिर्वर्णैरवाभिधीयमानैः श्रूयमाणैश्च श्रोतृभिरनादिवाग्व्यवहारवासनाऽनुविद्धया लोकबुद्ध्या सिद्धवत्=शब्दार्थप्रत्यया एकवत् सम्प्रतिपत्त्या=व्यवहारपरम्परया प्रतीयते, तस्य पदस्य पदानामि-

तत्त्ववैशारदी ।

यथा दूराद्वनस्पतौ हस्तिप्रत्यया अव्यक्ता व्यक्तवनस्पतिप्रत्ययहेतवः, न चेयं विधा वर्णानामर्थप्रत्यायने सम्भविनी, नो खलु वर्णाः प्रत्येकमव्यक्तमर्थप्रत्ययमादधत्यन्ते व्यक्तमिति शक्यं वक्तुम्? प्रत्यक्षज्ञान एव नियमाद् व्यक्ताव्यक्तत्वस्य, वर्णधेयस्त्वर्थप्रत्ययो न प्रत्यक्षः, तदेष वर्णेभ्यो जायमानः स्फुट एव जायेत न वा जायेत न त्वस्फुटः, स्फोटस्य तु ध्वनिव्यङ्ग्यस्य प्रत्यक्षस्य सतः स्फुटास्फुटत्वे कल्प्येते इत्यसमानम्, एवं प्रत्येकवर्णानुभवजनितसंस्कारसहितश्रोत्रलब्धजन्मन्यनुसंहारबुद्धौ संहता वर्णा एकपदस्फोटभावमापन्नाः प्रयत्नविशेषव्यङ्ग्यतया प्रयत्नविशेषस्य च नियतक्रमापेक्षतया क्रमान्यत्वे तदभिव्यञ्जकप्रयत्नविशेषाभावेन तदभिव्यक्त्यभावप्रसङ्गात् क्रमानुरोधिनोऽर्थसङ्केतेनावच्छिन्नाः सङ्केतावच्छेदमेव लौकिकं सभागपदविषयं दर्शयन्ति, इयन्तो=द्वित्राः, त्रिचतुराः, पञ्चषा-एते सर्वाभिधानशक्तिपरिवृत्ता गकारौकारविसर्जनीयाः सास्नाऽऽदिमन्तमर्थमवद्योतयन्ति, तत्किमिदानीं संकेतानुसारेण वर्णानामेव वाचकत्वं, तथा च न पदं नाम किञ्चिदेकमित्यत-आह—"तदेतेषाम्" इति । ध्वनिनिमित्तः क्रमो ध्वनिक्रमः, उपसंहृतो ध्वनिक्रमो येषु ते तथोक्ताः, बुद्ध्या निर्भास्यते प्रकाश्यत इति बुद्धिनिर्भासः, संकेतावच्छिन्नाः स्थूलदर्शिलोकाशयानुरोधेन गकारौकारविसर्जनीया इत्युक्तम, गकारादीनामपि तद्भागतया तादात्म्येन वाचकत्वात्, प्रतीत्यनुसारतस्त्वेकमेव पदं वाचकमित्यर्थः, एतदेव स्पष्टयति—"तदे-

पातञ्जलरहस्यम् ।

एकया बुद्ध्या निर्भास्यते, एकं पदमिति प्रत्यक्षे सति यदेकार्थपरिच्छेदकत्वाद्वर्णानां पदैकत्वबुवार्त्तिकम् ।

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च ॥

एकप्रयत्नाक्षिप्तम् अभागमक्रममवर्णं बौद्धमन्त्यवर्णप्रत्ययव्यापारोपस्थापितं·

भास्वती।

त्यर्थः, सङ्केतबुद्धेः प्रविभागः = भेदः, तद् यथा–एतावतां वर्णानामेवञ्जातीयकोऽनुसंहारः= समाहारः, एकस्य सङ्केतीकृतस्यार्थस्य वाचक इति ।

तत्त्ववैशारदी ।

कम्' इति । तदेकं पदं लोकबुद्ध्या प्रतीयत इति संबन्धः कस्मादेकमित्यत आह—"एक· बुद्धिविषय" इति । गौरित्येकं पदमित्येकाकाराया बुद्धेर्विषयो यतस्तस्मादेकम्, तस्य व्यञ्ज· कमाह—"एकप्रयत्नाक्षिप्तम्" इति । रस इति पदव्यञ्जकात्प्रयत्नाद्विलक्षणः सर इति पद· व्यञ्जकः प्रयत्नः, स चोपक्रमतः सर—इति पदादिव्यक्तिलक्षणफलावच्छिन्नः पूर्वापरीभूत एक· स्तदाऽऽक्षिप्तम् , भागानां सादृश्योपधानभेदकल्पितानां परमार्थसत्तामभावाद् अभागम् अत· एव पूर्वापरीभूतभागाभावादक्रमम् , ननु वर्णाः पूर्वापरीभूतास्ते चास्य भागा इति कथमक्रम· मभागं चेत्यत आह—"अवर्णम्" इति । न ह्यस्य वर्णा भागाः, किन्तु सादृश्योपधानभेदा· त्पदमेव तेन तदाकारेणापरमार्थसता प्रथते न हि मणिकृपाणदर्पणादिवर्त्तीनि मुखानि मुख· स्य परमार्थसतोऽवयवा इति, बौद्धम् = अनुसंहारबुद्धिविदितम् अन्त्यवर्णप्रत्ययस्य व्यापा· रः = संस्कारः पूर्ववर्णानुभवजनितसंस्कारसहितः, तेनोपस्थापितं = विषयीकृतम् वर्णानुभव· तत्संस्काराणां च पदविषयत्वमुपपादितमधस्ताद्, स्यादेतत्–अभागमक्रममवर्णं चेत् पदतत्त्वं·

वार्त्तिकम् ।

इति स्मरणाद् , वागिन्द्रियस्य च शरीराद्बहिर्वृत्तिर्नास्तिः अतो न श्रोत्रग्राह्यवक्ष्यमाणश· ब्दो नापि तदनन्तरं श्रोतृबुद्धिग्राह्यो वाचकशब्दो वागिन्द्रियकार्यः श्रोतृश्रोत्रदेशे वक्तृवागि· न्द्रियासम्बन्धेन श्रोत्रग्राह्यशब्दोत्पादकत्वासम्भवाद् इति, वागिन्द्रियजन्याच्छब्दाच्छब्दान्तर· माह–श्रोत्रं चेति। ध्वनिर्नाम वागिन्द्रियशङ्खादिष्वभिहतस्योदानवायोः परिणामभेदः, येन परि· णामेनोदानवायुर्वक्तृदेहादुत्थाय शब्दधारां जनयन् श्रोतृश्रोत्रं प्राप्नोति तस्य ध्वनेः परिणामभूतं· वर्णावर्णसाधारणं नादाख्यं शब्दसामान्यमेव श्रोत्रस्य विषयः न तु ध्वन्यपरिणामभूतं वाचकं· पदमित्यर्थः, स च शब्दो वर्णजातीयत्वेन वर्ण इत्युच्यते, तृतीयं शब्दमाह–पदं पुनर्नादानुसंहार· बुद्धिनिर्ग्राह्यमिति। यथाप्रतीतिसिद्धान्नादाख्यान् गकारादिवर्णान् प्रत्येकं पदमिति गृहीत्वाऽनु पश्चाद्या बुद्धिः संहरति = एकत्वमापादयति गौरित्येकं पदमिति तया बुद्ध्या निर्ग्राह्यः वर्णेभ्यो· ऽतिरिक्तमखण्डमेकत्वेनोत्पद्यमानं वक्ष्यमाणं स्फोटाख्यमिति शेषः, तथा चायं तृतीयः शब्दो· ऽन्तःकरणस्यैव ग्राह्य इत्यर्थः, तस्य हि पदस्य श्रोत्रग्राह्यत्वेऽनुसंहारबुद्धेरन्तःकरणनिष्ठायाः वैयधिकरण्येन हेतुत्वं स्यात् , तच्चायुक्तं—सामानाधिकरण्यस्य प्रत्यासत्तितायां लाघवाद्, न चानुसंहारबुद्धिरपि श्रोत्रादेरेवास्त्विति वाच्यम् ? असम्भवाद् वर्णानां ह्यैक्यापादनमानुपूर्व्यै· क्यात् सा चानुपूर्वी गकारोत्तरौकारादिरूपिणी नानेकवर्णपदेषु श्रोत्रेण ग्रहीतुं शक्यते, आशु· विनाशितया वर्णानां मेलनाभावात् पूर्वपूर्ववर्णसंस्काराणां तत्स्मृतीनां चान्तःकरणनिष्ठाना· मन्तःकरणसहकारित्वमेवोचितम् , अतः स्मृतानां वर्णानां मनसैवानुपूर्वी ग्रहीतुं शक्यत इति भावः, ननु स्फोटाख्यः शब्दः कीदृशः किङ्कारणकः किंप्रमाणक इति ? अत्रोच्यते–यथा बीजा· ङ्कुराद्यनेकावस्थो वृक्षधर्मी क्रमिकाभ्यस्ताभ्योऽतिरिक्तः पल्लवादिरूपाशेषावस्थया व्यज्यते अयमाम्रवृक्षो न वृक्षान्तरमेवंरूपेण, स च बीजादिभ्यो भिन्नाभिन्नः भेदाभेदयोरनुभवात् तथैव गकारौकाराद्यनेकावस्थो गौरित्यादिरखण्डः स्फोटशब्दः क्रमिकाभ्यो गकाराद्यवस्थाभ्योऽति· रिक्त आनुपूर्वीविशेषविशिष्टया विसर्जनीयादिरूपचरमावस्थया व्यज्यते इदं गौरिति पदं न तु गौरइतीत्यादिरूपेण, तच्च स्फोटपदं गकारादिवर्णेभ्यो भिन्नाभिन्नं भेदाभेदयोरनुभवात्, स च

पातञ्जलरहस्यम्।

न्द्विरुपचार इति न कल्पनेति भावः, उक्तामभिधानशक्तिं सोपपत्तिकामाह—सर्वपदे-ष्विति। यत्रापि क्रियापदं नास्ति तत्राप्यस्तिर्भवन्तीपरः प्रयुज्यते, कृत्वस्तयः क्रियासामान्यवाचिन इति, फणिमतमाश्रित्याह-न सत्तामिति। आक्षेपलब्धस्यानुवादमाह-वाक्यार्थे पदरचना यथाऽयं श्रोत्रिय इति, श्रोत्रियत्वं छन्दोऽध्ययनकर्तृत्वं, व्याकरणाभावेऽबोधकतैवेत्याह--अन्यथेति। फलितमाह-एवमिति-भाष्यार्थः, वागिन्द्रियमष्टगोलकं यथाऽऽह-अष्टौ स्थानानीति, न च वाचकं, वाचकस्तु शब्द एवेत्यर्थः, स चाकाशवायुप्रभवशरीरात् समुच्चारयितुर्वक्त्रमुपैति, नादस्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः, स्थानान्तरे "वैखरीशब्दजन्मभूरि"त्युक्तेः, परापश्यन्तीमध्यमावैखरीति स्थानानीत्यर्थः, तया = बुद्ध्या, नागदन्ताः = भित्तिष्वारोपिततिर्यग्दण्डाः, शिक्यं नाम रज्जुनिर्मितं घटादिधारकं, त्रयो ग्रावाणः वर्त्तुलाकाराः पाषाणाः, पिठरम् अदनादिपाकपात्रम्, उच्चरितप्रध्वंसित्वाद् वर्णानां कुतो यौगपद्यमित्याह-वर्णानां त्विति। असम्भवद्भिरसहावस्थितिभिः, आग्नेयादीनां यदाग्नेयोऽष्टकपालो भवत्यमावास्यायां पौर्णमास्यां चाच्युतो भवति उपांशुयाजमन्तरा, एवमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदिति पौर्णमासे यागत्रयं क्रमेण भवति, तेषाञ्चाशुतरविनाशेन प्रत्येकं पूर्वं विना परमापूर्वारम्भकत्वायोगात् क्रमेण स्थाय्येवोत्पत्त्यपूर्वत्रयं स्वीकृतं तद्वन्नेत्याह—न चेति। कुतो नेत्याह—स खल्विति। गौरवं व्यनक्ति-स एवेति। धूमादिरिव नाज्ञातः प्रत्यायने हेतुरित्याह-न चैष इति। स्मृतिजनकसंस्कारस्तु समानविषय एवेति, खले कपोतन्यायेन, दूषणमाह-क्रमेति। एकपदा-

वार्त्तिकम्।

पदाख्यः शब्दोऽर्थस्फुटीकरणात् स्फोट इत्युच्यते स्फोटशब्दस्य च कारणम् एकप्रयत्नजन्योध्वनिविशेषः प्रयत्नभेदोनोच्चारणे व्यवधाने सत्येकपदव्यवहाराभावाद्, गौरित्येकपदमिति व्यवहारस्तु स्फोटे प्रमाणं वर्णानामनेकत्वेन तैरेकत्वव्यवहारस्याञ्जस्येनानुपपत्तेः तथा प्रत्येकवर्णादनुत्पद्यमानस्यार्थप्रत्ययस्य हेतुत्वं च स्फोटे प्रमाणम्, यदि चानुपूर्वीविशिष्टसमूहस्यैकत्वादेकत्वव्यवहारः तेनैव रूपेणार्थप्रत्ययहेतुत्वं च स्वीक्रियते तर्हि संयोगविशेषावच्छिन्नावयवसमूहादेवैकत्वव्यवहारजलाद्याहरणयोरुपपत्त्या घटाद्यवयविमात्रोच्छेदप्रसङ्गः युक्तिसाम्यात्, नन्वेवं युक्तिसाम्याद्वाक्यमपि स्फोटरूपम् एकैकं स्याद् इति चेद्? बाधकाभावे सतीष्टत्वादिति दिक्, भाष्यकारस्तु संक्षेपतो वर्णानां पदत्वं निराकरोति-वर्णा एकेति। अनेकवर्णा एकसमयस्थित्यनर्हत्वात् परस्परं निरनुग्रहात्मानः = असम्बद्धस्वभावा अतस्ते पदमसंस्पृश्य पदत्वमप्राप्य अत एवार्थमनुपस्थाप्याविर्भूयैव क्षणात्तिरोभूताश्चेति कृत्वा प्रत्येकमपदस्वरूपाविवेकिभिरुच्यन्त इत्यर्थः, अत्र स्वरूपग्रहणादवस्थाऽवस्थावतोरभेदेन वर्णानां पदत्वं न निराकृतम्, ननु यदि वर्णाः पदस्वरूपा न भवन्ति तर्हि कथमियन्तो वर्णाः क्रमविशेषावच्छिन्ना अस्यार्थस्य वाचका इति लोकैः संकेत्यन्त इत्याशङ्कां परिहरति-वर्णाः पुनरित्यादिना-संकेत्यत इति पर्य्यन्तेनेत्येकवाक्येन, अयमर्थः-यद्यपि वर्णाः पदाद् भिन्नास्तथाऽप्यवस्थाऽवस्थावतोरभेदस्यापि सत्त्वादेकैकोऽपि वर्णः पदात्मा पदाभिन्नो भवति बीजाङ्कुरादिरिव वृक्षाभिन्नोऽत एव पदरूपेण सर्वपदार्थाभिधानयोग्यतासम्पन्नः, अत्र हेतुमाह-सहकारीति। पदभावे सहकारीणि यानि वर्णान्तराणि तत्प्रतियोगित्वात् तत्सम्बन्धित्वाद् अनन्तपदरूपतामिवापन्नो भवति, इवशब्दोऽत्र वैश्वरूप्ययोग्यतामात्रप्रतिपादनार्थः, वैश्वरूप्यप्रकारमाह-पूर्वो गकार उत्तरेणौरिति वर्णद्वयेन गण इत्यादिपदात् व्यावर्त्यते, उत्तरश्च विसर्जनीयः पूर्वेण गौरितिवर्णद्वयेन गौर इत्यादिपदेभ्यो व्यावर्त्य विशेषे गौरिति स्फोटपदेऽखण्डे तादात्म्येनावस्थापितो भवति, इति हेतोरेवंरूपा बहवो वर्णाः क्रमानुरोधिन आनुपूर्वीविशेषसापेक्षाः पदाभेदतोऽर्थसंकेतेनावच्छिन्ना नियमिता भूत्वा सर्वाभिधानसमर्था अपि इयन्त एतावत्संख्यका एते गकारादयो गामेवा-

पातञ्जलरहस्यम् ।

नुभवम् एकत्वधीविषयं पदस्फोटं, पदस्फोटेऽप्युपपत्तिमाह-तद्धीति तत् स्फोटाख्यं-पदं, न चानित्यवर्णव्यङ्ग्यत्वेऽनित्यत्वं पदस्येति वाच्यं ? न हि घटपटादिव्यङ्ग्यत्वे घटत्वादेरनित्यत्त्वं, तुल्यस्थानकरणनिष्पन्ना गकारादयोऽन्योन्यविशदृशैरोकारादिभिः पदैः पदव्यञ्जकैः, एकमनवयवपदस्फोटम् , मणौ वर्तुलं कृपाणे दीर्घं दर्पणे स्वच्छम् समग्रस्थानञ्चेत्यनुभवसिद्धं, सभागादि तु बुद्धेर्दुर्वचमित्याह—तेनेति । गोपदस्फोटभेदस्य गोपदविशेषस्य गकारेण विशिष्ट ओकार इति शेषः, संदेह एव किं न स्यादिति चेत्तत्राह-प्रत्यक्षज्ञान एवेति । ततः किं ? तत्राह-तदेष इति । उपसंहरति-एवं प्रत्येकवर्णेति । यथा रत्नतत्त्वनिश्चये प्राञ्चः प्रत्यक्षप्रत्यया एकैकांशं व्यञ्जयन्ति तथाऽत्र गृहीतैकैकवर्णस्फोटस्थानसङ्ख्याऽपि षडवयवा परमाणव इतिवत् कल्पितावयवव्यञ्जकत्वेनान्त्यवर्णप्रत्यक्षसहकृताः पदस्फोटं व्यञ्जयन्ति सभागमिव व्यञ्जयन्तीत्यर्थः, घटादौ घोत्तरत्वेन यः संकेतः घट इति तेनावच्छिन्ना बोधयन्तीत्यर्थः, सर्वाभिधानशक्तिप्रचितो गकारो गोचरगोगगगगनादौ शक्तः, ओकारः सोमशोचिःसोपानादौ शक्त इति, तर्हि पूर्वपूर्ववर्णानुभवसंस्कारसहितान्त्यवर्णप्रत्ययाः सन्तु बोधकाः कृतं स्फोटात्मना तत्राह—तदेकमित्यादि-प्रतीयत इत्यन्तेन भाष्येण, न हि घटाः सहस्रं घटत्वमेकं व्यञ्जयन्तो घटत्वं नानेति व्यञ्जयन्ति; एवं व्यङ्ग्यं लाघवादेकमेवेत्याह-न हीति । व्यञ्जकमण्यादिभेदात्तद्व्यङ्ग्यं मुखं नानेति भावः, एतन्मते संस्कार एव बोधको नानुभव इत्याह—अन्त्यवर्णेति । पदविषयत्वं स्फोटविषयत्वमिति, सर्वत्र हि लोहितस्फटिकादावुपाधिविनिर्मोके स्फटिकः स्वच्छो दृश्यते पदं वर्णोपलब्धिं विना कदाऽपि नोपलभ्यत इति नास्त्येवेत्याशङ्क्य समाधत्ते—परत्रेत्यादि-प्रतीयतइत्यन्तेन, अङ्गारद्रव्यं यथा कालिमदोषदुष्टत्वेनोपलब्धमिति तस्य स्वरूपं नास्तीति तथा लाघवसहकृतैकत्वप्रमाप्रत्ययवेद्यस्य कुतो नास्तित्वं नित्यानुमेयपदार्थवन्नैयायिकानां विशेषवद् भट्टानां श्रुत्यर्थापत्तिगम्यापूर्ववद् गुरूणां नियोगवद्वेदान्तिनां-ज्ञानवदत उक्तं चन्द्रमसि शशशावके ब्रह्म निपुणतरैरनुपलभ्यमानोऽपि सन्दिहाना इति सन्देहस्यैकैककोटिपर्यवसायित्वेऽपि लाघवान्नावकोटात्रिति भावः,सर्वं हि वाक्यं क्रियया समाप्यते "क्रिया वा कारकान्वितेत्युक्तिमाश्रित्याह—तदवमित्यादि—क्रियाभदाव्यभिचारीत्यन्तेन, भवतीति प्रथमपुरुषः तिप्सञ्ज्ञेति, वाक्ये शक्तिः वाक्यस्य वाचितोपादानादिविषयपदार्थप्रतिपादकता सा पदानामस्ति क्रियाकारकार्थप्रतिपादनसमर्थपदान्तराव्यभिचारादिति भावः, विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्ज्ञानाशक्तेः पदमात्रप्रयोगस्य निरर्थकत्वादिति, अभिसं-

वार्त्तिकम् ।

पस्थापयन्ति इत्यतस्तु तेन प्रकारेण वर्णमुखेन तत्पदमेवाविवेकतः संकेत्यत इत्यन्वयः, तत्र हेतुर्वाच्यस्य वाचकमिति, पदमेव हि वाच्यस्य वाचकमुपस्थापकम् अन्यस्यान्यरूपेण संकेते हेतुरेतेषामित्यादि-निर्भास इत्यन्तम् , यः पदाख्यो बुद्धिमात्रग्राह्यः स्फोट एतेषां वर्णानाम् अथसंकेतेनावच्छिन्नानां तथा समाप्तो ध्वनिजन्यः क्रम आनुपूर्वीविशेषो येषां तादृशानाम् एकोऽभिन्न इति पदस्य स्वरूपाख्यानम् , समाप्ता।वाक्यार्थः, अयं भावः-यथा संयुक्तं कपालद्वयं जलाहरणहेतुरित्यविवेकतो बालकेभ्य उपदिश्यते पटादिभ्यो घटस्य व्यावर्त्तकान्तरासम्भवात् , ततश्च बालकः कपालाविवेकेन घटस्यैव जलाहरणहेतुत्वं गृह्णाति एवमेव स्फोटान्तरव्यावर्त्तनाय वर्णाविवेकेनैव स्फोटे संकेतोपदेशः संकेतग्रहश्च भवतीति न वर्णेषु संकेतताऽनुपपत्तिरिति, त्रिविधं शब्दं प्रदर्श्येदानीं तेषां मध्यात्संकेतकारणं प्रतिपादयति-तदेकमिति । प्रतीयत इत्यनेनान्वयः, अयमर्थः-यद्यपि तत्पदं स्फोटाख्यम् एकमेव न तु वर्णवदनेकम् एकत्वे प्रमाणमेकबुद्धिविषयमिति तथा वक्तुरेकेनैव प्रयत्नेन ध्वन्यादिद्वारोत्पादितं वर्णास्तु प्रयत्नभेदेनाप्युत्पद्यन्ते तथाऽभागं निरंशं, वर्णव्यूहस्तु वनवत् सांशः; तथाऽक्रमम् एकदैवोत्पद्य-

**परत्र प्रतिपिपादयिषया वर्णैरेवाभिधीयमानैः श्रूयमाणश्च श्रोतृभिरनादिवाग्व्यवहारवासनाऽनुविद्धया लोकबुद्ध्या सिद्धवत्संप्रतिपत्त्या प्रतीयते, तस्य संकेतबुद्धितः प्रविभागः = एतावतामेवंजातीयकोऽनुसंहार एकस्यार्थस्य वाचक इति, सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं-**

भास्वती ।

सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः=स्मृतावात्मा यस्य तादृश-

तत्त्ववैशारदी ।

कस्मादेवंविधं कदा चिन्न प्रथते न हि लाक्षारसावसेकोपधानापादितारुणभावः स्फटिकमणिस्तदपगमे स्वच्छो धवलो नानुभूयते तस्मात्पारमार्थिका एव वर्णा इत्यत आह—"परत्र" इति । प्रतिपिपादयिषया वर्णैरेवाभिधीयमानैः = उच्चार्य्यमाणैः श्रूयमाणैश्च श्रोतृभिरनादिर्योऽयं वाग्व्यवहारो विभक्तवर्णपदनिबन्धनः, तज्जनिता वासना।साऽप्यनादिरेव तदनुविद्धया = तद्वासितया लोकबुद्ध्या विभक्तवर्णरचितपदावगाहिन्या सिद्धवत् = परमार्थवत् सम्प्रतिपत्त्या = संवादेन वृद्धानां पदं प्रतीयते, एतदुक्तं भवति—अस्ति कश्चिदुपाधिर्य उपाधेयेन संयुज्यते वियुज्यते च यथ लाक्षाऽऽदिः, तत्र तद्वियोगे स्फटिकः स्वाभाविकेन स्वच्छधवलेन रूपेण प्रकाशत इति युज्यते पदप्रत्ययस्य तु प्रयत्नभेदोपनीतध्वनिभेदादन्यतोऽनुत्पादात्तस्य च सदा सादृश्यदोषरूषिततया वर्णात्मनैव प्रत्ययजनकत्वमिति कुतो निरुपाधिनः पदस्य प्रथा ? यथाऽऽहुः—

"ध्वनय' सदृशात्मानो विपर्य्यासस्य हेतवः ।
उपलम्भकमेतेषां विपर्य्यासस्य कारणम् ॥
उपायत्वाच्च नियतः पददर्शितदर्शिनाम् ।
ज्ञानस्येव च बाधेयं लोके ध्रुवमुपप्लव." ॥ इति ,

यतः पदात्मा विभक्तवर्णरूपितः प्रकाशतेऽतः स्थूलदर्शी लोको वर्णानेव पदमभिमन्यमानस्तानेव प्रकारभेदभाजोऽर्थभेदे सङ्केतयतीत्याह-"तस्य" इति । तस्य पदस्याजानत एकस्यापि सङ्केतबुद्धितः स्थूलदर्शिलोकहिताय वर्णात्मना विभागः, विभागमाह-"एतावताम्" इति । एतावतां न न्यूनानामधिकानां वा, एवंजातीयको नैरन्तर्य्यक्रमविशेषः, अनुसंहार = एकबुद्ध्युपग्रहः, एकस्यार्थस्य = गोत्वादेर्वाचक इति, ननु यद्येकस्यार्थस्यायं शब्दो वाचक- इति संकेतो, हन्त भोः शब्दार्थयोर्नेतरेतराध्यासस्तर्हीत्यत आह—"संकेतस्तु" इति । स्मृ-

पातञ्जलरहस्यम् ।

मात्मः = समभिव्याहारः, उपसंहरति-तथा चेति। अस्यापि पदस्येत्यर्थः. शङ्कते-लाघवाय पद-

वार्त्तिकम् ।

मानं न तु वर्णवत् क्रमेण, अत एभिर्हेतुभिर्वर्णभिन्नं, किञ्च बोद्धं बुद्धिमात्रग्राह्यं तथाऽन्त्यवर्णस्य प्रत्ययरूपव्यापारेणाभिव्यक्तं वर्णास्तु नेत्थं तथाऽपि परप्रतिपिपादयिषया वक्तृभिरभिधीयमानैः श्रोतृभिश्च श्रूयमाणैर्वर्णैरेवंरूपैः सिद्धवत्परमार्थवदन्योन्यसम्प्रतिपत्त्या संवादेन प्रतीयते व्यवह्रियते, न तु वर्णेभ्योऽन्येन रूपेण, तत्र हेतुरनादिवाग्व्यवहारवासनावशीकृतया लौकिकबुद्ध्येति, अत्राभिधीयमानैरित्यनेन वागिन्द्रियविषयवर्णाविवेकः पदस्येति श्रूयमाणैरित्यनेन श्रोत्रविषयशब्दाविवेकः पदस्येति बोध्यम्, तदेवं त्रिविधशब्दानामन्योन्याध्यासात्सङ्करो दर्शितः, इदानीं त्रिविधशब्देनार्थप्रत्यययोरध्यासं प्रतिपादयितुं शब्दव्यवहारस्य संकेतग्रहमूलकत्वमाह-तस्येति । तस्य पदस्य प्रविभागो विषयव्यवस्था संकेतग्रहादेव भवति, प्रविभागमेवाह-एतावतामिति । एतावतां वर्णानाम् एवंजातीयक एवमानुपूर्वीकोऽनुसंहारो मिलनमेतस्यार्थस्य वाचक उपस्थापक इत्येवंरूपो विभाग इत्यर्थः, एकस्यार्थस्येति पाठेऽर्थविशेषस्येत्यर्थः, संकेतशब्दार्थमाह-संकेतस्त्विति । अध्यासः

**शब्दः सोऽयमर्थः, योऽर्थः स शब्द इत्येवमितरेतराध्यासरूपः संकेतो भवति, इत्येवमेते शब्दार्थप्रत्यया इतरेतराध्यासात्सङ्कीर्णाः-गौरिति शब्दो,गौरित्यर्थो-**

भास्वती ।

स्तत्स्मृतिस्वरूपः, तद् यथा—"योऽयं शब्दः सोऽयमर्थः योऽर्थः स शब्दः" इति, य एषां प्रविभागज्ञः प्रविभागेणैकैकस्मिन् समाधानसमर्थः, स सर्ववित् = सर्वाणि रुतानि यदर्थे नोच्चारितानि तदर्थवित्,

तत्त्ववैशारदी ।

तावात्मा = स्वरूपं यस्य स तथोक्तः, न हि कृत इत्येव संकेतोऽर्थमवधारयत्यपि तु स्मर्यमाणः, एतदुक्तं भवति—अभिन्नाकार एव सङ्केते कथञ्चिद् भेदं विकल्प्य षष्ठी प्रयुक्तेति, य एषां प्रविभागज्ञः स तत्र संयमे भवति सर्ववित् = सर्वभूतरुतज्ञ इति, तदेवं विकल्पितवर्णभागमेकमनवयवं पदं व्युत्पाद्य कल्पितपदविभागं वाक्यमेकमनवयवं व्युत्पादयितुमाह—"सर्वपदेषु चास्ति वाक्यशक्तिः" इति । अयमभिसन्धिः-परप्रत्यायनाय शब्दः प्रयुज्यते तदेव च परं प्रति प्रतिपादयितव्यं यत्तैः प्रतिपित्सितं तदेव च तैः प्रतिपित्सितं यदुपादानादिगोचरः; न पदार्थमात्रं तद्गोचरः, किन्तु वाक्यार्थ इति वाक्यार्थपरा एव सर्वे शब्दाः तेन स एव तेषामर्थः; अतो यत्रापि केवलस्य पदस्य प्रयोगस्तत्रापि पदान्तरेण सहैकीकृत्य ततोऽर्थो गम्यते न तु केवलात् ,कस्मात् तन्मात्रस्यासामर्थ्यात् तथा च वाक्यमेव तत्र तत्र वाचकं न तु पदानि; तद्भागतया तु तेषामप्यस्ति वाक्यार्थवाचकशक्तिः पदार्थे इव पदभागतया वर्णानाम्; तेन यथा वर्ण एकैकः सर्वपदार्थाभिधानशक्तिप्रचित एवं पदमप्येकैकं सर्ववाक्यार्थाभिधानशक्तिप्रचितम् , तदिदमुक्तं-"सर्वपदेषु चास्ति वाक्यशक्तिः, वृक्ष इत्युक्तेऽस्तीति गम्यते" = अध्याहृतास्तिपदसहितं वृक्ष इति पदं वाक्यार्थे वर्त्तत इति तद्भागत्वाद् वृक्षपदं तत्र वर्त्तत-

पातञ्जलरहस्यम् ।

मात्रं प्रयोक्तव्यं न पदसमुदाय इति-स्यादेतदिति, समाधत्ते-उक्तं पदमात्रप्रयोगस्य व्यर्थत्वादिति, लाघवं विशदयति-किमर्थमिति । साधारणो धर्मो व्यामोहाय केवलं न पुरुषार्थायेत्याह-अन्यथेति । भवतिपदमुत्पत्तौ सम्बोधने सप्तम्यर्थे च साधारणं किं बोधयतीति व्यामोहोऽतः

वार्त्तिकम् ।

संकेतकर्त्तुराहार्यारोपः, आरोपिताभेद इति यावत्, तस्यैव च ज्ञानं पदार्थोपस्थापकं तत्राधुनिकनामादिकल्पनाव्यावर्त्तनाय स्मृत्यात्मक इति विषयविषयिणोरभेदात् पाणिन्यादिस्मृत इत्यर्थः, न च कल्पिताभेदस्यासतः कथं संकेतत्वमिति वाच्यम् ? असत्ख्यात्यनभ्युपगमेनान्यत्र सत एवाभेदस्यान्यत्र कल्पनादिति, अध्यासस्य संकेतत्वे प्रमाणमाह-योऽयं शब्द इत्यादिना-भवतीत्यन्तेन, ओमित्येकाक्षरं ब्रह्मेत्यादिः शास्त्रेषु कम्बुग्रीवादिमान् घट इत्यादिर्लोके च पदपदार्थयोरभेदारोप एव संकेतो दृश्यत इत्यर्थः, ओमित्यादिशब्दवाच्यत्वलक्षणायां प्रमाणाभावादिति, अत एव कोशेषु अमरा निर्जरा देवा इत्यादिना शब्दार्थयोरारोप्यमाणाभेद एव संकेतो दृश्यत इति, अत एवैतेनानाद्यभेदारोपेणागमिनो मन्त्रार्थयोरभेदोपासनामुपदिशन्ति, मीमांसकाश्च मन्त्रमयीं देवतामाहुः, या त्वस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्वं शक्तिरिति तन्त्रान्तरे लक्षिता साऽप्रामाणिकी लक्षणाऽदिसाधारणी च, अपि चेश्वरमजानतोऽपि शब्दार्थप्रत्ययो दृश्यते तथा पदपदार्थयोरभेदेन संकेतोऽपि न युज्येतेत्यादिदोषो बोध्यः, इदानीमुक्तसंकेतबुद्धिनिमित्तकः त्रयाणां संकेत इत्याह-एवमेत इति । एवं संकेतबुद्धेः कारणाद् एते त्रिविधाः शब्दा अर्थप्रत्ययौ च सङ्कीर्णावविविक्तौ च, तत्र संकेतग्रह एव शब्दार्थयोरितरेतराध्यासः शब्दार्थयोस्तु प्रत्ययेन सहैकाकारत्वादन्योऽध्यासः प्रसिद्ध एवेति भावः, संकराकारमाह—गौरिति । य इति । स एव शब्दादीनां तत्त्वज्ञो नान्य इत्यर्थः, वर्ण-

गौरिति ज्ञानं, य एषाम्प्रविभागज्ञः स सर्ववित्, सर्वपदेषु चास्ति वाक्यशक्ति-र्वृक्षइत्युक्तेऽस्तीति गम्यते, न सत्तां पदार्थो व्यभिचरतीति, तथा न ह्यसाधना क्रियाऽस्तीति, तथा च पचतीत्युक्ते सर्वकारकाणामाक्षेपो, नियमार्थोऽनुवादः कर्तृकर्मकरणानां चैत्राग्नितण्डुलानामिति, दृष्टं च वाक्यार्थे पदरचनं श्रो-

भास्वती।

सर्वेति। वाक्यशक्तिः=वाक्यं क्रियाकारकसम्बन्धबोधकः पदप्रयोगस्तच्छक्तिः, उदाहरणं वृक्ष इति, न सत्तां पदार्थो व्यभिचरति=अन्यक्रियाऽभावेऽपि सत्त्वक्रियया सहाभिधीयमानः पदार्थो योज्यो भवेत्, तथा हि—असाधना कारकहीना क्रिया नास्ति, तथा च पचतीत्युक्ते सर्वकारकाणामाक्षेपः=अध्याहारः स्यात्, अपि च तत्र नियमार्थः=अन्यव्यावर्त्तनार्थोऽनुवादः=पुनः कथनं कर्त्तव्यः केषामनुवादस्तदाह-कर्त्तृकर्मकरणानां चैत्रतण्डुलाग्नीनामिति, पचतीत्यत्र चैत्रोऽग्निना तण्डुलान् पचतीति कारकपदक्रियापदसमस्ता वाक्यशक्तिस्तत्रास्तीत्यर्थः, दृष्टमिति। यश्छन्दोऽधीत इति वाक्यार्थे श्रोत्रिय-

तत्त्ववैशारदी।

इत्यर्थः कस्मात् पुनरस्तीति गम्यत इत्यत ? आह—"न सत्तां पदार्थो व्यभिचरति" इति। लोक एव हि पदानामर्थावधारणोपायः, स च केवलं पदार्थमस्त्यर्थेनाभिसमस्य सर्वत्र वाक्यार्थीकरोति सोऽयमव्यभिचारः सत्तया पदार्थस्य अत एव शब्दवृत्तिविदां व्यवहारः—"यत्रान्यत् क्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रयोक्तव्य" इति। क्रियाभेदाव्यभिचारि प्रातिपदिकमुक्त्वा क्रियाभेदं कारकाव्यभिचारिणं दर्शयति—"तथा च पचतीत्युक्ते" इति। पचतीत्युक्ते हि कारकमात्रस्य तदन्वययोग्यस्यावगमाद् अन्यव्यावृत्तिपरस्तद्भेदानामनुवादः तदेवं भेद एव वाक्यार्थ इति, तथाऽनपेक्षमपि पदं वाक्यार्थे वर्त्तमानं दृश्यत इति सुतरामस्ति वाक्यशक्तिः पदानामित्याह-"दृष्टञ्च" इति। न चैतावताऽपि श्रोत्रियादिपदस्य स्वतन्त्रस्यैवं-

पातञ्जलरहस्यम्।

पदान्तराविनाभूतमिति प्रयोजनाय पदान्तरमाक्षिपतीति,वाक्यमेव शक्तं न पदं निरर्थकत्वादिति, तद्यथेति। श्वेतते प्रासाद इति, चेतनेतरप्रासादः श्वेतते श्वेतक्रियायुक्त इत्याह-पू-

वार्त्तिकम्।

ध्वनिपदानामन्योन्यसंकरवदिदानीं पदवाक्ययोस्तदर्थयोश्च सङ्करेणापि शब्दार्थप्रत्ययानां सङ्करं दर्शयति—सर्वपदेष्विति। वाक्यशक्तिः पदार्थान्तरसहकारेण वाक्यभवनशक्तिः, तथा च वृक्षइत्यादिपदानां वृक्षोऽस्ति वृक्षश्चलति वृक्षश्छिद्यत इत्यादिवाक्यैः सङ्करोऽविवेक इति भावः, पदेषु वाक्यशक्तिमुदाहरति-वृक्ष इत्युक्त इति। वृक्ष इत्युक्ते सत्याकाङ्क्षापूरणार्थं योग्यताऽऽदिवशादस्तीति शब्दो गम्यतेऽध्याह्रियत इत्यर्थः, तथा च पदे वाक्यसंकर इति भावः, ननु शब्दाध्याहारो न सम्भवति एकस्मिन्नेवार्थे शब्दानामानन्त्यात् शब्दविशेषानुमापकलिङ्गाद्यनुपस्थितेरिति चेत्? न—स्वेच्छया स्वयं कल्पितेन केनाप्याकाङ्क्षापूरकशब्देन वक्तृतात्पर्यविषयार्थबोधसम्भवात्, अर्थविशेषानुमाने तु योग्यताऽऽकाङ्क्षातात्पर्यादिकमेव लिङ्गमस्ति, एतदेवाह—न सत्तामिति। योग्यताप्रदर्शनेनाकाङ्क्षातात्पर्यादयोऽप्युपलक्षिताः केवलयोग्यताया अर्थान्तरसाधारण्यादिति, उदाहरणान्तरमाह-तथा न हीति। आक्षेपोऽनुमानम्, नन्वेवं कारकवाचकपदानां कुत्रापि प्रयोगो न स्यादित्यत्राह—नियमार्थ इति। योग्यताऽऽदिभिः सर्वत्रार्थविशेषानुमानं न सम्भवति अतः कारकाणां सामान्यतोऽनुमितानामपि नियमार्थः कारकान्तरव्यावृत्त्यर्थश्चैत्रोऽग्निना भर्जनमित्यादिपदैश्चैत्राग्निभर्जनानां कर्तृकरणकर्मणामनुवाद इत्यर्थः, इदानीमध्याहारं विनाऽपि पदवाक्ययोः सङ्करमर्थभेदनिमित्तकं दर्शयति—दृष्टश्चेति। छन्दोऽधीत-

**त्रियश्छन्दोऽधीते, जीवति प्राणान् धारयति, तत्र वाक्ये पदार्थाभिव्यक्तिः, ततः पदं प्रविभज्य व्याकरणीयं क्रियावाचकं कारकवाचकं वा, अन्यथा भवति, अश्वः, अजापय इत्येवमादिषु नामाख्यातसारूप्यादनिर्ज्ञातं कथं क्रियायां कारके वा व्याक्रियेतेति तेषां शब्दार्थप्रत्ययानां प्रविभागः, तद्**

---

भास्वती।

पदरचनम्, तथा—प्राणान् धारयतीत्यर्थे जीवति, तत्रेति। वाक्ये=वाक्यार्थे, पदार्थाभिव्यक्तिः=पदार्थोऽप्यभिव्यक्तो भवत्यतो बोधसौकर्यार्थं पदं प्रविभज्य व्याख्येयम्, अन्यथा—भवति=तिष्ठति पूज्ये चेति, अश्वः=घोटकः गमनमकार्षीश्चेति, अजापयः=छागीदुग्धं तथा हिंमां कारितवांस्त्वमित्यादिद्व्यर्थकपदेषु नामाख्यातसारूप्याद्=नाम=विशेष्यविशेषणपदानि, आख्यातं=क्रियापदानि,

तेषामिति। क्रियाऽर्थः=साध्यरूपोऽर्थः, कारकार्थः=सिद्धरूपोऽर्थः, तदर्थः=सोऽर्थः

तत्त्ववैशारदी।

विधार्थप्रत्यायनं, न यावदस्त्यादिभिरभिसमासोऽस्य भवति तथा चास्यापि वाक्यावयवत्वात्कल्पितत्वमेवेति भावः, स्यादेतत्—पदानामेव चेद्वाक्यशक्तिः, कृतं तर्हि वाक्येन तेभ्य एव तदर्थावसायादित्यत आह—"तत्र वाक्य" इति। उक्तमेतन्न केवलं पदात्पदार्थः प्रतिपित्सितः प्रतीयते, न यावदेतःपदान्तरेणाभिसमस्यत इति तथा च वाक्यात्पदान्यपोद्धृत्य कल्पितानि वाक्यार्थाच्चापोद्धृत्य तदेकदेशं कारकं वा, क्रियां वा तत्पदं प्रकृत्यादिविभागकल्पनया व्याकरणीयं=व्याख्येयम्, किमर्थं पुनरेतावता क्लेशेनान्वाख्यायत इत्यत आह—"अन्यथा" इति। घटो भवति, भवति भिक्षां देहि, भवति तिष्ठति, इति नामाख्यातयोश्च साम्याद्, एवम् अश्वस्त्वम्, अश्वो यातीति, एवमजापयः पिब, अजापयः शत्रून् इति नामाख्यातसारूप्यादनिर्ज्ञातं नामत्वेनाख्यातत्वेन वा, अन्वाख्यानाभावे निष्कृष्याज्ञातं कथं क्रियायां वा कारके वा व्याक्रियेत तस्माद्वाक्यात्पदान्यपोद्धृत्य व्याख्यातव्यानि, न त्वन्वाख्यानादेव पारमार्थिको विभागः पदानामिति, तदेवं शब्दरूपं व्युत्पाद्य शब्दार्थप्रत्ययानां सङ्केतापादितसङ्कराणामसङ्करमाख्यातुमुपक्रमते—"तेषां शब्दार्थप्रत्ययानाम्प्रविभाग" इति।

वार्त्तिकम्।

इति वाक्यस्यार्थे श्रोत्रिय इति पदस्य तथा प्राणान् धारयतीतिवाक्यस्यार्थे जीवतीतिपदस्य च वचनमित्यर्थः,

जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते॥

इतिस्मृतेः जीव बलप्राणधारणयोरित्यनुशासनाच्चेति, ननु यदि वाक्यार्थप्रतिपत्तिः पदादपि भवति तर्हि गुरुतरस्य छन्दोऽधीत इति वाक्यस्य वचनं कदाऽपि न स्यादित्याशङ्कायामाह—तत्र वाक्य इति। अत एव पदवाक्ययोः साङ्कर्यात् संशयस्थले पदं वाक्येन विवरणीयमिति, प्रसङ्गादाह—तत इति। यतो वाक्यार्थेऽपि पदरचना भवति अतः संदेहस्थले पदमंशभेदैर्वाक्येन विवरणीयमित्यर्थः, अव्याकरणेऽर्थाप्रत्ययाद्वाक्यव्यवहरणमेव व्यर्थं स्यादित्याह—अन्यथेति। भवतीति प्रयुक्ते नामाख्यातयोः सारूप्याद्भवति घटो 'भवति भिक्षां देही'त्यर्थद्वयसंदेहेऽनवधारितं पदं कथं किमर्थं क्रियायां कारके वा व्याक्रियेत श्रोतुरर्थप्रत्ययासंभवाद्, एवमश्व इति प्रयुक्ते गतिमकार्षीर्घोटको वेति संशयो नामाख्यातसारूप्यात्, तथाऽजापय इति प्रयुक्ते छाग्याः पयः शत्रून् पराभावितवान्वेत्यर्थसंशयो नामाख्यातसारूप्याद् इत्यर्थः, तदेवं शब्दार्थप्रत्ययानां सङ्करं प्रदर्श्येदानीं प्रविभागं दर्शयति—तेषामित्यादिना।

यथा—श्वेतते प्रासाद इति क्रियाऽर्थः, श्वेतः प्रासाद इति कारकार्थः शब्दः, क्रियाकारकात्मा तदर्थः प्रत्ययश्च, कस्मात्? सोऽयमित्यभिसम्बन्धादेकाकार एव प्रत्ययः सङ्केत इति, यस्तु श्वेतोऽर्थः स शब्दप्रत्यययोरालम्बनीभूतः, स हि स्वाभिरवस्थाभिर्विक्रियमाणो न शब्दसहगतो न बुद्धिसहगतः, एवं शब्द एवं प्रत्ययो नेतरेतरसहगत इति, अन्यथा शब्दोऽन्यथाऽर्थोऽन्यथा प्रत्यय इति विभागः, एवं तत्प्रविभागसंयमाद् योगिनः सर्वभूतरुतज्ञानं स-

---

भास्वती ।

श्वेतवर्ण इति, क्रियाकारकात्मा = क्रियारूपः कारकरूपश्चेत्युभयथा व्यवहार्यः, प्रत्ययोऽपि तथाविधो यतः सोऽयमित्यभिसम्बन्धात, एकाकारः = अर्थप्रत्यययोरेकाकारता सङ्केतेन प्रतीयते, यस्त्विवति । स श्वेतोऽर्थः स्वाभिरवस्थाभिर्विक्रियमाणो न शब्दसहगतः = शब्दसङ्कीर्णः, न प्रत्ययसहगतः, एवं शब्दार्थप्रत्यया नेतरेतरसङ्कीर्णाः, शब्दो वागिन्द्रिये वर्त्तते, गवाद्यर्थो गोष्ठादौ वर्त्तते प्रत्ययश्च मनसीत्यसङ्कीर्णत्वम्, अन्यथेति । अर्थसङ्केतं-

तत्त्ववैशारदी ।

"तद्यथा श्वेतते प्रासाद इति क्रियाऽर्थः शब्दः = स्फुटतरो ह्यत्र पूर्वापरीभूतायाः क्रियायाः साध्यरूपायाः, सिद्धरूपः क्रियाऽर्थः श्वेत इति भिन्नः शब्दः यत्रापि शब्दार्थयोः सिद्धरूपत्वं-तत्राप्यर्थादस्ति शब्दस्य भेद इत्याह—"श्वेतः प्रासाद इति कारकार्थः शब्द" इति । अभिहितत्वाच्च कारकविभक्तेरभावः, अर्थं विभजते—"क्रियाकारकात्मा तदर्थ" इति । तयोः शब्दयोरर्थः क्रियात्मा कारकात्मा चेत्यर्थः, प्रत्ययं विभजते—"प्रत्ययश्च" इति । चशब्देन तदर्थ इत्येतत्पदमत्रानुकृष्यते तदत्रान्यपदार्थप्रधानं सम्बध्यते स एव क्रियाकारकात्माऽर्थो यस्य स तथोक्तः. नन्वभेदेन प्रतीतेः शब्दार्थप्रत्ययानां सङ्करात्कुतः प्रविभागः? इत्याशयवान् पृच्छति—"कस्माद्" इति । उत्तरमाह—"सोऽयमित्यभिसम्बन्धाद्" इति । सङ्केतोपाधिरेकाकारप्रत्ययो न तु तात्त्विक इत्यर्थः, , संकेत इति सप्तम्या सङ्केतस्य निमित्तता दर्शिता पर-

पातञ्जलरहस्यम् ।

र्वापरीभूताया इति क्रियारूपोऽर्थः साध्यो धात्वर्थ इति, भावनैव हि वाक्यार्थः स्वकारणविशे-

वार्त्तिकम् ।

तत्रादौ शब्दभेदेऽप्यर्थप्रत्यययोरभेदेन शब्दार्थयोर्भेदं दर्शयति—श्वेतत इत्यादिना-प्रत्ययश्चेत्यन्तेन, क्रिया साध्यरूपोऽर्थो यस्य स क्रियाऽर्थः, श्वेतत इतिशब्दः तथा कारकः सिद्धरूपोऽर्थो यस्य स कारकार्थः, श्वेत इतिशब्दः, एतौ शब्दौ भिन्नौ, एतयोरर्थस्तु क्रियाकारकरूप एक एव श्वेतगुणमात्रः, एवं प्रत्ययोऽपि, क्रियाकारकात्मकगुणाकारत्वे प्रमाणं पृच्छति-कस्मादिति । उत्तरम्-सोऽयमित्यभिसम्बन्धादिति। श्वेतनं या क्रिया सोऽयं श्वेतरूपः कारको गुणो यश्च श्वेतत इत्यस्मात् श्वेताकारप्रत्ययः सोऽयं श्वेत इत्यस्मादपि श्वेताकारः प्रत्यय इत्यभेदप्रत्यभिज्ञानादित्यर्थः, कथं तर्ह्यभेदेन शब्दार्थयोः संकेत इति? तत्राह--एकाकार इति। एकाकार आरोपरूपः प्रत्यय एव संकेत आरोपिताभेद एव संकेतो न तु पारमार्थिकाभेदरूप इत्यर्थः, ननु शब्दार्थयोरभेदप्रत्ययेन प्रत्यभिज्ञैव कथं न बाध्यते? तत्राह-यस्त्विवति। यस्तु श्वेतोऽर्थः शब्दप्रत्यययोर्विषयत्वात् स्वाभिः शब्दादिव्यावृत्ताभिरवस्थाभिर्नवपुराणादिभिर्विक्रियमाणत्वाच्च न शब्दप्रत्यययोः सहगतो न कालतः सहचरो वैयधिकरण्यादित्यर्थः, एवं देशतो न सहचरो यतः शब्दआकाशे प्रत्ययो बुद्धावर्थस्तु श्वेतगुणादिः प्रासादादिष्विति भावः, एवमिति । एवं शब्दोऽपि स्वावस्थाभिः विक्रियमाणो नाप्यर्थबुद्ध्योः सहचरः, एवं प्रत्ययोऽपीत्यर्थः, उपसंहरति—इत्य-न्यथेति । सूत्रार्थमुपसंहरति—एवं तत्प्रविभागेति । एवं मनुष्यविषये शब्दार्थप्रत्ययेषु प्रवि-

न्पद्यत इति ॥ १७ ॥

संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥ १८ ॥

द्वये खल्वमी संस्काराः = स्मृतिक्लेशहेतवो वासनारूपाः, विपाकहेतवो धर्माधर्मरूपाः, ते पूर्वभवाभिसंस्कृताः, परिणामचेष्टानिरोधशक्तिजीवनधर्मवदपरिदृष्टाश्चित्तधर्माः, तेषु संयमः संस्कारसाक्षात्क्रियायै समर्थः, न

भास्वती।

परिहृत्योच्चारितं च शब्दमात्रमालम्ब्य, तत्र च संयमं कृत्वा येनार्थेनानुभूता शब्द उच्चारितस्तदर्थं बुभुत्सुर्योगी तमर्थं जानातीति ॥ १७ ॥

द्वय इति । स्मृतिक्लेशहेतवः = क्लिष्टां स्मृतिं या जनयन्ति तादृश्यो वासनाः सूक्ष्मा-

तत्त्ववैशारदी।

मार्थमाह—"यस्तु श्वेतोऽर्थ" इति । अवस्था नवपुराणत्वादयः, सहगतः = सङ्कीर्णः, एवं प्रविभागसंयमाद् योगिनः सर्वेषाम्भूतानां पशुमृगसरीसृपवयःप्रभृतीनां यानि रुतानि तत्राप्यव्यक्तं पदं तदर्थः तत्प्रत्ययश्च इति, तदिह मनुष्यवचनवाच्यप्रत्ययेषु कृतः संयमः समानजातीयतया तेष्वपि कृत एवेति तेषां रुतं तदर्थभेदं तत्प्रत्ययं च योगी जानातीति सिद्धम् ॥ १७ ॥

"संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम्" ज्ञानजा हि संस्काराः स्मृतिहेतवः, अविद्याऽऽदिसंस्कारा अविद्याऽऽदीनां क्लेशानां हेतवः, विपाकहेतवः = विपाको = जात्यायुर्भोगरूपः, तस्य हेतवो धर्माधर्मरूपाः पूर्वेषु भवेष्वभिसंस्कृताः = निष्पादिताः स्वकारणैः यथा संस्कृतं व्यञ्जनं, कृतमिति गम्यते परिणामचेष्टानिरोधशक्तिजीवनान्येव धर्माश्चित्तस्य तद्वदपरिदृष्टाश्चित्तधर्माः तेषु श्रुतेष्वनुमितेषु सपरिकरेषु संयमः संस्काराणां द्वयेषां साक्षात्क्रियायै समर्थः,

पातञ्जलरहस्यम्।

षितेति,भट्टोक्तेः, यथा वर्णेष्वेकं पदमिति भ्रमोऽर्थोपाधिकः शब्दार्थप्रत्ययानां त्रयाणामेकत्वभ्रमः इत्यर्थः, संयमस्तु मनुष्यशब्दे एवेत्याह-तदिह मनुष्येति ॥ १७ ॥

संस्कारो द्विविधोऽनुभवजः क्रियाजश्चेत्याह—द्वय इति । फलानुमेयाः प्रारम्भा इति

वार्त्तिकम्।

भागसंयमात् साक्षात्कारपर्यन्तात्सर्वभूतानां रुतं तदर्थप्रत्ययं च योगी जानाति योगजधर्मस्याचिन्त्यशक्तित्वाद् धर्माणां स्वसदृशफलदानस्यौत्सर्गिकत्वाच्चेत्यर्थः, अस्मदादीनां च शब्दार्थप्रत्ययभेदसाक्षात्कारे सत्यपि तस्य साक्षात्कारस्य संयमाजन्यत्वान्न सर्वभूतरुतज्ञानं भवति संयमस्यैव हीयं सिद्धिरिति, एवमुत्तरसूत्रेष्वपि यथास्थलमिदमेव समाधानम् ॥ १७ ॥

"संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्", संस्कारसंयमेनेति सूत्रस्यादौ पूरणीयं संयमसिद्धिप्रकरणत्वात्, अत्र ज्ञानसंस्कारवद्रागादिवासनाधर्माधर्माअपि ग्राह्या इत्याह—द्वय इति । अमी सूत्रोक्ताः, स्मृतिर्ज्ञानविशेषः क्लेशोऽत्र रागादिरेव अविद्याऽस्मितयोः स्मृतिमध्यप्रवेशात्, न चाविद्यात एव रागादिसम्भवे तत्संस्कारे प्रमाणं नास्तीति वाच्यम् ? अविद्यासाम्येऽपि कस्य चिद् दुग्ध एव प्रीतिर्न दध्नि कस्य चिद्वैपरीत्यमित्यत्र वासनां विना नियामकान्तराभावेन तत्सिद्धेः, तेषां दृष्टान्तेनाप्रत्यक्षत्वमनात्मधर्मत्वं चाह—त इति। अभिसंस्कृता उपचिताः परिणामादिजीवनान्तचित्तधर्मवन्न साक्षिभास्याः, चित्तधर्माश्चानात्मधर्मा इत्यर्थः, एतेन धर्मादयः प्रलयेऽपि चित्त एव तिष्ठन्ति तेन चित्तं बीजरूपेण नित्यमित्यायातम् ; संस्कारसाक्षात्कारकारणतया संयमं व्याचष्टे—तेषु संयम इति । नन्वज्ञाते संस्कारे संयमो न घटते ज्ञाते च व्यर्थ इति चेद् ? न-शब्दानुमानाभ्यां सामान्यतो ज्ञाते विशेषज्ञानफलकस्य संयमस्य सम्भवात्, संस्कारसाक्षात्कारे जायमाने पूर्वजन्मज्ञानं भवतीत्यत्र युक्तिमप्याह—न चैत्या-

च देशकालनिमित्तानुभवैर्विना तेषामस्ति साक्षात्करणं, तदित्थं संस्कार-साक्षात्करणात्पूर्वजातिज्ञानमुत्पद्यते योगिनः, परत्राप्येवमेव संस्कारसाक्षात्करणात्परजातिसंवेदनम् ,

अत्रेदमाख्यानं श्रूयते-भगवतो जैगीषव्यस्य संस्कारसाक्षात्करणाद् दशसु महासर्गेषु जन्मपरिणामक्रममनुपश्यतो विवेकजं ज्ञानं प्रादुरभवद् अथ भगवानावट्यस्तनुधरस्तमुवाच-दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यग्गर्भसम्भवं दुःखं सम्पश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन सुखदुःखयोः किमधिकमुपलब्धमिति ? भगवन्तमावट्यं जैगीषव्य उवाच-दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन मया

भास्वती।

द्विविपाकानुभवजाताः, जात्यायुर्भोगविपाकहेतवो धर्माधर्मरूपाः संस्काराः, पूर्वभवाभिसंस्कृताः = पूर्वजन्मन्यभिसंस्कृताः प्रचिता इत्यर्थः, ते परिणामादिचित्तधर्मवदपरिदृष्टाश्चित्तधर्माः, संस्कारसाक्षात्कारस्तु देशकालनिमित्तानुभवसहगतः, ततः कस्मिन् देशे काले च किन्निमित्तको जात इत्यवगम्यते, निमित्तम् = प्राग्भवीया देहेन्द्रियादयो यैर्निमित्तैर्भोगादिः सिद्धः, अत्रेति। महासर्गेषु = महाकल्पेषु, विवेकजं ज्ञानं = तारकं सर्वविषयं-

तत्त्ववैशारदी।

अस्तु तत्र संयमात्तत्साक्षात्कारः पूर्वजातिसाक्षात्कारस्तु कुतः ? इत्यत आह—"न च देश" इति। निमित्तम् = पूर्वशरीरम् इन्द्रियादि च, सानुबन्धसंस्कारसाक्षात्कार एव नान्तरीयकतया जात्यादिसाक्षात्कारमाक्षिपतीत्यर्थः, स्वसंस्कारसंयमं परकीयेष्वतिदिशति—"परत्राप्येवम्"इति। अत्र श्रद्धोत्पादे हेतुमनुभवत आवट्यस्य जैगीषव्येण संवादमुपन्यस्यति-"अत्रे-

पातञ्जलरहस्यम्।।

न्यायेन—ते पूर्वजन्मानुभवसंस्कृता अतो नित्यानुमेयाः सन्तोऽपि योगिना प्रत्यक्षीकृताः जातिस्मरणहेतव इत्याह—संस्कारेति। तेषां तत्र देशादिसाक्षात्कारं विना साक्षात्कारो-

वार्त्तिकम्।

दिना-साक्षात्करणमित्यन्तेन, देशो जन्मभूमिर्नगरादिः, कालो युगादिः, निमित्तं मातापित्रादिः, एतेषां संस्कारविषयतया तदनुभवैर्विना तान्यविषयीकृत्य संस्काराणां साक्षात्कारो न सम्भवति सविषयकगुणग्रहणस्य विषयोपरागेणैव ज्ञानेच्छाऽऽदिस्थले दृष्टत्वाद् अतः संस्कारसाक्षात्कारे पूर्वजन्मनां देशकालनिमित्तादिरूपाशेषविशिष्टानामपि साक्षात्कारो भवति विषयविधयेत्यर्थः, सूत्रार्थं व्याचष्टे-तदित्थमिति। न केवलं संस्कारसाक्षात्कारात् पूर्वजातिज्ञानमेव; अपि, तु भाविजन्मज्ञानमपीति स्वयं पूरयति-परत्रापीति। भाविजन्मसंस्काराणामनागतावस्थानां-साक्षात्कारादिति शेषः, संस्कारसाक्षात्करणात्पूर्वादिजन्मान्यशेषविशेषैर्ज्ञायन्त इत्यत्र प्रमाणतया जैगीषव्यावट्ययोः संवादमाह—अत्रेदमाख्यानमिति। अत्र पूर्वजातिज्ञानविषये महासर्गेषु प्राकृतसर्गेषु जन्मक्रमं बाल्ययौवनवार्द्धक्यादिरूपं तत्परिणामक्रमं च साक्षात्कुर्वतो जैगीषव्यस्य तारकं सर्वविषयकमित्यागामिसूत्रलक्षणीयं विवेकजं ज्ञानमुदभूत्; अथानन्तरं तमावट्यनामा योगी लिङ्गशरीरमात्रविहारी परीक्षाऽर्थं तनुधरो निर्माणकायं धृत्वा पप्रच्छेत्यर्थः भव्यत्वात् कुशलत्वादनभिभूतवृत्तिसत्त्वेनेत्यस्याधिकं किमुपलब्धमित्यनेनान्वयः, यथाश्रुते भव्यत्वास्यजीवन्मुक्त्यनन्तरम् आकाशादिगमनासम्भवादिति, सम्पश्यता = उपभुञ्जानेन देवमनुष्येषु जायमानेनेत्यनेन च तत्रत्यसुखमुपभुञ्जानेनेत्युपलक्षितं सुखदुःखयोर्मध्ये संसारे किं बहुलमिति पृष्टः स दुःखबहुत्वप्रतिपादनाय सर्वमेव दुःखमित्याह-दशस्विति।।अनुभूतं सुख-

नरकतिर्य्यग्भवं दुःखं सम्पश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन यत्किञ्चिदनुभूतं तत्सर्वं दुःखमेव प्रत्यवैमि, भगवानावट्य उवाच-यदिदमायुष्मतः प्रधानवशित्वमनुत्तमं च सन्तोषसुखं किमिदमपि दुःखपक्षे निक्षिप्तमिति ? भगवान् जैगीषव्य उवाच-विषयसुखापेक्षयैवेदमनुत्तमं सन्तोषसुखमुक्तं, कैवल्यापेक्षया दुःखमेव बुद्धिसत्त्वस्यायं धर्मस्त्रिगुणः त्रिगुणश्च प्रत्ययो हेयपक्षे न्यस्त इति दुःखस्वरूपस्तृष्णातन्तुस्तृष्णादुःखसन्तापापगमात्तु प्रसन्नमबाधं सर्वानुकूलं सुखमिदमुक्तमिति ॥ १८ ॥

## प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥

प्रत्यये संयमात्प्रत्ययस्य साक्षात्करणात्ततः परचित्तज्ञानम् ॥ १९ ॥

भास्वती ।

सर्वथाविषयमक्रमं विवेकस्य बाह्यसिद्धिरूपम् , तनुधरः = निर्माणतनुधरः, भव्यत्वात् = रजस्तमोमलहीनतया स्वच्छचित्तत्वात् , प्रधानवशित्वम् = प्रकृतिजयः, त्रिगुणश्च प्रत्ययः = सत्त्वाधिकोऽपि सुखरूपप्रत्ययस्त्रिगुणः, दुःखस्वरूपः = दुःखात्मकः, तृष्णातन्तुः = तृष्णारज्जुः, तृष्णाबन्धनजातदुःखसन्तापापगमात्तु प्रसन्नं = निर्मलम् , अबाधं = प्रतिघातरहितम् , सर्वानुकूलं = सर्वेषामनुकूलं यद्वा—सर्वावस्थास्वनुकूलमिदं सन्तोषसुखमनुत्तमं कामसुखापेक्षयेत्यर्थः ॥ १८ ॥

तत्त्ववैशारदी ।

दमाख्यानं श्रूयते" इति । महाकल्पः = महासर्गः, तनुधर इति निर्माणकायसम्पद्युक्ता, भव्यः = शोभनो, विगलितरजस्तमोमल इत्यर्थः, प्रधानवशित्वम् = ऐश्वर्य्यं, तेन हि प्रधानं विक्षोभ्य यस्मै यादृशीं कायेन्द्रियसम्पदं दित्सति तस्मै तादृशीं दत्ते, स्वकीयानि च कायेन्द्रियाणि सहस्राणि निर्मायान्तरिक्षे दिवि भुवि च यथेच्छं विहरतीति सन्तोषो हि तृष्णाक्षयो बुद्धिसत्त्वस्य प्रशान्तता धर्मः ॥ १८ ॥

पातञ्जलरहस्यम्

न भवतीत्याह-न चेति । निमित्तकारणं देहे न्द्रियादि येन येन कायेनोत्पादितम् इत्याह —तनुधर इति ॥ १८ ॥

वार्त्तिकम् ।

मिति शेषः, सुखस्यापि दुःखत्वं गुणवृत्त्यविरोधाच्चेत्यनेनोक्तम् , प्रधानवशित्वं स्वेच्छया प्रकृतिनियोक्तृत्वं तत्कार्यत्वात्तद्रूपम् ऐश्वर्यसुखं तथा सन्तोषसुखं सन्तोषोत्थं स्वाभाविकं सुखं प्रधानवशित्वेन हि कामसमाप्त्या विषयेष्वलम्प्रत्ययरूपं वैतृष्ण्याख्यं सन्तोषमुत्पाद्य चित्तस्य स्वाभाविकं सुखमभिव्यज्यत इति, कैवल्यापेक्षया दुःखमुपपादयति-बुद्धिसत्त्वस्येति । बुद्धिसत्त्वस्यायं धर्मः सन्तोषाख्योऽलम्प्रत्ययः त्रिगुणः सुखादिगुणत्रयवान् सुखादिगुणत्रांश्च प्रत्ययो बुद्धिपरिणामो हेयपक्षे दुःखपक्षे न्यस्तो मधुविषसम्पृक्तान्नवदित्यर्थः, कैवल्यस्य च सुखत्वम् आत्यन्तिकदुःखनिवृत्तिरूपतयोक्तम् , सुखं दुःखसुखात्ययः इति मोक्षशास्त्रे परिभाषणात्, निरुपाधिप्रियत्वस्यैव सुखत्वाच्चेति यथा वाऽत्र कैवल्ये सुखशब्दो दुःखनिवृत्त्यादिपरतया निर्णीत एवं श्रुतिस्मृत्योरपि निर्णयः सर्वशास्त्रेष्वेकरूपव्यवहारौचित्यादिति, नन्वेवं कथं सन्तोषसुखस्यानुत्तमत्वं श्रुतिस्मृत्युक्तमुपपद्येत? तत्राह-दुःखरूप इति । दुःखसाधनतया दुःखरूपस्तृष्णाऽऽख्यस्तन्तुर्बन्धकरज्जुर्हेतुस्ततः दृष्टोऽर्थो बन्धरूपो यः सम्यक्तयोद्वेजकस्तस्यापगमात् प्रसन्नं वैषयिकदुःखाकलुषितम् अबाधमक्षयं यावद्बुद्धिस्थायि सर्वेषामेवानुकूलं प्रियमिदं सन्तोषोत्थं प्रधानवशित्वमूलकं सुखमुक्तं शास्त्रेष्वित्यर्थः ॥ १८ ॥

## नच तत्सालम्बनं तस्याविषयीभूतत्वात् ॥ २० ॥

रक्तं प्रत्ययं जानाति अमुष्मिन्नालम्बने रक्तमिति न जानाति परप्रत्यस्य यदालम्बनं तद्योगिचित्तेन नालम्बनीकृतं परप्रत्यमात्रं तु योगिचित्तस्यालम्बनीभूतमिति ॥ २० ॥

## कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्द्धानम् ॥ २१ ॥

कायरूपे संयमाद् रूपस्य या ग्राह्या शक्तिस्तां प्रतिबध्नाति ग्राह्यशक्ति-

---

भास्वती ।

प्रत्यय इति । प्रत्यये रक्तद्विष्टादिचित्तमात्रे संयमात् परचित्तमात्रस्य ज्ञानम् ॥ १९ ॥

रक्तमिति । सुगमम् ॥ २० ॥

कायरूप इति । ग्राह्या = ग्रहणयोग्या शक्तिस्तां प्रतिबध्नाति = स्तम्नाति, चक्षुः

तत्त्ववैशारदी ।

"प्रत्ययस्य परचित्तज्ञानम्", प्रत्ययस्य = परचित्तमात्रस्य साक्षात्करणादिति ॥ १९ ॥

यथा संस्कारसाक्षात्कारस्तदनुबन्धपूर्वजन्मसाक्षात्कारमाक्षिपत्येवं परचित्तसाक्षात्कारोऽपि तदालम्बनसाक्षात्कारमाक्षिपेदिति प्राप्त आह—"न च तत्सालम्बनं तस्याविषयीभूतत्वात्" सानुबन्धसंस्कारविषयोऽसौ संयमः, अयन्तु परचित्तमात्रविषय इत्यभिप्रायः ॥ २० ॥

"काय—अन्तर्द्धानम्", पञ्चात्मकः कायः स च रूपवत्तया चाक्षुषो भवति रूपेण हि

पातञ्जलरहस्यम् ।

प्रत्ययेतिसूत्रं । प्रत्ययस्य परचित्तस्य तस्य ज्ञाने

अर्थेनैव विशेषो हि निराकारतया धियामि—

त्युक्तिमाश्रित्याह—परप्रत्ययमात्रं त्विति भाष्यार्थः, टीकामते तु प्रतीयतेऽर्थोऽनेनेति प्रत्ययश्चित्तं-तत्र संयमात् यादृशो हि संयमस्तादृगेव साक्षात्कारहेतुताऽधिकस्यातिप्रसङ्गादित्याह—न चेति । ज्ञानस्य प्रत्ययो द्विविध सामान्यो देशकालाद्यनवच्छिन्नो विशेषश्च, तत्राद्यो योगिधीविषय इत्याह—रक्तमिति । भोजवृत्तिमत इदं सूत्रम् ॥ १९-२० ॥

अन्तर्धानस्योपायमाह-कायेति, सूत्रं रूप्यते गृह्यते धर्मी येन धर्मेण तद्रूपं न तस्य संय-

वार्त्तिकम् ।

"प्रत्ययस्य परचित्तज्ञानम्", व्याचष्टे—प्रत्यय इति । प्रत्ययस्य रागादिमत्याः स्वकीयचित्तवृत्तेः संयमेनाश्रयादिरूपैरशेषविशेषैः साक्षात्करणात्ततस्तस्माच्चित्तात् परस्य भिन्नस्य चित्तान्तरस्याप्यशेषविशेषतो ज्ञानं सङ्कल्पमात्रेणैव भवतीत्यर्थः

ननु यथा संस्कारसाक्षात्कारे तद्विषयदेशादिकमपि साक्षात्क्रियते किमेवं चित्तान्तरसाक्षात्कारे तद्विषयोऽपि नियमेन साक्षात्क्रियते न वेति जिज्ञासायामाह—न च तत् सालम्बनमिति । तत् परचित्तज्ञानं सालम्बनं न नियमेन भवति तस्य परचित्तालम्बनस्य संयमविषयेण स्वचित्तेनाविषयीकरणादित्यर्थः, तत्प्रतिपादकशास्त्राभावाच्चेत्यपि द्रष्टव्यम्, न च तत् सालम्बनमित्युक्तं विवृणोति-रक्तमिति । तस्येत्यादि, हेतुं विवृणोति—परप्रत्ययस्येति । उपसंहरति-परप्रत्ययेति । तस्मात्परप्रत्ययमात्रं योगिचित्तस्यालम्बनीभूतं न तु परचित्तस्यालम्बनमपीति तुशब्दार्थः ॥ १९-२० ॥

कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासंप्रयोगेऽन्तर्द्धानम्, कायस्येति । स्वशरीरस्य रूपे संयमाद् दोषादिदोषतः कारणादिभिः साक्षात्कृते सति संकल्पमात्रेण स्वकीयरूपस्य

स्तम्भे सति चक्षुःप्रकाशासम्प्रयोगेऽन्तर्द्धानमुत्पद्यते योगिनः, एतेन शब्दा-द्यन्तर्धानमुक्तं वेदितव्यम् ॥ २१ ॥

**सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्त-ज्ञानमरिष्टेभ्यो वा ॥ २२ ॥**

आयुर्विपाकं कर्म द्विविध-सोपक्रमं निरुपक्रमं च, तत्र यथाऽऽर्द्रवस्त्रं-

भास्वती।

प्रकाशासम्प्रयोगे=चक्षुर्गतप्रकाशनशक्त्या सहासंयोगेऽन्तर्धानम्=अदृश्यता ॥ २१ ॥

आयुरिति। आयुर्विपाकम्=आयूरूपो विपाको यस्य तत् कर्म द्विविधम्, सोपक्र-

तत्त्ववैशारदी।

कायश्च तद्रूपं च चक्षुर्ग्रहणकर्मशक्तिमनुभवति तत्र यदा रूपे संयमविशेषो योगिना क्रियते तदा रूपस्य ग्राह्यशक्तिः रूपवत्कायप्रत्यक्षताहेतुः स्तभ्यते तस्माद् ग्राह्यशक्तिस्तम्भे सत्यन्तर्द्धानं योगिनः, ततः परकीयचक्षुर्जनितेन प्रकाशेन=ज्ञानेनासम्प्रयोगः, चक्षुर्ज्ञानाविषयत्वं योगिनः कायस्येति यावत्, तस्मिन् कर्तव्येऽन्तर्धानं कारणमित्यर्थः "एतेन" इति। काये शब्दस्पर्शरसगन्धसंयमात् तद्ग्राह्यशक्तिस्तम्भे श्रोत्रत्वग्रसनाघ्राणप्रकाशासम्प्रयोगे तदन्तर्धानम् इति सूत्रमूहनीयम् ॥ २१ ॥

"सोपक्रमं-वा"। आयुर्विपाकं च कर्म द्विविधं—सोपक्रमं निरुपक्रमं च, यत् खल्वैकभविकं कर्म जात्यायुर्भोगहेतुस्तदायुर्विपाकं, तच्च किञ्चित्कालानन्तरमेव भोगदानाय प्रस्थितं-दत्तबहुभोगमल्पावशिष्टफलं प्रवृत्तव्यापारं केवलं तत्फलस्य सहसा भोक्तुमेकेन शरीरेणाशक्यत्वाद्विलम्बते तदिदं सोपक्रमम्, उपक्रमः=व्यापारस्तत्सहितमित्यर्थः, तदेव तु दत्तस्तोकफलं तत्कालमपेक्ष्य फलदानाय व्याप्रियमाणं कादाचित्कमन्दव्यापारं निरुपक्रमम्, एतदेव निदर्शनाभ्यां विशदयति—"तत्र यथा" इति। अत्रैवातिवैशद्याय निदर्शनान्तरं दर्शयति—

पातञ्जलरहस्यम्।

मक्तप्रतिबन्धे सत्यन्तर्धानं योगिनः सिध्यति सुतरां रूपाग्रहे रूपवतोऽग्रहणं नक्तंचराणां यथाऽऽदित्यादेरग्रह इत्यर्थः ॥ २१ ॥

परलोकाय कथं शीघ्रं यतेत तदर्थसंयमविशेषमाह-सोपक्रमं निरुपक्रमञ्चेति सूत्रं, वितानितं शोषणाय विस्तीर्य दत्तं, तद्यथा लघीयसा कालेनाल्पेन शुष्यति तद्वत्, यत्पिण्डीकृतं तद्विलम्बेन शुष्यति तद्वत् तयोः संयमे क्रियमाणे, "परीतकाले परिमुच्येत सर्वे" इति श्रुतिमाश्रित्याह-परीतः प्रलयः, परस्य ब्रह्मणो लयकालस्तस्मात्तद्भिन्नोऽपरान्तो मरणं तस्य ज्ञानं निश्चयः, सोपक्रमावशिष्टं कायव्यूहं कृत्वा शीघ्रं तदवशिष्टं भुक्त्वा स्वेच्छया म्रियते योगीति

वार्त्तिकम्

दृश्यताशक्तिं परचक्षुःसंयोगयोग्यतां प्रतिबध्नाति ततश्च परचक्षुःप्रकाशैस्तत्किरणैरसंयोगेऽन्तर्धानमुत्पद्यते योगिनः, दिवाऽन्धेनेव केनाप्यसौ न दृश्यत इत्यर्थः, सूत्रकारस्य न्यूनतां परिहरति—एतेनेति। एतेन रूपान्तर्द्धानेन शास्त्रान्तरसिद्धं शब्दाद्यन्तर्द्धानमप्युपलक्षितं वेदितव्यमित्यर्थः' यदा कायस्य शब्दस्पर्शरसगन्धसंयमात्तेषां ग्राह्यशक्तिस्तम्भो भवति तदा श्रोत्रादिसंनिकर्षप्रतिबन्धाद्योगिनः शब्दादिकं बधिरेणेव केनापि न श्रूयत इतिभावः ॥ २१ ॥

सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा, व्याचष्टे—आयुरिति। आयुष्करकर्मज्ञानादेव झटित्यझटितिरूपाभ्यामपरान्तस्य मरणस्य ज्ञानं भवति, अतः कर्मणो-विशेषणमायुर्विपाकमिति, सोपक्रमं तीव्रवेगेन फलदातृ यथा कलिकालीनप्रजासु बाल्ययौवनवार्द्धकाद्यवस्थानां झटित्येवारम्भकमायुष्करं कर्मेति, निरुपक्रमं च मन्दवेगेन फलदातृ यथा

चितानितं लघीयसा कालेन शुष्येत् तथा सोपक्रमम्, यथा च तदेव सम्पिण्डितं चिरेण संशुष्येद् एवं निरुपक्रमम्, यथा चाग्निः शुष्के कक्षे मुक्तो वातेन समन्ततो युक्तः क्षेपीयसा कालेन दहेत्तथा सोपक्रमम्, यथा वा स एवाग्निस्तृणराशौ क्रमतोऽवयवेषु न्यस्तश्चिरेण दहेत्तथा निरुपक्रमम्, तदैकभविकमायुष्करं कर्म द्विविधं-सोपक्रमं निरुपक्रमं च, तत्संयमाद् अपरान्तस्य = प्रायणस्य ज्ञानम्, अरिष्टेभ्यो वेति । त्रिविधमरिष्टमाध्यात्मिकमाधिभौतिकमाधिदैविकं चेति, तत्राध्यात्मिकं घोषं स्वदेहे पिहितकर्णो न शृणोति, ज्योतिर्वा नेत्रेऽवष्टब्धे न पश्यति, तथाऽऽधिभौतिकं यमपुरुषान् पश्यति, पितॄन तीतानकस्मात्पश्यति, आधिदैविकं-स्वर्गमकस्मात्सिद्धान् वा

भास्वती ।

मं = फलोपक्रमयुक्तम्, दृष्टान्तमाह—यथा—आर्द्रं वस्त्रं विस्तारितं स्वल्पेन कालेन शुष्येत्, अनुकूलावस्थाप्राप्ता शुद्धतारूपं फलमचिरेणारब्धं भवेत्, तथा यत कर्म विपाकोन्मुखं तदेव सोपक्रमं तद्विपरीतं निरुपक्रमम्, दृष्टान्तान्तरमाह—यथा चाग्निरिति । कक्षे=तृणगुच्छे, मुक्तः=न्यस्तः, क्षेपीयसा कालेन=अचिरेण, तृणराशौ=आर्द्रे तृणराशौ, एकभविकम्=अव्यवहितपूर्वजन्मनि सञ्चितमायुष्करम्=आयूरूपविपाककरम्, अरिष्टेभ्य इति । घोषं-शब्दम्, पिहितकर्णः=अङ्गुल्यादिना रुद्धकर्णः, नेत्रेऽवष्टब्धे=अङ्गुल्या-

तत्त्ववैशारदी ।

"यथा वाऽग्निः" इति । परान्तम् = महाप्रलयमपेक्ष्यापरान्तो मरणं, तस्मिन् कर्मणि धर्माधर्मयोः संयमादपरान्तज्ञानम्, ततश्च योगी सोपक्रममात्मनः कर्म विज्ञाय बहून् कायान् निर्माय सहसा फलं भुक्त्वा स्वेच्छया म्रियते, प्रासङ्गिकमाह-"अरिष्टेभ्यो वा" इति । अरिवत् त्रासयन्तीत्यरिष्टानि त्रिविधानि मरणचिह्नानि, विपरीतं वा सर्वं = माहेन्द्रजालादिव्य-

पातञ्जलरहस्यम् ।

फलम्, एवं निरूपक्रममिति, एवमस्यैषा दृष्टिः-यत् शरीरे ऊष्माणं विजानाति, अस्यैषा श्रुतिर्यत् पिहितकर्णः शब्दं शृणोति तयोरनुपलब्धावनिष्टं भविष्यतीति, अवष्टब्धे-

वार्तिकम् ।

सत्यादिकालीनप्रजासु बाल्ययौवनवार्द्धकाद्यवस्थानां विलम्बेनारम्भकम् आयुष्करं कर्मेति, तथा च सोपक्रमस्य साक्षात्करणात् शीघ्रमरणस्य ज्ञानं निरुपक्रमस्य साक्षात्करणाच्च विलम्बेन मरणस्य ज्ञानं भवतीति विभागः, सोपक्रमनिरुपक्रमकर्मणोर्दृष्टान्तमाह—तत्र यथेत्यादिना, वितानितं विस्तारितम् ह्रसीयसा स्वल्पेन यथाक्रममुभयोरपरं दृष्टान्तद्वयमाह—यथा वाऽग्निरित्यादिना, कक्षे तृणे, क्षेपीयसा शीघ्रेण, उपसंहरति—तदैकेति । जन्मान्तरभोगस्य कर्मणो ज्ञानं वर्त्तमानदेहस्यापरान्तज्ञानहेतुरत उक्तमेकभविकमिति भुज्यमानकर्मभिः सहैकभविकमित्यर्थः, सूत्रार्थमाह—तत्संयमादिति । ऐकभविकायुष्करकर्मसंयमात्सोपक्रमादिरूपविशेषावधारणे इति पूर्वान्तापेक्षयाऽपरान्तस्य मरणस्य शीघ्रत्वाशीघ्रत्वरूपेर्ज्ञानं भवति अरिष्टेभ्यो वेत्यर्थः, अरिष्टज्ञानस्यापीदं फलमिति सूत्रे प्रसङ्गादेवोक्तं संयमसिद्धीनामेव प्रकृतत्वादरिष्टानि मरणचिह्नानि च योगिना समाध्यवधानार्थमवधारणीयानि, तानि व्याचष्टे—त्रिविधमिति । पिहितकर्णः स्वदेहान्तर्घोषं वह्निज्वलनशब्दवच्छब्दविशेषं न शृणोतिः इत्येकमरिष्टमाध्यात्मिकम्, अवष्टब्धेऽङ्गुल्यादिना भ्रामिते चक्षुषि वह्निकणतुल्यं ज्योतिर्न पश्यतिः इत्यपरम्, अन्यान्यपि विविधान्यरिष्टानि वसिष्ठमार्कण्डेयादिभिरुक्तानि दिनमाससंवत्सरादिभेदैर्मृत्युचिह्नानि संक्षेपत आह—विपरीतं वा सर्वमिति । सर्वं श्वासप्र-

पश्यति विपरीतं वा सर्वमिति, अनेन वा जानात्यपरान्तमुपस्थितमिति ।२२

मैत्र्यादिषु बलानि ॥ २३ ॥

मैत्री करुणा मुदितेति तिस्रो भावनाः, तत्र भूतेषु सुखितेषु मैत्रीं भावयित्वा मैत्रीबलं लभते, दुःखितेषु करुणां भावयित्वा करुणाबलं लभते, पुण्यशीलेषु मुदितां भावयित्वा मुदिताबलं लभते, भावनातः समाधिर्यः स संयमस्ततो बलान्यबन्ध्यवीर्य्याणि जायन्ते, पापशीलेषूपेक्षा न तु भावना, ततश्च तस्यां नास्ति समाधिरिति, अतो न बलमुपेक्षातस्तत्र संयमा-

भास्वती ।

दिना सम्पीडिते नेत्रे, अपरान्तः=मृत्युः ॥ २२ ॥

मैत्रीति । स्पष्टम्, भावनात इति । मैत्र्यादिभावनातस्तत्तद्भावेषु स्वरूपशून्यमिव तत्तद्भावनिर्भासं ध्यानं यदा भवेत्तदा तत्र समाधिः, स एव तत्र संयमः, ततो मैत्र्यादि-

तत्त्ववैशारदी ।

तिरेकेण ग्रामनगरादि स्वर्नरकमभिमन्यते मनुष्यलोकमेव देवलोकमिति ॥ २२ ॥

"मैत्र्यादिषु बलानि" । मैत्र्यादिषु संयमान्मैत्र्यादिबलान्यस्य भवन्ति तत्र मैत्रीभावनातो बलं येन जीवलोकं सुखाकरोति, ततः सर्वहितो भवति, एवं करुणाबलात्प्राणिनो दुःखाद् दुःखहेतोर्वा समुद्धरति, एवं मुदिताबलाज्जीवलोकस्य माध्यस्थ्यमाधत्ते वक्ष्यमाणोपयिकं भावनाकारणत्वं समाधेराह-"भावनातः समाधिर्यः स संयमः" इति,यद्यपि धारणाध्यानसमाधित्रयमेव संयमो न समाधिमात्रं तथाऽपि समाध्यनन्तरं कार्य्योत्पादात्समाधेः प्राधान्यात् तत्र संयम उपचरितः क चिद्भावना समाधिरिति पाठः, तत्र भावनासमाधी समूहस्य संयमस्यावयवौ हेतू भवतः, वीर्य्यं = प्रयत्नः, तेन मैत्र्यादिबलवतः पुंसः सुखित्वादिषु परेषां कर्त्त-

पातञ्जलरहस्यम् ।

पीडितेऽपरान्तमुपस्थितम् ॥ २२ ॥

विभूत्यन्तरमाह-मैत्र्यादिष्विति सूत्रं, कस्य किं फलमित्यपेक्षायामाह—तत्र मैत्रीति । एवं सर्वत्र भावनातः समाधिर्यः सः संयम इति, धारणाध्यानयोः समाधिफलकत्वात् समा-

वार्त्तिकम् ।

श्वासादिकमिति, अनेन वा = अरिष्टेन वेत्यर्थः ॥ २२ ॥

"मैत्र्यादिषु बलानि" मैत्र्यादिषु संयमाद् बलान्यबन्ध्यानि वीर्याणि भवन्ति परेषु मैत्र्याद्यर्थं प्रयत्नो विफलो न भवतीति यावत्, तदेतद् व्याचष्टे—मैत्रीकरुणेति । मैत्र्यादित्रयविषयिण्यस्तिस्रो भावनाः संयमा भवन्ति, तत्र सुखितेषु मैत्री, एवंस्वरूपा एवमादिसाधनिकेत्यशेषविशेषैर्मैत्रीं भावयित्वा साक्षात्कृत्य च व्याख्यातं मैत्रीबलं लभत इत्यर्थः, एवं करुणामुदितयोरपि व्याख्येयम्,यद्यपिभावनाशब्दः सूत्रे नास्ति तथाऽपि तन्त्रान्तरानुसारात्स्वयं व्याख्यातः, प्रथमपादोक्तभावनाशब्दवद् अत्राप्युत्पादनार्थमिति भ्रमो मा भूद् इत्येतदर्थं प्रकृते तन्त्रान्तरीयभावनाशब्दस्यार्थं स्वयमाह—भावना = समाधिरिति । भाव्यते फलमनेनेति व्युत्पत्त्या भावनाचिन्तनयोरेकार्थतया चेति भावः, ध्यानधारणयोः संगृह्य पुनराह—यः स संयम इति । यः स पूर्वेषु सूत्रेषु प्रक्रान्त इत्यर्थः,भावनाशब्दोक्तसमाधिना ध्यानधारणयोरपि ग्रहणं तन्त्रान्तर इति भावः, भावनाऽतः समाधिरिति पाठे तु अतः सूत्रात् पूर्वाचार्योक्तादत्र भावना समाधिरेवेत्यर्थः,बलशब्दं विवृण्वानः सूत्रार्थमुपसंहरति—ततो बलानीति। ननु प्रथमपादोक्तोपेक्षा कथं मैत्र्यादिष्वित्यत्रादिशब्देन न संगृहीता तत्राह—पापशीलेष्विति । पापशीलेषु मैत्र्यादिशून्यतारूपम् उपेक्षामात्रं न तु तस्यामभावरूपिण्यामुपेक्षायां प्रतियोगितत्त्वा-

भावाद् इति ॥ २३ ॥

**बलेषु हस्तिबलादीनि ॥ २४ ॥**

हस्तिबले संयमाद् हस्तिबलो भवति, वैनतेयबले संयमाद् वैनतेयबलो भवति, वायुबले संयमाद्वायुबल इत्येवमादि ॥ २४ ॥

**प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥ २५ ॥**

ज्योतिष्मती प्रवृत्तिरुक्ता मनसस्तस्या य आलोकस्तं योगी सूक्ष्मे वा व्यवहिते वा विप्रकृष्टे वाऽर्थे विन्यस्य तमर्थमधिगच्छति ॥ २५ ॥

**भुवनज्ञानं सूर्ये संयमाद् ॥ २६ ॥**

भास्वती ।

बलानि, अवन्ध्यवीर्याणि=अव्यर्थवीर्याणि जायन्ते स्वचेतस्यमैत्र्यादीनि नोत्पद्यन्ते, परैरपि मित्रादिभावेन च योगी विश्वस्यते ॥ २३ ॥

हस्तिबल इति । सुगमम् ॥२४॥

ज्योतिष्मतीति । आलोकः=अबाधः प्रकाशभावो येन; सर्वेन्द्रियशक्तयो गोलकनिरपेक्षा विषयगता इव भूत्वा विषयं गृह्णन्ति ॥ २५ ॥

तत्त्ववैशारदी ।

व्येषु प्रयत्नोऽवन्ध्यो भवतीति, उपेक्षा = औदासीन्यं न तत्र भावना, नापि सुखिताऽऽदिवद् भाव्यं किञ्चिदस्तीति ॥ २३ ॥

"बलेषु हस्तिबलादीनि" यस्य बले संयमस्तस्य बलं लभत इति ॥ २४ ॥

"प्रवृत्त्या -ज्ञानम्" । सूक्ष्मे व्यवहिते विप्रकृष्टे वाऽर्थे संयमनं विन्यस्य तमर्थमधिगच्छतीति ॥ २५ ॥

"भुवनज्ञानं सूर्ये संयमाद्" आ भुवाद्-इतो मेरुपृष्ठात्, तदेवमनेन सङ्ग्रहश्लोकान्तेन

पातञ्जलरहस्यम् ।

धैरेव कार्योत्पादे प्राधान्यादित्यर्थः, अवन्ध्यप्रयत्नं फलाव्यभिचारीत्यर्थः ॥ २३ ॥

मानसबलमुक्त्वा शारीरमाह–बलेष्विति सूत्रं, वैनतेयबले गरुडस्य बल इति ॥२४॥

आध्यात्मिकमुक्त्वाऽधिभूतविषयमाह–प्रवृत्त्येति। सूत्रमङ्गतिमाह–ज्योतिष्मतीति । ज्योतिष्मत्याः प्रवृत्तेः य आलोकः स प्रवृत्त्यालोक. तस्मिन् न्यासात् संयमात् सूक्ष्मादिज्ञानं साक्षात्कार इत्यर्थः ॥ २५ ॥

आधिदैविकमाह—भुवनेति। सूर्य आत्मा जगतः तस्थुषश्चेति श्रुतेः,सूर्ये संयमात् स्थावर-

वार्त्तिकम् ।

तिरिक्तः कश्चन विशेषोऽस्ति यस्य साक्षात्कारार्थं भावना स्यादतश्च तस्यामुपेक्षायां नास्ति समाधिः संयमोऽपेक्षित इत्यर्थः, शेषं सुगमम् ॥ २३ ॥

"बलेषु हस्तिबलादीनि", हस्त्यादिबलेषु संयमाद्धस्त्यादिबलानि भवन्तीत्यर्थः, भाष्यं सुगमम् ॥ २४ ॥

"प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्", व्यवहितमावृतं, विप्रकृष्टं दूरवर्त्ति, व्याचष्टे—ज्योतिष्मतीति। ज्योतिष्मती बुद्धिपुरुषान्यतरसाक्षात्काररूपिणी मनसः प्रवृत्तिः प्रथमपादोक्ता; तस्या य आलोकस्तत्कालीनो यः सत्त्वप्रकाशस्तं योगी सूक्ष्माद्यर्थेषु विन्यस्य च साक्षात्करोतीत्यर्थः, अत्र न्यासमात्रवचनात् तेषु संयमापेक्षा नास्ति चक्षुर्न्यासमात्रेण घटदर्शनवद्विशुद्धसत्त्वप्रतिसन्धानमात्रेणैव सूक्ष्मादिसाक्षात्कारो भवतीति भावः, परम्परया बुद्ध्यादिविषयकसंयमसाध्यत्वेनैव चास्याः सिद्धेः संयमसिद्धिमध्ये निर्वचनमिति ॥ २५ ॥

"भुवनज्ञानं सूर्ये संयमात्",भुवनशब्दार्थं व्याचष्टे—तत्प्रस्तार इत्यादिना,भुवनविस्तारः

तत्प्रस्तारः—सप्तलोकाः, तत्रावीचेः प्रभृति मेरुपृष्ठं यावदित्येष भूर्लोकः, मेरुपृष्ठादारभ्या ध्रुवाद् ग्रहनक्षत्रताराविचित्रोऽन्तरिक्षलोकः, तत्परः स्वर्लोकः पञ्चविधो माहेन्द्रस्तृतीयो लोकः, चतुर्थः प्राजापत्यो महर्लोकः, त्रिविधो ब्राह्मः, तद्यथा—जनलोकस्तपोलोकः सत्यलोक इति,

ब्राह्मस्त्रिभूमिको लोकः प्राजापत्यस्ततो महान्।
माहेन्द्रश्च स्वरित्युक्तो दिवि तारा भुवि प्रजा" इति

संग्रहश्लोकः, तत्रावीचेरुपर्य्युपरि निविष्टाः षण्महानरकभूमयो-

भास्वती।

तदिति। तत्प्रस्तारः=भुवनविन्यासः, अवीचेः प्रभृति=अवीचिर्निम्नतमो निरयः, तत ऊर्ध्वमित्यर्थः, तृतीयो माहेन्द्रलोकः स्वर्लोकेषु प्रथमः, तत्रेति। घनः=संहतः पा-

तत्त्ववैशारदी।

संक्षेपतः सप्तलोकानुपन्यस्य विस्तरेणाह—"तत्रावीचेः" इति। घनशब्देन पृथिव्युच्यते भूमिः=स्थानमित्यर्थः, एते महानरका अनेकोपनरकपरिवारा बोद्धव्याः, एतानेव नामा-

पातञ्जलरहस्यम्।

जङ्गमानां ज्ञानसिद्धिरित्याह—तदिति। तत्प्रस्तारः सप्त लोकभुवनानि तानि सन्निवेशविशेषेण गणयति-ब्राह्म इति। दिवि=अन्तरिक्षे तारा इति, भुवि प्रजेति। पातालमारभ्य भूरन्ता-अष्टौ भूर्लोकः, माहेन्द्रः स्वरित्यर्थः प्राजापत्यो महः, सत्य तपो जन इति ब्रह्मणः त्रिविध इति भुवनानि, सूर्ये संयमादेषां साक्षात्कार इति संक्षेपः, वैराग्यार्थमाह—तत्र मणिमयानीति रजतादिचतुर्णां विशेषणं, वैदूर्यं नीलं कुरुण्डकं रक्तमिति, श्वेतः पूर्वः रजतप्रतिबिम्बत्वात् स्वच्छः स्फटिकप्रतिबिम्बत्वाद् अतः प्रतिबिम्बः चतुर्णां विशेषणं, इदानीं भूसंस्थानमाह—दक्षिणपार्श्वइत्यादियावत् सर्वं दृष्टमित्यन्तेन, उदीचीना उत्तरस्थाः, एवं प्रतीचीनाः पाश्चात्याः, सर्षपराशिकल्पाः किञ्चिदुन्नताः तथाऽपि द्वीपान्न प्लावयन्ति इत्यत्रेश्वरशासनादिति भावः, लवणोदव्यापकानां षण्णां समुद्राणां सद्वीपानां नामान्याह—शाकमित्यादिना।

पञ्चाशत्कोटिविस्तीर्णा सेयमुर्वी महामते!!

इतिविष्णुपुराणमाश्रित्याह-पञ्चाशदिति। अणुरवयव एकदेशः, देवनिकाया देवजातयः, भू-

वार्त्तिकम्।

कथ्यत इति शेषः, तत्र चतुर्दशसु लोकेषु व्यक्तेष्वादौ सप्त लोकानाह-सप्त लोका इति। सप्त लोकान् विभजते—तत्रेति। अवीचिर्नाम नरकविशेषः, सर्वलोकानामधस्थानं तदादाय सुमेरुपृष्ठपर्यन्तं भूर्लोकः, मेरुपृष्ठमारभ्य मेरुपृष्ठोपलक्षितभूर्लोकस्योपरि ध्रुवपर्यन्तं भुवर्लोकः, तदुपरि क्रमेण पञ्चविधः स्वर्लोकः, एतेन त्रिलोकव्यवस्थाऽपि दर्शिता, पञ्चानां सामान्यतः स्वर्लोकत्वेनैक्यात्, पञ्चानामवान्तरभेदानाह—माहेन्द्र इत्यादिना, माहेन्द्रो लोकः स्वरितिनामको भूर्भुवर्लोकापेक्षया तृतीयः, एवमुत्तरत्रापि, उक्तव्युत्क्रमेण सप्तलोकानां संग्रहश्लोकं पठति—ब्राह्म इति। जनादित्रिभूमिको ब्रह्मलोकः, ततोऽधः प्रजापतिलोको महान् महरिति नाम ततोऽधः स्वरितिनामा इन्द्रलोकः, ततोऽधस्तारालोको द्यौरिति भुवरिति चोच्यते, तदधश्च प्रजानां मनुष्याणां लोको भूरितिनामेत्यर्थः, इदानीं पृथिव्या अधः स्थितान् सप्त नरकान् भूर्लोकांशतया प्रतिपादयति-तत्रेति। तत्र भूर्लोके सर्वनरकाधःस्थितादवीचिनरकादुपर्युपरिस्थिताः षण्महानरकभूमयो घनादीनामुत्तमोत्तमानाम् आधारा महाकालादिसंज्ञकास्तिष्ठन्तीत्यर्थः, घनाः शिलाशकलादयः पार्थिवपदार्थाः तमश्चान्धकारः, अत्र महानरकशब्दादन्येऽप्युपनरकाः कुम्भीपाकादयोऽनन्तास्तत्रैव तिष्ठन्तीति प्रतिपादितम्, दुःखवेदनाः दुःखभोगिन,-आक्षिप्य=गृहीत्वा भूरादिसप्तलोकानुक्त्वा महातलादीनन्यान् सप्तलोकानाह-ततो महेति।

घनसलिलानलानिलाकाशतमःप्रतिष्ठा महाकालाम्बरीषरौरवमहारौरव-कालसूत्रान्धतामिस्राः, यत्र स्वकर्मोपार्जितदुःखवेदनाः प्राणिनः कष्टमायुर्दीर्घमाक्षिप्य जायन्ते, ततो महातलरसातलातलसुतलवितलतलातलपाताला-लाख्यानि सप्त पातालानि, भूमिरियमष्टमी सप्तद्वीपा वसुमती, यस्याः सुमेरुर्मध्ये पर्वतराजः काञ्चनः, तस्य राजतवैदूर्यस्फटिकहेममणिमयानि शृङ्गाणि, तत्र वैदूर्यप्रभाऽनुरागान्नीलोत्पलपत्रश्यामो नभसो दक्षिणो भागः, श्वेतः पूर्वः,स्वच्छः पश्चिमः,कुरण्डकाभ उत्तरः. दक्षिणपार्श्वे चास्य जम्बूः, यतोऽयं जम्बूद्वीपः,तस्य सूर्य्यप्रचाराद् रात्रिन्दिवं लग्नमिव विवर्त्तते, तस्य नीलश्वेतशृङ्गवन्त उदीचीनास्त्रयः पर्वता द्विसहस्रायामाः, तदन्तरेषु त्रीणि वर्षाणि नवनवयोजनसाहस्राणि–रमणकं हिरण्मयमुत्तराः कुरव इति, निषधहेमकूटहिमशैला दक्षिणतो द्विसहस्रायामाः, तदन्तरेषु त्रीणि वर्षाणि नवनवयोजनसाहस्राणि–हरिवर्षं किम्पुरुषं भारतमिति, सुमेरोः प्राचीना-

भास्वती।

थिवधातुः, स्वकर्मोपार्जितं दुःखवेदनं येषामस्ति ते, दीर्घमायुराक्षिप्य=सङ्गृह्य, कुरण्डकं=सुवर्णवर्णपुष्पविशेषः, द्विसहस्रायामाः=द्विसहस्रयोजनविस्ताराः, माल्यवत्सीमानो देशा-भद्राश्वनामकाः, तदर्धेन व्यूढम्=पञ्चाशद्योजनसहस्रविस्तारः सुमेरुं संवेष्टय स्थितः, सुप्रति-

तत्त्ववैशारदी।

न्तरेणोपसंहरति—"महाकाल" इति,

तस्य सूर्य्यप्रचाराद् रात्रिदिवं लग्नमिव विवर्त्तते यमेवास्य भागं सूर्य्यस्त्यजति तत्र रात्रिः, यमेव भागमलङ्करोति तत्र दिनमित्यर्थः, सकलजम्बूद्वीपपरिमाणमाह–'तदेतद्योजनशतसहस्रम्' इति, किम्भूतं योजनानां शतसहस्रमित्याह–सुमेरोर्दिशि दिशि तदर्द्धेन व्यूढम्" इति, तदर्द्धेन=पञ्चाशता योजनसहस्रेण, व्यूढं=सङ्क्षिप्तम्, यतोऽस्य मध्यस्थः सुमेरुः सप्तसमुद्राश्च सर्षपराशिकल्पा द्विगुणा द्विगुणा इति सम्बन्धः, यथा सर्षपराशिर्न व्रीहिराशिरिवोच्छ्रितो नापि भूमिसमस्तथा समुद्रा अमी इत्यर्थः, विचित्रैः शैलैरवतंसैरिव सह वर्त्तन्त-

पातञ्जलरहस्यम्।

तोऽमी देवयोनय इत्यभिधानाद्, त्रिदशानामुद्यानभूमयो विहारभूमयः वातप्रचारा इत्याह–

वार्त्तिकम्।

ततोऽवीचेरध इत्यर्थः, तदेवं चतुर्दश लोका भवन्तीति सूचयति—भूमिरियमष्टमीति। अत्र भूमेरष्टमीत्ववचनात्सर्वाधःस्थितान्महातलादुपर्युपरि क्रमेण सप्तपातालानीत्यवगन्तव्यम्, संक्षेपतश्चतुर्दशलोकानुक्त्वा विस्तरेण विवक्षुरादौ भूर्लोकस्य विस्तारमाह—सप्तद्वीपेति। तस्य राजतेति। पूर्वादिप्रदक्षिणक्रमेणेत्यादिः, दक्षिणभागाकाशस्य वैदूर्यप्रभाव्याप्ततायां वक्ष्यमाणत्वात्, श्वेतो रजतवर्णः स्वच्छः स्फटिकवत्प्रतिबिम्बोद्ग्राही, कुरण्डकं स्वर्णवर्णः पुष्पविशेषः, दक्षिणेति। अस्य सुमेरोरुपरि दक्षिणपार्श्वे जम्बूनामा वृक्षः, यतो यन्नामा लवणोदाधवेष्टितो जम्बूद्वीपो जम्बूद्वीपनामेत्यर्थः, तस्येति। निरन्तरं सूर्येण प्रदक्षिणीकरणात्तस्य सुमेरोरवच्छेदभेदेन रात्रिंदिवं संयुक्तमिव सद्विवर्त्तते भ्रमति,तथा तस्य मेरोरुत्तरदिशि नीलाद्यास्त्रयः पर्वताः प्रत्येकं द्विसहस्रयोजनविस्तारास्तिष्ठन्ति तेषामवकाशेषु त्रीणि वर्षाणि प्रत्येकं नवयोजनसहस्रविस्ताराणि, तत्र नीलगिरिमेरुलग्नः नीलस्योत्तरे रमणकं श्वेतस्योत्तरे हिरण्मयं शृङ्गवत उत्तरे समुद्रपर्यन्तमुत्तराः कुरव इत्यर्थः, दक्षिणदिश्यपि संनिवेश एवं बोध्यः, सुमेरोः प्राचीना इति। मेरोः पूर्वदिशि तत्संयुक्तो माल्यवान् पर्वतः तमेव सीमानं कृत्वा

भद्राश्वा माल्यवत्सीमानः, प्रतीचीनाः केतुमाला गन्धमादनसीमानः, मध्ये वर्षमिलावृतम्, तदेतद् योजनशतसहस्रं सुमेरोर्दिशि दिशि तदर्धेन व्यूढम्, स खल्वयं शतसहस्रायामो जम्बूद्वीपस्ततो द्विगुणेन लवणोदधिना वलयाकृतिना वेष्टितः, ततश्च द्विगुणा द्विगुणाः शाककुशक्रौञ्चशाल्मलमगधपुष्करद्वीपाः सप्त समुद्राश्च सर्षपराशिकल्पाः सविचित्रशैलावतंसा इक्षुरससुरासर्पिर्दधिमण्डक्षीरस्वादूदकाः सप्तसमुद्रवेष्टिता वलयाकृतयो लोकालोकपर्वतपरिवाराः पञ्चाशद्योजनकोटिपरिसङ्ख्याताः, तदेतत्सर्वं सुप्रतिष्ठितसंस्थानमण्डमध्ये व्यूढम्, अण्डं च प्रधानस्याणुरवयवो यथाऽऽकाशे

भास्वती।

ष्ठितसंस्थानम्=सुसन्निविष्टम्, अण्डमध्ये ब्रह्माण्डमध्ये व्यूढम्=अन्तर्भावेन स्थितम्, सर्वेषु द्वीपेषु पुण्यात्मानो देवमनुष्याः=देवास्तथा देवत्वं प्राप्ता मनुष्याः प्रतिवसन्तीत्यतो-द्वीपाः परलोकविशेषा न च तेऽमरलोक इत्यवगन्तव्यम्, अत्रोपुण्यात्मनामपि वासदर्शे-

तत्त्ववैशारदी।

इति सविचित्रशैलावतंसा द्वीपाः, तदेतत्सर्वं सद्वीपविपिननगनगरनीरधिमालावलयं लोकालोकपरिवृतं विश्वम्भरामण्डलं ब्रह्माण्डमध्ये व्यूढं सङ्क्षिप्तं, सुप्रतिष्ठितं संस्थानं = सन्निवेशो-

वार्त्तिकम्।

समुद्रपर्यन्तं भद्राश्वनामदेशाः तत्र भद्राश्वनामकमेव वर्षम्, एवं मेरोः पश्चिमदिशि तत्संयुक्तगन्धमादनसीमानः समुद्रपर्यन्ताः केतुमालनामदेशाः वर्षं चैकमेव केतुमालसंज्ञकमित्यर्थः, मध्य इति। छत्राकारसुमेरोरधोभागे वर्षमिलावृतं चतुर्दिक्षु च पर्वताश्छत्रपार्श्वस्थावरणवास-इव मेरुपार्श्वेष्वेव ससक्ता इति, तदेवं जम्बूद्वीपस्य नववर्षाणि प्रोक्तानि पर्वतः सह समग्रंजम्बूद्वीपस्य प्रमाणमाह—तदेतदिति। तदेतज्जम्बूद्वीपाख्यस्थानं योजनशतसहस्रमितम्, अतश्च सुमेरोश्चतुर्दिक्षु पञ्चाशत्पञ्चाशद्योजनसहस्रेण व्यूढं संक्षिप्तं परिसंख्यातमित्यर्थः, सुमेरुमादायेति शेषः, सुमेरोः परिमाणं च विष्णुपुराणे प्रोक्तम्, चतुरशीतिसाहस्रैर्योजनैरस्योच्छ्रायः,

प्रविष्टः षोडशाधस्तात् द्वात्रिंशन्मूर्ध्नि विस्तृतः।
मूले षोडशसाहस्रो विस्तारस्तस्य भूभृतः॥
मेरोश्चतुर्दिशम्तत्र नवसाहस्रविस्तृतम्।
इलावृतं महाभाग! चत्वारस्तत्र पर्वताः॥ इति,

एतेन मेरोः पार्श्वद्वये इलावृतस्याष्टादशसाहस्रतया लक्षप्रमाणता जम्बूद्वीपस्य सिद्धेति, जम्बूद्वीपस्य वेष्टनं लवणसमुद्रमाह—स खल्विति। अत्र—

जम्बूद्वीपं समावृत्य लक्षयोजनविस्तृतः।
मैत्रेय! वलयाकारः स्थितः क्षारोदधिर्बहिः॥

इति विष्णुपुराणात् समुद्रस्य द्वीपाद्द्विगुणत्वं पार्श्वद्वयेन बोध्यम्, ततो द्विगुणा इति। जम्बूद्वीपाद् द्विगुणः शाकद्वीप इत्यर्थः,शाकाच्च द्विगुणः कुशद्वीपः,एवंक्रमेण वृद्धिः,समुद्राश्चेति। स्वस्वद्वीपापेक्षया द्विगुणाः समुद्राणां विशेषणत्रयं सर्षपेत्यादि, सर्षपराशिवन्मध्ये किञ्चिन्मात्रोच्छूनाः मध्ये तरङ्गबाहुल्यात्, तथा कूलद्वयस्थितविचित्रशैलरवतंसकल्पैः सहिताः तथा इक्षुरसादितुल्योदका इत्यर्थः, सप्तद्वीपानां समुद्रादिसहितानां मिलित्वा परिमाणमाह—सप्तेति। एते सप्तद्वीपाः समुद्रसहिताः सप्तसमुद्राद्बहिःस्थितेन लोकालोकपर्वतेन परिवृताः पञ्चाशद्योजनकोटिपरिमिता इत्यर्थः, अलोकभूमिसहिता इत्यपि बोध्यम्, समग्रभूगोलस्यैव पञ्चाशत्कोटिपरिमितत्वस्य पुराणेष्ववगमादिति, तदेतदिति। तदेतत्सर्वं भूगोलकं सुप्रति

खद्योतः, तत्र पाताले जलधौ पर्वतेष्वेतेषु देवनिकाया असुरगन्धर्वकिन्नरकिंपुरुषयक्षराक्षसभूतप्रेतपिशाचापस्मारकाप्सरोब्रह्मराक्षसकूष्माण्डविनायकाः प्रतिवसन्ति, सर्वेषु द्वीपेषु पुण्यात्मानो देवमनुष्याः, सुमेरुस्त्रिदशानामुद्यानभूमिः, तत्र मिश्रवनं नन्दनं चैत्ररथं सुमानसमित्युद्यानानि, सुधर्मा देवसभा,सुदर्शनं पुरं, वैजयन्तः प्रासादः, ग्रहनक्षत्रतारकास्तु ध्रुवे निबद्धा-

भास्वती ।

नात्, देवनिकायाः=देवयोनयः, वृन्दारकाः=पूज्याः, कामभोगिनः=काम्यविषयभोगिनः, औपपादिकदेहाः=पितरो येषां देहोत्पत्तिर्भवति, स्वसंस्कारेण सूक्ष्मावस्थां भौतिकं-

तत्त्ववैशारदी ।

यस्य तत्तथोक्तम्, ये यत्र प्रतिवसन्ति तत्र तान् दर्शयति—"तत्र पाताल" इति । सुमेरोः सन्निवेशमाह-"सुमेरुः" इति । तदेवं भूर्लोकं सप्रकारमुक्त्वा सप्रकारमेवान्तरिक्षलोकमाह-

वार्त्तिकम् ।

तमसङ्कीर्णं पञ्चाशत्कोटिपरिमितस्याण्डस्य मध्ये व्यूढं संक्षिप्तम्, इदं च शतकोटिविस्तारमण्डं सप्तावरणसहितमपि प्रकृतेरणुरंश इत्यर्थः, तदुक्तं विष्णुपुराणे प्रकृतिं प्रकृत्य—

अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ।
ईदृशानां तथा तत्र कोटिकोटिशतानि च ॥ इति,

सौरे च—

ब्रह्माण्डमेतत्सकलं ब्रह्मणः क्षेत्रमुच्यते ।
क्षेत्रज्ञश्च स एवोक्तो विरिञ्चिश्च प्रजापतिः ॥
सहस्रकोटयः सन्ति ब्रह्माण्डास्तिर्यगूर्ध्वगाः ।
ब्रह्माणो हरयो रुद्रास्तत्र तत्र व्यवस्थिताः ॥
आज्ञया देवदेवस्य महादेवस्य शूलिनः ।
ब्रह्माण्डानामसंख्यानां ब्रह्मविष्णुहरात्मनाम् ॥
उद्भवे प्रलये हेतुर्महादेव इति श्रुतिः । इति,

नारदीये च—

सृष्टिस्थित्यन्तकरणे ब्रह्मविष्णुमहेश्वराः ।
यस्यायुतायुतांशांशास्तद् ब्रह्मेत्यभिधीयते ॥ इति,

न चास्मिन्वाक्ये परमात्मांशत्वमेवाण्डशरीरिणां गम्यते न तु प्रकृत्यंशत्वं ब्रह्माण्डस्येति वाच्यम्, शक्तिशक्तिमतोरंशांशिभावेन शक्त्योरप्यंशांशिभावसिद्धेः, अग्निविस्फुलिङ्गादिश्रौतदृष्टान्तेषु तथा दर्शनात्,

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥

इति श्रुतेश्चेति,

इदानीं तत्तल्लोकवासिनो देवादीन् कथयति—तत्र पाताल इति। देवनिकायाः देवसमूहा-असुरादयश्च प्रतिवसन्तीत्यर्थः, देवाश्च मनुष्याश्च देवमनुष्याः, भूर्लोकस्थानुक्त्वा भुवर्लोकस्थानाह—ग्रहनक्षत्रेति । नक्षत्राण्यश्विन्यादिसप्तविंशतिरितराणि क्षुद्रज्योतींषि तारकाः, एते ग्रहादयः सर्वोपरिस्थिते मेढिकाष्ठवन्निश्चलतया स्थितेऽत एव ध्रुवसंज्ञके ज्योतिर्विशेषे वायुरज्ज्वा बद्धा गाव इव हालिकतुल्यचक्रवातैः प्रतिनियतसंचारेण कालविशेषैरवधृतगतयः सुमेरोरुपर्युपरिभावेन सन्निविष्टा भुवर्लोके भ्रमन्तीत्यर्थः,नन्वेवं सुमेरोरुपरि ज्योतिर्मण्डलस्य भ्रमणे कथं मेरुणा ज्योतिश्चक्रावरणं येन रात्रिदिवव्यवस्थितिरिति चेद् ? न—वृक्षेण

वायुविक्षेपनियमनोपलक्षितप्रचाराः सुमेरोरुपर्युपरि सन्निविष्टा विपरिवर्त्तन्ते, माहेन्द्रनिवासिनः षड् देवनिकायाः,—त्रिदशा, अग्निष्वात्ता,-याम्याः, तुषिता, अपरिनिर्मितवशवर्त्तिनः, परिनिर्मितवशवर्त्तिनश्चेति, सर्वे सङ्कल्पसिद्धा अणिमाद्यैश्वर्य्योपपन्नाः कल्पायुषो वृन्दारकाः कामभोगिन औपपादिकदेहा उत्तमानुकूलाभिरप्सरोभिः कृतपरिवाराः, महति लोके प्राजापत्ये पञ्चविधो देवनिकायः—कुमुदाः, ऋभवः, प्रतर्दना, अञ्जनाभाः, प्रचिताभा इति. एते महाभूतवशिनो ध्यानाहाराः कल्पसहस्रायुषः, प्रथमे ब्रह्मणो जनलोके चतुर्विधो देवनिकायो—ब्रह्मपुरोहिता ब्रह्मकायिका-ब्रह्ममहाकायिका अमरा इति, एते भूतेन्द्रियवशिनः, द्वितीये तपसि लोके त्रिविधो देवनिकायः—आभास्वरा, महाभास्वरा, सत्यमहाभास्वरा इति,

भास्वती।

गृहीत्वा ते शरीरमुत्पादयन्ति, भूतेन्द्रियप्रकृतिवशिनः = भूतेन्द्रियतन्मात्रवशिनः, ध्यानाहाराः = ध्यानमात्रोपजीविनो न कामभोगिनः, ऊर्ध्वं सत्यलोकस्येत्यर्थः, ज्ञानमेषामप्र-

तत्त्ववैशारदी।

"प्रह" इति। विक्षेपो = व्यापारः, स्वर्लोकमादर्शयति—"माहेन्द्रनिवासिन" इति। देवनिकायाः = देवजातयः, षण्णामपि देवनिकायानां रूपोत्कर्षमाह—"सर्वे सङ्कल्पसिद्धा"-इति। सङ्कल्पमात्रादेवैषां विषया उपनमन्ति, वृन्दारकाः = पूज्याः, कामभोगिनो = मैथुनप्रियाः, औपपादिकदेहाः = पित्रोः संयोगमन्तरेणाकस्मादेव दिव्यशरीरमेषां धर्मविशेषातिसंस्कृतेभ्योऽणुभ्यो भवतीति, महर्लोकमाह—"महति" इति। महाभूतवशिनः = यद् यदेव तेभ्यो रोचते तत्तदेव महाभूतानि प्रयच्छन्ति, तदिच्छातश्च महाभूतानि तेन तेन संस्थानेनावतिष्ठन्ते, ध्यानाहाराः = ध्यानमात्रतृप्ताः पुष्टा भवन्ति, जनलोकमाह—"प्रथम" इति। उक्तक्रमेण, "भूतेन्द्रियवशिन" इति। भूतानि पृथिव्यादीनि, इन्द्रियाणि = श्रोत्रादीनि यथा नियोक्तुमिच्छन्ति तथैव नियुज्यन्ते, उक्तक्रमापेक्षया द्वितीयं ब्रह्मणस्तपोलोकमाह—"द्वितीय" इति। "भूतेन्द्रियप्रकृतिवशिन" इति। प्रकृतिः = पञ्चतन्मात्राणि तद्वशिनः, तदिच्छा-

पातञ्जलरहस्यम्।

वायुष्विति। षण्णां गुणान्तरमाह—सर्वे इति। औपपादिकदेहाः = ऐच्छिकशरीराः कृतपरिवाराः, परिवारः कलत्रम्, एषां देवनिकायाः, किञ्च परापरलोकविद इत्याह—ऊर्ध्वमिति। सत्यलोकवादिनश्चत्वारो गृहरहिता इत्याह—अकृतेति। तर्हि किमाधारा इति चेत्तत्राह—स्वप्रतिष्ठा स्वमहिम्नीतिश्रुतेः, चतुर्णां ध्यानविशेषमाह—तत्राच्युता इत्या-

वार्त्तिकम्।

सूर्यव्यवधानवद्, मेरोरेकपार्श्वस्थसूर्यादेः पार्श्वान्तरेण व्यवधानसम्भवादिति, स्वर्लोकस्थानाह—माहेन्द्र इति। त्रिदशादयो देवानां जातिभेदाः कल्पायुषः, कल्पो ब्रह्मणो दिनं तदायुषः, संकल्पमात्रेण कर्त्तुं क्षमाः संकल्पसिद्धाः, वृन्दारकाः देवाः, औपपादिकदेहाः पित्रोः संयोगं विना क्षणमात्रेणोत्पद्यमानशरीरा इत्यर्थः, महर्लोकस्थानाह—महतीति। महाभूतानां परिणमने स्वतन्त्राः ध्यानाहारा ध्यानत एव तृप्ताः, जनलोकस्थानाह—प्रथम इति। भूतेन्द्रियवशिन इति। इन्द्रियाणां परिणमने स्वातन्त्र्यं पूर्वापेक्षयैषामधिकम्, द्विगुणेति। द्विगुणं द्विगुणरूपमुत्तरमधिकमायुर्येषां ते तथा, ब्रह्मपुरस्थितानामायुः कल्पसहस्रात् पूर्वोकाद् द्विगुणं तदुत्तरस्य तद्द्विगुणमेवं क्रमेण वृद्धिरित्यर्थः, तपोलोकस्थानाह—द्वितीय इति। ते भूत इति। भूतेन्द्रिययोः प्रकृतेरहंकारस्यापि वशिन इति पूर्वापेक्षयैषामाधिक्यम् अत्रा-

एते भूतेन्द्रियप्रकृतिवशिनो द्विगुणद्विगुणोत्तरायुषः सर्वे ध्यानाहारा ऊर्ध्वरेतस ऊर्ध्वमप्रतिहतज्ञाना अधरभूमिष्वनावृतज्ञानविषयाः, तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकायाः-अच्युताः शुद्धनिवासाः सत्याभाः सञ्ज्ञासञ्ज्ञिनश्चेति अकृतभवनन्यासाः स्वप्रतिष्ठा उपर्य्युपरिस्थिताः प्रधानवशिनो यावत्सर्गायुषः, तत्राच्युताः सवितर्कध्यानसुखाः, शुद्धनिवासाः सविचारध्यानसुखाः, सत्याभा आनन्दमात्रध्यानसुखाः, सञ्ज्ञासञ्ज्ञिनश्चास्मितामात्रध्यानसुखाः तेऽपि त्रैलोक्यमध्ये प्रतिनिष्ठन्ति,

भास्वती ।

तिहतम्, अधरभूमिषु निम्नस्थजनादिलोकेषु, अकृतभवनन्यासाः स्वप्रतिष्ठाः=निराधाराः,

तत्त्ववैशारदी ।

तो हि तन्मात्राण्येव कायाकारेण परिणमन्त इत्यागमिकाः, "द्विगुण"इति । आभास्वरेभ्यो-द्विगुणायुषो महाभास्वराः, तेभ्योऽपि द्विगुणायुषः सत्यमहाभास्वरा इत्यर्थः, "ऊर्ध्वम्" इति । ऊर्ध्वं सत्यलोके अप्रतिहतज्ञानाः, अवीचेस्तु प्रभृति आ तपोलोकं सूक्ष्मव्यवहितादि सर्वं विजानन्तीत्यर्थः, तृतीयं ब्रह्मणो लोकमाह—"तृतीय" इति । अकृतो भवनस्य गृहस्य न्यासो यैस्ते तथोक्ताः, आधाराभावादेव स्वप्रतिष्ठाः, स्वेषु शरीरेषु प्रतिष्ठा येषां ते तथोक्ताः, प्रधानवशिनः तदिच्छातः सत्त्वरजस्तमांसि प्रवर्तन्ते, यावत्सर्गायुषः, तथा च श्रूयते—

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम्" इति,

तदेवं चतुर्णां देवनिकायानां साधारणधर्मानुक्त्वा नामविशेषग्रहणेन धर्मविशेषानाह—"तत्र" इति । अच्युता नाम देवाः सूक्ष्मविषयध्यानसुखाः तेन ते तृप्यन्ति, शुद्धनिवासा नाम देवाः सूक्ष्मविषयध्यानसुखाः तेन ते तृप्यन्ति, सत्याभा नाम देवा इन्द्रियविषयध्यानसुखाः तेन ते तृप्यन्ति, सञ्ज्ञासञ्ज्ञिनो नाम देवा अस्मितामात्रध्यानसुखाः तेन ते तृप्यन्ति, त एते सर्वे सम्प्रज्ञातसमाधिमुपासते, अथासम्प्रज्ञातसमाधिनिष्ठा विदेहप्रकृतिलयाः

पातञ्जलरहस्यम् ।

दिना, वितर्कविचारानन्दास्मिता इत्यत्र मूलादि ध्येयमुक्तमत्र तद्व्यापिन आह—सवितर्केति । उपसंहरति—त इति । ब्रह्मलोकावधित्वाद् ब्रह्मलोका इति, एते सर्वे जन्ममरणशालिनः,

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! इतिस्मृतेः,

वार्त्तिकम् ।

ह ङ्कारेणान्तःकरणसामान्यग्रहणम्, एतेन स्वेच्छयाऽन्यपरयोर्निर्माणे चित्तोत्पादनादौ समर्था इति, द्विगुणेति । पूर्वानुसारेण व्याख्येयम्, ऊर्ध्वरेतस इति । प्राणायामवशादूर्ध्वमेव रेतांसि सूक्ष्माणि भूत्वा गच्छन्ति न स्खलन्ति संभोगाभावाद् येषां ते तथा, ऊर्ध्वं सत्यलोकादौ ज्ञानमप्रतिहतं शक्यं येषां ते तथा, अधोलोकेषु अनावृतो ज्ञानविषयो येषां ते तथेत्यर्थः, सत्यलोकस्थानाह—तृतीय इति । आदौ चतुर्णां साधारणानि विशेषणान्याह—अकृतेति । न कृतो भवनन्यासो गृहनिर्माणं यैस्ते तथा, स्वस्मिन्नेवात्मनि गृहे प्रतितिष्ठन्तीति स्वप्रतिष्ठा-आत्मवासाः उपर्युपरिस्थिता इति, अच्युतानामुपरि स्थिताः शुद्धनिवासाः, एवं क्रमेणेत्यर्थः, तथा च सत्यलोकेऽप्यवान्तरलोकभेदाः सन्तीत्यायातम्, प्रधानवशिनः प्रकृतौ स्वतन्त्रा-ईश्वराः = द्विपरार्द्धायुषः, तेषां चतुर्णां संज्ञाभेदमवान्तरविशेषं चाह—तत्राच्युता इति। अच्युत-संज्ञकाः सवितर्कयोगेनैव सुखिनः, शुद्धनिवासादयोऽप्येवं व्याख्येयाः, तेऽपि चत्वारोऽपि त्रैलोक्यमध्ये चतुर्दशभुवनमध्य एव तिष्ठन्ति न ब्रह्माण्डाद्बहिरित्यर्थः, नन्वेवमण्डस्य सर्वजीव-

त एते सप्त लोकाः सर्वे एव ब्रह्मलोकाः, विदेहप्रकृतिलयास्तु मोक्षपदे वर्त्तन्ते न लोकमध्ये न्यस्ता इति, एतद् योगिना साक्षात्कर्त्तव्यं सूर्य्यद्वारे संयमं कृत्वा, ततोऽन्यत्रापि,एवन्तावदभ्यसेद् यावदिदं सर्वं दृष्टमिति ॥ २६ ॥

भास्वती।

देहाभिमानातिक्रमणात्, विदेहप्रकृतिलया निर्बीजसमाध्यधिगमाच्च लोकमध्ये प्रतितिष्ठन्ति चित्तं तेषां तावत्कालं प्रधाने लीनं तिष्ठति, अतो न बाह्यसंज्ञा तेषां स्यात, सूर्यद्वारे=सुषुम्णाद्वारे ॥ २६ ॥

तत्त्ववैशारदी।

कस्माच्च लोकमध्ये न्यस्यन्त इत्यत आह—"विदेहप्रकृतिलयास्तु" इति। बुद्धिवृत्तिमन्तो हि दर्शितविषया लोकयात्रां वहन्तो लोकेषु वर्त्तन्ते, न चैवं विदेहप्रकृतिलयाः सत्यपि साधिकारत्व इत्यर्थः, तदेतद् आसत्यलोकम् आ चावीचेर्योगिना साक्षात्करणीयं, सूर्यद्वारे= सुषुम्नायां नाड्याम्, न चैतावताऽपि तत्साक्षात्कारो भवतीत्यत आह—"तत" इति। ततोऽन्यत्रापि= सुषुम्नाया अन्यत्रापि योगोपाध्यायोपदिष्टेषु, 'यावदिदं सर्वं=जगद् दृष्टम्' इति। बुद्धिसत्त्वं हि स्वभावत एव विश्वप्रकाशनसमर्थं तमोमलावृतं यत्रैव रजसोद्धाट्यते तदेव प्रकाशयति, सूर्यद्वारसंयमादुद्घाटितं भुवनं प्रकाशयति, न चयमन्यत्रापि प्रसङ्गः, तत्संयमस्य तावन्मात्रोद्घाटनसामर्थ्यादिति सर्वमवदातम् ॥ २६ ॥

पातञ्जलरहस्यम्।

प्रकृतिलयास्तु साधिकारिणोऽप्यवश्यंमोक्षभागिन इत्याह—विदेहप्रकृतीति। प्रकृतमुपसंहरति—एतदिति। साक्षात्करणीयमित्यर्थः ॥ २६ ॥

वार्त्तिकम्।

साधारण्यात् कथं ब्रह्माण्डसंज्ञेत्याकाङ्क्षायामाह—त एत इति। त एते सप्त लोका अवान्तरं चतुर्दशधा भिन्नाः सर्वे एवादिपुरुषस्य ब्रह्मणो लोका ब्रह्मणो हिरण्यगर्भस्य लिङ्गदेहेन सर्वलोकव्यापनात् पितापुत्रवदंशांशिभावेन सर्वजीवानां ब्रह्माभेदाच्चेति भावः, नन्वसम्प्रज्ञातसुखिनो यौ विदेहप्रकृतिलयौ 'भवप्रत्ययो विदेहप्रकृतिलयाना'मिति सूत्रोक्तौ तयोर्लोकः कथं नोक्तः तत्राह—विदेहेति। तेषां मुक्तप्रायत्वादीश्वरकोटित्वाच्च ब्रह्माण्डस्यान्तर्बहिः स्वातन्त्र्येण व्यापारवत्तया शास्त्रे न ते लोकमध्ये लोकवासिजनमध्ये गणिता इत्यर्थः,तदेवं संक्षेपतो भुवनशब्दार्थं व्याख्याय सूत्रवाक्यार्थमाह—एतद्योगिनेति। सूर्ये सूर्यद्वारे संयमं कृत्वा योगिनैवद् भुवनं साक्षात्करणीयम्,अत्र योगशास्त्रान्तरदर्शनेन द्वारशब्दः पूरित इत्युन्नीयते,सूर्यद्वारं च ब्रह्मणो लोकद्वारभूत 'सुषुम्नतश्चित्रं स आदित्यमागच्छति तस्मै स तत्र विजिहीते, यथा भास्करस्य खस्तेन स ऊर्ध्वमाक्रमत' इति श्रुतौ, 'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मे'ति श्रुतौ च तद्भाष्यकृता तथा व्याख्यातत्वात्,

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि।
ऊर्ध्वमेकस्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ॥
ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम्।

इति स्मरणाच्चेति, न केवलं सूर्यद्वारसंयमस्यैव भुवनज्ञानं फलं किं तु योगशास्त्रोक्तसंयमान्तरस्यापीत्यतो रागक्षयार्थम् अन्यत्र संयमेनापि समग्रभुवनं साक्षात्करणीयम् इत्युपदिशति—ततोऽन्यत्रापीति। ततः सूर्यद्वारादन्यत्राप्येवं संयमं तावदभ्यसेद् यावदिदं भुवनं दृष्टं भवेदित्यर्थः ॥ २६ ॥

## चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥

चन्द्रे संयमं कृत्वा ताराव्यूहं विजानीयात् ॥ २७ ॥

## ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥

ततो ध्रुवे संयमं कृत्वा ताराणां गतिं जानीयात्, ऊर्ध्वविमानेषु कृतसंयमस्तानि विजानीयात् ॥ २८ ॥

## नाभिचक्रे कायव्यूहज्ञानम् ॥ २९ ॥

नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात्, वातपित्तश्लेष्माणस्त्रयो दोषाः सन्तिः धातवः सप्त—त्वग्लोहितमांसस्नाय्वस्थिमज्जाशुक्राणि, पूर्वं पूर्वमेषां बाह्यमित्येष विन्यासः ॥ २९ ॥

## कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥

जिह्वाया अधस्तात् तन्तुः, ततोऽधस्तात् कण्ठः, ततोऽधस्तात्कूपः, [illegible]

भास्वती ।

चन्द्रे=चन्द्रद्वारे, उक्तञ्च—"तालुमूले च चन्द्रमाः" इति, चक्षुरादिबाह्येन्द्रियाधिष्ठानेषु संयमादिन्द्रियोत्कर्षस्ततः आलोकितवस्तुज्ञानं न च सूर्यद्वारवत् स्वालोकेन विज्ञानम् २७

ध्रुवे कस्मिंश्चिन्निश्चलतारके, ऊर्ध्वविमानेषु=आकाशे ज्योतिष्कनिलये ।।२८।।

कायव्यूहः=कायधातूनां विन्यासः ।। २९ ।।

तन्तुः=ध्वन्युत्पादकं कण्ठाग्रस्थं वितानिततन्तुरूपं वागिन्द्रियाङ्गम्, कण्ठः=[illegible]

पातञ्जलरहस्यम् ।

विभूत्यन्तरमाह—चन्द्र इति सूत्रं, व्यूहज्ञानातीति एतावत्य एतादृश इति ॥ २७ ॥

ऐश्वर्यान्तरमाह—ध्रुव इति । तासां तारकाणाम् ॥ २८ ॥

फलान्तरमाह—त्रयो धातवः, ध्रियते देह एभिरिति, ॥ २९ ॥

वार्त्तिकम् ।

"चन्द्रे ताराव्यूहज्ञानम्" भाष्यं सुगमम्, ॥२७॥

"ध्रुवे तद्गतिज्ञानम्" तारास्वरूपाणि ज्ञात्वैव तासां गतिज्ञानं सम्भवतीत्याशयेन भाष्ये तत इत्युक्तम्, ताराव्यूहज्ञानानन्तरमित्यर्थः, भाष्यं सुगमम्, अस्मिन्नेव प्रसङ्गे योगशास्त्रान्तरोक्ताद् भुवर्लोकस्[illegible]न्तरसं[illegible] सिद्धि स्वयं पूरयति—ऊर्ध्वेति । ऊर्ध्व[illegible]दित्यादिरर्थेषु कृतः साक्षात्कारपर्यन्तः संयमो येन स तानि विमानानि स्थानानि जानीयादित्यर्थ, ननु विमाने संयम[illegible] विमानसाक्षात्कारः सिद्धिरुक्ता साक्षात्कारपर्यन्तस्य च संयमस्य सर्वत्र सिद्धिकथनात् संयमानां स्वस्व[illegible]विषयसाक्षात्कारहेतुतायाः [illegible] सिद्धत्वाच्च ॥ २८ ॥

"नाभिचक्रे कायव्यूहज्ञानम्" शरीरमध्य[illegible] नाभिकन्दरूपं चक्रं कदलीमुकुलवदाद्युत्पन्नं यतः [illegible] तस्मिन्नाभिचक्रे संयमात् साक्षात्कृते कायव्यूहं [illegible] इत्यर्थः भाष्ये वातनिति, [illegible] बाह्येति, [illegible] शरीरसंस्थानम् ॥ २९ ॥

"कण्ठकूपे क्षुत्पिपासानिवृत्तिः" [illegible] स्यादिति । [illegible] उरसीत्याग[illegible]भा[illegible]वेण चोरःपर्यन्तत्वं कण्ठकूपस्य लभ्यते, तथा च जिह्वा[illegible]स्थस्य तन्तोर्मू-

संयमात् क्षुत्पिपासे न बाधेते ॥ ३० ॥

## कूर्मनाड्यां स्थैर्यम् ॥ ३१ ॥

कूपादध उरसि कूर्माकारा नाडी, तस्यां कृतसंयमः स्थिरपदं लभते, यथा सर्पो गोधा वेति ॥ ३१ ॥

## मूर्द्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥

शिरः कपालेऽन्तश्छिद्रं प्रभास्वरं ज्योतिः, तत्र संयमात् सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनम् ॥ ३२ ॥

## प्रातिभाद्वा सर्वम् ॥ ३३ ॥

प्रातिभं नाम तारकं, तद्विवेकजस्य ज्ञानस्य पूर्वरूपं, यथोदये प्रभा

---

भास्वती ।

नाड्या उर्ध्वभागः, कूपस्तदधः ॥ ३० ॥

स्थिरपदं = कायस्थैर्यजनितं चित्तस्थैर्यं ज्ञानरूपसिद्धीनामन्तर्गतत्वात्, यथा—सर्पो गोधा वा स्थाणुवन्निश्चलशरीरः स्वेच्छया तिष्ठति तथा योग्यपि निश्चलस्तिष्ठन्नङ्गमेजयत्वसहभाविना चित्तास्थैर्येण नाभिभूयत इत्यर्थः ॥ ३१ ॥

शिरःकपालेऽन्तश्छिद्रम् = आकाशवदनावरणं प्रभास्वरं शुभ्रं ज्योतिः, सिद्धः = देवयोनिविशेषः ॥ ३२ ॥

प्रातिभं = स्वप्रतिभोत्थं नान्यतो लब्धमित्यर्थः, तच्च विवेकजसार्वज्ञ्यस्य पूर्वरूपं·

तत्त्ववैशारदी ।

तत्र तत्र जिज्ञासायां योगिनस्तत्र तत्र संयमः, एवं क्षुत्पिपासानिवृत्तिहेतुः संयमः स्थैर्यहेतुश्च संयमः सूत्रपदैरुपदिष्टो भाष्येण च निगदव्याख्यातेन व्याख्यात इति न व्याख्यातः ॥ २७-३१ ॥

"मूर्द्धज्योतिषि सिद्धदर्शनम्" मूर्द्धशब्देन सुषुम्नानामा नाडी लक्ष्यते, 'तत्र संयम इति॥३२॥

"प्रातिभाद्वा सर्वं" प्रतिभा – ऊहः, तद्भवं प्रातिभं, प्रसङ्ख्यानहेतुसंयमवतो हि तत्प्र-

पातञ्जलरहस्यम् ।

सिद्ध्यन्तरमाह—कूर्मेति । स्थिरपदं स्थिरां चित्तवृत्तिं लभत इत्यर्थः ॥ ३१ ॥

विभूत्यन्तरमाह—मूर्द्धेति । शतं चैका हृदयस्य नाड्यस्तासाम्मूर्द्धानमभिनिःसृतैकेति श्रुतिमाश्रित्याह—मूर्द्धशब्देनेति टीका ॥ ३२ ॥

अन्तरङ्गसिद्धिमाह-प्रातीति । ऊहजं ज्ञानं विवेकसाक्षात्कारे ज्ञानस्योपकारितया तारकं-

वार्त्तिकम् ।

लादारभ्य उरःपर्यन्तं छिद्रं कण्ठकूपः कूपाकारश्छिद्रमिति, तत्रेति । तस्मिन् प्रदेशे संयमादशेषविशेषतः साक्षात्कृते सति क्षुत्पिपासानिवृत्तिरूपा सिद्धिर्भवतीत्यर्थः, एवंविधेषु च संयमेषु भावनाप्रकारो योगशास्त्रविशेषाद् गुरुमुखाच्च प्रत्येतव्यः ॥ ३० ॥

"कूर्मनाड्यां स्थैर्यम्" कूर्माकारेति । कुण्डलितसर्पवदवस्थिततया कूर्माकारं हृदयपुण्डरीकाख्यं नाडीचक्रं तत्र कृतसंयमो योगी स्थिरपदं स्थिरां चित्तवृत्तिं लभत इत्यर्थः, नाड्याः कूर्माकारत्वे दृष्टान्तद्वयं यथा सर्पो गोधा वेति कुण्डलित इति शेषः ॥३१॥

"मूर्द्धज्योतिषि सिद्धदर्शनम्" शिर इति । शिरःकपालमध्येऽन्तश्छिद्रं छिद्रस्यान्तः प्रभास्वरं स्वप्रकाशकं ज्योतिरस्तीत्यादिरर्थः, शिरःकपालमध्ये छिद्रं प्रभास्वरत्वाज्ज्योतिरिति प्रामादिकपाठेऽप्ययमेवार्थो लक्षणया कार्यः, शेषं सुगमम् ॥ ३२ ॥

"प्रातिभाद्वा सर्वम्" प्रातिभमिति । प्रातिभं स्वप्रतिभोत्थम् अनौपदेशिकं ज्ञानं संसार-

भास्करस्य तेन वा सर्वमेव जानाति योगी प्रातिभस्य ज्ञानस्योत्पत्ता-विति ॥ ३३ ॥

**हृदये चित्तसंवित् ॥ ३४ ॥**

यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तत्र विज्ञानं तस्मिन् संयमाच्चित्तसंवित् ॥ ३४ ॥

भास्वती ।

यथा सूर्योदयात्प्राक् सूर्यस्य प्रभा ॥ ३३ ॥

यदिति । अस्मिन् हृदये ब्रह्मपुरे यत् दहरम् = अन्तःसुषिरं क्षुद्रं पुण्डरीकं ब्रह्मणो यद् वेश्म तत्र विज्ञानं = चित्तं तस्मिन् संयमाच्चित्तस्य संवित् ह्लादकरं ज्ञानम्, न हि विज्ञानेन विज्ञानं साक्षाद् ग्राह्यं भवेद्, तर्हि ग्रहणस्मृतेर्यदवस्थायां प्राधान्यं सैव चित्तसंवित् ॥ ३४ ॥

तत्त्ववैशारदी ।

कथं प्रसङ्ख्यानोदयपूर्वलिङ्गं यत्सहजं ज्ञानं तेन सर्वं विजानाति योगी, तच्च प्रसङ्ख्यानसन्निधापनेन संसारात्तारयतीति तारकम् ॥ ३३ ॥

"हृदये चित्तसंवित्" । हृदयपदं व्याचष्टे—"यदिदमस्मिन् ब्रह्मपुरे" इति । बृहत्त्वादात्मा ब्रह्म तस्य पुरं निलयः, तद्धि तत्र विजानाति स्वमिति, दहरं = गर्त्तं तदेव पुण्डरीकमधोमुखं वेश्म मनसः, चित्तसंवेदनत्वे हेतुमाह—"तत्र विज्ञानम्" इति । तत्र संयमाच्चित्तं विजानाति स्ववृत्तिविशिष्टम् ॥ ३४ ॥

पातञ्जलरहस्यम् ।

कथ्यते, तथा दृष्टान्तमाह—यथोदये प्रभाया निरस्ते तमसि सम्यग् भास्करोदय इत्यर्थः, ततः किं तत्राह—प्रातिभस्येति ॥ ३३ ॥

हृदय इति, चित्तमतीतानागतवर्तमानवृत्तिकं तस्य संवित् सम्यग्वेत्ता साक्षात् कर्त्तेति सूत्रार्थः, अत एव भाष्यं तस्मिन् संयमात् चित्तसंवित् पुरुष इति शेषः, स्वमिति, स्वीयमिति किमाश्चर्यं तत्राह—स्ववृत्तिविशिष्टमिति ॥३४॥

वार्त्तिकम् ।

तरणोपायत्वात् तारकमिति, तारकं सर्वविषयमिति सूत्रे व्याख्यास्यते, तच्च विवेकजस्य वक्ष्यमाणस्य सार्वज्ञ्यस्य पूर्वलिङ्गम्, तत्र दृष्टान्तो यथा सूर्योदयस्य पूर्वलिङ्गं प्रभेति तेन वा प्रातिभज्ञानेन सर्वं पूर्वोक्तमतीतानागतादिसिद्धपर्यन्तं योगी जानाति पूर्वोक्तान्संयमान् विनाऽपीत्यर्थः, तेनेत्येतद्विवृणोति—प्रातिभस्य ज्ञानस्योत्पत्ताविति, द्वारान्तरापेक्षा नास्तीति भावः, यद्यपि तारकं सर्वविषयमित्यागामिसूत्रे विवेकजज्ञानमेव प्रातिभं तारकं च व्याख्यास्यते तथाऽप्यत्र प्रातिभादितिहेतुवचनाद् विवेकजज्ञानस्य पूर्वरूपमेव लक्षणया प्रातिभं तारकं चेति व्याख्येयम्, ननु संयमसिद्धिमध्ये कथं प्रातिभज्ञानजा सिद्धिरुच्यत इति चेद्, न-प्रातिभस्यापि क्षणतत्क्रमादिसंयमादिजन्यतया वक्ष्यमाणत्वेनोक्तसिद्धेरपि परम्परया संयमसिद्धित्वादिति ॥ ३३ ॥

संयमस्य क्षुद्रसिद्धय उक्ताः, इदानीं संयमस्य सत्त्वपुरुषान्यताख्यातिरूपां मुख्यां सिद्धिं विवक्षुरादौ तत्संयमहेतुभूतायाश्चित्तसंविदः कारणमाह—

"हृदये चित्तसंवित्" हृदयपदं व्याचष्टे—यदिदमिति, अस्मिन् ब्रह्मणः परमात्मनो जीवस्य च पुरे शरीरे यदिदं दहरं सगर्भं पुण्डरीकाकारं ब्रह्मणो वेश्म तत्र विज्ञानं विज्ञानवृत्तिकमन्तःकरणं ब्रह्मणः सिंहासनकल्पं तिष्ठति, अतस्तस्मिन् हृदयाख्ये वेश्मनि संयमाच्चित्तसाक्षात्कारो भवतीत्यर्थः ॥ ३४ ॥

**सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात् स्वार्थसंयमात् पुरुषज्ञानम् ॥ ३५ ॥**

बुद्धिसत्त्वं प्रख्याशीलं समानसत्त्वोपनिबन्धने रजस्तमसी वशीकृत्य सत्त्वपुरुषान्यताप्रत्ययेन परिणतम्, तस्माच्च सत्त्वात्परिणामिनोऽत्यन्तवि-

भास्वती ।

बुद्धिसत्त्वमिति । बुद्धिसत्त्वं = विशुद्धा ज्ञानशक्तिरित्यर्थः, प्रख्याशीलं = प्रकाशनस्वभावकं, सा च प्रख्या विक्षेपावरणाभ्यां विमृष्टा नोत्कर्षमापद्यते, समानसत्त्वोपनिबन्धने = समानं सत्त्वोपनिबन्धनम् = अविनाभाविसत्त्वं ययोस्ते तदविनाभाविनी रजस्तमसी वशीकृत्य = अभिभूय, चरमोत्कर्षप्राप्तं सत्त्वपुरुषान्यताप्रत्ययेन = विवेकप्रख्यारूपेण परिणतं भवति, चित्तसत्त्वमिति शेषः, परिणामिनो विवेकचित्तादपरिणामी चितिमात्ररूपः पुरुषो-

तत्त्ववैशारदी ।

"सत्त्व-ज्ञानम् । यत्र प्रकाशरूपख्यातिस्वच्छस्य नितान्ताभिभूतरजस्तमस्तया विवेकख्यातिरूपेण परिणतस्य बुद्धिसत्त्वस्यात्यन्तिकश्चैतन्यादसङ्करस्तत्र कैव कथा रजस्तमसोर्जडस्वभावयोरित्याशयवान् सूत्रकारः सत्त्वपुरुषयोरित्युवाच, इममेवाभिप्रायं गृहीत्वा भाष्यकारोऽप्याह—"बुद्धिसत्त्वम्प्रख्याशीलम्" इति । न प्रख्याशीलमात्रमपि तु विवेकख्यातिरूपेण परिणतम्, अतो नितान्तशुद्धप्रकाशतयाऽत्यन्तसारूप्यं चैतन्येनेति सङ्कर इत्याह—"समान" इति । तत्त्वेनोपनिबन्धनम् = अविनाभावः सम्बन्धः, समानं सत्त्वोपनिबन्धनं ययो रजस्तमसोस्ते तथोक्ते, वशीकारः = अभिभवः, असङ्करमाह—"तस्माच्च" इति । चकारोऽप्यर्थे-

पातञ्जलरहस्यम् ।

स वेत्ति वेद्यं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्,

इत्यादिश्रुतिमाश्रित्याह—सत्त्वेति । सत्त्वपुरुषयोरत्यन्तवैलक्षण्येऽपि जवास्फटिकयोरिव सान्निध्याद्भोगः; तत्र पुरुषे संयमात् पुरुषसाक्षात्कार इति ज्ञानं सूत्रारूढं करोति—

सत्त्वपुरुषयोरिति, त्रिगुणप्रधानकार्यत्वाद् बुद्धिरपि त्रिगुणात्मिका तथाऽपि तस्याः परिणामशीलत्वात् सत्त्वरूपेण पुरुषान्यताप्रत्ययरूपेण परिणतं चित्तं, चितिशक्तिरपरिणामिनीत्याह--तस्माच्चेति । एष प्रत्ययसर्ग इत्यत्रोक्तः प्रत्ययो बुद्धिः, तेन

वार्त्तिकम् ।

चित्ते ज्ञाते चित्ताद्विवेकेनात्मसाक्षात्कारो भवतीति क्रमानुसारेणाह—

"सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्स्वार्थसंयमात्पुरुषज्ञानम्" सत्त्वाधिक्यात्सत्त्वं बुद्धिः, परार्थादिति पञ्चमी चान्यपदमध्याहृत्य व्याकरिष्यति, तथा च बुद्धिपुरुषयोरत्यन्तविधर्मणोः प्रत्ययद्वयाविवेको भोगशब्दार्थः, तयोः प्रत्यययोर्मध्ये परार्थाद्विवेकेन स्वार्थे पौरुषेयप्रत्यये संयमात् साक्षात्कृते सति स्वयमेव पूर्णत्वाद्यशेषविशेषैः पुरुषस्य साक्षात्कारो भवति तादृशसंयमाभावेऽपीत्यर्थः, यद्यपि पौरुषेयः प्रत्ययः पुरुषातिरिक्तो न भवति तथाऽपि दृश्योपरागेण परिच्छिन्नांश एव प्रत्ययः श्रोत्रादिवत् पुरुषस्त्वपरिच्छिन्नो महाकाशवद् दृत्यनयोर्भेद इत्यतः प्रत्यये साक्षात्कारपर्यन्तसंयमस्यापरिच्छिन्नत्वाद्यंशमात्राधिक्येन फलं पुरुषसाक्षात्कार उक्त इति, नन्वत्र सूत्रे भोगलक्षणस्य किं प्रयोजनमिति चेत्—उच्यते—भोगरूपेणैव बुद्धिपुरुषधर्मयोरविवेकाद् धर्मिणोः सांकर्यमतो भोग्यमध्य एव तद्धर्मयोर्विवेकाय संयमः कार्य इति प्रतिपादयितुम्, अनेन सूत्रेण भोगोऽपि लक्षितः तदेतद्व्याख्यातुमादावत्यन्तशब्दस्याभिप्रेतमर्थं प्रकटयति-बुद्धिसत्त्वमित्यादिना, अयमर्थः-न केवलं बाह्याद्याकारबुद्ध्या सहासंकीर्णः पुरुषोऽपि तु यद् बुद्धिसत्त्वं प्रख्याशीलतया समानसत्त्वाधीनवृत्तिके रजस्तमसी

धर्मा शुद्धोऽन्यश्चितिमात्ररूपः पुरुषः, तयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः पुरुषस्य दर्शितविषयत्वात् स भोगप्रत्ययः सत्त्वस्य परार्थत्वाद् दृश्यः, यस्तु तस्माद्विशिष्टश्चितिमात्ररूपोऽन्यः पौरुषेयः प्रत्ययस्तत्र संयमा-

भास्वती।

ऽत्यन्तविधर्मा इत्येतयोरत्यन्तासङ्कीर्णयोः = अत्यन्तविभिन्नयोः, यः प्रत्ययाविशेषः = अभिन्नताप्रत्ययः = विज्ञाताऽहमित्येकप्रत्ययान्तर्गतता, स भोगः पुरुषस्य भोक्तुः, दर्शितविषयत्वादेव पुरुषेऽयं भोगोपचार इत्यर्थः, भोगरूपः प्रत्ययः परार्थत्वाद् भोक्तुरर्थत्वाद् दृश्यः, यस्तु तस्माद्विशिष्टश्चितिमात्ररूपोऽन्यो द्रष्टा तद्विषयः पौरुषेयः प्रत्ययः = पुरुषस्व-

तत्त्ववैशारदी।

कः, न केवलं रजस्तमोभ्यामित्यर्थः 'परिणामिन' इति वैधर्म्यमपरिणामिनः पुरुषादुक्तम्, प्रत्ययविशेषः = शान्तघोरमूढरूपाया बुद्धेश्चैतन्यबिम्बोद्ग्राहेण चैतन्यस्य शान्ताद्याकाराध्यारोपः, चन्द्रमस इव स्वच्छसलिलप्रतिबिम्बितस्य तत्कम्पनात् कम्पनारोपः, भोगहेतुमाह- "दर्शितविषयत्वात्" इत्यसकृद् व्याख्यातम्, ननु बुद्धिसत्त्वमस्तु पुरुषभिन्नं, भोगस्तु पुंसः कुतो भिद्यत इत्यत आह—"स" इति, स भोगप्रत्ययः = भोगरूपः प्रत्ययः सत्त्वस्य, अतः परार्थत्वाद् दृश्यो भोगः, सत्त्वं हि परार्थं संहतत्वात्, तद्धर्मश्च भोग इति सोऽपि परार्थः, यस्मै च परस्मा असौ तस्य भोक्तुर्भोगः, अथ वाऽनुकूलप्रतिकूलवेदनीयो हि सुखदुःखानुभवो भोगः, न चायमात्मानमेवानुकूलयति प्रतिकूलयति वा स्वात्मनि वृत्तिविरोधात्, अतोऽनुकूलनीयप्रतिकूलनीयार्थो भोगः स भोक्ता आत्मा, तस्य दृश्यो भोग इति, यस्तु त-

पातञ्जलरहस्यम्।

महाविशेषाच्चिति तद्गतशान्तघोराद्यारोपः यथा जलगतकम्पाद्यारोपश्चन्द्रमसि तस्मिन् चन्द्रमसः स्थानीये स्वार्थे पुंसि संयमात् पुरुषसाक्षात्कार इति सूत्रार्थः, स च साक्षात्कारो-

वार्त्तिकम्।

अभिभूय सत्त्वपुरुषान्यतासाक्षात्काररूपेण परिणतं भवति, तस्माच्च तस्मादपि प्रकृष्टज्ञानैश्वर्यानन्दादिमयाद् बुद्धिसत्त्वादात्माकारतयाऽऽत्मकल्पात् परिणामिनोऽत्यन्तविधर्मा पुरुषो विशुद्धः परिणामशून्योऽतोऽन्यश्चितिमात्ररूप इति, अत्यन्तशब्दार्थं व्याख्याय भोगप्रतिपादकं सूत्रार्थं व्याचष्टे—तयोरिति। तयोर्बुद्धिपुरुषयोरत्यन्तविधर्मणोरपि प्रत्ययाविशेषः प्रत्यययोर्विविच्याग्रहणं भोगः, अगृहीतविवेकौ प्रत्ययाविति यावत्, अयमप्यविवेको बुद्धिधर्म इति स्मर्तव्यम्, तत्र बुद्धेः प्रत्ययः सुखादिमती विषयाद्याकाराचित्तवृत्तिः पुरुषस्य प्रत्ययो बुद्धिवृत्तिप्रतिबिम्बावच्छिन्नचैतन्यांशः सुखाद्यात्मकशब्दाद्यनुभवनामा, तयोरविवेके हेतुमाह—पुरुषस्य दर्शितविषयत्वादिति यतो बुद्ध्या पुरुषे प्रतिबिम्बमर्पितं ततो जपास्फटिकयोरिव धर्मसङ्करापत्तेरविवेक इत्यर्थः, तथा च स्मर्यते—

"शुद्धोऽप्यात्माऽतिसामीप्याद् दृश्यधर्मान् पृथग्विधान्।
कर्तृत्वभोक्तृत्वसुखान्मन्यते स्वान्स्ववीक्षितान्॥
जीवो बहिरितीक्षित्वा स्फुटभिन्नानपि स्वतः।
नेमान् वेत्त्यन्तरासन्नान् मुखसक्तां मसीमिव"॥

स्फुटभिन्नानपीमानर्थान् जीव ईक्षित्वा स्वस्माद् बहिरिति स न वेत्ति यत ईक्षणान्यथाऽनुपपत्त्याऽन्तरासन्नान् प्रतिबिम्बितान्, तत्र दृष्टान्तो मुखलग्नां मसीमित्यर्थः, परार्थादित्याद्युत्तरार्धं संयमसिद्धिप्रदर्शकं व्याचष्टे-स भोगप्रत्यय इत्यादिना-जायते इत्यन्तेन, सोऽविभागापन्न उभयात्मको भोगाख्यः प्रत्ययः सत्त्वस्यांशः परार्थत्वात् परप्रयोजनकत्वाद् दृश्यः, यस्तु तस्मात् परार्थादन्यो विशिष्टः स्वार्थः परस्य बुद्ध्यादेरदृश्यः साक्षाद् दृश्यश्च

त्पुरुषविषया प्रज्ञा जायते, न च पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषो दृश्य-

भास्वती।

भावख्यातिमती चित्तवृत्तिः; तत्र संयमात् तन्मात्रे समाधानात् पुरुषविषया चरमा प्रज्ञा जायते, न च द्रष्टा बुद्धेः साक्षाद्विषयः स्यात् रूपरसादिवत् किन्तु-आत्मबुद्धिं साक्षा-

तत्त्ववैशारदी।

स्मात्परार्थाद्विशिष्ट इति=परार्थादिति पञ्चम्यन्यपदाध्याहारेण व्याख्याता, स्यादेतत्—पुरुषविषया चेत्प्रज्ञा हन्त भोः पुरुषः प्रज्ञायाः प्रज्ञेय इति प्रज्ञाऽन्तरमेव तत्र तत्रेत्यनवस्थापात इत्यत आह—"न च पुरुषप्रत्ययेन" इति। अयमभिसन्धिः—चित्या जडः प्रकाश्यते,

पातञ्जलरहस्यम्।

बुद्ध्युपादानको बुद्धिविषयकश्चेत्याह—न चेति। जडत्वेन प्रत्ययस्यापि पुंभास्यत्वमित्याह—पुरुष इति। पदार्थत्वाविशेषात् पुरुषोऽपि तद्भास्यः स्यात्तत्र स वेत्ति वेद्यं न हि तस्य वेत्ता

वार्त्तिकम्।

चैतन्यमात्रः पौरुषेयः पुरुषांशः प्रत्ययः भोगाख्यः; तत्र यथोक्तविवेकेन संयमात्साक्षात्कारपर्यन्तात् पुरुषसाक्षात्कारो भवतीत्यर्थः, अत्रान्यपदाध्याहारः कृतः तदनेन सूत्रेण भोगापवर्गावपि व्याख्यातौ स्वयं च मुख्य एव भोगोऽविविक्तप्रत्ययात्मको लोकव्यवहारसिद्धः विवेकग्रहे सति परकीयसुखादिसाक्षात्कार इव स्वीयसुखादिसाक्षात्कारेऽपि भोगव्यवहारयोगात् सोऽयं भोगोऽविवेकप्राधान्येन कुत्र चिद् बुद्धेरेवेत्यप्युच्यते, तथा सोऽयं भोगोंऽशभेदेनोभयोरेव भवति, तत्रैव गौणो भोगः सांख्ये प्रोक्तः 'चिदवसानो भोग' इति, स च पुरुषस्यैव न बुद्धेः, पुरुषोऽस्ति भोक्तृभावादिति सांख्यवाक्यात्, अन्यस्तु विपाकान्तर्गतो भोगः शब्दाद्याकारवृत्तिश्च बुद्धेरेव तावेतौ भोगापवर्गौ बुद्धावेव वर्त्तमानाविति भाष्यात्, स हि तत्फलस्य भोक्तेति तत्र तत्र भाष्यकृता विपाकफलस्य सुखदुःखादेर्भोगान्तरवचनाच्चेति स्मर्त्तव्यम्, ननु पुरुषज्ञानं भवतीत्युक्तं तत् पुरुषज्ञानं किं बुद्धिसत्त्वस्य भवति, किं वा पुरुषस्य भवति, आद्ये बुद्धेरपि चेतनत्वापत्तिः स्वोक्तपरादृश्यत्वानुपपत्तिश्च, तथा ते तं न पश्यन्ति स पश्यते तान् इत्यादिवाक्यशतविरोधश्च, अन्त्ये स्वस्य स्वज्ञेयत्वेन कर्मकर्तृविरोधः सदैव स्वज्ञानप्रसङ्गश्च, पुरुषस्यापरिणामिचिन्मात्रत्वादिति तामिमामाशङ्कां परिहरति—न च पुरुषस्येति। पुरुषाकारप्रत्ययेन बुद्धिसत्त्वधर्मेण पुरुषो न दृश्यते न भास्यते तस्य जडत्वाद्; अपि तु पुरुष एव तं प्रत्ययं स्वस्वरूपाकारं पश्यति बुद्ध्यारूढमात्मानं पश्यतीत्यर्थः, स्वस्मिन्प्रतिबिम्बितमिति शेषः, तथा च स्वप्रतिबिम्बितस्वाकारबुद्धिवृत्तिदर्शनमेव पुरुषस्य पुरुषज्ञानम्, यथा स्वप्रतिबिम्बितघटाकारबुद्धिदर्शनमेव पुरुषस्य घटदर्शनमिति, न चात्र कर्मकर्तृविरोधः, कर्मकर्तृविरोधे हि स्वस्मिन् स्वसम्बन्धानुपपत्तिरेव बीजं प्रकाशसम्बन्धस्यैव प्रकाश्यतारूपत्वात्, अनुभवप्राप्त्योरेकार्थत्वाच्च, स च सम्बन्ध एकस्मिन्नपि बिम्बप्रतिबिम्बाख्यरूपभेदेनोपपन्न इति, अथैवमपि परसमवेतक्रियाफलभागित्वरूपं कर्मलक्षणं पुरुषे न घटत इति चेन्न-विशिष्टाविशिष्टरूपेण ज्ञातृज्ञेययोर्भेदसत्त्वात्, आत्माकारवृत्त्यवच्छिन्नस्य ज्ञातृत्वात् केवलस्य ज्ञेयत्वात्, न चैवमेकवृत्त्यवच्छिन्नबुद्धेर्वृत्त्यन्तरावच्छिन्नबुद्धिग्राह्यत्वसम्भवात् पुरुषकल्पना व्यर्थेति वाच्यम्, अनवस्थाऽऽदिदोषैः सूत्रेण निरस्यत्वादिति, यत्तु—आधुनिकवेदान्तिब्रुवानुसारेणास्मदीयोऽपि कश्चिद् आत्मनो ज्ञेयत्वाभावमेव वदति तद् यथाश्रुतसूत्रभाष्यविरोधादुपेक्षणीयम्, स्वप्रकाशत्वं चात्मनः स्वज्ञेयत्वमेव 'चेतनात्मा स्ववेदन' इत्यादिस्मृत्यनुसारात्, शब्दस्य योगार्थपरित्यागानौचित्याच्च, बुद्ध्यादिजडवर्गव्यावृत्तेस्तेनैव संभवाच्चेत्यादिकं ब्रह्ममीमांसायां प्रतिपादितमस्माभिः, यदपि वृत्तिव्याप्यत्वमात्मनोऽभ्युपेत्य फलव्याप्यत्वं वेदान्तिब्रुवैरपलप्यते तदपि मोहादेव; फलव्याप्यत्वस्य सामान्यतो व्यवहारहेतुतायाः क्लृप्तत्वेन चैतन्याख्यफलव्याप्यतां विना चैतन्यव्यवहारानुपपत्तेः, अन्यथा घटादिव्यवहारस्यापि

ते, पुरुष एव प्रत्ययं स्वात्मावलम्बनं पश्यति, तथा ह्युक्तं,—"विज्ञातारमरे केन विजानीयाद्" इति ॥ ३५ ॥

भास्वती।

स्कृत्य ततोऽन्य एवंस्वभावः पुरुष इत्येवं पुरुषस्वभावविषया चरमा प्रज्ञा विज्ञात्रा तद्वस्थायां प्रकाश्यते, अत्रोक्तं श्रुतौ-"विज्ञातारमि"त्यादि,

एतदुक्तं भवति—यस्य स्वभूतोऽर्थोऽस्ति स स्वार्थः स्वामिस्वरूपः पुरुषः, पुरुषाकारत्वाद् ग्रहीताऽपि स्वार्थ इव प्रतीयते, तादृशः स्वार्थो ग्रहीता हि संयमस्य विषयः, ग्रही-

तत्त्ववैशारदी।

न जडेन चितिः, पुरुषप्रत्ययस्त्वचिदात्मा कथं चिदात्मानं प्रकाशयेत्, चिदात्मा त्वपराधीनप्रकाशो जडं प्रकाशयतीति युक्तम्, बुद्धिसत्त्वात्मनेति। अचिद्रूपतादात्म्येन जडत्वमाह—बुद्धिसत्त्वगतपुरुषप्रतिबिम्बालम्बनात्पुरुषालम्बनं दर्पणवन्मुखालम्बनं न तु पुरुषप्रकाशनात्पुरुषालम्बनम्, बुद्धिसत्त्वमेव तु तेन प्रत्ययेन संक्रान्तपुरुषप्रतिबिम्बं पुरुषच्छायाऽऽपन्नं चैतन्यमालम्बत इति पुरुषार्थः अत्रैव श्रुतिमुदाहरति-"तथा ह्युक्तम्" इति। ईश्वरेण,

पातञ्जलरहस्यम्।

इत्यादिश्रुतिर्बाधिकेत्याह-तथा ह्युक्तमिति। तेन स्वात्मनि क्रियाविरोधान्नापि परेण सर्वस्य जडत्वात् परात्मनः परसाक्षात्काराविषयत्वाच्चेति भाष्यार्थः, जलपयसोरिव पुम्बुद्ध्योरसङ्कर इत्यत्र कैमुतिकन्यायमाह—यत्रेत्यादि—उवाचेत्यन्तेन,

अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः—

इत्युक्तिमाश्रित्याह—परार्थत्वादिति। भोक्ताऽपि परार्थो दृष्ट स्त्रीणां वरमनुस्मरन्निति श्रुतेरित्यपरितोषादाह—अथ वेति। अनुकूलनीयः पुमान् तदर्थं सर्वाशेषत्वे सति सर्वशेषित्वं-

वार्त्तिकम्।

वृत्तिव्याप्यत्वेनैवोपपत्तौ विषयप्रकाशकतया चैतन्यकल्पनावैयर्थ्यात्, 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे'त्यादिवाक्यानि च लौकिकमनआदिवृत्त्यगोचरत्वमेव प्रतिपादयन्ति, मनसैवानुद्रष्टव्य इत्यादिश्रुत्यन्तरात्,

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति—

इत्यादिश्रुत्या योगिमनोविषयत्वावगमाच्च, न तु फलव्याप्यत्वं निराकुर्वन्तिः मनआदीनां जडत्वेन फलानाधारत्वात, फलं विना शास्त्रादीनां ब्रह्मणि प्रमाणत्वादिदोषासम्भवादिति दिक्, पुरुषस्यैव स्वज्ञातृत्वमित्यत्र श्रुतिं प्रमाणयति—तथा ह्युक्तमिति। ईश्वरेणेति शेषः, आत्मा यदि न नित्यज्ञानरूपस्तर्हि केन ज्ञानान्तरेण विज्ञातारमात्मानं लोको विजानीयादित्यर्थः, यद्वा मोक्षकाले बुद्ध्यादिविलयात् केन करणेन तदानीं विज्ञातारमात्मानं पुरुषो विजानीयादित्यर्थः, अत्र हि श्रुतौ करणेन पुरुषस्यैव स्वज्ञेयत्वमवगम्यते, अज्ञेयत्वे च विज्ञातारं को विज्ञानीयादित्येवोच्येतेति, इयं श्रुतिः पुरुषस्य सर्वदैवाज्ञेयत्वं वदतीति कश्चित्, तन्न—यतो न प्रेत्यसंज्ञाऽस्तीति पूर्ववाक्ये याज्ञवल्क्येन मोक्षकाले ज्ञानस्वरूपोऽपि पुरुषो न जानातीत्युक्तम् आखलदुःखभोगनिवृत्तिरूपपरमपुरुषार्थमोक्षं प्रदर्शयितुम्, तत्र विरोधं दृष्ट्वा मूढाया मैत्रेय्यास्तद्विरोधपरिहारायैवेदं वाक्यं प्रवर्त्तते न तु पुरुषस्याज्ञेयत्वप्रदर्शनाय; अप्रकृताभिधानप्रसङ्गादिति, ननु भवन्मतेऽपि पराज्ञेयत्वेन कथं मैत्रेय्याः शङ्काऽपगच्छतीति चेन्न—'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि'ति पूर्वश्रुत्यैव विरोधस्य परिहृतत्वात्, स्वयं ज्ञानस्वरूपोऽपि सर्वकरणविलयान्मोक्षकाले किमपि न विजानातीति, तत्र च मैत्रेय्या कदा चिदाशङ्क्येत मोक्षकालेऽनभिव्यक्त्या आत्मा ज्ञानस्वरूप एव माऽस्त्विति, तत्रोत्तरं वाक्यं प्रवर्त्तते-येनेदं सर्वं विजानाति तं केन विजानीयाद् विज्ञातारमरे केन विज्ञानीयादिति, आत्मा यदि ज्ञानस्वरू-

**ततः प्रातिभश्रावणवेदनाऽऽदर्शास्वादवार्ता जायन्ते ॥३६॥**

प्रातिभात्सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानं, श्रावणाद् दिव्यशब्द-श्रवणं, वेदनाद् दिव्यस्पर्शाधिगमः, आदर्शाद् दिव्यरूपसंविद्, आस्वादाद् दिव्यरससंविद्, वार्त्ततो दिव्यगन्धविज्ञानम्, इत्येतानि नित्यं जायन्ते ॥ ३६ ॥

भास्वती ।

तृबुद्धिरपि यस्य स्वभूता स हि सम्यक् स्वार्थः स्वामी द्रष्टृपुरुषः ॥ ३९ ॥

प्रातिभादिति । श्रावणाद्या योगिजनप्रसिद्धा आख्याः, भाष्येण निगदव्याख्यातम्, एताः सिद्धयो नित्यं भूमिविनियोगमन्तरेणेत्यर्थः प्रादुर्भवन्ति ॥ ३६ ॥

तत्त्ववैशारदी ।

"विज्ञातारम्" इति । न केन चिदित्यर्थः ॥ ३९ ॥

स च स्वार्थसंयमो न यावत्प्रधानं स्वकार्य्यं पुरुषज्ञानमभिनिर्वर्त्तयति तावत् तस्य पुरस्ताद् या विभूतीराधत्ते ताः सर्वा दर्शयति-"ततः—जायन्ते", तदनेन योगजधर्मानुगृहीतानां मनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां यथासंख्यं प्रातिभज्ञानदिव्यशब्दाद्यपरोक्षहेतुभाव उक्तः, श्रोत्रादीनां पञ्चानां दिव्यशब्दाद्युपलम्भकानां तान्त्रिक्यः सञ्ज्ञाः श्रावणाद्याः, सुगमं भाष्यम् ॥ ३६ ॥

पातञ्जलरहस्यम् ।

भोक्तृत्वमित्यर्थः ॥ ३९ ॥

पुरुषज्ञानादेते षडिन्द्रियानादिविषयाः साक्षात्कृताः स्युरित्याह—तत इति । प्रातिभेत्यादिकरणानां परिभाषा ततः प्रातिभात्सूक्ष्मादिपञ्चसाक्षात्कारात्मकं मानसम्, एवं श्रावणादिपञ्चकं, श्रवणादिपञ्चबाह्येन्द्रियादिजन्यसाक्षात्कारो योगिमनुष्याणां देवानां तु भवत्येव, वार्त्ता इति परिभाषिकी संज्ञा टीकायामपि श्रावणाद्या तान्त्रिकीत्युक्तम् ॥ ३६ ॥

वार्त्तिकम् ।

पो न भवति तद्विषयकज्ञानान्तरकल्पनेऽनवस्थादिकमिति श्रुतेराशयः ॥३९॥

स्वार्थप्रत्ययसंयमेन पुरुषसाक्षात्कारे जाते सति तल्लिङ्गरूपाणि विवेकजज्ञानस्य च पूर्वरूपाणि प्रातिभाऽऽद्याः सिद्धयो भवन्ति ताश्च पुरुषैकाग्रतापरिपन्थित्वेनासम्प्रज्ञातयोगविघ्नभूता एवेति प्रतिपादयितुमादौ ताः प्रदर्शयति—

"ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते" ततःपुरुषसाक्षात्काराद् मनआदीनां प्रातिभादिसंज्ञिकाः सिद्धयः सामर्थ्यविशेषरूपा भवन्ति यस्मात्सामर्थ्यान्मनआदिषु व्यवहितादिज्ञानं भवतीत्यर्थः, अत्र कश्चित्—तत इति तच्छब्देन पुरुषज्ञानं न परामृश्यते, तद्दर्शनप्रत्यनीकत्वादित्यागामिसूत्रभाष्ये पुरुषदर्शनप्रतिबन्धकत्ववचनादपि तु स्वार्थसंयम एव परामृश्यते; तथा च पूर्वसूत्रोक्तसंयमस्यैवेदं पुरुषज्ञानात्प्राक्तनं सिद्ध्यन्तरमिति, तन्न—एकस्याः पुरुषज्ञानरूपसिद्धेरुक्ततया चकाराद्यभावेन सिद्ध्यन्तराकाङ्क्षाविरहात्, पुरुषज्ञानस्यैव मुख्यतयोपस्थितत्वेन परामर्शौचित्याच्च, अतस्तच्छब्देनात्र पुरुषज्ञानस्यैव परामर्शः पुरुषसाक्षात्काररूपपुरुषैकाग्रताप्रत्यनीकतया तु भाष्यकारः प्रातिभादेरसम्प्रज्ञातसमाधावेवोपसर्गत्वं वक्ष्यतीति, प्रातिभादिशब्दोः स्वकार्यैर्लक्षयति भाष्यकारः-प्रातिभादिति, प्रतिभा = उपदेशादिनैरपेक्ष्येण सूक्ष्मादीनां मानसं यथाऽर्थज्ञानं तत्सामर्थ्यं प्रातिभम्, एवं श्रावणाद्यपि व्याख्येयम्, वेदनाद्यास्तु संज्ञास्त्वक्चक्षूरसनघ्राणानां सामर्थ्येषु बोध्याः, नित्यमिति, कामनां विनाऽपि जायन्त इत्यर्थः ॥ ३६ ॥

## ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥

ते प्रातिभादयः समाहितचित्तस्योत्पद्यमाना उपसर्गाः, तद्दर्शनप्रत्यनीकत्वाद्, व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः ॥ ३७ ॥

## बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥

लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयवशाद्बन्धः प्रतिष्ठेत्यर्थः,

भास्वती ।

त इति । तद्दर्शनप्रत्यनीकत्वात्=समाहितचेतसो यत्पुरुषदर्शनं तस्य प्रत्यनीकत्वात्=प्रतिपक्षत्वाद् ॥ ३७ ॥

लोलीति । ज्ञानरूपाः सिद्धीरुक्त्वा क्रियारूपा आह—लोलीभूतस्य=चञ्चलस्य यत्र क्व चन गामिनो मनसः कर्माशयवशाद्=मनसः स्वाङ्गभूतात संस्काराद् शरीरधारणादि मनसः कार्यं वश्यता, तत्कर्मणः सातत्यात् शरीरे चित्तस्य बन्धः प्रतिष्ठा नान्यत्र गतिः,

तत्त्ववैशारदी ।

कदा चिदात्मविषयसंयमप्रवृत्तस्तत्प्रभावादमूरर्थान्तरसिद्धीरधिगम्य कृतार्थम्मन्यः संयमाद्विरमेदत आह—"ते समाधावुपसर्गा व्युत्थाने सिद्धयः" व्युत्थितचित्तो हि ताः सिद्धीरभिमन्यते जन्मदुर्गत इव द्रविणकणिकामपि द्रविणसम्भारम्, योगिना तु समाहितचित्तेनोपनताभ्योऽपि ताभ्यो विरन्तव्यम्, अभिसंहिततापत्रयात्यन्तिकोपशमरूपपरमपुरुषार्थः स खल्वयं कथं तत्प्रत्यनीकासु सिद्धिषु रज्येतेति सूत्रभाष्ययोरर्थः ॥ ३७ ॥

तदेवं ज्ञानरूपमैश्वर्य्यं पुरुषदर्शनान्तं संयमफलमुक्त्वा क्रियारूपमैश्वर्य्यं संयमफलमाह—"बन्धकारण-आवेशः" 'समाधिबलाद्' इति । बन्धकारणविषयसंयमबलात्, प्राधान्यात्स-

पातञ्जलरहस्यम् ।

"अथ वा योगिनामेव कुले भवति धीमताम्—

नाशान्तो नासमाहितः नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयाद्, इत्यादिस्मृतिश्रुती आश्रित्य सूत्रेणाह—ते समाधावुपसर्गा व्युत्थाने सिद्धयः, उपसर्गा अविद्यामुमुक्षोः, व्युत्थाने बुभुक्षोस्तु सिद्धयः भोगसाधनत्वादिति तस्मात्तेभ्य अपसर्तव्यमिति तात्पर्यम् ॥ ३७ ॥

विभूतिपाद इतिसमाख्याबलाद्वैराग्यमुक्त्वा पुनर्विभूतिमाह-बन्धकारणेतिसूत्रम् ।

चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद् दृढम्,

इति स्मृत्यनुभयावाश्रित्याह—लोलीति ।

वार्त्तिकम् ।

समाधौ विघ्नरूपास्त्वेतासूपेक्षां कृत्वा पुरुषदर्शनाभ्यास एव कर्त्तव्य इत्येतत्प्रतिपादयितुमाह—

"ते समाधावुपसर्गा व्युत्थाने सिद्धयः" ते प्रातिभादयः समाधिनिष्पत्तावसम्प्रज्ञातरूपाम् उपसर्गा अन्तराया अतो व्युत्थानापेक्षयैवैते सिद्धयः, पुरुषार्था इत्यर्थः, भाष्ये तद्दर्शनेति, तस्य समाहितस्य तद्दर्शनं पुरुषैकाग्र्यं तत्प्रतिबन्धकत्वादित्यर्थः ॥ ३७ ॥

तदेवं ज्ञानादिरूपाः संयमसिद्धीः प्रदर्श्य क्रियादिरूपा अपि विभूतीः संयमफलान्याहसूत्रजातेन—

"बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः" बन्धशब्दार्थमाह—लोलीभूतस्येति । चञ्चलस्वभावस्यात एवाप्रतिष्ठस्यैकत्रानवस्थितस्यापि मनसो धर्माधर्मवशादेव शरीरे या प्रतिष्ठा ज्ञानहेतुः सम्बन्धविशेषः स बन्ध इत्यर्थः, संयमसिद्धित्वोपपादना-

तस्य कर्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद् भवति प्रचारसंवेदनं च चित्तस्य समाधिजमेव, कर्मबन्धक्षयात् स्वचित्तस्य प्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति निक्षिप्तं चित्तं चेन्द्रियाण्यनु पतन्ति, यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनु निविशन्ते तथेन्द्रियाणि परशरीरावेशे चित्तमनुविधीयन्त इति ॥ ३८ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥

समस्तेन्द्रियवृत्तिः प्राणादिलक्षणा जीवनं, तस्य क्रिया पञ्चतयी प्राणो-

भास्वती।

समाधिना सुनिश्चले शरीरे; रुद्धे च पाणादौ शरीरधारणादेः कर्माशयमूलाया मनःक्रियाया अभावात् शैथिल्यं जायते शरीरेण सह मनसो बन्धस्य, प्रचारसंवेदनं = नाडीमार्गेषु चेतसो यः प्रचारस्तस्य साक्षादनुभवः समाधिबलादेव भवति, परशरीरे निक्षिप्तंचित्तमिन्द्रियाण्यनुगच्छन्ति, मक्षिका इव मधुकरप्रधानम् ॥ ३८ ॥

समस्त इति। ऊर्ध्वस्रोता = उदानः, तस्योर्ध्वगधारारूपस्य संयमेन जयाद्, लघु भवति

तत्त्ववैशारदी।

माधिग्रहणम्, प्रचरत्यनेनास्मिन्निति प्रचारः, चित्तस्य गमागमाध्वानो नाड्यः। तस्मिन् प्रचारे संयमात्तद्वेदनं, तस्माच्च बन्धकारणशैथिल्याच्च तेन प्रतिबध्यते, अप्रतिबद्धमप्युन्मार्गेण गच्छन् स्वशरीरादप्रत्यूहं निष्क्रामति, न च परशरीरमाविशति, तस्मात्तत्प्रचारोऽपि ज्ञातव्यः, इन्द्रियाणि च चित्तानुसारीणि परशरीरे यथाऽधिष्ठानं निविशन्त इति ॥ ३८ ॥

"उदान-श्च"। समस्तेन्द्रियवृत्तिर्जीवनं प्राणादिलक्षणा, प्राणादयो लक्षणं यस्याः सा तथोक्ता, द्वयीन्द्रियाणां वृत्तिर्बाह्याऽऽभ्यन्तरी च, बाह्या रूपाद्यालोचनलक्षणा, आभ्यन्तरी तु जीवनम्, स हि प्रयत्नभेदः शरीरोपगृहीतमारुतक्रियाभेदहेतुः सर्वकरणसाधारणः, यथाऽऽहुः- "सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" इति, तेनास्य लक्षणीयत्वात्, तस्य = प्रयत्नस्य,

पातञ्जलरहस्यम्।

इच्छता ह्यन्यतश्चित्तं पुनरप्येति योगिनः।
यत्र मनो विलीयते पवनस्तत्र लीयत-
इत्युक्तिमाश्रित्याह—निक्षिप्तं चित्तमित्यादि-अनुविधीयतइत्यन्तेन ॥ ३८ ॥

सिद्ध्यन्तरमाह—उदानेतिसूत्रं, तत्र कृतसंयमस्य तज्जयात् तदुत्क्रान्तिः प्राणि-

वार्त्तिकम्।

याह—तस्येति। तस्य कर्मणः शैथिल्यं भावनेन दृढबन्धनाक्षमता समाधिसामान्यबलाद्भवतीत्यर्थः, तथा च प्रागुक्तं, कर्मबन्धनानि श्लथयतीति, प्रचारेति, अनया नाड्या एवंप्रकारेण चित्तं शरीरे प्रविशति निर्गच्छति चेत्यादिविशेषैश्चित्तगतिसाक्षात्कारः प्रचारसंवेदनं-तदपि समाधिसामान्यादेव भवतीत्यर्थः, सूत्रवाक्यार्थमाह—कर्मेति, कर्मनिमित्तकस्य निर्गमप्रतिबन्धसंयोगविशेषस्य क्षयादित्यर्थः, शेषं सुगमम् ॥ ३८ ॥

योगशास्त्रोक्तसंयमविशेषेणोदानजयात्सिद्धिमाह—

"उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च" उदानं विवेचयितुं प्राणादीन् पञ्चैव स्वरूपतोऽवान्तरभेदतश्च प्रतिपादयति—समस्तेति। जीवननाम्नी सर्वेन्द्रियाणां वृत्तिः प्राणनापाननादिरूपेत्यर्थः, अत्रेन्द्रियशब्देन स्थूलसूक्ष्मोभयपरतया करणमात्रग्रहणम्, समस्तशब्दोऽपि सामान्यवचनः,

"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चे"ति—

मुखनासिकागतिराहृदयवृत्तिः, समं नयनात्समानश्चानाभिवृत्तिः, अपनयनादपान आपादतलवृत्तिः, उन्नयनादुदान आशिरोवृत्तिः, व्यापी व्यान इति, तेषां प्रधानं प्राणः, उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च प्रायण-

भास्वती ।

शरीरं ततो जलपङ्ककण्टकादिष्वसङ्गः = कण्टकाद्युपरिस्थतूलादिवद् , उत्क्रान्तिः =

तत्त्ववैशारदी ।

क्रिया – कार्य्यं पञ्चतयी प्राण आ नासिकाऽग्रादा च हृदयादवस्थितः, अशितपीताहारपरिणतिभेदं रसं तत्र तत्र स्थाने समम् = अनुरूपं नयन् समानः; आ हृदयादा च नाभेरस्य स्थानम्, मूत्रपुरीषगर्भादीनामपनयनहेतुरपानः; आ नाभेरा च पादतलादस्य वृत्तिः, उन्नयनाद् = ऊर्ध्वनयनाद् रसादीनामुदानः; आ नासिकाऽग्रादा च शिरसो वृत्तिरस्य, व्यापी व्यानः, एषामुक्तानां प्रधानं प्राणः, तदुत्क्रमे सर्वोत्क्रमश्रुतेः–"प्राणमुत्क्रामन्तमनु सर्वे प्राणा उत्क्रामन्ति" इति, तदेवं प्राणादीनां क्रियास्थानभेदेन भेदं प्रतिपाद्य सूत्रार्थमवतारयति–"उदान-

पातञ्जलरहस्यम् ।

मात्रस्य साधारणी तत्र क संयमापेक्षेति चेत्तत्तु तपो येनामृतत्वमेतीत्याश्रित्याह–तां-

वार्त्तिकम् ।

सांख्ये दर्शनात्, तेन सुषुप्तौ चक्षुराद्युपरमेऽपि प्राणादिवृत्तयो जीवनयोनियत्नवशादन्तःकरणस्यैव भवन्ति निद्रावृत्तिवदिति, न चैवं चित्तमात्रस्यैव लाघवात्प्राणादिवृत्तिकत्वमस्त्विति वाच्यम्, चक्षुराद्युपचयापचयाभ्यां प्राणानामुपचयापचयदर्शनात्, अथ वा सुषुप्तेऽपीन्द्रियाणां ज्ञानकर्मलक्षणवृत्त्योरेव प्रतिषेधात् प्राणनादिवृत्तिसत्त्वेऽप्यक्षतिः, ननु बाह्यवायुभिरन्तः प्राणानां समानलक्षणत्वाद् वायुसंस्थानविशेषा एव प्राणाः सन्तु किमर्थं करणानामपि वायुतुल्यः क्रियाऽऽदिः कल्प्यत इति चेन्न—'प्राणाच्छ्रद्धां खं वायु'रित्यादिश्रुतिषु वायोः प्राणकार्यत्वश्रवणात् 'न वायुक्रिये पृथगुपदेशा'दिति ब्रह्मसूत्रे वायुतत्सञ्चाराभ्यामतिरेकस्य प्राणेऽवधारणाच्च, श्रुतिस्मृत्यनुगृहीता युक्तिश्चात्रास्ति यदि करणप्राणौ भिन्नौ स्यातां तर्हि करणवियोगेऽपि मृतदेहवत् कदाचित् प्राणा अपि तिष्ठेयुः, किं चान्तःकरणस्य शोकादिना प्राणस्य कम्पादिर्दृश्यते तत्र लाघवात्सामानाधिकरण्येनैव कार्यकारणभावो युक्तोऽन्यधर्मेणान्यपरिणामेऽतिप्रसङ्गाद्; अदृष्टकल्पनाऽऽपत्तेश्च, अपि च लिङ्गशरीरस्य देहशृङ्खलया बन्ध एव कर्मादीनां हेतुत्वं कल्प्यते न तु वायुबन्धनेऽपि गौरवात्, उद्गारादिवायूनां जीवद्देहपरित्यागदर्शनाच्च वायुगतवैजात्यादिकल्पनायां चातिगौरवादिति लिङ्गशरीरस्योर्ध्वाधःसञ्चारादुत्पद्यमानेन वायुना सहाविवेकात्तु तप्तायःपिण्डवत्प्राणेषु वायुव्यवहारः, अनेनैव व्यवहारेण सांख्येऽपि प्राणाद्या वायवः पञ्चेत्युक्तम्, अपि च श्रुतिस्मृत्योः करणप्राणयोः भेदव्यवहारो-वृत्तिभेदादेव मन्तव्यः, ऊर्ध्वाधोगतिलक्षणाः करणानां परिणामभेदाः प्राणा इत्युच्यन्ते, तत्र च वायुरधिष्ठात्री देवता सूर्यश्चक्षुर्भूत्वा प्राण इत्यादिश्रुतेः, ज्ञानादिहेतुपरिणामास्तु करणान्युच्यन्त इति विभागः, अतो देवतया सहाभेदादपि सूर्यश्चक्षुरितिवद् वायुः प्राण इति व्यवहारो-युक्त इति, कश्चित्तु–अत्र प्राणादिजीवनशब्दाभ्यां प्राणनादिनामकवायुक्रियाविशेषहेतुः प्रयत्नभेद एवोक्तः स च करणनिष्ठ इति भाष्यार्थमाह—तन्न—विवरणभाष्ये प्राणादीनां गत्यादिवचनस्य विरोधाद् अत्रापि सांख्यकारिकाब्रह्ममीमांसैकवाक्यत्वौचित्यात्, वायोः प्राणत्वस्य क्वापि दर्शने सूत्रकारानुक्तत्वाच्च, अत एव च लिङ्गशरीरमध्ये प्राणा न गण्यन्ते करणेऽप्रवेशादिति, तस्येति, तस्य करणसामान्यस्य साधारणी क्रिया पञ्चतयी क्रियोपलक्षितपरिणामभेदः पञ्चतय इत्यर्थः, समुन्नयनादिति, सममनुरूपं नाडीषु रसानां नयनात्समानः, अस्य च हृदयान्नाभिपर्यन्तं वृत्तिः, अपेति, मूत्रपुरीषगर्भादीनामपसरणहेतुरपानः, अस्यानाभेः पादतलपर्यन्तं वृत्तिः, उन्नयनादिति । ऊर्ध्वगतिप्रदत्वात् रसाद्यूर्ध्वनयनाच्चोदानः, अस्य च

काले भवति, तां वशित्वेन प्रतिपद्यते ॥ ३९ ॥

**समानजयाज्ज्वलनम् ॥ ४० ॥**

जितसमानस्तेजस उपध्मानं कृत्वा ज्वलति ॥ ४० ॥

**श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम् ॥ ४१ ॥**

भास्वती ।

स्वेच्छयाऽर्चिरादिमार्गेणोत्क्रान्तिर्भवति प्रायणकाले, एवं तामुत्क्रान्तिं वशित्वेन प्रतिपद्यते = लभत इत्यर्थः ॥ ३९ ॥

जितेति । समानः = समनयनकारिणी प्राणशक्तिः, सोऽशितपीताघ्रातमाहार्यं शरीरत्वेन परिणमयति, उक्तञ्च—

"समं नयति गात्राणि समानो नाम मारुतः" इति,

तज्जयात्तेजसः = छटाया उपध्मानम् = उत्तम्भनमुत्तेजनं ततश्च प्रज्ज्वलन्निव लक्ष्यते योगी ॥ ४० ॥

तत्त्ववैशारदी ।

जयाद्" इति । उदाने कृतसंयमस्तज्जयाज्जलादिभिर्न प्रतिहन्यते, उत्क्रान्तिश्चार्चिरादिमार्गेण भवति प्रयाणकाले, तस्मात्तामुत्क्रान्तिं वशित्वेन प्रतिपद्यते प्राणादिसंयमात्तज्जये विभूतय एताः क्रियास्थानविजयादिभेदात् प्रतिपत्तव्याः ॥ ३९ ॥

"समान—म्" । तेजसः शारीरस्योपध्मानम् = उत्तेजनम् ॥ ४० ॥

स्वार्थसंयमादन्वाचयशिष्टं श्रावणाद्युक्तम्, सम्प्रति श्रावणाद्यर्थादेव संयमाच्छ्रावणादि भवतीत्याह—"श्रोत्र—श्रोत्रम्" संयमविषयं श्रोत्राकाशयोः संबन्धमाधाराधेयभावमाह— "सर्व" इति । सर्वश्रोत्राणामाहङ्कारिकाणामप्याकाशं = कर्णशष्कुलीविवरं प्रतिष्ठा तदा-

पातञ्जलरहस्यम् ।

वशित्वेन प्रतिपद्यत इति संयमादर्चिरादिमार्गेण गच्छतीति शेषः ॥ ३९ ॥

उदानजयात् सुखोत्क्रान्तिः तथा समानजयादिच्छया देहभस्मीकरणमित्याह—समानमित्याह—समानेति ॥ ४० ॥

प्रातिभेतिसूत्रादेवेत्युक्तं किमर्थमिदं सूत्रमित्याशङ्क्य सङ्गतिमाह—स्वार्थेति । श्रावणादिश्रोत्रशब्दयोः सम्बन्धः स एवार्थो विषयो यस्य संयमस्य स तथा तस्मादित्यर्थः, श्रोत्रेति, श्रोत्रस्य दिव्यत्वं दूरसूक्ष्मशब्दग्राहित्वं तेन हस्तिनापुरे स्थितेन संजयेन व्यासदत्तदिव्यश्रोत्रेण कुरुक्षेत्रनिवासिनां मन्त्रणादिकं श्रुत्वा धृतराष्ट्राय कथितमिति सङ्गच्छते, श्रोत्रस्याहङ्कारिकत्वेन जगन्मण्डलव्यापित्वेऽपि कर्णशष्कुल्यवच्छिन्नत्वेन ग्राहकत्वमित्याह—सर्वश्रो-

वार्त्तिकम् ।

मुखनासिकाऽऽदिकमारभ्य ब्रह्मरन्ध्रपर्यन्तं वृत्तिः, व्याप्नोति, सर्वदेहव्यापिवृत्तिको बलवत्कर्महेतुर्व्यानः, ननु सर्वेषां वृत्तिभेदात् कथं पञ्च प्राणा इत्युच्यन्ते तत्राह—एषामिति, प्राणो यदश्नाति पिबति तेनैवान्येषां धारणं भवतीति कृत्वैतेषां प्राणो मुख्यः, अतो मुख्यस्य नामादिभिर्गौणानां व्यवहारो राजानुगतेषु राजव्यवहारवदिति भावः' तदेवमुदानं व्याख्याय सूत्रं व्याचष्टे—उदानजयादिति, उदानसंयमादन्यसंयमाद्वोदानवायोः स्वायत्ततायां सत्यां जलपङ्ककण्टकादीनाम् उपरि सञ्चरतोऽपि तेष्वसङ्गो भवति तैर्विकारहेतुः संयोगो न भवति तथाऽर्चिरादिमार्गे गमनाय स्वेच्छयोत्क्रान्तिर्भवतीत्यर्थः, प्रसङ्गादाह—तामिति, तामूर्ध्वमुत्क्रान्तिमुदानवशित्वं विना न लभत इत्युदानजयी स्यादित्यर्थः ॥ ३९ ॥

"समानजयाज्ज्वलनम्" संयमविशेषजात्समानजयात् ज्वलनं भवतीत्यर्थः, भाष्य उपध्मानम् उत्तेजनं कृत्वा ज्वलति सतीवत्स्वशरीरं दहतीत्यर्थः ॥ ४० ॥

**सर्वश्रोत्राणामाकाशं प्रतिष्ठा सर्वशब्दानां च, यथोक्तं—"तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति" इति, तच्चैतदाकाशस्य लिङ्गमनावरणं-**

भास्वती ।

सर्वेति । सर्वश्रोत्राणामाकाशं=शब्दगुणकं निरावरणं बाह्यद्रव्यं प्रतिष्ठा=कर्णेन्द्रियशक्तिरूपेण परिणतयाऽस्मितया व्यूहितमाकाशभूतमेव श्रोत्रं तस्मादाकाशप्रतिष्ठं श्रोत्रेन्द्रियम्, सर्वशब्दानामप्याकाशं प्रतिष्ठा, एतत् "पञ्चशिखाचार्यस्य" सूत्रेण प्रमाणयति—तुल्येति । तुल्यदेशश्रवणानां=तुल्यदेश आकाशे प्रतिष्ठितानि श्रवणानि येषां-

तत्त्ववैशारदी ।

यतनं श्रोत्रम्, तदुपकारापकाराभ्यां श्रोत्रस्योपकारापकारदर्शनात्, शब्दानां च श्रोत्रसहकारिणाम्, पार्थिवादिशब्दग्रहणे कर्त्तव्ये कर्णशष्कुलीसुषिरवर्त्ति श्रोत्रं स्वाश्रयनभोगतासाधारणशब्दमपेक्षते, गन्धादिगुणसहकारिभिर्घ्राणादिभिर्बाह्ये पृथिव्यादिवर्त्तिगन्धाद्यालोचने कार्य्यं दृष्टम्, आहङ्कारिकमपि घ्राणरसनत्वक्चक्षुःश्रोत्रं भूताधिष्ठानमेव भूतोपकारापकाराभ्यां घ्राणादीनामुपकारापकारदर्शनादित्युक्तम्, तच्चेदं श्रोत्रमाहङ्कारिकमयःप्रतिममयस्कान्तमणिकल्पेन वक्तृवक्त्रमुत्पन्नेन वक्त्रस्थेन शब्देन, कृष्टं स्ववृत्तिपरम्परया वक्तृवक्त्रमागतं शब्दमालोचयति, तथा च दिग्देशवृत्तिशब्दप्रतीतिः प्राणभृन्मात्रस्य नासति बाधके प्रमाणीकृता भविष्यतीति, तथा च पञ्चशिखस्य वाक्यं--"तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति" इति, तुल्यदेशानि श्रवणानि=श्रोत्राणि येषां चैत्रादीनां ते तथोक्ताः, सर्वेषां श्रवणान्याकाशवर्त्तीनीत्यर्थः, तच्च श्रोत्राधिष्ठानमाकाशं शब्दगुणकतन्मात्रादुत्पन्नं शब्दगुणकं येन शब्देन सहकारिणा पार्थिवादीन् शब्दान् गृह्णाति, तस्मात्सर्वेषामेकजातीया श्रुतिः शब्द इत्यर्थः तदनेन श्रोत्राधिष्ठानत्वमाकाशस्य शब्दगुणत्वं च दर्शितमिति, तच्च=एकदेशश्रुतित्वमाकाशस्य लिङ्गम्, सा ह्येकजातीया शब्दव्यञ्जिका श्रुतिर्यदाश्रया त-

पातञ्जलरहस्यम् ।

त्राणामिति, वृत्तिलाभस्तु तत्र तत्रेत्युक्तेः शब्दगुणमाकाशमित्युक्तिमाश्रित्याह—शब्दानांत्विति । तत आकाशनिष्ठत्वे श्रोत्रस्य लिङ्गान्तरमाह-तदुपकारेति, रूपग्रहे बहिरालोकसहकारिवत् शब्दग्रहेऽपि श्रोत्रस्य तदस्तीत्याह—स्वाश्रयगतेति, इन्द्रियस्यावच्छिन्नस्यैव स्वविषयग्राहकत्वमित्याह-आहंकारिकत्वमपीति । विषय एवेन्द्रियादेराकर्षक इति प्रणालिकामाह--तच्चेदमिति, निश्चलमिति, लौहं चुम्बकेन मणिनाऽऽकृष्टं व्यापारवद् दृष्टं तद्वत् श्रोत्रादीन्द्रियमपीत्याह--तेन फलितमाह—तच्चेति । उपपत्तिमाह--सा हीत्यादि--अनुपपत्तेरित्यन्तेन,

वार्त्तिकम् ।

"श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम्" आदावाकाशशब्दार्थे तत्र प्रमाणं च दर्शयति—सर्वश्रोत्राणामिति । यद्यपीन्द्रियाण्याहंकारिकाण्येव न भौतिकानि; इन्द्रियाणां प्रकाशात्मकतया प्रकाशात्मकान्तःकरणोपादानकत्वस्यैवौचित्यात्, तथाऽप्याकाशाश्रिततयाऽऽकाशप्रतिष्ठत्वं यथाऽन्नाश्रिततया मनसोऽन्नमयत्वमिति, एतेनान्येषामपीन्द्रियाणां भौतिकत्वं श्रुतिस्मृत्युदितं व्याख्यातं तत्तद्भूतसंसृष्टतयेन्द्रियोत्पत्त्या तत्तद्भूतेभ्य एव तत्तदिन्द्रियाभिव्यक्तेः, अत एव दिगात्मकाकाशादीनि पृथिवीपर्यन्तानि पञ्च श्रोत्रादिदेवाः श्रूयन्त इति, शब्दानां चाकाशोपादानत्वमेवास्ति तथा च श्रोत्रशब्दयोराश्रय आकाशमित्यथः श्रोत्राणामाकाशाश्रयत्वे पूर्वाचार्यसंमतिमाह—यथोक्तमिति । कालभेदेन तुल्यदेशानि श्रावणाख्यज्ञानानि येषां पुंसां तेषामेकश्रुतित्वमेकदेशावच्छिन्नश्रोत्रकत्वं तत्तत्काले भवतीत्यर्थः, स चैको देश आकाशमेवेति भावः, आकाशे प्रमाणमप्याह—तच्चैतदिति । तच्चैतत् श्रोत्रं शब्दश्चाकाशस्य लिङ्गमनुमापकं न हि सूक्ष्ममिन्द्रियमनाश्रयं स्थातुमर्हति गन्धवत् कर्णशष्कुली

चोक्तम्, तथाऽमूर्त्तस्यानावरणदर्शनाद्विभुत्वमपि प्रख्यानमाकाशस्य शब्द-

भास्वती।

—नरदृशां सर्वेषां प्राणिनाम्, एकदेशश्रुतित्वम्=आकाशस्यैकदेशावच्छिन्नश्रुतित्वं भवतीति, आकाशप्रतिष्ठकर्णेन्द्रियाणां सर्वेषांकर्णेन्द्रियमाकाशैकदेशवर्त्तीत्यर्थः, तदेतदाकाशस्य लिङ्गं=स्वरूपम्, अनावरणम्=अबाध्ययानताऽवकाशस्वरूपत्वमिति यावद्, उक्तं तथा

तत्त्ववैशारदी।

देवाकाशशब्दवाच्यम्, न हीदृशी श्रुतिमन्तरेण शब्दव्यक्तिः, न चेदृशी श्रुतिः पृथिव्यादिगुणस्तस्य स्वात्मनि व्यङ्ग्यव्यञ्जकत्वानुपपत्तेरिति, अनावरणं चाकाशलिङ्गम्, यद्याकाशं नामविष्यदन्योन्यं सम्पीडितानि मूर्त्तानि न सूचीभिरप्यभेत्स्यन्त, ततश्च सर्वैरेव सर्वमावृतं स्याद्, न च मूर्त्तद्रव्याभावमात्रादेवानावरणम्, अस्याभावस्य भावाश्रितत्वेन तदभावेऽभावाद्, न च चितिशक्तिस्तस्याश्रया भवितुमर्हति, अपरिणामितयाऽवच्छेदकत्वाभावात्, न च दिक्कालादयः पृथिव्यादिद्रव्यव्यतिरिक्ताः सन्ति, तस्मात्तादृशः परिणतिभेदो नभस एवेति सर्वमवदातम्, अनावरणे चाकाशलिङ्गे सिद्धे यत्र यत्रानावरणं तत्र सर्वत्राकाशमिति सर्वगतत्वमप्यस्य सिद्धमित्याह—"तथाऽमूर्त्तस्य" इति। श्रोत्रसद्भावे प्रमाणमाह—

पातञ्जलरहस्यम्

श्रुतिरत्र श्रवणेन्द्रियं, उक्तद्रव्याभाव आकाश इति मतं निरसितुमाह—असाधारणमिति। अवच्छेदकाभावादुपादानत्वाभावादिति भावः, तन्मात्रस्य शब्दतन्मात्रस्य नभः परिणामः कार्यमित्यर्थः, दिशः श्रोत्रमजायत इति श्रुतौ सत्यामप्यनुमानमाह श्रोत्रसद्भाव इति। अन्यथासिद्धमन्वयव्यतिरेकाभ्यां निराह—बधिराबधिरयोरिति। श्रोत्रस्य दिव्यत्वसिद्धि-

वार्त्तिकम्।

च न तस्याधारो लोकान्तरगमनादिकाले कर्णशष्कुल्यभावात् कर्णविवरपिधानेऽपि शब्दश्रवणप्रसङ्गाच्च, न च विवरपिधाने सति शब्दा एव श्रोत्रे न गच्छन्तीति वाच्यम् भित्त्यादिवत् कर्णच्छिद्रस्थद्रव्याणामपि शब्दागमनाप्रतिबन्धकत्वात्, नापि शून्यमाधारोऽभावानभ्युपगमात्, अभावस्य भावाधारत्वासंभवाच्च, नापि कर्णशष्कुल्यवच्छिन्नः पुरुषादिराधारः, विवरपिधानेऽपि तदवच्छेदेन चैतन्याद्यभिव्यक्त्या पुरुषादेरनावृततया शब्दग्रहणप्रसङ्गात्, तस्मात् पिधानयोग्यमेकं द्रव्यं श्रोत्राधारतयाऽपेक्षितं तच्च परिशेषात् कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रगोलकतया सिद्ध्यतीति भावः, शब्दाधारतायामप्येवं परिशेषः कर्त्तव्यः, तथा हि—अवकाशस्य शब्दकारणत्वं तावत् सर्वसिद्धम् अवकाशश्च नावरणाभावमात्रम् अभावस्य भावानाधारत्वाद् अन्यथा सर्ववस्तूनामभावमात्रमूलकत्वापत्तेः, नापि पुरुषादिः, तेषां स्वस्वव्यापाराप्रच्यवेनावकाशासंभवात्, आवृतत्वाभिमतदेशेऽपि शब्दाद्युत्पत्तिप्रसङ्गाच्च, नापि वायुः द्रव्यान्तरपूरितेऽपि वेण्वादौ वायुसंयोगेन शब्दप्रसङ्गाच्च, न च च्छिद्रवायुसंयोगोऽपि शब्दकारणं, तथा सति संयोगाधारतया छिद्रस्य द्रव्यत्वसिद्धौ तस्यैव शब्दाश्रयत्वं युक्तं-शब्दोत्पत्ताववकाशस्यैवाधिक्येनोपयोगदर्शनादिति, तस्मादावरणीयतयाऽऽकाशद्रव्यं सिद्ध्यतीति, अनावरणं चाकाशस्य लिङ्गं पूर्वाचार्यैरुक्तमित्याह—अनावरणं चेति। अनावरणमवकाशः, यदि हि अवकाशरूपमाकाशं न स्यात् तदा मूर्त्तद्रव्येषु स्थाल्यादिष्वन्तस्तेजआदिप्रवेशो न स्यात्, अथाभाव एवावकाशस्तर्ह्यभावस्य भावाश्रितत्वनियमेनाकाशसिद्धेः, अस्माभिरभावानभ्युपगमाच्च, आत्मादिश्चावकाशो न संभवति आवरणासंभवादित्युक्तमिति, आकाशस्य विभुत्वमपि प्रसङ्गात्साधयति—तथेति, मूर्त्तत्वं परिच्छिन्नत्वम् अनावरणमनावृतत्वम् असमानदेशत्वमिति यावत्, तथा चान्यत्र पृथिवीजलादिस्थले मूर्त्तस्य परिच्छिन्नस्य मूर्त्तान्तरासमानदेशत्वदर्शनाद् घटादिसमानदेशकस्याकाशस्य विभुत्वं सिद्ध्यति आका-

ग्रहणानुमितं श्रोत्रं, बधिराबधिरयोरेकः शब्दं गृह्णात्यपरो न गृह्णातीति, तस्माच्छ्रोत्रमेव शब्दविषयम्, श्रोत्राकाशयोः संबन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्त्तते ॥ ४१ ॥

**कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्ते-श्चाकाशगमनम् ॥ ४२ ॥**

भास्वती ।

अमूर्त्तस्य = अप्रतिहतस्यानावरणदर्शनात् = सर्वत्रावस्थानयोग्यतादर्शनाद् विभुत्वं = सर्वगतत्वमप्याकाशस्य प्रख्यातम्, "मूर्त्तस्ये"ति पाठोऽसमीचीनः, श्रोत्राकाशयोः सम्बन्धे = अभिमानाभिमेयरूपे संयमात् कर्णोपादानवशित्वं ततश्च दिव्यश्रुतिः = सूक्ष्माणां दिव्यशब्दानां ग्रहणसामर्थ्यम्, न च तन्मात्रग्राहकत्वं दिव्यश्रुतित्वं; दिव्यविषयस्यापि सुखदुःखमोहजनकत्वात् ॥ ४१ ॥

तत्त्ववैशारदी ।

"शब्दग्रहण" इति । क्रिया हि करणसाध्या दृष्टा, यथा छिदादिर्वास्यादिसाध्या, तदिह शब्दग्रहणक्रिययाऽपि करणसाध्यया भवितव्यम्, यच्च करणं तच्च श्रोत्रमिति, अथास्याश्चक्षुरादय एव कस्मात्करणं न भवन्तीत्यत आह—"बधिराबधिरयोः" इति, अन्वयव्यतिरेकाभ्यामवधारणम्, उपलक्षणं चैतत्, त्वग्वातयोश्चक्षुस्तेजसो रसनोदकयोर्नासिकापृथिव्योः सम्बन्धसंयमाद् दिव्यत्वगाद्यप्यूहनीयम् ॥ ४१ ॥

"काय—गमनम्" कायाकाशसम्बन्धसंयमाद्वा लघुनि वा तूलादौ कृतसंयमात् समाप-

पातञ्जलरहस्यम् ।

स्त्वगादावप्युपलक्षणमित्याह–उपलक्षणमिति ॥ ४१ ॥

अणिमा लघिमेत्यत्रोक्तलघिमसिद्धेरुपायान्तरमाह–कायेति सूत्रम्, आकाशद्रव्यस्य सर्व-

वार्त्तिकम् ।

शस्य परिच्छिन्नत्वे मूर्त्तयोः समानदेशताविरोधादित्यर्थः, काचित्कस्तु तथा मूर्त्तस्यापीत्यपि शब्दः प्रामादिकोऽर्थासंभवात्, आकाशस्य विभुत्वे च 'आकाशवत्सर्वगतश्च नित्यम्' इति श्रुत्यादयः प्रमाणमिति, नन्वाकाशस्य विभुत्वे कथं कार्यत्वं घटते कथं वाऽऽगामिभाष्येऽप्याकाशपरमाणुकथनमिति चेद्, उच्यते—आकाशं ह्यन्तःकरणवद् वैशेषिकाणां पृथिव्यादिवत् कार्यकारणरूपेण द्विविधं, तत्र कारणाकाशं तमोगुणविशेषतयैव व्यवह्रियते तदानीमाकाशता व्यञ्जकशब्दादिविशेषगुणाभावात् कारणपृथिव्यादिवत् तच्च कारणाकाशं गुणान्तरोपसंसृष्टं सद्देशत आदौ शब्दजननयोग्यार्थरूपेण परिणमते क्षीराब्धिरिवामृतमथनेऽतो दधिरूपेण ततश्चाणुसंघातेन पृथिवीवदेव महाभूताकाशमहङ्कारापेक्षया परिच्छिन्नं वायोरावरणमुपपद्यत इति, एतेनान्तःकरणोत्पत्तिरपि व्याख्याता, इत्थमपि श्रुतिस्मृतिप्रसिद्धं प्रकृते कार्यकारणरूपत्वमवगन्तव्यम्, आकाशं प्रसाध्य श्रोत्रे प्रमाणं दर्शयति—शब्दग्रहणानुमितमिति, तदेव विवृणोति—बधिरेति । एतेन चक्षुरादिष्वप्यन्वयव्यतिरेकौ प्रमाणमिति सूचितम्, अन्तःकरणे तु स्मृत्याद्यन्वयव्यतिरेकौ प्रमाणमिति, इदानीं सूत्रं योजयति—श्रोत्रेति । संबन्धश्चास्माभिर्व्याख्यातः, उपलक्षणं चैतत् त्वग्वातयोश्चक्षुस्तेजसो रसनोदकयोर्घ्राणपृथिव्योः संबन्धसंयमाद्दिव्यं त्वगादीत्यपि बोध्यम्, दिव्यत्वं च तन्मात्रादिसूक्ष्मगोचरसंयमनैरपेक्ष्येण स्वभावादेव तन्मात्रादिरूपसूक्ष्मशब्दादिग्राहकत्वमिति॥ ४१ ॥

"कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम्" चकारोऽत्र विकल्पार्थकः, कीदृशः संबन्ध इत्याकाङ्क्षायामाह—यत्रेति, यत्रासनादौ शरीरं तिष्ठति तत्र शरीरावच्छे-

यत्र कायस्तत्राकाशं तस्यावकाशदानात्कायस्य, तेन सम्बन्धः प्राप्तिः, तत्र कृतसंयमो जित्वा तत्संबन्धं लघुषु तूलादिष्वापरमाणुभ्यः समापत्तिं लब्ध्वा जितसंबन्धो लघुः, लघुत्वाच्च जले पादाभ्यां विहरति, ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति, ततो यथेष्टमाकाशगतिरस्य भवतीति ॥ ४२ ॥

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥४३॥**

शरीराद्बहिर्मनसो वृत्तिलाभो विदेहा नाम धारणा, सा यदि शरीरप्रतिष्ठस्य मनसो बहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते, या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खल्वकल्पिता, तत्र कल्पि-

भास्वती ।

यत्रेति । तेनावकाशदानेन कायाकाशयोः प्राप्तिः = व्यापनरूपः सम्बन्धः, देहव्यापिनाऽनाहतनादध्यानद्वारेण तत्सम्बन्धे कृतसंयम आकाशवदनावरणात्वाभिमानं, ततश्च लघुत्वमप्रतिहतगतित्वम् , लघुतूलादिष्वपि समापत्तिं लब्ध्वा लघुर्भवतीति ॥ ४२ ॥

शरीरादिति । शरीराद्बहिरस्मीति भावना मनसो बहिर्वृत्तिः तत्र शरीर इव बहिर्वस्तुन्यस्मितप्रतिष्ठाभावस्तादृशी बहिर्वृत्तिः कल्पिता वा-अकल्पिता वा भवति समाधि-

तत्त्ववैशारदी ।

त्तिं = चेतसस्तत्स्थतदञ्जनतां लब्ध्वेति, सिद्धिक्रममाह—"जले" इति ॥ ४२ ॥

अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्मविपाकक्षयहेतुमाह—"बहिः-क्षयः" । विदेहामाह—"शरीराद्" इति । अकल्पिताया महाविदेहाया य उपायस्तत्प्रदर्शनाय कल्पितां विदेहामाह—"सा यदि" इति । वृत्तिमात्रं कल्पनाज्ञानमात्रं तेन, महाविदेहामाह—"या तु" इति । उपायोपेयते कल्पिताऽकल्पितयोराह-"तत्र" इति । किं परशरीरावेशमात्रमितो नेत्याह—"ततश्च" इति । ततो धारणातो = महाविदेहाया मनःप्रवृत्तेः सिद्धेः, क्लेशश्च कर्म

पातञ्जलरहस्यम् ।

त्र शब्दोपलम्भेन सर्वगतत्वादाह--परकाय इति । समापत्तिश्चेतसस्तदाकारतेत्यर्थः, सूत्रस्थचकारो विषयसमुच्चयार्थः इत्याह—लघुषु वेति ॥ ४२ ॥

स्वच्छन्दविहार उपायान्तरमाह—बहिरिति । कल्पिता आहार्येत्युच्यते तामाह—विदे-

वार्त्तिकम् ।

देनाप्याकाशं तिष्ठति, तत्र हेतुः तस्याकाशस्यावकाशदातृत्वादिति, अतः कायस्याकाशेन संबन्धः प्राप्तिरूपो व्यापनमिति यावद् इत्यर्थः, तत्रेति । तत्र संबन्धे कृतसंयमः तत्संबन्धं जित्वा साक्षात्कारेण स्वेच्छाऽधीनं कृत्वा लघुर्भवतीत्यागामिनाऽन्वयो भविष्यति, द्वितीयहेतुं व्याचष्टे--लघुषु वेत्यादिना-जितसंबन्ध इत्यन्तेन, समापत्तिं तत्स्थतदञ्जनतां, जितसंबन्धः स्वायत्तीकृतकायाकाशसंबन्ध इत्यर्थः, आकाशगतावुपायद्वयसाधारणं क्रममाह—लघुरित्यादिना, प्रथमं लघुर्भवति, ततो लघुतया जले पृथिव्यामिव पद्भ्यां संचरतीत्यादिः क्रम इत्यर्थः, सुगममन्यत् ॥ ४२ ॥

"बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः" योगशास्त्रोक्तसंयमविशेषाद् वक्ष्यमाणा बहिरकल्पिता वृत्तिर्महाविदेहाख्या सिद्धिर्भवति, ततश्च सत्त्वप्रकाशावरणभङ्ग इत्यर्थः, महाविदेहां व्याख्यातुमादौ सामान्यविदेहामाह—शरीरादिति । मनसो बहिर्वृत्तिलाभोऽत्र स्वशरीरस्येव बहिर्वस्तूनां संकल्पादिवशता, सा च बहिरधिष्ठानरूपा धारणा विदेहा सामान्यमित्यर्थः, धारणेति च तान्त्रिकी संज्ञा, तस्या अवान्तरभेदमाह—सा यदीति ।

तया साधयत्यकल्पितां महाविदेहामिति, यया परशरीराण्याविशन्ति योगिनः, ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं—क्लेशकर्मविपाकत्रयं रजस्तमोमूलं तस्य क्षयो भवति ॥ ४३ ॥

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः ॥ ४४ ॥**

तत्र पार्थिवाद्याः शब्दादयो विशेषाः सहाकारादिभिर्धर्मैः स्थूलशब्देन

भास्वती।

बलाद् यदा शरीरं विहाय मनो ध्यायमाने बहिरधिष्ठाने वृत्तिं लभते तदाऽकल्पिता बहिर्वृत्तिर्महाविदेहाख्या, ततः प्रकाशावरणक्षयः शरीराभिमानापनोदनात् = क्लेश-कर्म-विपाका इत्येतत् त्रयं बुद्धिसत्त्वस्यावरणमलं क्षीयते ॥ ४३ ॥

तत्रेति। पार्थिवाद्याः शब्दादयः = पार्थिवाः शब्दस्पर्शादयः, आप्याः शब्दस्पर्शादय इत्याद्याः, विशेषाः = अशेषवैचित्र्यसम्पन्नानि भौतिकद्रव्याणीत्यर्थः, आकारकाठिन्यतारल्यादिधर्मयुक्ताः स्थूलशब्देन परिभाषिताः, द्वितीयमिति। स्वसामान्यं = प्रातिस्विक-

तत्त्ववैशारदी।

च ताभ्यां विपाकत्रयं जात्यायुर्भोगास्तदेतद्रजस्तमोमूलं विगलितरजस्तमसः सत्त्वमात्राद् विवेकख्यातिमात्रसमुत्पादात्, तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद् बुद्धिसत्त्वमावृणोति, तत्क्षयाच्च निरावरणं योगिचित्तं यथेच्छं विहरति विजानाति चेति ॥ ४३ ॥

"स्थूल—जयः" स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि, तेषु संयमात्तज्जयः, स्थूलमाह—"तत्र" इति। पार्थिवाः पाथसीयास्तैजसा वायवीया आकाशीया शब्दस्पर्शरूपरसगन्धा यथासम्भवं विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषायमधुरादयः सुरभ्यादयः, एते हि नामरूपप्रयोजनैः परस्परतो भिद्यन्त इति विशेषाः, एतेषां पञ्च पृथिव्यां, गन्धवर्जं चत्वारोऽप्सु, गन्धरसवर्जं त्रयस्तेजसि, गन्धरसरूपवर्जं द्वौ नभस्वति, शब्द एवाकाशे, त एत ईदृशा विशेषाः सहाकारादिभि-

पातञ्जलरहस्यम्।

हा नामेति, अस्याः फलद्वयमाह—परदेहावेशः क्लेशकर्मविपाकानां क्षयश्च ॥ ४३ ॥

वशित्वं भूतभौतिकान् वशयतीत्युक्तं, तस्योपायान्तरमाह—स्थूलेति। पृथिव्यादि स्थूलस्वरूपं मूर्त्यादि, सूक्ष्मं तन्मात्रं, कार्यस्वभावानुपातित्वमन्वयः, अथवत्त्वं भोगापवर्गकारिता-

वार्त्तिकम्।

शरीरनिरपेक्षेति त्यक्तशरीरेत्यर्थः, अनयाऽपि परशरीरावेशो लिङ्गदेहस्य भवतीति प्रसङ्गादाह—यथेति। तत इत्यादिसूत्रावयवं व्याचष्टे—ततश्चेति। क्लेशेति। क्लेशाश्च कर्म च विपाकत्रयं च यद्रजस्तमोमूलकं सत्त्वस्यावरकं तस्य च समूलस्य क्षयो भवतीत्यर्थः, तेषां क्षये च निरावरणं योगिनः चित्तं स्वेच्छया विहरति विजानाति चेति, चशब्दः स्वोक्तं परशरीरावेशं समुच्चिनोति। ४३ ॥

तदेवं परिणामत्रयसंयमादित्यारभ्योच्चावचविषयकसंयमानां ज्ञानक्रियारूपाः सिद्धय उक्ताः; इदानीं वितर्कविचारेत्यादिसूत्रैः स्वशास्त्रे मुख्यतः प्रकृतेषु ग्रहीतृग्रहणग्राह्येषु ये संयमास्तेषां सिद्धयो वक्तव्याः, तत्र ग्रहीतृग्रहणयोः ग्राह्यनिरूप्यत्वादादौ ग्राह्यविषयकसंयमस्य सिद्धिमाह—

"स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः" स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि तेषु संयमात्साक्षात्कारपर्यन्तात्तत्तद्रूपाणां जयो वशवर्त्तिता भवतीत्यर्थः, स्थूलं व्याचष्टे—तत्रेति। सामान्यविशेषसमूहरूपाणां पृथि-

परिभाषिताः एतद् भूतानां प्रथमं रूपम् , द्वितीयं रूपं स्वसामान्यम् ;

भास्वती ।

म् , मूर्त्तिः=संहतत्वम् , स्नेहः=तारल्यम् , प्रणामो=वहनशीलत्वं, सदाऽस्थैर्यमिति या-

तत्त्ववैशारदी ।

धर्मैः स्थूलशब्देन परिभाषिताः शास्त्रे, तत्रापि पार्थिवास्तावद् धर्माः—

"आकारो गौरवं रौक्ष्यं वरणं स्थैर्य्यमेव च ।
वृत्तिर्भेदः क्षमा कार्श्यं काठिन्यं सर्वभोग्यता" ॥

अपां धर्माः—

"स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत् ।
शैत्यं रक्षा पवित्रत्वं सन्धानं चौदका गुणाः" ॥

तैजसा धर्माः—

"ऊर्ध्वभाक् पावकं दग्धृ पाचकं लघु भास्वरम् ।
प्रध्वंस्योजस्वि वै तेजः पूर्वेभ्यो भिन्नलक्षणम्" ॥

वायवीया धर्माः—

"तिर्य्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम् ।
चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः"

आकाशीया धर्माः—

"सर्वतो गतिरव्यूहो विष्टम्भश्चेति च त्रयः ।
आकाशधर्मा व्याख्याताः पूर्वधर्मविलक्षणाः" ॥

त एत आकारप्रभृतयो धर्मास्तैः सहेति, आकारश्च सामान्यविशेषो गोत्वादिः, द्वितीयं-

पातञ्जलरहस्यम् ।

ऽर्थक्रिया चेति पञ्चकं, तत्र स्थूलत्वं तद्गुणविशिष्टत्वेनोपलभ्यमानत्वमित्याह—तत्रेत्यादि—

वार्त्तिकम् ।

व्यादिपञ्चभूतानाम् एकदेशाः शब्दादयो विशेषाः धर्मधर्म्यभेदाः तद्वन्तः पदार्था वक्ष्यमाणै-राकारादिधर्मैः सह स्थूलशब्देन शास्त्रे परिभाषिता इत्यर्थः, तन्मात्रव्यावर्त्तनाय विशेषपदं-ते च विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयो मधुराम्लादयः सुरभिदुर्ग-न्धादयश्चेति, एते हि नामकर्मभिरवान्तरं विभज्यन्त इति विशेषाः, आकारादयश्च धर्माः पृथिव्यादीनां क्रमेण शास्त्रे परिपठिताः, यथा—

आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च ।
वृत्तिर्भेदः क्षमा कार्श्यं काठिन्यं सर्वभोग्यता ॥
स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत् ।
शैत्यं रक्षा पवित्रत्वं संधानं चौदका गुणाः ॥
ऊर्ध्वभाक् पाचकं दग्धृ पावकं लघु भास्वरम् ।
प्रध्वंस्योजस्वि वै तेजः पूर्वेभ्यो भिन्नलक्षणम् ॥
तिर्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम् ।
चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः ॥
सर्वतो गतिरव्यूहोऽविष्टम्भश्चेति ते त्रयः ।
आकाशधर्मा व्याख्याता पूर्वपूर्वविलक्षणाः ॥ इति,

आकारोऽवयवसंस्थानं, वृत्तिः सर्वभूताधारता, भेदो विदारणं, क्षमा सहिष्णुता-धारण-सामर्थ्यमिति यावत्, रक्षा=आवरणादिना रक्षकत्वम्, आक्षेपः पातनं, सर्वतोगतिर्विभुत्वम्, अव्यूहः सर्वपदार्थानां प्रविरलीकरणम् , अविष्टम्भोऽवकाश इति, प्रथमं रूपमिति । सूत्रोक्त-पञ्चरूपेष्वाद्यं रूपमित्यर्थः, स्थूलं व्याख्याय स्वरूपं व्याचष्टे—द्वितीयं रूपमिति । स्वसामा-

मूर्त्तिर्भूमिः, स्नेहो जलं, वह्निरुष्णता, वायुः प्रणामी, सर्वतोगतिराकाश इत्येतत्स्वरूपशब्देनोच्यते, अस्य सामान्यस्य शब्दादयो विशेषाः, तथा चोक्तम्—"एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिः" इति, सामान्यवि-

भास्वती।

वत्, सर्वतोगतिः=सर्वगतत्वं शब्दगुणस्य सर्वभेदकत्वाद्, अस्य सामान्यस्य शब्दादयः=पार्थिवादिशब्दस्पर्शरूपरसगन्धा विशेषाः, तथेति। तथा चोक्तम् पूर्वाचार्यैः—स्वजातिसमन्वितानां—भूतत्वजातिसमन्वितानां यद्वा—मूर्त्यादिजातिसमन्वितानामेषां पृथिव्यादीनां-धर्ममात्रेण=शब्दादिना व्यावृत्तिः=विशेषत्वं जातिभेदस्तथा षड्जर्षभादिनाऽवान्तरभेदश्च, अत्र सामान्यविशेषसमुदायः=सामान्यं धर्मी, विशेषो धर्मास्तेषां समुदायो द्रव्यम्, द्विष्ठः=प्रकारद्वयेन स्थितो हि समूहः, प्रत्यस्तमितभेदा अवयवा यस्य सः तादृशावयवस्यानुगतः, शब्देनोपात्तः=प्राप्तः स्थापित इत्यर्थः भेदो येषामवयवानां ते तादृशावयवानुगतः,

तत्त्ववैशारदी।

रूपमाह—'द्वितीयं रूपं स्वसामान्यम्' इति, मूर्त्तिः=सांसिद्धिकं काठिन्यं, स्नेहो जलं-मज्जा पुष्टिबलाधानहेतुः, वह्निरुष्णता—उदर्य्ये सौर्य्ये भौमे च सर्वत्रैव तेजसि समवेतोष्णतेति, सर्वं चैतद् धर्म्मधर्मिणोरभेदविवक्षयाऽभिधानम्, वायुः प्रणामी=वहनशीलः, तदाह—

"चलनेन तृणादीनां शरीरस्याटनेन च।
सर्वगं वायुसामान्यं नामित्वमनुमीयते"॥

सर्वतोगतिराकाशः, सर्वत्र शब्दोपलब्धिदर्शनात्, श्रोत्राश्रयाकाशगुणेन हि शब्देन पार्थिवादिशब्दोपलब्धिरित्युपपादितमधस्तात्, एतत्स्वरूपशब्देनोक्तम्, अस्यैव=मूर्त्यादिसामान्यस्य, शब्दादयः षड्जादय उष्णत्वादयः शुक्लत्वादयः कषायत्वादयः सुरभित्वादयो-मूर्त्यादीनां सामान्यानां भेदाः, सामान्यान्यपि मूर्त्यादीनि जम्बीरपनसामलकफलादीनि रसादिभेदात्परस्परं व्यावर्त्तन्ते, तेनैतेषामेते रसादयो विशेषाः, तथा चोक्तम्—एकजातिसमन्वितानां=प्रत्येकं पृथिव्यादीनामेकैकया जात्या=मूर्त्तिस्नेहादिना समन्वितानामेषां षड्जादिधर्ममात्रव्यावृत्तिरिति, तदेवं सामान्यं मूर्त्याद्युक्तं विशेषाश्च शब्दादय उक्ताः, ये चाहुः, सामान्यविशेषाश्रयो द्रव्यमिति तान् प्रत्याह—"सामान्य" इति। सामान्यविशेषसमुदायोऽत्र

पातञ्जलरहस्यम्।

गोत्वादिरित्यन्तेन टीकाकृत, स्वरूपत्वं तत्तद्देहधारणादिकार्योन्नीतधर्मवत्त्वमित्याह—द्वितीयमित्यादि--एतत्स्वरूपमित्युक्तमित्यन्तेन, तत्र मूर्तत्वं परिच्छिन्नपरिमाणवत्त्वम्, उदर्यं=जाठरानले,

वार्त्तिकम्।

न्यं स्वस्वसामान्यमिति साधारणं लक्षणम्, कस्य किं सामान्यं तद्दर्शयति—मूर्त्तिभूमिरित्यादिना, मूर्त्तिः सांसिद्धिकं काठिन्यं तद्व्यङ्ग्या पृथिवीत्वजातिः, कार्यरूपेणाकाशस्याप्यनेकत्वादिति, अत्र सामान्यविशेषयोरभेदप्रतिपादनाय मूर्त्तिभूमिरित्याद्यभेदनिर्देशः, कस्य विशेषस्येदं सामान्यमित्याकाङ्क्षायामाह—अस्येति। शब्दादयः पूर्वोक्ताः मूलतारमन्दादिभेदेन सामान्यस्य जातेरेकदेशाद्व्यावर्त्तकतया विशेषा इत्यर्थः, अत्र पूर्वाचार्यसंवादमाह—तथा चोक्तमिति। एकजातिसमन्वितानामेषां पृथिव्यादीनां शब्दादिधर्ममात्रेण व्यावृत्तिः सजातीयान्तरादित्यर्थः, एकजातिसमन्वितानामिति। समूहे समूहिवृत्त्यभिप्रायेण प्रयोगः, यत्तु वैशेषिकाः सामान्यविशेषयोराश्रयमेव द्रव्यं मन्यन्ते न तु तयोर्भेदमपि, तन्मताद्विविच्य स्वसिद्धान्तमाह—सामान्येति। अत्र दर्शने सामान्यविशेषयोः समूहो द्रव्यम् अतिरिक्तावयव्यभ्युपगमेऽपि तयोरभेदस्याप्यभ्युपगमाद्, अन्यथा घटो मृत् तन्तुः पटः शुक्लः पट-

शेषसमुदायोऽत्र द्रव्यं, द्विष्ठो हि समूहः प्रत्यस्तमितभेदावयवानुगतः शरीरं वृक्षो यूथं वनमिति, शब्देनोपात्तभेदावयवानुगतः समूहः-उभये देवमनुष्याः, समूहस्य देवा एको भागो मनुष्या द्वितीयो भागस्ताभ्यामेवाभिधीयते समूहः, स च भेदाभेदविवक्षितः, आम्राणां वनं ब्राह्मणानां सङ्घः, आम्रवणं ब्राह्मणसङ्घ इति, स पुनर्द्विविधो युतसिद्धावयवोऽयुतसिद्धावयवश्च

भास्वती।

स पुनरिति । युतसिद्धाः = अन्तरालयुक्ता अवयवा यस्य स युतसिद्धावयवः, निरन्त-

तत्त्ववैशारदी।

दर्शने द्रव्यम्, येऽपि तदाश्रयं द्रव्यमास्थिषत, तैरपि तत्समुदायोऽनुभूयमानो नापह्नोतव्यः, न च तदपह्नवे तयोराधारो द्रव्यमिति भवति, तस्मात्तदेवास्तु द्रव्यं, न तु ताभ्यां तत्समुदायाच्च तदाधारमपरं द्रव्यमुपलभामहे, ग्रावभ्यो ग्रावसमुदायादिव च तदाधारमपरं पृथग्विधं शिखरं समूहो द्रव्यमित्युक्तं, तत्र समूहमात्रं द्रव्यमिति भ्रमापनुत्तये समूहविशेषो द्रव्यमिति निर्धारयितुं समूहप्रकारानाह—"द्विष्ठो हि" इति । यस्मादेवं तस्मान्न समूहमात्रं द्रव्यमित्यर्थः, द्वाभ्यामप्रकाराभ्यां तिष्ठतीति द्विष्ठः, एकं प्रकारमाह—"प्रत्यस्तमित" इति । प्रत्यस्तमितो भेदो येषामवयवानां ते तथोक्ताः प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः, एतदुक्तं भवति—शरीरवृक्षयूथवनशब्देभ्यः समूहः प्रतीयमानोऽप्रतीतावयवभेदस्तद्वाचकशब्दाप्रयोगात् समूह एकोऽवगम्यत इति, युतायुतसिद्धावयवत्वेन चेतनाचेतनत्वेन चोदाहरणचतुष्टयम्, युतायुतसिद्धावयवत्वं चाग्रे वक्ष्यते, द्वितीयं प्रकारमाह—"शब्देनोपात्तभेदावयवानुगतः समूह उभये देवमनुष्या" इति, देवमनुष्या इति हि शब्देनोभयशब्दवाच्यस्य समूहस्य भागौ भिन्नावुपात्तौ, ननूभयशब्दात्तदवयवभेदो न प्रतीयते तत्कथमुपात्तभेदावयवानुगत इत्यत आह—"ताभ्याम्" इति । ताभ्यां भागाभ्यामेव च समूहोऽभिधीयते, उभयशब्देन भागद्वयवाचिशब्दसहितेन समूहो वाच्यः, वाक्यस्य वाक्यार्थवाचकत्वादिति भावः, पुनर्द्वैविध्यमाह—"स च" इति । भेदेन चाभेदेन च विवक्षितः, भेदविवक्षितमाह—"आम्राणां वनं ब्राह्मणानां सङ्घः" इति, भेद एव षष्ठीश्रुतेः, यथा गर्गाणां गौरिति, अभेदविवक्षितमाह—"आम्रवणं ब्राह्मणसङ्घः" इति, आम्राश्च ते वनं चेति, समूहसमूहिनोरभेदं विवक्षित्वा सामानाधिकरण्यमित्यर्थः, विधाऽन्तरमाह—"स पुनर्द्विविध" इति ।

पातञ्जलरहस्यम्।

अहं वैश्वानरो भूत्वा पचाम्यन्नञ्चतुर्विधम्—

इत्युक्तेः, अधस्तात् पूर्वमित्यर्थः, ये चाहुरिति । सामान्यं विशेषस्तयोराश्रयः, घटो द्रव्यमिति वा प्रतीतेरिति नैयायिकादयस्तानित्यर्थः, ग्रावभ्यः = पाषाणेभ्यः, समूहो हि व्यासज्यवृत्तिरित्याह—द्विष्ठो हीति । प्रत्यस्तमितो निरस्तो भेदोऽनेन दर्शितः, वनमिति वृक्षा-

वार्त्तिकम्।

इत्याद्यभेदप्रत्ययानुपपत्तेरित्यर्थः, ननु समूहमात्रस्य द्रव्यत्वे वनस्याप्येकद्रव्यत्वापत्तिरित्याशङ्कां परिहर्तुमादौ समूहस्य द्वैविध्यमाह—द्विष्ठो हीति । द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः, तत्रैकं प्रकारमाह—प्रत्यस्तमितेति । प्रत्यस्तमितः शब्देनानुपस्थापितो भेदोऽवान्तरविभागो येषामवयवानां तादृशेष्ववयवेष्वनुगत इत्यर्थः, तस्योदाहरणचतुष्कमाह—शरीरमिति । आद्यं द्वयमेकद्रव्यरूपस्य समूहस्योदाहरणमन्त्यद्वयमनेकद्रव्यरूपसमूहस्येति भेदः, यूथादौ च विशिष्टस्यातिरिक्तत्वाभिप्रायेणावयवानुगतत्वमुपपादनीयम्, द्वितीयं समूहस्य प्रकारमाह—शब्देनोपात्तेति । अस्योदाहरणम्-उभयेति । अत्रोभयशब्दवाच्यस्य समूहस्यावान्तरभेदौ देवमनुष्यशब्दाभ्यामुपात्तौ बहुवचनाभ्यां च तयोरप्यनेकभेदा उपात्ता इति, शब्देनोपात्तभेदत्वं संक्षेपात् स्वयमाह—समूहरूपस्य देवा इति । भागो भेदः, ताभ्यां भेदा-

युतसिद्धावयवः समूहो वनं सङ्घ इति, अयुतसिद्धावयवः सङ्घातः शरीरं वृक्षः परमाणुरिति, अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः एतत्स्वरूपमित्युक्तम्, अथ किमेषां सूक्ष्मरूपं तन्मात्रं भूतकारणं, तस्यैकोऽ-

भास्वती ।

रालावयवोऽयुतसिद्धावयवः, एतद् मूर्त्यादिभूतानां द्वितीयं रूपं यस्य तान्त्रिकी परिभाषा स्वरूपमिति अथेति । तृतीयं सूक्ष्मरूपं तन्मात्रम्, तस्यैकोऽवयवः परमाणुः=परमाणुरेव तन्मात्रस्यैकश्चरमोऽवयवः, परमसूक्ष्मत्वात् परमाणोरवयवभेदो न विवेकव्यस्ततश्च यथा कालिकधाराक्रमेण शब्दज्ञानं तन्मात्राणामपि तथा क्षणधाराक्रमेण ज्ञानम्, तच्च सा-

तत्त्ववैशारदी ।

युतसिद्धावयवः समूहः युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः, यूथं वनमिति सान्तराला हि तदवयवा वृक्षाश्च गावश्च, अयुतसिद्धावयवश्च समूहो वृक्षो गौः परमाणुरिति, निरन्तरा हि तदवयवाः सामान्यविशेषा वा सास्नाऽऽदयो वेति, तदेतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति—"अयुतसिद्ध" इति । तदेवं प्रासङ्गिकं द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति—"एतत्स्वरूपमित्युक्तम्" इति । तृतीयं रूपं विवक्षुः पृच्छति—"अथ" इति ।

पातञ्जलरहस्यम् ।

इति भेदः, एवं मृदि घट इति भेदो मृद्घटः इत्यभेदः, एवं सर्वत्र, उभये देवमनुष्या इति । उभयशब्देन समूहवाचिनाऽभेदः कथितः, देवमनुष्याः द्वौ भागाविति भेद इत्येतदेवोपपादयति—ताभ्यामिति । उपपत्त्यन्तरमाह—वाक्यस्येति ।

'संसर्गो वा विशिष्टो वा वाक्यार्थो विदुषां मत—

इत्युक्तेरुभयथा वाक्यार्थः, संसर्गस्य पदार्थद्वयघटितत्वादेतन्मते क्रियाकारकयोर्नित्यसंबन्धः, नास्ति क्रियामात्रे शक्तिर्नास्ति कारकमात्रे चेत्युक्तम्, उदाहरणान्तरमाह—न चेत्यादि, युतसिद्धा वृक्षास्तेऽवयवा यस्य वनरूपस्य, अत एव सान्तरालगृहीतभेदो, निरन्तरालो गौर्वृक्ष-

वार्त्तिकम् ।

भ्याम्, स चेति । स च द्विविधोऽपि समूहो भेदाभेदाभ्यां प्रयोक्तृभिर्विवक्षितो भवति, आम्राणां वनमिति षष्ठ्या भेदेन, आम्रवणमिति च कर्मधारयादभेदेन विवक्षा, एवमन्यत्रापि, तथा च समूहसमूहिनोर्भेदाभेदौ स्त इति प्रतिपादितम्, स पुनरिति । द्विविधोऽपि समूहः पुनर्द्विविधो भवति, द्वैविध्यमेवाह—युतेति । हलिकादिष्वपि संयुक्ततया संबद्धतया सिद्धा अवयवा यस्य समूहस्य यूथवनादेः स तथा, अयुतेति । अयुतसिद्धावयवः समूहः संघातस्तस्य विवरणं शरीरमित्यादि, लौकिकेष्वसंयुततया एकीभावेनैव सिद्धा अवयवा यस्य समूहस्य शरीरवृक्षादेः स तथेत्यर्थः, परमाणुरिति । परमाणूनामपि पञ्चचतुरादितन्मात्रासमूहतायो वक्ष्यमाणत्वादिति भावः, तदेवं समूहभेदान् प्रदर्श्य तेष्ववयविद्रव्यरूपं समूहं विशिष्यावधारयति—अयुतेति । संयोगविशेषावच्छिन्नेष्ववयवविशेषेष्वनुगतः सामान्यविशेषसमूहो ऽवयव्याख्यं द्रव्यमित्यर्थः, अवयवसाधारणं तु सामान्यतो द्रव्यलक्षणं सामान्यविशेषसमुदायत्वमात्रमिति, उपसंहरति—एतत्स्वरूपमित्युक्तमिति । एतत्सामान्यं स्वरूपशब्देन परिभाषितमित्यर्थः, स्वरूपपरिभाषा च स्थिरतामात्रेण विशेषागमापायितया न द्रव्यस्य स्वरूपाणीति, यत्तु पूर्वपादे स्थूलस्वरूपे एकीकृत्यावयविद्रव्यमेव वितर्कानुगतयोगस्य विषयः स्थूलमित्युक्तं तल्लौकिकस्थूलव्यवहारानुसारेण, अत्र तु तान्त्रिकव्यवहारेण तस्यैव द्विधा विभागः, एवमेव विचारानुगतविषयस्य सूक्ष्मस्यैवात्र सूक्ष्मादिद्वैविध्यं वक्ष्यतीति द्रष्टव्यम्, स्वरूपं व्याख्याय सूक्ष्मं व्याख्यातुं पृच्छति—अथेति । एषां भूतानाम्, उत्तरं—तन्मात्रमिति । तत्र सूक्ष्मपरिभाषाबीजमाह—भूतकारणमिति ।

वयवः परमाणुः सामान्यविशेषात्मायुतसिद्धावयवभेदानुगतः समुदाय इति, एवं सर्वतन्मात्राणि, एतत्तृतीयम्, अथ भूतानां चतुर्थं रूपं-ख्यातिक्रियास्थितिशीला गुणाः कार्य्यस्वभावानुपातिनोऽन्वयशब्देनोक्ताः, अथैषां पञ्चमं रूपमर्थवत्त्वं भोगापवर्गार्थता गुणेष्वन्वयिनी गुणास्तन्मात्रभूतभौतिकेष्विति सर्वमर्थवत्, तेष्विदानीम्भूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति, तत्र पञ्चभूतस्वरूपाणि जित्वा भू-

भास्वती।

मान्यविशेषात्मकं = सामान्यं = शब्दादिमात्रम्, विशेषाः = षड्जादयः, तदात्मकं = तत्स्वरूपं तत्कारणमित्यर्थः, अथ भूतानामिति । कार्यस्वभावानुपातिनः = स्वकार्याणां भूतानां प्रकाशादिस्वभावानाम्; अनुपातिनः = अनुगुणशीलमम्यग्न्नाः, कारणस्वभावस्य का-

तत्त्ववैशारदी।

उत्तरमाह—"तन्मात्रम्" इति, तस्यैकोऽवयवः = परिणामभेदः परमाणुः, सामान्यं = मूर्त्तिः शब्दादयो विशेषाः तदात्मा, अयुतसिद्धाः = निरन्तरा येऽवयवाः सामान्यविशेषास्तद्भेदेष्वनुगतः समुदायः, यथा च परमाणुः सूक्ष्मं रूपमेवं सर्वतन्मात्राणि सूक्ष्मं रूपमिति, उपसंहरति-"एतद्" इति । "अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्य्यस्वभावानुपातिनः" = कार्य्यस्वभावमनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ताः, अत एवान्वयशब्देन उक्ताः, 'अथैषां पञ्चमं रूपमर्थवत्त्वम् = अर्थवत्त्व विवृणोति—"भोग" इति, नन्वेवमपि सन्तु गुणा अर्थवन्तः, तत्कार्य्याणान्तु कुतोऽर्थवत्त्वमित्यत आह—"गुणा" इति । भौतिकाः = गो-

पातञ्जलरहस्यम्।

इत्यादि, तृतीयं सूक्ष्मं तन्मात्रं, चतुर्थं प्रकाशप्रवृत्तिनियमार्था गुणा इत्याह—ख्यातिरिति । सात्त्विकानामूर्ध्वगतिः, राजसानामस्थिरता तामसानां मादकता, अथ वा-ऊर्द्ध्वं गच्छन्ति

वार्त्तिकम्।

साक्षात्कारणत्वमेव हि सूक्ष्मत्वमत्र विवक्षितमित्याशयः, भूतकारणत्वप्रकारं दर्शयति—तस्येति । तस्य भूतस्य एकश्चरमोऽवयवः परमाणुः सोऽपि च घटादिवदेव सावयवः अन्यथा स्थूलत्वानुपपत्तेः, शान्तघोरमूढत्वरूपविशेषानुपपत्तेश्च, इत्येवमित्यतः सर्वतन्मात्राण्येव भूतकारणानि अवयवान्तरासंभवादित्यर्थः, उपसंहरति—एतत्तृतीयमिति । एतत्तन्मात्रं तृतीयं भूतानां रूपमित्यर्थः, अन्वयाख्यं चतुर्थं रूपं व्याचष्टे—अथेति । अथानन्तरमुच्यत इति शेषः, त्रिविधा गुणा एवान्वयशब्देनोक्ताः, तत्र हेतुः कार्यस्वभावानुपातिन इति, कार्यरूपो यः स्वीयो भावः स्वात्मकः पदार्थः तत्रानुगता अतोऽन्वया इत्यर्थः, ननु भूतेषु प्रख्याशीलस्य सत्त्वस्यानुगमे किं प्रमाणमिति चेद् 'अन्नमयं हि सोम्य मन' इत्यादिश्रुतयोऽन्वयव्यतिरेकौ चेति प्रतीहि, प्रकाशात्मकतया सात्त्विकानि हि मनश्चक्षुरादीन्यन्नरसाद्युपचयापचयाभ्यामुपचयापचयवन्ति दृश्यन्ते; अतः पृथिव्यादिभूतेषु मनआदिकं तदुपष्टम्भकसत्त्वं वाऽनुगतमित्युन्नीयत इति, पञ्चमं रूपमाह—अथैषामिति । गुणेषु वर्तमानं यद्भोगापवर्गजातं भोगविवेकख्यातिरूपं तदेव पञ्चमं रूपमर्थवत्त्वाख्यमित्यर्थः, नन्वेवं गुणेषु वर्त्तमानमर्थवत्त्वं कथं भूतानां रूपं स्यात्तत्राह—गुणास्तन्मात्रेति । ननु भोगापवर्गौ शब्दाद्युपलब्धिविवेकख्याती ते चान्तःकरण एव वर्तेते न साक्षाद् गुणेष्विति चेन्न, अनागतावस्थया वासनारूपेण वा तयोरपि प्रलयकाले गुणेष्वेवावस्थानात् कारणक्रमेणैव कार्येष्वनुगतयोरभिव्यक्तेरिति, पञ्चरूपाणि व्याख्याय सूत्रवाक्यार्थमाह—तेष्विति । इदानींभूतेषु = इदानीमुत्पन्नेषु = इदानींतनेषु स्थूलभूतेष्वित्यर्थः, तन्मात्रादिषु पञ्चरूपत्वाभावाद् इदानींभूतेष्वित्युक्तं स्वरूपदर्शनं च संयमस्य जयहेतुत्वे द्वारमुक्तं जयो वशीकारः, तत्र पञ्चेति । एकै-

तजयो भवति, तज्जयाद् वत्सानुसारिण्य इव गावोऽस्य सङ्कल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४४ ॥

**ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥ ४५ ॥**

तत्राणिमा = भवत्यणुः, लघिमा = लघुर्भवति, महिमा = महान् भवति, प्राप्तिः = अङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम्, प्राकाम्यम् इच्छाऽनभिघातो-

भास्वती ।

येऽनुवर्त्तमानत्वाद्, अर्थेषामिति । भोगापवर्गार्थता गुणेषु; अन्वयिनो = त्रिगुणनिष्ठेत्यर्थः, गुणाः पुनस्तन्मात्रभूतभौतिकेष्वन्वयिन इति हेतोस्तत् सर्वम् अर्थवद् = भोगापवर्गयोः साधनम् । तेष्विति । इदानीम्भूतेषु = शेषोत्पन्नेषु महाभूतेषु तेषाञ्च पञ्चरूपेषु संयमात्, स्वरूपदर्शनं = तस्य तस्य रूपस्योपलब्धिः, तेषां भूतानां जयश्च-अणिमादिलक्षणः, भूतप्रकृतयः = भूतानि तत्प्रकृतयस्तन्मात्राणि चेति ॥ ४४ ॥

तत्रेति । सुगमम्, तेषामिति । प्रभावाप्ययव्यूहानाम् = उत्पत्तिलयसन्निवेशा-

तत्त्ववैशारदी ।

घटादयः, तदेवं संयमविषयमुक्त्वा संयमं तत्फलं चाह—"तेषु" इति, भूतप्रकृतयः = भूतस्वभावाः ॥ ४४ ॥

सङ्कल्पानुविधाने भूतानां किं योगिनः सिद्ध्यतीत्यत आह—"ततोऽणिमादि—श्च" स्थूलसंयमजयाच्चतस्रः सिद्धयो भवन्तीत्याह—"तत्र" इति । अणिमा = महानपि भवत्यणुः, लघिमा = महानपि लघुर्भूत्वेषीकातूल इवाकाशे विहरति, महिमा = अल्पोऽपि नागनगनगरपरिमाणो भवति, प्राप्तिः = सर्वे भावाः सन्निहिता भवन्ति योगिनः, तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम्, स्वरूपसंयमविजयात् सिद्धिमाह—"प्राकाम्यमिच्छाऽ-

पातञ्जलरहस्यम् ।

सत्त्वस्था मध्ये तिष्ठन्ति राजसा अधो गच्छन्ति तामसा, इत्यादि, पञ्चमम् भोगापवर्गौ॥४४॥

उत्तरसूत्रावतारिकामाह—तेष्विति, स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वरूपपञ्चरूपेषु एकैकस्य साक्षात्कारो जयस्तस्माद् भावा वशे भवन्ति, ततः किं तत्राह—ततोऽणिमेत्यादि । तत्र

वार्त्तिकम् ।

क्रमात्त्रजये हि गौणो भूतजयः सामग्र्येणाजयादिति भावः वशीकारमेव कार्यद्वारा लक्षयति—तज्जयादिति । भूतप्रकृतयो भूतकारणानि त्रिगुणतत्त्वस्थपुरुषार्थपर्यन्तानीत्यर्थः, न तु तन्मात्राण्येव केवलानि गुणपुरुषार्थयोरपि संयमेन साक्षात्कृतत्वादिति ॥ ४४ ॥

भूतजयस्य फलं प्रतिपादयति—

ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च, तत्र त्रिषु मध्येऽणिमाद्यष्टसिद्धीर्व्याचष्टे—अणिमेति । स्वेच्छया यदणुपरिमाणशरीरो भवति तदणिमा, संकल्पमात्रेण तत्क्षणादेवावयवापचयेन सौक्ष्म्यं देहस्य भवति, भूतप्रकृतिवशित्वादिति । एवं सर्वत्र, अणिमाद्याश्च शास्त्रे गणिताः—

अणिमा महिमा चैव लघिमा प्राप्तिरिन्द्रियैः ।
प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥
गुणेष्वसङ्गो वशिता यत्कामस्तदवस्यति । इति,

लघिमानमाह—लघुरिति गुरुतरशरीरोऽपीषिकातूलवल्लघुर्भवतीत्यर्थः, स्पृशतीति । भूमिष्ठ एवेति शेषः, अवयवोपचयेनाङ्गुलिदैर्घ्यादिति, एताश्चतस्रः स्थूलसंयमसिद्धयः, स्वरूपसंयमस्य सिद्धिमाह—प्राकाम्यमिति । इच्छाऽनभिघात इति, सत्यामिच्छायां नास्य रूपं भूतस्य रूपै-

भूमावुन्मज्जति निमज्जति यथोदके, वशित्वम् = भूतभौतिकेषु वशीभवति; अवश्यश्चान्येषाम्, ईशितृत्वं = तेषाम्प्रभवाप्ययव्यूहानामीष्टे, यत्र कामावसायित्वं = सत्यसङ्कल्पता यथा सङ्कल्पस्तथा भूतप्रकृतीनामवस्थानं, न च शक्तोऽपि पदार्थविपर्य्यासं करोति, कस्मात्? अन्यस्य यत्र कामावसायिनः

भास्वती।

नाम्; ईष्टे = नियमितुं प्रभवति, यथा सङ्कल्प इति। सङ्कल्पितरूपेण भूतप्रकृतीनाम-

तत्त्ववैशारदी।

नभिघात" इति। नास्य रूपं भूतस्वरूपमूर्त्यादिभिरभिहन्यते, भूमावुन्मज्जति निमज्जति च यथोदके, सूक्ष्मविषयसंयमजयात्सिद्धिमाह—"वशित्वम्" इति। भूतानि पृथिव्यादीनि, भौतिकानि गोघटादीनि, तेषु वशी = स्वतन्त्रो भवति तेषान्त्ववश्यः, तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात्तत्कार्य्यवशीकारस्तेन यानि यथाऽवस्थापयति तानि तथाऽवतिष्ठन्त इत्यर्थः, अन्वयविषयसंयमजयात्सिद्धिमाह—"ईशितृत्वम्" इति। तेषां = भूतभौतिकानां विजितमूलप्रकृतिः सन् यः प्रभवः = उत्पादो यश्चाप्ययो = विनाशो यश्च व्यूहः = यथाऽवस्थापनं तेषामीष्टे, अर्थवत्त्वसंयमात्सिद्धिमाह—"यत्र कामावसायित्वं सत्यसङ्कल्पता" इति, विजितगुणार्थवत्त्वो हि योगी यद् यदर्थतया सङ्कल्पयति तत् तस्मै प्रयोजनाय कल्पते, विषमप्यमृतकार्ये सङ्कल्प्य भोजयन् जीवयतीति, स्यादेतद्—यथा शक्तिविपर्य्यासं करोत्येवं पदार्थविपर्य्यासमपि कस्मान्न करोति, तथा चन्द्रमसमादित्यं कुर्य्यात्कुहूं च सिनीवालीमित्यत आह न च शक्तोऽपीति, न खल्वेते यत्र कामावसायिनस्तत्रभगवतः परमेश्वरस्याज्ञामुत्क्रमितुमुत्स-

पातञ्जलरहस्यम्।

व्यवस्थितिमाह टीकाकृत् स्थूलेषु संयमाच्चतस्रः-अणिमा लघिमा महिमा प्राप्तिरित्यादि-चन्द्रमसमित्यन्तेन, एतच्चतुष्टयं स्थूलभूतकार्यदेहधर्म इति भावः, स्वरूपसंयमविजयादिच्छाऽनभिघातात्मा सिद्धिस्तामाह-यथोदक इत्यन्तेन, स्वरूपज्ञानस्य फलं वशीकारः, सूक्ष्मसंयमजयाद्वशित्वमाह—सूक्ष्मेत्याद्यवतिष्ठन्त इत्यन्तेन, यथा राजनि वशीजाते तदमात्या वश्याः स्युरित्याह—तत् कारणेति। अन्वयसंयमजन्यफलमाह—ईशित्वमिति। स्थूलस्वरूपसूक्ष्मेष्वनुगच्छन्तीत्यन्वयाख्यो गुणास्तेषु संयमाद् गुणकार्याणां स्थूलादीनामोशित्वं सुतरामित्याह—विजितमूलप्रकृतिरिति। अर्थवत्त्वसंयमजयात् सिद्धिमाह—यत्रेति—गुणानामर्थवत्त्वं भोगाप-

वार्त्तिकम्।

मूर्त्यादिभिर्विहन्यते, भूतस्वरूपाणां जितत्वादित्यर्थः, तस्योदाहरणं भूमाविति, उन्मज्जति जलमिव भूमिमुद्भिद्योत्तिष्ठति निमज्जति जलवद् भूमौ प्रविशति चेत्येवमादिः प्राकाम्यमित्यर्थः, सूक्ष्मसंयमस्य सिद्धिमाह-वशित्वमिति। भूतभौतिकेष्विति भूतेषु व्यष्टिषु भौतिकेषु तत्कार्येषु समष्टिमहाभूतेषु ब्रह्माण्डादिषु चेति व्याख्येयम्, जगद्व्यापारवर्जमिति वेदान्तसूत्रेण सिद्धेष्वादिसर्गसामर्थ्याभाववचनादिति, वशीभवति स्वेच्छया परिणमने समर्थो भवति तत्कारणतन्मात्रविजयात्, तथा तेषामवश्योऽपि भवति विरागादित्यर्थः, अन्वयसंयमस्य सिद्धिमाह—ईशित्वमिति। तेषामिति। तेषां भूतानां तन्मात्रद्वारकोत्पत्तिविनाशयोर्व्यूहाख्यसंस्थानविशेषे च समर्थो भवति भूतानां मूलप्रकृतिविजयादित्यर्थः, अर्थवत्त्वसंयमस्य सिद्धिमाह-यत्रेति। यत्र कामावसायित्वमिति तान्त्रिको परिभाषा पुराणेष्वप्येवमवगमाद्, भूतप्रकृतीनां गुणतन्मात्रादीनामवस्थानं परिणामविशेषः, विजितार्थसंबन्धो हि योगी यद्यदर्थतया यद्वस्तु संकल्पयति तत्तद्वस्तु तदर्थकमेव भवति विषमप्यमृतकार्यार्थं संकल्प्य भोजयन् जीवलोकं सुखाकरोतीति, नन्वेवं योगी जलमपि तेजः कुर्याद् धर्ममप्यधर्मं कुर्याद् इत्थमव्यवस्थैव स्यादित्याशङ्क्याह—न च शक्तोऽपीति। पूर्वपूर्वयोगिव्यवहारानुसारेणैव योगी व्यवह-

पूर्वसिद्धस्य तथाभूतेषु सङ्कल्पादिति, एतान्यष्टावैश्वर्याणि, कायसम्पद् वक्ष्यमाणा, तद्धर्मानभिघातश्च, पृथ्वी मूर्त्या न निरुणद्धि योगिनः शरीरादिक्रियां शिलामप्यनुप्रविशतीति, नापः स्निग्धाः क्लेदयन्ति, नाग्निरुष्णो दहति, न वायुः प्रणामी वहति, अनावरणात्मकेऽप्याकाशे भवत्यावृतकायः सिद्धानामप्यदृश्यो भवति ॥ ४५ ॥

**रूपलावण्यबलवज्रसंहननत्वानि कायसम्पद् ॥ ४६ ॥**

दर्शनीयः कान्तिमान् अतिशयबलो वज्रसंहननश्चेति ॥ ४६ ॥

भास्वती ।

वस्थापनसामर्थ्यं चिरं वा स्वल्पकालं वा, न चेति । शक्तोऽपि—शक्तिसम्पन्नोऽपि; न च पदार्थविपर्यासं = लोकलोक्यव्यवस्थापनं; करोति = तत्करणावकाशः सिद्धस्यात्र नास्तीति न करोति, कस्माद् ? अन्यस्य पूर्वसिद्धस्य यत्र कामावसायिनो भगवतो जगतां पातुर्हिरण्यगर्भस्य तथाभूतेषु = दृश्यमानव्यवस्थापनेषु सङ्कल्पाद् , यथा—शक्तोऽपि कश्चिद् राजा परराष्ट्रे न किञ्चित् करोति तद्वत्, तद्धर्मेति । सुगमम् । आकाशेऽप्यावृतकाय इत्यस्यार्थः सिद्धानामप्यदृश्यता ॥ ४५ ॥

वज्रसंहननत्वं = वज्रवद् दृढसंहतिः, कायस्य सम्यगभेद्यत्वमित्यर्थः ॥ ४६ ॥

तत्त्ववैशारदी ।

हन्ते, शक्तयस्तु पदार्थानां जातिदेशकालावस्थाभेदेनानियतस्वभावा इति युज्यते तासु तदिच्छाऽनुविधानमिति, एतान्यष्टावैश्वर्याणि, , तद्धर्मानभिघात' इति । अणिमादिप्रादुर्भाव- इत्यनेनैव तद्धर्मानभिघातसिद्धौ पुनरुपादानं कायसिद्धिवद् एतत्सूत्रोपवद्धसकलविषयसंयमफलवत्त्वज्ञापनाय, सुगममन्यद् ॥ ४५ ॥

कायसम्पदमाह—"रूप-सम्पद्" वज्रस्येव संहननम् = अवयवव्यूहो दृढो निविडो यस्य स तथा तस्य भावस्तत्त्वमिति ॥ ४६ ॥

पातञ्जलरहस्यम्

वर्गौ, ननु विश्वामित्रवत् सृष्ट्यन्तरं कुर्वन् योगी जलस्याग्नित्वमग्नेर्वा जलत्वं सम्पादयेत्त आह–न च शक्तोऽपीति । आत्मन आकाशः संभूत आकाशाद्वायुः वायोरग्निरिति श्रुतिसिद्धार्थविपर्यासे न कोऽपि शक्त ईश्वरानन्त्यप्रसङ्गादिति भावः, विश्वामित्रोऽपि न भूतसृष्टौ शक्तः किन्तु भौतिकसृष्टाविति भाभूजलेषु दाहः वह्नौ क्लेदनमिति भावः, शरीरादिक्रियां मूर्त्या न विरुणद्धीति कृत्वा शिलां पाषाणमनुप्रविशतीत्यन्वयः ॥ ४५ ॥

सूत्रं रूपेति । तामाह—चत्वार्येव कायसम्पदित्यर्थः तानि क्रमेण व्याकरोति दर्शयति अनेकेषु सत्सु यो रूपवान् स रमणीयो यथा राजकुमारशरीरम् ॥ ४६ ॥

वार्त्तिकम् ।

रतिः अन्यथा तुल्यबलविरोधेन व्यवहारासंभवाद्, विरोधमेव दर्शयति—अन्यस्येति–पूर्वेषां तथाभूतेषु यथादृष्टेष्वेव संकल्पादिति वाक्यार्थः, तथा च श्रुतिः—'धाता यथापूर्वमकल्पयदि'ति, स्वनियमपालनार्थमन्तर्यामिणा तथैव सिद्धः प्रेर्यत इति द्रष्टव्यम् , उपसंहरति—इत्यष्टावैश्वर्याणीति । अणिमाद्यष्टसिद्धिव्याख्यापूरणायैव प्राकाम्यमत्र भाष्यकारैः कथितं न त्वत्र सूत्रे प्राकाम्यमणिमादिमध्ये विवक्षितं तद्धर्मानभिघात इत्यनेनैव प्राकाम्यग्रहणेन पौनरुक्त्यापत्तेरिति ॥ ४५ ॥

कायसंयमादित्यादि सुगम, ।प्रसिद्धत्वात्सिद्धिद्वयविवेचनानपेक्षया केवलां कायसंपदं सूत्रकारो विवृणोति—

**ग्रहणस्वरूपास्मिताऽन्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥**

सामान्यविशेषात्मा शब्दादिर्ग्राह्यः, तेष्विन्द्रियाणां वृत्तिर्ग्रहणं, न च तत्सामान्यमात्रग्रहणाकारं, कथमनालोचितः स विषयविशेष इन्द्रियेण मनसाऽनुव्यवसीयेतेति, स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेष-

भास्वती ।

सामान्येति । तेषु शब्दादिष्विन्द्रियाणां वृत्तिः = आलोचनप्रक्रिया नामजात्यादि-

तत्त्ववैशारदी ।

जितभूतस्य योगिन इन्द्रियजयोपायमाह—"ग्रहण-जयः, ग्रहणं च स्वरूपं चास्मिता चान्वयश्चार्थवत्त्वं च तेषु संयमस्तस्मादित्यर्थः, गृहीतिर्ग्रहणं, तच्च ग्राह्याधीननिरूपणमिति ग्राह्यं दर्शयति—"सामान्यविशेषात्मा" इति ।

ग्राह्यमुक्त्वा ग्रहणमाह-"तेषु" इति । वृत्तिः = आलोचनं विषयाकारा परिणतिरिति यावत्, ये त्वाहुः-सामान्यमात्रगोचरेन्द्रियवृत्तिरिति; तान्प्रत्याह-"न च" इति । गृह्यत इति ग्रहणं, सामान्यमात्रगोचरं ग्रहणम् बाह्येन्द्रियतन्त्रं हि मनो बाह्ये प्रवर्त्ततेऽन्यथाऽन्धबधिराद्यभावप्रसङ्गात्, तदिह यदि न विशेषविषयमिन्द्रियं तेनासावनालोचितो विशेष इति कथम्मनसाऽनुव्यवसीयेत, तस्मात सामान्यविशेषविषयमिन्द्रियालोचनमिति, तदेतद् ग्रहणमिन्द्रियाणां प्रथमं रूपं, द्वितीयं रूपमाह-"स्वरूपं पुनः" इति । अहङ्कारा हि सत्त्वभागेनात्मा

पातञ्जलरहस्यम् ।

सिद्ध्यन्तरमाह—ग्रहणेति सूत्रं, तेषु पञ्चसु संयमादिन्द्रियजय इत्यर्थः, संयुक्तसमवायेन संयुक्ततादात्म्येन वा जातिगुणो वेन्द्रियेण गृह्यते द्रव्यं साक्षात, सूत्रे ग्रहणं नामेन्द्रियालोचनं-न च विशेषद्रव्याग्राहे सा ग्रहीतुं शक्यत इत्याह-सामान्येत्यादि-अध्यवसीयतइत्यन्तेन, तत्र न चेत्याद्युपपत्ति बुद्धिस्थमर्थं पुरुषश्चेतयतीत्युक्तिमाश्रित्याह--स्वरूपमिति । युतसिद्धावच

वार्त्तिकम् ।

रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्" वज्रस्येव संहननं प्रहारो यस्येति वज्रवन्निबिडो दृढः संघातो यस्येति वा वज्रसंहननः, भाष्यं सुगमम् ॥ ४६ ॥

ग्राह्यसंयमस्य सिद्धय उक्ताः, ग्रह० संयमस्य सिद्धीराह—

ग्रहणस्वरूपास्मिताऽन्वयार्थवत्त्वसंयमादिन्द्रियजयः" ग्रहणं च स्वरूपं चास्मिता चान्वयश्चार्थवत्त्वं च तेषु संयमात्साक्षात्कारपर्यन्तात् तद्रूपाणामिन्द्रियाणां जयो भवतीत्यर्थः, ग्रहणं-व्याचष्टे—सामान्येति । वृत्तिरालोचनं विषयाकारपरिणामविशेषः चिन्ताऽवधारणाभिमान-संशयरूपादन्तःकरणानामसाधारणवृत्तिचतुष्काद्विलक्षणो दर्शनस्पर्शननामा, यद्यपि सोऽपि स्मरणाद्यनुरोधेनान्तःकरणस्यैव तथाऽपि चक्षुराद्युपष्टम्भेनैव भवतीति कृत्वा दर्शनादिश्चक्षुरादीनामुच्यते, तथा चोक्तं साङ्ख्ये—

सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ इति,

न त्वालोचनशब्दार्थो निर्विकल्पकं ज्ञानं चक्षुरादिमात्रवृत्त्यैवेति कल्पनीयम्, एवं सति चक्षुरादिनैव वैशिष्ट्यस्यापि ग्रहणसम्भवात् सर्ववृत्तीनां चित्तनिष्ठत्वस्य भाष्ये प्रोक्तत्वाच्च, ये तु बौद्धा विशेषस्य मनोमात्रस्य गोचरत्वमभ्युपगम्येन्द्रियवृत्तिं सामान्यमात्रविषयिणीमाहुस्तान् प्रत्याचष्टे—न चेति । न च तद् इन्द्रियं सामान्यमात्रेण ग्रहणमाकारो रूपं यस्य तथा भवतीत्यर्थः, तत्र हेतुः-कथमित्यादि, स विषयगतो विशेष इन्द्रियेणानालोचितः कथं मनसाऽनुव्यवसीयेत गृह्येत; मनसो वहिरस्वातन्त्र्याद् अन्यथा चक्षुराद्यगोचरार्थानां मनसा विशेषग्रहणप्रसङ्गादित्यर्थः, इन्द्रियाणां द्वितीयं रूपमाह—स्वरूपमिति । प्रकाशात्मनो बुद्धि-

योरयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिन्द्रियं, तेषां तृतीयं रूपमस्मितालक्षणोऽहङ्कारः तस्य सामान्यस्येन्द्रियाणि विशेषाः, चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणाः, येषामिन्द्रियाणि साहङ्काराणि परिणामाः, पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति. पञ्चस्वेतेष्विन्द्रि-

भास्वती ।

विज्ञानविप्रयुक्ता शब्दाद्येकैकविषयाकारमात्रेण परिणम्यमानतेति यावद् , ग्रहणम् प्रत्यक्षविज्ञानस्य मूलत्वान्न तदालोचनं ज्ञानं सामान्याकारमात्रमपि चेन्द्रियेण सामान्यविषयमात्रग्रहणे सति विशेषविषयः कथं मनसाऽनुव्यवसीयते=अनुचिन्त्यते, दृश्यते तु विशेषविषयस्यापि स्मरणकल्पनादिकम् , स्वरूपमिति । प्रकाशात्मनो बुद्धिसत्त्वस्य संस्थानभेदश्चेन्द्रियरूपमेकं द्रव्यं जातम् ,

तदिन्द्रियद्रव्यन्तु–सामान्यविशेषयोः प्रकाशसामान्यस्य कर्णादिरूपविशेषव्यूहनस्य च समूहरूपं निरन्तरालावयववद् , इन्द्रियगता या प्रकाशशीलता या च शब्दस्पर्शाद्याकारैः परिणता शब्दाद्यालोचनज्ञानाकारा भवति तत्कारणभूतः प्रकाशगुणस्य कर्णादिरूपएकैकः संस्थितिभेद एवेन्द्रियाणां स्वरूपम् , तेषां तृतीयं रूपमस्मिता; तस्याः सामान्यो

तत्त्ववैशारदी ।

येनेन्द्रियाण्यजीजनद्, अतो यत्तत्र करणत्वं सामान्यं यच्च नियतरूपादिविषयत्वं विशेषस्तदुभयमपि प्रकाशात्मकमित्यर्थः, 'तेषां तृतीयं रूपम्'इति । अहङ्कारो हीन्द्रियाणां कारणमिति यत्रेन्द्रियाणि तत्र तेन भवितव्यमिति सर्वेन्द्रियसाधारण्यात्सामान्यमिन्द्रियाणामित्यर्थः. 'चतुर्थं रूपम्'—इति । गुणानां हि द्वैरूप्यं व्यवसायात्मकत्वं व्यवसेयात्मकत्वं च, तत्र व्यवसेयात्मकतां ग्राह्यतामास्थाय पञ्चतन्मात्राणि भूतभौतिकानि च निर्मिमते, व्यवसायात्मकत्वं-

पातञ्जलरहस्यम् ।

वो वनसेनाऽऽदिसमूहस्तद्व्यावृत्त्यर्थमाह—अयुतेति—अवयवेष्वेव कपालादिषु वर्तमानो घटोऽवयवान् व्युदस्य गृह्यत इन्द्रियमपि द्रव्यग्रहणहेतुरस्मिताऽहंकारः स च सात्त्विकराजसतामस इति त्रितयात्मकं तत्र सत्त्वं लघुप्रकाशकमित्युक्तेः सात्त्विकाहंकारादिन्द्रियाणि श्रोत्रादीनि दश, तामसाहंकारात्तन्मात्राणि पञ्च तेभ्यो महाभूतानि पञ्च, पञ्चभ्यः पञ्च भूतानीतिसां-

वार्त्तिकम् ।

सत्त्वस्य कार्या येऽयुतसिद्धा अवयवभेदाः सात्त्विकाहंकाररूपास्तेष्वनुगतः सामान्यविशेषरूपयोः समूहो द्रव्यमिन्द्रियमित्यर्थः, तत्र विशेषाः ग्रहणरूपा नीलपीताद्याकाराः परिणामभेदाः सामान्यं च चक्षुरादीति, ननु पूर्वसूत्रवदत्रापि स्वरूपं केवलं सामान्यमेवोचितम् अन्यथा ग्रहणाख्यप्रथमरूपस्याप्यत्रैव प्रवेशापत्तेरिति चेत ? सत्यम्–सामान्यप्राधान्येनैव स्वरूपत्वमत्रापि विवक्षितं तथाऽपि भूतवदिन्द्रियस्यापि सामान्यविशेषाभ्यामत्यन्तभेदप्रतिषेधायैव समुदायो द्रव्यमित्युक्तम् , तेषां तृतीयं रूपमिति । तेषामिन्द्रियाणां तृतीयं रूपम् अवयवशब्देनोक्तोऽहंकारः, तत्राभिमानाख्यवृत्तिभ्रमनिरासायास्मितालक्षण इति विशेषणम् अस्मितावृत्तिक इत्यर्थः, ननु कथमहंकार इन्द्रियाणां रूपमित्याकाङ्क्षायामाह—तस्येति । यथा तन्मात्रस्य सामान्यस्य भूतानि विशेषा एवमहंकारस्य सामान्यस्य चक्षुरादीनि विशेषाः कार्यत्वात्, अत इन्द्रियेष्वनुगततयाऽहंकार इन्द्रियाणां रूपं भूतानां तन्मात्रवदिति भावः, इन्द्रियाणां चतुर्थं रूपमाह—चतुर्थमिति, महत्तत्त्वस्यापि चतुर्थरूपमध्ये प्रवेशाय व्यवसायात्मका इति गुणानां विशेषणं व्यवसायाख्यबुद्धिरूपेण परिणतास्तद्विशिष्टा इत्यर्थः, एतेन पू-

यरूपेषु यथाक्रमं संयमः, तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः ॥ ४७ ॥

**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥**

कायस्यानुत्तमो गतिलाभो मनोजवित्वं, विदेहानामिन्द्रियाणामभिप्रेत-

भास्वती ।

पादानभूताया इन्द्रियाणि विशेषाः, व्यवसायात्मका न व्यवसेयग्राह्यात्मकास्त्रिगुणा येषां-प्रकाशक्रियास्थितिरूपाः स्वभावा ज्ञानचेष्टासंस्काररूपेणेन्द्रियेष्वन्वितास्तदिन्द्रियाणा-मन्वयित्वरूपम् , पञ्चमं रूपमिन्द्रियेषु यद् गुणानुगतं गुणानुवर्त्तमानं पुरुषार्थवत्त्वम् , पञ्च-स्विति । इन्द्रियजयः = बाह्यान्तरेन्द्रियाणामभीष्टाकारेण परिणमनसामर्थ्यम् ॥ ४७ ॥

कायस्येति । मनोवज्जवो गतिवेगो मनोजवस्तत्त्वम् , विदेहानां = शरीरनिरपेक्षा-णामिन्द्रियाणामभिप्रेते देशे काले विषये च वृत्तिलाभो ज्ञानचेष्टाऽऽदिकरणसामर्थ्यं विक-

तत्त्ववैशारदी ।

नु ग्रहणरूपमास्थाय साहङ्काराणीन्द्रियाणात्यर्थः, शेषं सुगमम् ॥ ४७ ॥

पञ्चरूपेन्द्रियजयात् सिद्धीराह—"ततो·श्च" । विदेहानामिन्द्रियाणां करणभावो विक-रणभावः, देशः काश्मीरादिः, कालः-अतीतादिः, विषयः सूक्ष्मादिः, सान्वयेन्द्रियजयात्सर्व-प्रकृतिविकारवशित्वम्प्रधानजयस्ता एताः सिद्धयो मधुप्रतीका इत्युच्यन्ते योगशास्त्रनिष्णा-तैः, स्यादेतत्-इन्द्रियजयादिन्द्रियाणि सविषयाणि वश्यानि भवन्तु, प्रधानादीनां तत्कार-

पातञ्जलरहस्यम् ।

ण्योच्चैः, रजस उपष्टम्भकत्वमात्रम्, उक्तेषु त्रिषु पटेषु तन्तव इवानुगच्छन्तोत्यन्वया गुणा-इत्युक्तं सत्त्वरजस्तमांसि प्रकाशप्रवृत्तिस्थितिशीलानि पुरुषार्थ एव हेतुर्न केन चित् कार्यते करणम् इति, इन्द्रियजय इति । योगवृत्तिमाश्रित्याह—इन्द्रियरूपेष्विति । गुणानां द्वैरूप्य-मिति । व्यवसेयात्मकत्वं = ग्राह्यत्वमित्यर्थः ॥ ४७ ॥

ततः किं तत्राह—ततः पञ्चरूपपरिभाषितकरणजयादिभिः सिद्धयः स्युरिति सूत्रार्थः, यावन्मनः क्षिप्यते तावद् गच्छतीति श्रुतिमाश्रित्याह-कायस्येति । विकरणभा-

वार्त्तिकम् ।

वोक्तभूतजयसूत्रेऽप्यन्वयाख्यचतुर्थरूपमध्ये महदहंकारयोः प्रवेश इत्युन्नेयं युक्तिसाम्यादिति, येषामिति, साहंकाराणि सान्तःकरणानि, पञ्चमं रूपमाह—गुणेष्विति, इन्द्रियप्रकृतिगुणे-ष्वित्यर्थः, सूत्रवाक्यार्थं व्याचष्टे—पञ्चस्विति, यथाक्रमं ग्रहणादिक्रमेण संयमः।कार्य इति शेषः, ततश्च वत्सानुसारिण्य इव गावोऽस्य संकल्पानुविधायिन्य इन्द्रियप्रकृतयो भवन्तीति शेषः ॥ ४७ ॥

इन्द्रियजयात्सिद्धीराह—

"ततो मनोजवित्वं विकरणभावः प्रधानजयश्च" व्याचष्टे—कायस्येति, अनुत्तमो मनोव-च्छीघ्रतरः कर्मेन्द्रियवृत्तिविजयाद्भवति, विकरणभावस्य स्वरूपमाह-विदेहानामिति, स्थूल-देहसंपर्करहितानामित्यर्थः, इन्द्रियाणामिति करणसामान्योपलक्षणम् , विकरणभावशब्दस्य योगार्थमाह—अभिप्रेतेति, अभिप्रेतकालदेशविषयापेक्षस्तदपरित्यागी यत्रैव देशादिषु वृत्तिलाभ इष्यते तत्रैव भवतीत्यर्थः, तथा च विकरणभावो विकीर्णतास्वभावो व्यापि-तेति यावद्, य एवंविधकरणभावोपपन्ना योगिनस्त एव स्थाने स्थाने विदेहा इत्युक्ताः, सर्वेति, सर्वासां व्यक्तिभेदेनानन्तानां भूतेन्द्रियप्रकृतीनां सत्त्वादिगुणानां तद्विकाराणां-

देशकालविषयापेक्षो वृत्तिलाभो विकरणभावः, सर्वप्रकृतिविकारवशित्वं प्रधानजय इति, एतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते, एताश्च करणपञ्चकरूपजयादधिगम्यन्ते ॥ ४८ ॥

## सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥

भास्वती।

रणभावः = विदेहानामपीन्द्रियाणां करणभाव इत्यर्थः, "अष्टौ प्रकृतयः, षोडश विकाराः" इत्येतेषां जयः प्रधानजयः, मधुप्रतीकसंज्ञा एतास्तिस्रः सिद्धयः, करणपञ्चकरूपजयात् = पञ्चानां करणानां ग्रहणादिरूपपञ्चकजयादित्यर्थः ॥ ४८ ॥

ज्ञानक्रियारूपाः सिद्धीरुक्त्वा सर्वाभिप्राविणीं विवेकजसिद्धिमाह— सत्त्वेति । व्याचष्टे—निर्धूतेति । परे वैशारद्ये = रजस्तमोहीने स्वच्छे स्थितिप्रवाहे जाते, वशीकारवैरा

तत्त्ववैशारदी।

णानां किमायातमित्यत आह—"एताश्च" इति, करणानाम् = इन्द्रियाणां पञ्चरूपाणि = ग्रहणादीनि तेषाञ्जयाद्, एतदुक्तं भवति--नेन्द्रियमात्रजयस्यैताः सिद्धयोऽपि तु पञ्चरूपस्य, तदन्तर्गतं च प्रधानादीति ॥ ४८ ॥

त एते ज्ञानक्रियारूपैश्वर्यहेतवः संयमाः साक्षात्पारम्पर्येण च स्वसिद्ध्युपसंहारसम्पादितश्रद्धाद्वारेण यदर्थास्तस्याः सत्त्वपुरुषान्यताख्यातेरवान्तरविभूतीर्दर्शयति—"सत्त्वं-च"

पातञ्जलरहस्यम्।

वोऽचिराय स्थूलदेहकरणभावः देशान्तरादावपि विषयग्राहकत्वमित्याह-अभिप्रेतेति, यद्यप्यस्मदादिचक्षुरादीनां देशान्तरस्थसूर्यादिग्राहकत्वं शरीरसंयुक्तानां योगिनां तेषां शरीरवियुक्तानामपीति विशेषः, सुलभा ब्रह्मवादिनी स्वशरीरं विहाय जनकं प्रविश्य विवादं कृतवतीतिहासः, ग्रहणादीनि पूर्वसूत्रोक्तानि पञ्च तदन्तर्गतम् अन्वयगुणानां साम्यावस्था प्रधानमिति भावः ॥ ४८ ॥

सत्त्वेति सूत्रस्यावतारिकामाह—त एतदिति । स्वसिद्ध्युपसंहारः नासिकायां गन्धसंविदि तेन संपादिता या योगशास्त्रे श्रद्धा यदर्थं सत्त्वपुरुषान्यत्वख्यात्यर्थात् संयमात्तस्या एव परमपु

वार्त्तिकम्।

च सर्वेषां स्वेच्छयाऽनुविधानं प्रधानजय इत्यर्थः, ननु भूतप्रकृतिजयो भूतजयो वा कथमिन्द्रियजयादिति चेद् न—भूतजयरूपपूर्वभूमिकायामेव तयोर्जितत्वेनोत्तरभूमिकायामेकीकृत्य सर्वजयकथनादिति, एत एव च प्रधानजयिनः पूर्वं स्थाने स्थाने प्रकृतिलया इत्युक्ताः प्रकृत्या सहैकतां गता इति प्रकृतिलयाः प्रकृतिवशिनः, एतास्तिस्र इति, अत्र सिद्धिविशेषाणामेव मधुप्रतीकसंज्ञाऽवगमाद्योगभूमिचतुष्टयस्य पृथगेव पश्चाद्वक्ष्यमाणत्वाच्च, योगभूमेर्मधुप्रतीकसंज्ञेति कस्य चिद्व्याख्यानमबोधमूलत्वादुपेक्षणीयम्, तत इति सौत्रं पदं व्याचष्टे— एताश्चेति, नन्विन्द्रियजये कथं प्रकृतिमहदहङ्काराणां जय इति चेन्न—इन्द्रियरूपेष्वन्तिमरूपत्रयत्वात्तेषामिति ॥ ४८ ॥

तदेवं ग्राह्यग्रहणसंयमयोः सिद्धिमुक्त्वा ग्रहीतृसंयमस्य सिद्धिमाह—

"सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च" मात्रशब्देन संयमरूपा ख्यातिर्लब्धा तथा सत्त्वपुरुषान्यतासंयमस्य धर्मधर्म्यभेदात् तद्गतश्चित्तस्य सर्वभावेषु प्रकृतितत्कार्यपुरुषेष्वधिष्ठातृत्वं स्वेच्छया विनियोक्तृत्वं स्वदेह इव भवति, तथा प्रकृतिपुरु-

निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्य परे वैशारद्ये परस्यां वशीकारसञ्ज्ञायां वर्त्तमानस्य सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वं, सर्वात्मानो गुणा व्यवसायव्यवसेयात्मकाः स्वामिनं क्षेत्रज्ञं प्रत्यशेषदृश्यात्मत्वेनोपतिष्ठन्त इत्यर्थः, सर्वज्ञातृत्वं सर्वात्मनां गुणानां शान्तोदिताव्यपदेश्यधर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानमित्यर्थः,

भास्वती।

स्याद् विषयप्रवृत्तिहीनं चेतो विवेकख्यातिमात्रप्रतिष्ठं भवति ततः सर्वभावाधिष्ठातृत्वं सर्वोपादानभूता ग्रहणग्राह्यरूपाः सत्त्वादिगुणाः क्षेत्रज्ञं स्वामिनं प्रत्यशेषदृश्यात्मकत्वेन = सर्वविधग्रहणशक्तिरूपेण तद्ग्राह्यरूपेण चोपतिष्ठन्ते, तदा सर्वभूतस्थमात्मानं योगी प-

तत्त्ववैशारदी।

निर्धूतरजस्तमोमलतया वैशारद्यं, ततः परा वशीकारसञ्ज्ञा, रजस्तमोभ्यामुपप्लुतं हि चित्तसत्त्वमवश्यमासीत्तदुपशमे तु तद्वश्यं योगिनो वशिनः, तस्मिन् वश्ये योगिनः सत्त्वपुरुषाऽन्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम्, एतदेव विवृणोति—"सर्वात्मानः" इति, व्यवसायव्यवसेयात्मानः = जडप्रकाशरूपा इत्यर्थः, तदनेन क्रियैश्वर्य्यमुक्तम्, ज्ञानैश्वर्य्यमाह—"सर्वज्ञातृत्वम्" इति, अस्या अपि द्विविधायाः सिद्धेर्वैराग्याय योगिजन-

पातञ्जलरहस्यम्।

र्थसाधनत्वादित्यर्थः, सत्त्वेति सूत्रं, वर्तमानस्य पुंसः व्यवसाया करणानि व्यवसेया विषया बुद्धेः संवेदो दर्शितविषयत्वादित्यादि स्मारयन्निराह-शेषेति। सर्वभावाधिष्ठातृत्वं मदर्था एत-

वार्त्तिकम्।

पादिसर्वज्ञातृत्वं च भवतीत्यर्थः, अत्रापि संयमः साक्षात्कारपर्यन्तो बोध्यः संयमनिष्पत्तेरेव सिद्धिहेतुत्वात्, ननु परार्थात्स्वार्थसंयमादितिसूत्रोक्तसंयमतोऽस्य को भेदो येन तत्र पुरुषज्ञानं सिद्धिरत्रान्या सिद्धिरिति सिद्धिभेदः स्यात्, उच्यते—तत्र पौरुषेयप्रत्यये सुखाद्यनुभवरूपे परिच्छिन्न एव संयम उक्तो न त्वपरिच्छिन्ने पुरुषे, अत्र तु तेन संयमेन ज्ञाते परिपूर्णे पुरुषे बुद्धिविवेकसंयम उच्यत इति विशेष इति, ननु सत्त्वेति विशेषवचनमनुचितं गुणपुरुषान्यतेत्याद्येव वक्तुमुचितमिति चेन्न—रजस्तमोभ्यां पुरुषे साक्षादविवेकाभावाद् बुद्धिसत्त्वाविवेकद्वारव देहेन्द्रियादिष्वविवेकात् स्वप्नबोधियोद्यवस्थासु चेतने देहेन्द्रियादिविवेकस्य योगारम्भकाल एव बालकैरप्यवघृतत्वाच्चेति, तदिदं सूत्रं व्याचष्टे—निर्धूतेति, परवैशारद्यं परमस्वच्छता = अतिसूक्ष्मवस्तुप्रतिबिम्बोद्ग्रहणसामर्थ्यमिति यावत्, परमवशीकारसंज्ञा च परमाणुपरममहत्त्वान्तोऽस्य वशीकार इत्युक्ता, रूपेण प्रतिष्ठस्य रूपप्रतिष्ठस्य, सर्वभावाधिष्ठातृत्वं विवृणोति—सर्वात्मान इति, सर्वात्मान इत्यस्य विवरणं व्यवसायव्यवसेयात्मका इति करणतद्विषयात्मका इत्यर्थः, अशेषदृश्येति, संकल्पमात्रेण पुरुषैः संयुक्ता असंयुक्ताश्चाशेषभोग्यवस्त्वाकारेण परिणता भूत्वोपतिष्ठन्ते योगिनं, तत्र हेतुगर्भविशेषणं स्वामिनं क्षेत्रज्ञमिति, यतोऽसौ भोक्तृत्वात्प्रेरकोऽतस्तमयस्कान्तलोहवदुपतिष्ठन्त इत्यर्थः, यद्वा यतोऽसौ स्वामी ईश्वरः क्षेत्रज्ञश्च परिणामक्षेत्राणि गुणादीनि प्रवर्त्तयति परिणामनप्रकारैर्जानाति चेत्यर्थः, यद्यपि सर्वे पुरुषाः सर्वगुणानामविशेषेण स्वामिनस्तथाऽपि पापादिप्रतिबन्धास्सर्वे गुणाः सर्वदा सर्वपुरुषान्न भोग्यत्वेनोपतिष्ठन्त इति भावः, तथा च श्रुतिः—'स यदि पितृलोककामः संकल्पादेवास्य पितरः समुत्तिष्ठन्ती'त्यादिरिति, क्रियैश्वर्यरूपां सिद्धिं व्याख्याय ज्ञानैश्वर्यरूपां व्याचष्टे—सर्वज्ञातृत्वमिति, सर्वात्मनां सर्वपुरुषाणां बद्धमुक्तेश्वराणां शान्तादिरूपधर्मविशिष्टगुणानां-

इत्येषा विशोका नाम सिद्धिः; याम्प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति ॥ ४६ ॥

## तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५० ॥

यदाऽस्यैवं भवति क्लेशकर्मक्षये सत्त्वस्यायं विवेकप्रत्ययो धर्मः, सत्त्वं च हेयपक्षे न्यस्तं पुरुषश्चापरिणामी शुद्धोऽन्यः सत्त्वादिति, एवम् अस्य ततो विरज्यमानस्य यानि क्लेशबीजानि दग्धशालिबीजकल्पान्यप्रसवसमर्थानि तानि सह मनसा प्रत्यस्तं गच्छन्ति,

भास्वती।

श्यति, सर्वज्ञातृत्वमिति। अक्रमोपारूढं=युगपदुपस्थितम्, विवेकजसंज्ञा सार्वज्ञ्यसिद्धिः, एषा योगप्रसिद्धा विशोकानाम्नी सिद्धिः ॥ ४९ ॥

विवेकस्यावान्तरसिद्धिमुक्त्वा मुख्यां सिद्धिमाह—तदिति। तद्वैराग्ये=विवेकज सार्वज्ञ्ये सर्वाधिष्ठातृत्वे च वैराग्ये जाते, यदेति। यदाऽस्य योगिन एवंविवेकख्यापि हेयताख्यातिर्भवति, क्लेशकर्मक्षये=विवेकज्ञानस्य विद्यारूपस्य प्रतिष्ठाया अविद्याऽऽदिक्लेशानां तन्मूलककर्मणाञ्च दग्धबीजभावत्वं क्षयः, तेषां क्षयाच्चाविप्लवा विवेकख्यातिर्भवति, ततो विवेकोऽपि हेय इति परं वैराग्यमुत्पद्यते, अथ दग्धबीजकल्पाः क्लेशाः परेण वैराग्येण सह चित्तेन प्रलीना भवन्ति, ततः पुरुषः पुनस्तापत्रयं न भुङ्क्ते=तापा-

तत्त्ववैशारदी।

प्रसिद्धां सञ्ज्ञामाह—"एषा विशोका" इति, क्लेशाश्च बन्धनानि च=कर्माणि तानि क्षीणानि यस्य स तथा ॥ ४९ ॥

संयमान्तराणां पुरुषार्थाभासफलत्वाद् विवेकख्यातिसंयमस्य पुरुषार्थतां दर्शयितुं विवेकख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलमाह—"तद्वैराग्यात्—ल्यम्"। यदाऽस्य योगि

पातञ्जलरहस्यम्।

इत्यभिमान इत्यात्मिकां मधुप्रतीकामुक्त्वा विशोकामाह—इत्येषेति। फलमाह—यामिति। वशी जीवन्मुक्तः ॥ ४९ ॥

ततः कैवल्यमित्याह—यद्वैराग्यादपीति। विवेकख्यातिरपि सत्त्वपरिणामत्वात् सत्त्व

वार्त्तिकम्।

चैकदैव ज्ञानं सर्वज्ञातृत्वमित्यर्थः, तस्य संज्ञा विवेकजमिति, विवेकेन जायमानं यथाऽर्थसाक्षात्कार इति यावत्, अथ वा प्रकृतिपुरुषविवेकाज्जायमानमित्यर्थः, सान्वयेयं संज्ञेति, विशेषसंज्ञाया अन्वर्थतामाह—यां प्राप्येति, क्षीणक्लेशबन्धनत्वात् शोकशून्येति भावः ॥ ४९ ॥

सर्वसिद्धिमूर्द्धन्यं विवेकख्यातिरूपसंयमस्य परवैराग्यद्वारा मोक्षाख्यं सिद्ध्यन्तरमाह—

"तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्" अपिशब्दः कैवल्यमित्यनेनान्वेति, तथा च विवेकख्यातिनिष्ठात एव विवेकख्यातौ तस्या यथोक्तसिद्धौ च वैराग्ये सत्यसम्प्रज्ञातयोगेन दुःखदोषस्य बीजानामखिलवासनाकर्मणां चित्तेन सह लये सति पुरुषस्य कैवल्यं पुनर्गुणासंयोगरूपमपि भवतीत्यर्थः, वैराग्यकारणमाह—यदेति। क्लेशकर्मक्षयरूपकर्त्तव्यसमाधौ यदा योगिन एवं भवति एवं विचारो भवति, एवं शब्दार्थमाह-सत्त्वस्येत्यादिना-सत्त्वादीत्यन्तेन, वैराग्यकारणमुक्त्वा कैवल्ये पुरुषार्थं प्रतिपादयति—एवमस्येत्यादिना-न भुङ्क्तइत्यन्तेन, अत्र

तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते, तदैतेषां गुणानां मनसि कर्मक्लेशविपाकस्वरूपेणाभिव्यक्तानां चरितार्थानां प्रतिप्रसवे पुरुषस्यात्यन्तिको गुणवियोगः कैवल्यं, तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति५०

**स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गाद् ॥५१॥**

चत्वारः खल्वमी योगिनः—प्रथमकल्पिकः, मधुभूमिकः, प्रज्ञाज्योतिः, अतिक्रान्तभावनीयश्चेति, तत्राभ्यासी प्रवृत्तमात्रज्योतिः प्रथमः, ऋतम्भर-

भास्वती ।

त्मकचित्तवृत्तेर्वा ग्रहीतृबुद्धिस्तस्याः प्रतिसंवेदी न भवतीत्यर्थः, शेषमतिरोहितम् , चितिशक्तिरेवेति । एवशब्देन शाश्वतीं स्वरूपप्रतिष्ठां द्योतयति ॥ ५० ॥

तत्रेति । प्रवृत्तमात्रज्योतिः = संयमजा प्रज्ञा प्रवृत्तैव न वशीभूता यस्य सः, सर्वेष्विति । भूतेन्द्रियजयादिषु भावितेषु कृतरक्षाबन्धः = निष्पादितत्वात् कर्त्तव्यताहीनः,

तत्त्ववैशारदी ।

नः क्लेशकर्मक्षय एवं ज्ञानं भवति, किम्भूतमित्याह—"सत्त्वस्यायं विवेकप्रत्ययो धर्म" इति, शेषं तत्र तत्र व्याख्यातत्वात्सुगमम् ॥ ५० ॥

सम्प्रति कैवल्यसाधने प्रवृत्तस्य योगिनः प्रत्यूहसम्भवे तन्निराकरणकारणमुपदिशति—"स्थान्युप-गाद्" स्थानानि येषां सन्ति ते स्थानिनो महेन्द्रादयः, तैरुपनिमन्त्रणं तस्मिन् सङ्गश्च स्मयश्च न कर्त्तव्यः पुनरनिष्टप्रसङ्गात्, तत्र यं देवाः स्थानैरुपमन्त्रयन्ते तं योगिनमेकं निर्धारयितुं यावन्तो योगिनस्सम्भवन्ति तावत एवाह—"चत्वार" इति, तत्र प्रथमकल्पिकस्य स्वरूपमाह—"तत्राभ्यासी" इति, प्रवृत्तमात्रं न पुनर्वशीकृतं ज्योतिः = ज्ञानं परि-

पातञ्जलरहस्यम् ।

तुल्येत्याह-सत्त्वस्यायमिति । प्रतिप्रसवे विलयइत्याह-लये सतीति शेषः, द्रष्टुः स्वरूपेणावस्थानमित्युक्तं स्मारयन्नाह—तदिति ॥ ५० ॥

न विस्मयेत तपसेति मनूक्तेः गर्वासक्ती अनर्थायेति सूत्रारूढं कुर्वन्नाह—स्थानीति ।

स्थानममरावत्यादि तद्येषामिन्द्रादीनामस्ति ते स्थानिनो देवाः तैरपि क्षणं स्वान्त-

वार्त्तिकम् ।

न भुङ्क्ते इति वचनाद् भोगाभाव एव पुरुषार्थ इति स्मर्त्तव्यं, दुःखाभावस्तु परम्परया पुरुषार्थइति भावः, इदानीं सूत्रार्थं व्याचष्टे—तदेतेषामिति, तत् तदा यदेत्युक्तेनान्वयः, तदा परवैराग्यावस्थायां संस्काररूपाणां दुःखबीजगुणानां सत्त्वादिगुणस्थानां कार्यावस्थमनसि क्लेशादिरूपेणाभिव्यक्तिस्वभावकानां चरितार्थानां समाप्तपुरुषार्थानां प्रतिप्रसवे मनसा सह लये सति पुरुषस्यात्यन्तिको गुणवियोगः कैवल्याख्यो भवतीत्यर्थः, मोक्षेण पुरुषस्य परिणाममपाकरोति—तदेति ॥ ५८ ॥

कैवल्याख्यसिद्ध्यर्थिनो योगिनो यथोक्तवैराग्यवदेव साधनान्तरमाह—अथ वा सम्प्रति कैल्यप्रसङ्गतः कैवल्यसाधने प्रवृत्तस्य योगिनस्तत्प्रत्यूहसम्भवे तन्निराकरणप्रकारमाह—

"स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्" स्थानिनः स्वर्गादिलोकाधिकारिणो देवा इन्द्रादयः तेषां स्वर्लोके नयनाय योगिनो निमन्त्रणे सति तत्र सङ्गस्मयाकरणमुपायः, सङ्गे स्मये च का क्षतिस्तत्राह—सङ्गस्मयाभ्यां पुनरपि संसारप्रसङ्गात् , सङ्गः प्रीतिः स्मयश्च देवानां प्रार्थनेनात्मनि कृतार्थताऽभिमान इत्यर्थः, तत्र यस्यां भूमिकायां स्थान्युपनिमन्त्रणं भवति तां वक्तुं योगिनां भूमिकाचतुष्टयमाह—चत्वार इति, प्रथमकल्पिकस्य

प्रज्ञो द्वितीयः, भूतेन्द्रियजयी तृतीयः सर्वेषु भावितेषु भावनीयेषु कृतरक्षाबन्धः कृतकर्तव्यसाधनादिमान्, चतुर्थो यस्त्वतिक्रान्तभावनीयस्तस्य चित्तप्रतिसर्ग एकोऽर्थः सप्तविधाऽस्य प्रान्तभूमिप्रज्ञा, तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते भोरिहास्यतामिह रम्यतां, कमनीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं जरामृत्युं बाधते, वैहायसमिदं यानम्, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी, सिद्धा महर्षयः, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रचक्षुषी वज्रोपमः कायः, स्वगुणैः सर्वमिदमुपार्जितमायुष्मता, प्रतिपद्य-

भास्वती ।

भावनीयेषु = विवेकादिषु यत्कर्त्तव्यमस्ति तत्साधनभावनावान्, चतुर्थ इति । चित्तप्रतिसर्गश्चित्तस्य प्रत्यय एकोऽवशिष्टोऽर्थः = साध्यः, तत्रेति । स्थानैः = स्वर्गलोकस्य

तत्त्ववैशारदी ।

चित्तादिविषयं यस्य स तथा, द्वितीयमाह—"ऋतम्भरप्रज्ञ" इति, यत्रेदमुक्तम्-ऋतम्भरा तत्र प्रज्ञा इति, स हि भूतेन्द्रियाणि जिगीषुः, तृतीयमाह—"भूतेन्द्रियजयी" इति, तेन हि स्थूलादिसंयमेन ग्रहणादिसंयमेन च भूतेन्द्रियाणि जितानि, तमेवाह—"सर्वेषु" इति, सर्वेषु भावितेषु निष्पादितेषु भूतेन्द्रियजयात् परचित्तादिज्ञानादिषु कृतरक्षाबन्धः यतस्तेभ्यो न च्यवते भावनीयेषु = निष्पादनीयेषु विशोकादिषु परवैराग्यपर्य्यन्तेषु कर्त्तव्यसाधनवान् पुरुषप्रयत्नस्य साधनविषयस्यैव साध्यनिष्पादकत्वात्, चतुर्थमाह—"चतुर्थ" इति, तस्य हि भगवतो जीवन्मुक्तस्य चरमदेहस्य चित्तप्रतिसर्ग एकोऽर्थः, तदेतेषु योगिषूपनिमन्त्रणविषयं योगिनमवधारयति—"तत्र मधुमतीम्" इति, प्रथ-

पातञ्जलरहस्यम् ।

स्थानादिसमर्पणमात्रमस्येति तस्मिन् कृते सङ्गः भोक्ष्य एतदित्यासक्तिर्न कार्या त एते मामृतंभरप्रज्ञयोगिनं स्थानादि समर्पयन्ति, विस्मयो गर्वः सोऽपि न कर्तव्यः कुतोऽनि-

वार्त्तिकम् ।

स्वरूपमाह—तत्राभ्यासीति, प्रवृत्तमात्रं न तु निष्पन्नज्योतिर्ज्ञानं यस्य स तथा सवितर्कादिरूपापरप्रत्यक्षवान् न तु ऋतम्भरप्रज्ञ इत्यर्थः, मधुभूमिकस्य स्वरूपमाह—ऋतम्भरेति, ऋतं सत्यमेव बिभर्त्तीति व्युत्पत्त्या परप्रत्यक्षमेव ऋतम्भरा प्रज्ञाऽत्र विवक्षिता सा च परिशेषात् निर्वितर्करूपा भूमिकैव तदुत्तरभूमिकानां तृतीयादावेवान्तर्भावादिति, प्रज्ञाज्योतिषः स्वरूपमाह—भूतेति, ऋतम्भरप्रज्ञातोऽस्य विशेषमाह—सर्वेष्विति, सर्वेषु भावितेषूत्पादितेषु निर्वितर्कादियोगेषु कृतो रक्षारूपो बन्धो येन स तथा, तथा भावनीयेषूत्पादनीयेषु विशोकादिसिद्ध्यादिष्वसम्प्रज्ञातपर्यन्तेषु विहितसाधनवानित्यर्थः, अतिक्रान्तभावनीयस्य स्वरूपमाह—चतुर्थ इति, चित्तप्रतिसर्गोऽसम्प्रज्ञातसमाधिना चित्तविलयमात्रं कर्त्तव्यमवशिष्यत इत्यर्थः, प्रज्ञाज्योतिषोऽस्य विशेषमाह—सप्तविधेति, प्रज्ञा जातेति शेषः, युक्तासु योगभूमिषु स्थान्युपनिमन्त्रणस्य भूमिमवधारयति—तत्रेति, प्रथमभूमिकायां तावन्महेन्द्रादीनामेतादृशानुग्रह एव न भवति तृतीयचतुर्थभूमिकयोस्तु देवादय उपेक्षणीया एव भवन्ति अतो मधुभूमिकायां द्वितीयायामेव निमन्त्रणं भवतीत्याशयः, साक्षात्कुर्वतः स्वस्येयं मधुमती भूमिका जातेत्यनुभवतः, अनेन भूमिनिष्पत्तिरुक्ता, निष्पन्नमधुभूमिकस्येत्यर्थः, उपनिमन्त्रणप्रकारमाह—भो इहेत्यादिना—देवानां प्रियमित्यन्तेन, सङ्गस्मयाकरणं व्याचष्टे—एवमभि-

तामिदमक्षयमजरममरस्थानं देवानां प्रियमिति, एवमभिधीयमानः सङ्गदोषान् भावयेद् घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्त्तमानेन कथञ्चिदासादितः क्लेशतिमिरविनाशो योगप्रदीपः, तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः, स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्य्यामिति, स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवन्निश्चितमतिः समाधिम्भावयेत्, सङ्गमकृत्वा स्मयमपि न कुर्य्याद्, एवमहं देवानामपि प्रार्थनीय इति, स्मयादयं सुस्थितम्मन्यतया मृत्युना केशेषु गृहीतमिवात्मानं न भावयिष्यति, तथा चास्य छिद्रान्तरप्रेक्षी नित्यं यत्नोपचर्य्यः प्रमादो लब्धविवरः क्लेशानुत्तम्भयिष्यति ततः पुनरनिष्टप्रसङ्गः, एवमस्य सङ्गस्मयावकुर्वतो भावितोऽर्थो दृढीभविष्यति, भावनीयश्चार्थोऽभिमुखीभविष्यतीति ॥ ५१ ॥

## क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५२ ॥

भास्वती ।

प्रशंसाऽऽदिभिः, तस्य योगप्रदीपस्य तृष्णासम्भूता विषयवायवः प्रतिपक्षा निर्वाणकृत इत्यर्थः, कृपणजनः = कृपाऽर्हजनः छिद्रान्तरप्रेक्षी = छिद्ररूपोऽन्तरोऽवकाशस्तद्गवेषकः, नित्यं यत्नोपचर्यः = यत्नेन प्रतिकार्य एवम्भूतः प्रमादो लब्धविवरः = लब्धप्रवेशः क्लेशानुत्तम्भयिष्यति = प्रबलीकरिष्यति, शेषं सुगमम् ॥ ५१ ॥

विवेकजज्ञानस्योपायान्तरमाह—क्षणेति । क्षणे तत्क्रमे च = पूर्वोत्तररूपप्रवाहे च

तत्त्ववैशारदी ।

मकल्पिके तावन्महेन्द्रादीनां तत्प्राप्तिशङ्कैव नास्ति, तृतीयोऽपि तैर्नोपनिमन्त्रणीयः भूतेन्द्रियवशित्वेनैव तत्प्राप्तेः, चतुर्थेऽपि परवैराग्यसम्पत्तेरासङ्गाशङ्का दूरोत्सारितैवेति, पारिशेष्याद् द्वितीय एव ऋतम्भरप्रज्ञस्तदुपनिमन्त्रणविषय इति, वैहायसम् आकाशगामि, अक्षयम्—अविनाशि, अजरं = सदाऽभिनवम्, स्मयकरणे दोषमाह—"स्मयादयम्" इति, स्मयात्सुस्थितम्मन्यो नानित्यताम्भावयिष्यति, न तस्यां प्रणिधास्यतीत्यर्थः. सुगममन्यत्॥५१॥

उक्ता कचित्क्वचित्संयमात्सर्वज्ञता सा च न निःशेषज्ञता, अपि तु प्रकारमात्रविव-

पातञ्जलरहस्यम्।

ष्टप्रसङ्गाद् भुञ्जानस्य भोगलम्पटतानिष्ठस्य ततश्च साधनाभ्यासेऽलंप्रत्ययः कदा चित्स्यादिति सूत्रार्थः, अतिक्रान्तभावनीयत्वाद्विगतभावनीयत्वाच्चित्तप्रतिसर्गः चित्तलय एवैको मुख्योऽर्थो प्रयोजनीयतयेति शेषः, चतुर्षु सिद्धेषु देवनिमन्त्रणीयो द्वितीय इति वक्तुं विशिनष्टि—प्रथमकल्पिके तावदिति । तस्यासिद्धत्वेन देवसाक्षात्कारानर्हत्वात्, तत्प्राप्तेः स्थानादिप्राप्तेरित्यर्थः, विरक्तस्य च बुधस्य च्छर्दितान्नतुल्यविषयेऽप्रवृत्तेरिति भावः॥ ५१ ॥

वार्त्तिकम् ।

धीयमान इति, सङ्गदोषान् विषयप्रीतिजान्, दोषचिन्तनप्रकारमाह—घोरेष्वित्यादिना-कुर्यामित्यन्तेन, सङ्गं त्यक्त्वा यत् कर्त्तव्यं तदाह—स्वस्तीत्यादिना, भावयेत् कुर्यात्, स्वयं-वितृष्णवानस्तत्कारणदोषमाह—एवमहमिति, न भावयिष्यति न चिन्तयिष्यति, यत्नोपचर्यः यत्नप्रतीकार्यः, सङ्गस्मयाकरणस्य फलमाह—एवमस्येति ॥ ५१ ॥

यथाऽपकर्षपर्य्यन्तं द्रव्यं परमाणुरेवम्परमापकर्षपर्य्यन्तः कालः क्षणः, यावता वा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसम्पद्येत

भास्वती ।

संयमात् सूक्ष्मतमपरिणामसाक्षात्कारः स्यात् ततश्चाप्युक्तं विवेकजं ज्ञानम् = अपरप्रसङ्ख्याननामकं सार्वज्ञ्यम् भवतीति सूत्रार्थः, यथेति । यथा-अपकर्षपर्यन्तं द्रव्यं = सूक्ष्मतमं रूपादिद्रव्यं परमाणुस्तथा कालस्य परमाणुः क्षणः, यावतेति । परमाणोर्देशावस्थानस्यान्यथाभावो यावता कालेन भवति स एव वा क्षणः, विक्रियाया अधिकरणमेव कालः, परमाणोर्देशावस्थानभेदस्तु सूक्ष्मतमा विक्रिया, तदधिकरणं तस्मात् कालस्याणुरवयवः क्षणसंज्ञकः, तत्प्रवाहाविच्छेदस्तु = निरन्तरः क्षणप्रवाहः क्रमः क्षणानाम् , कालज्ञानतत्त्वं-

तत्त्ववैशारदी ।

क्षया यथा सर्वैर्व्यञ्जनैर्भुक्तमिति अत्र हि यावन्तो व्यञ्जनप्रकारास्तैर्भुक्तमिति गम्यते न तु निःशेषैरिति, अस्ति च निःशेषवचनः सर्वशब्दः यथोपनीतमन्नं सर्वमशितं प्राशकेनेति, तत्र हि निःशेषमिति गम्यते, तदिह निःशेषज्ञतालक्षणस्य विवेकजज्ञानस्य साधनं संयममाह—क्षण-ज्ञानम्" क्षणपदार्थं निदर्शनपूर्वकमाह—"यथा" इति । लोष्टस्य हि प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पत्वतारतम्यं व्यवतिष्ठते सोऽपकर्षपर्य्यन्तः परमाणुर्यथा तथाऽपकर्षपर्य्यन्तः कालः क्षणः पूर्वापरभागविकलकालकलेति यावत् , तमेव क्षणं प्रकारान्तरेण दर्शयति—"यावता वा" इति, परमाणुमात्रं देशमतिक्रामेदित्यर्थः, क्रमपदार्थमाह—"तत्प्रवाह—" इति, तत्पदेन क्षणः परामृश्यते, न चेदृशः क्रमो वास्तवः, किन्तु काल्पनिकः, तस्य समा-

पातञ्जलरहस्यम् ।

स कालः परमाणुर्यो भुङ्क्ते परमाणुतामिति भागवतोक्तिमाश्रित्य-सिद्धयन्तरमाह— क्षणेतिसूत्रम् ,

वार्त्तिकम् ।

सर्वज्ञत्वेऽपि वैराग्यान्मोक्ष इत्युक्तं यदि च रागस्तिष्ठति तदा तद्रागनिवृत्तये पूर्ववत्सर्वज्ञतासाधकं संयमान्तरमाह—

"क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्" विवेकात्पूर्वसूत्रोक्तात्सत्त्वपुरुषान्यताख्याज्जायमानं विवेकजं ज्ञानम् इतरव्यावृत्ततया सर्ववस्तूनामशेषविशेषैः साक्षात्करणमिति यावत् , तत् क्षणतत्क्रमयोः संयमादपि भवतीत्यर्थः, प्रतिक्षणं सर्वं वस्तु परिणमते अतः क्षणेषु तत्क्रमेषु च संयमेन साक्षात्कारे सति सर्ववस्तूनां सर्वपरिणामतत्क्रमयोरपि ज्ञानात् सर्वस्य वस्तुनो-विवेकेन ज्ञानं भवतीति भावः, यद्यप्यपिशब्दः सूत्रे नास्ति तथाऽपि ततश्च विवेकजं ज्ञानमित्यागामिभाष्यगम्यः, क्षणशब्दार्थं दृष्टान्तेन प्रतिपादयति-यथेति, यथा लोष्टादेर्भिद्यमानस्य यस्मिन्नवयवे परिमाणापकर्षकाष्ठा सोऽपकर्षावधिः सत्त्वादिगुणविशेषः परमाणुः, एवं कालस्यापकर्षावधिभूतोऽवयवविशेषः पूर्वापरांशशून्य इत्यर्थः, क्षणस्य लक्षणान्तरमाह— यावता वेति, जह्यादित्यनेनैकं लक्षणं सम्पद्येतेति च लक्षणान्तरम् , अन्यथा वैयर्थ्याद्, अवयविद्रव्यस्य देशत्यागो बहुक्षणेनापि कदा चिद्भवत्यवयवानां क्रमेण सञ्चारादित्युक्तम् , परमाणुरिति, अवयविनो देशस्य क्रिययाऽनेकक्षणेन जनितं देशत्यागादिकं व्यवर्त्तयितुं-चलित इत्युक्तम् , अत्र दृष्टान्तादिना परसूत्रेण च साक्षादेवाचार्येण परमाणुवचनाद् , वैशेषिकोक्तपरमाणवोऽप्यस्माभिरभ्युपगम्यन्ते ते चास्मद्दर्शने गुणशब्दवाच्या इत्येव विशेषः, न चानेकात्मकपृथिव्यादिभूतपरमाणुरेवात्र वाक्ये परमाणशब्दार्थो युक्तः, अत्र भूतरूपविशेषस्याप्रकृततया द्रव्यशब्दस्य विशेषपरत्वे प्रमाणाभावात् सावयवस्य पृथिव्यादिपरमाणोर्नि-

**स कालः क्षणः, तत्प्रवाहाविच्छेदस्तु क्रमः, क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्त्ताहोरात्रादयः, स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते, क्षणस्तु वस्तुपतितः क्रमावलम्बी, क्रमश्च क्षणानन्त-**

भास्वती।

विवृणोति—क्षणतत्क्रमयोरिति। वस्तुसमाहारः=यथा घटादिवस्तूनां समाहारे सर्वाणि वस्तूनि वर्त्तमानानीति लभ्यन्ते न तथा क्षणसमाहारे अतीतानागतक्षणानामवर्त्तमानत्वात्, तस्माद् मुहूर्त्ताहोरात्रादयः क्षणसमाहारो बुद्धिनिर्माणः=शब्दज्ञानानुपाती वैकल्पिक एव पदार्थो न वास्तवः, व्युत्थितदर्शिभिर्लौकिकैः स कालो वस्तुस्वरूप इव व्यवह्रियते मन्यते च, क्षणस्तु वस्तुपतितः= वस्तुनोऽधिकरणं न तु किञ्चिद्वस्तु, वस्तुरूपेण कल्पितस्याव स्तुनोऽप्यधिकरणं क्षणः, क्रमावलम्बी=क्रमरूपेणालम्ब्यते गृह्यत इत्यर्थः, यतः क्रमः क्षणानन्तर्यात्मा=निरन्तरक्षणज्ञानरूपः, ततस्तत्क्षणनैरन्तर्यं कालविदो योगिनः काल इति

तत्त्ववैशारदी।

हाररूपस्यायुगपदुपस्थितेषु वास्तवत्वेन विचारासहत्वाद् इत्याह—"क्षणतत्क्रमयोः" इति, अयुगपद्भाविक्षणधर्मत्वात्क्रमस्य क्षणसमाहारस्यावास्तवत्वात् क्षणतत्क्रमयोरप्यवास्तवत्वं समाहारस्य, नैसर्गिकवैतण्डिकबुद्ध्यतिशयरहिता लौकिकाः, प्रतिक्षणमेव व्युत्थित

पातञ्जलरहस्यम्।

तयोरप्रवाहिणोर्युगपदसंबन्धिनोर्मध्यपातो क्रमस्तयोः क्षणरूपपदार्थयोर्धर्म अत एवाह-

वार्त्तिकम्।

वयवकालपरमाणुदृष्टान्तानुपपत्तेश्च, न च प्रकृतेरणुपरिमाणासिद्धिः, परम्परया पृथिव्यादिभावापन्नानां गुणानां परिमाणाकाङ्क्षायां न्यायवैशेषिकसिद्धाणुपरिमाणस्यैव ग्रहणौचित्यात् स्वशास्त्रानुक्ततया परोक्तमविरोधि चेति न्यायेन परोक्तपरिमाणस्यैवादर्त्तव्यत्वात्, न चास्मद्दर्शने गुणाख्यप्रकृतेर्विभुत्वमेवावगम्यत इति वाच्यम्, अन्तःकरणाकाशहेतुगुणानां विभुत्वेन तदुपपत्तेः, सर्वगुणानां विभुत्वे सत्त्वाद्यपरिणामहेतुक्षोभसंयोगाद्यसम्भवादिति, तस्मात्सिद्धमणुपरिमाणा अपि गुणाः सन्तीति, तेषु पृथिवीत्वव्यञ्जकगन्धाद्यनङ्गीकारेणास्मत्सिद्धान्ते पृथिवीत्वादिकं नास्तीति विशेष इति, क्षणं व्याख्याय क्रमं व्याचष्टे-तत्प्रवाहेति, तेषां क्षणानां यः प्रवाह उत्तरोत्तरभावेनावस्थानं तस्याविरलता क्रम इत्यर्थः, इदानीं क्षणातिरिक्तः कालो नास्ति मुहूर्त्तादिरूपो महाकालपर्यन्त इति प्रसङ्गात्स्वशास्त्रसिद्धान्तमवधारयति-क्षणतत्क्रमयोरिति, क्षणेषु तत्क्रमेषु चाव्यवहितानन्तर्यरूपेषु वस्तुभूतः समाहारो मिलनं नास्ति; अतो मुहूर्त्ताहोरात्रादयो बुद्धिकल्पितसमाहार एवेत्यर्थः, नन्वेवं स्थूलकालाभावे कथं लोकानां तद्यथाऽर्थबुद्धिरिति, तत्र विकल्पतया समाधत्ते-स खल्वयमिति, नन्वेवं क्षणोऽपि विकल्पमात्रो भवतु कालव्यवहाराविशेषात्क्षणव्यवहारस्य च परमाणुक्रियाऽऽदिभ्य एव सम्भवादिति तत्राह—क्षणस्त्विति, क्षणाख्यस्तु कालो वस्तुकोटौ प्रविष्टः यतः क्रमावलम्बी क्रमेण लक्ष्यत आश्रीयते क्षणरूपप्रतियोग्यनुयोगिघटितत्वात्क्रमस्येत्यर्थः, तत्र हेतुमाह—क्रमश्चेति, क्रमो ह्यानन्तर्यरूप इत्यर्थः, ननु यः क्षणो वस्तुभूतः स किंस्वरूप इत्याकाङ्क्षायामाह-तं कालेति, तस्य च कालस्य क्षणद्वयावस्थायिद्रव्यान्तरेभ्यो विभाग इति भावः, कालनित्यत्वश्रुतिस्मृतयश्च प्रवाहरूपकालपराः, स च क्षणाख्यः कालः सत्त्वादीनां द्रव्यरूपः परिणामविशेष इति, बौद्धमताच्चास्माकमयं विशेषो यदस्माभिर्धर्मिग्राहकप्रमाणबलात् क्षण एवास्थिर इष्यते, क्ष-

र्यात्मा तं कालविदः काल इत्याचक्षते योगिनः, न च द्वौ क्षणौ सह भवतः, क्रमश्च न द्वयोः सहभुवोरसम्भवात्, पूर्वस्मादुत्तरभाविनो यदाऽऽनन्तर्यं क्षणस्य स क्रमः, तस्माद् वर्त्तमान एवैकः क्षणो न पूर्वोत्तरक्षणाः सन्तीति, तस्मान्नास्ति तत्समाहारः, ये तु भूतभाविनः क्षणास्ते परिणामान्विता-

भास्वती ।

वदन्ति, न चेति । क्षणानां कथं नास्ति वस्तुसमाहारस्तदर्थयति—य इति । ये भूत-

तत्त्ववैशारदी ।

दर्शना भ्रान्ता ये कालमीदृशं वास्तवमभिमन्यन्त इति, तत्किं क्षणोऽप्यवास्तवः, नेत्याह— "क्षणस्तु" इति, वस्तुपतितः = वास्तव इत्यर्थः, क्रमस्यावलम्बनमवलम्बः सोऽस्यास्तीति, क्रमेणावलम्ब्यते वैकल्पिकेनेत्यर्थः, क्रमस्य क्षणावलम्बनत्वे हेतुमाह "क्रमश्च" इति, क्रमस्यावास्तवत्वे हेतुमाह-"न च" इति, चो-हेत्वर्थः, यस्तु वैयात्यात्सहभावमुपेयात्तं प्रत्याह- "क्रमश्च न द्वयोः" इति, कस्मादसम्भव इत्यत आह—"पूर्वस्माद्" इति, उपसंहरति— "तस्माद्" इति, तत्किमिदानीं शशविषाणायमाना एव पूर्वोत्तरक्षणाः, नेत्याह—"ये तु"

पातञ्जलरहस्यम्

प्रवाहाविच्छेदभूतपूर्वप्रतियोगिकोत्तरानुयोगिकः कालद्वयधर्मः क्रमो न वास्तवः; नित्यं सापेक्ष

वार्त्तिकम्

णस्थैर्यप्रत्यभिज्ञाऽऽद्यभावाद् न क्षणातिरिक्तः क्षणिकः पदार्थः कश्चिदिष्यते, तैस्तु क्षणमात्रस्थाय्येव पदार्थः सर्व इष्यत इति, तच्च स्थाने स्थाने निराकृतं कार्यकारणव्यवस्थाऽनुपपत्त्यादिभिरिति, तदस्मिन् शास्त्रे क्षण एव काल इति सिद्धान्तः, कालोऽत्र नाभ्युपगम्यत इति कस्य चित् प्रलापस्तु भाष्यार्थाविवेकमूल इति, यत्तु पूर्वदेशसंयोगाद्यवच्छिन्नः परमाणुक्रियाऽऽदिरेव क्षणः कालस्तु तदतिरिक्तो नित्य इति वैशेषिका आहुः, तन्न—विशिष्टस्यातिरेकानतिरेकयोरुभयाऽरुभयतः पाशादतिरेके स्वसिद्धान्तविरोधाद् अस्मन्मतप्रवेशाच्च, अस्माभिस्तादृशस्यैव गुणपरिणामस्य क्षणत्ववचनात्, अनतिरेके विशेषणविशेष्यतत्सम्बन्धानां त्रयाणामपि स्थिरत्वेन क्षणव्यवहारजननाक्षमत्वात् नित्यकालेऽपि च प्रमाणं नास्ति; इदानीमित्याद्यखिलव्यवहाराणां खण्डकालमात्रविषयकत्वात् कार्यकारणभावादीनामपि क्षणघटितत्वादिति, एतेन नित्या दिगप्यप्रामाणिकी व्याख्याता, सामान्यतो दिग्व्यवहाराभावात्, पूर्वादिव्यवहारस्य च पराभ्युपगतदिगुपाधिभिरेव सम्भवात् सामान्यतः कालदिग्व्यवहारस्त्वत्राऽप्याकाशादेव तदुपपत्तेश्च, अन्यथा पृथिवीजलतेजआदिभिरुपाधिभिर्दशाद्यतिरिक्तपदार्थः स्यादिति, कालाच्च दिश्ययं विशेषः यत्काल क्षणरूप इष्यते दिक् तु सवथैव नेष्यत इति, शास्त्रे दिक्सामान्यव्यवहारस्तु पूर्वपश्चिमनियामकोपाध्यवच्छिन्नाकाशेन बोध्यः स्थित्याधारत्वेन देशव्यवहारवदिति, अत एव श्रुत्यादिषु कुत्र चिदाकाशाच्छ्रोत्रं क्व चिच्च दिशः श्रोत्रमिति वचनमन्योन्यमविरुद्धं दिगाकाशयोरेकत्वादिति दिक्, क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति यत्प्रागुक्तं तत् प्रपञ्चयति—न चेत्यादिना—नास्ति तत्समाहार इत्यन्तेन, सहभावाभ्युपगमेऽपि क्रमो न सम्भवतीत्याह—क्रमश्चेति, असम्भवे हेतुमाह— पूर्वस्मादिति, तस्मात्सर्वदैव वर्त्तमानलक्षणः स त्वेक एव क्षणस्तिष्ठति न पूर्वोत्तरे क्षणा इत्यतो नास्ति तयोः क्षणतत्क्रमयोर्वास्तवं मिलनं मुहूर्त्तादिरूपमित्यर्थः, वक्ष्यमाणोपपादकमादौ वक्ति-ये त्वित्यादिना-सर्वधर्मा इत्यन्तेन, ये पुनर्भूतभाविनः क्षणास्ते सर्वेऽपि सर्ववस्तुपरिणामाधारा एकदैव बाधकाभावदर्शनतः क्षणपर्यायकालत्वेनैव परिणामहेतुत्वादित्युत्तरपादे क्षणप्रतियोगीत्याद्युत्तरसूत्रे व्याख्येयाः, तेन हेतुनैकेन क्षणेन कृत्स्नो लोकः परि-

व्याख्येयाः, तेनकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति, तत्क्षणोपारूढाः खल्वमी धर्माः, तयोः क्षणतत्क्रमयोः।संयमात् तयोः साक्षात्करणं ततश्च विवेकजं ज्ञानं प्रादुर्भवति ॥ ५२ ॥

तस्य विषयविशेष उपक्षिप्यते—

**जातिलक्षणदेशैरन्यताऽनवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ५३**

भास्वती।

भाविनः क्षणास्ते परिणामान्विताः=परिणामैः सहान्विता वैकल्पिकपदार्था न च वास्तवपदार्था इति व्याख्येयाः=मन्तव्याः, तस्मादिति । तस्मादेक एव क्षणो वर्त्तमानः=वर्त्तमानाख्यकाल इत्यर्थः, तेनेति । तेनैकेन=वर्त्तमानक्षणेन कृत्स्नो लोको महदादिव्यक्तवस्तु परिणाममनुभवति, तत्क्षणोपारूढाः=वर्त्तमानैकक्षणाधिकरणकाः खल्वमी धर्माः=सर्वस्य सर्वेऽतीतानागतवर्त्तमाना धर्माः, अतीतानागतानां धर्माणामपि सूक्ष्मरूपेण वर्त्तमानत्वाद्, उपसंहरति—तयोरिति । क्षणतत्क्रमयोः=क्षणव्यापिपरिणामस्य साक्षात्कारस्तथा च तत्क्रमसाक्षात्कारः, परिणामस्य किम्प्रकारः प्रवाहः क्रमसाक्षात्कारात्तदधिगमो विवेकजं ज्ञानं वक्ष्यमाणलक्षणकम् ॥ ५२ ॥

तस्येति । विवेकजज्ञानस्य विषयविशेषः=विषयस्य विशेष उपन्यस्यते, जात्यादीनां तदेकधर्माणां यत्र साम्यं तद्विषयोऽपि विवेकजज्ञानेन विविच्यत इति सूत्रार्थः, तुल्ययोरिति । यत्र गोजातीया गौर्दृष्टाऽधुना तत्र वडवेति जात्या भेदः, लक्षणैरन्यता जा-

तत्त्ववैशारदी।

इति, अन्विताः=सामान्येन समन्वागता इत्यर्थः, उपसंहरति—"तेन" इति, वर्त्तमानस्यैवार्थक्रियासु स्वोचितासु सामर्थ्यादिति ॥ ५२ ॥

यद्यप्येतद्विवेकजं ज्ञानं निःशेषभावविषयमित्यग्रे वक्ष्यते तथाऽप्यतिसूक्ष्मत्वात् प्रथमं तस्य विषयविशेष उपक्षिप्यते "जाति—पत्तिः" लौकिकानां जातिभेदोऽन्यतायाः ज्ञापकहेतुः, तुल्या जातिर्गोत्वं, तुल्यश्च देशः पूर्वत्वादिः, कालाक्षीस्वस्तिमत्योर्लक्षणभेदः परमिति; द्व-

पातञ्जलरहस्यम्।

त्वादित्यर्थः, नास्ति समाहारः सह भावितेत्यर्थः, क्षणमपरिणम्य न तिष्ठति भाव इत्याह—एकेनेति । प्रतिक्षणं परिणमन्ते भावा अत एव पुराणपुराणतरत्वादीति ॥ ५२ ॥

सर्वज्ञः सर्वविदिति श्रुतेः विवेकजज्ञानस्य विशेषविशेषयं सूत्रारूढं कुर्वन्नाह—जातीति ।

वार्त्तिकम्।

णाममनुभवति प्राप्नोति यतस्तत्क्षणोपारूढाः एकैकक्षणोपारूढा धर्माः पदार्था इत्यर्थः, ततः किमित्यत आह–तयोः क्षणेति, ततश्चेति, ततश्च क्षणतत्क्रमसाक्षात्कारादखिलपरिणामतत्क्रमसाक्षात्कारद्वारा सर्ववस्तूनामन्योन्यव्यावृत्ततया स्वरूपावधारणं भवतीति सूत्रार्थ उक्तः:५२

उत्तरसूत्रमवतारयति—तस्येति, तस्य विवेकजज्ञानस्य सर्वविषयकस्य शिष्यव्युत्पादनाय एकमुदाहरणमुपन्यस्यत इत्यर्थः,

"जातिलक्षणदेशैरन्यताऽनवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः" जातिलक्षणदेशैरन्यताऽनवच्छेदाद् भेदावधारणस्यासंभवात् ततो विवेकज्ञानादेव प्रतिपत्तिर्विवेकेन साक्षात्कारः पौरुषेयो भवतीत्यर्थः, तत्रादौ जात्याऽन्यताऽवच्छेदस्यासङ्कीर्णमुदाहरणमाह—तुल्ययोर्देशेति, कालभेदेन समानदेशस्थयोर्हि समानरूपयोर्गोगवयोर्भेदो जातिभेदादेवानुमातुं शक्यते

तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यताया हेतुः गौरियं वडवेयमिति, तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरं, कालाक्षी गौः स्वस्तिमती गौरिति, द्वयोरामलकयोर्जातिक्षणसारूप्याद् देशभेदोऽन्यत्वकर इदम्पूर्वमिदमुत्तरमिति, यदा तु पूर्वमामलकमन्यव्यग्रस्य ज्ञातुरुत्तरदेश उपावर्त्यते तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः, असन्दिग्धेन च तत्त्वज्ञानेन भवितव्यमित्यत इदमुक्तं-ततः प्रतिपत्तिः विवेकजज्ञानाद् इति, कथम्—पूर्वामलकसहक्षणो देश उत्तरामलकसहक्षणदेशाद्भिन्नः, ते चाम-

भास्वती ।

त्यादिसाम्येऽपि तदुदाहरणं—कालाक्षीति । इदं पूर्वं = पूर्वदेशस्थमित्यर्थः, यदेति । उपावर्त्यते = उपस्थाप्यत इत्यर्थः, लौकिकानां प्रविभागानुपपत्तिरविवेकस्तच्च विवेकजज्ञानमसन्दिग्धेन विवेकजतत्त्वज्ञानेन भवितव्यम् , कथमिति । पूर्वामलकसहक्षणो देशः= यस्मिन् क्षणे पूर्वामलकं यद्देश आसीत तद्देशसहितो यश्च क्षण आसीत् तत्क्षणव्यापि-

तत्त्ववैशारदी ।

योरामलकयोस्तुल्याऽऽमलकत्वजातिः, वर्त्तुलादिलक्षणं तुल्यं, देशभेदः परमिति, यदा तु योगिज्ञानं जिज्ञासुना केन चित् पूर्वामलकमन्यव्यग्रस्य योगिनो ज्ञातुरुत्तरदेश उपावर्त्यते उत्तरदेशमामलकं ततोऽपसार्य्य पिधाय वा तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः, प्राज्ञस्य लौकिकस्य त्रिप्रमाणीनिपुणस्य, असन्दिग्धेन च तत्त्वज्ञानेन भवितव्यं विवेकजज्ञानवतो योगिनः सन्दिग्धत्वानुपपत्तेः, अत उक्तं सूत्र कृता-'ततःप्रतिपत्तिः'इति, तत इति व्याचष्टे-"विवेकजज्ञानाद्" इति, क्षणतत्क्रमसंयमाज्जातं ज्ञानं कथमामलकं तुल्यजातिलक्षणदेशादामलकान्तराद्विवेचयतीति पृच्छति—"कथम्" इति, उत्तरमाह—पूर्वामलकसहक्षणो देशः=पूर्वामलकेनैकक्षणो देशः, तेन सह निरन्तरपरिणाम इति यावद् , उत्तरामलकसहक्षणाद् देशाद्=उत्तरामलकनिरन्तरपरिणामाद् भिन्नः, भवतु देशयोर्भेदः, किमायातमामलकभेदस्येत्यत आह—"ते चामलके स्वदेशक्षणानुभवभिन्ने" इति, स्वदेशसहितो यः क्षणः—तस्यामलकस्य कालकला स्वदेशेन सहोत्तराधर्य्यरूपपरिणामलक्षिता सा स्वदे-

पातञ्जलरहस्यम् ।

जात्यादिभिर्येषामन्यताऽवच्छेदो भेदधीर्न स्यात्तेषां ततो विवेकजज्ञानाद्भेदप्रतिपत्तिरिति सूत्रार्थः, तल्लक्षणमपि भेदधीहेतुरित्याह—कालाक्षीति । कालीं कनीनिकां विहायापि कृष्ण-

वार्त्तिकम् ।

इति, अत्र वडवाशब्देनातिसारूप्याद्गवयो लक्षितः सारूप्याधिका वडवैवेति, लक्षणेनान्यत्वावच्छेदनस्यासंकीर्णोदाहरणमाह—तुल्यदेशेति, लक्षणमभिव्यक्तो धर्मभेदः, देशेनान्यत्वावच्छेदनस्यासंकीर्णोदाहरणमाह—द्वयोरिति, देशभेदप्रकारमाह—पूर्वमिदमुत्तरमितीति, इदानीं जात्यादिभिर्यत्रान्यताऽनुमानं न संभवति तादृशविवेकजज्ञानस्यासंकीर्णमुदाहरणमाह—यदा त्विति, यदा तु पूर्वदेशस्थितमामलकं विषयान्तरव्यग्रस्य ज्ञातुर्विवेकं करिष्यतो योगिन उत्तरस्मिन् देश उपावर्त्तते संबध्यते दैवादिना तदा द्वयोरामलकयोरेकदेशत्वे सति पूर्वदेशोपलक्षितमिदमुत्तरदेशोपलक्षितं चेदमिति विवेकानुपपत्तिः, आमलकयोर्जात्यादित्रिकसाम्यात्, असंदिग्धतत्त्वज्ञानं चोदुदेश्यम् इत्यत उक्तं सूत्रकारेण ततो विवेकजज्ञानात्प्रतिपत्तिरितीत्यर्थः, ननु क्षणतत्क्रमयोः संयमात् कथमामलकयोर्विवेकज्ञानमिति पृच्छति—कथमिति, उत्तरं, पूर्वेति, आमलकस्य क्षणेन सह वर्त्तत इति आमलकसहक्षणः चैत्रसहोदर इतिवत् , एवंविधः पूर्वो देश आमलकान्तरेण सहक्षणादुत्तरदेशाद्भिन्नोऽतः स्वदेशक्षणप्राप्त्या ते आमलके भिन्ने एकस्य एकदा विरुद्धदेशसंबन्धासंभवादिति, एवं तयो-

लके स्वदेशक्षणानुभवभिन्ने, अन्यदेशक्षणानुभवस्तु तयोरन्यत्वे हेतुरिति, एतेन दृष्टान्तेन परमाणोस्तुल्यजातिलक्षणदेशस्य पूर्वपरमाणुदेशसहक्षण-साक्षात्करणादुत्तरस्य परमाणोस्तद्देशानुपपत्तावुत्तरस्य तद्देशानुभवो-भिन्नः सहक्षणभेदात्तयोरीश्वरस्य योगिनोऽन्यत्वप्रत्ययो भवतीति,

अपरे तु वर्णयन्ति—येऽन्त्या विशेषास्तेऽन्यताप्रत्ययं कुर्वन्तीति, तत्रा-

भास्वती ।

परिणामयुक्तं तदामलकम्, एवमुत्तरामलकम्, ततस्ते स्वदेशक्षणानुभवभिन्ने, एवं तयोर-न्यत्वमिति । पारमार्थिकमुदाहरणम्—परमाणोरिति । द्वयोः परमाण्वोरपि पूर्वोक्तरीत्या भेदसाक्षात्कारो योगीश्वरस्य भवति, अपर इति । सन्ति केचिदन्त्याः=अगोचराः सूक्ष्मा इत्यर्थः, विशेषा भेदकगुणा ये भेदज्ञानं जनयन्तीति येषां मतं तत्रापि देशलक्षण-भेदस्तथा च मूर्त्तिव्यवधिजातिभेदोऽन्यत्वहेतुः, मूर्त्तिः=वस्तूनां प्रातिस्विका गुणाः,

तत्त्ववैशारदी ।

शक्षणः, तस्यानुभवः=प्राप्तिर्वा ज्ञानं वा, तेन भिन्ने आमलके, ययोरामलकयोः पूर्वोत्तराभ्यां-देशाभ्यामौत्तराधर्य्यपरिणामक्षण आसीत्तयोर्देशान्तरौत्तराधर्य्यपरिणामक्षणविशिष्टत्वमनुभवन् संयमी ते भिन्ने एव प्रत्येति, सम्प्रति तद्देशपरिणामेऽपि पूर्वपरिणामाद्विशिष्टस्य चैतद्देशप-रिणामक्षणस्य संयमतः साक्षात्करणात्, तदिदमुक्तम्—"अन्यदेशक्षणभिन्नदेशक्षणानुभवस्तु तयो रन्यत्वे हेतुः"इति, अनेनैव निदर्शनेन लौकिकपरीक्षकसंवादादिना परमाणोरपीदृशस्य भेदो योगी श्वरबुद्धिगम्यः श्रद्धेय इत्याह—"एतेन"इति, 'अपरे तु वर्णयन्ति'—वर्णनमुदाहरति "ये"इति, वैशे-षिका हि नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इत्याहुः, तथा हि—योगिनो मुक्तान् तुल्यजातिदेश-कालान् व्यवधिरहितान् परस्परतो भेदेन प्रत्येकं तत्त्वेन प्रतिपद्यन्ते तस्मादस्ति कश्चिदन्त्यो-

पातञ्जलरहस्यम् ।

वर्णमक्षि यस्याः, एवं स्वस्तिमती, देशकृतपौर्वापर्यमपि भेदहेतुरित्याह—देशेति । प्रवि-भागानुपपत्तिरयोगिनामिति शेषः, तर्हि नित्यद्रव्यभेदधीहेतोर्विशेषस्य भेदकान्तरापेक्षा

वार्त्तिकम् ।

भेदं प्रसाध्यैकदेशसंबन्धदशायां विवेकग्रहणोपायमाह—अन्येति, अन्ययोर्भिन्नयोः पूर्वोत्तरदे-शसंबन्धक्षणयोरनुभवः साक्षात्कारस्त्वामलकयोरन्यत्वे हेतुर्यथोक्तविवेकग्रहे कारणमित्यर्थः-अत्र चोदाहरणे क्षणसंयमादेव विवेकजं ज्ञानं दर्शितम् एतदनुसारेण क्षणक्रमसंयमादपि विवे-कजज्ञानस्योदाहरणमुन्नेयमिति भावः, तद्यथा द्वित्रिक्षणमात्रेण ज्येष्ठकनिष्ठयोर्ज्येष्ठकनिष्ठता-विवेकज्ञानं क्षणक्रमसाक्षात्कारं विना न संभवति; अतः क्षणक्रमसंयमो मूलकारणमिति, एतेनैव स्थूलदृष्टान्तेन परमसूक्ष्मेष्वपि क्षणतत्क्रमानुभवाद् विवेकजज्ञानमनुमेयमित्याह—एतेनेति, तुल्यजातिलक्षणदेशस्य परमाणुसामान्यस्यान्योन्यम् अन्यत्वप्रत्ययो विवेकप्रत्ययः पूर्वयोः परमाणुदेशसाहित्यक्षणयोः साक्षात्करणाद् ईश्वरस्य प्रकृत्यादिप्रेरणमभीप्सोर्योगिनो भवती-त्यन्वयः, तत्र हेतुरुक्त उत्तरस्य परमाणोरित्यादिना, यत उत्तरस्य परमाणोः पूर्वदेशानुपप-त्त्योत्तरस्य स्वदेशप्राप्तिः पूर्वस्य स्वदेशप्राप्तितो भिन्ना तयोः सहक्षणभेदात्साहित्यक्षणयोर्भि-न्नत्वादित्यर्थः, तदेवं जात्यादिभेदात् देशसंबन्धक्षणभेदाच्च तुल्ययोरन्यताप्रत्ययं प्रतिपाद्य पर-मतेऽप्येतत्समानमिति प्रतिपादयितुं तन्मतमाह—अपरे त्विति, अपरे वैशेषिका वदन्ति नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इति, अन्त्याः प्रलयकालस्थाः मुक्तेषु आत्मसु सर्वेषु तुल्य-जातिलक्षणदेशेष्वन्योन्यं विभाजकान्तरासंभवेन विशेषनामा भेदकः कश्चन पदार्थोऽवश्यं वा-च्यः, तथा च परमाण्वादिष्वपि स एवान्यताप्रत्ययं करोतीति तेषामाशयः, तत्रापीति, तन्म-तेऽपि देशादीनां योगबुद्धिगम्यक्षणान्तानां भेदोऽप्यणवादीनामन्यत्वे हेतुरस्त्येवेति समानमि-त्यर्थः, मूर्त्तिः संस्थानं, व्यवधिः व्यवहितता, एतद् द्वयमधिकमत्रोक्तम्, अत इति, यतो मू-

पि देशलक्षणभेदो मूर्त्तिव्यवधिजातिभेदश्चान्यत्वहेतुः, क्षणभेदस्तु योगिबुद्धिगम्य एवेति, अत उक्तं मूर्त्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्वम्', इति वार्षगण्यः ॥ ५३ ॥

## तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥

भास्वती।

व्यवधिः = अवच्छिन्नदेशकालव्यापकता, जातिः = बहुव्यक्तीनां साधारणधर्मवाची वाचकः, यतो जात्यादिभेदो लोकबुद्धिगम्योऽत उक्तं क्षणभेदास्तु योगिबुद्धिगम्या एवेति विकारेष्वेव भेदो न तु सर्वमूले प्रधाने तत्राचार्यो वार्षगण्यो वक्ति मूर्त्तिव्यवधिजातिभेदानामभावान्नास्ति वस्तूनां मूलावस्थायां प्रधान इत्यर्थः पृथक्त्वम् ॥ ५३ ॥

तत्त्ववैशारदी।

विशेष इति, तथा च स एव नित्यानां परमाण्वादीनां द्रव्याणां भेदक इति, तदेतद् दूषयति—"तत्रापि" इति, जातिदेशलक्षणान्युदाहृतानि, मूर्त्तिः = संस्थानं, यथैकं विशुद्धावयवसंस्थानोपपन्नमपसार्य तस्मिन्नेव देशेऽन्यव्यग्रस्य द्रष्टुः कुत्सितावयवसन्निवेश उपावर्त्यते तदा तस्य संस्थानभेदेन भेदप्रत्ययः, शरीरं वा मूर्त्तिः, तत्तत्संबन्धेनात्मनां संसारिणां मुक्तात्मनां वा भूतचरेण यादृशतादृशेन भेद इति सर्वत्र भेदप्रत्ययस्यान्यथासिद्धिर्नान्त्यविशेषकल्पना, व्यवधिर्भेदकारणं, यथा कुशपुष्करद्वीपयोर्देशस्वरूपयोरिति, यतो जातिदेशादिभेदा लोकबुद्धिगम्या अत उक्तं क्षणभेदस्तु योगिबुद्धिगम्य एवेति, एवकारः क्षणभेदमवधारयति, न योगिबुद्धिगम्यत्वं, तेन भूतचरेण देहसम्बन्धेन मुक्तात्मनामपि भेदो योगिबुद्धिगम्य उन्नेय इति, यस्य तूक्ता भेदहेतवो न सन्ति तस्य प्रधानस्य प्रभेदो नास्तीत्याचार्यो मेने, यस्मादुक्तं—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वाद्" इति, तदाह—"मूर्त्तिव्यवधि" इति, उक्तभेदहेतूपलक्षणमेतद्, जगन्मूलस्य प्रधानस्य पृथक्त्वं भेदो नास्तीत्यर्थः ॥ ५३ ॥

तदेवं विषयैकदेशं विवेकजज्ञानस्य दर्शयित्वा विवेकजं ज्ञानं लक्षयति—"तारकं—ज्ञानम्" विवेकजं ज्ञानमिति लक्ष्यनिर्देशः, शेषं लक्षणम्, संसारसागरात्तारयतीति तारकम्,

पातञ्जलरहस्यम्।

स्यादिति-तत्राह—तत्रापीति। भवतु वा तथा, तत्र क्षणभेदार्था योगिसिद्धिरित्याह—क्षणेति। मूलप्रकृतेरभेदधीरपि तज्ज्ञानसाध्येत्याह—मूलेति। अत एवार्षजं ज्ञानं सांख्येरुक्तमिति भावः ॥ ५३ ॥

ऊहः शब्दोऽध्ययनमिति सांख्ये य ऊहशब्देनोक्तः स एवात्र तारकमिति यौगिकं सर्वेभ्य-

वार्त्तिकम्।

र्त्तिव्यवधिजात्यादिर्नित्यद्रव्येष्वप्यस्ति भेदकोऽतः परैरुक्तं मूलपृथक्त्वं मूलेषु नित्यद्रव्येषु विशेषपदार्थो नास्ति मूर्त्तिव्यवधिजातिभ्यो भेदेनातिरेकेण पृथक्त्वस्याभावात् तैरेव पृथक्त्वव्यवहारोपपत्तेरिति वार्षगण्य आचार्यो मन्यतः इत्यर्थः, ननु वार्षगण्यमते मुक्तपुरुषेषु मूर्त्याद्यभावात्कथं विभागव्यवहारः स्यादिति चेन्न—बद्धावस्थायां ये मूर्त्यादयः स्थितास्त एव मुक्त्यवस्थायामपि योगिभिर्गृह्यमाणा अन्योन्यभेदव्यवहारं जनयन्तीत्यभ्युपगमसंभवादन्यदेशादिरूपाणां तु परमाण्वादीनां प्रलये भेदव्यवहारः स्वगतसूक्ष्मकार्यभेदाद् यथोक्तक्षणभेदादिभ्यश्चेति, अत्र वार्षगण्यमतस्याप्रतिषेधादिदमेव स्वमतमिति मन्तव्यम् ॥ ५३ ॥

विवेकजज्ञानस्यैकं विषयं प्रदर्श्येदानीं सहेतुकां विवेकजज्ञानस्य मोक्षोपयोगितामाह—

"तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम्" इति शब्दो हेत्वर्थे, यतो विवेकजं ज्ञानं सर्वविषयादिरूपम् अतः सर्वत्र दोषसाक्षात्कारेणोक्तवैराग्यद्वारा संसारतारकं

तारकमिति=स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः, सर्वविषयं=नास्य किञ्चिदविषयीभूतमित्यर्थः, सर्वथाविषयम्=अतीतानागतप्रत्युत्पन्नं सर्वं सर्वथा जानातीत्यर्थः. अक्रममिति=एकक्षणोपारूढं सर्वं सर्वथा गृह्णातीत्यर्थः, एतद्विवेकजं ज्ञानं परिपूर्णम्, अस्यैवांशो योगप्रदीपः, मधुमतीं भूमिमु-

भास्वती ।

तारकमिति । प्रतिभा=ऊहः, स्वबुद्ध्युत्कर्षादूहित्वा सिद्धमित्यर्थः, ततोऽनौपदेशिकम्, पर्यायैः=अवान्तरभेदैः, एकक्षणोपारूढं युगपत् सर्वं सर्वथा गृह्णाति, सर्वमेव वर्त्तमानं नास्त्यस्य किञ्चिदतीतमनागतञ्चेति, तारकाख्यमेतद् विवेकजं ज्ञानम् परिपूर्णं=नातः परं ज्ञानोत्कर्षः साध्य इत्यर्थः, अस्यांशो योगप्रदीपः=ज्ञानदीप्तिमान् सम्प्रज्ञातः, मधुमतीं भूमिम्=ऋतम्भरां प्रज्ञामुपादाय ततः प्रभृति यावदस्य परिसमाप्तिः प्रान्तभूमिविवेकरूपा

तत्त्ववैशारदी ।

पूर्वस्मात् प्रातिभाद्विशेषयति—"सर्वथाविषयम्" इति । पर्याया अवान्तरविशेषाः, अत एव विवेकजं ज्ञानं परिपूर्णं नास्य क्व चित्किञ्चित्कथञ्चित्कदा चिदगोचर इत्यर्थः, आस्तां तावज्ज्ञानान्तरं, सम्प्रज्ञातोऽपि तावदस्यांऽशः, तस्मादतः परं किमपरिपूर्णमित्याह—"अस्यैवांशो योगप्रदीप" इति । योगप्रदीपः सम्प्रज्ञातः किमुपक्रमः किमवसानश्चासावित्याह—"मधुमतीम्" इति । ऋतम्भरा प्रज्ञैव मधु मोदकारणत्वाद्, यथोक्तं 'प्रज्ञाप्रासादमारुह्य' इति, तद्वती मधुमती तामुपादाय, यावदस्य परिसमाप्तिः सप्तधा प्रान्तभूमिः प्रज्ञा, अत एव

पातञ्जलरहस्यम् ।

स्तारणात्, संप्रज्ञातगुरुशास्त्राद्यनपेक्षमित्याह—अनौपदेशिकमिति, प्रातिभज्ञानादस्य सर्व-

वार्त्तिकम् ।

भवतीत्यर्थः, एतेन विवेकजज्ञानस्येदं लक्षणं बोध्यम्, अत एवानेन लक्षणेन सत्त्वपुरुषान्यताख्यातिजन्यसर्वज्ञताया अपि संग्रहात्तत्र सूत्रे साऽपि विवेकजज्ञानशब्देन भाष्यकारैरुक्तेति तत्र भाष्यकारः प्रत्येकं विशेषणानि व्याचक्षाणः तारकशब्दस्यार्थापत्तिलब्धमर्थमाह—तारकमितीति, लौकिकसामग्रीं विनैव यथाऽर्थज्ञानसामर्थ्यं सत्त्वपुरुषान्यतासंयमक्षणतत्क्रमसंयमाभ्यामुद्बोधितं प्रतिभा तदुत्थं स्वप्रतिभोत्थं तदेव हि संसारतारकं घटते; अतोऽर्थापत्त्या स्वप्रतिभोत्थमेव तारकशब्दार्थः, प्रतिभोत्थत्वे हेतुमाह—अनौपदेशिकमिति, न हि सर्वथा सर्वविषयकं ज्ञानं शाब्दं भवितुं युज्यते शब्दस्य सामान्यमात्रविषयकत्वात् परिच्छिन्नविषयकत्वाच्चेति, सर्वविषयमित्यत्र सर्वशब्दोऽसङ्कुचित इत्याह—सर्वविषयमिति, सर्वविषयकस्ववचनादित्यर्थः. अतीतेति, अतीतादिरूपं सर्वमित्यनुवादोऽन्वयार्थः पर्यायैः स्वगतविशेषैः सर्वथा निःशेषैः विषयीकरोतीत्यर्थः, नास्ति क्रमः पौर्वापर्यं यत्र ज्ञान इत्यक्रमम्, अक्रमान्तविशेषणैर्लब्धं वाक्यतात्पर्यार्थमाह—एकक्षणोपारूढमित्यादिना, आरोहोऽत्रार्थाद् बुद्धिवृत्ताविति, विवेकजज्ञानस्याखिलसिद्धान्ते निर्वचनस्य बीजमाह—एतदिति, परिपूर्णशब्दार्थं स्वयं व्याचष्टे—अस्यैवांश इति. अस्यैव सूर्यतुल्यस्य विवेकजज्ञानस्यांशो योगप्रदीपः, क इत्याकाङ्क्षायामाह—मधुमतीति, स्थान्युपनिमन्त्रणसूत्रे ऋतम्भरप्रज्ञाऽऽख्यद्वितीयभूमौ योगी मधुभूमिक इत्युक्तं सैव च भूमिकाऽत्र मधुमतीति निर्दिष्टा तामादाय सप्तधा प्रान्तभूमिप्रज्ञेति पूर्वोक्तं सम्प्रज्ञातसमाप्तिपर्यन्तभूमिकाजातं योगप्रदीप इत्यर्थः, ते हि भूमिव्यूहा विवेकजज्ञानविषयैकदेशप्रकाशका अतोंऽशा इति भावः, ननु सवितर्कादिरूपास्तथा परिणामत्रयसंयमादिरूपाश्च याः सम्प्रज्ञातयोगभूमयः पूर्वोक्तास्ताः कथं योगप्रदीपतया विवेकजज्ञानांशतया च न निर्दिष्टा इति चेन्न—योगवह्निकणत्वेन तेषामत्यल्पत्वस्य विवक्षितत्वात्, प्रकृष्टभूमितया योगप्रदीपानामासामंशत्वेनैव च कणतुल्यभूमीनाभंशांशत्वमपि प्राप्तमिति भावः, विष्णुपुराणे

पादाय यावदस्य परिसमाप्तिरिति ॥ ५४ ॥

प्राप्तविवेकजज्ञानस्याप्राप्तविवेकजज्ञानस्य वा—

**सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५५ ॥**

यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रत्ययमात्राधिकारं दग्धक्लेशबीजं भवति तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति,

भास्वती।

तावद् योगप्रदीप इत्यर्थः ॥ ५४ ॥

सत्त्वेति। बुद्धिसत्त्वस्य शुद्धौ पुरुषसाम्ये च, तथा पुरुषस्योपचरितभोगाभावरूपशुद्धौ स्वसाम्ये च कैवल्यमिति सूत्रार्थः, यदेति। व्याचष्टे—विवेकेनाधिकृतं दग्धक्लेशबीजं बुद्धिसत्त्वं पुरुषस्य स्वरूपं पुरुषवत् शुद्धं गुणमलरहितमिव भवतीति सत्त्वस्य शुद्धिसाम्यम्, तदा पुरुषस्य शुद्धस्य गौणी शुद्धिरुपचारहीनता वृत्तिसारूप्याप्रतीतिस्तथा स्वेन सह च

तत्त्ववैशारदी।

विवेकजं ज्ञानं तारकं भवति तदंशस्य योगप्रदीपस्य तारकत्वादिति ॥ ५४ ॥

तदेवम्परम्परया कैवल्यस्य हेतून् सविभूतीन् संयमानुक्त्वा सत्त्वपुरुषान्यताज्ञानं साक्षात्कैवल्यसाधनमित्यत्र सूत्रमवतारयति—"प्राप्त" इति। विवेकजं ज्ञानं भवतु मा वा भूत्, सत्त्वपुरुषान्यताख्यातिस्तु कैवल्यप्रयोजिकेत्यर्थः "सत्त्व—मिति" इतिः—सूत्रसमाप्तौ, ईश्वरस्य पूर्वोक्तैः संयमज्ञानक्रियाशक्तिमतः, अनीश्वरस्य वा समनन्तरोक्तेन संय

पातञ्जलरहस्यम्।

विषयमित्यादिविशेषणत्रयेण श्रेष्ठत्वमसूचि ॥ ५४ ॥

तरति शोकमात्मविदिति, तमेव विदित्वाऽति मृत्युमेतीति श्रुतेः कैवल्यप्रत्यासत्तेः सर्वाभ्यो विभूतिभ्योऽत्यन्तरङ्गं सत्त्वपुरुषान्यताज्ञानमित्याह-सत्त्वेति। शुद्धिसाम्ये रजस्तमो

वार्त्तिकम्।

च सर्वेषामेवेतरज्ञानानां प्रदीपतुल्यत्वविवक्षया ब्रह्मविवेकजज्ञानस्य सूर्यतुल्यत्वं प्रोक्तम्,

अन्धं तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम्।
यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे! विवेकजम् ॥ इति,

इन्द्रियोद्भवमित्यन्येषामपि ज्ञानानामुपलक्षणम् ॥ ९ ॥

तदेवं संयमानां सिद्धिरूपा विभूतयोऽतीतानागतज्ञानाद्या विवेकजज्ञानान्ता ज्ञानक्रियैश्वर्यरूपा विस्तरेणोक्ताः, तत्रायं संशयः–किमेतासां विभूतीनामनन्तरमेव मोक्षो भवतिः आहोस्विदेतद्व्यतिरेकेणापीति, तत्र निर्णायकतयोत्तरसूत्रमवतारयति—प्राप्तविवेकेति, सूत्रेण सहान्वयः, विवेकजज्ञानाख्योत्तमसिद्ध्यपेक्षयैव सुतरामितरसिद्ध्यनपेक्षा कैवल्य इति भाष्याशयः,

"सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्" बुद्धिसत्त्वस्य पुरुषेण सह समाना यदा शुद्धिर्वक्ष्यमाणरूपा विवेकसाक्षात्काराद्भवति तदैव मोक्षो न तत्र सिद्ध्यपेक्षेत्यर्थः, क चिदितिशब्दः सूत्रान्ते तिष्ठति, स च हानोपायव्यूहसमाप्तिसूचनार्थः, शुद्धिसाम्यं हेतुतः स्वरूपतश्च व्याचष्टे—यदेति, निर्धूतो रजस्तमोद्रव्यरूपो मलो यस्य तत्तथा, अत एव विवेकख्यातिमात्रेऽधिकारः कर्त्तव्यता यस्य न तु सिद्ध्यादौ तत्तथा, ततश्च दग्धान्यनागतक्लेशरूपाणि विपाकाख्यसंसारबीजानि यत्र तत्तथा, एवं यदा बुद्धिसत्त्वं भवति तदा शुद्ध्या पुरुषस्य स्वरूपमिव तद् भवति, अनेन शुद्धिसाम्ये हेतुरुक्तः, बुद्धेर्दुःखाद्यात्मकत्वान्नात्यन्तं शुद्धिसाम्यं कदाऽपीत्येतत्प्रतिपादनायेवशब्दप्रयोगः, यस्मिन्नंशे साम्यं तदाह—पुरुषस्येति, बुद्धिधर्मत्वात्पुरुष उपचरितमात्रस्य प्रत्ययविशेषाख्यभोगस्याभावः पुरुषस्य शुद्धिः बुद्धेरपि जीवन्मुक्तदशायां–विवेकित्वेन तादृशो भोगो नास्तीति शुद्धिसाम्यमित्यर्थः, अत्र साक्षितामात्ररूपभोगव्याव-

तदा पुरुषस्योपचरितभोगाभावः शुद्धिः, एतस्यामवस्थायां कैवल्यं भवतीश्वरस्यानीश्वरस्य वा, विवेकजज्ञानभागिन इतरस्य वा, न हि दग्धक्लेशबीजस्य ज्ञाने पुनरपेक्षा का चिदस्ति, सत्त्वशुद्धिद्वारेणैतत्समाधिजमैश्वर्यं च ज्ञानञ्चोपक्रान्तम्, परमार्थतस्तु ज्ञानाऽदर्शनं निवर्त्तते, तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशाः, क्लेशाभावात्कर्मविपाकाभावः, चरिताधिकाराश्चैतस्यामवस्थायां गुणा न पुरुषस्य पुनर्दृश्यत्वेनोपतिष्ठन्ते, तत्पुरुषस्य कैवल्यम्, तदा पुरुषः स्वरूपमात्रज्योतिरमलः केवली भवति ॥ ५५ ॥

इति श्रीपातञ्जलभाष्यप्रवचने विभूतिपादस्तृतीयः ॥ ३ ॥

भास्वती।

साम्यम्, एतस्यामवस्थायां कैवल्यं भवति, ईश्वरस्य = लब्धयोगैश्वर्यस्य वाऽनीश्वरस्य वा, सम्यग् विरक्तानां ज्ञानयोगिनामैश्वर्यालिप्सूनां विभूत्यप्रकाशेऽपि कैवल्यं भवतीत्यर्थः, न हीति। दग्धक्लेशबीजस्य ज्ञाने = ज्ञानस्य परिपूर्णतायां न का चिदपेक्षा स्यात्, सत्त्वेति। सत्त्वशुद्धिद्वारेण = सत्त्वशुद्धिलक्षणकमन्यद् यत्फलं ज्ञानैश्वर्यरूपं तदेवोपक्रान्तम् = उक्तमित्यर्थः, परमार्थतस्तु = मोक्षदशा तु विवेकज्ञानादविवेकरूपाऽविद्या निवर्त्तते, तन्निवृत्तौ न सन्ति पुनः क्लेशाः = क्लेशसन्ततिश्छिन्ना भवतीत्यर्थः, तदिति। तत् पुरुषस्य कैवल्यं = केवलीभावः, दृश्यानां विलयाद् द्रष्टुः केवलावस्थानम्, तदा पुरुषः स्वरूपमात्रज्योतिः = स्वप्रकाशोऽमलः केवलीति वक्तव्यस्तथाभूतोऽपि तदा तथैव वाच्यो भव-

तत्त्ववैशारदी।

मेन विवेकजज्ञानभागिनः, इतरस्य वाऽनुत्पन्नज्ञानस्य, न विभूतिषु का चिदपेक्षाऽस्तीत्याह— "न हि" इति। ननु यद्यनपेक्षिता विभूतयः कैवल्ये, व्यर्थस्तर्हि तासामुपदेश इत्यत आह— "सत्त्वशुद्धिद्वारेण" इति। इत्थम्भूतलक्षणे तृतीया, नात्यन्तमहेतवः कैवल्ये विभूतयः किन्तु न साक्षादित्यर्थः, ज्ञानं विवेकजमुपक्रान्तं यच्च पारम्पर्य्येण कारणं तदौपचारिकं न

पातञ्जलरहस्यम्।

विगमे, कैवल्यमिति सूत्रार्थः, अन्यताप्रत्ययः भेदज्ञानं, तत्रैव साधिकारं तज्जननसमर्थम्

वार्त्तिकम्।

र्त्तनायोपचरितेत्युक्तं पुरुषस्य प्रत्ययाविशेषरूप एव हि भोग उपचरितोऽविवेकस्योपाधिधर्मत्वात्, चिदवसानतारूपस्तु सांख्यसूत्रोक्तो भोगः स्वत इति, तथा च साक्षी निरभिमान एवं चित्तस्य निरभिमानत्वमेव मोक्षहेतुर्नैश्वर्यादिकमिति पर्यवसितोऽर्थः, एतस्यामिति, एतस्यां शुद्धिसाम्यावस्थायां जातायां प्रारब्धप्रतिबन्धनिवृत्त्यनन्तरं कैवल्यं भवति ईश्वरानीश्वरादिसाधारण्येनेत्यर्थः, स्वतन्त्रज्ञानक्रियाशक्तिमानत्रेश्वरः, ज्ञाने पुनरिति, ज्ञानान्तरे काऽप्यपेक्षा नास्तीत्यर्थः, ननु विवेकसाक्षात्कारहेतौ तत्संयमे सत्यवश्यमेव सार्वज्ञ्यादिकं भविष्यति तत्कथमनीश्वरस्य वेत्युच्यत इति चेद् न-संयमे सत्यपि कामनां विना सिद्ध्यनुत्पत्तेः यागे सत्यपि स्वर्गानुत्पत्तिवत्, किं च यमनियमाद्यङ्गवैगुण्यादपि सिद्ध्यनियमः तादृशाङ्गवैगुण्येऽप्यभिमाननिवृत्त्याख्यदृष्टद्वारा कदा चिन्मोक्षः सम्भवत्येवेति, ननु चेत् कैवल्ये सिद्ध्यपेक्षा नास्ति तर्हि किमर्थं मोक्षाख्यहानस्योपायमध्ये सिद्धीनां कथनमित्याशङ्कायामाह—सत्त्वशुद्धिद्वारेणेति, सत्त्वस्य बुद्धिसत्त्वस्य शुद्धिर्वैराग्यादि तद्द्वारेण मोक्षोपयोगितयेति शेषः, ऐश्वर्यं क्रियाशक्तिरणिमादि, ज्ञानं विवेकज्ञानान्तमुपक्रान्तं प्रोक्तं सूत्रजातेन, परमार्थतस्तु सत्त्वपुरुषान्यताज्ञानादेवाज्ञाननिवृत्त्यादिदृष्टद्वारा कैवल्यमित्यर्थः, अत्र चरिताधिकारा इत्यादिना कैवल्यस्वरूपमुक्तं, कैवल्ये पुरुषार्थमाह—तदेति, तदा सुखदुःखमोहात्मक-

भास्वती ।

ति वृत्तिसारूप्यप्रतीतेरभावादिति ॥ ५५ ॥

इति श्रीपातञ्जलयोगभाष्यस्य टीकायाम् भास्वत्यां तृतीयः पादः ।

तत्त्ववैशारदी ।

मुख्यं, परमार्थतस्तु ख्यातिरेव मुख्येत्यर्थः, ज्ञानादिति प्रसङ्ख्यानादित्यर्थः ॥ ५५ ॥

अत्रान्तरङ्गाण्यङ्गानि परिणामाः प्रपञ्चिताः ।
संयमाद् भूतिसंयोगस्तासु ज्ञानं विवेकजम् ॥

इति पादार्थसंग्रहः श्लोकः ।

इति श्रीमद्वाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां-
तत्त्ववैशारद्यां विभूतिपादस्तृतीयः समाप्तः ॥ ३ ॥

पातञ्जलरहस्यम् ।

ईश्वरस्येवानीश्वरस्यापि योगिन इत्यर्थः ॥ ५५ ॥

आद्ये पादे समाधिर्हि द्वितीये साधनन्तथा ।
तृतीये भूतयो ज्ञाता इति पादार्थवर्णना ॥

इति श्रीविश्वेश्वरभगवत्पादशिष्याद्वयभगवत्पादशिष्यराघवानन्दसरस्वतीविरचिते
योगतत्त्ववैशारद्याख्यायाः व्याख्याटीकारूपे पातञ्जलरहस्ये
पञ्चपञ्चाशत्सूत्रात्मकस्तृतीयो विभूतिपादः समाप्तः ॥ ३ ॥

वार्त्तिकम् ।

सत्त्वादिगुणादर्शने चित्तज्योतिर्वियोगात्स्वरूपमात्रज्योतिरतो दुःखादिप्रतिबिम्बरूपमल-रहितः सन् केवली भवति केवलेषु मुक्तेषु नित्यमुक्त ईश्वरे वाऽविभागं गच्छतीत्यर्थः, तथा च दुःखभोगनिवृत्तिरेव पुरुषार्थं इति, व्याख्यातानि हानोपायस्य विवेकख्यातेः साधनानि योगस्य चाङ्गानि यमादीनि ससिद्धीनि ॥ ५४ ॥

इति श्रीपातञ्जलभाष्यवार्त्तिके श्रीविज्ञानभिक्षुनिर्मिते
विभूतिपादस्तृतीयः ॥ ३ ॥

# साङ्ख्ययोगदर्शने

## चतुर्थः कैवल्यपादः ।

### जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥

देहान्तरिता जन्मना सिद्धिः, ओषधिभिरसुरभवनेषु रसायनेत्येवमादि,

भास्वती ।

पादेऽस्मिन् योगस्य मुख्यं फलं कैवल्यं व्युत्पादितम्, कैवल्यरूपां सिद्धिं व्याचिख्यासुरादौ सिद्धिभेदं दर्शयति--कायचित्तेन्द्रियाणामभीष्ट उत्कर्षः सिद्धिः, सा च सिद्धिर्जन्मजाऽऽदिः पञ्चविधा, देहान्तरिता = कर्मविशेषादन्यस्मिञ्जन्मनि प्रादुर्भूता देहवैशिष्ट्यजान्ता जन्मना सिद्धिः, यथा—केषाञ्चिद् विनाऽपि दृष्टसाधनं शरीरप्रकृतिविशेषात

तत्त्ववैशारदी ।

तदेवं प्रथमद्वितीयतृतीयपादैः समाधितत्साधनतद्विभूतयः प्राधान्येन व्युत्पादिताः, इतरत्तु प्रासङ्गिकमौपोद्घातिकं चोक्तम्, इदानीं तद्धेतुकं कैवल्यं व्युत्पादनीयं न चैतत् कैवल्यभागीयं चित्तं परलोकं च पारलौकिकं विज्ञानातिरिक्तं चित्तकरणकसुखाद्यात्मकशब्दाद्युपभोक्तारमात्मानं च प्रसंख्यानपरमकाष्ठां च विना व्युत्पाद्य शक्यं वक्तुमिति तदेतत्सर्वमत्र पादे व्युत्पादनीयम्, इतरच्च प्रसङ्गादुपोद्घाताद्वा, तत्र प्रथमं सिद्धिचित्तेषु कैवल्यभागीयं चित्तं निर्धारयितुकामः पञ्चतयीं सिद्धिमाह—"जन्मौषधिमन्त्रतपःसमाधिधाः सिद्धयः।

व्याचष्टे—"देहान्तरिता" इति । स्वर्गोपभोगभागीयात् कर्मणो मनुष्यजातीयाचरितात्कुतश्चिन्निमित्ताल्लब्धपरिपाकात्क्व चिद् देवनिकाये जातमात्रस्यैव दिव्यदेहान्तरिता सिद्धिरणिमाद्या भवतीति, ओषधिसिद्धिमाह—"असुरभवनेषु"इति । मनुष्यो हि कुतश्चिन्निमित्तादसुरभवनमुपसम्प्राप्तः कमनीयाभिरसुरकन्याभिरुपनीतं रसायनमुपयुज्याजरामरणत्वमन्याश्च सिद्धीरासादयति, इहैव वा रसायनोपयोगेन यथा माण्डव्यो मुनी रसोपयोगाद्विन्ध्यवासीति, मन्त्रसिद्धिमाह—"मन्त्रैः" इति । तपःसिद्धिमाह—"तपसा" इति । सङ्कल्पसिद्धिमाह-"कामरूपी" इति । यदेव कामयतेऽणिमादि तदेकपदेऽस्य भवतीति, यत्र

पातञ्जलरहस्यम् ।

योगार्णवसमुद्भूतैः फलरत्नैर्विविच्यते ।
महेश्वरस्य पादार्च्यं चतुर्थे चरणेऽधुना ॥

वृत्तवर्तिष्यमाणयोः संबन्धं वक्तुं वृत्तं कीर्तयति-तदेवमित्यादि—व्युत्पादनीयमित्यन्तेन, अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा इति श्रुतिमाश्रित्य चित्तातिरिक्तं नित्यमात्मानं वक्तुमाह—न चैतदित्यादि--वक्तुमित्यन्तेन, पारलौकिकं स्वर्गादिसंबन्धिनं भोक्तारं चित्तगतसुखदुःखसाक्षात्कारवन्तं, प्रसंख्यानपरमकाष्ठां चेति, प्रसंख्यानं ध्यानं तीव्रवैराग्यं वा

वार्त्तिकम् ।

हानोपायान्तं व्यूहत्रयमतिविस्तरतः पादद्वयेन व्याख्याय हानं तु स्वरूपत एव तत्र संक्षेपादुक्तं न तु तस्याशेषविशेषरूपो व्यूह इत्यतो हानविस्तरार्थं चतुर्थपादारम्भः, तत्रादौ कैवल्ययोग्यं चित्तं निर्धारयितुं पञ्चप्रकारां सिद्धिमाह—अनेनैव प्रसङ्गेन जन्मादिसिद्ध्यपेक्षया यथोक्तसमाधिसिद्धेरुत्कर्षोऽपि सेत्स्यति—

"जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः" क्रमेण सिद्धीर्व्याचष्टे—देहान्तरितेति, ऐहिकेन कर्मणा देवादिदेहान्तरे जन्ममात्रेण भवन्तीः अणिमादिसिद्धिर्जन्मजेत्यर्थः, ओषधिज

मन्त्रैराकाशगमनाणिमादिलाभः, तपसा सङ्कल्पसिद्धिः, कामरूपी यत्र तत्र कामग इत्येवमादि, समाधिजाः सिद्धयो व्याख्याताः ॥ १ ॥

तत्र कायेन्द्रियाणामन्यजातीयपरिणतानां—

**जात्यन्तरपरिणामः प्रकृत्यापूराद् ॥ २ ॥**

पूर्वपरिणामापाय उत्तरपरिणामोपजनस्तेषामपूर्वावयवानुप्रवेशाद् भ-

भास्वती ।

परचित्तज्ञताऽऽदिर्दूरश्रवणदर्शनादिर्वा प्रादुर्भवति, तथा-ओषधिभिर्मन्त्रैस्तपसा च केषाञ्चित् सिद्धिः, संयमजाः सिद्धयो व्याख्यातास्ताश्च सिद्धिष्वनियता अबन्ध्यवीर्याः ॥ १ ॥

तत्रेति । तत्र = सिद्धौ कायेन्द्रियाणामन्यजातीयः परिणामो दृश्यते, स च जात्यन्तरपरिणामः प्रकृत्यापूरादेव भवति, प्रकृतिः = कायेन्द्रियाणां प्रत्येकजात्यवच्छिन्नं यद् वैशिष्ट्यं तस्य मूलीभूता शक्तिर्यया तत्तत्कायेन्द्रियाणां स्मृत्यभिव्यक्तिः, ताश्च द्विधा प्रकृतयः कर्माशयव्यङ्ग्या अनुभूतपूर्वा वासनारूपास्तथाऽननुभूतपूर्वा अव्यपदेश्याश्च, दैवादिविपाकानुभवजाता वासनारूपा प्रकृतिरनुभूतपूर्वा, ध्यानजसिद्धप्रकृतिस्तु—अननुभूतपूर्वाऽनुभूयमानस्य विक्षेपस्य प्रहाणरूपान्निमित्तात् साऽभिव्यक्ता भवति, आपूरः=अनुप्रवेशः;

तत्त्ववैशारदी ।

कामयते श्रोतुं वा मन्तुं वा तत्र तदेव शृणोति मनुते चेति, आदिशब्दाद् दर्शनादयः संगृहीता इति, समाधिजाः सिद्धयो व्याख्याता अधस्तने पादे ॥ १ ॥

अथ चतसृषु सिद्धिष्वोषधादिसाधनासु तेषामेव कायेन्द्रियाणां जात्यन्तरपरिणतिरिष्यते, सा पुनर्न तावदुपादानमात्राद्, न हि तावन्मात्रमुपादानं न्यूनाधिकदिव्यादिव्यभावेऽस्य भवति, नो खल्वविलक्षणं कारणं कार्यवैलक्षण्यायालम्, माऽस्याकस्मिकत्वं भूदित्याशङ्क्य पूरयित्वा सूत्रं पठति—"तत्र कायेन्द्रियाणामन्यजातीयपरिणतानां जात्यन्तरपरिणामः प्रकृत्यापूराद्" मनुष्यजातिपरिणतानां कायेन्द्रियाणां यो देवतिर्य्यग्जातिपरिणामः स खलु

पातञ्जलरहस्यम् ।

तस्य परमकाष्ठा निरतिशयतेत्यर्थः, जन्मादिसूत्रमवतारयितुमाह—तदेतदिति, पञ्चतयीमिति, जन्म चौषधिश्च मन्त्रश्च तपश्च समाधिश्च तेभ्यो जाता पञ्चतयी, मनुष्याधिकारिकं शास्त्रमिति न्यायेनाह—मनुष्यजातीयाचरितादित्यर्थः, देवनिकाये देवत्वजातौ, अणिमाद्या उक्तां-कान्ति प्राप्तो यथा भीम इहैव कल्पलताऽऽद्युपयोगेनेति ॥ १ ॥

तत्र सूत्रान्तरमाह—जातीति । अन्यजातीयपरिणतानां शिलादपुत्रस्य नन्दीश्वरस्य देव-

वार्त्तिकम् ।

सिद्धिमाह—ओषधिभिरिति । असुरभवनेषु रसायनं यदोषधिद्रव्यं तदुद्भवेत्येवमादिसिद्धिरोषधिभिरित्यर्थः, असुरभवनेष्विति प्रायिकाभिप्रायेणोक्तम् , अत्राप्योषधिभिः सुवर्णादिसिद्धीनां भावात् , शेषं सुगमम् , पञ्चविधसिद्धिसाधारण्याय पूर्वपादो विचारितः, सिद्धिप्रकारोऽस्मिन्नेव प्रसङ्गे कियद्भिः सूत्रैः प्रतिपादनीयः, तत्रादौ निर्माणकायनिर्माणेन्द्रिययोरुत्पत्तिप्रकारप्रतिपादकं सूत्रं पूरयित्वोत्थापयति—तत्र काय इति, निर्माणचित्तोत्पत्तिप्रकारस्य सूत्रान्तरेण वक्ष्यमाणत्वादत्र कायेन्द्रिययोरेव ग्रहणम् ॥ १ ॥

"जात्यन्तरपरिणामः प्रकृत्यापूरात्" मनुष्यादिजातिरूपः परिणामः स प्रकृत्यापूराद्भवति न तु सङ्कल्पमात्रादित्यर्थः, मनुष्यादिजातिरूपेण पूर्वं परिणम्य स्थितानां कायेन्द्रियाणां-कामरूपतादशायां यो देवतिर्यगादिजातिपरिणामः स प्रकृत्यापूराद्भवति न तु सङ्कल्पमात्रादित्यर्थ इति व्याख्यान्तरम् , अणिमादिरूपपरिणामविशेषश्च प्रकृत्यपगमादित्यपि बोध्यम् ,

वति, कायेन्द्रियप्रकृतयश्च स्वं स्वं विकारमनुगृह्णन्त्यापूरेण धर्मादिनिमित्तमपेक्षमाणा इति ॥ २ ॥

## निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥३॥

भास्वती।

पूर्वेति । अपूर्वावयवानुप्रवेशाद् = यथा मानुषप्रकृतिके चक्षुषि दैवप्रकृतिकचक्षुःसंस्काररूपस्यापूर्वावयवस्यानुप्रवेशाद् मानुषचक्षुर्दैवं व्यवहितदर्शनप्रकृतिकं भवति, एवं कायेन्द्रियप्रकृतयः स्वं स्वं विकारं स्वाधिष्ठानं कार्यं करणञ्चापूरेणानुगृह्णन्ति = अनुगृह्याभिव्यञ्जयन्ति, धर्मादिनिमित्तमपेक्ष्यैव वक्ष्यमाणरीत्या तत् कुर्वन्ति ॥ २ ॥

तत्त्ववैशारदी।

प्रकृत्यापूरात्, कायस्य हि प्रकृतिः पृथिव्यादीनि भूतानि, इन्द्रियाणां च प्रकृतिरस्मिता, तदवयवानुप्रवेश आपूरस्तस्माद् भवति, तदिदमाह—पूर्वपरिणाम" इति । ननु यथापूरेणानुग्रहः, कस्मात्पुनरसौ न सदातन इत्यत आह—धर्मादि" इति । तदनेन तस्यैव शरीरस्य बाल्यकौमारयौवनवार्द्धकादीनि च, न्यग्रोधधानाया न्यग्रोधतरुभावश्च, वह्निकणिकायास्तृणराशिनिवेशितायाः प्रोद्भवज्ज्वालासहस्रसमालिङ्गितगगनमण्डलत्वं च व्याख्यातम् ॥ २ ॥

प्रकृत्यापूरादित्युक्तं, तत्रेदं संदिह्यते—किमापूरः प्रकृतीनां स्वाभाविको धर्मादिनिमित्तो वेति, किं प्राप्तं ? सतीष्वपि प्रकृतिषु कदा चिदापूराद् धर्मादिनिमित्तश्रवणाच्च तन्निमित्त एवेति प्राप्तम्, एवम्प्राप्त आह—निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवद्"

पातञ्जलरहस्यम्।

स्वप्राप्तिरित्याह—जात्यन्तरेति, प्रकृतिपदं विवेचयति—कायस्येति, अस्मिता = सात्त्विकाहंकारः ॥ २ ॥

वार्त्तिकम्।

अत्र च जात्यन्तरशब्देन योगिनां गजतुरङ्गादिवैभवं तथा कायव्यूहादिकमपि ग्राह्यम्, आपूरशब्देनापि प्रकृतीनां संहननमपि ग्राह्यम्, कायव्यूहे च श्रुतिः "स एकधा भवति त्रिधा भवति पञ्चधा शतं दश चैकश्च सहस्राणि च विंशति" रित्यादिरिति, प्रकृत्यापूरे हेतुं वदन् सूत्रं व्याचष्टे—पूर्वपरिणामेति, यतो लोके वल्मीकादीनां क्षुद्रपरिणामापाये तदुत्तरमहापरिणामोत्पत्तिर्भूतप्रकृतीनामनुप्रवेशाद्भवतीति दृष्टम्, अतो योगीश्वरादीनामपि देहेन्द्रिययोः परिणामान्तरकाले धर्मादिसापेक्षाः कायेन्द्रियप्रकृतयः स्वं स्वं विकारमनुगृह्णन्ति स्वस्वजातीयां कायादिप्रकृतिमुपकुर्वन्ति आपूरेणानुप्रवेशेनेत्यर्थः, तत्र कायप्रकृतिः पञ्चभूतानि, इन्द्रियप्रकृतिश्चास्मितेति, दृष्टश्च लोके तृणराशिनिक्षिप्तस्य वह्निकणस्य क्षणादेव प्रकृत्यापूरेण गगनव्यापी परिणामविशेष इति, एतेन वामनाद्यवतारादीनां क्षणादेव त्रिभुवनव्यापित्वविश्वरूपत्वादिकं मार्कण्डेयादिभ्यो विष्णुना मायाप्रदर्शनं च प्रकृत्यापूरेण तडिन्मालायामिव क्षणभङ्गुरेणेति व्याख्यातम्, अगस्त्यादीनां समुद्रपानादिकं च तोयादिप्रकृत्यपसरणेनेति व्याख्येयम्, एवमेव विश्वं परमेश्वरस्य मायेति गीयते, ऐन्द्रजालिकवत् क्षणेनैव प्रकृत्यापूरापसारणादिभिर्जगदन्यथयितुमुत्पादयितुं विलापयितुं च परमेश्वरः सङ्कल्पमात्रेण शक्नोति सूक्ष्मदृष्ट्या तु प्रतिक्षणं तथा करोत्येवेति पश्यन्तु योगिनो भगवन्नृत्यमिति दिक् ॥ २ ॥

ननु योगजधर्मबलात् प्रकृतय आकृष्यन्त इति प्रकृतिस्वातन्त्र्यसिद्धान्तहानिः, तथा स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिश्रुतेरपि प्रकृतिस्वातन्त्र्यहानिरित्याशङ्कायामाह—

"निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" व्याचष्टे—न हीति, धर्मादिरूपाणां निमित्तानां प्रकृत्यापूरेकत्वे युक्तिमाह—न कार्येणेति, परतन्त्रं स्वतन्त्रस्य प्रवर्त्तकमयु-

न हि धर्मादि निमित्तं प्रयोजकं प्रकृतीनां भवति, न कार्य्येण कारणं प्रवर्त्त्यत इति, कथन्तर्हि—'वरणभेदस्तु ततः क्षेत्रिकवद्, यथा क्षेत्रिकः केदारादपाम्पूरणात् केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नापः पाणिनाऽपकर्षति; आवरणं त्वासां भिनत्ति, तस्मिन् भिन्ने स्वयमेवापः केदारान्तरमाप्लावयन्ति; तथा धर्मः प्रकृतीनामावरणमधर्मं भिनत्ति तस्मिन्

भास्वती ।

न हीति । धर्मादि निमित्तं न प्रकृतिं कार्यान्तरजननाय प्रयोजयति विकारस्थत्वात्, स्वोपयोगिनिमित्तात् स्वानुप्रवेशस्यानिमित्तभूता गुणास्तिरोभवन्ति ततः प्रकृतिः स्वधर्मेणानुप्रविशति, यथा व्यवहितदर्शनं दिव्यचक्षुः प्रकृतिधर्मः, तत्प्रकृतिर्न मानुषचक्षुःकार्यादुत्पादनीयम्, मानुषचक्षुःकार्यनिरोधे सा स्वयमेव चक्षुःशक्तिमनुप्रविश्य दिव्यदृष्टिमच-

तत्त्ववैशारदी ।

सत्यं धर्मादयो निमित्तं, न तु प्रयोजकाः, तेषामपि प्रकृतिकार्य्यत्वाद् न च कार्य्यं कारणं प्रयोजयति, तस्य तदधीनोत्पत्तितया कारणपरतन्त्रत्वात्, स्वतन्त्रस्य च प्रयोजकत्वाद्, न खलु कुलालमन्तरेण मृद्दण्डचक्रसलिलादय उत्पित्सितेनोत्पन्नेन वा घटेन प्रयुज्यन्ते, किन्तु स्वतन्त्रेण कुलालेन, न च पुरुषार्थोऽपि प्रवर्त्तकः, किन्तु तदुद्देशेनेश्वरः, उद्देशतामात्रेण पुरुषार्थः प्रवर्त्तक इत्युच्यते, उत्पित्सोस्त्वस्य पुरुषार्थस्याव्यक्तस्य स्थितिकारणत्वं युक्तम्, न चैतावता धर्मादीनामनिमित्तता, प्रतिबन्धापनयनमात्रेण क्षेत्रिकवदुपपत्तेः, ईश्वरस्यापि

पातञ्जलरहस्यम् ।

धर्मात् सुखं च ज्ञानं चेति स्मृतेर्धर्मादेः कारणत्वमाशङ्क्य प्रतिबन्धकोत्सारकत्वेन सूत्रमवतारयति-निमित्तमिति, न प्रयोजकं तस्य धर्माधर्मयोः तदधीनोत्पत्तिकत्वाद्, एतदेव स्पष्टयति--न खल्विति, पुरुषार्थौ भोगापवर्गावपि तज्जागलस्तनन्यायेनाकिञ्चित्कराविति चेत् तत्राह--न चैतावतेति, ईश्वरस्यापीति, कृतप्रयत्नापेक्षस्तु विहि-

वार्त्तिकम् ।

तमित्यर्थः, किं चाकाशे द्रव्याणामनारम्भिकाऽप्यनुक्षणमणूनां क्रिया सर्वसम्मता, न च तत्र धर्मोऽधर्मो वा कारणं कस्यापि भोगाहेतुत्वात्, नापि तत्रेश्वरादिसङ्कल्पादिः कारणं गौरवाद्, अतो निरन्तराणुक्रियोपपत्तये लाघवेन गुणत्वेनैव सामान्यतः प्रवृत्तिकारणत्वात् प्रकृतिस्वातन्त्र्यं सिद्धम्, अपि च कदा चिद् दण्डचक्रादिकं विनाऽपि योगिसङ्कल्पादेव घटो जायते, आदिसर्गे चेश्वरसङ्कल्पेन बीजान्तराणि विनैव सर्वाणि बीजान्युत्पद्यन्त इति परस्परव्यभिचारान्निमित्तानां न साक्षात्कारणत्वसम्भवः, तृणारणिमण्यादिषु चाग्न्यादिकारणत्वेऽन्योन्यव्यभिचारो लोकसिद्ध एवास्ति; अतः सहकार्यप्रयुक्ता प्रकृतिरेव परिणामे कारणं स्वतन्त्रेति सिद्धम्, ननु प्रकृतिश्चेत् स्वतन्त्रा केन प्रकारेण तर्हि धर्मेश्वरयोगिसङ्कल्पादीनां प्रकृतिपरिणामहेतुत्वमिति पृच्छति—कथं तर्हीति, सूत्राद्धेनोत्तरमाह—वरणभेदस्तु ततः क्षेत्रिकवदिति, अपां पूरणादद्भिः पूरणात्, केदारान्तरस्य विशेषणं सममित्यादित्रिकम्, अपकर्षति क्षिपति प्रावरणमालवालम्, स्वं स्वं विकारमिति, स्वस्वसजातीयं विकारं प्राप्नुवन्ति विकारप्रसूतीनां परिणामान्तरमित्यर्थः, प्रकृतिकार्येन्द्रियप्रकृत्यभिप्रायेणोक्तं गुणाद् गुणान्तरमाप्लावयन्तीत्यपि बोध्यम्, क्रियावदारम्भकसंयोगोऽपि प्रकृतेः स्वत एव भवतीत्यपि तेनैव दृष्टान्तेन प्रतिपादयति—यथा चेति, न तु प्रकृतिप्रवृत्ताविति, संयोगविशेषेष्वपीति बोध्यम्, तथा चाधर्मादिप्रतिबन्धनिवृत्तिद्वारेणैव धर्मादिः परिणामकारणमिति सिद्धम्, अयं भावः—यथा संस्कार एव स्मृतिहेतुः सदृशादृष्टचिन्तादयस्त्वननुगततया संस्कारस्योद्बोधकमात्राः, उद्बोधश्च निद्राऽऽदिदोषरूपावरणभङ्गः, तथैव प्रकृतिरेव जगत्कारणं का-

भिन्ने स्वयमेव प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति, यथा वा स एव क्षे-त्रिकस्तस्मिन्नेव केदारे न प्रभवत्यौदकान् भौमान् वा रसान् धान्यमूलान्य-नुप्रवेशयितुं, किन्तर्हि मुद्गगवेधुकश्यामाकादींस्ततोऽपकर्षति, अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति, तथा धर्मो निवृत्तिमात्रे कारणम-धर्मस्य, शुद्ध्यशुद्ध्योरत्यन्तविरोधाद्, न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति, अत्र नन्दीश्वरादय उदाहार्य्याः, विपर्य्ययेणाप्यधर्मो धर्मं बाधते, ततश्चा-शुद्धिपरिणाम इति, तत्रापि नहुषाजगरादय उदाहार्य्याः ॥ ३ ॥

यदा तु योगी बहून् कायान् निर्मिमीते तदा किमेकमनस्कास्ते भवन्त्य-थानेकमनस्का इति,—

## निर्माणचित्तान्यस्मितामात्राद् ॥ ४ ॥

भास्वती ।

क्षुराविर्भावयति, दृष्टान्तोऽत्र-"वरणभेदस्तु ततः क्षेत्रिकवत्" ततः = निमित्ताद् वरणभेदो-ऽनुप्रवेशस्यान्तरायापनोदनं क्षेत्रिकाणामालिभेदवद् , यथेति । अपाम् पूरणात् = जलपूर-णात् , पिप्लावयिषुः = प्लावनेच्छुः, तथेति । धर्मः = स्वप्रवर्त्तनस्य निमित्तभूतो धर्मः, स्पष्टमन्यत् ॥ ३ ॥

यदेति । अस्मितामात्रात् = अप्रलीनस्य दग्धक्लेशबीजस्य चेतसो विक्षेपसंस्कारप्र-

तत्त्ववैशारदी ।

धर्माधिष्ठानार्थं प्रतिबन्धापनय एव व्यापारो वेदितव्यः, तदेतन्निगदव्याख्यातेन भा-ष्येणोक्तम् ॥ ३ ॥

प्रकृत्यापूरेण सिद्धेः सामर्थ्ये सिद्धिविनिर्मितनानाकायवर्तिचित्तैकत्वनानात्वे विचार-यति—"यदा तु" इति । तत्र नानामनस्त्वे कायानां प्रतिचित्तमभिप्रायभेदाद् एकाभिप्राया-नुरोधश्च परस्परं प्रतिसन्धानं च न स्यातां पुरुषान्तरवत्, तस्मादेकमेव चित्तं प्रदीपवद्विसारि-तया बहूनपि निर्माणकायान् व्याप्नोतीति प्राप्त आह—"निर्माणचित्तान्यस्मितामात्राद्"

पातञ्जलरहस्यम् ।

तत्प्रतिषिद्धावैयर्थ्यादिभ्य इति वैयासिकसूत्राद् अधिष्ठानत्वं चेतनान्तराप्रयुक्तत्वे सति स्वप्र-युक्तत्वं तेन धर्मादीनामकिञ्चित्करत्वादिति भावः ॥ ३ ॥

योगी यान् देहान् करोति तान् प्रत्येकं चित्तसहितानेव करोत्यन्यथा तत्तद्देहेऽसाधारणभो-

वार्त्तिकम् ।

लकर्मेश्वरादयस्तु प्रकृतेः कार्यजननशक्त्युद्बोधकाः, तत्र धर्माधर्मौ स्वधर्मविरुद्धधर्मान्तररूपा-वरणभङ्गेनोद्बोधकौ, ईश्वरस्तु साम्यपरिणामादिरूपाखिलावरणभङ्गेनोद्बोधकः कालाद-यस्तु धर्माद्युद्बोधकतया, दण्डादयस्तु कार्यान्तराभिव्यक्तिप्रतिबन्धकतयेत्येवं यथायो-ग्यमूहनीयम् , एतदेव निमित्तकारणतेति गीयते, अव्यभिचारात्तु संयोगस्य समवायिकारण-त्वमिष्यत एव द्वारत्वाद् न तेन प्रकृतेः स्वातन्त्र्यहानिरिति, धर्मस्याधर्मरूपप्रतिब-न्धापसारणद्वारा कार्येन्द्रियपरिणामनिमित्तत्व उदाहरणमाह-अत्र नन्दीति, नन्दिनामा मनुष्य ईश्वरो जात इति नन्दीश्वरः, एवं नहुषाजगरोऽपि व्याख्येयः, सिद्धादीनां कायेन्द्रिय-परिणामश्चिन्तितः ॥ ३ ॥

इदानीं सिद्धानां चित्तपरिणामनिर्णायकं सूत्रमवतारयति— यदेति, एकमनस्का निर्मातृम-नोमात्रेणैव व्यवहारभाजः, अनेकमनस्काः निर्मातृमनोतिऽरिक्तप्रातिस्विकमनोभाजः,

"निर्माणचित्तान्यस्मितामात्रात्" स्वसङ्कल्पेन निर्मितचित्तानि निर्माणचित्तान्युच्यन्ते

**अस्मितामात्रं चित्तकारणमुपादाय निर्माणचित्तानि करोति, ततः सचित्तानि भवन्ति ॥ ४ ॥**

भास्वती ।

त्ययक्षये चित्तकार्यं न्यग्भूतं भवति, अतश्चास्मितामात्रस्य प्रख्यातत्वाद् अस्मितामात्रेणावस्थानं भवति तदस्मितामात्रात्, अविवेकरूपचित्तकार्यहीनाथा एवास्मितायाः इत्यर्थः, तदा संस्कारवशान्न चित्तस्येन्द्रियादिप्रवर्त्तनरूपं स्वारसिकमुत्थानम्, योगी तु परानुग्रहार्थाय तदस्मितामात्रं दग्धबीजकल्पमुपादाय स्वेच्छयैकमनेकं वा चित्तं कार्यं च निर्मिमीते सुगमं भाष्यं, स्वेच्छयाऽस्योत्थानं निरोधश्च ततो न निर्माणचित्तं बन्धहेतुः ॥ ४ ॥

तत्त्ववैशारदी ।

यद् यावज्जीवच्छरीरं तत्सर्वमेकैकासाधारणचित्तान्वितं दृष्टं, तद्यथा चैत्रमैत्रादिशरीरम्, तथा च निर्माणकायाः, इति सिद्धं तेषामपि प्रातिस्विकं मन इत्यभिप्रायेणाह—"अस्मितामात्रम्" इति ॥ ४ ॥

पातञ्जलरहस्यम् ।

गासिद्धिरित्याह—निर्माणेति, विचारान्तरमाह -प्रकृत्येति, प्रदीपवदावेश इति न्यायेनाह—सयथा वर्तिभेदेनानेकगृहमाविशति, एवं निर्माणकाया तदृष्ट्याकृष्टयावन्ति शरीराणि-एकैकं चित्तमाविशतीत्यर्थः ॥ ४ ॥

वार्त्तिकम् ।

तानि बहूनि निर्माणदेहसमसंख्यानि भवन्ति, तेषां कारणमाह–अस्मितामात्रादिति, अहङ्कारादित्यर्थः, मात्रशब्देन मनोव्यावृत्तिः, सङ्कल्पमात्रेण मनसो निमित्तमात्रत्वादिति, अत्र चित्तशब्दो मनोमात्रवाची अहङ्कारप्रकृतिकत्ववचनाद् बुद्ध्यहङ्कारा अपि अनेके स्वप्रकृतिप्रधानबुद्ध्यापूराद्भवन्तीति प्रत्येतव्यं युक्तिसाम्यादिति, भाष्यं सचित्तानि शरीराणीत्यर्थः, शेषं सूत्र एव व्याख्यातम्, ननु निर्मातृचित्तस्यैकस्यैव प्रदीपवद्विसारितया कायव्यूहेषु वृत्तिसंभवात् किमर्थं देहभेदेनान्तःकरणभेदोऽभ्युपगम्यते, न हि नैयायिकानामिवास्माकम् अन्तःकरणभेदेनैकदाऽनवहितनानाशरीराधिष्ठानं न संभवेदिति, अत्रोच्यते–समाधिभोगयोर्ज्ञानाज्ञानयोश्चैकदैकस्मिंश्चित्ते विरोधेन चित्तभेदः सिद्ध्यति, अत एव सर्वज्ञस्यापि विष्णोः स्वसंकल्पनिर्मितचित्तभेदेन रामशरीरे कियत्कालमज्ञानमुपपन्नमिति, यदा तु योगी जीवभेदानेव स्वदेहान्निर्मितेषु देहेन्द्रियसंघातेष्वनेकेषु योजयति तदा पुनः सुतरामेवानेकान्तःकरणमपेक्षत इति, कदाचित्तु योगिनामेकान्तःकरणेनैव नानादेहेषु व्यवहारं न निराकुर्मः, स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वादिति, अथैवं सत्यात्मनानात्वकल्पना व्यर्था चित्तभेदेनैव ज्ञानाज्ञानाद्युपपत्तेरिति, मैवम्—वृत्तितन्निरोधादीनामौपाधिकत्वेनाविरोधेऽपि विषयानुभवाननुभवयोः स्वप्रतिविदितदुःखभोगतदभावयोर्बन्धमोक्षयोश्च साक्षाच्चेतननिष्ठयोर्विरोधेनैवात्मनानात्वसिद्धेरिति दिक्, तदेतच्छरीरभेदेन नानाचित्तविरुद्धनानाकार्यकारित्वं योगिनां स्मर्यते—

एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः ।
भूत्वा यस्मात्तु बहुधा भवत्येकः पुनस्तु सः ॥
तस्माच्च मनसो भेदा जायन्ते चैत एव हि ।
एकधा तद् द्विधा चैव त्रिधा च बहुधा पुनः ॥
योगीश्वरः शरीराणि करोति विकरोति च ।
प्राप्नुयाद्विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत् ॥
संहरेच्च पुनस्तान् सूर्यो रश्मिगणानिव । इति ॥ ४ ॥

## प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

**बहूनां चित्तानां कथमेकचित्ताभिप्रायपुरस्सरा प्रवृत्तिरिति सर्वचित्तानां प्रयोजकं चित्तमेकं निर्मिमीते, ततः प्रवृत्तिभेदः ॥ ५ ॥**

भास्वती ।

बहूनामिति । बहुचित्तानां प्रवृत्तिभेदेऽपि सर्वेषां यथा प्रवृत्तिप्रयोजकमेकं प्रधानचित्तं निर्मिमीते तच्चित्तं युगपदिव तदङ्गभूतेष्वप्रधानचित्तेषु सञ्चरत् तानि स्वस्वविषयेषु प्रवर्त्तयति, यथा मनो ज्ञानेन्द्रियकर्मेन्द्रियप्राणेषु युगपदिव सञ्चरत् तान् प्रयोजयति तद्वत् ॥५॥

तत्त्ववैशारदी ।

यदुक्तमनेकचित्तत्व एकाभिप्रायानुरोधश्च प्रतिसन्धानं च न स्यातामिति, तत्रोक्तं सूत्रम्—"प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्" अभविष्यदेष दोषो यदि चित्तमेकं नानाकायवर्त्तिमनोनायकं न निरमास्यत, तन्निर्माणे त्वदोषः, न चैकं गृहीत्वा कृतं प्रातिस्विकैर्मनोभिः कृतं वा नायकनिर्माणेन निजस्यैव मनसो नायकत्वादिति वाच्यम्, प्रमाणसिद्धस्य नियोगपर्य्यनुयोगानुपपत्तेरिति, अत्र पुराणं भवति—

"एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः,
भूत्वा यस्मात्तु बहुधा भवत्येकः पुनस्ततः,
तस्माच्च मनसो भेदा जायन्ते चैत एव हि,
एकधा स द्विधा चैव त्रिधा च बहुधा पुनः,
योगीश्वरः शरीराणि करोति विकरोति च,
प्राप्नुयाद्विषयान् कैश्चित्कैश्चिदुग्रं तपश्चरेत्,
संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिव" इति,

तदेतेनाभिप्रायेणाह—"बहूनां चित्तानाम्" इति ॥ ५ ॥

पातञ्जलरहस्यम् ।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, इति श्रुतिमाश्रित्याह—योगिनिर्मितानाम्, आहंकारिकमनोवत्त्वेन मनोवत्त्वमित्याह—प्रवृत्तिभेद इति, तेषां मनसां प्रकृतेर्विभुत्वयोगादेकं मनो नायकमिति भावः, मधुकरराज इव मक्षिकाणामिति भावः,

अस्मिन्नर्थे मानमाह—पुराणमिति । बहुधा कृतौ प्रयोजनमाह—प्राप्नुयादिति, प्रयोजकं भाष्यस्थपदं प्रवर्तकमित्यर्थकम् ॥ ५ ॥

वार्त्तिकम् ।

अनेकचित्तनिर्माणेऽपि विशेषमाह—

"प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्" व्याचष्टे—बहूनामिति । तेषां बहूनां कथमेकचित्ताभिप्रायानुसारिणी प्रवृत्तिः स्यादित्याशयेन योगी पूर्वसिद्धं यच्चित्तं तदेव सर्वचित्तानां प्रयोजकं निर्मिमीते नियामकं करोति ततस्तु चित्ताभिप्रायात् तेषामवान्तरचित्तानां प्रवृत्तिरित्यर्थः, ऐश्वर्यनिर्वाहार्थमनेकचित्तेष्वन्तर्यामिविधया स्थितमेकं चित्तं तेषामुत्पत्तिस्थितिसंहारं करोतीति, अत्र च प्रमाणं पुराणं प्रागेव दर्शितं—

'संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिव'ति,

एतेन विष्णवादीनामंशावतारा अपि व्याख्याताः, तेषु ह्यात्मन एकत्वेऽप्यंशांशिव्यवहार उपाध्योरंशांशिभावेनौपाधिको न पुनरितरजीवेष्विव स्वत एवेति ॥ ५ ॥

## तत्र ध्यानजमनाशयम् ॥ ६ ॥

पञ्चविधं निर्माणचित्तं जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धय इति, तत्र यदेव ध्यानजं चित्तं तस्यैव नास्त्याशयो रागादिप्रवृत्तिर्नातः पुण्यपापाभिसंबन्धः, क्षीणक्लेशत्वाद् योगिन इति, इतरेषान्तु विद्यते कर्माशयः ॥६॥

यतः—

## कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥

चतुष्पात् खल्वियं कर्मजातिः—कृष्णा, शुक्लकृष्णा, शुक्ला, अशुक्लाकृष्णा।

भास्वती।

पञ्चेति। निर्माणचित्तमत्र सिद्धचित्तम्, ध्यानजं समाधिजं सिद्धचित्तम् अनाशयम् = तस्य नास्त्याशयः, तस्मात्तत्प्रकृतिर्यस्यानुप्रवेशात् समाधिसिद्धेरभिव्यक्तिः; न साऽनुभूतपूर्वा वासनारूपा कैवल्यभागीयसमाधेरननुभूतपूर्वत्वाद् न तन्निवर्त्तनकरी प्रकृतिः संस्काररूपा, अव्यपदेश्यप्रकृतेरनुप्रवेशादेव समाधिसिद्धिर्यमादिभिर्निवृत्तेषु तत्प्रत्यनीकधर्मेषु॥६॥

चतुष्पादिति। चतुष्पदा खल्वियं कर्मणां जातिः, शुक्लकृष्णा जातिर्बहिःसाधनसा-

तत्त्ववैशारदी।

तदेवमुदितेषु पञ्चसु सिद्धचित्तेष्वपवर्गभागीयं चित्तं निर्धारयति—"तत्र ध्यानजमनाशयम्" आशेरत इत्याशयाः = कर्मवासनाः क्लेशवासनाश्च, त एते न विद्यन्ते यस्मिन् तदनाशयं चित्तमपवर्गभागीयं भवतीत्यर्थः, यतो रागादिनिबन्धना प्रवृत्तिर्नास्त्यतो नास्ति पुण्यपापाभिसंबन्धः, कस्मात् पुना रागादिजनिता प्रवृत्तिर्नास्तीत्यत आह—"क्षीणक्लेशत्वाद्" इति, ध्यानजस्यानाशयस्य मनोऽन्तरेभ्यो विशेषं दर्शयितुमितरेषामाशयवत्तामाह—"इतरेषान्तु" इति ॥ ६ ॥

तत्रैव च हेतुपरं सूत्रमवतारयति—"यत" इति। कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्, पदं स्थानं, चतुर्षु समवेता चतुष्पदा, यद् यावद् बहिःसाधनसाध्यं तत्र सर्वत्रास्ति

पातञ्जलरहस्यम्।

तदेवमुपसंहृत्य मोक्षदं विवक्षुराह—तत्रेति ॥ ६ ॥

चतुष्पादित्यस्य भाष्यस्य व्याख्या पदं स्थानमिति, तदेव विवृणोति—यद्यावदिति,

वार्त्तिकम्।

तदेवमुक्तेषु पञ्चसु सिद्धचित्तेषु मध्येऽपवर्गयोग्यचित्तमवधारयति—

"तत्र ध्यानजमनाशयम्" ध्यानजं ध्यानसंस्कृतम् आशयाः क्लेशकर्मवासना न सन्त्यस्मिन्नित्यनाशयं ध्यानसिद्धं चित्तमेवानाशयं भवति योगेनैव ज्ञानोत्पत्त्या वासनोच्छेदसंभवाद् न मन्त्रादिभिरित्यर्थः, व्याचष्टे—पञ्चविधमिति, निर्माणचित्तमत्र निर्माणक्षणचित्तं न निर्मीयमाणं चित्तं तस्य सिद्धकार्यत्वेन सिद्धत्वानियमात्, अनाशयमित्यस्यार्थमाह—तस्यैवेति, रागादेः प्रवृत्तिर्यस्मात्संस्कारात्स रागादिप्रवृत्तिराशयस्तस्यैव नास्तीत्यनाशयमित्यर्थः, अनाशयत्वस्य किं प्रयोज्यमित्याकाङ्क्षायामाह—नात इति, सम्बन्ध उत्पत्तिः, ततश्चापुनर्जन्मरूपो मोक्ष इति शेषः, पापपुण्यानुत्पत्तौ हेतुमाह—क्षीणक्लेशत्वादिति, दग्धक्लेशत्वादिति, दग्धक्लेशकर्मवासनत्वादित्यर्थः, अदृष्टोत्पत्तावप्यदृष्टान्तरं कारणमदृष्टरूपस्य कर्माशयस्य कार्यमात्रे हेतुत्वात्, तत्रेति निर्द्धारणसप्तम्यर्थमाह—इतरेषामिति, मन्त्रादिसिद्धचित्तानामित्यर्थः ॥ ६ ॥

अत्रैव हेतुपरतयोत्तरसूत्रमवतारयति—यत इति।

"कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्" योगिनो निष्पन्नयोगस्य क्षीणक्लेशस्य कर्म

चेति, तत्र कृष्णा दुरात्मनां, शुक्लकृष्णा बहिःसाधनसाध्या तत्र परपीडाऽनुग्रहद्वारेण कर्माशयप्रचयः, शुक्ला तपःस्वाध्यायध्यानवतां सा हि केवले मनस्यायत्तत्वादबहिःसाधनाधीना न परान् पीडयित्वा भवति, अशुक्ला-

भास्वती।

ष्णा = सा हि पुण्यापुण्यमिश्रा, बाह्यकर्मणि परपीडाया अवश्यम्भावित्वात्, संन्यासिनां = त्यक्तकामानाम्, क्षीणक्लेशानां = विवेकवताम्, चरमदेहानां = जीवन्मुक्तानाम्, विवेकमनस्कारपूर्वं तेषां कर्माकरणं ततो विवेकमूल एव संस्कारप्रचयो नाविद्यामूल इति, त-

तत्त्ववैशारदी।

कस्य चित्पीडा, न हि व्रीह्यादिसाधनेऽपि कर्मणि परपीडा नास्ति, अवघातादिसमये पिपीलिकाऽऽदिवधसम्भवाद्, अन्ततो बीजादिवधेन स्तम्बादिभेदोत्पत्तिप्रतिबन्धाद्, अनुग्रहश्च दक्षिणाऽऽदिना ब्राह्मणादेरिति, शुक्ला तपःस्वाध्यायध्यानवतामसंन्यासिनाम्, शुक्लत्वमुपपादयति—"सा हि" इति, 'अशुक्लाकृष्णा संन्यासिनां'—संन्यासिनो दर्शयति "क्षीण" इति;

पातञ्जलरहस्यम्।

तस्मात्पश्यन्ति पादपा इति श्रुतिमाश्रित्याह—अन्तत इति।

"यो दत्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात्।
तस्य तेजोमया लोका भवन्ति ब्रह्मवेदिनः॥

वार्त्तिकम्।

कायादिव्यापारोऽशुक्लाकृष्णः पुण्यपापाहेतुः, इतरेषामयोगिनां जन्मादिसिद्धानामपि त्रिविधम्, यथायोग्यं कर्म शुक्लकृष्णयोः प्रत्येकमसमुच्चयाभ्यां त्रिविधमित्यर्थः, तदेतद्व्याचष्टे—चतुष्पादिति। कर्मसामान्यं चतुरंशकमित्यर्थः, क्रमेण निर्दिशति—कृष्णेति। कृष्णा दुःखफलदा तमोवर्धकत्वात्, शुक्लकृष्णा सुखदुःखफलदा रजोवर्धकत्वात्, शुक्ला सुखफलदा सत्त्ववर्द्धकत्वात्, अशुक्लाकृष्णा च सुखदुःखफलशून्या गुणाहेतुत्वादिति, अत्राशुक्लाकृष्णयोः सुखदुःखफलस्यैव प्रतिषेधेन योगिकर्मणामपि सत्त्वशुद्धिः फलं न निराक्रियते, न च ज्ञानेनैव सत्त्वशुद्ध्याख्यः पापक्षयो भविष्यतीति वाच्यम्, तथाऽपि कर्मणामपि ज्ञानाङ्गतया सत्त्वशुद्धिहेतुत्वात्, आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इति साहित्यश्रुतेः,

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये॥

इति स्मृतेश्च' अन्यथा वसिष्ठादीनां ज्ञानिनां कर्मानुपपत्तेश्च, न च लोकसंग्रहार्थं तेषां कर्म, लोकसंग्रहस्य स्वतोऽपुरुषार्थतया कैवल्यहेतुसत्त्वशुद्धिद्वारैव पर्यवसानादिति, चतुर्विधं कर्म क्रमेणोदाहरति—दुरात्मनां पापिनां, बहिःसाधनसाध्येति, देहेन्द्रियमनोभ्यो बहिर्यानि साधनानि तत्साध्येत्यर्थः, अज्ञानां सकामानामित्यर्थाल्लभ्यते, ज्ञानिनां निष्कामानां कर्म सामान्यमेवाशुक्लाकृष्णमिति वक्ष्यमाणत्वात्, ननु बहिःसाधनसाध्यानामपि वेदोक्ततया कथं कृष्णसंकरस्तत्राह—तत्र परेति। बहिर्योगोपकरणसंपादने पिपीलिकादीनामप्यन्ततोऽपरिहार्या पीडा भवतीत्यस्ति तत्र पापकर्माशयः देवताऽऽदीनामाराधनादिनाऽनुग्रहात् पुण्यकर्माशयस्तु प्रसिद्ध एवेति सांकर्यमित्यर्थः, अन्तर्यागरूपायां शुक्लायां पापासांकर्ये बीजमाह—सा हीति। संन्यासिनामिति, संन्यासस्त्यागः, अभिमानफलयोस्त्यागिनामित्यर्थः,

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन!।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥

इत्यादिस्मृतेः, ननु संन्यासाश्रममात्राणामविद्याऽऽदिक्लेशसत्त्वे तेषामपि धर्माधर्मोदयात् क्लेशक्षये च गृहस्थादिकर्मणामप्यशुक्लाकृष्णत्वाच्चेति संन्यासिकर्मणामशुक्लाकृष्णत्वे हेतु-

कृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति, तत्राशुक्लं योगिन-एव फलसंन्यासाद् अकृष्णं चानुपादानाद्, इतरेषां तु भूतानां पूर्वमेव त्रिविधमिति ॥ ७ ॥

**ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥८॥**

तत इति = त्रिविधात्कर्मणः, तद्विपाकानुगुणानामेवेति = यज्जातीय-

भास्वती ।

त्रेति । तत्र कर्मजातिषु योगिनः कर्म—अशुक्लाकृष्णम्, अशुक्लं कर्म फलसंन्यासात् = बाह्य-सुखकरफलाकाङ्क्षाहीनत्वात् तथा चाकृष्णमनुपादानात् = पापस्याकरणादित्यर्थः, यमनि-यमशीलतैव कृष्णकर्मविरतिः, इतरेषामन्यत् त्रिविधं कर्म ॥ ७ ॥

तत इति । जात्यायुर्भोगानां कर्मविपाकानां संस्कारा वासनाः, यथा—गोशरीरगतानां-सर्वेषां विशेषाणामनुभूतिजाताः संस्कारा असकृद्गोजात्यनुभवनिर्वर्त्तिता गोजातिवास-

तत्त्ववैशारदी ।

कर्मसंन्यासिनो हि न क चिद् बहिः साधनसाध्ये कर्मणि प्रवृत्ता इति न चैषामस्ति कृष्णः कर्माशयः, योगानुष्ठानसाध्यस्य कर्माशयफलस्येश्वरे समर्पणान्न शुक्लः कर्माशयः, निरत्ययफलो हि शुक्ल उच्यते यस्य फलमेव नास्ति कुतस्तस्य निरत्ययफलत्वमित्यर्थः, तदेवं चतुष्टयीं कर्म-जातिमुक्त्वा, कतमा कस्येत्यवधारयति—"तत्राशुक्लम्" इति ॥ ७ ॥

कर्माशयं विचिच्य क्लेशाशयगतिमाह—"ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम्," यज्जातीयस्य पुण्यजातीयस्यापुण्यजातीयस्य वा, कर्मणो यो विपाकः दिव्यो वा नारको वा

पातञ्जलरहस्यम् ।

इत्युक्तिमाश्रित्याह—संन्यासिनो हीति, कृष्णं पापं—,

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्,

इति स्मृतेः, फलं दत्वा कर्म नश्यतीति चेत्—तत्राह—,योगानुष्ठान इति,

यज्ञायाचरतः कर्म समग्रं प्रविलीयते—

इत्युक्तिमाश्रित्याह—यस्येति, वृत्तवर्तिष्यमाणयोः संबन्धं वक्तुं कीर्तयति—तदेवमिति ॥७॥

पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति सूत्रारूढं करोति—तत इति, एतदेव

वार्त्तिकम् ।

माह—क्षीणक्लेशानामिति । क्लेशमूलः कर्माशय इत्युक्तत्वादिति भावः, चरमदेहानामिति, स्वरूपाख्यानम्, स्वोक्तं संन्यासिनामिति हेतुं विवृण्वानः सूत्रं व्याचष्ट—तत्रेति । तत्र च-तुर्विधकर्ममध्ये योगिन एवाशुक्लमकृष्णं च कर्म फलत्यागाद् अहं करोमीत्यस्वीकाराच्चे-त्यर्थः, विहितं हि कामनायां सत्यामेव स्वर्गादिफलं ददाति विहितं निषिद्धं चोभयमप्युपा-दानाख्याभिमाने सत्येव फलं ददातीति भावः,

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान् न हन्ति न निबध्यते ॥

इति शास्त्रमत्र प्रमाणम् ॥ ७ ॥

ननु त्रिविधत्वयोगिनां कर्म तथाऽपि वासनाऽभिव्यक्त्यादिनाऽपि कदा चिन्मोक्षः स्यादि-ति किमर्थं नियमेन ध्यानजस्यानाशयचित्तस्यापेक्षेत्यत आह—

"ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम्" तत इतिपदं व्याख्याय तद्विपा-

स्य कर्मणो यो विपाकस्तस्यानुगुणा या वासनाः कर्मविपाकमनुशेरते तासामेवाभिव्यक्तिः, न हि दैवं कर्म विपच्यमानं नारकतिर्य्यङ्मनुष्यवासनाऽभिव्यक्तिनिमित्तं भवति, किन्तु दैवानुगुणा एवास्य वासना व्यज्यन्ते, नारकतिर्य्यङ्मनुष्येषु चैवं समानश्चर्चः ॥ ८ ॥

**जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वाद ॥ ९ ॥**

वृषदंशविपाकोदयः स्वव्यञ्जकाञ्जनाभिव्यक्तः, स यदि जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितः पुनश्च स्वव्यञ्जकाञ्जन एवोदियाद्

भास्वती।

ना, एवं सुखदुःखवासना, आयुर्वासना चेति, वासनया स्वानुरूपा स्मृतिः, वासनाऽभिव्यक्तिस्तु स्वानुगुणेन = स्वानुरूपेण कर्माशयेन भवति, वासनां गृहीत्वा कर्माशयो विपाकारम्भी भवतीति, निगदव्याख्यातं भाष्येण, कर्मविपाकमनुशेरते = कर्मविपाकस्यानुयायिन्यः = कर्मविपाकमपेक्षमाणा वासनास्तिष्ठन्तीत्यर्थः, चर्चः = विचारः ॥ ८ ॥

जातीति। न हि दूरदेशे बहुपूर्वकालेऽनुभूतस्य विषयस्य स्मृतिस्तावता कालेनोत्तिष्ठति किन्तु निमित्तयोगे तत्क्षणमेवाविर्भवति देशकालजातिव्यवधानेऽपीति सूत्रार्थः, वृषदंशेति। वृषदंशविपाकोदयः = मार्जारजातिरूपस्य विपाकस्योदयः स्वव्यञ्जकेन कर्मा-

तत्त्ववैशारदी।

जात्यायुर्भोगः, तस्य विपाकस्यानुगुणाः, ता एवाह—या वासनाः कर्मविपाकमनुशेरत-इति, अनुशेरते = अनुकुर्वन्ति, दिव्यभोगजनिता हि दिव्यकर्मविपाकानुगुणा वासना, न हि मनुष्यभोगवासनाऽभिव्यक्तौ दिव्यकर्मफलोपभोगसम्भवः, तस्मात् स्वविपाकानुगुणा एव वासनाः कर्माभिव्यञ्जनीया इति भाष्यार्थः॥ ८ ॥

स्यादेतद्—मनुष्यस्य प्रायणानन्तरमधिगतमार्जारभावस्यानन्तरतया मनुष्यवासनाया एवाभिव्यक्त्या भवितव्यम्, न खल्वस्ति सम्भवो यदनन्तरदिवसानुभूतं न स्मर्य्यते, व्यवहितदिवसानुभूतं च स्मर्य्यत इत्यत आह—"जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वाद्"भवतु वृषदंशवासनाया जात्यादिर्व्यवधिस्तथाऽपि तस्याः फलत-

पातञ्जलरहस्यम्।

विविच्य दर्शयति भाष्यकारः-न हि दैवमिति। विपच्यमानं = फलमारभमाणं,व्यतिरेकमाह-नारकेति भाष्यं, समानश्चर्चः समानन्यायः ॥ ८ ॥

आनन्तर्यमचोदनेति जैमिनिसूत्रमाश्रित्याह—जातीतिसूत्रं, तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति श्रुतिमाश्रित्याह—अनुशेरत इति, पूर्वप्रज्ञाऽत्र वासना संस्कार इति पर्य्यायाः

वार्त्तिकम्।

कानुगुणानामेवेति गृहीत्वा व्याचष्टे—यज्जातीयस्येति, कर्मविपाकमनुशेरत इति, अनुकुर्वन्ति तन्मुखनिरीक्षका इति यावत्, विपच्यमानं फलोन्मुखं, चर्चो विचारः, ॥ ८ ॥

बहुजन्मव्यवहितानामपि वासनानामभिव्यक्तिं कर्मफलान्यथाऽनुपपत्तिप्रमाणेन साधयति-

"जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्" जात्यादिभिर्व्यवहितानामपि वासनानामानन्तर्यमव्यवहितवत् कार्यकारि भवति, अन्यथा कर्मफलानुपपत्तेः स्मृतिसंस्कारयोरेकरूपत्वादित्यर्थः, एकरूपत्वमेकाकारत्वमिति तत्रादौ भाष्यकारो-जात्यादिव्यवहितत्वमुदाहरन्नेवानन्तर्यं कारणं प्रदर्शयति—वृषेत्यादिना। आरम्भ एकाञ्जन-

द्रागित्येव पूर्वानुभूतवृषदंशविपाकाभिसंस्कृता वासना उपादाय व्यज्येत, कस्माद्-यतो व्यवहितानामप्यासां सदृशं कर्माभिव्यञ्जकं निमित्तीभूतमित्यानन्तर्य्यमेव, कुतश्च स्मृतिसंस्कारयोरेकरूपत्वाद्, यथाऽनुभवास्तथा संस्काराः ते च कर्मवासनाऽनुरूपाः यथा च वासनास्तथा स्मृतिः, इति जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतिः स्मृतेश्च पुनः संस्कारा इत्ये-

भास्वती ।

शयेनाभिव्यक्तो भवति, सः = विपाकः, पूर्वमार्जारदेहरूपपरिपाकानुभवाज्जातास्तत्संस्काररूपा या वासनास्ता उपादाय द्राग् व्यज्यते मार्जारजातिविपाकश्च मार्जारकर्माशयः, व्यवधानान्न तस्य चिरेणाभिव्यक्तिः, वासनाऽभिव्यक्तेः स्मृतिरूपत्वात्, कर्माशयवृत्तिलाभवशात् = कर्माशयस्य विपाको रूपो वृत्तिलाभस्तद्वशात् तन्निमित्तेनेत्यर्थः निमित्तनैमित्तिकभावानुच्छेदात् = कर्माशयो निमित्तम् , वासनास्मृतिः नैमित्तिकम् ,

तत्त्ववैशारदी ।

आनन्तर्य्यम् , वृषदंशविपाकेन कर्मणा तस्या एव स्वविपाकानुगुणाया अभिव्यक्तौ तत्स्मरणसमुत्पादाद् इत्याह—"वृषदंशविपाकस्योदय" इति, उदेत्यस्मादित्युदयः कर्माशयः,'पुनश्च स्वव्यञ्जकाञ्जन एवोदियाद्' अभिव्यज्येत। विपाकारम्भाभिमुखः क्रियेतेत्यर्थः, अभिसंस्कारः क्रिया, उपादाय गृहीत्वा व्यज्येत, यदि व्यज्येत स्वविपाकानुगुणा एव वासना गृहीत्वा व्यज्येतेत्यर्थः, आनन्तर्य्यमेव ,फलतः कारणद्वारकमुपपाद्य कार्यद्वारकमुपपादयति—"कुतश्च स्मृतिः" इति, एकरूपतया सादृश्यम् , तदेवाह—"यथा" इति,नन्वनुभवस्वरूपाश्चेत्संस्कारास्तथा सत्यनुभवा विशरारव इत्येतेऽपि विशरारवः कथं चिरभाविनेऽनुभवाय कल्पेरन्नित्यत आह—ते च कर्मवासनाऽनुरूपा इति, यथा-अपूर्वं स्थायि क्षणिककर्मनिमित्तमपि, एवं क्षणि-

पातञ्जलरहस्यम् ।

यथा हि शालिबीजमङ्कुरपत्रकाण्डपुष्पपरम्परया तद्बीजमारभते; एवं संस्कारो बहुव्यवधानेन स्वानुरूपं फलमारभते, वृषदंशो मार्जारः, अत्र शङ्कते—स्यादित्यादि-स्मयत इत्यन्तेन, प्रायणानन्तरं मरणानन्तरम्, इष्टापत्तिं धुनीते-न खल्वस्तीति, जातिदेशेति सूत्रे जातिर्धर्मः, एतदेव स्पष्टयति-वृषदंश इति, फलानुमेयाः प्रारम्भा इति न्यायेनानन्तर्यमप्रयोजकं फलभोग एव प्रयोजक इत्याह—वृषदंश इति, न हि दृष्टेऽनुपपन्नं नामेति न्यायात् , स्वव्यञ्जकाञ्जनः स्वं संस्कार एव व्यञ्जकं कारणं यस्य भोगस्य तेनाभिव्यक्तो भोग इत्यर्थः, एतदेव कार्यपरम्परया स्पष्टयति-यथाऽनुभवा इति, अनुभवजातीयसंस्कारस्तज्जातीयं स्मरणं, विशरारवो-

वार्त्तिकम् ।

स्यापेक्षणाद् उदयपदं तथा च वृषदंशविपाकारम्भः स्वव्यञ्जकेनैवाभिव्यक्तो वर्त्तमानावस्थो भवति न तु पूर्वदेहत्यागमात्रेण झटित्येवेति नियमोऽतः स यदि जातिशतादिव्यवधानेन व्यञ्जकं प्राप्योदियात् तदा द्रागित्येव शीघ्रं पूर्वप्राप्तवृषदंशविपाकेन जनितान् संस्कारान् गृहीत्वैव व्यक्तो भवति व्यवहितानामपि वासनानां सदृशकर्मव्यङ्ग्यत्वादित्यत आनन्तर्यमेवार्थाद्भवतीत्यर्थः, सादृश्यं चात्रैकजातीयफलकत्वम् , अभिव्यञ्जकमित्यस्य च विवरणं निमित्तीभूतमिति, प्रकृतेरेवोपादानत्वादिति भावः, आनन्तर्यं तत्कारणं च व्याख्याय तत्र प्रमाणं पृच्छति--कुत इति । कुतः प्रमाणादित्यर्थः, सूत्रावयवेनोत्तरमाह—स्मृतिसंस्कारयोरिति । ननु मनुष्यजन्मन्येवाव्यवहिते वृषदंशवासनाऽस्तु तत्राह—यथाऽनुभवा इति । नन्वेवं सति मनुष्यवासनयैव वृषदंशविपाको भवत्वव्यवहितत्वादिति, तत्राह-ते चेति । ते च संस्काराः कर्माशयानुरूपा एवापेक्षिता इत्यर्थः, नन्वेवमपि मनुष्यसंस्कारादिव वृषदंशविपा-

ते स्मृतिसंस्काराः कर्माशयवृत्तिलाभवशाद् व्यज्यन्ते,अतश्च व्यवहितानामपि निमित्तनैमित्तिकभावानुच्छेदादानन्तर्य्यमेव सिद्धमिति ॥ ९ ॥

**तासामनादित्वं चाशिषो नित्यत्वात् ॥ १० ॥**

तासां वासनानामाशिषो नित्यत्वादनादित्वं, येयमात्माशीर्मा न भूवं भू-

भास्वती ।

यद्वा—वासना निमित्तं तत्स्मृतिः नैमित्तिकं तद्भावस्यानुच्छेदात् = वर्त्तमानत्वात्, आनन्तर्यम् = निरन्तरालता ॥ ९ ॥

तासामिति । मा न भूवम् = अभूवं किन्तु भूयासमित्याशिषो नित्यत्वात् = सर्वत्राऽव्यभिचारात् सर्वेषु जातेषु जायमानेषु दर्शनाज्जनिष्यमाणेष्वपि सा स्यादेवं सर्वकालेषु

तत्त्ववैशारदी ।

कानुभवनिमित्तोऽपि संस्कारः स्थायी, किञ्चिद्भेदाधिष्ठानं च सारूप्यम्, अन्यथाऽभेदे तत्रैव सादृश्यानुपपत्तेरित्यर्थः, सुगममन्यद् ॥ ९ ॥

स्यादेतद्—व्यज्येरन् पूर्वपूर्वतरजन्माभिसंस्कृता वासना ; यदि पूर्वपूर्वतरजन्मसद्भावे प्रमाणं स्यात्, तदेव तु नास्ति. न च जातमात्रस्य जन्तोर्हर्षशोकदर्शनमात्रं प्रमाणं भवितुमर्हति, पद्मादिसङ्कोचविकासवत्स्वाभाविकत्वेन तदुपपत्तरित्यत आह—"तासामनादित्वं चाशिषो नित्यत्वात्" तासां वासनानामनादित्वं च न केवलमानन्तर्य्यमिति चार्थः, आशिषो नित्यत्वात् आत्माशिषो वासनानामनादित्वेन नित्यत्वाव्यभिचारादिति,ननु स्वाभाविकत्वेनाप्युपपत्तेरसिद्धमाशिषो नित्यत्वमित्यत आह—"येयम्" इति, नास्तिकः पृच्छति—"कस्मात्" इति, उत्तरं—"जातमात्रस्य जन्तोः" इति, अत एवैतस्मिन् जन्मन्यननुभूतमर-

पातञ्जलरहस्यम् ।

विरला विनाशिन इति यावत्, भावार्था यागपदवाच्या यद्यपि क्षणिकास्तथाऽपि तेभ्य एवापूर्वं स्थायि चिरभाविने फलाय, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति लक्षणं सूचयन्नाह—किञ्चिदिति ॥ ९ ॥

मा न भूवमपि तु भूयासमित्याशीर्जातमात्रस्यादृश्यमानजन्मान्तरसम्बन्धम् आत्मनो नित्यत्वं गमयन्ती तासां वासनानामपि नित्यत्वमाहेति सूत्रार्थः, पद्मादीति यदुक्तं तन्निराकरोति—नेति, अत्र लोकायतिकः शङ्कते—स्यादेतदिति, "एक आत्मनः शरीरे भावादिति बादरायणसूत्रमाश्रित्याह—तदेव तु नास्तीति, एके चार्वाकाः शरीर एवात्मनो भावात् अहंत्वाधिकरणत्वात् तदतिरिक्त आत्मा नास्तीति सूत्रार्थः, किंच—अहं त्वं भौतिको भौतिकमात्रवृत्तिधर्मत्वात् घटादिवद् इत्यनुमानाच्च, स्वाभाविकं देहस्य जन्मादीत्याह-पद्मादिवद् भूतधर्मवत्त्वादिति भावः,'नान्तो न चादिर्न च सम्प्रतिष्ठति श्रुतिमाश्रित्य-तन्मतं सूत्रेण दूषयति—तासां स्वाभाविकत्वं नामौष्ण्यप्रकाशवन्निर्निमित्तकतेत्याह—जातमात्रस्येति—उपावतत इत्यन्तेन, चित्तमित्यन्वयः, तच्चितं पटवत् प्रदीपवद्वा संकोच-

वार्त्तिकम् ।

कनिर्वाहिका स्मृतिरस्तु तथाऽपि कर्माशयानुरूपस्मृतिहेतुत्वेन कर्मानुरूपोपपत्तिरिति,तत्राह-यथेति । एकरूपत्वं प्रसाध्य सूत्रतात्पर्यार्थं व्याचष्ट—इति जातीति । ननु सजातीयवासनैव चेद्विपाकनिर्वाहिका तर्ह्येकविपाककाल एव स्मृत्युत्पादेन पूर्वसंस्कारनाशात् कथं पुनस्तज्जातीयं विपाकान्तरमित्याशयेनोक्तं, स्मृतेश्च पुनः संस्कारा इति । परमार्थतस्तु स्मृतेर्न संस्कारनाशकत्वम् इत्यपि पूर्वोक्तं स्मर्त्तव्यं, स्मृतिसंस्काराः स्मृतिहेतुसंस्काराः कर्माशयवृत्तिलाभात् कर्माशयोद्बोधादिति ॥ ९ ॥

नन्वेवं सकलजन्मार्थमेव वासनास्वीकारेऽनवस्थाप्रसङ्ग इत्याशङ्कामपाकरोति—

"तासामनादित्वं चाशिषो नित्यत्वात्" व्याचष्टे—तासामिति । नित्यत्वात्प्रतिजन्म-

**यासमिति सर्वस्य दृश्यते सा न स्वाभाविकी, कस्माद्-जातमात्रस्य जन्तोरननुभूतमरणधर्मकस्य द्वेषदुःखानुस्मृतिनिमित्तो मरणत्रासः कथं भवेद्, न च स्वाभाविकं वस्तु निमित्तमुपादत्ते; तस्मादनादिवासनाऽनुविद्ध-**

भास्वती ।

सर्वप्राणिनामाशीरुपेयते, सा चाशीर्न स्वाभाविकी मरणदुःखानुस्मृतिनिमित्तत्वात्,

तत्त्ववैशारदी ।

धर्मकस्य मरणमेव धर्मः सोऽननुभुतो येन स तथोक्तः तस्य मातुरङ्कात्प्रस्खलतः कम्पमानस्य मङ्गल्यचक्रादिलाञ्छितं तदुरःसूत्रमतिगाढं पाणिग्राहमवलम्बमानस्य बालकस्य कम्पभेदानुमिता द्वेषानुषक्ते दुःखे या स्मृतिस्तन्निमित्तो मरणत्रासः कथं भवेदिति, ननूक्तं स्वभावादित्यत आह-"न च" इति, न च स्वाभाविकं वस्तु निमित्तमुपादत्ते गृह्णाति स्वोत्पत्तौ, एतदुक्तं भवति—बालकस्येदृशो दृश्यमानः कम्पो भयनिबन्धनः ईदृशकम्पत्वाद् अस्मदादिकम्पवद्, बालकस्य भयं द्वेषदुःखस्मृतिनिमित्तं भयत्वादस्मदादिभयवद्, आगामिप्रत्यवायोत्प्रेक्षालक्षणं च भयं न दुःखस्मृतिमात्राद् भवत्यपि तु यतो बिभेति तस्य प्रत्यवायहेतुभावमनुमाय सम्प्रत्यपि प्रत्यवायभयं विदध्यादिति, शङ्कते-तस्माद् यज्जातीयादनुभूतचराद् द्वेषानुषक्तं दुःखमुपपादितं तस्य स्मरणात्तज्जातीयस्यानुभूयमानस्य तद्दुःखहेतुत्वमनुमाय ततो बिभेति, न च बालकेनास्मिन् जन्मनि स्खलनस्यान्यत्र दुःखहेतुत्वमवगतं, न च तादृशं दुःखमुपलब्धम्, तस्मात्प्राग्भवीयोऽनुभवः परिशिष्यते, तच्चैतदेवं प्रयोगमारोहति—जातमात्रस्य बालकस्य स्मृतिः पूर्वानुभवनिबन्धना, स्मृतित्वादस्मदादिस्मृतिवदिति, न च पद्मसङ्कोचविकाशावपि स्वाभाविकौ, न हि स्वाभाविकं कारणान्तरमपेक्षते, वह्नेरौष्ण्यं प्रत्यपि कारणान्तरापेक्षाप्रसङ्गात्, तस्मादागन्तुकमरुणकरसम्पर्कमात्रमेव कमलिनीविकाशकारणं-सङ्कोचकारणं च संस्कारः स्थितिस्थापक इति, एवं स्मिताद्यनुमितहर्षादयोऽपि प्राचि भवे हेतवो वेदितव्याः, तदास्तां तावत्. प्रकृतमुपसंहरति—"तस्माद्" इति, निमित्तं लब्धवि-

पातञ्जलरहस्यम् ।

विकाशशालीति दिगम्बरास्तान् दूषयति,-वृत्तिरेवास्येति, प्रकृतेर्विभुत्वयोगादित्युक्तिमाश्रित्याह—विभुन इति,आहंकारिकत्वाज् जगन्मण्डलव्यापिन इत्यर्थः, तपः परमिहोच्यते तपो हि दुरतिक्रममिति मनूक्तिमाश्रित्याह-तयोरिति । तत्रैव कैमुतिकन्यायेनाह-दण्डकारण्यमिति भाष्यं, तदुरःसूत्रं मातुर्हारादिकमस्मिन्नर्थेऽनुमानद्वयमाह एतदुक्तमिति. आगामिप्रत्यवायं भविष्यदनिष्टं तस्योत्प्रेक्षा, तज्ज्ञानं दुःखस्मरणमात्रं चेद् ज्ञानिनोऽपि स्याद् अत उक्तं यतो बिभेति व्याघ्रादेः तस्य प्रातिकूल्यं निश्चित्य, ततः किं तत्राह—न च बालेति,

वार्त्तिकम् ।

नियतत्वादित्यर्थः, अनादित्वं च प्रवाहरूपेण बोध्यम्, यद्यप्याशीर्नित्यतया तद्धेतुवासनाया एवानादित्वं सिद्ध्यति न तु भोगहेतुवासनानां तथाऽपि तत्रानवस्थायाः प्रामाणिकत्वेनादोषत्वे तद्दृष्टान्तेनान्यासामप्यनादित्वमनुमेयमित्याशयः, नन्वग्न्यौष्ण्यवदियमाशीश्चित्तस्य स्वाभाविक्येव भवतु तत्राह-येयमिति । आशीर्नित्यत्वे तद्वासनाऽनादित्वे तथाऽशिषोः स्वाभाविकत्वे वा युक्तिं पृच्छति—कस्मादिति । तत्रादावाशीर्नित्यत्वेन वासनाऽनादित्वं यथा सिद्ध्यति तदाह—जातेति । जातमात्रोऽनुमानाद्यसमर्थो बालको यदि न पूर्वजन्मन्यननुभूतमरणधर्मकः स्यात् तदा कथं तस्य द्वेषतत्कारणमरणदुःखस्मरणाभ्यामेवोत्पाद्यो मरणत्रासो यथोक्ताशीरूपः संभवेत्पूर्वपूर्वभवीयमरणदुःखवासनां विनेति शेषः, अस्वाभाविकत्वे तु युक्तिमाह—न चेति । नापि स्वाभाविकं वस्तु निमित्तसापेक्षं भवति भयरूपा तु यथोक्ताशीः खड्गप्रहारदर्शनादिनिमित्तमपेक्षते,अन्यथाऽनुपपत्तेरतो न स्वाभाविकीति शेषः,सूत्रत्रयार्थं शिष्यावधारणायोपसंहरति—तस्मादनादीति । निमित्तं विपाकोन्मुखं कर्म प्रतिलभ्य गृहो-

मिदं चित्तं निमित्तवशात्काश्चिदेव वासनाः प्रतिलभ्य पुरुषस्य भोगायोपाव-र्त्तत इति, घटप्रासादप्रदीपकल्पं सङ्कोचविकाशि चित्तं शरीरपरिमाणाकार-मात्रमित्यपरे प्रतिपन्नाः, तथा चान्तरा भावः संसारश्च युक्त इति, वृत्तिरे-

भास्वती।

स्मृतिः संस्काराज्जायते, संस्कारः पुनरनुभवात्, तस्मात् सर्वैः प्राणिभिरनुभूतं मरण-दुःखम्,इदानीमिव सर्वदा चेत् सर्वैर्मरणदुःखमनुभूतं तर्हि सर्वेषामाशिषो मूलभूता वासना-ऽनादिरिति, न चेति। न च स्वाभाविकं किंतु निमित्तमुपादत्ते = निमित्तादुत्पद्यत इत्यर्थः, यथा कायस्य रूपं स्वाभाविकं काये विद्यमाने न तदुत्पद्यते, अनुत्पन्नः सहोत्पन्नो वा धर्मरूपो भाव एव स्वभावः, घटेति। निर्ग्रन्थमतमुपन्यस्यते, घटप्रासादादिमध्यस्थः प्रदीपो-यथा घटप्रासादपरिमाणः सङ्कोचविकाशी च तथा चित्तमपि गृह्यमाणपुत्तिकाहस्त्यादिश-रीरपरिमाणम् , तथा च सति चित्तस्यान्तराभावः = पूर्वोत्तरशरीरग्रहणयोर्यदन्तरा तत्र भाव आतिवाहिकभाव इत्यर्थः, संसारश्च युक्तः = सङ्गच्छत इति निर्ग्रन्थनयः, नायं समी-

तत्त्ववैशारदी।

पाककालं कर्म, प्रतिलम्भः अभिव्यक्तिः, प्रसङ्गतश्चित्तपरिमाणविप्रतिपत्तिं निराचिकीर्षुर्विप्र-तिपत्तिमाह—"घटप्रासाद" इति, देहप्रदेशवर्त्तिकार्य्यदर्शनाद् देहाद् बहिःसद्भावे चित्तस्य न प्रमाणमस्ति न च तदणुपरिमाणं, दीर्घशष्कुलीभक्षणादावपर्य्यायेण ज्ञानपञ्चकानुत्पादप्रसङ्गाद् , न चाननुभूयमानक्रमकल्पनायां प्रमाणमस्ति,न चैकमणु मनो नानादेशैरिन्द्रियैरपर्य्यायेण सम्ब-न्धुमर्हति, तत्पारिशेष्यात् कायपरिमाणं चित्तं, घटप्रासादवर्त्तिप्रदीपवत् सङ्कोचविकाशी पु-त्तिकाहस्तिदेहयोरस्योत्पत्स्येते, शरीरपरिमाणमेवाकारः परिमाणं यस्येत्यपरे प्रतिपन्नाः,नन्वेवं-कथमस्य क्षेत्रबीजसंयोगः, न खल्वेतदनाश्रयं मृतशरीरान्मातृपितृदेहवर्त्तिनी लोहितरेतसी प्रा-प्नोति, परतन्त्रत्वाद् , न हि स्थाण्वादिष्वगच्छत्सु तच्छाया गच्छति, न चागच्छति पटे तदाश्रयं चित्रं गच्छति तथा च न संसारः स्यादित्यत आह—"तथा चान्तराभावः संसारश्च युक्त" इति, तथा च शरीरपरिमाणत्वे, देहान्तरप्राप्तये पूर्व्वदेहत्यागश्च देहान्तप्राप्तिश्चान्तरा-ऽस्यातिवाहिकशरीरसंयोगाद् भवतः, तेन खल्वयं देहान्तरे सञ्चरेत्, तथा च पुराणम्—

"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" इति,

सोऽयमन्तराभावः, अत एव संसारश्च युक्त इति, तदेतदमृष्यमाणः स्वमतमाह—"वृत्तिः" इति, वृत्तिरेवास्य विभुनश्चित्तस्य सङ्कोचविकाशिनीत्याचार्य्यः स्वयम्भूः

पातञ्जलरहस्यम्।

अतो वासनेवात्मास्तित्वं नासिद्धमित्याह—तस्मादिति, अस्मिन्नर्थेऽप्यनुमानमाह—तच्चै-तदेवमिति, पद्मादेः संकोचविकाशावपि सवितृकिरणान्वयव्यतिरेकौ न स्वाभाविकावित्याह-

वार्त्तिकम्।

त्वा, ननु वासनाया अनादित्वं तदा भवेद् यदि तदाश्रयं चित्तं नित्यं स्यात् प्रतिशरीरं च भिन्नं न स्यात्, तदेव तु न पुम्प्रकृत्यतिरिक्तस्य सर्वस्य कार्यत्वाभ्युपगमाद् , अणुमहा-शरीरयोः परिणामभेदेन भेदवच्छरीरतुल्यपरिणामचित्तस्यापि भेदसिद्धेश्चेति, तदादौ सां-ख्यपरिमाणमाह—घटेति। प्रतिपुरुषं सर्वशरीरसाधारणमेकैकमेव चित्तं तथाऽपि घटप्रासा-दरूपस्वल्पमहाऽऽश्रयभेदेन प्रदीपवत् स्वल्पमहाशरीरभेदेन चित्तं स्वल्पं महापरिमाणं भव-ति तथा च नित्यत्वमपि तस्य प्रदीपपरमाणुवदेव द्रष्टव्यम् , तच्च परमाणुतुल्यसूक्ष्मावस्था-यां प्रकृतेः सत्त्वरूपांशविशेषतां प्राप्नोतीति न प्रकृतिपुरुषातिरिक्तस्य नित्यतेति भावः, एव-मपरे सांख्या आहुरित्यर्थः, ननु विभ्वेव चित्तं कथं नेष्यत इत्याकाङ्क्षायामाह—तथा चेति। तथा चाणुत्वस्यापि संभवात्, पूर्वापरसर्गयोरन्तरा प्रलयेऽभावो लयः संभवति, तथा सं-

भास्वती ।

चीनः, चित्तं न दिगधिकरणकं वस्तु कालमात्रव्यापिक्रियारूपत्वाद् , न ह्यमूर्त्तं चित्तं हस्तादिभिः परिमेयम् , तस्मात्तस्य दीर्घत्वह्रस्वत्वादीनि न कल्पनीयानि, दिगवयवरहितत्वाच्चित्तं विभु = सर्वभावैः सह सम्बन्धवत् , न च विभुत्वं सर्वदेशव्यापित्वं व्यवसायरूपत्वाच्चेतसः, तस्य वृत्तिरेव सङ्कोचविकाशिनीति योगाचार्यमतम् , यथा दृष्टिस्तिले न्यस्ता

तत्त्ववैशारदी ।

प्रतिपेदे, इदमत्राकूतम् , यद्यनाश्रयं चित्तं न देहान्तरसञ्चारि कथं तदातिवाहिकमाश्रयते, तत्रापि देहान्तरकल्पनायामनवस्था, न चास्य देहान्निष्कर्ष आतिवाहिकस्य सम्भवति, निष्कृष्टस्य चेतसस्तत्सम्बन्धाद्, अस्तु तर्हि सूक्ष्मशरीरमेवासर्गाद् आ च महाप्रलयान्नियतं चित्तानामधिष्ठानं षाट्कौशिकशरीरमध्यवर्त्ति, तेन हि चित्तमासत्यलोकादावीचेस्तत्र तत्र शरीरे सञ्चरति, निष्क्रम्योपायः षाटकौशिककायाद् , तत्र हि तदन्तराभावस्तस्य नियतत्वाद् , न चास्यापि सद्भावे प्रमाणमस्ति, न खल्वेतदध्यक्षगोचरः, न च संसारोऽस्यानुमानम् , आचार्य्यमतेनाप्युपपत्तेः, आगमस्तु पुरुषस्य निष्कर्षमाह—न च चित्तं वा सूक्ष्मशरीरं वा पुरुषः, किन्तु चितिशक्तिरप्रतिसंक्रमा, न चास्या निष्कर्षः सम्भवति, इत्यौपचारिको व्याख्येयः, तथा च चितेश्चित्तस्य च तत्र तत्र वृत्त्यभाव एव निष्कर्षार्थः, यच्च स्मृतीतिहासपुराणेषु मरणानन्तरं प्रेतशरीरप्राप्तिस्तद्विमोकश्च सपिण्डीकरणादिभिरित्युक्तं तदनुजानीमः, आतिवाहिकत्वं तस्य न मृष्यामहे, न चात्रास्ति कश्चिदागमः, लब्धशरीर एव

पातञ्जलरहस्यम्

न चेति-स्थितिस्थापक इत्यन्तेन, मनसो स्थितिवहिरस्वातन्त्र्यमित्युक्तिमाश्रित्याह—देहादिति, मनोऽणुस्थितिं निराह—न चैतदिति । शतपत्रवेधन्यायेनाह—न चाननुभूयेति, गौर-

वार्त्तिकम् ।

सारः संसरणम् इहलोकपरलोकसंचारश्च सक्रियत्वात्संभवति विभुत्वे चैतदुभयं न घटेतेत्यर्थः, स्वशास्त्रसिद्धान्तमाह—वृत्तिरेवेति । विश्वाकाशवच्चित्तं प्रतिनियतपुरुषभोग्यत्वात पुरुषभेदेनानन्तञ्च,

चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतमं विद्धि चिदाकाशं वरानने ! ॥

इत्यादिभिः शास्त्रेषु चित्तविभुत्वावगमात् , अन्यथा परिच्छिन्नत्वे सतीश्वरोपाधेरपि परिच्छिन्नत्वापत्त्येश्वरस्य विभुत्वश्रुतिस्मृतियुक्तिविरोधः स्यात् , यथा तु वैशेषिका नैयायिकाश्चाकाशस्य विभुनित्यस्यापि श्रोत्रादिरूपेण कार्यतां देहेन सह गमनादिकं चौपाधिकतयाऽभ्युपगच्छन्ति तथैव विभुनित्यानां जीवचित्तानां मलिनदर्पणवदविद्याकामकर्मावृतप्रकाशशक्तीनां मन्दप्रकाशस्वभावानां वा बाह्यसत्त्वान्तरोपष्टम्भाज् ज्ञानादिहेतुः परिणामविशेषः सर्गादौ जायते,

'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति

श्रुतेः स एव परिणामः स्वल्पमहाशरीरभेदेन संकोचविकाशशीलो भवतीत्येवमाचार्यः पतञ्जलिरभ्युपगच्छतीत्यर्थः, अत्र च वृत्तिः प्रदीपशिखावद् द्रव्यरूपः परिणाम इति प्रागेवोक्तम् , न तु क्षणद्वयावस्थायी ज्ञानेच्छाऽऽदिगुणः सर्गाद्युत्पन्नचित्तस्य प्राकृतप्रलयपर्यन्तावस्थानस्येहलोकपरलोकगमनादेश्च श्रवणादिभिरस्या वृत्तेर्घटपटाद्याकारतैवात्रेच्छाज्ञानशब्दवाच्येति, तदेवं वैशेषिकाणामाकाशवद् अस्माकं चित्तमपि नित्यानित्याभयरूपमिति सिद्धं, विशेषस्त्वयं यत्तैराकाशस्य श्रोत्ररूपेण जन्यता कर्णशष्कुल्यौपाधिकीष्यते, अस्माभिस्तु गुणान्तरसंभेदाद् यथाऽर्थ एव महदादिरूपेण प्रकृत्याख्यसूक्ष्मचित्तस्य परिणाम इष्यत इति, एतेन विभुनित्यतयेऽप्याकाशस्य कार्यत्वमपि व्याख्यातम् , शब्दादिहेतुप-

वास्य विभुनः सङ्कोचविकाशिनीत्याचार्य्यः, तच्च धर्मादिनिमित्तापेक्षं, निमित्तं च द्विविधं- बाह्यमाध्यात्मिकं च, शरीरादिसाधनापेक्षं बाह्यं=स्तुतिदानाभिवादनादि, चित्तमात्राधीनं श्रद्धाऽऽद्याध्यात्मिकम् ,।तथा चोक्तं-'ये

भास्वती ।

तिर्ल गृह्णाति सा चाकाशे न्यस्ता महान्तमाकाशं गृह्णाति न तेन दृष्टिशक्तेः क्षुद्रं वा महद् वा परिमाणं भवेत्तथा चित्तमपि विवेकजज्ञानप्राप्तं सर्वज्ञं सर्वसम्बन्धि विभु भवति तथापि मलिनं सङ्कुचितवृत्त्यल्पज्ञं भवति, तच्चेति । तच्च चित्तं निमित्तमपेक्ष्य वृत्तिमद् भवति, श्रद्धावीर्यस्मृतिसमाधिप्रज्ञा इत्याध्यात्मिकं मनोमात्राधीनं निमित्तम् उक्तं-सांख्याचार्यैः, य इति । मैत्रीकरुणामुदितोपेक्षाख्या ये ध्यायिनां विहाराः=चर्या-

तत्त्ववैशारदी ।

च यमपुरुषैरपि पाशबद्धो नीयेत, न त्वातिवाहिकशरीरः, तस्मादाहङ्कारिकत्वाच्चेतसोऽहङ्कारस्य गगनमण्डलवत्त्रैलोक्यव्यापित्वाद्विभुत्वं मनसः, एवं चेदस्य वृत्तिरपि विभ्वीति सर्वज्ञताऽऽपत्तिरित्यत उक्तं—"वृत्तिरेवास्य" इति, स्यादेतत्—चित्तमात्राधीनाया वृत्तेः सङ्कोचविकाशौ कुतः कादाचित्कावित्यत आह—"तच्च" इति, तच्च चित्तं धर्माद्यपेक्षं वृत्ता, निमित्तं-विभजते—"निमित्तं च" इति, आदिशब्देनेन्द्रियधनादयो गृह्यन्ते, श्रद्धाऽऽदीत्यत्रापि वीर्य-स्मृत्यादयो गृह्यन्ते, आन्तरत्वे सम्मतिमाचार्य्याणामाह—"तथा चोक्तम्" इति, विहारो-

पातञ्जलरहस्यम् ।

वापत्तेरिति भावः, क्षेत्रबीजसंयोगशोणितशुक्रसंयोगसंसारोऽनुमानप्रमाणक इत्यर्थः, धर्मका-

वार्त्तिकम् ।

रिणामविशेषरूपेण कार्यत्वं श्रुतिस्मृतिसिद्धं विरोधाभावादिति दिक्, ये तु वैशेषिकाश्रितम् अण्वेव सर्वदाऽभ्युपगच्छन्ति, तन्मत एकदा पञ्चेन्द्रियैः पञ्चवृत्त्यनुपपत्तिः चक्षुःश्रोत्रादिविरुद्धदेशतयाऽणोस्तदुभयसम्बन्धस्यैकदाऽनौचित्यादित्यादीनि दूषणान्यूह्यानि, 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्ग'मिति न्यायसूत्रे च सदा सर्वज्ञत्वाभाव एव मनआख्यकरणे लिङ्गत्वेनोपन्यस्तो न त्वेकदेन्द्रियद्वयवृत्त्यभावः हेत्वसिद्धिदोषापत्तेरिति, वृत्तौ संकोचविकाशयोः कारणमाह—तच्चेति । तत्र सकोचविकाशनं धर्माधर्मादिरूपनिमित्तापेक्षया भवति, अनादित्वाच्चात्र नान्योन्याश्रय इति, ननु धर्मादेरेव चेच्चित्तवृत्तिविकाशस्तर्हि शरीरादिधर्मं स्तुतिदानादिभिरेव ज्ञानादिसंभवे दुष्करयोगापेक्षा न युक्तेत्याशङ्कायामाह—निमित्तं चेति, अभिवादनादीति । आदिशब्देन निन्दापरस्वादानातिक्रमादीन्यधर्मसाधनान्यपि गृहीतानि श्रद्धाऽऽदीनि च, श्रद्धाऽऽदयः पूर्वं व्याख्याताः श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाः, तद्विपरीताश्चाश्रद्धाऽऽदय इत्यर्थः,ननु श्रद्धाऽऽदिमात्रस्य धर्मनिर्वर्त्तकत्वे किं प्रमाणं तत्राह-तथा चोक्तमिति । विहारा अयत्नसाध्याः निष्पाद्यधर्मनिर्वृत्तौ हेतुः बाह्यसाधनेति, बाह्यसाधननिरपेक्षस्वभाव इत्यर्थः, तयोरिति । तयोश्च बाह्याध्यात्मिकयोर्मध्ये मानसं कर्म बलीयः, यतो मानसं कर्म ज्ञानवैराग्यरूपतया सर्वातिशायीत्यर्थः, निरतिशयत्वमुदाहरति—दण्डकारण्यं चेति । दण्डकदेशस्तद्राजे क्रोधान्विते शुक्रः सप्तदिनशिलावृष्ट्या जनशून्यं चकार, अन्यत्सुगमम् , तथा च श्रद्धाऽऽदिसाधनजन्यो योगधर्मो यथा चित्तविकाशसाधनं तथा बाह्यधर्म इति योगधर्मस्यापेक्षेति, तदुक्तं याज्ञवल्क्येन—

सर्वधर्मान्परित्यज्य मोक्षधर्मं समाश्रयेत ।
सर्वे धर्मास्सदोषाः स्यु पुनरावृत्तिकारकाः ॥ इति,
इज्याऽध्ययनदानानि तपः स्वाध्यायकर्म च ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ इति च,

चैते मैत्र्यादयो ध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहात्मानः प्रकृष्टं ध-र्म्ममभिनिर्वर्त्तयन्ति" तयोर्मानसं बलीयः, कथं–ज्ञानवैराग्ये केनातिशय्येते, दण्डकारण्यं चित्तबलव्यतिरेकेण कः शारीरेण कर्मणा शून्यं कर्त्तुमुत्सहेत. समुद्रमगस्त्यवद्वा पिबेद् ॥ १० ॥

## हेतुफलाश्रयालम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः ॥ ११ ॥

हेतुः=धर्मात्सुखमधर्माद् दुःखं, सुखाद् रागो दुःखाद् द्वेषः, ततश्च

भास्वती।

इत्यर्थः, ते बाह्यसाधननिरनुग्रहात्मानः=बाह्यसाधननिरपेक्षाः, ते च प्रकृष्टं=शुक्लं धर्म-मभिनिर्वर्त्तयन्ति=निष्पादयन्ति, स्मर्यते च—

"सर्वधर्मान् परित्यज्य मोक्षधर्मं समाश्रयेत्।
सर्वे धर्माः सदोषाः स्युः पुनरावृत्तिकारकाः" ॥ इति,

दण्डकारण्यं शुक्राचार्यस्याभिसम्पातात् पांशुवर्षेण शून्यमभूत् ॥ १० ॥

हेतुरिति। धर्मादिहेतुभिर्वासनाः संगृहीता उपचीयमानास्तिष्ठन्ति न विलीयन्ते, सुगमम्, फलं वासनानां स्मृतिः, यं वासनास्मृतिरूपं प्रत्युत्पादकमाश्रित्य यस्य धर्मादेः

तत्त्ववैशारदी।

व्यापारः, प्रकृष्टं शुक्लं, तयोर्बाह्याभ्यन्तरयोर्मध्ये, ज्ञानवैराग्ये तज्जनितौ धर्मौ, केन बाह्यसा-धनधर्मेणातिशय्येते अभिभूयेते, ज्ञानवैराग्यजावेव धर्मौ तमभिभवतः बीजभावादपनयत इत्यर्थः, अत्रैव सुप्रसिद्धमुदाहरणमाह—"दण्डकारण्यम्" इति ॥ १० ॥

अथैताश्चित्तवृत्तयो वासनाश्चानादयश्चेत्कथमासामुच्छेदो, न खलु चितिशक्तिरनादिरुच्छि-

पातञ्जलरहस्यम्।

शादिवद् वृत्तिलाभः, तत्रेत्याचार्यमतं, न तु स्थूलशरीरातिरिक्तसूक्ष्मदेहे मानमस्तीत्याह—तथा चितेरिति ॥ १० ॥

चितेरनुच्छेदेऽपि वासनोच्छेदान्मुक्तिरित्याह-हेत्विति, धर्माधर्मौ रागद्वेषौ सुखदुःखे

वार्त्तिकम्।

गीतायामपि--

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्॥ इति,

यतश्च मानसं कर्मैव बलीयोऽत एव जडभरतादेः समाधिनिष्ठतैव श्रूयते—

सर्वविज्ञानसंपन्नः सर्वशास्त्रार्थतत्त्ववित्।
अपश्यत्स च मैत्रेय! आत्मानं प्रकृतेः परम्॥
न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम्।
न ददर्श च कर्माणि शास्त्राणि जगृहे न च॥

इत्यादिनेति, तदेवं मोक्षयोग्यं चित्तं तत्प्रसङ्गेनेतरचित्तस्य बन्धप्रकारश्च दर्शितः, पुरुषे चित्तद्वारकबन्धस्य स्वाभाविकत्वे मोक्षासंभवात् कर्मवासनाऽऽदिमूलकत्वे तु तदुच्छेदतो-मोक्षो घटत इति ॥ १० ॥

इदानीं मोक्षोपपत्तयेऽनाद्यसंख्यानामपि वासनानामत्यन्तोच्छेद उपपाद्यते—

"हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः" वासनाहेतुः संसारचक्रं त

**प्रयत्नः, तेन मनसा वाचा कायेन वा परिस्पन्दमानः परमनुगृह्णात्युपहन्ति वा ततः पुनर्धर्माधर्मौ सुखदुःखे रागद्वेषाविति प्रवृत्तमिदं षडरं संसारचक्रम्, अस्य च प्रतिक्षणमावर्त्तमानस्याविद्या नेत्री मूलं सर्वक्लेशानाम्, इत्येष हेतुः, फलन्तु = यमाश्रित्य यस्य प्रत्युत्पन्नता धर्मादेः; न ह्यपूर्वोपजनः, मनस्तु साधिकारमाश्रयो वासनानाम्; न ह्यवसिताधिकारे मनसि निराश्रया वासनाः स्थातुमुत्सहन्ते, यदभिमुखीभूतं वस्तु यां वासनां व्यनक्ति त**

भास्वती।

त्युत्पन्नता वर्त्तमानता स्मृतिरूपं तत्फलं वासनानाम्, स्मृत्युद्भवस्तु सत एव व्यक्तता नासत उपजनः, एवं स्मृतिरूपफलाद् वासनासंग्रहः, आलम्बनं वासनानां विषयाः, श-

तत्त्ववैशारदी।

यत इत्यत आह—"हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः" इति, अनादेरपि समुच्छेदो दृष्टः, तद् यथाऽनागतत्वस्येति सव्यभिचारत्वादसाधनं, चितिशक्तिस्तु विनाशकारणाभावान्न विनश्यति, न त्वनादित्वाद्, उक्तं च वासनानामनादीनामपि समुच्छेदः कारणंसूत्रेणेति, अनुग्रहोपघातावपि धर्माधर्मादिनिमित्तमुपलक्षयतः, तेन सुरापानादयोऽपि संगृहीता भवन्ति, नेत्री नायिका, अत्रैव हेतुमाह—"मूलम्" इति, प्रत्युत्पन्नता वर्त्तमानता न तु धर्म-

पातञ्जलरहस्यम्।

इति षडरा अविद्या, तदाह-प्रवृत्तमिदं षडरं संसारचक्रमिति, हेतुपदं व्याख्याय फलमाचष्टे—फलमिति, पुण्यो वै पुण्येन कर्मणा भवतीति श्रुतिमाश्रित्याह—न हीति, सर्वस्य शशविषाणादेरिवासतो नोपजनो जन्मेत्यर्थः, हेतुफले व्याख्याय कामः संकल्पो विचिकित्सा श्रद्धा धृतिरधृतिरेतत्सर्वं मन एवेति श्रुतिमाश्रित्याश्रयपदं व्याकरोति—मनस्त्वति, उपप-

वार्त्तिकम्।

स्यापि हेतुरविद्येत्यतोऽविद्यैव हेतुशब्दार्थ इत्याह—हेतुरित्यादिना—इत्येष हेतुरित्यन्तेन, हेतुः संसारचक्रमित्यन्वयः, संसारचक्रस्य ज्ञानकर्मवासनाहेतुत्वे हेतुगर्भविशेषणं प्रवृत्तमिदं षडरमिति, धर्माधर्मसुखदुःखरागद्वेषरूपेणारषट्केणाविद्यादण्डप्रेरितेन भ्रमितं भवतीत्यतो वासनाहेतुरित्यर्थः, कुलालचक्रस्य हि दण्डेन शलाकाप्रेरणे कृते वेगाख्यः संस्कारो भवति येन कियत्कालं स्वयमपि भ्रमति तद्वदेव भ्रामितं संसारचक्रं वासनाहेतुरिति भावः, चक्रप्रवर्त्तकं दण्डमाह—अस्य चेति। नेत्री भ्रामिका तथा च सर्ववासनोदयेऽविद्यैव मूलकारणम्, अविद्याक्षये च विहितनिषिद्धकर्मणां सत्त्वेऽपि संसारचक्रभ्रमणान्न वासनोदय इत्याशयः, हेतुमुपसंहरति—इत्येव हेतुरिति। अविद्या हेतुर्वासनाया इत्यर्थः, फलं त्विति। यं पुरुषार्थमुद्दिश्य धर्माद्युत्पन्नं तदेव वासनानामपि फलं कर्मवासनयोरन्योन्यसहकारित्वादित्यर्थः, ननु फलेन कथं कारणस्य नियमरूपः संग्रहः कथं वा फलाभावे कारणाभावः फलाभावकालेऽपि कारणस्य सत्त्वादित्याशङ्कायामाह—न ह्यपूर्वोपजन इति। अपूर्वस्य सत उपजनो जन्म हि नास्तीत्यर्थः, तथा सत्कार्यस्वीकारेणानागतावस्थफलेन व्याप्तो वर्त्तमानहेतुभवस्थेवेति भावः, आश्रयमाह—मनस्त्विति। साधिकारं पुरुषार्थवत्, अत्र प्रलये वासनासत्त्वस्यानुच्छेदेन वासनाऽऽश्रयमनसो नित्यत्वमभिप्रेत्य साधिकारमिति विशेषणम् अन्यथाऽधिकारसमाप्तौ मन एव न तिष्ठतीति विशेषणं व्यर्थमिति, आलम्बनमाह—यदभिमुखमिति। मोक्षकाले कामिनीरूपादीनां रागवासनाव्यञ्जकानां सत्त्वेऽप्यालम्बनाभावोपपादनायाभिमुखमिति विशेषणं तथा च सन्निकृष्टं वासनाव्यञ्जकमत्रालम्बनमित्यर्थः, हेत्वादीन् व्याख्याय सूत्रवाक्यार्थमाह—एवमिति। संगृहीताः व्याप्ताः, अत एषामभावेऽत्यन्तोच्छेदे विदेहमुक्तिसमये

स्यास्तदालम्बनम् , एवं हेतुफलाश्रयालम्बनैरेतैः सङ्गृहीताः सर्वा वासनाः, एषामभावे तत्संश्रयाणामपि वासनानामभावः ॥ ११ ॥

नास्त्यसतः सम्भवो, न चास्ति सतो विनाश इति द्रव्यत्वेन सम्भवन्त्यः कथं निवर्त्तिष्यन्ते वासना इति—

## अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद् धर्माणाम् ॥१२॥

भविष्यद्व्यक्तिकमनागतम् , अनुभूतव्यक्तिकमतीतम् , स्वव्यापारोपारू-

भास्वती ।

ढ्ढादिविषयाभिमुखा एव वासना व्यञ्जन्ति, एवं हेत्वादिभिर्वासनासंग्रहस्तदभावे च वासनानामभावः ॥ ११ ॥

नेति । द्रव्यत्वेन सम्भवन्त्यः सत्यो वासनाः, निवर्त्तिष्यन्ते=अभावं प्राप्नुयुः, अभावोऽवर्त्तमानत्वम् , अतीतानागतत्वेन व्यवहार इति यावद् , अतीतानागतलक्षणं-

तत्त्ववैशारदी ।

स्वरूपोत्पादः, अत्रैव हेतुः—"न हि" इति, यदभिमुखोभूतं वस्तु कामिनीसम्पर्कादि, व्यापकाभावे व्याप्यस्याभाव इति सूत्रार्थः ॥ ११ ॥

उत्तरसूत्रमवतारयितुं शङ्कते—"नास्ति" इति, असत इति सम्पातायातं, निदर्शनाय वा, "अतीत—धर्माणाम्", नासतामुत्पादो, न सतां विनाशः, किन्तु सतामेव धर्माणामध्वभेदपरिणाम एवोदयव्ययाविति सूत्रार्थः, अनुभूता प्राप्ता येन व्यक्तिस्तत्तथा, सम्प्रति व्यक्तिर्नास्तीति यावद्, इतश्च त्रैकाल्येऽपि धर्मः सन्नित्याह—"यदि च" इति, न ह्यसज्ज्ञानविषयः सम्भवति निरुपाख्यत्वाद्, विषयावभासं हि विज्ञानं नासति विषये भवति, त्रैकाल्यविषयंच विज्ञानं योगिनां, अस्मदादीनां च विज्ञानमसति विषये नोत्पन्नं स्याद् उपपद्यते च, तस्मादतीतानागते सामान्यरूपेण समनुगते स्त इति, एवमनुभवतो ज्ञानं विषयसत्त्वे हेतुरुक्तम् , उद्देश्यत्वादप्यनागतस्य विषयत्वेन सत्त्वमेवेत्याह—"किञ्च भोगभागीयस्य" इति,

पातञ्जलरहस्यम् ।

त्तिमाह-न हीति, अवसिताधिकारे भोगजनक इत्यर्थः, उपसंहरति-एवमिति, हेत्वादिचतुर्भिः संगृहीतो व्यासः, एषां चतुर्णां जनकानामभावे तदभावो वासनाऽभाव इति सूत्रार्थः ॥११॥

अर्थेनैव विशेषो हि निराकारतया धिया-
मित्युक्तेः ज्ञानं च निर्विषयं चेति दुर्घटमिति,

तेषां विषयान् सूत्रारूढान् करोति,-अतीतेति, पदकृत्यमाह-भविष्यदिति, ज्ञानज्ञेय-

वार्त्तिकम् ।

तदाश्रयाणां तन्नियतानां वासनानामत्यन्तोच्छेद इत्यर्थः तथा च वासनानामनादित्वेऽपि मोक्षः संभवतीत्याशयः ॥ ११ ॥

सत्कार्याभ्युपगमाद् वासनानामत्यन्तोच्छेदो न संभवतीति शङ्कयोत्तरसूत्रमवतारयति-नास्तीति । द्रव्यत्वेन संभवन्त्यः वस्तुत्वेन तिष्ठन्त्यः,

"अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्" भवेदप्ययं दोषो यदि स्वरूपापायो वासनानामस्माभिरुच्येत किं त्वत्यन्तातीततामात्रं यतोऽतीतानागतं वस्तु स्वरूपतोऽस्ति. नन्वेकदा विरुध्यमानानां धर्माणां कथमेकत्र सत्ता घटेत तत्राह—अध्वभेदाद्धर्माणामिति । भिन्नाध्वकत्वादविरोध इत्यर्थः, वर्त्तमानलक्षणानामेव धर्माणाम् एकदा विरोध इति भावः, अतीतानागतयोः स्वरूपानपाये प्रमाणं दर्शयति भाष्यकारः,—भविष्यदिति । भविष्यन्ती व्यक्तिरभिव्यक्तिर्यस्य तत्तथा, अयमिति । अयमप्येतद्वस्तु स्वरूपमद् यतो योगिनां प्रत्य

दं वर्त्तमानं, त्रयं चैतद्वस्तु ज्ञानस्य ज्ञेयं, यदि चैतत्स्वरूपतो नाभविष्यन्नेदं निर्विषयं ज्ञानमुदपत्स्यत, तस्मादतीतानागतं स्वरूपतोऽस्तीति, किञ्च भोगभागीयस्य वाऽपवर्गभागीयस्य वा कर्मणः फलमुत्पित्सु यदि निरुपाख्यमिति तदुद्देशेन तेन निमित्तेन कुशलानुष्ठानं न युज्येत, सतश्च फलस्य निमित्तं वर्त्तमानीकरणे समर्थं, नापूर्वोपजनने, सिद्धं निमित्तं नैमित्तिकस्य विशेषानुग्रहणं कुरुते, नापूर्वमुत्पादयति, धर्मी चानेकधर्मस्वभावः तस्य

भास्वती ।

वस्तु स्वरूपतः = स्वविशेषरूपतोऽस्ति, अध्वभेदात् काललक्षणभेदाद् धर्माणां कारणसंसृष्टरूपेण वर्त्तमानानामेव तथा व्यवहार इति सूत्रार्थः, भविष्यदिति । निर्विषयं ज्ञानं न भवेदिति सर्वं ज्ञानस्य विषयः स्यात्, तस्मादतीतानागतसाक्षात्कारस्यास्ति विशेषविषयः, तद्विषयस्यागोचरत्वाल्लौकिकैरध्वभेदेन लक्षित्वा व्यवह्रियते, किञ्चेति कर्मण उत्पित्सु फलमुत्पत्स्यमानं फलमित्यर्थः, यदि निरुपाख्यमसत् तदा तदुद्देशेन कुशलस्यानुष्ठानं न युक्तियुक्तं भवेत्, सिद्धं = वर्त्तमानं निमित्तं नैमित्तिकस्य विशेषानुग्रहणम् = अभिव्यक्ति-

तत्त्ववैशारदी ।

कुशलः निपुणः, अनुष्ठेयेऽपि च यद् यन्निमित्तं तत्सर्वं नैमित्तिके सत्येव विशेषमाधत्ते, यथा काण्डलाववेदाध्यायादय' न खल्वेते काण्डलावादयोऽसन्तमुत्पादयन्ति, सत एव तत्प्राप्तिविकारौ कुर्वन्ति, एवं कुलालादयोऽपि सत एव घटस्य वर्त्तमानभावहेतव इत्याह—"सतश्च" इति, यदि तु वर्त्तमानत्वाभावादतीतानागतयोरसत्त्वं हन्त भो वर्त्तमानस्याप्यभावा-

पातञ्जलरहस्यम् ।

योरविनाभावमाह—फलमिति, कार्यं हि कारणाधीनं तन्निरुपाख्यं गगनकमलिनीकल्पं चेदभ्रान्तानामनुष्ठानं क्रिया कुतस्त्येत्यर्थः, निमित्तं यदि धर्मी, नापूर्वमुत्पद्यतेऽसतो-

वार्त्तिकम् ।

ज्ञानस्य ज्ञेयं विषयः, अत्र तर्कमाह—यदि चेति । नेदमिति । शशशृङ्गादीनां ज्ञानादर्शनादिति भावः, तथा चोक्तं ब्रह्ममीमांसासूत्रेण 'नाभाव उपलब्धे' रिति, ननु शुक्तिरजतादिवद् बुद्धिपरिणामविशेष एव योगजधर्मादिजन्योऽतीतादिस्थले साक्षिज्ञानविषयोऽस्त्विति चेन्न-योगिना पूर्वानुभूतातीतादेः कालान्तरेऽपि प्रत्यभिज्ञायमानत्वात्, बाधकाभावेऽपि वस्तूनां बुद्धिमात्रत्वे वर्त्तमानावस्थवस्तूनामपि बुद्धिमात्रताप्रसङ्गाच्च, न चानुपलम्भो बाधकः, योगिप्रत्यक्षसिद्धस्य सौक्ष्म्येणानुपलम्भोपपत्तेः, तथा च सांख्यसूत्रं सौक्ष्म्यात्तदनुपलब्धि' रिति, नन्वतीताद्यवस्थायां नास्तीतिप्रत्ययो बाधक इति, मैवम्-योगिप्रत्यक्षेण लौकिकप्रत्यक्षस्य बाधनाद् इदानीं घटोऽस्तीत इत्यादिप्रतीतिबलाद् नास्तीतिप्रत्ययस्यातीतताऽऽदिविषयकत्वाच्चेति, अतीतानागतसत्त्वस्वीकारे बीजान्तरमाह-किं चेति। भोगभागीयस्य भोगसाधनस्य, निरुपाख्यमसत् तदुद्देशेनेत्यस्य विवरणं तेन निमित्तेनेति कुशलो निपुणः, कुशलो योगी-अनागतं साक्षात्कृत्य तद्वर्त्तमानत्वाय यतते यथाऽर्जुनः कृष्णशरीरे कालात्मके भीष्मादिप्रवेशं भाविनं दृष्ट्वा युद्धे प्रवृत्त इति, नन्वेवं कारणव्यापारो विफलः कार्यस्य नित्यत्वादित्याशङ्कां परिहरन्नेव परमते दूषणान्तरमाह—सतश्चेति । तथा चाव्यक्तावस्थया सतो वर्त्तमानतायां कारणव्यापारसाफल्यं, दृष्टं च कारणव्यापारेण सदेवाभिव्यज्यत इति यथा पाषाणेषु सतामेव प्रतिमापद्मादीनां लौकिकव्यापारेणाभिव्यक्तिमात्रमिति, तदुक्तं वासिष्ठे-

सुषुप्तावस्थया चक्रपद्मरेखा शिलोदरे ।
यथा स्थिता चितेरन्तस्तथेयं जगदावली ॥ इति,

चाध्वभेदेन धर्माः प्रत्यवस्थिताः, न च यथा वर्त्तमानं व्यक्तिविशेषापन्नं द्रव्यतोऽस्त्येवमतीतमनागतं वा, कथन्तर्हि-स्वेनैव व्यङ्ग्येन स्वरूपेणानागतमस्ति, स्वेन चानुभूतव्यक्तिकेन स्वरूपेणातीतमिति, वर्त्तमानस्यैवाध्वनः, स्वरूपव्यक्तिरिति न सा भवत्यतीतानागतयोरध्वनोः, एकस्य चाध्वनः समये द्वावध्वानौ धर्मिसमन्वागतौ भवत एवेति नाभूत्वा भावस्त्रयाणामध्वनामिति ॥ १२ ॥

## ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥

भास्वती ।

रूपविशेषावस्थाप्रापणं कुरुते, धर्मीति । धर्माः प्रत्यवस्थिताः = प्रत्येकं धर्मा अवस्थिताः, वर्त्तमानं व्यक्तिविशेषापन्नं = धर्मिणो विशिष्टा या व्यक्तिस्तत्सम्पन्नं द्रव्यतः = गृह्यमाणस्वरूपतोऽस्ति तथाऽतीतमनागतं वा द्रव्यं न व्यक्तिविशेषापन्नम् , एकस्य वर्त्तमानाध्वनः समये, धर्मिसमन्वागतौ = धर्मिणि संसृष्टौ, नाभूत्वा = सत्त्वादेवेत्यर्थः, भावरूपाणामध्वनां नासत्त्वादित्यर्थः ॥ १२ ॥

त इति । सूक्ष्मात्मानः = अतीतानागतानां षोडशविकारधर्माणां सूक्ष्मस्वरूपाणि

तत्त्ववैशारदी ।

ऽतीतानागतत्वाभावाद् , अध्वधर्म्यविशिष्टतया तु सत्त्वं त्रयाणामप्यविशिष्टमित्यभिप्रायेणाह—"धर्मी च" इति, प्रत्येकमवस्थानं प्रत्यवस्थितिरिति, 'द्रव्यत' इति—द्रव्ये धर्मिणि, सार्वविभक्तिकस्तसिः, यद्यतीतानागतावतीतानागतत्वेन स्तस्तर्हि वर्त्तमानसमये तत्त्वाभावान्न स्यातामित्यत आह-"एकस्य च" इति, प्रकृतमुपसंहरति-"नाभूत्वा भाव" इति १२

स्यादेतद्—अयन्तु नानाप्रकारो धर्मिधर्मावस्थापरिणामरूपो विश्वभेदप्रपञ्चो न प्रधानादेकस्माद् भवितुमर्हति, न ह्यविलक्षणात्कारणात्कार्यभेदसम्भव इत्यत आह—"ते व्यक्त-

पातञ्जलरहस्यम् ।

नरविषाणादेरुपजनप्रसक्तेः, एतदेवाह-निमित्तमिति, सति धर्मिणि धर्मचिन्तेति न्यायादाह—धर्मी चेति,यदि क्षणिकं वार्तमानिकं सर्वं तदा तद्भेदाभावः प्राप्त इत्याह—तस्य चेति, इष्टापत्तिं धुनीते—न,सेति, इत्युपसंहारे नाभावो विद्यते सत इति स्मृतेः ॥ १२ ॥

वार्तिकम्

।चैतन्ये च जगदावलो प्रकृतिपुरुषयःस्तप्तायःपिण्डवदविवेकेन प्रकृतिद्वारापासनार्था श्रुतिस्मृत्योरुच्यते सर्वकर्तृत्वसत्यसंकल्पत्वादिवद् अथ वा गगने वायोरिवाधारत्वमसङ्गेऽनेनैव चैतन्ये जगत उच्यत इति, ननु तथाऽपि कारणनित्यत्वेनातीताद्यवस्थादपि कारणात्सदैव कार्याभिव्यक्तिः स्यात् , तत्राह—सिद्धमिति । सिद्धं वर्त्तमानमेव निमित्तमित्यादिरर्थः, सतः कार्यस्योत्पत्तौ कारणवैफल्यशङ्कानिरासायोक्तं विशेषानुग्रहणमिति, परमतं निषेधात—नापूर्वेति, अतो नापूर्वमुत्पादयतीत्यर्थः, अपूर्वोत्पादने च शशशृङ्गाद्यपि कारणव्यापारादुत्पद्येत,उत्पत्तेः प्राक् शशशृङ्गादिभ्यो घटादीनां वैलक्षण्याभावादिति, अधिकं तु प्रागुक्तम् , अध्वभेदादिति सूत्रावयवं व्याचष्टे—धर्मी चानेकेति । अतो न विरोध इत्याह—न चेति । अभिव्यक्तिरूपेण विशेषणेनैव धर्माणां विरोधो न स्वरूपत इति वाक्यार्थः, द्रव्यतः स्वक्रियाकारित्वेन, पृच्छति कथं तर्हीति । उत्तरं-स्वेनैवेति। व्यङ्ग्येन भाविव्यक्तिकेन वर्त्तमानस्यैवेत्यादिरध्वनोरित्यन्त उपसंहारः, षष्ठी चात्र सप्तम्यर्थे, ननु तथाऽप्येकाध्वसमयेऽपराध्वाभावादध्वन्येव सत्कार्यहानिरित्याशङ्कायामाह—एकस्य चाध्वन इति । एतच्च एतेन भूतेन्द्रियेष्वित्यादिसूत्रे सम्यगुपपादितमस्माभिरिति, अभूत्वा = अस्थित्वा, त्रयाणामध्वनां लक्षणानामिति ॥ १२ ॥

ते खल्वमी त्र्यध्वानो धर्मा वर्त्तमाना व्यक्तात्मानोऽतीतानागताः सूक्ष्मात्मानः षडविशेषरूपाः, सर्वमिदं गुणानां सन्निवेशविशेषमात्रमिति, परमार्थतो गुणात्मानः, तथा च शास्त्रानुशासनं—

भास्वती।

षडविशेषास्तन्मात्रास्मितारूपाः, षष्टितन्त्रानुशासनमत्र गुणानामिति, परमं रूपं मूलरूप-

तत्त्ववैशारदी।

सूक्ष्मा गुणात्मानः" ते = त्र्यध्वानो धर्मा व्यक्ताश्च सूक्ष्माश्च गुणात्मानो, न त्रैगुण्यातिरिक्तमेषामस्ति कारणम्, वैचित्र्यन्तु तत्सहितानादिक्लेशवासनाऽनुगताद्वैचित्र्यात्, यथोक्तं वायुपुराणे—

"वैषरूप्यात् प्रधानस्य परिणामोऽयमद्भुत" इति,

व्यक्तानां पृथिव्यादीनामेकादशेन्द्रियाणां च वर्त्तमानानामतीतानागतत्वं षडविशेषा यथायोगं भवन्ति, सम्प्रति विश्वस्य नित्यानित्यरूपे विभजन् नित्यरूपमाह—"सर्वमिदम्" इति। इदं = दृश्यमानं, सन्निवेशः = संस्थानभेदवान् परिणाम इत्यर्थः, अत्रैव षष्टितन्त्रशास्त्रस्यानुशिष्टिः—मायेव तु न माया, सुतुच्छकं = विनाशि, यथा हि मायाऽत्यर्थैवापातरमणीयम्।

यथा वारिदमुक्तमुदकं सहकारिभेदान्नानारसं तथा प्रधानमिति सूत्रारूढं कुर्वन्नाह—ते व्यक्तेति, गुणानां सन्निवेशः साम्यावस्था प्रधानं तस्य विशेषो भेदमात्रं बीजस्याङ्कुरादीत्यर्थं सम्मतिमाह—न दृष्टिपथमृच्छति, न साक्षाद्; यदपि तत्कार्यं साक्षात्कृतं तदपि मरीच्युदकवदलीकमित्याह—सुतुच्छकमिति, षष्टितन्त्रस्य सांख्यशास्त्रस्य, मायेव न तु मायेत्यनेवार्त्तिकम्।

तदेवं मोक्षयोग्यं चित्तं तदन्यचित्तानां बन्धप्रकार उक्तस्तस्य च मोक्षानुपपत्तिः परिहृता इतः परं मोक्षकारणस्य विवेकज्ञानाख्यसम्यग्ज्ञानस्य विषयो लक्षणादिकं चातिविस्तरेण प्रतिपादनीयं विशेषदर्शिन इत्यादिसूत्रत्रयपर्यन्तैः सूत्रैः, तत्र चादौ सदसत्त्ववैधर्म्येण कार्यकारणयोर्विवेकं सम्यग्ज्ञानविषयकदेशं दर्शयति—

"ते व्यक्तसूक्ष्मा गुणात्मानः" ते धर्मा यद्यपि नित्यास्तथाऽपि कालभेदेन व्यक्ताः सूक्ष्मा वा भवन्तु सर्वे एव गुणात्मानः सत्त्वादिगुणमात्रस्वरूपा एव भवन्ति सदा वर्त्तमानत्वेन गुणा एव तदपेक्षया सत्या इत्यर्थः, व्याचष्टे—ते खल्विति, अत्र सूक्ष्मात्मान इत्यस्यानन्तरं षडविशेषा इति पाठः क्वचित्तिष्ठति स तु प्रामादिकत्वादुपेक्षणीयः, सर्वविकाराणामेव गुणात्मकत्वस्य वक्तव्यतया षडविशेषमात्रनिर्देशानौचित्यादिति, अयमर्थः—ते धर्मा व्यक्तस्वरूपाः सूक्ष्मस्वरूपाश्च महदादिघटपटान्ताः परमार्थतो गुणात्मानो गुणरूपेणैव सन्तो न तु स्वरूपेण यतः सर्वमिदं धर्मजातं सत्त्वादीनां संनिवेशः संयोगस्तद्विशेषमात्रं तद्विलये विलयात् तद्वर्त्तमानतायां वर्त्तमानत्वात्तन्नियतमिति, तदुक्तम्—आद्यन्तयोर्यदसदस्ति तदेव मध्य इति त्रिगुणात्मकमायैव जगत्परमार्थ इति च, अपारमार्थिकत्वं चानित्यतामात्ररूपास्त्वम् अन्यथा सृष्ट्यादिप्रतिपादकसूत्रादिविरोधात्, अत्रावयवसंयोगातिरिक्तो धर्मो नास्तीति न भाष्यार्थः, अवयविद्रव्यस्यातिरिक्तस्य स्थाने स्थाने व्यवस्थापितत्वादिति, उक्तार्थे शास्त्रं प्रमाणयति—तथा चेति, परमं पारमार्थिकं नित्यमिति यावत्, मायेव लौकिकमायावत् क्षणभङ्गुरम् अतः सुतुच्छकम् अत्यन्ततुच्छम् अल्पसारं स्थिरांशाभावादिति, अत्र सुशब्देन परिणामितया गुणानामपि तुच्छत्वं सूचितं गुणा एव परिणामितया कूटस्थनित्यापेक्षया तुच्छाः, गुणकार्यं तु दृश्यमानं गुणापेक्षयाऽपि तुच्छम्, अतः सुतुच्छमिति, यद्यपि मायाशब्दो मिथ्यावस्तूनां कारणे मुख्यः 'मायां तु प्रकृतिं विद्यादि'ति श्रुतेः, 'विश्वस्य बीजं परमास माये'तिस्मृतेश्च, मायात्वं हि मृषाविकारेण व्यामोहकत्वं तच्च प्रकृतावेव मुख्यं—

"गुणानां परमं रूपं न दृष्टिपथमृच्छति,
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्" इति ॥ १३ ॥

यदा तु सर्वे गुणाः कथमेकः शब्द एकमिन्द्रियमिति—

**परिणामैकत्वाद् वस्तुतत्त्वम् ॥ १४ ॥**

भास्वती ।

मव्यक्तावस्था न दृष्टिपथमृच्छति=गच्छति, व्यक्तं दृष्टिपथं प्राप्तं यद् गुणरूपं तद् मायेव सुतुच्छकं मायया प्रदर्शितं प्रपञ्चं यथा तुच्छं तथेति ॥ १३ ॥

यदेति । सर्वे = त्रय इत्यर्थः, गुणाः कथं तेषां परिणाम एकत्वव्यवहारः, परस्पराङ्गा-

तत्त्ववैशारदी ।

न्यथा भवति, एवं विकारा अप्याविर्भावतिरोभावधर्माणः प्रतिक्षणमन्यथा प्रकृतिर्नित्यतया-मायाविधर्मेण परमार्थेति ॥ १३ ॥

भवतु त्रैगुण्यस्येत्थं परिणामवैचित्र्यमेकस्तु परिणामः पृथिवीयमिति वा तोयमिति वा कुतः, त्र्यात्मन एकत्वविरोधादित्याशङ्क्य सूत्रमवतारयति—"यदा तु सर्वे गुणा" इति

पातञ्जलरहस्यम् ।

न लक्षणपरिणामित्वं दर्शितम्, एतदेवाह—यथेति, एवं विषल्याक्रियाकारित्वेन मायातो वैलक्षण्यमाह—मायाविधर्मेणेति ॥ १३ ॥

न हि तृणसूत्रकपालानामेकं कार्यं दृष्टमपि तु त्रितयं तद्वद् गुणानामेकं कार्यं कथं स्यादि-

वार्त्तिकम् ।

'प्रकृत्या सर्वमेवेदं जगदन्धीकृतं विभो'रिति,
'जगन्मोहात्मकं विद्धि अव्यक्तं व्यक्तसंज्ञक'मिति,

भारतात्, तथाऽपि कार्यकारणाभेदान्मायाशब्दः कार्येऽपि प्रयुक्तः—

'दैवी ह्येषा गुणमयी मम माया दुरत्यया'

इत्यादाविवेति मन्तव्यम् ननैवं प्रपञ्चोऽपि प्रकृत्याख्यमूलमायाकार्यत्वान्मायैव; अन्यथा

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
मूलमायाऽभिधानं तस्या शक्तिमेधि तिष्ठति ॥

इति कौमोदिषु मूलेतिविशेषणवैयर्थ्यात्, तत् कथमिवशब्दः प्रयुक्त इति, मैवम्—लौकिकस्येन्द्रजालादेरत्र दृष्टान्तत्वेनेवशब्दो नित्यादिनि, प्रपञ्चस्य मूलकारणमात्रत्वे श्रुतिरपि 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्यादिरिहाहर्त्तव्या, तथा विष्णुपुराणमपि—

शिबिका दण्डसंघातो रचना स्थितिसंस्थितिः ।
अन्विष्यतां नृपश्रेष्ठ ! तद्भेदे शिबिका त्वया ॥
एवं छत्रशलाकादिपृथग्भावो विमृश्यताम् ।
क जातं छत्रमित्येष न्यायस्त्वयि तथा मयि ॥

इत्यादि, एवंविधेषु च वाक्येषु विकाराणामनित्यतयैव विवेकवैराग्ययोस्तात्पर्यं न तु कार्यखण्डने कार्यकारणभावप्रतिपादकवाक्यविरोधात्, न च तदनुवादमात्रं महदादिसृष्टेर्लौकिकप्रमाणानधिगतत्वेन अनुवादासंभवात्, प्रमाणान्तरसत्त्वे च तेन सहापि विरोधस्यान्याय्यत्वात्, किं च सर्वविकारस्य मिथ्यात्वे प्रमाणस्यापि मिथ्यात्वनिश्चयेन श्रुतिप्रमाणावधृतेऽपि कारणत्वाभिमतब्रह्मादौ पुनः संशयः स्यात् प्रामाण्यसंशयाद्धितार्थसंशयादिवदिति दिक् ॥ १३ ॥

सूत्रान्तरमवतारयति—यदेति, यदि सर्वे विकारा अनेकगुणमात्राः तदा कथमेकं शब्दत-

प्रख्याक्रियास्थितिशीलानां गुणानां ग्रहणात्मकानां करणभावेनैकः परिणामः श्रोत्रमिन्द्रियं, ग्राह्यात्मकानां शब्दभावेनैकः परिणामः शब्दो विषय इति, शब्दादीनां मूर्त्तिसमानजातीयानामेकः परिणामः पृथिवीपरमाणुस्तन्मात्रावयवः, तेषां चैकः परिणामः पृथिवी-"गौर्वृक्षः पर्वत इत्येवमादिः,

भास्वती।

ङ्गित्वेन परिणामजननस्वभावात् परिणामभूतानां वस्तूनां तत्त्वमेकमिति व्यवहारः, प्रख्येति। ग्रहणात्मकानां = ग्रहणतत्त्वोपादानभूतानाम् , शब्दादीनामिति शब्दादीनां प्रत्येकं शब्दादितन्मात्राणां तत्र मूर्त्तिसमानजातीयानाम् = पृथिवीत्वसजातीयानाम् , एकः परिणामस्तन्मात्रावयवः=गन्धतन्मात्ररूपो गन्धपरमाणुः, गन्धतन्मात्रमवयवो यस्य

तत्त्ववैशारदी।

"परिणामैकत्वाद् वस्तुतत्त्वम् " बहूनामप्येकः परिणामो दृष्टः, तद् यथा गवाश्वमहिषमातङ्गानां रुमानिक्षिप्तानामेको लवणत्वजातीयलक्षणः परिणामः, वर्त्तितैलानलानां च प्रदीप इति, एवं बहुत्वेऽपि गुणानां परिणामैकत्वं, ततस्तन्मात्रभूतभौतिकानां प्रत्येकं तत्त्वमेक-

पातञ्जलरहस्यम्

त्याशङ्क्य सूत्रेण समाधत्ते-परिणामैकत्वाद्वस्तुतत्त्वमिति, रुमा लवणभूमिस्तत्र क्षिप्तानां गवादीनां विजातीयानामेकजातीयो लवणरसः, एवं प्रकाशादिगुणत्रयाणां ग्रहणात्मनेन्द्रियेण श्रोत्रं ग्राह्यात्मना विषयरूपेण शब्दः रजोऽत्र प्रवृत्तिहेतुः, एवं गन्धादितन्मात्रपञ्चकस्य भूमिरेकं कार्यम् , एवमन्यत्रोदाहरणीम् ,

वार्त्तिकम्।

न्मात्रम् एकं चक्षुरिति लोकशास्त्रयोर्व्यवहार इति शङ्कावाक्यार्थः, तत्र सिद्धान्तसूत्रम्—

परिणामैकत्वाद्वस्तुतत्त्वम्, परिणामस्यैकत्वाद्वस्तूनां गुणानां तत्त्वमेकत्वमिति योजना, परमार्थतो नानात्वेऽपि व्यावहारिकेणानित्येन परिणामरूपेण वस्तूनां गुणानामेकत्वव्यवहार इत्यर्थः, अत एव श्रुतिर्व्यावहारिकस्याग्न्याद्यवयविन एकस्यावयवविभागे सति नानात्वमेव पारमार्थिकमुक्तवती 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यमि'ति, परिणामस्यैकत्वं भाष्यकारो दर्शयति—प्रख्येति, ग्रहणात्मकानां सात्त्विकान्तःकरणरूपेण परिणतानां बाह्यकरणभावेन श्रोत्रमित्येकः परिणाम इत्यर्थः, तेन महदहंकाररूपेणापि परिणामैकत्वकथनाच्च न्यूनता, अत्र श्रोत्रशब्देनान्यान्यपि ज्ञानेन्द्रियाण्युपलक्षणीयानि, ग्राह्यात्मकानामिति—तामसान्तःकरणरूपेण परिणतानामित्यर्थः, अत्र शब्द इति, शब्दतन्मात्ररूपं द्रव्यं मूर्त्तिसमानजातीयानामित्यागामिभाष्येण द्रव्यत्वलाभात , एतदपि रसादितन्मात्राणामुपलक्षणम् , एवं कर्मात्मकानां राजसान्तःकरणरूपेण परिणतानां कारणान्तर्भावेनैकैकः परिणामो वागादीन्द्रियमित्यपि बोध्यम्, अतः परं स्थूलभूतरूपेणैकं परिणामं दर्शयति—शब्दादीनामिति, मूर्त्तिः काठिन्यं पृथिवीत्वमिति यावत् , मूर्त्या सजातीयानां शब्दादितन्मात्राणाम् एकः परिणामः पृथिवीपरमाणुः स्थूलपृथिव्याः परमसूक्ष्मावस्थेत्यर्थः, इदं चाग्रे प्रतिपादयिष्यामः, अयमेव सूक्ष्मशब्देन सांख्ये प्रोक्तः—

'सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्यु'रित्यत्र,

अयं च परमाणुर्नैयायिकैस्त्रसरेणुशब्देनोच्यते, अस्माभिस्तु प्रत्यक्षपृथिव्याः परमसूक्ष्मत्वात्पृथिवीपरमाणुरिति गुणेषु पृथिवीत्वादिव्यवहाराभावेनाणुत्वेऽपि न पृथिव्यामणुत्वव्यवहार इति तस्य च पार्थिवपरमाणोर्निरवयवत्वभ्रमनिरासाय पञ्चतन्मात्राण्येवावयवा इत्या-

-तन्मात्रावयव इति बहुव्रीहिविग्रहः, महाभूतादिरूपपरिणामेष्वप्येकत्वं दर्शयति—

भूतान्तरेष्वपि स्नेहौष्ण्यप्रणामित्वावकाशदानान्युपादाय सामान्यमेकवि-

भास्वती ।

तादृशावयवः पृथिवीपरमाणुः=भूतरूपस्य पृथिवीतत्त्वस्य गन्धतन्मात्रजाता अणवो येषां-समष्टिः क्षितिभूततत्त्वम् , तात्त्विकक्षितिभूताणूनां तेषां गन्धधर्मकाणामेकः परिणामो-भौतिकी संहता पृथिवी तथा गौर्वृक्षः पर्वत इत्येवमादिः, अन्येषामपि भूतानां स्नेहादि-धर्मानुपादाय=गृहीत्वा, अनेकेषां धर्मभूतं सामान्यम्=एकत्वमित्यर्थः, तथा चैकारम्भ एवं-समाधेयः=उपपादनीयः, यथा रसपरमाणूनामेको विकारो रसलक्षणमब्भूतं तस्य च स्नेह-

तत्त्ववैशारदी।

त्वम् ग्रहणात्मकानां=सत्त्वप्रधानतया प्रकाशात्मनामहङ्कारावान्तरकार्य्याणां करणभावे-नैकः परिणामः श्रोत्रमिन्द्रियम् , तेषामेव गुणानां तमःप्रधानतया जडत्वेन ग्राह्यात्मकानां-शब्दतन्मात्रभावेनैकः परिणामः शब्दो विषयः, शब्द इति=शब्दतन्मात्रं, विषय इति जडत्वमाह–न तु तन्मात्रस्य श्रोत्रविषयत्वसम्भव इति, शेषं सुगमम् , अथ विज्ञानवादिनं-

पातञ्जलरहस्यम् ।

सहोपलम्भनियमादभेदो नीलतद्धियो-

रित्युक्तेः—

सर्वे प्रत्यया निरालम्बनाः प्रत्ययत्वात् स्वप्नप्रत्ययवदित्यादितर्कमादाय बौद्धः शङ्कते-नास्त्यर्थो विज्ञानविसहचरः विज्ञानातिरिक्तः, अनया दिशा प्रकारेण, क्षणमात्रवर्तिनां प्रत्य-यानां परस्य वार्ताऽनभिज्ञत्वेन संवादकाभावात् सोऽयमिति प्रत्यभिज्ञाऽनुपपत्तिरित्या-

वार्त्तिकम् ।

तेषामिति । एवमिति । एवं भूतान्तरेष्वपि जलादिषु स्नेहादिजातीयानि जलत्वतेज-स्त्ववायुत्वाकाशत्वजातीयानि तन्मात्राणि गृहीत्वा सामान्यं सजातीयानामनेकेषां धर्म-भूत एकविकारारम्भ उपपादनीय इत्यर्थः, तद्यथा गन्धतन्मात्रं वर्जयित्वा चतुस्तन्मात्राणां स्नेहजातीयानाम् एकःपरिणामो जलपरमाणुस्तेषां च महाजलादिः, एवं गन्धरसौ वर्जयित्वा औष्ण्यजातीयानां त्रितन्मात्राणां तेजोऽणुस्तेभ्यो महातेजआदि, एवं गन्धरसरूपाणां-वर्जनाद् द्वाभ्यां वाय्वणुस्तेभ्यो महावाय्वादिः, एवं शब्दतन्मात्रादहङ्कारांशसहकृतादाका-शाणुस्तेभ्यो महाकाशादिरिति, इदमत्रावधेयम्–शब्दादीनां मूर्त्तिसजातीयानामित्यादिवा-क्यादत्र दर्शनेऽयं सिद्धान्तः–शब्दादितन्मात्रपञ्चके काठिन्यस्नेहादिव्यङ्ग्याः पृथिवीत्वा-दिजातयः सन्ति, तत्र पृथिवीजातीयैः शब्दादिगन्धान्तपञ्चतन्मात्रैः पृथिवीपरमाणुरारभ्यते पृथिव्यां पञ्चगुणोपलम्भात्, एवं जलजातीयैः शब्दादिरसपर्यन्तैश्चतुस्तन्मात्रैर्जलपरमाणुः, एवं तेजोजातीयैः शब्दादिरूपान्तत्रितन्मात्रैस्तेजःपरमाणुः, एवं वायुजातीयाभ्यां शब्द-स्पर्शतन्मात्राभ्यां वायुपरमाणुः, एवमाकाशजातीयाच्छब्दतन्मात्रादहङ्कारसहकृतादाकाशा-णुर्जायते, एवं परमाणुगणोत्पत्त्यनन्तरं तेभ्य एवाकाशादिक्रमेण पञ्चमहाभूतान्युत्पद्यन्ते, श्रुतौ चाकाशादिक्रमेण महाभूतोत्पत्तिसिद्धेरिति समानतन्त्रन्यायेन च सांख्येऽपीत्थमेव सिद्धान्त उन्नीयते, विष्णुपुराणादौ तु शब्दतन्मात्रादाकाशमाकाशात् स्पर्शतन्मात्रं तस्माद्वायुरेवं-क्रमेण सृष्टिः स्मर्यते यथा विष्णुपुराणेऽहंकारसृष्ट्यनन्तरम्—

तथा प्रधानेन महान्महता स तथावृतः ।
भूतादिस्तु विकुर्वाणः सर्गं तन्मात्रिकं ततः ॥
ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ।
शब्दमात्रं तदाकाशं भूतादिः स समावृणोत् ॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ।
बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः ॥

कारारम्भः समाधेयः, नास्त्यर्थो विज्ञानविसहचरोऽस्ति तु ज्ञानमर्थविसहचरं स्वप्नादौ कल्पितमित्यनया दिशा ये वस्तुस्वरूपमपह्नवते, ज्ञानपरिक-

भास्वती।

धर्मकं पानीयं जलमित्यादि, नास्तीति। विज्ञानविसहचरः=विज्ञानविसंयुक्तः, वस्तुस्वरूपमपह्नुवते-अपलपन्ति, ज्ञानेति। वस्तु न परमार्थतोऽस्तीति ते वदन्ति तेषां तद्वचनादेव वस्तु स्वमाहात्म्येन प्रत्युपतिष्ठते, परमार्थस्तु बाह्यवैराग्यात् सिध्यतीति सर्वसम्मतिः, बाह्यवस्तु चेन्नास्ति तर्हि कथं तत्र वैराग्यं कार्यम्, तच्चेदतद्रूपप्रतिष्ठं तत्राप्यस्ति किञ्चिद्

तत्त्ववैशारदी।

वैनाशिकमुत्थापयति—"नास्त्यर्थो विज्ञानविसहचर" इति, यदि हि भूतभौतिकानि विज्ञानमात्राद् भिन्नानि भवेयुस्तदुत्पत्तिकारणमीदृशं प्रधानं कल्पेत न तु तानि विज्ञानातिरिक्तानि सन्ति परमार्थतः, तत्कथं प्रधानकल्पनं, कथं च ग्रहणानामिन्द्रियाणामहङ्कारविकाराणां कल्पनेति, तथा हि जडस्यार्थस्य स्वयमप्रकाशत्वान्नास्त्यर्थो विज्ञानविसहचरः—साहचर्य्यं—सम्बन्धः, तदभावो विसहचरः, विरभावार्थः, विज्ञानासम्बन्धी नास्तीति-व्यवहारयोग्य इत्यर्थः, अस्ति तु विज्ञानमर्थविसहचरं, तस्य स्वयंप्रकाशत्वेन स्वगोचरास्तिताव्यवहारे कर्त्तव्ये जडमर्थम्प्रत्यपेक्षाऽभावात्, तदनेन वेद्यत्वसहोपलम्भनियमौ सूचितौ विज्ञानवादिना, तौ चवं प्रयोगमारोहतः-यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते यथा ज्ञानस्यात्मा, वेद्यन्ते च भूतभौतिकानीति विरुद्धव्याप्तोपलब्धिः, निषेध्यभेदविरुद्धेन व्याप्तं वेद्यत्वं दृश्यमानं स्वव्यापकमभेदमुपस्थापयत्तद्विरुद्धं भेदं प्रतिक्षिपतीति, तथा यद्येन नियतसहोपलम्भं तत् ततो न भिद्यते यथैकस्माच्चन्द्राद् द्वितीयश्चन्द्रः, नियतसहोपलम्भश्चार्थो ज्ञानेनेति-व्यापकविरुद्धोपलब्धिः निषेध्यभेदव्यापकानियमविरुद्धो नियमोऽनियमं निवर्त्तयंस्तद्व्याप्तं भेदं प्रतिक्षिपतीति, स्यादेतद्-अर्थश्चेन्न भिन्नो ज्ञानात्कथं भिन्नवत्प्रतिभासत इत्यत आह-"कल्पितम्" इति, यथाऽऽहुर्वैनाशिकाः—

सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति,

पातञ्जलरहस्यम्।

ह-हन्तेत्यादि-अहतीत्यन्तेन, स्थौल्यं नाम बहुदेशव्यापित्वं जलाहरणादिसामर्थ्यं वा तत्राद्यं दुर्घटं बहुदेशग्राहकाणि यानि विज्ञानानि क्षणिकत्वेन तेषामयुगपदनुपस्थितेः, कथं-

वार्त्तिकम्।

इत्यादिक्रमेण पञ्चभूतसृष्टिरुक्ता, तस्या अयमर्थः—सोऽहङ्कारो महताऽऽवृत आपूरितः यथा पृथिवी जलेनानुविद्धा भवति तद्वत् ततो महताऽऽपूरणाद् द्वाभ्यां मिलित्वा भूतादिस्तामसाहंकारः तन्मात्रिकं सर्गं तन्मात्राणां सृष्टिं ससर्ज चकार तदनन्तरं स एव भूतादिः शब्दतन्मात्रास्स्वद्वितीयात शब्दगुणकम् आकाशं ससर्जेत्यनुषज्यते तथा चाहङ्कारशब्दतन्मात्राभ्यां मिलित्वाऽऽकाशं सृज्यते न तु तन्मात्रान्तरमपेक्ष्यत इति सिद्धम्, तच्च शब्दगुणकमाकाशं भूतादिनाऽहङ्कारेणापूरितं भूत्वा स्पर्शमात्रं ससर्ज, अत्र चाकाशेऽहङ्कारस्यापि कारणत्ववचनादपरभूतचतुष्केऽपि तत्तन्मात्राणामहङ्कारसहितानामेव हेतुत्वमवगम्यते युक्तिसाम्यात्, एतत्सूचनायैव भूतादिशब्देनाहङ्कारोपन्यासः ततश्च स्पर्शतन्मात्राद् बलवान्महावायुरभवदिति,

एवं क्रमेण तत्तन्मात्राधिक्येन तेजआदिभूतत्रयोत्पत्तिवाक्यान्यपि तत्र व्याख्येयानि, कार्यकारणयोर्विवेकप्रकारः प्रदर्शितः, इदानीं यथोक्तं कार्यकारणरूपं सर्वं वस्त्वसत् चित्तकल्पितमात्रं स्वप्नवदिति य आहुस्तान्निषिध्य चित्ततदर्थयोर्विवेकप्रकारं दर्शयिष्यति सूत्रकारः तत्सूत्रमवतारयितुमुपक्रमते—नास्त्यर्थ इति, विज्ञानवादिन आहुः—बाह्यवस्तुनः प्रातीतिक्येव

ल्पनामात्रं वस्तु स्वप्नविषयोपमं, न परमार्थतोऽस्तीति य आहुः, ते तथेति प्रत्युपस्थितमिदं स्वमाहात्म्येन वस्तु कथमप्रमाणात्मकेन विकल्पज्ञानबलेन

भास्वती ।

द्वस्तु यस्य तद् अनुरूपम्, एवं वस्तु स्वमाहात्म्येन प्रत्युपतिष्ठते, किञ्च न स्वप्नविषयश्चित्तमात्रादेवोत्पद्यते पूर्वानुभूतरूपादिविषयाणामेव तदा कल्पनं स्मरणञ्च, शब्दाद्यनुभवस्त्विन्द्रियद्वारेणोपस्थितबाह्यवस्तुत एव निवर्त्तते, न हि जन्मान्धस्य रूपज्ञानात्मकः स्वप्नो भवति, तस्माद्विषयज्ञानं न चित्तमात्राधीनं किन्तु चित्तव्यतिरिक्तबाह्यवस्तूपरागाच्चेतसि

तत्त्ववैशारदी ।

कल्पितत्वं विशदयति-"ज्ञानपरिकल्पना" इति । निराकरोति-"ते"इति । ते कथं श्रद्धेयवचनाः स्युरितिसम्बन्धः, प्रतिज्ञानमुपस्थितं प्रत्युपस्थितम्, कथं-"तथा"इति । यथा यथाऽवभासत इदङ्कारास्पदत्वेन तथा तथा स्वयमुपस्थितं, न तु कल्पनोपकल्पितं विज्ञानविषयताऽऽपन्नम्, स्वमाहात्म्येनेति कारणत्वं विज्ञानं प्रत्यर्थस्य दर्शयति यस्मादर्थेन स्वकीयया बाह्यशक्त्या विज्ञानमजनि तस्मादर्थस्य ग्राहकं, तदेवम्भूतं वस्तु कथमप्रमाणात्मकेन विकल्पज्ञानबलेन विकल्पस्याप्रमाणात्मकत्वात्तद्बलस्यापि तदात्मनोऽप्रमाणात्मकत्वम्, तेन वस्तुस्वरूपमुत्सृज्य = उपप्लुतं कृत्वाऽपह्नुवतेति काचित्कः पाठः, तत्रापि स एवार्थः, तदेवापलपन्तः श्रद्धातव्यवचनाः स्युरिति, इदमत्राकूतं—सहोपलम्भनियमश्च वेद्यत्वं च हेतू सन्दिग्धव्यतिरेकतयाऽनैकान्तिकौ, तथा हि-ज्ञानाकारस्य भूतभौतिकादेर्यदेतद् बाह्यत्वं स्थूलत्वं च

पातञ्जलरहस्यम् ।

बहुत्वं नाम संख्याविशेषः तस्य व्यासज्यवृत्तित्वात् शक्त्यभावः, स्वयमसिद्धत्वात्, कथं बहुदेशव्यापित्वग्रहः, द्वितीयस्त्वनुपपन्नः-आदौ घट इतिधीस्तत्र तदिष्टसाधनताधी-

वार्त्तिकम् ।

सत्ता परमार्थतस्तु गुणा वा तत्परिणामो वा अतीतादिकं वा किमपि नास्ति--

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥
यथा रथादयः स्वप्ने भान्तीव नैव सन्ति ते ।
तथा जाग्रदवस्थायां भूतानि च न सन्ति वै ॥

इत्यादिश्रुतिस्मृतिपरम्परयैव बाह्यवस्तुनिराकरणात्, तथा युक्तिरप्यस्ति स्वप्नादौ तावत् विषयं विनाऽपि ज्ञानमुभयवादिसिद्धमनुभवविषयत्वं विना हि विषयः परैरपि न स्वीक्रियते, अत उभयवादिसिद्धेन ज्ञानेनैव स्वप्नादिवत्सर्वव्यवहारोपपत्तौ ज्ञानातिरिक्तार्थकल्पने गौरवमिति, तामिमां युक्तिं प्रदर्शयन् स्वमतमुपन्यस्यति—नास्त्यर्थ इत्यादिना, विज्ञानविसहचरो विज्ञानाभावकालीनोऽर्थ उभयसिद्धो नास्ति ज्ञानं त्वर्थाभावकालीनं स्वप्नादौ कल्पितमुभयवादिसिद्धमित्यनया दिशा = एतद्युक्तिमार्गेण ये वस्तुस्वरूपमत्यन्तमपन्हुवते, य इत्याद्यपन्हुवतइत्यन्तं विवृणोति-ज्ञानेत्यादिना-आहुरित्यन्तेन, दिक्शब्दसूचिताश्च पराभिप्रेतश्रुत्यादयः पूर्वोक्ताः तथा युक्त्यन्तराणि च,

सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येत इन्दाविवाद्वय—

इत्यादीनि, तन्मतं स्वप्रमादो निराकरोति—ते तथेति, ते विज्ञानवादिन एवासन्त इत्यर्थः, तत्र हेतुमाह—प्रत्युपस्थितमित्यादिना-स्युरित्यन्तेन, अस्यार्थः-इदं सर्वं वस्तु स्वमाहा-

वस्तुस्वरूपमुत्सृज्य तदेवापलपन्तः श्रद्धेयवचनाः स्युः ॥ १४ ॥

भास्वती।

तदुत्पद्यते, वैनाशिकानामप्रमाणात्मकं वाङ्मात्रसहायं विकल्पज्ञानमेव प्रमाणम्, अत. कथं ते श्रद्धेयवचनाः स्युरिति ॥ १४ ॥

तत्त्ववैशारदी।

भासेते, न ते ज्ञाने सम्भवतः, तथा हि—नानादेशव्यापिता स्थौल्यं, विच्छिन्नदेशता च बाह्यत्वं, न चैकविज्ञानस्य नानादेशव्यापिता विच्छिन्नदेशता चोपपद्यते तद्देशत्वातद्देशत्वलक्षणविरुद्धधर्मसंसर्गस्यैकत्रासम्भवात्, सम्भवे वा त्रैलोक्यस्यैकत्वप्रसङ्गाद् अत एवास्तु विज्ञानभेद इति चेद्, हन्त भोः परमसूक्ष्मगोचराणां प्रत्ययानां परस्परवार्त्ताऽनभिज्ञानां स्वगोचरमात्रजागरूकाणां कुतस्त्योऽयं स्थूलावभासः, न च विकल्पगोचराभिलापः, संसर्गाभावाद्, विशदप्रतिभासत्वाच्च, न च स्थूलमालोचितं यतस्तदुपाधिकस्य विशदता भवेत् तत्पृष्ठभाविनः, न चाविकल्पवद् विकल्पोऽपि स्वाकारमात्रगोचरः, तस्य चास्थूलत्वाद् न स्थूलगोचरो भवितुमर्हति तस्माद् बाह्ये च प्रत्यये स्थूलस्य बाह्यस्य चासंभवादलीकमेव तदास्थातव्यम्, न चालीकं विज्ञानादभिन्नं, विज्ञानस्य तद्वत् तुच्छत्वप्रसङ्गात् तथा च वेद्यत्वस्याभेदव्याप्यत्वाभावात् कुतो भेदप्रतिपक्षत्वं, सहोपलम्भनियमश्च सदसतोरिव विज्ञानस्थौल्ययोः सतोरपि स्वभावाद्वा कुतश्चित्प्रतिबन्धाद्वोपपत्स्येते, तस्मादनैकान्तिकत्वादेतौ हेत्वाभासौ विकल्पमात्रमेव बाह्याभावे प्रसुवाते न च प्रत्यक्षमाहात्म्यं विकल्पमात्रेणापोद्यते तस्मात्साधूक्तं—'कथमप्राणात्मकेन विकल्पज्ञानबलेनेति, एतेन प्रत्ययत्वमपि स्वप्नादिप्रत्ययदृष्टान्तेन निरालम्बनत्वसाधनमपास्तम् प्रमेयविकल्पास्त्ववयविव्यवस्थापनेन प्रत्युक्ताः, विस्तरस्तु न्यायकणिकायामनुसरणीय इति तदिह कृतं विस्तरेणेति ॥ १४ ॥

पातञ्जलरहस्यम्।

स्ततो जलाहरणे प्रवृत्तिरिति क्रमवर्तिनामेकस्थाय्यभावे कथं सिद्धिरिति, उपसंहरति—तस्मादिति, किंचालीकविषयादभिन्नविज्ञानं कथमलीकं न स्यादित्याह—न चालीकमिति. पूर्वं वेद्यं वनसेनाऽऽदिदृष्टान्तेन साधितमित्याह—प्रमेयेति, ॥ १४ ॥

वार्त्तिकम्।

त्म्येन सन्निकर्षादिनैवोपस्थितं न तु दोषादिना स्वप्नवदत्यन्तबाधादर्शनात्, अतः कथं वस्तुस्वरूपं गृहीत्वाऽपि प्रमाणरूपेण स्वप्नज्ञानरूपदृष्टान्तबलेन वस्तुस्वरूपमपलपन्तः श्रद्धेयवचनाः स्युः, तेषां ज्ञानस्यापि भ्रमत्वेन तद्वाक्यस्य यथाऽर्थवाक्यार्थज्ञानाजन्यत्वात् तद्वाक्यार्थस्यापलापाच्च, तद्वाक्यस्याश्रद्धेयत्वादित्यर्थः, न हि जाग्रद्ज्ञानस्य स्वप्नदृष्टान्तेन विषयापलापे क्रियमाणे स्वाभिप्रेतस्य यत्किंचिद्ज्ञानस्य विषयः सन्नित्यप्यभ्युपगन्तुं शक्यते प्रामाणिकैरित्यतस्त एव नास्तिकाः न पुनरर्थो नास्तीति भावः, एतेनाधुनिकानां दृष्टिसृष्टिवादिनां वेदान्तिब्रुवाणामपि मतं प्रच्छन्ननास्तिकतयोपेक्षणीयम्, स्वप्नादिदृष्टान्तेन श्रीहर्षादीनामसत्खण्डनेन च वेदान्तज्ञानतज्जन्यज्ञानयोरपि भ्रमत्वापत्त्या वेदान्तप्रामाण्यासिद्धौ तत्प्रतिपाद्यब्रह्मासिद्धिप्रसङ्गादिति, नन्वनुभवस्वरूपस्यात्मनः स्वप्रकाशत्वाद् न तत्र प्रमाणापेक्षेति चेद्—न—तथा सति वेदान्तश्रवणवैयर्थ्यापत्तेः, अथापूर्णत्वसद्वितीयत्वभ्रमनिरासार्थं श्रवणापेक्षेति चेद् न—अप्रमाणीभूतेन वेदान्तेनापूर्णत्वाद्यभावस्यासिद्ध्यापत्तेः, ननु श्रुत्या स्वार्थे बोधिते सति पश्चात्तद्बाधेऽप्यक्षतिः श्रुतिप्रवृत्तेः प्राक् अबाधितमेव सर्वमिति, मैवम्—श्रुतिप्रामाण्यग्राहकानुमानादीनामप्यप्रामाण्ये स्वप्रमाणीभूतां बाधितां च श्रुतिम् उत्पादितज्ञानामपि प्रामाण्यसंशयाहितः स्वार्थसंशयः कथं नाजागलस्तनवत् विफलीकुर्यादिति दिक् ॥ १४ ॥

कुतश्चैतदन्याय्यम्—

**वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥ १५ ॥**

**बहुचित्तावलम्बनीभूतमेकं वस्तु साधारणं, तत्खलु नैकचित्तपरिकल्पितं नाप्यनेकचित्तपरिकल्पितं किन्तु स्वप्रतिष्ठम्, कथं-वस्तुसाम्ये चित्तभेदाद् धर्मापेक्षं चित्तस्य वस्तुसाम्येऽपि सुखज्ञानं भवति, अधर्मापेक्षं तत एव दुःखज्ञानम्, अविद्याऽपेक्षं तत एव मूढज्ञानं, सम्यग्दर्शनापेक्षं तत एव माध्यस्थ्यज्ञानमिति, कस्य तच्चित्तेन परिकल्पितम्, न चान्य**

भास्वती।

कुत इति। वस्तुज्ञानपरिकल्पनामात्रमित्येवंवादी वैनाशिकः प्रष्टव्यः कस्य नु चित्तस्य तत् परिकल्पनं, न कस्यापीति वक्तव्यम्, यतो वस्तुसाम्ये चित्तभेदात्तयोर्वस्तुज्ञानयोर्विभक्तोऽत्यन्तभिन्नः पन्थाः=मार्गोऽवस्थितिरित्यर्थः, सुगमं भाष्यम्, सांख्यपक्ष

तत्त्ववैशारदी।

तदेवमुत्सूत्रं भाष्यकृद्विज्ञानातिरिक्तस्थापने युक्तिमुक्त्वा सौत्रीं युक्तिमवतारयति—"कुतश्चैतद्" इति। "वस्तु—पन्थाः" यन्नानात्वे यस्यैकत्वं तत्ततोऽत्यन्तं भिद्यते यथा चैत्रस्य ज्ञानमेकं भिन्नेभ्यो देवदत्तविष्णुमित्रमैत्रप्रत्ययेभ्यो भिद्यते ज्ञाननानात्वेऽपि चार्थो न भिद्यत इति भवति विज्ञानेभ्योऽन्यः, अभेदश्चार्थस्य ज्ञानभेदेऽपि प्रमातॄणां परस्परप्रतिसन्धानादवसीयते, अस्ति हि रक्तद्विष्टविमूढमध्यस्थानामेकस्यां योषिति प्रतीयमानायां प्रतिसन्धानं या त्वया दृश्यते सैव मयाऽपीति, तस्माद् वस्तुसाम्ये चित्तभेदात्=ज्ञानभेदात्, तयोः=अर्थज्ञानयोः, विभक्तः पन्थाः=स्वरूपभेदोपायः सुखज्ञानं कान्तायां कान्तस्य, सपत्नीनां दुःखज्ञानं, चैत्रस्य तु तामविन्दतो मूढज्ञानं विषादः, स्यादेतद्—य एकस्य चित्तेन परिकल्पितः कामिनीलक्षणोऽर्थः, तेनैवान्येषामपि चित्तमुपरज्यत इति साधारणमुपपद्यत इत्यत आह—"न चान्य" इति। तथा सत्येकस्मिन्नीलज्ञानवति सर्व एव नीलज्ञानवन्तः स्युरिति, नन्वर्थ-

पातञ्जलरहस्यम्।

वस्तुसाम्य इति, वस्तुत्वाधिकरणे स्त्रीपिण्डे स्थायिनि सेयं कमनीयेति प्रत्यभिज्ञासिद्धे श्चित्तभेदो ज्ञानभेदो दृश्यते धर्मापेक्षं सुखज्ञानं भर्तुस्तत एवाधर्मापेक्षा दुःखधीः सपत्नीनां तस्मादेव तामलभमानस्य कामुकस्य मोहः सम्यक्ज्ञानापेक्षस्तत्रैव साम्यज्ञानमिति, तयोरर्थज्ञानयोः स्थायित्वात् स्थायिधर्मिणोर्ग्राह्यग्रहणात्मा विभक्तः पन्था इति न ज्ञानस्वरूपोऽर्थो नाप्यर्थ-

वार्त्तिकम्।

विज्ञानवादे दूषणान्तरपरतयोत्तरसूत्रमवतारयति—कुतश्चेति, चशब्दो हेत्वन्तरे कुतोऽपीत्यर्थः वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः, एकस्मिन्नेव विषये चित्तान्तरवियोगे चित्तान्तरालम्बनदर्शनात्तयोश्चित्तार्थयोर्विभक्तः पृथगेव पन्थाः स्वरूपभेदोन्नयनवर्त्म विरुद्धधर्मद्वयरूपमेकानेकत्वरूपमित्यर्थः, क्षणिकविज्ञानमेव परेषां चित्तमित्यतः चित्ताद्भेदेनैव विज्ञानभेदोऽर्थस्य सिद्ध इति भावः, तत्रादौ भाष्यकारोऽनुभवबलाद् हेतुं साधयति—बहुचित्तालम्बनीभूतमेकं वस्तु साधारणमिति, प्रत्यभिज्ञासिद्धमिति शेषः, सौत्रेऽनुमाने तर्कमादौ दर्शयति—तत् खल्वित्यादिना—प्रतिष्ठमित्यन्तेन, नैकेति, नैकमात्रीयपुरुषचित्तात्मकं तथा नानेकपुरुषीयचित्तात्मकम् अपि तु स्वप्रतिष्ठं चित्तातिरेकेणैव स्वातन्त्र्येणैव स्थितमित्यर्थः, सिद्धहेतुं योजयितुं पृच्छति—कथमिति, उत्तरं—वस्त्विति, आदावेकपुरुषीयचित्तकल्पितत्वानुपपत्तिमुक्तहेतुना प्रतिपादयति—धर्मापेक्षमिति, पुरुषभेदे नैकस्मिन्नेव योषिद्वस्तुनि धर्मनिमित्तात्सुखज्ञानं सुखवती स्त्र्याकारवृत्तिर्भवति, अधर्मनिमित्ताच्च दुःखवती स्त्र्याकारवृत्तिरित्येवमादिरूपश्चित्तभेदोऽस्ति अतः कस्य पुरुषस्य चित्तेन तत् कल्पितं स्यात् न कस्यापीत्यर्थः, नन्वे

चित्तपरिकल्पितेनार्थेनान्यस्य चित्तोपरागो युक्तः तस्माद् वस्तुज्ञानयोर्ग्राह्यग्रहणभेदभिन्नयोर्विभक्तः पन्थाः, नानयोः सङ्करगन्धोऽप्यस्तीति, सांख्यपक्षे पुनर्वस्तु त्रिगुणं चलं च गुणवृत्तमिति धर्मादिनिमित्तापेक्षं चित्तैरभिसंबध्यते, निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनात्मना हेतुर्भवति ॥ १५ ॥

केचिदाहुः—ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवदिति, त एतया द्वारा साधारणत्वं बाधमानाः पूर्वोत्तरेषु क्षणेषु वस्तुरूपमेवापह्नुवते—

भास्वती ।

इति । बाह्यं वस्तु त्रिगुणं गुणवृत्तस्य चलत्वात् स्वपथिभिस्तेषां परिणामो न कस्य चित्कल्पनया, धर्मादिनिमित्तापेक्षं वस्तु चित्तैरभिसम्बध्यते विषयीक्रियते, उत्पद्यमानस्य सुखादिप्रत्ययस्य धर्मादि निमित्तं तेन तेनात्मना धर्मात् सुखमित्यादिना स्वरूपेण हेतुर्भवति॥ १५॥

केचिदिति । साधारणत्वं बाधमानाः=वस्तु बहूनां चित्तानां साधारणो विषय इत्येतत्सम्यग्दर्शनं बाधमानाः, ज्ञानसहभूरेव वस्तुरूपोऽर्थस्ततः पूर्वोत्तरक्षणेषु स नास्तीति, नैतन्न्याय्यम् , वस्तुन एकचित्ततन्त्रत्वे सति यदा तद्वस्तु न तेन चित्तेन प्रमीयेत तदा तत्

तत्त्ववैशारदी ।

वादिनामप्येकोऽर्थः कथं सुखादिभेदभिन्नविज्ञानहेतुः, न ह्यविलक्षणात्करणात् कार्य्यभेदो युक्त इत्यत आह—"सांख्यपक्षे" इति । एकरूप्यैव बाह्यस्य वस्तुनस्त्रैगुण्यपरिणामस्य त्रैरूप्यमुपपन्नम् , एवमपि सर्वेषामविशेषेण सुखदुःखमोहात्मकं विज्ञानं स्यादित्यत आह—"धर्मादिनिमित्तापेक्षम्" इति । रजःसहितं सत्त्वं धर्मापेक्षं सुखज्ञानं जनयति, सत्त्वमेव तु विगलितरजस्कं विद्याऽपेक्षं माध्यस्थ्यज्ञानमिति, ते च धर्मादयो न सर्वे सर्वत्र पुरुषे सन्ति, किन्तु कश्चित्क चिदित्यभ्युपपन्ना व्यवस्थेति ॥ १५ ॥

अत्र केचिदाहुः प्रवादुकाः-ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवद् इति, एतदुक्तं-

पातञ्जलरहस्यम् ।

स्वरूपं ज्ञानमिति सूत्रार्थः, सांख्यमतेऽपि ग्राह्यग्रहणयोर्भेद इत्याह-सांख्यपक्ष इति, अनुमानेनाभेदं साधयन्तो निरस्या इति, ॥ १५ ॥

वार्त्तिकम् ।

वं भवत्वनेकपुरुषचित्तपरिकल्पितमिति द्वितीयः पक्षः—तत्राह—न चान्येति, नाप्यन्यपुरुषचित्तात्मकेन वस्तुनाऽन्यस्य चित्त उपरागः संभवति, परस्वप्नस्य परेणाज्ञानादित्यर्थः, तर्कं प्रदर्श्य सूत्रार्थं व्याचष्टे—तस्मादिति, ग्राह्यग्रहणयोर्भेदेन वधर्म्येण भिन्नयोरित्यर्थः, ननु चित्तातिरिक्तार्थवादिनाम् अर्थस्य स्थिरत्वान्निरन्तरमेव कथं ज्ञानं न भवति, कथं वा एक एवार्थः स्वप्नादिभेदभिन्नासु वृत्तिषु हेतुः स्यात् , न ह्यविलक्षणात् कारणात् कार्यभेदो घटत, इत्याशङ्कायामाह—सांख्यपक्ष इति, सांख्यानुसारिमते सुखदुःखमोहात्मकं भवति वस्तु चित्तं चलस्वभावमतो धर्मादिनिमित्तवशात्सुखाद्यर्थमेव चित्तैर्वस्तु संबध्यत इति न सर्वदा ज्ञानं तथा धर्मादिनिमित्तानुरूपं सुखाद्यात्मकप्रत्ययं प्रति सुखाद्यात्मकत्वेनैव वस्तु हेतुर्भवतीति कारणताऽवच्छेदकभेदान्न द्वितीयोऽपि दोष इत्यर्थः ॥ १५ ॥

बौद्धवादान्तरनिरासकसूत्रान्तरमवतारयितुं तन्मतमुपन्यस्यति—केचिदाहुरिति । केचिदाहुः-अस्तु ज्ञानाद्भिन्नोऽर्थः तथाऽपि ज्ञानसमकालीन एव सोऽस्तु, अन्यदा प्रमाणाभावात्, प्रयोगश्चायं ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवदिति, असुखदृष्टान्तस्तन्मतेनैव, अस्मन्मते सुखस्यापि विषये स्थिरत्वात् रागद्वेषादिश्चोभयसिद्धो दृष्टान्त इति, अर्थस्य ज्ञा-

**न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्याद् ॥ १६ ॥**

एकचित्ततन्त्रं चेत् वस्तु स्यात् तदा चित्ते व्यग्रे निरुद्धे वा स्वरूपमेव तेनापरामृष्टमन्याविषयीभूतमप्रमाणकमगृहीतस्वभावकं केन चिद् तदानीं किन्तत्स्यात्, संबध्यमानं च पुनश्चित्तेन कुत उत्पद्येत, ये चा-

भास्वती ।

कि स्यात् चैत्रचित्तप्रमितोऽर्थश्चैत्रेण यदा न प्रमीयते तदा मैत्रादिभिरपि तज्ज्ञायतेऽतो न वस्तु कस्य चिच्चित्ततन्त्रमित्यर्थः, एकेति । व्यग्रे=अन्यत्र गते, तेन चित्तेनापरामृष्टम्= अनालोचितमित्यर्थः, ये चेति । ये चास्य वस्तुनोऽनुपस्थिता अगृह्यमाणा भागास्ते न

तत्त्ववैशारदी ।

भवतु—भवत्वर्थो ज्ञानाद् व्यतिरिक्तः, तथाऽप्यसौ जडत्वाद् न ज्ञानमन्तरेण शक्यः प्रतिपत्तु मु,ज्ञ ानेन तु भासनीयः, तथा च ज्ञानसमय एवास्ति, नान्यदा प्रमाणाभावाद् इति. तदेतद्दुत्सूत्रं तावद् दूषयति भाष्यकारः—"त एतया द्वारा" इति, वस्तु खलु सर्वचित्तसाधारणमनेकक्षणपरम्परोह्यमानं परिणामात्मकमनुभूयते लौकिकपरीक्षकैः, तच्चेद्विज्ञानेन सह भवेन्नूनमेवंविधम् एवं चेदिदमंशस्योपरि काऽयमनुरोधो येन सोऽपि नापह्नूयेतेत्यर्थः, मा वा भूदिदमंशस्यापह्नवो ज्ञानसहभूरवास्त्वर्थः, तत्राप्याह—"न चैक-कि स्याद्" यद्धि घटग्राहि चित्तं तद्यदा पटद्रव्यव्यग्रतया न घटे वर्त्तते यद्वा विवेकविषयमासीत् तदैव च निरोधं समापद्यते तदा घटज्ञानस्य वा विवेकज्ञानस्य वाऽभावाद् विवेको वा घटो वा ज्ञानभेदमात्रजीवनस्तन्नाशान्नष्ट एव स्यादित्याह—"एकचित्ततन्त्रम्" इति । किन्तत्स्यात्=न स्यादित्यर्थः, सम्बध्यमानं च चित्तेन तद्वस्तुविवेको वा घटो वा कुत उत्पद्येत, नियतकारणान्वयव्यतिरेकानुविधायिभावानि हि कार्य्याणि न स्वकारणमतिवर्त्त्य कारणान्तराद् भवितुमीशते, मा भूदकारणत्वे तेषां कादाचित्कत्वव्याघातः, न च तज्ज्ञानकारणत्वमेव तत्कारणमिति युक्तम्, आशामोदकस्य मोदकस्य चोपयुज्यमानस्य रसवीर्यविपाकादिसाम्यप्रसङ्गात्, तस्मात्साधूक्तं—'सम्बध्यमानं वा पुनश्चित्तेन कुत उत्पद्येत' इति । अपि च यो योऽर्वाग्भागः स सर्वो मध्यपरभागव्याप्तः ज्ञानाधाने सद्भावे त्वस्यानुभूयमानत्वान्मध्यपरभागौ न स्त इति व्यापकाभावादर्वाग्भागोऽपि न स्यादित्यर्थाभावात्कुतो ज्ञानसहभूरर्थ इत्याह—"ये चास्य" इति ।

पातञ्जलरहस्यम् ।

ननु प्रतियोगित्वानुयोगित्ववत् ज्ञानस्यांशोऽर्थो नातिरिक्त इत्याशङ्क्य सूत्रेण व्याचष्टे

वार्त्तिकम् ।

नसहभावित्वेन यत् सिध्यति तदाह=त एतयेति, ते च एतेनानुमानेन विषयस्य पुरुषान्तरसाधारण्यं बाधमाना ज्ञानपूर्वोत्तरक्षणेषु विषयमपलपन्तीत्यर्थः, ततश्चाननुभूयमानतया न मोक्षसिद्धिरिति भावः,

तत्र प्रत्युत्तरं सूत्रमिदम्—

"न चैकचित्ततन्त्रं वस्तु तत्प्रमाणकं तदा किं स्यात्" वृत्त्याख्यज्ञानातिरिक्तं तेषां चित्तं नास्तीति ज्ञानमेवात्र चित्तं तत्तन्त्रं तन्नियतं तथा च नापि वस्तु एकज्ञाननियतमिति प्रतिज्ञा. तत्र हेतुः, तदित्यादि, तदा तर्हि तच्चित्तप्रमाणकं वस्तु कि स्याद् चित्तापाये कुत्र विलीयेत न कुत्रापीत्यतो वस्तु स्थिरमिति शेषः, अयं भावः—यदि चित्तस्य कारणे विलीयत इत्युच्यते तदा घटादिरूपार्थानां लाघवाच्चित्ताभेदापत्त्या विज्ञानवादिमत एव प्रवेशः तच्च दूषितं यदि च मृदादिषूच्येत तदा विनाशकारणाकाङ्क्षायां परिपृष्टस्य मुद्गरपातादेरेव नाशकारणत्वेन चित्तनाशसमकालं घटादिवस्तुनाशानुपपत्तिरिति, हेतुपदस्येममेवार्थं भाष्यकार आह—एकेति । एकचित्तनियतं चेद्वस्तु स्यात्तदा तच्चित्ते विषयान्तरसञ्चारिणि निरुद्धे वा सति अस्वरूपमेव

स्यानुपस्थिता भागास्ते चास्य न स्युः, एवं नास्ति पृष्ठमित्युदरमपि न गृह्येत, तस्मात् स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः, स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्त्तन्ते, तयोः संबन्धादुपलब्धिः पुरुषस्य भोग इति ॥ १६ ॥

**तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥**

भास्वती ।

स्युः, तस्मात् स्वतन्त्रोऽर्थः साधारणः, चित्तानि चार्थेभ्यः पृथक् प्रतिपुरुषं प्रवर्त्तन्त इत्येतदत्र सम्यग्दर्शनम्, तयोरिति । तयोः=अर्थचित्तयोः सम्बन्धाद् उपरागाद् योपलब्धिः=विषयज्ञानं स एव पुरुषस्य द्रष्टुर्भोगः=इष्टानिष्टविषयज्ञानम् ॥ १६ ॥

ग्राह्यग्रहणयोः स्वतन्त्रत्वं संस्थाप्य तयोः सम्बन्धं विवृणोति—तदिति सूत्रेण,

तत्त्ववैशारदी ।

अनुपस्थिताः= अज्ञाताः, उपसंहरति—"तस्माद्" इति । शेषं सुगमम् ॥ १६ ॥

स्यादेतद्—अर्थश्चेत्स्वतन्त्रः स च जडस्वभाव इति न कदा चित्प्रकाशेत प्रकाशने वा जडत्वमप्यस्यापगतमिति भावोऽप्यपगच्छेत्, न जातु स्वभावमपहाय भावो वर्त्तितुमर्हति, न चदिन्द्रियाद्याधेयो जडस्वभावस्यार्थस्य धर्मः प्रकाश इति साम्प्रतम्, अर्थधर्मत्वे नीलत्वादिवत्सर्वपुरुषसाधारण इत्येकः शास्त्रार्थज्ञ इति सर्वे विद्वांसः प्रसज्ज्येरन्, न जाल्मः कश्चिदस्ति, न चातीतानागतयोर्धर्मः प्रत्युत्पन्नो युक्तः, तस्मात्स्वतन्त्रोऽर्थ उपलम्भविषय इति मनोरथमात्रमेतदित्यत आह—"तदु—ज्ञातम्" इति । जडस्वभावोऽप्यर्थ इन्द्रियप्रनाडिकया-

पातञ्जलरहस्यम्

न चैकचित्तेति, एकचित्ततन्त्रमेकस्य ज्ञानस्यांशः तत्प्रमाणकं तदेकग्राह्यं तदा किं स्याद् ज्ञानोत्पत्तिसामग्र्यभावात् तन्नास्त्येवेति सूत्रार्थः, तथा हि—तच्चित्ते तद्ग्राहिणि व्यग्रे विषयान्तरग्राहके तस्य पूर्वस्यांशस्य सिद्धिः कुतस्त्या ? अन्यज्ञातव्यांशज्ञानात्तस्य व्यग्रत्वाच्चापि परकोयात् तेनाविषयीकृतत्वादित्याह—अन्याविषयीभूत इत्यादि-केन चिदित्यन्तेन, एवं तदंशस्योत्पत्तिसामग्र्यभावाच्च न सिद्धिरित्याह-संबध्यमानं चेति, पूर्वोक्तं दूषणं स्मारयति—ये चास्येति, ज्ञानार्थयोः विभक्तः पन्था इत्युक्तमुपसंहरति—तस्मादिति ॥ १६ ॥

इतोऽपि ज्ञानार्थयोर्भेद इत्याह—तदुपरागेति, अयस्कान्तमणिकल्पैर्विषयैरुपरागात् संयो-

वार्त्तिकम् ।

नद्वस्तु अतस्तदानीं तत्किं स्यात्, शेषमस्वरूपत्वे हेतुः, अप्रमाणकमित्यस्य विवरणं केन चिदगृहीतस्वभावकमिति, स्वयमधिकं पूरयति—सम्बध्यमानं चेति । चित्तेन समकालं भावित्वात्कुत उत्पद्येत न कुतोऽपीत्यर्थः, पूर्ववदयं भावः—यदि चित्तस्य कारणादेवोत्पत्तिरुच्यते तदा चित्ताभेद एव स्यात् यदि च बाह्यकारणात् भेदाच्चित्तव्यभिचार्यपि स्यात् स्वतन्त्रकारणेनोत्पादनात् परिदृष्टानां दण्डचक्रादीनामेव कारणौचित्येन चित्तव्यभिचारसिद्धिश्चेति, बाधकान्तरमाह-ये चास्येति । अस्यार्थस्य गृह्यमाणस्याप्रतीयमाना ये च पृष्ठाद्यंशास्तेऽप्यप्रामाणिकत्वादसन्तः स्युः, एवं च पृष्ठाद्यभावादुदरं प्रतीयमानमपि न गृह्येत, सत्यतयेति शेषः, उदरस्य पृष्ठादिव्याप्ततया पृष्ठाद्यभावेनोदराभावसिद्धेरिति भावः, परमतमपाकृत्य स्वमतमुपपन्नतयोपसंहरति—तस्मादिति । उभयत्र स्वतन्त्रशब्दोऽन्योन्यनैरपेक्ष्यबोधनाय, भोग इति, वियोगाच्चानुपलब्धिर्मोक्ष इति शेषः ॥ १६ ॥

चित्ततदर्थयोर्विवेकप्रकारो दर्शितः, इदानीं ज्ञाताज्ञातविषयत्वसदाज्ञातविषयत्वाभ्यां चित्तात्मनोर्विवेकप्रकारमाह-सूत्राभ्याम्—अस्यैव च मोक्षहेतुज्ञानविषयस्य विवेकस्योपोद्धातसंगत्या कार्यकारणयोश्चित्तार्थयोश्च विवेकः पूर्वं दर्शितः यावद्धि कार्यभिन्नं कारणं न सिध्यति न तावद् वृत्तिकारणतया चित्तं स्थिरं सिध्यति येन ज्ञाताज्ञातविषयत्वं चित्तस्य

अयस्कान्तमणिकल्पा विषया अयःसधर्मकं चित्तमभिसंबध्योपरञ्जयन्ति, येन च विषयेणोपरक्तं चित्तं स विषयो ज्ञातस्ततोऽन्यः पुनरज्ञातः, वस्तुतो ज्ञाताज्ञातस्वरूपत्वात्परिणामि चित्तम् ॥ १७ ॥

यस्य तु तदेव चित्तं विषयस्तस्य—

भास्वती ।

स्वतन्त्रेण विषयेण चित्तस्योपरागस्ततश्चित्तस्य ज्ञानम् , अनुपरागे त्वज्ञातता, अयस्कान्तेति । इन्द्रियद्वारा चित्ताधिष्ठानगता विषयाश्चित्तमाकृष्योपरञ्जयन्ति=स्वाकारतया परिणमयन्तीत्यर्थः, उपरागापेक्षं चित्तं विषयाकारं भवति न भवति वा, अतो ज्ञानान्यत्वं प्राप्यमाणं चित्तं परिणामीत्यनुभूयते, ज्ञाताज्ञातस्वरूपत्वाद्=ज्ञानान्तरताप्रापणाद् , चेतस इत्यर्थः ॥ १७ ॥

तत्त्ववैशारदी ।

चित्तमुपरञ्जयति तदेवंभूतं चित्तदर्पणमुपसंक्रान्तप्रतिबिम्बा चितिशक्तिश्चित्तमर्थोपरक्तं चेतयमानाऽर्थमनुभवति, न त्वर्थे किञ्चित्प्राकट्यादिकमाधत्ते, नाप्यसम्बद्धा चित्तेन, तत्प्रतिबिम्बसंक्रान्तेरुक्तत्वादिति, यद्यपि च सर्वगतत्वाच्चित्तस्य चेन्द्रियस्य चाहङ्कारिकस्य विषयेणास्ति सम्बन्धः तथाऽपि यत्र शरीरे वृत्तिमच्चित्तं तेन सह सम्बन्धो विषयाणामित्ययस्कान्तमणिकल्पा इत्युक्तम् , अयःसधर्मकं चित्तमिति = इन्द्रियप्रनाडिकयाऽभिसम्बध्योपरञ्जयन्ति, अत एव चित्तं परिणामीत्याह—"वस्तुतः" इति ॥ १७ ॥

तदेवं चित्तव्यतिरेकिणमर्थमवस्थाप्य तेभ्य परिणतिधर्मकेभ्यो व्यतिरिक्तमात्मानमादर्शयितुं तद्वैधर्म्यापरिणामित्वमस्य वक्तुं पूरयित्वा सूत्रं पठति,—"यस्य तु तदेव चित्तं विष

पातञ्जलरहस्यम् ।

गात्संयुक्ततादात्म्याद्वा लोहकल्पस्य चित्तस्य विषयो ज्ञातस्तादृशसम्बन्धाभावादज्ञात इत्यनुभवसिद्धमिति सूत्रार्थः, एतदेवाह—अयस्कान्तेत्यादि—चित्तमित्यन्तेन ॥ १७ ॥

वार्त्तिकम् ।

स्यात् यावद्वा चित्तार्थयोर्भेदोऽपि न सिध्यति न तावदपि चित्तस्य ज्ञाताज्ञातविषयत्वं सिध्यति ततः कुतो ज्ञाताज्ञातविषयत्वसदाज्ञातविषयत्वाभ्यां चित्तात्मनार्विवेक इति भावः,

"तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम्" चित्तस्य कालभेदेन ज्ञातमज्ञातं च वस्तु भवति, कुतः, अर्थाकारतारूपोपरागसापेक्षत्वात् अर्थज्ञान इति शेषः, अतो ज्ञाताज्ञातविषयतया चित्तं परिणाम्यपीति भावः, नन्वर्थाकारताऽतिरिक्तं किं बुद्धेर्ज्ञानमस्ति यत्र तस्या अपेक्षोच्यत इति चेन्न—भूतप्रकाशवत्सत्त्वस्यापि कश्चन प्रकाशोऽस्ति सुषुप्त्यादिव्यावृत्तोऽनुभवसिद्धः तस्यैवान्याकारावच्छिन्नस्य बुद्धिधर्मज्ञातत्वादिति, उपरागकारणप्रदर्शनपूर्वकं सूत्रं व्याचष्टे—अयस्कान्तेति । अयस्कान्तमणिवदक्रिया एव विषया अयोवत् क्रियाशीलं चित्तं स्वमहिम्नाऽऽकृष्य स्वस्मिन् संयोज्य तदुपरञ्जयन्ति स्वाकारैराकारयन्तीति लाक्षारस इव वस्त्रम् अतो येन विषयेणोपरक्तं तच्चित्तं स विषयस्तस्य ज्ञात इत्यर्थः, इतरं चाज्ञाता इत्यर्थः, यद्यपि चित्तस्य जडत्वान्न ज्ञानं चैतन्यस्यैव ज्ञानत्वात् तस्य च पौरुषेयत्वात् उभयत्र ज्ञानकल्पने गौरवात् सत्त्वस्य प्रकाशरूपता च प्रतिबिम्बग्रहणक्षमनैर्मल्यमात्रं तथाऽपि तत्तायोवद्व्यवहारतो बुद्धिसत्त्वप्रकाशोऽपि ज्ञानशब्देनोक्तः, सूत्रतात्पर्यविषयं पुरुषाद्वैधर्म्यान्तरं हेयताया विवेकस्य च बीजं चित्तस्य च दर्शयति—वस्तुत इति, अतो ज्ञाताज्ञातवस्तुकत्वान्यथाऽनुपपत्त्या चित्तस्योपरागाख्यपरिणामः सिद्ध इत्यर्थः ॥ १७ ॥

घटादीनामपि साक्षात्पुरुषविषयत्वे पुरुषस्यापि ज्ञाताज्ञातविषयत्वं स्यादित्याशयेन पूरयित्वोत्तरसूत्रमुत्थापयति—यस्य त्विति—

**सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ १८ ॥**

यदि चित्तवत्प्रभुरपि पुरुषः परिणमेत ततस्तद्विषयाश्चित्तवृत्तयः शब्दादिविषयवज्ज्ञाताज्ञाताः स्युः सदा ज्ञातत्वं तु मनसस्तत्प्रभोः पुरुषस्या-

भास्वती ।

चित्तस्य परिणामित्वमनुभवगम्यं पुरुषस्य तु येनानुमानप्रमाणेनापरिमाणित्वं सिद्ध्येत्तदाह—सदेति । व्याचष्टे—यदीति । यदि चित्तवत् तत्प्रभुः=तद्द्रष्टा पुरुषः परिणमेत कदा चिद् द्रष्टा कदा चिदद्रष्टा वाऽभविष्यत् तदा वृत्तयो ज्ञातवृत्तयोऽज्ञातवृत्तयो वाऽभविष्यन्, न हि ज्ञानं नाम—अदृष्टदृष्टोऽज्ञातः पदार्थः कल्पनयोग्यः, ज्ञाततैव वृत्तिता दृष्टप्रकाश्यता वा, द्रष्ट्रा ज्ञातानां वृत्तीनां ज्ञातत्वस्वभावस्याव्यभिचारात तासां द्रष्टा सदैव द्रष्टा ततोऽपरिणामी, एतदुक्तं भवति—

तत्त्ववैशारदी ।

यस्तस्य "सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्" क्षिप्तमूढविक्षिप्तैकाग्रताऽवस्थितं चित्तमा निरोधात्सर्वदा पुरुषेणानुभूयते वृत्तिमत्, तत्कस्य हेतोः, यतः पुरुषोऽपरिणामी, परिणामित्वे चित्तवत्पुरुषोऽपि ज्ञाताज्ञातविषयो भवेद्, ज्ञातविषय एव त्वर्थः, तस्मादपरिणामी, ततश्च परिणामिभ्योऽतिरिच्यत इति, तदेतदाह—"यदि चित्तवद्" इति । सदा ज्ञातत्वं तु मनसः=सवृत्तिकस्य तस्य यः प्रभुः=स्वामी, भोक्तेति यावत्, तस्य प्रभोः पुरु-

पातञ्जलरहस्यम् ।

चित्तविषययोरभेदं दूषयित्वा चित्तात्मनोर्भेदमाह—सदा ज्ञाता इति, पुमान् यदा परिणामी स्यात् तदा विषयत्वाद् चित्तमपि ज्ञाताज्ञातं स्याद्-नैवं दृश्यते इतः सततंज्ञानत्वात् तत कुतः-तस्य चित्तस्य प्रकाशकत्वात पुरुषस्यापरिणामित्वादिति सूत्रार्थः, एतदेव

वार्त्तिकम् ।

"सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामात्" यस्य तु तदेव विषयोपरक्तमेव चित्तं विषयो नान्यत् अतस्तस्य तत्प्रभोश्चित्तसाक्षिणः पुरुषस्य विषयाश्चित्तवृत्तयः सदाज्ञाताः पुरुषस्यापरिणामादित्यर्थः, परिणामित्वे हि कदा चित्पुरुषस्यान्व्यापत्त्या विद्यमानाऽपि चित्तवृत्तिर्न ज्ञायेत, तदा च तस्यापि ज्ञाताज्ञातोभयरूपत्वं अहं सुखी न वा दुःखी न वेच्छामि न वेत्यादिसंशयः स्याद् एतादृशश्च संशयो न दृश्यते अतो वृत्तेरज्ञातसत्ता नास्ति ततश्च पुरुषोऽपरिणामीत्यायातम्, ननु पुरुषस्यापरिणामित्वस्य व्यवस्थापने किमिति सांख्ययोगयोराग्रह इति चेत श्रृणु-यदि हि पुरुषस्य ज्ञानादिलक्षणधर्मः कश्चन मोक्षे नश्येत् तदा व्ययदोषेण दारिद्र्यवद् मोक्षो न परमपुरुषार्थः स्यादिति अस्मिन् सूत्रे बुद्धिवृत्तिरेव पुरुषस्य विषय इति लब्धम्, अत एव—

पुरुषो विषयी नित्यं सत्त्वं च विषयः स्मृतः'-

इत्यनुगीतायां नित्यमित्यनेन सत्त्वाख्याया बुद्धिवृत्तेरेव पुरुषविषयत्वमुक्तम्, सूत्रतात्पर्यविषयं चित्तादिधर्म्यं भाष्यकार आह—यदीति । भाष्यं सुगमम्, ननु यदि चित्तमेव पुरुषस्य विषयस्तर्हि शब्दादिप्रकाशः कथं स्यात् चित्तस्याचेतनत्वेन विषयतामात्रेण प्रकाशासम्भवादिति चेन्न—चित्तारूढतयैव शब्दादीनां पुरुषे भावादिति, ननु सर्वसम्बद्धत्वाविशेषेऽपि चित्तमेव पुरुषस्य विषयो नान्य इत्यत्र का युक्तिरिति चेच्छृणु—अर्थाकारतैव विषयविषयिभावो न तु संयोगमात्रम् अतीन्द्रियेषु संयोगसत्त्वेऽपि चित्तविषयत्वाभावात् सा चार्थाकारता प्रतिबिम्बरूपैव पुरुषे

परिणामित्वमनुमापयति ॥ १८ ॥

स्यादाशङ्का—चित्तमेव स्वाभासं विषयाभासं च भविष्यति अग्निवद्,

## न तत् स्वाभासं दृश्यत्वात् ॥ १९ ॥

यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाभासानि तथा मनो-

भास्वती ।

पुरुषेण सह योगाद् वृत्तयो ज्ञाता भवन्तीति दृश्यते, पुरुषयोगेऽपि यदि वर्त्तमाना वृत्तिरदृष्टाऽभविष्यत् तदा पुरुषः कदा चिद् द्रष्टा कदा चिद्वाऽद्रष्टेति परिणाम्यभविष्यदिति १८

स्यादिति—शङ्कते । यथेति—व्याचष्टे, स्वाभासं = स्वप्रकाशम् , प्रत्येतव्यम् , न चाग्निरिति । स्वप्रकाशवस्तुन उदाहरणं नास्ति दृश्यवर्गे यतो दृश्यत्वमेव जडत्वं परप्रका-

तत्त्ववैशारदी ।

पस्यापरिणामित्वमनुमापयति = तथा चापरिणामिनस्तस्य परिणामिनश्चित्तात् पुरुषस्य भेद इति भावः ॥ १८ ॥

अत्र वैनाशिकमुत्थापयति—"स्यादाशङ्का" इति । अयमर्थः = स्यादेवं यदि चित्तमा-

पातञ्जलरहस्यम् ।

भाष्यकारो द्रढयति-यदीत्यादिना, प्रभुरदं व्याकरोति-भोक्तेति । फलितमाह-तथा चेति १८

यत्तु स्वप्रकाशं चित्तं तद्भासकं च दाक्यात्मनेति तद् निराकुर्वन् सूत्रमाह-न तत्स्वाभासं-

वार्त्तिकम् ।

स्वाकार्या स्वतोऽपरिणामित्वस्य साधितत्वाद् अतः पुरुषे प्रतिबिम्बसमर्पणसामर्थ्यं वृत्तिमत्त्वचित्तस्यैव फलबलात् कल्प्यते यथा जलादौ प्रतिबिम्बनसामर्थ्यं रूपवत्स्थूलद्रव्यस्यैवेति, तदेताभ्यां सूत्राभ्यां चित्तविधर्मतया चित्तातिरिक्तो मोक्षभागी पुरुषः प्रतिपादितः, आभ्यां च सूत्राभ्यामज्ञानमिच्छाऽऽदिविकारजातं च चित्तनिष्ठमेव न तु पुरुषनिष्ठमित्यवगन्तव्यम्, ननु पुरुषस्य सदाज्ञातविषयत्वेन ज्ञानपरिणामो माऽस्तु इच्छासुखादिपरिणामे तु किं बाधकमिति चेच्छृणु—पुरुषस्य सदाज्ञातविषयत्वे सिद्धे लाघवाच्चित्प्रकाशस्वरूपनैकैकमेवा-सद्द्रव्यं सिध्यति ततश्चाज्ञानस्य चित्तधर्मतयाऽज्ञानकार्यं धर्मादिकं तत्कार्यं चेच्छासुखादिकमपि चित्तस्यैव सामानाधिकरण्यप्रत्यासत्तौ लाघवादिति भावः ॥ १८ ॥

चित्तस्यैव स्वग्राहकतया सदाज्ञातविषयकत्वं चित्तभाक्त्वुरसिद्धमित्याशङ्कानिरासकं सूत्रान्तरमवतारयति—स्यादाशङ्केति । वैनाशिकानां चित्तात्मवादिनामिति शेषः, चित्तमेव स्वस्य विषयस्य च प्रकाशकमग्निवद्भविष्यति कृतमपरिणामिनाऽन्येनेत्याशङ्का वैनाशिकानां स्यादित्यर्थः, अत्राग्निचित्तयोः साधारणं प्रकाशकत्वम् अखण्डोपाधिः प्रकाश इति व्यवहारहेतुः स्वाभासतारूपसाध्ये प्रवेशनीयः, तेनाग्निचेतनयोरेकरूपप्रकाशाभावेऽपि न क्षतिः, तथा च श्रुतिस्मृत्योरप्यात्मनि नाग्न्यादिरित्यादिदृष्टान्तानुपपत्तिरिति तामिमामाशङ्कां सूत्रेण परिहरति—

"न तत्स्वाभासं दृश्यत्वात्" व्याचष्टे—यथेतराणीति, अन्तःकरणस्यैक्याच्चित्तमेव मन इत्युक्तवान् अत्रायं प्रयोगः, चित्तं न स्वाभासं स्वगोचरवृत्त्यभावकाले न स्वप्रकाश्यं दृश्यत्वात् इन्द्रियशब्दादिवदिति, तथा च स्वगोचरवृत्त्यभावकाले चित्तभानार्थं पुरुषः सिद्ध्यतीति भावः, वृत्तिभानार्थं नियमेन वृत्तिकल्पने चानवस्थां सूत्रकार एव वक्ष्यति, स्वप्रकाश्यत्वं च पुरुषे प्रसिद्धम् , पुरुषस्य स्वज्ञेयतायाः प्रागुक्तत्वेन व्यभिचारः स्यादतः साध्ये काल इत्यन्तम् , अग्न्यादौ च स्वभासत्वमेव नास्तीति वक्ष्यति, अतो न तत्रापि व्यभिचारः, दृष्टान्ते च सर्वदैव स्वप्रकाश्यत्वाभावोऽस्तीति, अत्र च कर्मकर्तृविरोधो विपक्षबाधकस्तर्कः कर्मकर्तृविरोधे च स्वस्मिन्स्वसंयोगानुपपत्तिस्तर्कः, तथा च वक्ष्यति—प्रकाशश्चायं प्रकाश्य-

ऽपि प्रत्येतव्यं, न चाग्निरत्र दृष्टान्तः, न ह्यग्निरात्मस्वरूपमप्रकाशं प्रकाशयति, प्रकाशश्चायं प्रकाश्यप्रकाशकसंयोगे दृष्टः, न च स्वरूपमात्रेऽस्ति

भास्वती।

श्यत्वं न स्वाभासत्वम्, ततोऽग्निर्नात्र दृष्टान्तः-स्वाभासस्योदाहरणम्, शब्दादिवदग्नेरूपधर्मोऽग्निनिष्ठो वा घटाद्यापतितो वा चक्षुषैव प्रकाश्यते, न ह्यग्निनिष्ठरूपं तेजोधर्मभ्-

तत्त्ववैशारदी।

त्मनो विषयः स्यात, न त्वेतदस्ति, अपि तु स्वप्रकाशमेतद्विषयाभासं पूर्वचित्तं प्रतीत्य समुत्पन्नं, तत्कुतः पुरुषस्य सदाज्ञातविषयत्वं, कुतस्तरां च परिणामिनश्चित्ताद्भेद इति, 'न-त्वाद्' भवेदेतदेवं यदि स्वसंवेदनं चित्तं स्यान्न त्वेतदस्ति तद्धि परिणामितया नीलादिवदनुभवव्याप्यं, यच्चानुभवव्याप्यं न तत्स्वाभासं भवितुमर्हति, स्वात्मनि वृत्तिविरोधाद्, न हि तदेव क्रिया च कर्म च कारकं च, न हि पाकः पच्यते, छिदा वा छिद्यते पुरुषस्त्वपरिणामो नानुभवकर्मेति नास्मिन् स्वयम्प्रकाशता न युज्यते, अपराधीनप्रकाशतो ह्यस्य स्वयम्प्रकाशता, नानुभवकर्मतः तस्माद् दृश्यत्वाद् दर्शनकर्म चित्तं न स्वाभासम्, आत्मप्रकाशप्रतिबिम्बितस्यैव चित्तस्य तद्वृत्तिविषयाः प्रकाशन्त इति भावः, ननु दृश्योऽग्निः स्वयम्प्रकाशश्च न हि यथा घटादयोऽग्निना व्यज्यन्ते एवमग्निरन्यन्तरेणेत्यत आह—"न चाग्निरत्र" इति। कस्माद्—"न ह्यग्निः" इति। मा नामाग्निरन्यन्तरात् प्रकाशिष्ट, विज्ञानात्तु प्रकाशत

पातञ्जलरहस्यम्।

दृश्यत्वात्, तच्चित्तं न स्वाभासं स्वग्राहकं घटादिवद् दृश्यत्वात् जडत्वेन वेद्यत्वानुभवादिति

वार्तिकम्।

प्रकाशसंयोगे दृष्टो न स्वरूपेऽस्ति संयोग इति, तथा परसमवेतक्रियाफलभागित्वरूपकर्मत्वं न क्रियाऽऽश्रये कर्त्तरि संभवतीति, आधुनिकवेदान्तिब्रुवास्तु-चित्तादिकं न दृष्टृ दृश्यत्वादित्येवं प्रयुञ्जते, पुरुषस्तु कर्मकर्तृविरोधाद् दृश्य एव न भवति पुरुषगोचरस्तु व्यवहारः पुरुषसत्तैव पुरुषेण भवति प्रकाशगोचरव्यवहारे प्रकाशान्तरानपेक्षाद्दर्शनादित्याहुः तन्न-चित्तवृत्ताप्येवं परैर्दृश्यत्वस्य सुवचतया चित्तातिरिक्तपुरुषसिद्ध्यनुपपत्तेः, वृत्तिगोचरव्यवहारस्यापि स्वरूपसत्तया वृत्त्यैव वक्तुं शक्यत्वात् प्रकाशगोचरव्यवहारमात्रे प्रकाशानपेक्षेत्येव हि दृष्टं तत्र चित्तं वा पुरुषो वेति न कश्चन विशेषः, अपि च स्वप्रकाशं निरञ्जनमित्यादिश्रुतिस्मृत्युक्तं स्वप्रकाशत्वमप्यदृश्यत्वे सति पुरुषस्य यथाश्रुतं नोपपद्येत योगकार्थत्यागात्, किं च पुरुषनिष्ठफलाजनकत्वेनात्मतत्त्वाकारा चित्तवृत्तिः प्रमाणमेव न स्यादित्यादिदोषप्रसक्तिरिति, कर्मकर्तृविरोधस्तु पुरुषस्य ज्ञेयत्वेऽपि नास्ति; चेतनप्रतिबिम्बितबुद्धिवृत्तिव्याप्यत्वरूपस्यैव ज्ञेयत्वस्य परादिवदेव बुद्धिवृत्त्यारूढरूपो दृश्यो दर्पणारूढमुखवत् केवलस्य द्रष्टेति प्रकारभेदात्कथं कर्मकर्तृविरोध इति दिक्, कर्मकर्तृविरोधस्तु बौद्धमत एव भवति चित्तातिरिक्तद्रष्ट्रनभ्युपगमेन करणान्तरानभ्युपगमेन च द्रष्टरि साक्षादेव स्वप्रतिबिम्बादेरनुपपत्तिरिति चित्तस्य स्वाभासत्वेऽग्निवदिति परोक्तदृष्टान्तस्यासिद्धिमाह—न चाग्निरत्रेति, अत्र स्वाभासत्वे न ह्यग्निरिति, यद्यग्निः पूर्वं तमसा पिहितः पश्चादात्मानं प्रकाशयतीति क्वचिद् दृष्टं स्यात्तदाऽग्नेः स्वप्रकाश्यत्वं पुरुषस्येव सिद्ध्येत् तदेव तु नास्तीत्यर्थः, ननु पुरुषोऽपि प्रकाशस्वरूप एव सर्वदा तमस्तु बुद्धिवृत्तेरेव प्रतिबन्धकमिति चेत्सत्यम्—तथाऽपि बुद्धिवृत्त्याख्यकरणाभावकाले स्वात्मानमविषयीकृत्य करणकाले विषयीकरोतीत्ययमग्नितो विशेषोऽस्त्येवातः प्रकाशस्वरूपताऽऽदिसाम्येऽपि पुरुषः स्वप्रकाश्यो नाग्निरिति न केवलं प्रमाणाभावादेवाग्नेः स्वप्रकाश्यत्वाभावोऽपि तु प्रकाश्यत्वव्यवहारकारणाभावादपीत्याह—प्रकाशश्चायमिति। प्रकाशोऽत्र प्रकाश्यत्वव्यवहारोऽन्यथा प्रकाशसंयोगस्यैव प्रकाश्यत्वरूपतया तस्य संयोगजन्यत्वानुपपत्तिरिति संयोगे प्रतिबिम्बसाधारणसम्बन्धो यदि चाग्नौ साक्षादेव स्वप्रतिबिम्बादिरि-

संयोगः, किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्य चिदिति शब्दार्थः तद्यथा स्वात्मप्रतिष्ठमाकाशं न परप्रतिष्ठमित्यर्थः, स्वबुद्धिप्रचारप्रतिसंवेदनात् सत्त्वानां प्रवृत्तिर्दृश्यते—क्रुद्धोऽहं भीतोऽहममुत्र मे रागोऽमुत्र मे

भास्वती ।

त्मात्मस्वरूपप्रकाशं प्रकाशयति, रूपज्ञानात्मकः प्रकाशः प्रकाश्यप्रकाशकयोगादेव प्रकाशते शब्दस्पर्शादिवद् , न चाग्निदृष्टान्तेऽग्नेः स्वरूपेण सह संयोगः=सम्बन्धोऽस्ति, अग्निस्वरूपं स्वप्रकाशं वाऽप्रकाशं वेति नानेन दृष्टान्तेनावद्योत्यते, अग्नेर्जडः प्रकाश्यो धर्म एवात्र लभ्यते न च कश्चित् स्वाभासधर्म इति, किञ्चेति । न कस्य चिद् ग्राह्य इति स्वाभासशब्दस्यार्थः स्वात्मप्रतिष्ठमाकाशं न परप्रतिष्ठमित्यादिवत , अतश्चित्तं स्वाभासमिति सिद्धान्ते सत्त्वानां=स्वानुभवो बाधते, कथं तदाह-स्वबुद्धिप्रचारप्रतिसंवेदनात्=स्वचि-

तत्त्ववैशारदी ।

इति न स्वयम्प्रकाश इति न व्यभिचार इत्यर्थः, प्रकाशश्चायम्' इति । अयमिति पुरुषस्वभावात्प्रकाशाद् व्यवच्छिनत्ति, क्रियारूपः प्रकाश इति यावद् ,

एतदुक्तं भवति-या या क्रिया सा सा सर्वा कर्तृकरणकर्मसम्बन्धेन दृष्टा, यथा पाको दृष्टश्चैत्राग्नितण्डुलसम्बन्धेन, तथा प्रकाशोऽपि क्रियेति, तयाऽपि तथा भवितव्यम्, सम्बन्धश्च भेदाश्रयो नाभेदे सम्भवतीत्यर्थः, 'किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्य चिदिति शब्दार्थः' स्यादेतद्—मा भूद् ग्राह्यं चित्तं, न हि ग्रहणस्याकारणस्याव्यापकस्य च निवृत्तौ चित्तनिवृत्तिः, इत्यत आह"स्वबुद्धि"इति । बुद्धिः=चित्तम्, प्रचाराः=व्यापाराः, सत्त्वाः

पातञ्जलरहस्यम् ।

सूत्रार्थः, अग्नेः प्रकाश्यत्वप्रकाशकत्वद्वयं व्यवहार स्यादित्याह—प्रकाशश्चायमिति । किंच प्राणिनामेवं व्यवहारा दृश्यते क्रुद्धोऽहमिति, क्रोधेन चित्तधर्मेण सह चित्तस्यानुभविनी

वार्त्तिकम् ।

च्यते तदा दृष्टविरोध इति भावः, अग्नेः स्वप्रकाशत्वं तु प्रकाशान्तरनैरपेक्ष्येण स्वत एव प्रकाशरूपत्वं, घटादयस्तु प्रकाशसम्बन्धादेव प्रकाशन्ते, अग्निदृष्टान्तेन चेदृशमेव स्वप्रकाशत्वं पुरुषस्य शास्त्रेषूच्यते चित्ताद्विवेकाय चित्तस्य हि प्रकाशः पुरुषोपाधिक एवायसो दग्धृत्ववदिति, यत्तु-अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वमित्याधुनिकवेदान्तिब्रुवाणां प्रलपनं तत्प्रागेव निराकृतम् . विस्तरतस्तु—ब्रह्ममीमांसायामपीति दिक् , नन्वेवमप्रकाश्यत्वरूपमेव स्वाभासत्वं चित्तस्यास्माभिरभ्युपेयं तथा चाग्निदृष्टान्त उपपन्नः स्यात्तत्राह-किं चेति, शब्दार्थः स्वाभासशब्दार्थः सम्भवतीति शेषः, एवं च सतीदं दूषणमित्याह—स्वबुद्धिप्रचारेत्यादिना, बुद्धेः प्रचारो वृत्तिः तस्याः संवेदनात् क्रोधाद्यनुभवात् तद्धानाद्यर्थ।सत्त्वानां प्राणिनां प्रवृत्तिर्दृश्यते तच्च स्वबुद्ध्यग्रहणे युक्तं न भवतीति बुद्धेर्ग्राह्यत्वमवश्यं वक्तव्यमित्यर्थः, नन्वहं क्रुद्ध इत्यादिप्रत्यये पुरुषस्यापि ग्रहणात् स्वाभासत्वं न स्यादिति चेत्सत्यम्—अग्राह्यत्वरूपस्य स्वाभासत्वस्य पुरुषेऽप्यनङ्गीकारादिति, यद्यप्यादौ क्रोधादीनां स्वरूपतो निर्विकल्प एव बोधः पौरुषेयो भवति क्रुद्धोऽहमित्यादिस्त्वहंकारस्यैव व्यक्तिपुरुषस्य भ्रान्तत्वात् कूटस्थतया बुद्धिवृत्त्याकारातिरिक्ताकारासम्भवाच, तथाऽपि पौरुषेयेण क्रोधविकल्पेन जनिता क्रुद्धोऽहमिति याऽन्तः करणस्य विशिष्टवृत्तिस्तत्साक्षिको बोधश्च तद्ग्राह्यत्वेनैवात्र चित्तस्याग्राह्यत्वं प्रतिषिध्यते क्रोधादीनां पौरुषेयनिर्विकल्पकस्य शब्दागोचरत्वेनोपन्यसितुमशक्यत्वात् पुरुषसाधकं तु चित्तग्रहणं वृत्तिगोचरनिर्विकल्पकमनुमानगम्यमेव तस्य हि चित्तधर्मत्वं सम्भवति नियमेन सववृत्तिगोचराया जन्यनिर्विकल्पकधारायाः स्वीकारेऽनवस्थाऽऽपत्तेः, अज्ञातवृत्तिस्वीकारे च क्रुद्धोऽहं न वेत्यादिसंशयापत्तेः, क्रोधादिगोचरनित्य

क्रोध इति, एतत् स्वबुद्धेरग्रहणे न युक्तमिति ॥ १६ ॥

एकसमये चोभयानवधारणम् ॥ २० ॥

न चैकस्मिन् क्षणे स्वपररूपावधारणं युक्तं, क्षणिकवादिनो यद् भवनं-

भास्वती।

तव्यापारस्यानुभवादनुव्यवसायादिति यावत्, सत्त्वानां=प्राणिनां प्रवृत्तिर्दृश्यते, क्रुद्धोऽहमित्यादि स्वचित्तस्य ग्रहणं ततश्चित्तं कस्य चिद् ग्रहीतुर्ग्राह्यमिति सिद्धम्, ग्राह्यं वस्तु जडत्वान्न स्वाभासमित्यर्थः ॥ १९ ॥

एकेति। स्वाभासे विषयाभासे च सति चित्ते तस्य स्वरूपस्य विषयस्य चावधारणमेकक्षणे स्यात् किन्तु तन्न भवति, येन व्यापारेण चित्तरूपस्यावधारणं न तेन विषयस्यावधारणम्, शब्दज्ञानं शब्दमाहं जानामीत्यनुभवस्यानुव्यवसायश्च नैकक्षणे सम्भवेत, ततो विषयाभासं चित्तं न स्वाभासम्, नेति। स्वपररूपं=चित्तरूपम् विषयरूपञ्च, न युक्तं स्वानुभवविरुद्धत्वात्, क्षणिकवादिनश्चित्तं क्षणस्थायि, तस्मात्तन्मते कारकक्रिया-भूतिरूपा ज्ञातृ-ज्ञान-ज्ञेया एकक्षण भाविनस्ततश्चैकक्षण एव तत्त्रयाणां ज्ञानं भवेदिति, तच्चानुभू

तत्त्ववैशारदी।

प्राणिनः, चित्तस्य वृत्तिभेदाः क्रोधलोभादयः स्वाश्रयेण चित्तेन स्वविषयेण च सह प्रत्यात्ममनुभूयमानाश्चित्तस्याग्राह्यतां विघटयन्तीत्यर्थः, स्वबुद्धिप्रचारप्रतिसंवेदनमेव विशदयति—"क्रुद्धोऽहम्" इति ॥ १९ ॥

"एकसमये चोभयानवधारणम्" स्वाभासं विषयाभासं चित्तमिति प्रयोगो न तावद्येनैव व्यापारेणात्मानमवधारयति तेनैव विषयमपीति वक्तुमर्हति, न ह्यविलक्षणो व्यापारः कार्य्यभेदाय पर्य्याप्तः, तस्माद् व्यापारभेदोऽङ्गीकर्त्तव्यः, न च वैनाशिकानामुत्पत्तिभेदातिरिक्तोऽस्ति व्यापारः, न चैकस्या एवोत्पत्तेरविलक्षणायाः कार्य्यवैलक्षण्यसम्भवः, तस्याकस्मिकत्वप्रसङ्गात्, न चैकस्यात्पत्तिद्वयसम्भवः, तस्मादर्थस्य च ज्ञानरूपस्य चावधारणं नैकस्मिन्

पातञ्जलरहस्यम्।

तथाऽपरिणामिनी चितिरित्याह—एतदिति ॥ १९ ॥

अशक्यानुष्ठानं चेत्याह सूत्रकृत्—एकसमये चोभयानवधारणं स्वोत्तरक्षणावर्तित्वं क्षणिकत्वं तस्मिन्नेव प्रकाशक्रियामेकां प्रति दृश्यत्वेन प्रधानं कर्म प्रकाशकश्च कर्ता गुणभूत इति प्रकाशक्रिया च भेदगर्भेति कथमेकस्मिन्क्षणे कर्तृकर्मणोर्भिन्नयोरवधारणमित्याक्षेप इति सूत्रार्थः, भेदस्वीकारे स्वपसिद्धान्त इत्याह—

'भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत इति भेदास्वीकारात्तथा सति स्वस्मिन्

वार्त्तिकम्।

निर्विकल्पकैकज्ञानस्वीकारे च विशिष्टप्रत्यक्षसामग्र्या बलवत्याः प्रतिबन्धात् संशयाद्यभावः, सम्प्रज्ञातयोगेऽपि वृत्तिः स्वरूपतो भासत एवेत्यभ्युपेयमिति ॥ १९ ॥

चित्तस्य स्वाभासतावादिमते तन्मतमालम्ब्यैवान्यदूषणमाह—

"एकसमये चोभयानवधारणम्" सूत्रार्थमाह—न चेत्यादिना-युक्तमित्यन्तेन, न च नाप्येकस्मिन्नुत्पत्तिक्षण एव स्वपरावधारणं युक्तं पूर्वं सत एव प्रत्यक्षगोचरत्वात् स्वस्य च प्रागसत्त्वादित्यर्थः, नन्वेवं स्वोत्पत्त्यनन्तरं स्वग्रहणमस्तु तत्राह—क्षणिकेति, क्षणिकवादिमते या वस्तुन उत्पत्तिः सैव क्रिया तस्य कार्यं सैव च तस्य कर्त्रादिकारकवर्गः तन्मते सर्ववस्तूत्पत्तिमात्रफलकं निर्हेतुकं स्वयमेव भवतीति सिद्धान्तः, तथा चोक्तम्—

'भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत' इति,

सैव क्रिया, तदेव च कारकमित्यभ्युपगमः ॥ २० ॥

स्यान्मतिः—स्वरसनिरुद्धं चित्तं चित्तान्तरेण समनन्तरेण गृह्यत इति

**चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २१ ॥**

अथ चित्तं चेच्चित्तान्तरेण गृह्येत बुद्धिबुद्धिः केन गृह्यते, साऽप्यन्यया साऽप्यन्ययेत्यतिप्रसङ्गः, स्मृतिसङ्करश्च—यावन्तो बुद्धिबुद्धीनामनुभावा-स्तावत्यः स्मृतयः प्राप्नुवन्ति, तत्सङ्कराच्चैकस्मृत्यनवधारणं च स्याद्.

भास्वती ।

तिविरुद्धमित्यनास्थेयं तन्मतम् ॥ २० ॥

स्यादिति । स्यान्मतिः = मतिः = सम्मतिः, मा भूत् चित्तं स्वाभासमित्यर्थः, तथाऽपि स्वरसनिरुद्धं = स्वभावतो निरुद्धं = लीनं चित्तं समनन्तरभूतेन चित्तान्तरेण गृह्यते न चिद्रूपेण द्रष्ट्रेति, पुनः शङ्को वदेत् तच्छङ्का चित्तान्तरेतिसूत्रेण निरसिता, अथेति । बुद्धिबुद्धिः = बुद्धेर्ग्राहिका बुद्धिः, अतिप्रसङ्गः = अनवस्था, ततश्च स्मृतिसङ्करः = स्मृतीनां-व्यामिश्रीभावः, पूर्वचित्तरूपात् प्रत्ययादुत्तरप्रतीत्यचित्तोत्पाद इत्येषां सिद्धान्तः, चित्तं यदि पूर्वचित्तस्य द्रष्टृ स्यात् तदा तदसङ्ख्यातपूर्वचित्तगतस्मृतीनामपि युगपद् द्रष्टृ

तत्त्ववैशारदी ।

समय इति, तदेतद् भाष्येणोच्यते—"न चैकस्मिन् क्षणे"इति । तथा चोक्तं वैनाशिकैः—

"भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" इति,

तस्माद् दृश्यत्वमेतच्चित्तस्य सदातनं स्वाभासत्वमपनयद् द्रष्टारं च द्रष्टुरपरिणामित्वं-च दर्शयतीति सिद्धम् ॥ २० ॥

पुनर्वैनाशिकमुत्थापयति-"स्यान्मतिः" इति । मा भूद् दृश्यत्वेन स्वसंवेदनमेवमप्यात्मा

पातञ्जलरहस्यम् ।

वृत्तिविरोध इति भावः ॥ २० ॥

आत्माश्रयादिदोषेण स्वग्राह्यत्वं निराकृत्यान्यग्राह्यत्वं निराह—चित्तान्तरेण स्वग्रा-

वार्त्तिकम् ।

अत्रात्यस्यनन्तरं चित्तस्य स्वग्रहणार्था क्रिया न संभवतीत्यर्थः, अस्मन्मतेऽपि शब्दबु-द्धिकर्मणां विरम्य व्यापाराभावादेकस्या वृत्तद्वयेर्थग्राहकत्वं न सम्भवतीति भावः ॥ २० ॥

उत्तरसूत्रमवतारयति—स्यान्मतिरिति । मतिरभ्युपगमः ननु स्वाभासशब्देन स्वसंतान-भास्यत्वं वक्तव्यं तथा च स्वरसेन विनाशस्वभावेन निरुद्धं नष्टमपि चित्तमुत्तरोत्तरमुत्प-न्नेन चित्तान्तरेण ग्राह्यमित्यभ्युपगमः स्यादिति कर्मकर्तृविरोधादिदोष इत्यर्थः, तत्र सि-द्धान्तसूत्रम्—

"चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च" वृत्तिरूपचित्तान्तरेण वृत्तिरूपचित्ते दृश्येऽभ्युपगम्यमाने तु बुद्धिबुद्धेर्वृत्तिवृत्तेरतिप्रसङ्गोऽनवस्था, एतद्व्याचष्टे—अथेति, बुद्धिबु-द्धिश्चित्तगोचरं चित्तं परेषां वृत्त्यतिरिक्तचित्ताभावेन वृत्तिचित्तयोः पर्यायत्वात्, ननु नेयमनव-स्था सर्वमेव चित्तं ग्रहीतव्यमिति नियमाभावादिति चेन्न—वृत्तेरज्ञातसत्ताऽङ्गीकारे जानामि न वेत्यादिसंशयापत्तेः, योग्यानुपलब्ध्या ज्ञानाद्यभावप्रत्यक्षानुपपत्तेश्च, किं च मा भवत्व-नवस्था वृत्तिगोचरानन्तवृत्तिकल्पनागौरवं तत्परिहायमेव, अस्माभिर्लाघवेन सकलवृत्तिगो-चरैकविभुज्ञानकल्पनादिति, एतेन चित्तनित्यत्वाभ्युपगमिनामपि न्यायवैशेषिकाणामु-त्तरोत्तरज्ञानेन पूर्वपूर्वज्ञानग्रहणकल्पना परास्ता अनवस्थागौरवाभ्यामिति मन्तव्यम्, अ-तिप्रसङ्गं व्याख्याय स्मृतिसंकरं व्याचष्टे—स्मृतिसंकरश्चेति, बुद्धिबुद्धेरिति शेषः, संकरश-

इत्येवं बुद्धिप्रतिसंवेदिनं पुरुषमपलपद्भिर्वैनाशिकैः सर्वमेवाकुलीकृतम्, ते तु भोक्तृस्वरूपं यत्र क्व चन कल्पयन्तो न न्यायेन सङ्गच्छन्ते, के चित्सत्त्वमात्रमपि परिकल्प्यास्ति स सत्त्वो य एतान् पञ्चस्कन्धान् निःक्षिप्यान्यांश्च प्रतिसन्दधातीत्युक्त्वा तत एव पुनस्त्रस्यन्ति, तथा स्कन्धानां म

भास्वती।

स्याद्, एवं स्मृतिसङ्करः, इत्येवमिति। एवं द्रष्टृपुरुषमपलपद्भिर्वैनाशिकैः सर्वं न्यायसङ्गतं दर्शनमित्यर्थः, आकुलीकृतं = विपर्यस्तम्, यत्र क्व चन = आलयविज्ञानरूपे विज्ञानस्कन्धे वा नैव संज्ञानन्त्यायतनरूपे संज्ञास्कन्धे वा संज्ञावेदयिता इत्याख्ये वेदनास्कन्धे वा, के चिदिति। के चिच्छुद्धसन्तानवादिनः सत्त्वमात्रं देहिसत्त्वं परिकल्प्य=ह-

तत्त्ववैशारदी।

न सिद्ध्यति, स्वसन्तानवर्त्तिना चरमचित्तक्षणेन स्वरसनिरुद्धस्वजनकचित्तक्षणग्रहणादित्यर्थ समञ्च तज्ज्ञानत्वेन, अनन्तरं चाव्यवहितत्वन, समनन्तरं तेन "चित्तान्तर—श्च" बुद्धिः—इति—चित्तमित्यर्थः, नागृहीता चरमा बुद्धिः पूर्वबुद्धिग्रहणसमर्था, न हि बुद्ध्याऽसम्बद्धा

पातञ्जलरहस्यम्।

ह्यत्व आत्माश्रयता चित्तान्तरग्राह्यत्वेऽन्योन्याश्रयता तृतीयग्राह्यत्वे चक्रकता चतुर्थेऽनवस्थेत्यादि, अतिप्रसङ्ग इति, किंचास्थायिनः स्मर्तुरभावाद् बुद्धीनां परस्परग्राहकत्वे बुद्धिरनुभवः तज्जन्मा संस्कारस्तज्जन्मा स्मृतिरिति नान्यदृष्टं स्मरत्यन्य इति न्यायाद्योऽहमद्राक्षं

वार्त्तिकम्।

तदर्थमाह—यावन्त इति। विषयानुभवकाले ज्ञानधारा जातेति विषयस्मृतिकालेऽप्यनन्तानां तज्ज्ञानानां स्मृतिरेकदैव भविष्यति, घटो मया पुरा ज्ञातो घटज्ञानं तज्ज्ञानं चेत्येवमनन्ताकारः सोऽयं स्मृतिसंकरः प्राप्त इत्यर्थः, अस्मन्मते तु पौरुषेयबोधस्य नित्यतया निर्विकल्पभावतया च न स्मृतिहेतुत्वमिति, नन्वेतादृशसंकरे को दोष इति, तत्राह—तत्संकराच्चेति। संकराभ्युपगमे च घटो मया ज्ञात इत्येकमात्राकारस्मृत्युनुभवो न स्यादित्यर्थः, अन्यान्यपि दूषणानि सूचयन्नास्तिकमतं तिरस्करोति—एवं बुद्धीति। सर्वं बन्धमोक्षधर्माधर्मादिव्यवस्थाऽऽदिकम्, तदेवं चित्ताद्विविच्य मोक्षो व्यवस्थापितः चित्तस्य च स्वाभासत्त्वं निराकृतम्, इदानीं परेषामिष्टोक्तात्मतत्त्वावधारणस्य स्वाभ्युपगमविरोधेनाप्यन्यायतामाह—ते त्विति। भोक्तृस्वरूपं न न्यायेन संगच्छन्ते न्यायविरुद्धा इत्यर्थः, तेषां विज्ञानवादः शून्यवादश्चेति मुख्यं मतद्वयं तत्रादौ विज्ञानवादिनां क्षणिकताऽऽख्यस्वाभ्युपगमविरोधान्न्यायविरुद्धत्वं दर्शयति—के चिदिति। सत्त्वमात्रं क्षणिकविज्ञानरूपं चित्तमात्रं परिकल्प्य स्वीकृत्य तस्यैव मोक्षं वदन्ति, अस्ति स सत्त्वविशेषो य एतान् सांसारिकान् पञ्च स्कन्धान् हित्वा अन्यांश्च पञ्चस्कन्धान् युक्तोऽनुभवतीति ततश्च तत एव स्वाभ्युपगमात् पुनस्त्रस्यन्ति चित्तस्थैर्यापत्त्येत्यर्थः, अतो न्यायविरुद्धास्त इति, पञ्चस्कन्धाश्च विज्ञानवेदनासंज्ञारूपसंस्काराख्याश्चित्तस्यैव शाखाभेदा न तु चित्ताद्भिन्नाः, तत्र विज्ञानं विषयानुभवः वेदना दुःखं संज्ञारूपं शब्दार्थाविति यावत् संस्कारो वासना, एतेष्वेषामपि सुखादीनां प्रवेशादित्यखिलं वस्तु चित्तमेवेति, शून्यवादेऽप्याह—तथेति। तथाऽन्ये के चित् स्कन्धानां महानिर्वेदाय महानिर्वेदाख्यवैराग्यायापुनर्जन्मरूपप्रशान्तये च जीवन्मुक्तस्य गुरोरन्तिके ब्रह्मचर्यं ब्रह्माभ्यासं साक्षात्कारपर्यन्तं करिष्यामीत्युक्त्वा शिष्यतामापन्ना नास्तिका गुरूपदेशात् सत्त्वस्याहंशब्दार्थस्यापि सत्तामपलपन्ति शून्यवादिनो भवन्तीत्यर्थः, तेऽपि न्यायविरुद्धा भोक्तुः सत्त्वस्यापलापेन स्वाभिप्रेतस्य मोक्षस्याहंशब्दार्थस्य ब्रह्मचर्यादीनां वा सत्तास्वीकारात् सेयमुद्देश्यविस्मृतिः कथं मूढान्न लज्जयतीति, एतेनाधुनिकवेदान्तिब्रुवा अपि न्याय-

ह्यानिर्वेदाय ।धरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्य्यं चरिष्यामीत्युक्त्वा सत्त्वस्य पुनः सत्त्वमेवापह्नुवते, साङ्ख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्ति, इति ॥ २१ ॥

भास्वती ।

सत्त्वमभ्युपगम्य वदन्त्यस्ति कश्चित सत्त्वो य एतान् सांसारिकान् पञ्चस्कन्धान्–विज्ञान–संज्ञा–वेदना–संस्कार–रूप–समूहान् ; निःक्षिप्य=परित्यज्य, अन्याञ्छुद्धस्कन्धान् परिगृह्णाति, शून्यरूपस्याभ्युपगतस्य निर्वाणस्य तद्दृष्ट्याऽसङ्गतिमुपलभ्य ततस्तु पुनस्त्रस्यन्ति, तथेति । तथाऽपरे शून्यवादिनः स्कन्धानां शाश्वतोपशमाय गुरोरन्तिके तदर्थं ब्रह्मचर्यचरणस्य महतीं प्रतिज्ञां कुर्वन्तो यदर्थं सा प्रतिज्ञा कृता तस्य=स्वस्य सत्त्वमप्यपलपन्ति, प्रवादाः=प्रकृष्टा वादाः, वादः=स्वपक्षस्थापनात्मको न्यायः ॥ २१ ॥

तत्त्ववैशारदी ।

पूर्वा बुद्धिर्बुद्ध्या भवितुम् अर्हति, न ह्यगृहीतदण्डो दण्डिनमवगन्तुमर्हति, तस्मादनवस्थेति, विज्ञानवेदनासञ्ज्ञारूपसंस्काराः स्कन्धाः, साङ्ख्ययोगादयस्तु प्रवादाः' =सांख्याश्च योगाश्च त एवादयो येषां वैशेषिकादिप्रवादानां ते सांख्ययोगादयः प्रवादाः सुगममन्यद् ॥ २१ ॥

पातञ्जलरहस्यम् ।

सोऽहं स्मरामीति यदेकाश्रयत्वधीः सा न स्यादित्याह–स्मृतिसंकरः स्यादिति, रूपं विज्ञानं संज्ञा संस्कारो वेदना चेति बौद्धाः मन्यन्ते स्कन्धपञ्चकमित्युक्तिस्तेषामित्याह—स्कन्धानिति ॥ २१ ॥

वार्त्तिकम् ।

विरुद्धा मन्तव्याः, तेऽपि हि मोक्षाद्यर्थं गुरुमुपासन्ना ब्रह्मातिरिक्तं सर्वं शुक्तिरजतवदत्यन्ततुच्छमिति गुरूपदेशान्मोक्षतत्साधनादिकमेवापलपन्तीति, अपि चोपदेशानन्तरमकृतसाक्षात्कारस्य।।मननादिसाधनाद्यनुष्ठानाभ्युपगमोपि तेषां न न्याय्योऽसतोपदेशेन फलतत्साधनेषु सर्वेष्वेवाविश्वासात , अश्रद्धया कृतेनापि फलानुदयाच्च, किं बहुना श्रुत्यादिप्रामाण्यबाधनेन ज्ञानप्रामाण्यसंशयाद्याहितः संशयो योगान्तेऽपि ब्रह्मणि स्याद्, न च स्वप्रकाशतया ब्रह्मणि न प्रमाणापेक्षेति वाच्यम् , प्रकाशतस्तस्य तत्सिद्धौ कर्मकर्तृविरोधादितिसांख्यसूत्रोक्तदोषात स्वाभ्युपगतश्रवणादिवैयर्थ्यापत्तेश्च मोक्षसाधनविषयस्य विवेकस्यास्वप्रकाशत्वाच्च, यत्तु–अवेद्यत्वेऽपि प्रत्यक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वमिति प्ररूपनं तत् शशशृङ्गवन्मन्तव्यम् , वेदनस्य व्यवहारं प्रति सामानाधिकरण्येन हेतुत्वात् दृश्यत्वादिश्रुतिविरोधाच्चेति, सैषाऽतिनास्तिकता दृश्यतेऽपि बहिर्मुखानां यतिमानिनामिति, आधुनिकानां वेदान्ते विवर्त्तवादो यथा यथा विचार्यते तथा तथा न्यायविरोधेन सिकतासेतुवद्विशीर्यते, स्वमते तु नास्त्ययं न्यायविरोधः मोक्षभागिनोऽहंशब्दार्थस्य भोक्तुः स्थिरस्य स्वीकारादित्याह—सांख्ययोगादयस्त्विति । आदिशब्देन ब्रह्ममीमांसादयो ग्राह्याः, प्रकृष्टा वादाः प्रवादाः स्वशब्देनाहंस्वमा मेत्यादिशब्दजातेन न त्वन्यः, कथमन्यस्यात्माऽहमित्यादिवृत्तिगोचरः स्यात्तत्राह—चित्तस्य स्वामिनमिति, स्वामी ह्यात्मा लोके व्यवह्रियते तच्चाप्नोति यदादत्त इत्यादिशास्त्रे चेति, अपरिणामिनि यथेष्टविनियोक्तृत्वाभावात् कथं स्वामित्वं तत्राह—भोक्तारमिति । अत्र च स्वतोऽपि पुरुषस्य भोगोऽस्तीत्यवधारणीयम् , प्रकृतोपपत्तये चित्तस्य स्वाभासत्वं निराकृतम् ॥ २१ ॥

कथम्—

**चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥२२**

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसं-

भास्वती।

कथमिति। कथं साङ्ख्याः स्वशब्देन भोक्तारं पुरुषमुपयन्ति—उपपादयन्तीति, उक्तं चितेरिति सूत्रम् ' अप्रतिसङ्क्रमायाश्चितेः = चैतन्यस्य तदाकारापत्तौ = बुद्ध्याकारापत्तौ तदनुपातित्वात्तु प्रतिसञ्चारात् स्वबुद्धेः = अस्मीतिबुद्धेः संवेदनम् प्रतिसंवेदनमिति सूत्रार्थः, अपरिणामिनीति प्राग् व्याख्यातम्, तथेति। यस्यां गुहायां गुहा-

तत्त्ववैशारदी।

स्यादेतत्, यदि चित्तं न स्वाभासं, नापि चित्तान्तरवेद्यम् आत्मनाऽपि कथं भोक्ष्यते चित्तम्, न खल्वात्मनः स्वयम्प्रकाशस्याप्यस्ति का चितिक्रिया, न च तामन्तरेण कर्ता, न चासम्बद्धश्चित्तेन कर्मणा तस्य भोक्ता, अतिप्रसङ्गाद् इत्याशयवान् पृच्छति—"कथम्" इति, सूत्रेणोत्तरमाह—"चितेर—दानम्" यत् तदवोचद् वृत्तिसारूप्यमितरत्रेति, तदितः समुत्थितम्, चितेः स्वबुद्धिसंवेदनं बुद्धेस्तदाकारापत्तौ—चितिप्रतिबिम्बाधारतया तद्रूपता-

पातञ्जलरहस्यम्

अतश्चित्तातिरिक्तआत्माऽस्तीति सूत्रार्थं करोति—चितेरिति । व्युत्थानदशायां बुद्धिसारूप्यमुक्तं तदेवाह—स्वबुद्धिसंवेदनमिति । बुद्धेश्चित्तस्य चिति प्रतिबिम्बाधारतया स्फटिकस्य जपालौहित्यग्राहितावत् पुरुषाकारापत्तौ स्वार्थक्रिया चितिश्च संक्रमक्रियावतीति।

वार्त्तिकम्।

इदानीं सदाज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामादिति सूत्रस्योपपादकं सूत्रमेतेनैव प्रसङ्गेनोत्थापयति—कथमिति। नन्वपरिणामित्वे विषये संचाराभावात्तदाकारपरिणामाभावाच्च कथं चित्तज्ञातृत्वरूपं चित्तभोक्तृत्वं पुरुषस्य स्यात्, चित्तस्थले हि घटादिविषयग्रहणं चित्तस्य संचारात्तदाकारपरिणामाच्च दृष्टमित्यर्थः, तत्र सिद्धान्तसूत्रम्—

"चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" अप्रतिसंचाराया अपि चितेः स्वीयबुद्धिवृत्तिदर्शनं बुद्धिवृत्त्याकारताऽऽपत्त्यैव भवतीत्यर्थः, अयं भावः—ज्ञातुः सञ्चारो न साक्षादेव ज्ञाने हेतुः किं त्वर्थाकारता हेतुः सन्निकर्षद्वारा, अन्यथा स्वप्नादौ मनःसञ्चाराभावेनार्थभानायोगात्, अतो विभुत्वेनैव सर्वत्र सन्निकृष्टस्यात्मनः सञ्चारो नापेक्ष्यत इति, आपत्तिग्रहणं च पुरुषस्य पारमार्थिकाकारप्रतिषेधार्थम्, यथा हि विषयासन्निकर्षकालेऽपि स्वप्नादौ तद्भानायोगत्या चित्तस्य तदाकारः परिणाम इष्यते नैवं पुरुषस्य चित्तवृत्त्यभावेऽपि तद्भानं भवति येन पुरुषेऽपि वृत्त्याकारः परिणाम इष्येत किं तु स्फटिके सन्निकृष्टजपालौहित्यस्येव चित्तवृत्तेः प्रतिबिम्बमेव लाघवादिष्यते, उभयत्राकाराख्यपरिणामकल्पने गौरवात् स्फटिकदर्पणादेः स्वप्रतिबिम्बितवस्तुप्रकाशकत्वस्य सिद्धत्वाच्चेति, तदिदं वृत्तिबिम्बितमेव वृत्त्याकारापत्तिरित्युक्तं सूत्रकारेणेति, भाष्यकारः पुरुषस्य बुद्ध्याकारतां प्रतिपादयितुमादौ बुद्धेरेव रूपमाह—अपरिणामिनीति। भोक्तृशक्तिः पुरुषाख्याऽपरिणामिनी अतो नापि गतिमती ततो न स्वप्नजाग्रतोश्चित्तस्येव पुरुषस्य ज्ञानं संभवति किं तु वृत्तिसरूपपरिणामिन्यर्थे चितिः प्रतिसंक्रान्तेव प्रतिबिम्बरूपेण संचरितेव सती तद्वृत्तिमनुपतति तद्वृत्तिं चेतनत्वकरोतीत्यर्थः, अन्यथा इह घटमहं जानामीति बुद्धिवृत्त्यनुपपत्तिः बुद्धेरनर्हत्वाद् अचेतनत्वाच्चेत्युत्तरसूत्रे वक्ष्यति, अथाविवेकादेवैतादृशी बुद्धिवृत्तिरिति चेत्सत्यं—तथाऽप्यविवेक एव प्रतिबिम्बमूलको दोषान्तराभावात् तथा चेतनभानार्थमपि वृत्तौ तत्प्रतिबिम्बः कल्प्यते बुद्ध्यारूढतयैव शब्दादिवदात्मनोऽपि भानादिति, इदमेव प्रतिबिम्बं बुद्धेश्चिच्छायाऽऽपत्तिरित्युच्यते

कान्तेव तद्वृत्तिमनुपतति, तस्याश्च प्राप्तचैतन्योपग्रहस्वरूपाया बुद्धिवृत्तेर-नुकार्यमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते, तथा चोक्तं—
"न पातालं न च विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम् ।
गुहा यस्यां निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते"इति॥२२॥

भास्वती ।

ऽऽहितं गह्वरेष्ठं शाश्वतं ब्रह्म चिद्रूपमाहितं न सा गुहा पातालं गिरिविवरमन्धकारं न चोदधीनां कुक्षयः किन्तु साऽविशिष्टा = चिदिव प्रतीयमाना बुद्धिवृत्तिरेवेति कवयो-वेदयन्ते = सम्पश्यन्तीति ॥ २२ ॥

तत्त्ववैशारदी ।

पत्तौ सत्याम्, यथा हि चन्द्रमसः क्रियामन्तरेणापि संक्रान्तचन्द्रप्रतिबिम्बममलं जलमचलं-चलमिव चन्द्रमसमवभासयत्येवं विनाऽपि चितिव्यापारमुपसंक्रान्तचितिप्रतिबिम्बं चित्तं स्व-गतया क्रियया क्रियावतीमसङ्गतामपि सङ्गतां चितिशक्तिमवभासयद् भोग्यभावमापादयद् भोक्तृभावमापादयति तस्या इति सूत्रार्थः, भाष्यमप्येतदर्थमसकृत्तत्र तत्र व्याख्यातमिति न व्याख्यातमत्र, बुद्धिवृत्त्यविशिष्टत्वे ज्ञानवृत्तेरागममुदाहरति—"तथा चोक्तं-न पातालम्" इति। शाश्वतस्य शिवस्य ब्रह्मणो विशुद्धसत्त्वभावस्य चितिच्छायामापन्नां मनोवृत्तिमेव चिति-च्छायाऽऽपन्नत्वाच्चितेरप्यविशिष्टां गुहां वेदयन्ते, तस्यामेव गुहायां तद् गुह्यं ब्रह्म, तदपनये तु स्वयम्प्रकाशमनावरणमनुपसर्गं प्रद्योतते चरमदेहस्य भगवत इति ॥ २२ ॥

पातञ्जलरहस्यम् ।

सूत्रार्थः, गुहाऽऽहितं गह्वरेष्ठं पुराणमिति श्रुतिमाश्रित्याह—न पातालमित्यादि, पातालादि-चतुर्भिः स्थूलैरविशिष्टा विलक्षणवृत्तिमती बुद्धिरेव गुहेति ॥ २२ ॥

वार्त्तिकम् ।

तथा बुद्धेरर्थाकारतावद् आत्माकारतेत्यप्युच्यत इति मन्तव्यम्, यद्यपि घटाद्याकारपरिणाम-वदात्माकारपरिणाम एव बुद्धेर्भवति तथाऽपि प्रतिबिम्बतुल्यतया स एव प्रतिबिम्बमप्युच्यते, बुद्धेरूपं प्रदर्श्य पुरुषस्य तदाकारतांऽऽपत्तिं दर्शयति-तस्याश्चेति। हिशब्दोऽत्रावधारणे, तस्या-अपि चितेर्ज्ञानरूपा वृत्तिर्बुद्धिवृत्त्यविशिष्टैवेत्याख्यायते व्यवह्रियते, तत्र हेतुः प्राप्तेत्यादि, प्राप्तश्चैतन्योपग्रहश्चैतन्यप्रतिबिम्बं येनैतादृशं रूपं यस्या बुद्धिवृत्तेस्तदनुकारिमात्रतया तत्प्रतिबिम्बाधारतामात्रेणेत्यर्थः' द्रष्टा दृशिमात्र इति सूत्रेऽपीदमेव वाक्यं भाष्यकारैः प्रमा-णत्वेनोपन्यस्तं, वृत्तिसारूप्यमितरत्रेत्यत्राप्येतदुक्तमिति स्मर्त्तव्यम्, ननु जानाम्यहं क्रुद्धोऽहं-भीतोऽहमित्यादिरूपता वृत्तेरेवेति प्रागेवोक्तं तर्हि निर्विकल्पकस्य वृत्तिबोधस्य स्वरूपं कीदृ-शमिति—उच्यते—यादृशं ज्ञानक्रोधादिवृत्तीनां रूपं तादृशमेव बिम्बप्रतिबिम्बावग्रहणात् तदेव वृत्तिबोधस्य रूपं, स च वृत्तिबोधो वृत्त्यविवेकेन जानामीतिवृत्त्यन्तरस्य विषय एव भवति ज्ञानचितिबोधादिशब्दानां पर्यायत्वादिति, एकाकारताऽऽपत्तावागममपि प्रमाणयति-तथा चोक्तमिति, न पातालमित्यादेरयमर्थः, गुहाऽऽहितं गह्वरेष्ठं पुराणमित्यादिश्रुतिस्मृतिषु यस्यां गुहायां गुह्यं शाश्वतं ब्रह्मांशांशयभेदाद् आत्मसामान्यं निहितं संगुप्तम् इति गीयते, सा गुहा न पातालादि किं तु ब्रह्मवृत्त्यविशिष्टां बुद्धिवृत्तिमेव कवयः पण्डिताः पश्य-न्तीति, अविशिष्टता च परस्परं प्रतिबिम्बनादुभयोरेव विषयाकारत्वं चेतनसाम्यमित्युक्तम्, अतो विविच्य ग्रहणायोग्यतयाऽवस्थितिरेवात्मतः संगोपनं बुद्धाविति श्लोकतात्पर्यार्थः, तदे-तदेकाकारत्वमादित्यपुराणेऽप्युक्तं—

नित्यः सर्वगतो ह्यात्मा बुद्धिसन्निधिसत्तया ।
यथा यथा भवेद् बुद्धिरात्मा तद्वदिहेष्यते ॥

इति ॥ २२ ॥

अतश्चैतदभ्युपगम्यते—

## द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

मनो हि मन्तव्येनार्थेनोपरक्तं तत्स्वयं च विषयत्वाद्विषयिणा पुरुषेणात्मीयया वृत्त्याऽभिसंबद्धं तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं = विषयविषयिनि-

भास्वती।

अत इति। अतश्चैतदभ्युपगम्यते = स्वीक्रियते, चित्तं सर्वार्थं द्रष्टृपरक्तं = ज्ञाताऽहमित्यात्मिका बुद्धिरेव द्रष्टृपरक्तं चित्तम्, तथा च—दृश्योपरक्तत्वाच्चित्तं सर्वार्थम्, मन इति। मन्तव्येनार्थेन = शब्दाद्यर्थेन, अपि च मनः स्वयं विषयत्वात् = प्रकाश्यत्वाद् विषयिणा पुरुषेणात्मीयया वृत्त्या = स्वकीयया चिद्रूपया वृत्त्याऽभिसम्बद्धमेकप्रत्ययगतत्वरूपमाविष्याद् न हि स्वरूपपुरुषश्चित्तस्य विषयः किन्तु चित्तं स्वस्य हेतुभूतत्वादभि-

तत्त्ववैशारदी।

तदेवं दृश्यत्वेन चित्तस्य परिणामिनस्तदतिरिक्तः पुमानपरिणतिधर्मोपपादितः, सम्प्रति लोकप्रत्यक्षमप्यत्र प्रमाणयति-"अतश्चैतद्"इति,-अवश्यं चैतदित्यर्थः, "द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्" यथा हि नीलाद्यनुरक्तं चित्तं नीलाद्यर्थं प्रत्यक्षेणैवावस्थापयति, एवं द्रष्टृच्छायाऽऽपत्त्या तदनुरक्तं चित्तं द्रष्टारमपि प्रत्यक्षेणावस्थापयति, अस्ति हि द्व्याकारं ज्ञानं नीलमहं सम्प्रत्येमीति, तस्माद् ज्ञेयवद् ज्ञाताऽपि प्रत्यक्षसिद्धोऽपि न विविच्यावस्थापितो, यथा जले चन्द्रमसो बिम्बं न त्वेतावता तदप्रत्यक्षं, न चास्य जलगतत्वे तदप्रमाणमिति चन्द्ररूपेऽप्यप्रमाणं भवितुमर्हति, तस्माच्चित्तप्रतिबिम्बिततया चैतन्यगोचराऽपि चित्तवृत्तिर्न चैतन्य-

पातञ्जलरहस्यम्।

"इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिरेतत्क्षेत्रज्ञ इति भगवद्वाक्यमाश्रित्याह सूत्रकृत्—द्रष्टृेति। सर्वार्थमेव सर्वेषां नास्तिकानामात्मभ्रान्तत्वे हेतुरिति तात्पर्यार्थः सूत्रस्येति,

वार्त्तिकम्।

ननु भवतु चितेः स्वबुद्धिसंवेदनं शब्दादिसंवेदनं तु कथं भवेत् बुद्धिवच्छब्दादीनामपि चितौ प्रतिबिम्बनसामर्थ्याङ्गीकारे सर्वदैव सर्वार्थभानप्रसङ्गात्, कथं वा चितेः स्वसंवेदनम्, उक्ता ह्यनवस्था चित्तवत् पुरुषेऽपि समानेत्याशङ्कानिरासायोत्तरसूत्रं प्रवर्तिष्यते तत्सूत्रं भाष्यकारः प्रकारान्तरेणाप्युत्थापयति-अतश्चेति, अतो बुद्धिपुरुषयोर्वैधर्म्यसद्भावाच्च तदन्यथाऽनुपपत्तेश्चेति यावत्, एतद् आगामिसूत्रप्रतिपाद्यम्, अङ्गीक्रियत इत्यर्थः, चकाराऽस्मदुक्तप्रयोजनसमुच्चयार्थः,

"द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्" सर्वे ग्रहीतृग्रहणग्राह्याः पुरुषस्यार्था भोग्या अस्मिन्निति सर्वार्थम्, अयं घट इत्यनन्तरं घटमहं जानामीति बुद्धेर्वृत्त्यन्तरस्य ग्रहीतृग्रहणग्राह्याकारस्यायं घट इतिवृत्तिवदेव साक्षिभास्यस्य प्रायशो दर्शनात्, सर्वार्थत्वे हेतुः द्रष्टृदृश्योपरक्तमिति द्रष्टृदृश्योभयाकारमित्यर्थः, बाधकं विना सन्निकृष्टवस्त्वाकारतास्वाभाव्यस्य चित्ते सर्वसंमतत्वादिति भावः, तथा च बुद्धिसंवेदनमेव बुद्धिस्थस्य शब्दादेः स्वस्य च संवेदनं यद्धि शब्दादिपुरुषोभयाकारा बुद्धिवृत्तिः पुरुषे प्रतिबिम्बिता भासते इदमेव शब्दादेः पुरुषस्य च दृश्यत्वं बुद्धेर्दृश्यत्ववदित्यतो न पुरुषदर्शनार्थं द्रष्ट्रन्तरापेक्षा नापि कर्मकर्तृविरोधोऽन्तःकरणद्वारत्वादिति भावः, एतेन सर्वार्थत्वेन भाष्यकारोक्तं बुद्धिपुरुषयोरविशिष्टाकारत्वमपि सिद्धम्, बुद्धेः पुरुषाकारताऽतिरेकेण पुरुषवत्त्वासंभवात्, पुरुषस्य बुद्ध्याकारतायाश्च पूर्वसूत्रेणैवोक्तत्वादिति, वेद्यत्वान्यथाऽनुपपत्त्या यः सिध्यति तं बुद्धौ पुरुषोपरागं प्रतिपादयन्समग्रसूत्रं व्याचष्टे—मनो हीति, उपरक्तं।तदाकारम् अन्यथा ग्रहणानुपपत्तेः, युक्तिपूर्वकं द्रष्टृपरागमा-

र्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्वार्थमित्युच्यते, तदनेन चित्तसारूप्येण भ्रान्ताः के चित्तदेव चेतनमित्याहुः, अपरे चित्तमात्रमेवेदं सर्वं, नास्ति खल्वयं ग-

भास्वती ।

सम्बद्धं वृत्तिसरूपं द्रष्टारं ग्रहीतृरूपत्वेनैव विषयीकरोतीत्यसकृद् दर्शितमतश्चित्तं द्रष्टृदृश्यनिर्भासम्, शब्दाद्याकारमचेतनं विषयात्मकं तथा ज्ञाताऽहमित्यविषयात्मकं = विषयिसरूपं चेतनाकारञ्चापीति सर्वार्थम्, तदिति । चित्तसारूप्येण = पुरुषस्य चित्तसारूप्येण भ्रान्ताः, कस्मादिति । वैनाशिकानां भ्रान्तिबीजं सर्वरूपख्यापकं चित्तमस्ति, समाधिरपि तेषामस्ति, समाधौ च प्रतिबिम्बीभूत आगन्तुक इत्यर्थः, प्रज्ञेयः = ग्राह्योऽर्थः समा-

तत्त्ववैशारदी ।

गोचरति, तदिदं सर्वार्थत्वं चित्तस्येति, तदेतदाह-"मनो हि"इति । न केवलं तदाकारापत्त्या मन्तव्येनार्थेनोपरक्तं मनोऽपि तु स्वयं चेति, चकारो भिन्नक्रमः, पुरुषेणेत्यस्यानन्तरं द्रष्टव्यः तच्छायाऽऽपत्तिः पुरुषस्य वृत्तिः; इयं च चैतन्यवच्छायाऽऽपत्तिश्चित्तस्य वैनाशिकैर-

पातञ्जलरहस्यम् ।

दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः,

वार्त्तिकम् ।

ह—यत्स्वयं चेति । तन्मनः स्वयमपि पुरुषस्य विषयत्वात् स्वीयचैतन्यलक्षणवृत्तिविशिष्टेन पुरुषेण विषयिणा सम्बद्धम् आकारितं सन्निकर्षस्य ग्रहणहेतुत्वात्, बुद्धिवृत्तौ च पुरुषस्यासङ्गस्य प्रतिबिम्बातिरेकेणानित्यसनिकर्षासम्भवादिति, तस्मादेतच्चित्तमेवोभयोपरक्ततया शब्दादिविषयरूपेण च विषयिपुरुषरूपेण निर्भासते, साक्षिणि प्रतिबिम्बितं सदिति विषयविषयिनिर्भासं, तत्र हेतुः चेतनाचेतनरूपापन्नं तदाकारम्, एतदेव विवृणोति-विषयात्मकमप्यविषयात्मकमिवेति; अचेतनमपि चेतनमिवेति, इवशब्दार्थं दृष्टान्तेनाह-स्फटिकमणिकल्पमिति । यथा एक एव स्फटिकमणिः पार्श्वद्वयस्थयोर्जवेन्द्रनीलयोः प्रतिबिम्बनात्स्वीयरूपेण सह त्रिरूप इव भवतीति, एवं चित्तमपि विषयात्मनोः प्रतिबिम्बनात् ग्रहीतृग्रहणग्राह्यात्मकरूपात्त्र्यवयववदिव भवति, अतः सर्वार्थमित्युच्यत इत्यर्थः, चित्तमेवेत्येवकारेणान्येषां सन्निकर्षसत्त्वेऽप्याकारग्रहणसामर्थ्यं नास्तीत्युक्तम्, अत्र च स्फटिकदृष्टान्तो सर्वांशे बुद्धेः स्वार्थाकारपरिणामस्यैव स्वग्रन्थानुरोधेनेष्टत्वात् स्फटिके च प्रतिबिम्बमात्रस्य स्वीकारात्, किं तु तत्तद्वस्तुसन्निकर्षेण तत्तद्रूपतया प्रतीयमानतामात्रांशे स्फटिकस्य दृष्टान्त इति मन्तव्यम्, यदेतदुक्तं चित्तस्य द्रष्टृदृश्यसारूप्यम् इदमेव भवबीजाविवेकस्य कारणमिति प्रतिपादयति-तदनेनेति । के चिद्बाह्यार्थवादिनः चित्तातिरिक्तचेतनानभ्युपगन्तारो वैनाशिकाः, अपरे विज्ञानवादिनः, लोक्यत इति लोकः, तदुक्तं विज्ञानवादिभिः,—

अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शने ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ इति,

तेषां च वादिनामयं भावः, चित्तस्य चेत्सर्वरूपता स्वीकृता तर्ह्यलं पुरुषेण बाह्यार्थेन वाऽनादिवासनावशात् स्वत एव चित्तस्यानन्तपरिणामस्वीकारसम्भवात्, दुग्धस्य दधिरूपतावदिति, अनुकम्पामुखेन तेषु समाधानमाह—अस्ति हीति-इत्यन्तं, बीजमित्यर्थः, एतेन यदाधुनिका वेदान्तिब्रुवा आहुः—विषयदोषात् करणदोषाद्वा चैतन्ये भ्रमो न भवति विषयकरणदोषयोर्भ्रममात्रकल्पितत्वेन भ्रमात्पूर्वं तयोरभावात्, अपि त्वनिर्वचनीयाविद्यामात्रादिति, तद्धेयम्-चैतन्येऽपि चित्तवदेव सकलवस्तुप्रतिबिम्बेन सारूप्यस्यैव विषयगतदोषस्य प्रपञ्चारोपहेतुतालाभात् सर्ववस्तूनां भ्रममात्रकल्पितत्वस्य चासिद्धेः शुक्तिरज-

यादिर्घटादिश्च सकारणो लोक इति, अनुकम्पनीयास्ते, कस्माद्—अस्ति हि तेषां भ्रान्तिबीजं सर्वरूपाकारनिर्भासं चित्तमिति, समाधिप्रज्ञायां प्रज्ञेयोऽर्थः प्रतिबिम्बीभूतस्तस्यालम्बनीभूतत्वादन्यः, स चेदर्थश्चित्तमात्रं स्यात्कथं प्र-

भास्वती।

हितचित्तस्यालम्बनीभूतः स चेदर्थश्चित्तमात्रः स्यात्तदा प्रज्ञयैव प्रज्ञारूपमवधार्येत इति किञ्चित् स्वाभासं वस्त्वभ्युपगन्तव्यं भवतीत्यर्थः, चित्तन्तु न स्वाभासं ततोऽस्ति स्वाभासः पुरुषः, येन जडे चेतसि प्रतिबिम्बीभूतोऽर्थोऽवधार्येत=प्रकाश्येतेत्यर्थः, एवमिति।

तत्त्ववैशारदी।

भ्युपेतव्या कथमन्यथा चित्तं चैतन्यमेत आरोपयाम्बभूवुरित्याह—"तदनेन" इति। केचिद् वैनाशिका बाह्यार्थवादिनः, अपरे—विज्ञानमात्रवादिनः, ननु यदि चित्तमेव द्रष्ट्राकारं दृश्याकारं चानुभूयते हन्त चित्तादभिन्नावेवास्तां द्रष्टृदृश्यौ, यथाऽऽहुः—

"अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति,

तत्कथमेतेऽनुकम्पनीया इत्यत आह—"समाधिप्रज्ञायाम्" इति। ते खल्वेकाभिरूपपत्तिभिश्चित्तातिरिक्तं पुरुषमभ्युपगमय्याप्यष्टाङ्गयोगोपदेशेन समाधिप्रज्ञायामात्मगोचरायामवताय्य बोधयितव्याः, तद्यथा—समाधिप्रज्ञायां प्रज्ञेयोऽर्थ आत्मा प्रतिबिम्बीभूतोऽन्यः कस्मात्—तस्यात्मन आलम्बनीभूतत्वाद्, अथ चित्तादभिन्नमेव कस्मान्नालम्बनं भवतीति यदि युक्तिबोधितोऽपि वैयात्याद्वदेत्, नत्र हेतुमाह—"स चेद्" इति। स चेदात्मरूपोऽर्थ-

पातञ्जलरहस्यम्।

इति श्रुतिमाश्रित्याह—समाधिप्रज्ञायां प्रज्ञेयोऽर्थ इति॥ २३॥

वार्त्तिकम्।

तादिस्थले क्रमेण सारूप्यदोषेणैवाध्यासोपपत्तावध्यासहेतुतया तदभिप्रेतानाद्यविद्यायां कल्पनानवकाशाच्चेति, तत्रादौ विज्ञानवादिनं बोधयति-समाधीत्यादिना-रूपमवधार्यतइत्यन्तेन, भ्रमस्थले ज्ञेयार्थस्य चित्तमात्रताया अस्माभिरप्यभ्युपगमात्, समाधिप्रज्ञायां प्रज्ञेय इत्युक्तमर्थस्य सत्यत्वलाभाय, तथा चायमर्थः, विवादगोचरोऽर्थश्चित्ते प्रतिबिम्बितो योऽनुभूयते स तस्य चित्तस्यालम्बनीभूतत्वाच्चित्तादन्यः, तत्र हेतुः, स चेदिति, स चेदर्थश्चित्ताकारमात्रं स्यात् कथं तर्हि प्रज्ञयैव प्रज्ञाऽऽकारो गृह्यते कर्मकर्तृविरोधात् पुरुषस्यानङ्गीकारात्, पुरुषप्रज्ञया पुरुषसिद्धिरर्थप्रज्ञयाऽर्थस्यापि सिद्ध्यौचित्यादिति, अतो विज्ञानातिरिक्तो विज्ञेयोऽर्थः सिद्धः, अनयैव युक्त्या पुरुषानभ्युपगन्तारं बाह्यार्थवादिनमपि बोधयति-तस्मादिति, तस्मात्प्रज्ञारूपस्य प्रज्ञाग्राह्यत्वाभावादेव प्रज्ञायां प्रतिबिम्बीभूतः प्रतिबिम्बरूपेण जातोऽर्थो-ज्ञानाकारो येन गृह्यते स पुरुष इत्यपि सिद्धमित्यर्थः, ननु स्वमगृहीत्वैव स्वस्य प्रज्ञारूपं-गृह्णातु; आकाशाग्रहणेऽपि शब्दवदिति चेन्न-शब्दवत्केवलस्याकारस्याग्रहणात्, अयं घट इति ज्ञानमभूदित्यादिरूपेण रूपादिवद्धर्मिपुरस्कारेणैवाकारानुभवादिति, ननु कर्मकर्तृविरोधः सूत्रकारेणैवोक्तो न तत्स्वाभासमित्यनेनातो भाष्यकारस्य पौनरुक्त्यमिति, मैवम्-तत्र चित्तस्य चित्तग्राह्यत्वं निराकृतमत्र चित्ताकारस्य चित्तग्राह्यत्वं निराक्रियत इति विशेषादिति, पुरुषचित्तदर्थानां यथोक्तप्रकारैर्विवेकज्ञानमेव तत्त्वज्ञानमिति वेदान्तोक्तोपासनादिव्यावृत्त्यर्थं नास्तिकाद्यज्ञाननिरसनार्थं चावधारयति-एवं गृहीत्रिति, ग्रहीत्रादित्रितयं परस्परविजातीयतया ये विभजन्ति विवेचयन्ति त एव सम्यग्दर्शिनः तैरेव पुरुषो लब्धः, अन्ये तु भ्रान्ता इत्यर्थः, तथा च श्रुतिः—

यन्मनसा न मनुते येनाहुर्मनो मतम्-

ज्ञयैव प्रज्ञारूपमवधार्य्येत, तस्मात्प्रतिबिम्बीभूतोऽर्थः प्रज्ञायां येनावधार्य्यते स पुरुष इति, एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात् त्रयमप्येतद् जातितः प्रविभजन्ते ते सम्यग्दर्शिनः तैरधिगतः पुरुष इति ॥ २३ ॥

कुतश्चैतद्—

**तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वाद् ॥२४॥**

तदेतच्चित्तमसंख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं=परस्य

भास्वती।

ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदाद्=ग्रहीतृस्वरूपस्य ग्रहणस्वरूपस्य ग्राह्यस्वरूपस्य चेति चित्तभेदाद्=ज्ञानभेदाद्, एतत् त्रयमपि ये प्रेक्षावन्तो जातितः=वस्तुतः प्रविभजन्ते ते सम्यगदर्शिनः, तैः पुरुषोऽधिगतः सम्यक्छ्रवणमननाभ्यामित्यर्थः ॥ २३ ॥

कुत इति। कुतः पुरुषस्य चित्तात पृथक्त्वं सिद्ध्येत् तद्युक्तिमाह—तच्चित्तमसङ्ख्येयवासनाभिर्विचित्रमपि न तेन स्वार्थेन भवितव्यम्, संहत्यकारित्वात तत् परार्थं-

तत्त्ववैशारदी।

त्तमात्रं स्यान्न तु ततो व्यतिरिक्तः, ततः कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत, स्वात्मनि वृत्तिविरोधाद्, उपसंहरति—"तस्माद्" इति। समीचीनोपदेशेनानुकम्पिता भवन्तीत्याह—"एवम्" इति। जातितः=स्वभावत इत्यर्थः ॥ २३ ॥

चित्तातिरिक्तात्मसद्भावे हेत्वन्तरमवतारयति—"कुतश्चैतद्" इति। "तद—त्वाद्" यद्यप्यसंख्येयाः कर्मवासनाः क्लेशवासनाश्च चित्तमेवाधिशेरते न तु पुरुषं, तथा च वासनाऽधीना-

पातञ्जलरहस्यम्।

'स वेत्ति वेद्यं न च तस्यास्ति वेत्ता' 'विज्ञातारमरे केन विजानीयाद्'आत्मनस्तु कामाय सर्वं प्रियं भवती'तिश्रुतीराश्रित्यातिरिक्तमात्मानं सूत्रारूढं करोति—तदिति, सर्वात्मकमपि चित्तं परार्थं न क्व चिदपि स्वार्थं जडत्वेन संहतत्वात् शयनासनादिवदिति सूत्रार्थः, न परः सामा-

वार्त्तिकम्।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते,

'अथात आदेशो नेतिनेति' 'न ह्येतस्मादिति नेत्यन्यत्परमस्ती' त्यादिः, स्मृतिश्च—

अव्यक्ताद्येऽविशेषान्ते विकारेऽस्मिंश्च वर्त्तते।

चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते,

इत्यादि, 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वं' 'वासुदेवः सर्वमि'त्यादिश्रुतिस्मृतयस्तु शक्तिशक्तिमदाद्यभेदेनैवोपासनार्थं प्रवर्त्तन्त इति न तद्विरोधः, एतेन जीवात्मप्रकरणेष्वात्मैक्यश्रुतीनाम वैधर्म्यलक्षणाभेदेन विवेक एव तात्पर्यमिति द्रष्टव्यम्, विवेकज्ञानस्यैव सम्यगज्ञानतया मोक्षहेतुत्ववचनात् परमात्मप्रकरणं तु जीवादपि विवेकेन परमात्मन एकस्यैवात्मत्वे तात्पर्यमिति मन्तव्यम्, द्वितीयपादे विवेकख्यातिरविप्लवा हानोपाय इत्येवोक्तम् अत्र तु विवेकज्ञानस्यैवसम्यगज्ञानत्वोपपादनेन मोक्षहेतुत्वं प्रभाषितं विवेकस्वरूपं च परीक्ष्यत इति विवेकः ॥२३॥

चित्तादात्म्यविवेके हेत्वन्तरप्रदर्शकतया सूत्रमवतारयति—कुतश्चेति। कुतश्च चित्तातिरिक्तः पुरुष इति शेषः,

"तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात्" यदुक्तं चित्तस्य सर्वात्मकत्वाङ्गीकारेऽसंख्यवासनावशात् स्वत एव चित्तस्यापि परिणामोऽस्तु किं पुरुषेणेति, तन्न—यतस्तच्चित्तमसंख्येयवासनाभिश्चित्रितमपि परार्थं परस्यान्यस्य भोगापवर्गायैव विना तौ न स्थातुं परिणन्तुं वा क्षमते संहत्यकारिपदार्थानां लोके परमात्रार्थत्वदर्शनादित्यर्थः, तथा च पुरुषार्थसमाप्तौ चित्तविलयेन मोक्षोपपत्तिरित्यत्रापि सूत्रतात्पर्यम्—सूत्रं व्याचष्टे—तदेतदिति,

भोगापवर्गार्थं, न स्वार्थं संहत्यकारित्वाद् गृहवत्, संहत्यकारिणा चित्तेन न स्वार्थेन भवितव्यं, न सुखचित्तं सुखार्थं न ज्ञानं ज्ञानार्थम्, उभयमप्येतत्परार्थम्, यश्च भोगेनापवर्गेण चार्थेनार्थवान् पुरुषः स एव परो,

भास्वती।

तस्मादस्ति कश्चित् परो विषयी यस्य तच्चित्तं विषय इति, तदेतदिति परस्य भोगापवर्गार्थं = परस्य चित्तातिरिक्तस्य चेतनस्य द्रष्टृरूपदर्शनेन चित्तस्य भोगापवर्गरूपव्यापारः सिद्ध्यति, संहत्यकारित्वाद् = नानाऽङ्गसाध्यत्वाच्चित्तकार्यस्य, यदा बहून्यचेतनानि साधनान्येकप्रयत्नेन मिलित्वा सचेतनवत् कार्यं कुर्वन्ति तदा तद्व्यतिरिक्तस्तत्प्रयोजकः कश्चिच्चेतनः परार्थः स्यात्, कर्माशयवासनाप्रमाणादीनि बहूनि साधनानि मिलित्वा सुखादिप्रत्ययं निर्वर्त्तयन्ति, कस्य चिदेकस्य चेतनस्य भोक्तुरधिष्ठानादेव तानि तत् कुर्युः, यश्चेति। अर्थवान् = उपदर्शनवान्, परः = अन्यश्चित्तात्, सामान्यमात्रम् = अहंशब्द-

तत्त्ववैशारदी।

विपाकाश्चित्ताश्रयतया चित्तस्य भोक्तृतामावहन्ति, भोक्त्रर्थं च भोग्यमिति सर्वं चित्तार्थं प्राप्तं, तथाऽपि तच्चित्तमसंख्येयवासनाविचित्रमपि परार्थं, कस्मात्—संहत्यकारित्वादिति सूत्रार्थः, व्याचष्टे—"तदेतद्" इति। स्यादेतत्—चित्तं संहत्यापि करिष्यति स्वार्थं च भविष्यति कः खलु विरोध इति यदि कश्चिद् ब्रूयात्तं प्रत्याह—"संहत्यकारिणा" इति। सुखचित्तमिति भोगमुपलक्षयति, तेन दुःखचित्तमपि द्रष्टव्यम्, ज्ञानमित्यपवर्ग उक्तः, एतदुक्तं भवति—सुखदुःखे चित्ते प्रतिकूलानुकूलात्मके नात्मनि सम्भवतः, स्वात्मनि वृत्तिविरोधाद्, न चान्योऽपि संहत्यकारी साक्षात्परम्परया वा सुखदुःखे विदधानस्ताभ्यामनुकूलनीयः प्रतिकूलनीयो वा, तस्माद् यः साक्षात्परम्परया वा सुखदुःखयोर्न व्याप्रियेत स एवाभ्यामनु-

पातञ्जलरहस्यम्।

न्यमात्रं दृश्य इत्यर्थः, तथात्वे सृष्टेरपुरुषार्थताप्रसङ्गः, न हि सुशिक्षितो नटवटुः स्वस्कन्धमारोढुं शक्नोतीति न्यायेन—

रूपैः सप्तभिरेवं बध्नात्यात्मानमात्मना प्रकृतिः।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण—

वार्त्तिकम्।

भोगापवर्गार्थं सुखादिसाक्षात्कारार्थम्, संहत्यकारित्वाद् इतरसाहाय्येनार्थक्रियाकारित्वात्, गृहवदिति, गृहं हि शयनादिकार्यमास्तरणशरीरादिसाहाय्येनैव करोति पुरुषस्तु नित्यचैतन्यरूपतया चैतन्यार्थं नान्यमपेक्षते, अन्या चार्थक्रिया पुरुषस्य नास्तीति स न संहत्यकारीत्याशयः, यत्तु संघातपारार्थ्यादिति सांख्ये प्रोक्तम्, तत्र संहननमारम्भकसंयोगो विवक्षितः स चावयवावयव्यभेदात् शय्याऽऽसनगृहादिषु सत्त्वादिषु चास्ति न तु पुरुष इति, ननु चित्तं संहत्यापि करिष्यति स्वार्थमपि भविष्यति कः खलु विपक्षबाधकस्तर्क इत्याकाङ्क्षायामाह-संहत्यकारिणेति, न सुखचित्तमिति, सुखचित्तं भोगचित्तं न सुखार्थं न चित्तस्य भोगार्थं तथा तत्त्वज्ञानचित्तमपवर्गचित्तं न चित्तस्यापवर्गार्थं चित्तस्य भोगापवर्गयोरपि कार्यतया सार्थकत्वनियमेनानवस्थाप्रसङ्गात्, यत्कार्यं तत्सार्थकमिति ह सर्वसंमतम्, अतश्चित्तस्यतदुभयमपि परार्थमित्यर्थः, पुरुषस्य च भोगापवर्गौ स्वरूपचैतन्यरूपतया न कार्याविति नानवस्था पुरुषार्थत्ववादिनामिति भावः, पुरुषस्य भोगो हि सुखादिसाक्षात्कारः अपवर्गश्च विवेकख्यातिसाक्षात्कारो वा स्वरूपावस्थानं वा सर्वथैव चैतन्यमात्र एवापरिणामित्वान्निर्धर्मत्वाच्चेति, ननु परार्थतामात्रेण न पुरुषसिद्धिर्विनाशादीनामपि परार्थत्वसंभवाद् विनाशार्थमेवोत्पत्तेः परस्युपगमादित्याशङ्कायामाह—यश्चेति, भोगापवर्गार्थवानेवात्र परः साङ्ख्ये

न परः सामान्यमात्रं, यत्तु किञ्चित्परं सामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकस्तत्सर्वं संहत्यकारित्वात् परार्थमेव स्याद्, यस्त्वसौ परो विशेषः स न संहत्यकारी पुरुष इति ॥ २४ ॥

## विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५ ॥

यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्ताऽनुमीयते तथा मोक्षमा-

भास्वती ।

वाच्यानां क्षणिकप्रत्ययानां साधारणनाममात्रं स्वरूपेणोदाहरेत् = भोक्त्रितिनाम्ना प्रदर्शयेद् यस्त्वसौ परो विशेषः = भावः, नामादिवियोगेऽपि यस्य सत्ताऽनुभूयते तादृशश्चित्तातिरिक्तः सत्पदार्थो न स संहत्यकारी स हि पुरुषः, वैनाशिका विज्ञानादिस्कन्धान्तर्गतं सामान्यमात्रं यद् वदेयुस्तत संहत्यकारि स्यात् पञ्चस्कन्धान्तर्गतत्वात् ॥ २४ ॥

चित्तात् पुरुषस्यान्यतां संस्थाप्याधुना कैवल्यभागीयं चित्तं विवृणोति सूत्रकारः— विशेषेति । द्रष्टृदृश्ययोर्भेदरूपो यो विशेषस्तद्दर्शिन आत्मभावभावना वक्ष्यमाणा विनिवर्त्ततेति सूत्रार्थः, यथेति । विशेषदर्शनबीजं = विवेकदर्शनबीजम् , पूर्वपूर्वजन्मसु श्रव-

तत्त्ववैशारदी ।

कूलनीयः प्रतिकूलनीयो वा, स च नित्योदासीनः पुरुषः, एवमपवृज्यते येन ज्ञानेन तस्यापि ज्ञेयतन्त्रत्वात् स्वात्मनि च वृत्तिविरोधान्न ज्ञानार्थत्वम् , न चान्यविषयादस्मादपवर्गसम्भवो, विदेहप्रकृतिलयानामपवर्गासम्भवात्, तस्माज्ज्ञानमपि पुरुषार्थमेव, न तत्स्वार्थं, नापि परमात्रार्थम् , संहतपरार्थत्वे चानवस्थाप्रसङ्गादसंहतपरार्थसिद्धिरिति ॥ २४ ॥

तदेवं कैवल्यमूलबीजं युक्तिमयमात्मदर्शनमुक्त्वा तदुपदेशाधिकृतं पुरुषमनधिकृतपुरुषान्तराद् व्यावृत्तमाह—"विशेष—वृत्तिः" यस्यात्मभावे भावनाऽस्ति तस्याष्टाङ्गयोगोपदेशाननुतिष्ठतो युञ्जानस्य तत्परिपाकाच्चित्तसत्त्वपुरुषयोर्विशेषदर्शनाद् आत्मभावभावना

पातञ्जलरहस्यम् ।

स्युक्तिमाश्रित्याह—सर्वोत्कृष्टस्यापि ज्ञानस्य परार्थत्वं किमन्येषामित्यादि-परार्थसिद्धिरित्यन्तेनोक्तम् ॥ २४ ॥

'देवोऽहं राजा चाहं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक इति श्रुतिमाश्रित्य पुरुषधौरेयं सूत्रारूढं करोति—विशेषदर्शिन इति । आत्मभावे भावना निवर्तत इति सूत्रार्थः,

वार्त्तिकम् ।

प्रविष्टोऽतो न सामान्येन येन केन चित्परेण सिद्धसाधनमर्थान्तरं चेत्यर्थः, स्वोत्तरोत्पन्नक्षणिकचित्तस्य भोगार्थकतया पराभिप्रेतं सिद्धसाधनमपाकरोति-यत्तु कि चिदिति, स्वरूपेण = आत्मरूपेण भोक्तृतयेति यावत् , यस्त्विवति, यस्त्वसौ विशेषः पुरुषाख्यः परः स कूटस्थनित्यत्वाद् न संहत्यकारीति न तस्य परार्थत्वापत्त्याऽनवस्थितिरित्यर्थः ॥२४॥

तदेवं बुद्धिपुरुषविषयाणां विवेकं प्रदर्श्य तज्ज्ञानादाद्यं मोक्षमादौ प्रतिपादयति,—

"विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः" मातृमानमेयात्मकस्याखिलप्रपञ्चस्य तप्तायःपिण्डवदेकीभावापन्नस्य यथोक्तप्रकारेण्योन्यं विशेषदर्शिनो विवेकसाक्षात्कारिणश्चित्तस्यात्मभावे भावना स्वसत्ताजिज्ञासा कोऽहमासमित्यादिरूपा भाष्ये व्याख्येया, तस्याभयशोकप्रवृत्तिनिवृत्त्याद्यनर्थ हेतोर्निवृत्तिराद्यो मोक्षो भवतीत्यर्थः, स्वर्गनरकमोक्षादिभिर्हि विचित्ररूपता चित्तस्यैव भवति न तु सदैकरूपचिन्मात्रस्य न ममेत्यवधारणे सति नैवात्मभावचिन्तोदेतीति भावः, तथा च श्रुतिः, 'एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरव'मितीत्यादिः, तदेतदुक्तं—पञ्चशिखाचार्यै'राद्यस्तु मोक्षो ज्ञानेने'ति, अत्रादौ

र्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्त्तितमित्यनुमीयते तस्यात्मभावभावना स्वाभाविकी प्रवर्त्तते, यस्याभावादिदमुक्तं "स्वभावं मुक्त्वा दोषाद् येषां पूर्वपक्षे रुचिर्भवति; अरुचिश्च निर्णये भवति" तत्रात्मभावभावना कोऽहमासं कथमहमासं—किंस्विद् इदं, कथं स्विदिदं, के भविष्यामः कथं वा भविष्याम इति, सा तु विशेषदर्शिनो निवर्त्तते, कुतः, चित्तस्यैष विचित्रः परिणामः, पुरुषस्त्वस-

भास्वती।

णमननादिभिरभिसंस्कृतम्, स्वाभाविकी = स्वरसतः, इष्टाभ्यासं विनाऽपीत्यर्थः, आत्मभावभावना प्रवर्त्तते उक्तमाचार्यैः, स्वभावम् = आत्मभावम्, आत्मसाक्षात्कारविषयमिति यावद् मुक्त्वा = त्यक्त्वा, दोषात् = पूर्वसंस्कारदोषाद्, येषां पूर्वपक्षे = संश-

तत्त्ववैशारदी।

निवर्त्तते, यस्यात्मभावभावनव नास्ति नास्तिकस्य तस्योपदेशानधिकृतस्यापरिनिश्चितात्मतत्परलोकभावस्य नोपदेशो न विशेषदर्शनं नात्मभावभावनानिवृत्तिरिति सूत्रार्थः, नन्वात्मभावभावनायाश्चित्तवर्त्तिन्याः कुतोऽवगम इत्यत आह-"यथा प्रावृषि" इति। प्राग्भवीयं तत्त्वदर्शनबीजमपवर्गभागीयं यत्कर्माष्टाङ्गयोगानुष्ठानं तदेकदेशानुष्ठानं वा तदभिनिर्वर्त्तितमस्तीत्यनुमीयते, तस्य चात्मभावभावनाऽवश्यमेव स्वाभाविकी वस्त्वभ्यासं विनाऽपि प्रवर्त्तते, अनधिकारिणमागमिनां वचनेन दर्शयति-"यस्याभावादिदम्" इति। पूर्वपक्षः = नास्ति कर्मफलं परलोकिनोऽभावात् परलोकाभावात्, तत्र रुचिः, अरुचिश्च निर्णये = पञ्च-

पातञ्जलरहस्यम्।

"यत्करोषि यदश्नासि यज्जुहोषीत्युक्तं कर्मार्पणं कैवल्यभागीयं कर्म यस्य विशेषदर्शनबीजं तादृशहर्षादिना तामेतस्यानुमापयति, निर्गुणश्च न लिप्यते पापकर्मणा पापकेनेति

वार्त्तिकम्।

भाष्यकार आत्मभावभावनामेव सकारणां प्रतिपादयति,-यथेत्यादिना, तत्रापीति, पुरुष इति शेषः, विशेषदर्शनबीजमिति, आत्मभावजिज्ञासाद्वारेति शेषः, इत्यनुमीयत इति विविदिषन्ति यज्ञेनेत्यादिश्रुतेः,

पापक्षयाद् शुद्धमतिर्वाञ्छेति ज्ञानमुत्तममिति-

स्मृतेश्चेति शेषः, तस्य यथोक्तकर्मवतः स्वाभाविकी = ऐहिकसाधननिरपेक्षा च, तथा यथोक्तं कर्म आत्मभावनायाः कारणम्, तत्र च नैहिकत्वनियम इत्यायातम्, ऐहिकसाधनशून्यस्य प्राक्तनतथाविधकर्माभावे च सा भावना नोदेति प्रत्युत देहाद्यात्मतायामेव रुचिर्भवतीति, अत्र पूर्वाचार्यवाक्यं प्रमाणयति-यस्याभावादिति, यस्य कर्मणोऽभावादिदं वक्ष्यमाणंफलमुक्तं पूर्वाचार्यैः, तदेवाह,-स्वभावमिति, स्वभावमात्मभावं त्यक्त्वैषां सत्कर्मशून्यानां पूर्वपक्षे नित्यदेहाद्यात्मतामेव रुचिः श्रद्धाऽऽतिशयो भवति, अरुचिश्च तत्त्वनिर्णय इत्यर्थः, आत्मभावनायाः कारणमुक्त्वा स्वरूपमाह—तत्रात्मेति, कोऽहमासं किं नरादिरूप आसं कथमासं दुःखेन दर्शनवानासं किं स्विदिदं वर्त्तमानमपि मम स्वरूपं किं देहो वा मनआदिर्वा कथं स्विदिदं केन वा प्रकारेण पुण्यपापादिना तिष्ठतीत्यादिरर्थः, के भविष्याम इत्याद्येकत्व एव बहुवचनं, तथा च यज्जिज्ञासोत्थभयादिनिवृत्तये विशेषदर्शनं पुरुषः संपादयति सैवात्मभावनेत्यर्थः, आत्मभावनामशेषतो व्याख्याय सूत्रवाक्यार्थमाह,—स त्विति। विशेषदर्शनात्कुतो निवृत्तिरिति प्रश्नस्योत्तरमाह—चित्तस्येति, एष भावरूपो विचित्रः परिणाम आत्मनो न भवति किं तु चित्तस्यैवाविद्याजन्यत्वात्, अविद्यायाश्च चित्तधर्मत्वात् पुरुषस्त्वविद्याशून्यत्वाच्छुद्धः पापपुण्यविवर्जितः, ततश्च चित्तधर्मैर्जन्ममरणसुखदुःखादिभि-

त्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति, ततोऽस्यात्मभावभावना कुशलस्य निवर्त्तत इति ॥ २५ ॥

**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥**

तदानीं यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासीत्तदस्यान्यथा भवति, कैवल्यप्राग्भारं विवेकजज्ञाननिम्नमिति ॥ २६ ॥

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥**

प्रत्ययविवेकनिम्नस्य सत्त्वपुरुषान्यताख्यातिमात्रप्रवाहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराणि = अस्मीति वा, ममेति वा जानामीति वा, न जानामीति वा, कुतः—क्षीयमाणबीजेभ्यः पूर्वसंस्कारेभ्य इति ॥ २७ ॥

भास्वती।

तद्धेतुभूते कर्मणि रुचिर्भवति, निर्णये = तत्त्वनिर्णये चारुचिर्भवतीति, आत्मभावभावनानिवृत्तेः स्वरूपमाह—पुरुषस्त्विति ॥ २५ ॥

तदेति। तदा कैवल्यपर्यन्तगामिनि विवेकमार्गे निम्नमार्गगजलवच्चित्तं प्रवहति, विवेकजज्ञाननिम्नं=प्रबलविवेकजज्ञानवदित्यर्थः ॥ २६ ॥

तच्छिद्रेषु = विवेकान्तरालेषु, अस्मीति = अहमहमिति, सुगममन्यत् ॥ २७ ॥

तत्त्ववैशारदी।

विंशतितत्त्वविषये, आत्मभावभावना प्राग् व्याख्याता, विशेषदर्शिनः परामर्शमाह—"चित्तस्यैव" इति। तस्य विशेषदर्शनकुशलस्यात्मभावभावना विनिवर्त्तत इति ॥ २५ ॥

अथ विशेषदर्शिनः कीदृशं चित्तमित्यत आह—"तदा·चित्तम्" निगदव्याख्यातम् ॥२६॥

स्यादेतद्—विशेषदर्शनं चेद्विवेकनिष्ठं न जातु चित्तं व्युत्थितं स्याद्, दृश्यते चास्य भिक्षामटतो व्युत्थितमित्यत आह—"तच्छि-भ्यः" प्रतीयते येन स प्रत्ययः, = चित्तसत्त्वं,-

पातञ्जलरहस्यम्।

श्रुतिमाश्रित्याह-पुरुषस्त्विति ॥ २५ ॥

"यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिता इति श्रुतिमाश्रित्याह-तदेति। कैवल्यस्य मोक्षस्य प्राग्भारोजनकत्ता यत्र चिते विवेकसाक्षात्कारप्रवत्तेति सूत्रार्थः ॥ २६ ॥

वीतरागस्य व्यासादेः विचित्रवीर्यक्षेत्रे पुत्रोत्पादनादेः का गतिस्तत्राह—तच्छिद्रेष्विति,

वार्त्तिकम्।

रपरामृष्टः कदाऽप्यसंबद्ध इति, तत इति विशेषदर्शनादस्य कुशलस्यात्मभावना निवर्त्तत इत्यर्थः ॥ २५ ॥

तन्निवृत्तेः स्वर्गनरकादिषु रागद्वेषादिनिवृत्तिः फलमिति, तस्य विशेषदर्शिनो लक्षणं संप्रज्ञातयोगं वक्ष्यमाणमुक्तेश्च कारणभूतमाह,—

"तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्" कैवल्ये प्राग्भारो यस्य तत्कैवल्यप्राग्भारम्, कैवल्याभिमुखमिति यावत्, व्याचष्टे,—तदानीमिति, तदानीं विशेषदर्शनावस्थायां स्वर्गादिवैराग्यवशात् चित्तमन्यथा भवतीत्यनेनान्वयः, विषयप्राग्भारं विषयाभिमुखम् अज्ञाननिम्नमज्ञानमार्गसंचारि एवमुत्तरत्र ॥ २६ ॥

न चानेन कोमलकण्टकवद् उत्पन्नमात्रेण विशेषदर्शनेनैव कृतकृत्यता भवति पूर्वसंस्कारवशाद् अन्तराऽन्तरा मोहाख्यानां भवदुःखबीजवृत्तीनामनुवृत्तेरित्याह—

"तच्छिद्रेषु प्रत्ययाऽन्तराणि संस्कारेभ्यः" व्याचष्टे-विवेकेति, विवेकप्रत्ययनिम्नस्येत्यस्य विवरणं सत्त्वेत्यादि, सत्त्वपुरुषान्यतामात्रेण प्रवहणशीलस्येत्यर्थः, तच्छिद्रेषु स्थानेषु

## हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति तथा ज्ञानाग्निना द-

भास्वती।

एषाम् = अविवेकप्रत्ययानां पूर्ववदभ्यासवैराग्याभ्यामित्यर्थः, हानमित्युक्तम्, न प्रत्ययप्रसूर्भवति = विवेकप्रत्ययेनाधिकृतत्वात् प्रत्ययान्तरस्य नावकाशः, ज्ञानसं-स्काराः = विवेकसंस्काराश्चित्ताधिकारसमाप्तिं = सर्वसंस्कारनाशाज्जनिष्यमाणं चित्तस्य

तत्त्ववैशारदी।

तस्माद्विवेकश्चितेः, तेन निम्नस्य, जानामीति साक्षान्मोक्षो विविच्य दर्शितः न जानामीति मोहः, तन्मूलावहङ्कारममकारावहमस्मीति वा ममेति वा दर्शितौ क्षीयमाणानि च तानि बीजानि चेति समासः, पूर्वसंस्कारेभ्यः = व्युत्थानसंस्कारेभ्यः ॥ २७ ॥

स्यादेतत्—सत्यपि विवेकज्ञाने व्युत्थानसंस्कारा यदि प्रत्ययान्तराणि प्रसुवते कस्तर्हि हानहेतुरेतेषां यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्नित्यत आह-"हानमेषां क्लेशवदुक्तम्" अपरिपक्वविवेकज्ञानस्याक्षीयमाणा व्युत्थानसंस्काराः प्रत्ययान्तरं प्रसुवते, न तु परिपक्ववि-वेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुमर्हन्ति, यथा विवेकच्छिद्रसमुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते, तत्कस्य हेतोः तदैते क्लेशा विवेकज्ञानवह्निदग्धबीजभावा इति, एवं-व्युत्थानसंस्कारा अपीति,

पातञ्जलरहस्यम्।

संस्कारो नान्यथा भवेदिति न्यायेन यानि प्रत्ययान्तराणि तानि पूर्वव्युत्थानसंस्कारेभ्यो-जायन्ते न तु समाधेः परमवैराग्यादिति सूत्रार्थः ॥ २७ ॥

"प्रसरं न लभन्ते हि यावत् क च मर्कटाः।
नाभिद्रवन्ति ते तावत् विरोधा वा स्वगोचर-

इति न्यायेन प्रसरनिरोधार्थमुपायं सूत्रारूढं करोति—हानमेषां क्लेशवदुक्तं, यथा

वार्त्तिकम्।

अविद्यारूपाणां प्रत्ययानामाकारा अस्मिताऽऽद्याश्च प्रदर्शिताः, अस्मीति देवमनुष्यादिरूपोऽ-स्मीत्यर्थः, केवलास्मितायाः संप्रज्ञातयोगेऽपि सत्त्वात् क्षीयमाणेभ्यो बीजेभ्यः क्षीयमाण-बीजेभ्यः, एतस्य विशेष्यं पूर्वसंस्कारेभ्य इति ॥ २७ ॥

ननु ज्ञाने जातेऽपि चेत् पूर्वसंस्कारवशाद्व्युत्थानदशायां कदा चिदविद्योदयः कथं तर्हि संप्रज्ञातप्रवाहेणाप्यविद्यानिवृत्तिः स्यात्तत्राह—

"हानमेषां क्लेशवदुक्तम्" एषां संस्काराणां हानं दाहः स्वकार्यासामर्थ्यं क्लेशानामि-वोक्तं पूर्वाचार्यैरित्यर्थः, 'ध्यानहेयास्तद्वृत्तयः' 'ते प्रतिप्रसवहेयाः सूक्ष्मा' इति सूत्राभ्यां-यथा स्थूलसूक्ष्मक्लेशानां तत्त्वज्ञानचित्तलयाभ्यां दाहनाशौ प्रोक्तौ तथा तत्संस्काराणाम-पीति फलितार्थः, एतदेव व्याचष्टे —यथेति, यथा संप्रज्ञातयोगिनो व्युत्थानदशायां पूर्वसं-स्कारजाः क्लेशा अविद्याऽऽदिवृत्तयो दग्धबीजतुल्याः सन्तो न संस्कारं जनयन्ति तथा पूर्व-संस्कारा अपि संप्रज्ञातपरंपराजनितेन निष्ठारूपेण ज्ञानाग्निना दग्धबीजतुल्याः सन्तः प्रत्ययं-न प्रसुवत इत्यर्थः, पूर्वसंस्कारः प्राचीनः क्लेशसंस्कारः ज्ञानकाले ज्ञानसंस्कारेण प्रतिबन्धा-त्संस्कारो नोत्पद्यत इत्याशयेन पूर्वपदम्, अत्र ज्ञाननाशोऽपि क्लेशवदुपलक्षित इति, नन्वेकदा चेद् दृष्टं मम जन्म मरणं दुःखादिकं नास्तीति तर्हि कदा चिदन्तराऽन्तरा मोहेऽपि तद्धानार्थं-प्रवृत्तिर्नोपपद्यते मोहस्यापि चित्तधर्मतायाः पूर्वं निश्चितत्वादिति चेन्न-चित्तस्य मोहसत्त्वे पुनश्चित्तस्य भवदुःखोत्पत्त्या पुरुषस्य दुःखभागः स्यादित्याशयेनैव ज्ञानिभिरपि चित्तस्या-स्यस्ततो मोहनिवृत्त्यर्थं यतनात्, भोगश्च चिन्मात्रस्यैवेत्यसकृदावेदितमिति, ननु संस्कार-

ग्धबीजभावः पूर्वसंस्कारो न प्रत्ययप्रसूर्भवति, ज्ञानसंस्कारास्तु चित्ताधिकारसमाप्तिमनुशेरत इति न चिन्त्यन्ते ॥ २८ ॥

## प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥

यदाऽयं ब्राह्मणः प्रसंख्यानेऽप्यकुसीदः=ततोऽपि न किञ्चित्प्रार्थयते,

भास्वती।

प्रतिप्रसवमनुशेरते=तावत्कालं स्थास्यन्तश्चित्तेन सह प्रविलीयन्त इत्यर्थः, तस्मात्तेषां हानं न चिन्तनीयमिति ॥ २८ ॥

प्रसङ्ख्याने=विवेकजसिद्धावप्यकुसीदस्य=कुत्सितेषु सीदतीति कुसीदो रागः, तद्रहितस्य विरक्तस्य, अतो बाह्यसञ्चारहीनत्वात् सर्वथा विवेकख्यातिस्तद्रूपो यः समाधिः स धर्ममेघ इत्याख्यायते योगिभिः, कैवल्यधर्मं स वर्षति, वर्षालब्धं वारीव धर्ममेघादप्रयत्नलभ्यं कैवल्यं भवतीति सूत्रार्थः, यदाऽयमिति, सुगमम् भाष्यम्,

श्रूयते च—

''यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति।
एवं धर्मान् पृथक् पश्यँस्तानेवानुविधावति ॥
यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति।
एवं मुनेर्विज्ञानत आत्मा भवति गौतम! ॥ इति,

तत्त्ववैशारदी।

अथ व्युत्थानसंस्कारा विवेकज्ञानसंस्कारैर्निरोद्धव्याः, विवेकसंस्काराश्च निरोधसंस्कारैः निरोधसंस्काराणान्त्वबाह्यविषयत्वं दर्शितं, निरोधोपायः प्रायश्चिन्तनीय इत्यत आह—"ज्ञानसंस्कारास्तु" इति। परवैराग्यसंस्कारा इत्यर्थः ॥ २८ ॥

तदेवं सूत्रकारो व्युत्थाननिरोधोपायं प्रसङ्ख्यानमुक्त्वा प्रसङ्ख्याननिरोधोपायमाह—"प्रस-समाधिः" ततोऽपि=प्रसङ्ख्यानादपि, न किञ्चित्=सर्वभावाधिष्ठातृत्वादि, प्रार्थयते,

पातञ्जलरहस्यम्।

दग्धबीजभावा धाना न रोहन्ति प्रतिपक्षभावनया तथा ज्ञानाग्निदग्धबीजभावाः संस्कारा अपीति सूत्रार्थः ॥ २८ ॥

दग्धबीजता कुतस्तत्राह—प्रसंख्यान इति, कुसीदं लभ्यमुच्यते प्रसंख्यानं तत्त्वज्ञानाभ्यासः तस्माद्यद्यधिकफलं न प्रार्थयते यः कुसीदलाभेऽपि विरक्तस्तस्यानवरतज्ञानं तत्त्वाविशेषात्तत्त्वज्ञानसंस्कारा अपि

वार्त्तिकम्।

किं संप्रज्ञातनिष्ठया नश्यन्ति, नेत्याह—ज्ञानसंस्कारास्त्विति, अविरुद्धत्वादिति शेषः, तर्हि कथं तेषां नाशः स्यादिति, तत्राह—इति न चिन्त्यन्त इति, अधिकारसमाप्तौ चित्तेन सहैव तेषां नाशात्तत्साधनचिन्ता नास्तीत्यर्थः, आशु मुमुक्षूणां त्वसंप्रज्ञातेनापि तन्नाशश्चिन्तित इति भावः ॥ २८ ॥

उक्तस्य संस्कारहानस्य प्रकारमाह सूत्रद्वयेन—

"प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः" प्रसंख्यानं विवेकसाक्षात्कारः तत्रापि योऽकुसीदः कुबीजवत्न सर्वभावाधिष्ठातृत्वादिरूपां सिद्धिं न प्रार्थयते तस्य योगविघ्नाभावेन सर्वथा निरन्तरं विवेकख्यात्युदयाद् धर्ममेघनाम्नी संप्रज्ञातयोगस्य परकाष्ठा भवतीत्यर्थः, तदेतद्व्याचष्टे—यदेति। तत्रापि तत्फलेऽपि, सर्वथाशब्दार्थमाह—संस्का-

तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्ना-स्य प्रत्ययान्तराण्युत्पद्यन्ते. तदाऽस्य धर्ममेघो नाम समाधिर्भवति ॥ २९ ॥

**ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥**

तल्लाभादविद्याऽऽदयः क्लेशाः समूलकाषं कषिता भवन्ति, कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति, क्लेशकर्मनिवृत्तौ जीवन्नेव वि-

भास्वती ।

अस्यार्थः—यथा दुर्गमे पर्वतशिखरे वृष्टमुदकं पर्वतगात्रेषु विधावति, एवं धर्मान् बुद्धिधर्मान् पुरुषतः पृथक् पश्यन् , तानेवानु विधावति, बुद्धिशिखरे विवेकाम्बुवृष्टिजातोविवेकौघो बुद्धिधर्मानाप्लावयतीत्यर्थः, यथा च शुद्धे प्रसन्न उदके वृष्टमुदकं शुद्धोदकतामापद्यते तथा विज्ञानतो विवेकतो मुनेरात्माऽन्तरात्मा शुद्धो विवेकाप्यायितो भवतीति विवेकमात्रसमाधानाद् ॥ २९ ॥

तदिति । समूलकाषं कषिताः=समूलोत्पाटिताः, जीवन्नेव विद्वान् विमुक्तः=दुःखत्रयातीतो भवति, विवेकप्रत्ययप्रतिष्ठया दुःखप्रत्यया नोत्पद्येरन्नतो विमुक्तो देहवानपि, न च तस्य विमुक्तेः पुनरावृत्तिः समाधेः क्षीणविपर्ययस्य विवेकप्रतिष्ठस्य जन्मासम्भवाद् , देहेन्द्रियाद्यभिमानवशादेव जातिस्तदभावान्न पुनरावृत्तिः,

तत्त्ववैशारदी ।

प्रत्युत तत्रापि क्लिश्नाति, परिणामित्वदोषदर्शनेन विरक्तः, सर्वथा विवेकख्यातिरेव भवति, एतदेव विवृणोति-"तत्रापि" इति । यदा व्युत्थानप्रत्यया भवेयुस्तदा नायं ब्राह्मणः सर्वथा विवेकख्यातिः, यतस्तस्य न प्रत्ययान्तराणि भवन्ति ततः सर्वथा विवेकख्यातिरिति, तदाऽस्य धर्ममेघः समाधिर्भवति – एतदुक्तं भवति-प्रसङ्ख्याने विरक्तस्तन्निरोधमिच्छन् धर्ममेघंसमाधिमुपासीत, तदुपासने च सर्वदा विवेकख्यातिर्भवति, तथा च तन्निरोद्धुं पारयतीति २९॥

तस्य च प्रयोजनमाह—"ततः क्लेशकर्मनिवृत्ति." कस्मात्पुनर्जीवन्नेव मुक्तो भवति, उत्तरं-"यस्माद्" इति क्लेशकर्मवासनेद्धः किल कर्माशयो जात्यादिनिदानम् , न चासति नि

पातञ्जलरहस्यम् ।

धर्ममेघः समाधिः परवैराग्यं स्यात् तथा व्युत्थानसंस्कारक्षयात् प्रत्ययान्तराणि नोत्पद्यन्ते किन्तर्हि ज्ञानमेव सुदृढमिति शेषः ॥ २९ ॥

"क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर—

वार्त्तिकम् ।

रेति, संस्काररूपस्य बीजस्य क्रमेण क्षयाद्धाह्रासीयमानाद्धेतोः प्रत्ययान्तराणि – अविद्याऽन्तराणि यदा न जायन्ते तदा धर्ममेघसमाधिरित्यर्थः, क्लेशकर्मादीनां निःशेषेणोन्मूलकं धर्म मेहति वर्षतीति धर्ममेघः ॥ २९ ॥

अस्य समाधेधर्मेद्वारकफलं द्वितीयमोक्षमाह—

"ततः क्लेशकर्मनिवृत्तिः" निवृत्तिः, दाहसमाप्तिः, व्याचष्टे-तल्लाभादिति, समूलकाषमिति, मूलं क्लेशसंस्कारास्तैः सह क्लेशा अभिनिवेशान्तिकाश्छिन्ना भवन्ति, अत एव कर्माशयाश्च प्रारब्धातिरिक्ताः क्लेशाख्यमूलेन सह हताः स्युरतो न पुनरुत्पद्यन्त इत्यर्थः, ननु दुःखात्यन्तनिवृत्तिरेव मोक्षो जीवतश्चावश्यं दुःखम् , 'न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति' इति श्रुतेः, तत्कथं जीवन्मुक्तिरित्याशयेन पृच्छति—कस्मादिति,-उत्तरं,-यस्मादिति, तथा च दुःखनिदानात्यन्तोच्छेदस्य गौणमुक्तित्वमिति भावः, अत्र प्रमाणमनुपलब्धिमाह—न हीति, तदुक्तं गोतमाचार्यैः-'वीतरागजन्मादर्शना'दिति, अयमपि मोक्षः पञ्चशिखाचार्यैरुक्तो द्वितीयो-

ह्लात् विमुक्तो भवति, कस्मात्—यस्माद्विपर्य्ययो भवस्य कारणम्, न हि क्षीणविपर्य्ययः कश्चित्केन चित् क चिज्जातो दृश्यत इति ॥ ३० ॥

**तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्या-ज्ज्ञेयमल्पम् ॥ ३१ ॥**

सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति, आवरकेण तमसाऽभिभूतमावृतज्ञानसत्त्वं क चिदेव रजसा प्रवर्त्तितमुद्घाटितं ग्रहणसमर्थं-

भास्वती ।

उक्तञ्च—

"विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिराद् ॥"

इति ॥ ३० ॥

तदा सर्वावरणमलापगमात् ज्ञानस्यानन्त्यं भवति ततश्च ज्ञेयमल्पं भवति, सर्वैरिति चित्तसत्त्वं प्रकाशस्वभावकम्, तच्च सर्वं प्रकाशयेदसति बाधके, बाधकश्च चित्ततम आवरणशीलं चित्ततमो यदा रजसा क्रियास्वभावेनापसार्यते तदोद्घाटितं सत्त्वं प्रकाशयति, तदेव ज्ञानम्, अतस्तमसः सत्त्वमलभूतस्यापगमाद्रजसोऽपि कार्याभावे स्वल्पीभावात् सत्त्वं निरावरणं भूत्वा सर्वं सम्यक् प्रकाशयेदिति ज्ञानस्यानन्त्यम्, यत्रेदमिति । अत्र

तत्त्ववैशारदी ।

दाने निदानी भवितुमर्हति, यथाहात्रभगवानक्षपादः-"वीतरागजन्मादर्शनात्" इति ॥३०॥

अथैवं धर्ममेघे सति कीदृशं चित्तमित्यत आह—"तदा-अल्पम्" आव्रियते चित्तसत्त्वमेभिरित्यावरणानि, मलाः = क्लेशकर्माणि, सर्वे च त आवरणमलाश्चेति सर्वावरणमलाः, तेभ्योऽपेतस्य चित्तसत्त्वस्य, ज्ञानस्य = ज्ञायतेऽनेनेत्यनया व्युत्पत्त्या, आनन्त्याद् = अपरिमेयत्वाज्ज्ञेयमल्पम्, यथा हि शरदि घनपटलमुक्तचन्द्रार्चिषः परितः प्रद्योतमानस्य प्रकाशानन्त्यात्प्रकाश्या घटादयोऽल्पाः प्रकाशन्ते; एवमपगतरजस्तमसश्चित्तसत्त्वस्य प्रकाशानन्त्यादल्पं प्रकाश्यमिति, तदेतदाह—"सर्वैः" इति, एतदेव व्यतिरेकमुखेन स्फोरयति—"आ-

पातञ्जलरहस्यम् ।

इति श्रुतिमाश्रित्याह—तत इति सूत्रं, कुशलाकुशलाः पुण्यपापा इति ॥ ३० ॥

जीवन्मुक्तस्य चित्तं व्याचिकीर्षुः तत् सूत्रारूढं करोति-तदेति, ज्ञातस्य चित्तस्य स्वतो-जगन्मण्डलव्यापिनः सर्वेऽनन्ता इति श्रुतेरपेतावरणे वियत इव सर्वावभासकस्य ज्ञेयमल्पम्,

वार्त्तिकम् ।

रागक्षयादिति, अत्र जीवन्मुक्तस्य सवासनक्लेशात्यन्तदाहनिर्णयाद् आधुनिकवेदान्तिनामविद्याक्लेशस्वीकारोऽविद्यामूलक एवेति स्मर्त्तव्यम् ॥ ३० ॥

इदानीं मुक्तस्य जीवन्मुक्तस्य परममुक्तिप्रकारमाह सूत्रद्वयेन—

"तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज् ज्ञेयमल्पम्" तदा तस्यां जीवन्मुक्तावस्थायां क्लेशकर्मणोर्ज्ञानावरकमलयोरपगमेन हेतुना ज्ञानस्य सत्त्वप्रकाशस्यानन्त्यादिति विभुत्वाज्ज्ञेयं प्रकाश्यमल्पं तदपेक्षया भवतीत्यर्थः, यदि हि पञ्चविंशतितत्त्वातिरिक्तमन्यदपि वस्तु तिष्ठेत् तदा तदपि प्रकाश्येत ज्ञेयस्यैव स्वल्पतयाऽन्यन्न प्रकाश्यते न तु सत्त्वस्याल्पतयेति भावः, तदेतद्व्याचष्टे—सर्वैरिति, अनन्तं स्वभावतो व्यापकं ज्ञानं सत्त्वमिति भूतसत्त्वव्यावर्त्तनायोक्तं प्रवर्त्तितमिति, अस्य विवरणम् उद्घाटितमिति, शेषं भाष्यं सुगमम्, अत्र त-

भवति, तत्र यदा सर्वैरावरणमलैरपगतमलं भवति तदा भवत्यस्यानन्त्यं, ज्ञानस्यानन्त्याज्ज्ञेयमल्पं सम्पद्यते, यथाऽऽकाशे खद्योतः, यत्रेदमुक्तम्—

"अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् ।
अग्रीवस्तं प्रत्यमुञ्चत्तमजि ह्वोऽभ्यपूजयद्" इति ॥ ३१ ॥

## ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥

भास्वती ।

परमज्ञानलाभात् पुनर्जातेरसम्भवित्वविषये वक्ष्यमाणायाः श्रुतेरर्थः प्रयोज्यः, तद् यथा-अन्धो मणिमविध्यद् वेधनं सच्छिद्रं कृतवान्, अनङ्गुलिः कश्चित् तान् मणीनावयद्-ग्रथितवान्, अग्रीवस्तं मणिहारं प्रत्यमुञ्चद्-अपिनद्धवान् कण्ठे, अजिह्वस्तमभ्यपूजयत्=स्तुतवान्, इमाः क्रिया यथाऽसम्भवास्तथा विवेकिनो जातिरित्यर्थः ॥ ३१ ॥

तत्त्ववैशारदी ।

वरकेण तमसाऽभिभूतम्" इति, क्रियाशीलेन रजसा प्रवर्त्तितमत एवोद्घाटितं=प्रदेशादपनीततम इत्यर्थः, अत एव सर्वान् धर्मान्=ज्ञेयान् मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यते, नन्वयमस्तु धर्ममेघः समाधिः सवासनक्लेशकर्माशयप्रशमहेतुः, अथ सत्यप्यस्मिन् कस्मान्न जायते पुनर्जन्तुरित्यत आह—"यत्रेदमुक्तम्" इति कारणसमुच्छेदादपि चेत्कार्य्यं क्रियते हन्त भो मणिवेधादयोऽन्धादिभ्यो भवेयुः प्रत्यक्षाः, तथा चानुपपन्नार्थतायामाभाणको लौकिक उपपन्नार्थः स्याद्, अविध्यदन्धो मणिमिति, आवयद्=ग्रथितवान्, प्रत्यमुञ्चत-पिनद्धवान्, अभ्यपूजयत्=स्तुतवानिति ॥ ३१ ॥

ननु धर्ममेघस्य परा काष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघातमपहन्तु व्युत्थानसमाधिसंस्काराान् क्लेशकर्माशयान्, गुणास्तु स्वत एव विकारकरणशीलाः कस्मात्तादृशमपि पुरुषं प्रति देहेन्द्रियादि नारभन्त इत्यत आह—"ततः=नाम्" शीलमिदं गुणानां यदमी यं

पातञ्जलरहस्यम् ।

"आश्चर्यवत् पश्यति कश्चिदेतमाश्चर्यवद्वदति तथैव चान्य—

इति स्मृतिमाश्रित्याह-अन्धो मणिमविध्यदिति, मणि सरन्ध्रं कृतवानित्यर्थः ॥ ३१ ॥

कृतयावत्कर्त्तव्यस्य नावशिष्यत इति न्यायात् तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सं·

वार्त्तिकम् ।

मोऽभिभवनानन्तरमेव वृत्त्युत्पत्तिवचनाद् वृत्तेस्तमोनाशकत्वमाधुनिकवेदान्तिनामपसिद्धान्त इति स्मर्त्तव्यम्, एतादृशं सर्वज्ञत्वं लोकेऽतीवाश्चर्यमन्धमणिवेधादिवदिति बौद्धोपहासमुखेन दर्शयति-तत्रेदमिति, यत्र क्षुद्राणामपि जीवानां योगबलादेतादृशसार्वज्ञ्ये बौद्धैरिदं दृष्टान्तजातमसम्भवदर्शनायोक्तमुपहसद्भिरित्यर्थः, किं तत् तदाह-अन्ध इत्यादि, अविध्यत्सच्छिद्रमकरोत् तं मणिमङ्गुलिहीन आवयद् ग्रथितवान् तं मणिं ग्रीवाशून्यः प्रत्यमुञ्चत्, कण्ठाभरणमकरोत् तत् कण्ठाभरणं जिह्वाशून्यः स्तुतवानित्यर्थः, दृष्टान्तचतुष्टयस्यायमाशयः, अनाद्यविद्यामूढचित्तैः सांख्याद्यभिमतसूक्ष्मार्थानामवधारणरूपं वेधनमेवादावशक्यं ततश्च तस्य सूक्ष्मार्थस्याविरलवृत्तिसत्ता च सूत्रेण ग्रथनमप्यशक्यम्, ततोऽपि सर्वथा विवेकख्यातिरतीवाशक्या ततश्च तादृशचित्तस्य परिपूर्णज्ञानत्वेन स्तुतिरप्यशक्येति, आस्तिकैस्तु श्रुतिस्मृतिप्रामाण्येनैतत्सर्वं श्रद्धेयमिति भावः ॥ ३१ ॥

यथोक्तसार्वज्ञ्यात् परवैराग्योदयेनासम्प्रज्ञातपरम्पराजन्यं प्रारब्धभोगसमाप्तिजन्यं वा तृतीयं मुख्यमोक्षमाह—

"ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्" ततो धर्ममेघोदयात् क्लेशकर्मनिवृत्त्या

तस्य धर्ममेघस्योदयात्कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते, न हि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते ॥ ३२ ॥

अथ कोऽयं क्रमो नामेति—

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥३३॥**

भास्वती ।

तस्येति । ततः = धर्ममेघोदयाच्चरितार्थानां गुणानां = गुणवृत्तीनां बुद्ध्यादीनां परिणामक्रमः समाप्तो भवति तं कुशलं पुरुषं प्रतीत्यर्थः ॥ ३२ ॥

अथेति । क्षणप्रतियोगी = क्षणानां सत्प्रतियक्षः क्षणावसरव्यापीत्यर्थः, प्रत्येकं क्षण-

तत्त्ववैशारदी ।

प्रति कृतार्थास्तं प्रति न प्रवर्त्तन्त इति भावः ॥ ३२ ॥

अत्रान्तरे परिणामक्रमं पृच्छति—"अथ कोऽयम्" इति "क्षण-क्रमः" परिणामक्रमः क्षण-

पातञ्जलरहस्यम् ।

पतस्य इति श्रुतेश्चाह—तत इति, ततः सर्वान् धर्मान् मेहति प्रवर्तयत इति कृतकृत्यतया पूर्णतां संपादयतीति धर्ममेघः परवैराग्यं तस्योदयात्, गुणानां यावत्कर्तव्यता गुणानां परिणामक्रमः सृष्ट्याद्यारम्भकस्तत्समाप्तिः पुनरप्रवृत्तिरिति सूत्रार्थः ॥ ३२ ॥

परिणामक्रमेत्युक्तं तत्स्वरूपं वक्तुमाह—क्षणप्रतीति, क्षणे क्षणेऽन्यथा भवतीति क्षणप्र-

वार्त्तिकम् ।

ज्ञानस्यानन्त्ये सति परवैराग्येण पुरुषार्थसमाप्त्या कृतार्थान् पुरुषान् प्रति गुणानां सत्त्वादीनां परिणामक्रमः समाप्यते कृतार्थपुरुषाणां भोगोपयिकः परिणामः पुनर्न भवतीत्यर्थः, क्रमश्चाविरलधारेत्युत्तरसूत्रेण व्याख्यास्यते, तत्र इतिपदं व्याचष्टे—तस्य धर्ममेघस्योदयादिति, कृतार्थानामिति, पुरुषाणामिति शेषः. तथा च कृतार्थपुरुषस्वामिको गुणानां परिणामक्रमः समाप्यत इत्यर्थः, न तु गुणानामखिलस्य परिणामक्रमस्य समाप्तिरप्रोक्ता कृतार्थं प्रति नष्टमप्यनष्टमित्युक्तसूत्रादिति, समाप्तौ हेतुमाह—न हीति, न हि सत्त्वादयो गुणाः कृतभोगापवर्गा अत एव समाप्तक्रमाः तं पुरुषं प्रति क्षणमप्यवस्थातुं समर्थाः स्थितिहेतुपुरुषार्थाभावादिति, यदि च सूत्रभाष्ययोर्गुणशब्देनात्र बुद्ध्यादय एव पुरुषोपकरणान्युच्यन्ते तदा यथाश्रुतमेव व्याख्येयम्, अत्राचेतनानां चेतनार्थतया चैतन्याधीनसत्ता वेदान्तिभिरुच्यमाना सिद्धेति स्मर्त्तव्यम्, इयमपि तृतीया मुक्तिः पञ्चशिखाचार्यैरुक्ता 'कर्मक्षयात् तृतीयं व्याख्यातं मोक्षलक्षण'मिति, अत एव तत्त्वसमाससूत्रं 'त्रिविधो मोक्ष' इति, इदमत्रावधेयम्—यदेताभ्यां सूत्राभ्यां ज्ञानस्यानन्त्यात्सार्वज्ञ्याख्याद् मोक्ष उच्यत इदं मुख्यकल्पाभिप्रायेणोक्तं वैराग्यादेव सुखेन मोक्षसिद्धेः, न तु सार्वज्ञ्यादिकं विना मोक्षो न भवतीत्याशयेन, यतः सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति सूत्रे भाष्यकृता—ईश्वरस्यानीश्वरस्य प्राप्तविवेकज्ञानस्येतरस्य वेत्यनेनासर्वज्ञस्याप्यभिमाननिवृत्तिमात्रादेव मोक्ष उक्त इति, तथा चोक्तं 'विवेकख्यातिरविप्लवा हानोपाय' इति, 'सति मूले तद्विपाको जात्यायुर्भोगाः, इति च, संसारबीजं ह्यनात्मन्यात्मरूपाऽविद्या रागद्वेषधर्माधर्मतद्विपाकादिहेतुत्वात्, सा चेद्विवेकख्यात्या नाशिता तर्हि तत एव संसारोच्छेदे सार्वज्ञ्याद्यपेक्षा नास्तीति, तथा च विष्णुपुराणं—

अनात्मन्यात्मबुद्धिर्याऽस्वे स्वमिति या मतिः ।
अविद्यातरुसंभूतिबीजमेतद् द्विधा स्थितम् । इति ॥ ३२ ॥

ननु परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः परिणामानां प्रतिक्षणमुत्पादविनाशकथनेन वैराग्योत्पादनाय प्रयुक्तः, स चायमर्थः कथं क्रमशब्दाल्लभ्यते क्रमशब्दस्य पौर्वापर्यमात्रवाचित्वादित्याशयेन क्रमशब्दार्थं पृच्छति—अथेति'अयमेतत्सूत्रीयः अत्र प्रत्युत्तरं सूत्रम्—

क्षणानन्तर्य्यात्मा परिणामस्यापरान्तेन=अवसानेन गृह्यते क्रमः न ह्य-
नभूतक्रमक्षणा नवस्य पुराणता वस्त्रस्यान्ते भवति, नित्येषु च क्रमो-

भास्वती।

प्रतियोगिनः परिणामस्याविरलप्रवाहः क्रम इत्यर्थः, स चापरान्तनिर्ग्राह्यः=अपरान्तेन गृह्यते, नवस्य वस्त्रस्य पुराणताऽपरान्तस्तेन तद्वस्त्रपरिणामक्रमो ग्राह्यः तथा गुणवृत्तीनां-बुद्ध्यादीनां परिणामक्रमस्यापरान्तो बुद्धेः प्रतिप्रसवः, अप्रतिप्रसवानां बुद्ध्यादीनां परिणामक्रमो निर्ग्राह्यस्तिष्ठतीत्यर्थः, क्षणेति। क्षणानन्तर्यात्मा=क्षणव्यापिनां परिणामानां नैरन्तर्यमेव क्रम इत्यर्थः, अननुभूतक्रमक्षणा=अननुभूतः=अलब्धः क्रमो यैः क्षणैस्तादृशाः क्षणा यस्या निर्वर्त्तकाः साऽननुभूतक्रमक्षणा तादृशी पुराणता नास्ति, क्रमतः परिणामानुभवादेव पुराणता भवतीत्यर्थः, अपरान्तस्तु कस्याश्चिद् विवक्षितावस्थाया अपरान्तो यथा-नवतायाः पुराणता, व्यक्तायाश्चाव्यक्तता, इत्याद्या, तत्रानित्यानां भावानां प्रतिप्रसवरूपोऽपरान्तोऽस्ति यत्र क्रमो लब्धपर्य्यवसानः, न च तथा नित्यानां, नित्यानान्तु भावानां काञ्चिदवस्थामपेक्ष्य परिणामापरान्तो वक्तव्यः, नित्यपदार्थानामप्यस्ति परिणामक्रम इत्याह-नित्येष्विति। प्रकृतो वा काल्पनिको वा क्रमोऽस्तीत्यर्थः, कूटस्थनित्यता=निर्विकारनित्यता, परिणामनित्यता=नित्यं विक्रियमाणता, विकारस्वभावान्निष्कारणानां-

तत्त्ववैशारदी।

प्रतियोगी=क्षणः प्रतिसंबन्धी यस्य स तथोक्तः, क्षणप्रचयाश्रय इत्यर्थः, न जातु क्रमः क्रमवन्तमन्तरेण शक्यो निरूपयितुं, न चैकस्यैव क्षणस्य क्रमः, तस्मात् क्षणप्रचयाश्रयः परिशिष्यते, तदिदमाह-"क्षणानन्तर्य्यात्मा" इति, परिणामक्रमे प्रमाणमाह-परिणामस्य" इति, नवस्य हि वस्त्रस्य प्रयत्नसंरक्षितस्यापि चिरेण पुराणता दृश्यते, सोऽयं परिणामस्यापरान्तः=पर्य्यवसानं, तेन हि परिणामस्य क्रमः, ततः प्रागपि पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलस्थूलतरत्वादीनां पौर्वापर्य्यमनुमीयते, एतदेव व्यतिरेकमुखेन दर्शयति-"न हि" इति, अननुभूतः=अप्राप्तः क्रमक्षणो यया सा तथोक्ता, नन्वेष क्रमः प्रधानस्य न सम्भवति, तस्य नित्यत्वादित्यत आह—"नित्येषु च" इति, बहुवचनेन सर्वनित्यव्यापितां क्रमस्य प्रति

पातञ्जलरहस्यम्।

तियोगी तथात्वेऽप्यपरान्तो विरामस्तेन निर्ग्राह्यः परिणाम इति सूत्रार्थः, सत्यमप्यसत्यमिति

वार्त्तिकम्।

"क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः" क्षणप्रतियोगी क्षणस्यावसरस्य विरोधी क्षणेनाप्यनन्तरित इति यावत्, एवंरूपोऽत्र क्रमो विवक्षितो न तु पौर्वापर्यमात्रमिति विशेष्यदलार्थः, परिणामश्च पूर्वधर्मापाये धर्मान्तरोत्पत्तिरित्युक्तमेव, ईदृशे च क्रमे प्रमाणप्रदर्शनपरं परिणामापरान्तनिर्ग्राह्य इति विशेषणम्, भाष्यकारस्तु क्षणप्रतियोगीत्यस्य पर्यवसितार्थमाह—क्षणानन्तर्यात्मेति, क्रम इत्युत्तरेणान्वयः क्षणानन्तर्यात्मा क्षणानन्तर्यधर्मकः, आनन्तर्यं चाव्यवधानं क्रमस्तु पूर्वापरीभावः, तथा च क्षणाव्यवहितपरिणामधारा पूर्वसूत्रे परिणामक्रमशब्दार्थः, अनवच्छिन्नधारायाः प्रमाणप्रदर्शकं सूत्रावयवं व्याचष्टे—परिणामस्येति, पूर्वान्तापेक्षया वस्त्रादिरूपस्य परिणामस्यापरान्तेन चरमावस्थयाऽनवच्छिन्नपरिणामधाराऽनुमीयत इत्यर्थः, अत्र युक्तिमाह—न हीति, अननुभूतोऽप्राप्तो यथोक्तक्रमो यैरेवम्भूताः क्षणा यस्याः साऽननुभूतक्रमक्षणा पुराणता, तथा च वस्त्रस्यान्तकाले दृश्यमाना पुराणता न ह्यननुभूतक्रमक्षणा सम्भवतीत्यर्थः, अतः पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूला दिरूपैः परिणामक्षणेऽप्यविरलः क्रमोऽनुमीयत इति, नन्वपरान्तेनानित्येष्वेव क्रमः सिद्धो न तु प्रधानेऽपि

**दृष्टः, द्वयी चेयं नित्यता—कूटस्थनित्यता परिणामिनित्यता च, तत्र कूटस्थनित्यता पुरुषस्य, परिणामिनित्यता गुणानाम्, यस्मिन् परिणम्यमाने तत्त्वं न विहन्यते तन्नित्यम्, उभयस्य च तत्त्वानभिघातान्नित्यत्वम्, तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्य्यवसानो, नित्येषु धर्मिषु गुणेष्वलब्धपर्य्यवसानः, कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तितता क्रमेणैवानुभूयत इति,**

भास्वती।

गुणानां परिणामनित्यता, कूटस्थपदार्थोऽपि तस्थौ तिष्ठति स्थास्यतीति वक्तव्यम्, ततस्तस्यापि परिणामो वाच्यः किन्तु स परिणामो वैकल्पिकः, तस्मात् साधूक्तमिदं नित्यतालक्षणं यद् यस्मिन् परिणम्यमाने तत्त्वं = स्वभावो न विहन्यतेऽन्यथा भवति तन्नित्यमिति, गुणस्य पुरुषस्य चोभयस्य तत्त्वानभिघातात् तत्त्वाव्यभिचारान्नित्यत्वम्, तत्रेति। क्रमो लब्धपर्य्यवसानः = प्रतिप्रसव इति शेषः, अलब्धपर्य्यवसानः = प्रकाशक्रियास्थितिस्वभावानां नित्यत्वात्, कूटस्थनित्येष्विति। अनन्तकालं यावत् स्थास्यतीति वक्तव्य-

तत्त्ववैशारदी।

जानीते, तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्यव्यापितां क्रमस्योपपादयति-"द्वयी" इति, ननु कूटस्थं स्वभावादप्रच्युतमस्तु नित्यं, परिणामि सदैव स्वरूपाच्च्यवमानं कथं नित्यमित्यत आह—"यस्मिन्" इति, धर्मलक्षणावस्थानामुदयव्ययधर्मत्वं, धर्मिणस्तु तत्त्वाद् विघात एवेति, अथ किं परिणामापरान्तनिर्ग्राह्यता सर्वक्रमस्य, नेत्याह—"तत्र गुणधर्मेषु बुद्ध्यादिषु" इति, यतो लब्धपर्य्यवसानः धर्माणां विनाशात् प्रधानस्य तु परिणामक्रमो न लब्धपर्य्यवसानः, ननु प्रधानस्य धर्मरूपेण परिणामादस्तु परिणामक्रमः पुरुषस्य त्वपरिणामिनः कुतः परिणामक्रम इत्यत आह—"कूटस्थनित्येषु" इति, तत्र बद्धानां चित्ताव्यतिरे-

पातञ्जलरहस्यम्

श्रुतिमाश्रित्याह—द्वयी चेयं नित्यतेति, तत्र तत्र व्यवहारादाद्यं सत्यं द्वितीयं परिणामिनित्य-

वार्त्तिकम्।

तस्य चरमावस्थाया अभावादतो गुणानां परिणामक्रमे किं प्रमाणं येन तत्समाप्तिः पूर्वसूत्रोक्ता घटेत तत्राह—नित्येषु चेति. नित्येषु स्वतोऽपरान्ताभावेऽपि विकाराणामपरान्तैरेव प्रतिक्षणपरिणामो दृष्टोऽनुमित इत्यर्थः, धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यत इति प्रागुक्तत्वादिति भावः, ननु परिणामक्रमाङ्गीकारे नित्यत्वहानिरित्याशङ्कायामाह—द्वयी चेति, तथा च परिणामित्वेन कूटस्थनित्यतैव विरुध्यते न नित्यतासामान्यमित्याशयः, नित्यस्य सामान्यलक्षणमाह—यस्मिन्निति, तत्त्वं न विहन्यते स्वरूपं नातीतं भवति, अत्र चातीतताशून्यत्वमात्रं नित्यस्य सामान्यलक्षणमिति बोध्यम्, तच्चोभयसाधारणमित्याह—उभयस्येति, गुणपुरुषयोरित्यर्थः, पूर्वसूत्रे परिणामशब्देन व्यावर्त्यं स्वरूपास्तितताक्रमं दर्शयितुं क्रमसामान्यं विभजते—तत्रेति, बुद्ध्यादिषु महदादिषु लब्धपर्य्यवसानो विनाशित्वादित्यर्थः, गुणेष्विति, अत्रापि परिणामापरान्तनिर्ग्राह्य इत्यन्वेति, परिणामस्य क्रमं द्विधा व्याख्याय तृतीयं स्वरूपास्तिततायाः क्रममसङ्कीर्णोदाहरणेनाह—कूटस्थेति, बद्धानां चित्ताविवेकेन कदाचित्परिणामाध्यासोऽपि स्यादित्याशयेन स्वरूपमात्रप्रतिष्ठेत्युक्तं तस्यैव स्वरूपाख्यानं मुक्तपुरुषेष्विति, स्वरूपास्तितता च तत्तत्क्षणमात्रं तत्क्रमश्च पुरुषेष्वप्यस्ति, इदानीं स्थित्वा पश्चात्स्थास्यतीति व्यवहारात्, अन्यथा सर्वकालसम्बन्धरूपनित्यताऽनुपपत्तेश्चेत्यतस्तत्राप्यलब्धपर्य्यवसान इति, क्रम इति शेषः, नन्वेवमात्मनोऽप्यस्तितताक्रमस्वीकारे षड्भावविकारशून्यत्वसिद्धान्तवि-

तत्राप्यलब्धपर्यवसानः शब्दपृष्ठेनास्तिक्रियामुपादाय कल्पित इति, अथास्य संसारस्य स्थित्या गत्या च गुणेषु वर्त्तमानस्यास्ति क्रमसमाप्तिर्न वेति, अवचनीयमेतत्, कथम् अस्ति प्रश्न एकान्तवचनीयः सर्वो जातो मरिष्यति, ओं भो इति, अथ सर्वो मृत्वा जनिष्यत इति विभज्य

भास्वती।

त्वादसङ्ख्यक्षणक्रमेण स्थितिक्रियारूपपरिणामो व्युत्थितदर्शनैर्मन्तव्यो भवति, किञ्च शब्दपृष्ठेन = शब्दानुपातिना विकल्पज्ञानेन, अस्तीतिशब्दानुपातिना विकल्पेनास्तिक्रियामुपादाय तत्क्रियावान् स पुरुष इति तत्र स परिणामो विकल्पित इत्यर्थः, एवं-

तत्त्ववैशारदी।

काभिमानात्तत्परिणामाध्यासः मुक्तानां चास्तिक्रियामुपादायावास्तवोऽपि परिणामो मोहकल्पितः, शब्दस्य पुरःसरतया तत्पृष्ठो विकल्पोऽस्तिक्रियामुपादत्त इति, गुणेष्वलब्धपर्यवसानः परिणामक्रम इत्युक्तं तदसहमानः पृच्छति—"अथ" इति, स्थित्येति महाप्रलयावस्थायां, गत्येति सृष्टौ, एतदुक्तं भवति—यद्याऽऽनन्त्यान्न परिणामसमाप्तिः संसारस्य,हन्त भोः कथं महाप्रलयसमये सर्वेषामात्मनां सहसा समुच्छिद्येत, कथञ्च सृष्ट्यादौ सहसोत्पद्येत संसारः, तस्मादेकैकस्यात्मनो मुक्तिक्रमेण सर्वेषां विमोक्षादुच्छेदः सर्वेषां संसारक्रमेणेति प्रधानपरिणामपरिसमाप्तिः, एवञ्च प्रधानस्याप्यनित्यत्वप्रसङ्गः, न चापूर्वसत्त्वप्रादुर्भाव इष्यते येनानन्त्यं स्यात् तथा सत्यनादित्वव्याहतेः सकलशास्त्रार्थभङ्ग इति भावः, उत्तरमाह—"अवचनीयम्" इति, अनुत्तरार्हमेतद्, एकान्तत एव तस्यावचनीयतां दर्शयितुमेकान्तवचनीयं प्रश्नं दर्शयति—"अस्ति प्रश्न" इति, सर्वो जातो मरिष्यतीति प्रश्नः, उत्तरम्-'ॐ भो'ति सत्यं भो इत्यर्थः, अविभज्य वचनीयमुक्त्वा प्रविभज्य वचनीयं प्रश्नमाह-"अथ सर्व" इति" विभज्य वचनीयतामाह—"विभज्य" इति, विभज्यवचनीयमेव प्रश्नान्तरं विस्पष्टार्थमाह-"तथा मनुष्यजाति" इति, अयन्तु = अयन्त्ववचनीय एकान्ततः—न हि सामान्येन कुशलाकुशलपुरुषसंसारस्यान्तवत्त्वमनन्तवत्त्वं वा शक्यमेकान्ततो वक्तुं, यथा प्राणभृन्मात्रस्य श्रेयस्त्वमश्रेयस्त्वं वा नैकान्ततः शक्योऽवधारयितुम्, यथा जातमात्रस्य मरणमेकान्तः,

पातञ्जलरहस्यम्।

मित्याह—यस्मिन्निति, "क्षणमपरिणम्य गुणा न तिष्ठन्तीत्युक्तेः प्रलयेऽपि समानाकारप-

वार्त्तिकम्।

रोध इत्याशङ्कां परिहरति—शब्दपृष्ठेनेति, स च क्रमोऽस्त्याख्यक्रियामादायैव शब्दपृष्ठेन शब्दानुसारिणा व्यवहर्त्रा कल्पितो भवति, न तु जन्मोत्तरकालीनमस्तितापरिणाममादायेत्यर्थः, तया चास्तित्वाख्यक्रियैव षड्भावविकारान्तर्गता पुरुषे निषिद्धेत्याशयः, सा च क्रियारूपिण्यस्तिता वृद्धिहेत्ववयवोपचयरूपेति विभागः, गुणेष्वलब्धपर्यवसानः परिणाम इति श्रुत्वाऽऽक्षिपति—अथेति, अस्य संसारस्य जन्मादिपरिमाणजातस्य स्थित्या गत्या च गुणेषु वर्त्तमानस्य सृष्टिप्रलयप्रवाहेणावस्थितस्य क्रमसमाप्तिरस्ति न वा, आद्ये—अलब्धपर्यवसानोक्तिविरोधः, अन्त्ये-परिणामक्रमसमाप्तिर्गुणानामिति पूर्वसूत्रविरोधः,तथा भूयश्चान्ते विश्वमायानिवृत्तिरितिश्रुतिविरोधश्चेति, पूर्वसूत्रे कृतार्थपुरुषं प्रत्येव परिणामक्रमसमाप्तिर्गुणानामुक्ता न तु सामान्यत इत्याशयेन समाधत्ते—अवचनीयमेतदिति, प्रत्युत्तरानर्हमेतत्प्रवद्वचनमित्यर्थः, उक्तप्रश्नस्योत्तरानर्हत्वं प्रतिपादयितुम् आदावुत्तरार्हं द्विविधप्रश्नं दर्शयति—अस्ति प्रश्न इति, सर्वो जातो मरिष्यतीत्येकान्तवचनीयोऽविभज्य वचनीयः प्रश्नः, अस्य च ओं भोइति प्रतिवचनं सत्यं भो इत्यर्थः, ओंभो इति पाठस्तु समीचीनः, अविभज्यवचनीयं प्रश्नं प्रदर्श्य विभज्यवचनीयं प्रश्नान्तरं प्रदर्शयति—अथ सर्वो मृत्वा जनिष्यत इति विभागेन वचनं प्रत्युत्तरं-

वचनीयमेतत्-प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यते, इतरस्तु जनिष्यते, तथा मनुष्यजातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे विभज्य वचनीयः प्रश्नः पशूनुद्दिश्य श्रेयसी देवानृषींश्चाधिकृत्य नेति, अयन्त्ववचनीयः प्रश्नः-संसारोऽयमन्तवानथानन्त इति, कुशलस्यास्ति संसार-

भास्वती।

वाङ्मात्राद् विकल्पितपरिणामान्न च पुरुषस्य कौटस्थ्यहानिरित्यर्थः, अथेति। क्षीयमानस्योद्भूयमानस्य च संसारस्य गुणेषु तत्तदवस्थायां वर्त्तमानस्य क्रमसमाप्तिर्भवेन्न वेति प्रश्नस्योत्तरमवचनीयमेतत्, सुगमम्, कुशलस्येति। कुशलस्य संसारक्रमसमाप्तिरस्ति नेतरस्येत्येवं व्याकृत्यायं प्रश्नो वचनीयोऽतोऽत्रैकतरस्यावधारणं=कुशलस्य समाप्तिरित्यवधारणमदोषः=न दोषायेत्यर्थः, असङ्ख्यत्वाद् देहिनां संसारस्यान्तवत्ताऽस्तीति वा नास्तीति वा प्रश्नोऽन्याय्यो यथाऽसङ्ख्यक्षणात्मकस्य कालस्य यथा वाऽपरिमेयस्य देशस्यान्तोऽस्ति न वेति प्रश्नोऽन्याय्यत्वादवचनीयस्तथाऽसङ्ख्यानां संसारिणां निःशेषताकल्पनं तद्विषयकश्च प्रश्नोऽन्याय्यः, असङ्ख्येयेभ्यः पदार्थेभ्योऽसङ्ख्यशो वियोगे कृतेऽपि सदैवासङ्ख्याः पदार्थास्तिष्ठेयुः,

उक्तञ्च—

"इदानीमिव सर्वत्र नात्यन्तोच्छेदः" इति,

तत्त्ववैशारदी।

विभज्य पुनः शक्यावधारणमित्याह—"कुशलस्य" इति, अयमभिसन्धिः—

क्रमेण मोक्षे सर्वेषां मोक्षात्संसारोच्छेद इत्यनुमानं, तच्चागमसिद्धमोक्षाश्रयम्, तथा चाभ्युपगतमोक्षप्रतिपादकागमप्रमाणभावः कथं तमेवागमं प्रधानविकारनित्यतायामप्रमाणीकुर्यात्, तस्मादागमबाधितविषयम् एतदनुमानं, न प्रमाणम्, श्रूयते हि श्रुतिस्मृतीतिहासपुराणेषु सर्गप्रतिसर्गपरम्पराया अनादित्वमनन्तत्वं चेति, अपि च सर्वेषामेवात्मनां संसारस्य न तावद् युगपदुच्छेदः संभवी न हि पण्डितरूपाणामप्यनेकजन्मपरम्पराऽभ्यासपरिश्रमसाध्या विवेकख्यातिप्रतिष्ठा किं पुनः प्राणभृन्मात्रस्य, स्थावरजङ्गमादेरेकदाऽकस्माद्

पातञ्जलरहस्यम्।

रिणामस्तेषां गुणानामिति भावः, मनुष्याधिकारिकं शास्त्रमित्याह—तथा

वार्त्तिकम्।

दर्शयति—प्रत्युदितेति, विभज्यवचनीयप्रश्नं लौकिकमपि दर्शयति—तथा मनुष्येति, उक्तप्रश्नस्तु यथाश्रुत एकान्तत एवावचनीय इत्याह—अयं त्विति, अयमित्युक्तं विशिष्याह—संसार इति, अवचनीयत्वमेवोपपादयति—कुशलस्येत्यादिना-दोष इत्यन्तेन, कुशलस्य कुशले गुणकृतस्य संसारक्रमस्य समाप्तिरस्ति नेतरस्मिन्नित्यतो गुणसृष्टिप्रलयप्रवाहोच्छेदानुच्छेदान्यतरावधारणे दोषः, आद्ये बाधोऽन्त्ये कस्यापि मुक्तिर्नास्तीति शिष्यमोहापत्तिरित्यर्थः, अस्यापि प्रश्नस्य विकल्प्योत्तरं देयमित्याह—तस्मादिति, तस्मादुत्तरदानार्थमादौ विकल्पेन व्याख्येयोऽयं प्रश्न इत्यर्थः, तद्यथा,—यदि च गुणानां सृष्ट्याद्युच्छेदः पृच्छ्यते तदा नास्तीत्येव वक्तव्यम्,

अनादिर्भगवान् कालो नान्तोऽस्य द्विज! विद्यते।
अव्युच्छिन्ना यतस्त्वेते सर्गस्थित्यन्तसंयमाः॥

इत्यादिवाक्यशतेभ्यः सृष्टिप्रवाहस्यानादित्ववदनन्तत्वस्यापि सिद्धेः शुष्कतर्कस्याप्रयोजकत्वात्, अन्यथा संसारहेत्वदृष्टस्य सर्वस्यैव सादित्वात्संसारस्यानादित्वमपि तर्कविरोधेन

क्रमसमाप्तिर्नेतरस्येति, अन्यतरावधारणेऽदोषः, तस्माद् व्याकरणीय एवा-यं प्रश्न इति ॥ ३३ ॥

गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तं, तत्स्वरूपमवधार्य्यते—

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं-स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥**

भास्वती।

श्रूयते च--

"पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति,

स्मर्यते च--

"अत एव हि विद्वत्सु मुच्यमानेषु सर्वदा।
ब्रह्माण्डजीवलोकानामनन्तत्वादशून्यता" ॥ इति, ॥ ३३ ॥

गुणेति। कृतकृत्यानां गुणानां = गुणकार्याणां प्रतिप्रसवः = स्वकारणे शाश्वतः प्रलयः कैवल्यम्, क्रमेति। कार्यकारणात्मनां गुणानाम् = महदादिप्रकृतिविकृतीनां त्रिगुणोपादानानाम्, स्वरूपप्रतिष्ठाऽपि चितिशक्तिर्बुद्धिसम्बन्धात् सद्वेता बुद्धिप्रतिष्ठेव प्रतिभासते बु

तत्त्ववैशारदी।

भवितुमर्हति, न च कारणायौगपद्ये कार्य्ययौगपद्यं युज्यते, क्रमेण तु विवेकख्यातावसं ख्येयानां क्रमेण मुक्तौ न संसारोच्छेदः, अनन्तत्वाज्जन्तूनामसंख्येयत्वादिति सर्वमवदातम् ॥ ३३ ॥

कैवल्यरूपावधारणपरस्य सूत्रस्यावान्तरसङ्गतिमाह—"गुणाधिकार" इति, "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" कृतकरणीयतया पुरुषार्थशून्यानां गुणानां यः प्रतिप्रसवः = स्वकारणे प्रधाने लयः तेषां कार्य्यकारणात्मकानां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते, मनोऽस्मितायाम्, अस्मिता लि-

पातञ्जलरहस्यम्।

मनुप्येति ॥ ३३ ॥

विमुक्तश्च विमुच्यत इति, स आत्मा कस्मिन् प्रतिष्ठित इति श्रुतिस्मृती आश्रित्य मुक्तिस्वरूपं वक्तुं पातनिकामाह—गुणाधिकारेति, अधिकारफलं भोगापवर्गौ तदर्थानां क्रम आरम्भः सृष्टिः तस्य समाप्तावत्यन्ताभावे कैवल्यमिति,

पुरुषार्थ एव हेतुर्न केन चित् कार्यते करणम्,

वार्तिकम्।

न सिध्येत्, भूयश्चान्ते विश्वमायानिवृत्तिश्चेति श्रुतिश्च मायाऽऽख्यप्रकृतेः प्रलये व्यापारोपरमाख्यां निवृत्तिमेव वदति, एतेन सर्वमुक्तिरप्रामाणिकीति सिद्धम् ॥३३॥

यदि पुरुषस्य संसारोच्छेदः पृच्छयते तदा कुशलस्यास्ति नेतरस्येति। प्रश्नवाक्यं विकल्प्य प्रतिवचनं संभवतीति—उत्तरसूत्रमवतारयति,—गुणाधिकारेति, गुणाधिकारः परिणामविशेषस्तत्क्रमपरिसमाप्तौ कैवल्यमिति, ततः कृतार्थानामित्यादिसूत्रेण तात्पर्यतः प्रोक्तं तस्य कैवल्यस्य स्वरूपमवधार्यत इत्यर्थः, पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति, कृतकर्त्तव्यतया पुरुषार्थशून्यानां गुणानां पुरुषोपकरणानां लिङ्गशरीरात्मकानां प्रतिप्रसवः स्वकारणेऽत्यन्तविलयः स बुद्धेः कैवल्यम् एतदेव च प्रधानस्यापि ज्ञानिपुरुषं प्रति कैवल्यमुच्यते तेन पुरुषेण सह पुनरसंयोगाद्, या तु धर्मधर्म्यभेदाच्चितिशक्तिः स्वरूपिणी स्वरूपप्रतिष्ठा बुद्धिसत्त्वोपाधिकरूपशून्यतारूपा जपापाये स्फटिक-

कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः=कार्य्यकारणात्मनां गुणानां तत्कैवल्यं स्वरूपप्रतिष्ठा=पुनर्बुद्धिसत्त्वानभिसंबन्धात्पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानं कैवल्यमिति ॥ ३४ ॥

इति श्रीपातञ्जले योगशास्त्रे साङ्ख्यप्रवचने
कैवल्यपादश्चतुर्थः ॥ ४ ॥

भास्वती ।

द्धिप्रतिप्रसवाद् यदाऽद्वैता केवला वेति वाच्या भवति न पुनर्बुद्ध्युत्थानादकेवलेति च वाच्या स्यात्तदा कैवल्यं पुरुषस्येति ॥ ३४ ॥

तत्त्ववैशारदी।

ङ्गं, लिङ्गमलिङ्ग इति योऽयं गुणानां कार्य्यकारणात्मनां प्रतिसर्गः तत्कैवल्यं=यं कं चित पुरुषं प्रति प्रधानस्य मोक्षः, स्वरूपप्रतिष्ठा पुरुषस्य वा मोक्ष इत्याह—"स्वरूपप्रतिष्ठा" इति, अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तिर्न चासौ मोक्ष इत्यत आह-"पुनः" इति, सोऽत्र इतिशब्दः शास्त्रपरिसमाप्तौ ॥ ३४ ॥

मुक्त्यर्हचित्तं परलोकमेय-
ज्ञसिद्धयो धर्मघनः समाधिः ।
द्वयी च मुक्तिः प्रतिपादिताऽस्मिन्
पादे प्रसङ्गादपि चान्यदुक्तम् ॥

पातञ्जलरहस्यम् ।

इत्युक्तिमाश्रित्याह—पुरुषार्थशून्यानामिति, प्रतिप्रसवो बन्ध्यता यस्तदीयात्माद्दष्टाकृष्टानां गुणानां स एव कैवल्यं भोगात्यन्ताभावः महत्तत्त्वाद्युपाधिनिवृत्तौ स्फटिकस्येव स्वच्छतेत्याह—स्वरूपप्रतिष्ठेति । अविद्याकृता बुद्ध्यादौ भोगादिहेतुका चितिच्छायापरिलक्षणा तन्निवृत्तौ या चितिरिति सूत्रार्थः, तत्कैवल्यमिति, अविद्योच्छित्तौ पुनर्दुःखात्यन्ताभावः ।

वार्त्तिकम् ।

स्वरूपप्रतिष्ठावत् सा पुरुषस्य कैवल्यमित्यर्थः, परस्परवियोगो ह्युपाध्युपाधिमतोरुभयोरेव केवलता=एकाकिता भवति ते चोभे एव दुःखभोगनिवृत्त्याख्यपुरुषार्थसाधने भवत इति द्वे एव कैवल्ये लक्षिते तयोश्चाद्यं कैवल्यं पुरुषस्योपचरितमित्युक्तं सांख्यकारिकायाम्,—

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः ।
संसरति बध्यते मुच्यते च नानाऽऽश्रया प्रकृतिः, इति,

न तु स्वरूपप्रतिष्ठारूपं कैवल्यं दुःखभोगात्यन्तनिवृत्तिरूपो वा पुरुषार्थः पुरुषस्य तत्र निराकृतः, मोक्षस्यान्यमात्रनिष्ठत्वे पुरुषार्थत्वे मोक्षार्थं प्रवृत्त्यनुपपत्तेः पुरुषार्थं हि करणानां प्रवृत्तिरिति, इतिशब्दः शास्त्रसमाप्तिसूचनार्थः, भाष्ये कार्यकारणात्मनामिति कार्यकारणभावापन्नानां महदादिसूक्ष्मभूतपर्यन्तानां लिङ्गशरीरघटकानामित्यर्थः, न तु कार्यमत्र स्थूलशरीरं तत्सत्त्वेऽपि कैवल्योदयादिति, ननु स्वस्य स्वप्रतिष्ठत्वानुपपत्त्या कथं स्वप्रतिष्ठत्वं तत्राह-स्वरूपेति, पुरुषस्य पुनर्बुद्धिसत्त्वासंबन्धात् केवला चितिशक्तिरेव स्वरूपप्रतिष्ठेत्यर्थः, तस्या इति, स्वरूपप्रतिष्ठायां सदैवावस्थानं पुनरप्रच्यवः कैवल्यं द्वितीयमिति शेषः ॥ ३४ ॥

भास्वती ।

सुप्रसन्नपदां टीकां भास्वतीं श्रद्धयाऽऽप्लुतः ।
हरिहरयतिश्चक्रे सांख्यप्रवचनस्य हि ॥

इति वैयासिकपातञ्जलसाङ्ख्यप्रवचनभाष्यस्य टीकायां साङ्ख्ययोगाचार्यश्रीमद्धरिहरानन्दारण्यकृतायाम् भास्वत्यां चतुर्थः पादः समासमगादिति शम् ।

तत्त्ववैशारदी ।

निदानं तापानामुदितमथ तापाश्च कथिताः
सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि ॥
कृतो मुक्तेरध्वा गुणपुरुषभेदः स्फुटतरो-
विविक्तं कैवल्यं परिगलिततापा चितिरसौ ॥ २ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां तत्त्ववैशारद्यां कैवल्यपादश्चतुर्थः समाप्तः ॥ ४ ॥

पातञ्जलरहस्यम् ॥

हरिहरपदकञ्जेष्वर्पितेयं सुवृत्तिः
सुरतरुसुमनोभिर्गुम्फिता मालिकेव ।
तदुभयमकरन्दैः पीतपातञ्जलानां-
विधमतु पुरुदुःखं पुण्यदा श्रीकृतिर्नः ॥

इति श्रीविश्वेश्वरभगवत्पादशिष्याद्वयभगवत्पादशिष्यराघवानन्दसरस्वतीविरचिते योगतत्त्ववैशारद्याख्याया व्याख्यायाष्टीकारूपे पातञ्जलरहस्ये चतुस्त्रिंशत्सूत्रात्मकः कैवल्यपादः समाप्तः ॥ ४ ॥

वार्त्तिकम् ।

योगग्रन्थसहस्राणां सर्वोपनिषदां तथा ।
सतां च यत्र तात्पर्यं सोऽर्थो व्यासेन भाषितः ॥
व्याख्यातश्च यथाशक्ति निर्मत्सरधिया मया ।
एतेन प्रीयतामीशो य आत्मा सर्वदेहिनाम् ॥

इति श्रीविज्ञानभिक्षुविरचिते पातञ्जलभाष्यवार्त्तिके कैवल्यपादश्चतुर्थः ॥ ४ ॥

॥ समाप्तं चेदं दर्शनम् ॥

परिशिष्टम् १

श्रीश्रीकृष्णाय नमः

योगसूत्राणां—

# योगकारिका

## सरलाटीकासहिता ।

### प्रथमः पादः

अथ योगानुशासनम् १ ।

ईशानन्तापनाशं निरतिशयविबोधात्मकोपाधियुक्तं-
नित्यैश्वर्य्यस्य चित्रं भुवनमयमलं यस्य सम्बोधने न ।
कैवल्यस्थानयुक्तं गुणमलरहितं तं कृपाकल्पवृक्षं
श्रद्धावीर्य्यप्रजातस्मृतिमुदितहृदो धीमहि श्रेयसे नः ॥ १ ॥

ईशानमिति । त्रिभुवनात्मकमपि चित्रम् आलेख्यं यस्य नित्यैश्वर्य्यस्य सम्बोधनविषये न अलम् । न हि चित्रं वस्तुस्वरूपं सम्यगवगमयतीति त्रिभुवनमपि महच्चित्रम् ईशस्य नित्यैश्वर्य्यं न सम्यक् बोधयतीति अर्थः । विबोधः त्रिकालविज्ञानम् । स्पष्टमन्यत् ॥१॥

सहस्ररश्मेर्घृणिभिर्यथाऽन्धं यद्वाक्यभाभिर्मनसस्तथाऽन्धम् ।
विलीयते तं तमसः परस्थं पतञ्जलिं प्राज्ञगुरुं नमामि ॥ २ ॥

सहस्ररश्मेरिति । सहस्ररश्मेः सूर्य्यस्य घृणिभिर्यथा अन्धम् अन्धकारं विलीयते तथा यद्वाक्यभाभिर्मनसः अन्धम् अज्ञानं विलीयते तं प्राज्ञगुरुं पतञ्जलिं तमसः परस्थम् अविद्यायाः परस्मिन् वस्तुनि चित्तवृत्तमित्यर्थः नमामि ॥ २ ॥

मुमुक्षुसत्त्वान् भवदुःखपङ्कादुद्धर्तुमस्मान् मुनिना सुशास्त्रम् ।
इदं कृतं येन कृपावशेन पतञ्जलिं तं स्वगुरुञ्च नौमि ॥ ३ ॥

स्पष्टम् ॥ ३ ॥

विभान्ति विज्ञानविभानुलिप्ताः सूत्रप्रभास्वन्मणयो निबद्धाः ।
श्रीभाष्यचामीकरभूषणे हि विवेकमौलेरवतंसभूताः ॥ ४ ॥

विभान्तीति । योगसूत्राणि प्रभास्वन्तः मणयः । किम्भूता नु तेषां प्रभा इत्याह-विज्ञानेति । विज्ञानं विशुद्धेन न्यायेन सङ्गतं ज्ञानं तद्रूपया विभया अनुलिप्तास्ते सूत्रमणयः । मणयः खलु अभिजाता मुकुटादिषु स्थापनीया इति सूत्रमणयः क्व नु स्थापनीयाः । ते हि भाष्यरूपसुवर्णभूषणे राजमुकुटे इत्यर्थः निबद्धाः, कस्य राज्ञः शिरः तन्मुकुटं मण्डयितुमर्हतीति विवेकस्य राज्ञ इति, सूत्ररूपाः प्रभास्वन्मणयः विज्ञानविभानुलिप्ताः भाष्यरूपचामीकरमुकुटे निबद्धाः विवेकराजस्य मौलेरवतंसभूताः सन्तः विभान्ति इत्यन्वयः ॥ ४ ॥

शिष्टा हिरण्यगर्भेण चर्षिभिः पारदर्शिभिः ।
यस्तस्यात्र समारब्धं योगस्य ह्यनुशासनम् ॥ ५ ॥

भगवता हिरण्यगर्भेण जगतोऽधिष्ठात्रा पारदर्शिभिः कपिलादिभिश्च ऋषिभिर्यो योगः पुरा शिष्टः तस्य योगस्य अनुशासनम् अत्र "अथ योगानुशासनम्" इति सूत्रे समारब्धमित्यर्थः, न हि अनधिगतयोगैः शक्यं साक्षात्कार्य्यार्थविषयकम् उपदेशं कर्तुमिति हेतौ आद्या वक्तारः पारदर्शिनः इत्यवगन्तव्यम् ॥ ५ ॥

योगश्चित्तवृत्तिनिरोधः २ ।

अन्तःकरण-धर्मा याः प्रख्या-स्थिति-प्रवृत्तयः ।
त्रैगुणास्तद्धवेच्चित्तं संस्कार-प्रत्ययात्मकम् ॥ ६ ॥

प्रख्या सात्त्विकी बोधरूपा, प्रवृत्तिः चेष्टारूपा राजसी, स्थितिः संस्काररूपा ताम ी, प्रख्यादयः त्रैगुणाः त्रिगुणात्मानं अन्तःकरणत्रयस्य धर्मास्ते चित्तमित्यभिधीयन्ते, चित्तन्तु संस्कारप्रत्यय-धर्मं, तत्र संस्काराः अपरिदृष्टाः स्थितिधर्माः, प्रत्ययाश्च परिदृष्टाः प्रख्या-प्रवृत्ति-धर्माः, क्रियाप्रधानायाः प्रवृत्तेरपि ज्ञायमानस्वरूपत्वात् ॥ ६ ॥

प्रख्यारूपं चित्तसत्त्वं सर्व्वविज्ञानलक्षणम् ।
लयोदयशीलावस्था तस्य वृत्तिरितीरिता ॥ ७ ॥

ज्ञानावस्थामात्रं चित्तवृत्तिशब्देन अस्मिन् शास्त्रे परिभाषितम्, वृत्तिर्नाम प्रत्ययो लयोदयशीला ज्ञानावस्था चेति वेदितव्यम् ॥ ७ ॥

सर्व्वासां वेष्टवर्जानां वृत्तीनां यन्निरोधनम् ।
स योगो वा समाधिः स्यादत्यन्तत्तापशातनः ॥ ८ ॥

सर्व्वासां वृत्तीनां निरोधः असम्प्रज्ञातः योगः, या तु इष्टा अभिमता ध्येय-निर्भासा वृत्तिः तद्वर्जानाम् अन्यासां वृत्तीनां यो निरोधः स सम्प्रज्ञातो योगः, सम्प्रज्ञातः असम्प्रज्ञातश्च योग इति भावः, योगोऽपरनामसमाधिः अत्यन्ततापशातनः परमार्थस्य साधकः इत्यर्थः, यस्तु चित्तवृत्तिनिरोधः दुःखस्यात्यन्तनिवृत्तये न प्रभवति न स योग इति विवेचनीयम् ॥ ८ ॥

क्षिप्ता मूढा च विक्षिप्ता एकाग्रा च निरुद्धिका ।
सत्त्वेषु सहजावस्थाः पञ्चेमा-श्चित्तभूमयः ॥ ९ ॥

सत्त्वेषु प्राणिषु इमाः पञ्च सहजाः सांसिद्धिक्यः चित्तावस्थाः क्षिप्ताद्याः चित्तभूमय-इत्यभिधीयन्ते ॥ ९ ॥

सदाऽस्थिरा भवेत् क्षिप्ता मूढा मोहवशा तथा ।
क्षिप्ताद्विशिष्टविक्षिप्ता स्थैर्य्यास्थैर्य्यात्मिका हि या ॥ १० ॥

यदा कुत्रचिद्विषये अत्यन्तविमुग्धं चित्तं तदा मूढा भूमिः, यत्र भूमौ चित्तस्य कादाचित्कं स्थैर्य्यं सा विक्षिप्तभूमिः, अनुक्रमेण स्थैर्य्यास्थैर्य्ये तस्याम् उदियाताम् ॥ १० ॥

एकस्मिन्निष्ट पदार्थे संसक्तं यत्र लीलया ।
एकाग्रा चित्तभूमिः सा सम्प्रज्ञानप्रसूर्मता ॥ ११ ॥

एकाग्रभूमौ सिद्धायां सम्प्रज्ञातो योगः सिध्यति नान्यथा । तदा अभीष्टकालं यावदभिमतविषये चित्तधारणसामर्थ्यम् ॥ ११ ॥

संस्कारमात्रशेषा या प्रत्ययरहिता सदा ।
सा निरुद्धा समाख्याता योगस्य मुख्यभूमिका ॥ १२ ॥

दुःखप्रहाणकरस्य योगस्य निरोधभूमिका मुख्या, एकाग्रभूमिका च तस्याः पूर्व्वावस्था, एकाग्रभूमौ स्थितस्य योगिनः समाधिजाः प्रज्ञाः चेतसि प्रतितिष्ठन्ति, स सम्प्रज्ञातयोगः,

स च ।संप्रज्ञातः निरोधममभिमुखं करोति, सम्प्रज्ञानस्यापि निरोधे सर्व्वनिरोधान्निर्वीजः समाधिरसम्प्रज्ञातः, स एव निरोधभूमिः ॥ १२ ॥

सार्वभौमः समाधिर्हि धर्म्मश्चित्तस्य कीर्त्तितः ।
तत्र लोभान्मोहाद्वापि आद्यभूम्योः प्रजायते ॥ १३ ॥

सर्व्वभूमिषु समाधिसम्भवात् योगः सार्व्वभौमः चित्तस्य धर्म्मः, आद्यभूम्योः क्षिप्तमूढयोर्लोभात् मोहाद्वा कदाचित् समाधिरुपतिष्ठते, स च समाधिः न परमार्थं साधयति ॥१३॥

विक्षिप्तभूमिजश्चापि समाधिः पूर्व्ववद्यतः ।
उपसर्ज्जनविक्षेपात् कैवल्यं नैव साधयेत् ॥ १४ ॥

विक्षिप्तभूमौ जातः समाधिरपि पूर्व्ववत् क्षिप्तादिभूमिजातवत्, ।यतः अनष्टेभ्यः उपसर्ज्जनीभूतेभ्यः विक्षेपसंस्कारेभ्यः कदाचित् प्रज्ञा अभिभूयते विक्षिप्तवृत्तयश्च समुदाचरन्ति ततः स समाधिः कैवल्यं योगस्य मुख्यफलं न साधयेत् ॥ १४ ॥

एकाग्रभूमिजे सिद्धे समाधौ च समाधिजम् ।
प्रज्ञानं सद्भूतं सूक्ष्मं कर्म्मक्षयकरं परम् ॥
सदैकार्थप्रसक्तत्व–स्वभावाच्चेतसस्तदा ।
प्रतितिष्ठति चित्ते तद् निरोधञ्चैव भावयेत् ॥ १५ ॥

एकाग्रभूमिजे समाधौ सिद्धे समाधिजं सद्भूतं यथार्थविषयकं सूक्ष्मम् अलौकिकतत्त्वविषयकमित्यर्थः, कर्म्मक्षयकरं—तत्त्वस्मृतेः सदैव चेतसि उपस्थानात् कर्म्मस्मृतेरनवकाशः ततः प्रज्ञानेन कर्म्मक्षयः, परम् उत्तमं श्रुतानुमानप्रज्ञाभ्यां।परम् एवम्भूतं प्रज्ञानं चित्ते प्रतितिष्ठति बद्धमूलं भवतीत्यर्थः, कस्मात् तदाह सदेति, तदा चेतसः ।सदा एकार्थप्रसक्तत्वस्वभावात्, तत्स्वभावात् चित्तं यदुपादेयत्वेन मन्येत तत् सदैव चेतसि उपतिष्ठेत यच्च हेयत्वेन मन्येत तन्नोपतिष्ठेतेत्यर्थः, स च संप्रज्ञाताख्यः समाधिः निरोधं प्रशान्तचित्ततामित्यर्थः भावयेत् ॥ १५ ॥

सम्प्रज्ञातः स योगः स्याद्–विवेकस्तस्य चावधिः ।
तस्यापि निरोधो योगो ह्यसम्प्रज्ञात ईरितः ॥ १६ ॥

सम्प्रज्ञातयोगस्य विवेकः बुद्धिपुरुषयोरन्यताविज्ञानम् अवधिः सीमा, तद्विवेकस्यापि निरोधः असम्प्रज्ञातः योग ईरितः योगिभिः पारदर्शिभिः ॥ १६ ॥

तदा द्रष्टुः स्वरूपेऽवस्थानम् ३ ।

निरोधे सर्ववृत्तीनां द्रष्टुश्चिन्मात्ररूपिणः ।
तथवावस्थितिर्वाच्या मेघान्मुक्तो यथार्यमा ॥ १७ ॥

मेघाच्छन्नो रविः मेघमुक्तः अभूदिति यथा मेघाच्छन्नदृष्टिभिरस्माभिर्मन्यते तथा सदैव स्वरूपप्रतिष्ठोऽपि पुरुषः बुद्धिनिरोधे स्वरूपप्रतिष्ठ इति पुनः व्यवहारदृशि वचनीयं भवतीत्यर्थः ॥ १७ ॥

वृत्तिसारूप्यमितरत्र ४ ।

वृत्तिषु ह्यनिरुद्धासु द्रष्टुः शुद्धस्य साक्षिणः ।
वृत्तिभिः सह चैकत्वख्यातिः स्यादुपरागतः ॥ १८ ॥

सर्वाः वृत्तयो दृश्यत्वात् पुरुषेण प्रतिसंवेद्यन्ते तस्मात् वृत्तिश्च पुरुषश्च एकत्वेन प्रतीयते एवं व्युत्थाने बुद्धिपुरुषयोः सादृश्यप्रतीतिः, व्युत्थानस्य द्वेधाऽवस्था अविवेकरूपा विवेकरूपा च, तत्र अविवेके ।द्रष्टा विपर्ययवृत्तिसरूपो विवेके च विवेकख्यातिरूप इव प्रतीयते, जपाकुसुमेनोपरक्तः स्फटिकमणिरत्र दृष्टान्तः ॥ १८ ॥

वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ५ ।

क्लिष्टाऽक्लिष्टेति वृत्तीनां साधनार्थं विभाजितम् ।
अविद्यापूर्विकाः क्लिष्टा अक्लिष्टाः शान्तिहेतवः ॥ १६ ॥

क्लिष्टा चाक्लिष्टेति च द्विधा वृत्तीनां विभागः परमार्थसाधनापेक्षया कृतः, विपर्ययवृत्तिषु याः दुःखमूलास्ता अविद्यादयः क्लेशाः, क्लेशमूलाः सर्वविधा वृत्तयः क्लिष्टाः, अविद्यादीनान्तु परिपन्थिन्यो वृत्तयः अक्लिष्टाः मुख्यतः विवेकप्रत्ययरूपाः क्लेशनिवृत्तिकारिण्यः ॥ १९ ॥

प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः ६ ।

प्रमाणञ्च विपर्ययो विकल्पसंज्ञकस्तथा ।
निद्रास्मृती च वस्तुतः पञ्चैताश्चित्तवृत्तयः ॥ २० ॥

परमार्थाय क्लिष्टाक्लिष्टेति विभागो वस्तुतस्तु प्रमाणादिः पञ्चधा विभागः वृत्तीनाम्, विकल्पसंज्ञकः विकल्पशब्देनात्र परिभाषिता वृत्तिरित्यर्थः नान्यस्तु विकल्पपदार्थः ॥ २० ॥

प्रत्यक्षानुमानागमाः प्रमाणानि ७ ।

अबाधितो ह्यर्थबोधः प्रमा तत्करणं मतम् ।
सद्भूतार्थं प्रमाणं हि मिथ्याज्ञानस्य बाधकम् ॥ २१ ॥

अबाधितः विपर्ययेण अबाधितः, सद्भूतार्थं यस्य विषयो यथाभूतः तत् ॥ २१ ॥

प्रत्यक्षमनुमानञ्च आप्तात् श्रुतो य आगमः ।
एतान्येव प्रमाणानि त्रैकालिका विनिश्चयाः ॥ २२ ॥

आप्तात् श्रुतः आप्तपुरुषात् साक्षात् श्रुतः यः आगमः स एव आगमप्रमाणम्, आगमाख्या ग्रन्थास्तत्पाठजातं ज्ञानं वा न आगमप्रमाणमिति विवेच्यम्, विनिश्चयाः विज्ञानानि, तत्र प्रत्यक्षविज्ञेयस्य वर्तमानकालः अधिकरणम्, अनुमानागमयोश्च अतीतानागतवर्तमानकालः अधिकरणम् ॥ २२ ॥

विषयैश्चित्तसंयोगाद् बुद्धीन्द्रियप्रणालिकात् ।
प्रत्यक्षं साम्प्रतं ज्ञानं विशेषस्यावधारकम् ॥ २३ ॥

विषयैः सह बुद्धीन्द्रियप्रणालिकात् चित्तसंयोगात् जातं ज्ञानं प्रत्यक्षम्, तच्च साम्प्रतं वर्त्तमानकालाधिकरणकम्, विशेषस्तु वस्तूनां प्रातिस्विकः शब्दादयः आकारादयश्च गुणाः य इन्द्रियैर्ज्ञायन्ते तस्यावधारकं प्रत्यक्षम् ॥ २३ ॥

असहभावसम्बन्धं ज्ञात्वा च सहभावकम् ।
हेतुपूर्वानुमानं या सामान्यार्थविनिश्चितिः ॥ २४ ॥

असहभावसम्बन्धः तत्सत्त्वे तदसत्त्वं तदसत्त्वे च तत्सत्त्वम्, सहभावसम्बन्धः तत्सत्त्वे तत्सत्त्वं तदसत्त्वे तदसत्त्वम्, सम्बन्धज्ञानानन्तरं हेतुं लब्ध्वा हेतुमतः पदार्थस्य निश्चयः अनुमानम्, शब्दार्थज्ञान-साध्यत्वादनुमानम् आगमश्च सामान्यविषयः यतः शब्दाः सामान्यार्थेषु कृतसङ्केताः ॥ २४ ॥

आप्तोक्तशब्दशक्त्या यः श्रोतुस्तदर्थनिश्चयः ।
प्रमाणमागमः स स्याद्-यः सिध्येदविचारतः ॥ २५ ॥

आप्तोक्तशब्दशक्तिविशेषेण अभिभूतविचारबुद्धेः श्रोतुर्यो निश्चयः स एवागमाख्यं प्रमाणम् ॥ २५ ॥

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ८ ।

यद्वस्तुस्वरूपं तस्माद्भिन्नरूपस्य तत्र या ।
ख्यातिर्विपर्ययो वृत्ति-मिथ्याज्ञान-स्वरूपिका ॥ २६ ॥

विपर्यय उच्यते, कस्यचिद्वस्तुनो यत् स्वरूपं तस्मात् स्वरूपात् भिन्नस्य रूपस्य तस्मिन् वस्तुनि या ख्यातिः प्रतिभासः स विपर्ययो नाम मिथ्याज्ञानस्वरूपिका वृत्तिः, मिथ्याज्ञानं विपरीतज्ञानं न ज्ञानाभाव इति द्रष्टव्यम् ॥ २६ ॥

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ९ ।

अवस्तुवाचकाच्छब्दात् प्रत्ययो बुद्धिनिर्मितः ।
यावद्-भाषानुगा चिन्ता व्यवहार्यो विकल्पकः ॥ २७ ॥

अवस्तुवाचकं शब्दं श्रुत्वा यो बुद्धिनिर्मितः, यावद्भाषानुगा चिन्ता तावद्व्यवहार्यः, प्रत्ययो जायते स विकल्पः, अवस्तुवाचकाः शब्दाः यथा—अभावः, अनन्तः, राहोः शिरः, चैतन्यं पुरुषस्य स्वरूपमित्यादयः, अभाव इति पदस्य यज्ज्ञानं तत् विकल्पस्योदाहरणम्, तस्य वास्तवो विषयः नास्ति, नापि विपर्ययवत् अव्यवहार्यता, यावत् शब्दः किञ्चित् चिन्त्यते तावद्-विकल्पस्योपकारिता, निर्वितर्कनिर्विचारख्याने विकल्पहानिर्भवति, शब्दहीनार्थचिन्तनस्वाच्छदा ॥ २७ ॥

अभावप्रत्ययालम्बना वृत्तिर्निद्रा १० ।

कारणं यत्तमोरूपमभावे स्वप्नजाग्रतोः ।
तज्जाड्यालम्बनो निद्रा प्रत्ययस्तामसो मता ॥ २८ ॥

स्वप्नजाग्रतोरवस्थयोरभावे कारणं यत् तमोरूपं जाड्यरूपं तज्जाड्यविषयः तामसः प्रत्ययः निद्रेति, सुखमहमस्वाप्समित्यादि-स्मृत्यनुभवात् निद्रा प्रत्ययविशेषः, तस्या विषयः चित्तेन्द्रियदेहानां जडावस्थाविशेषः, सा च तमःप्रधाना इतरवृत्तिवत् त्रिगुणा ॥ २८ ॥

अनुभूतविषयासम्प्रमोषः स्मृतिः ११ ।

विषयस्यानुभूतस्य या पुनरनुभूतता ।
सतः संस्कारभूतेन सा सर्वविषया स्मृतिः ॥ २९ ॥

अनुभूतस्य विषयस्य संस्कारभूतेन सतः—संस्कारभूतत्वेति हेतुना इत्यर्थः, या पुनरनुभूतता सा स्मृतिः, स्मृतिश्च सर्वविषया प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतिभिः यद्विषयीकृतं तत् सर्वं स्मृतिर्विषयीकरोतीत्यर्थः ॥ २९ ॥

प्रवृत्तिस्थितिधर्माणाम् एषां रोधे निरोधनम् ।
वृत्तिः प्रत्ययरूपैव गृहीता योगिभिस्ततः ॥ ३० ॥

प्रवृत्तिप्रधानानाम् इच्छाकृत्यादीनां स्थितिप्रधानानां संस्काराणाञ्च धर्माणाम् एषां पञ्चानां प्रत्ययानां निरोधे निरोधः स्यात्, ततः योगिभिः प्रत्ययरूपा एव वृत्तयः गृहीताः ३०

अभ्यासवैराग्याभ्यां तन्निरोधः १२ ।

विवेकदर्शनाभ्यासात् वैराग्याच्चार्थरोधिनः ।
चित्तवृत्तिनिरोधः स्यादुपायौ तौ ततो मतौ ॥ ३१ ॥

विवेकदर्शनाभ्यासात् विषयरोधिनश्च वैराग्यात् परात् सर्ववृत्तिनिरोधः स्यात्। ततः अभ्यासवैराग्ये निरोधोपायौ मतौ। सम्प्रज्ञातयोगाभ्यासः वशीकारादिवैराग्यमपि निरोधस्य बहिरङ्गभूतत्वात् निरोधोपाय इति ज्ञातव्यः ॥ ३१ ॥

तत्र स्थितौ यत्नोऽभ्यासः १३ ।

अवृत्तिकी स्थितिस्तस्याः शान्तावस्था या चेतसः ।
साधनानामनुष्ठानमभ्यासो वीर्यपूर्वकम् ॥ ३२ ॥

या अवृत्तिकी चेतसः शान्तावस्था सा स्थितिः। तस्याः स्थित्याः यानि साधनानि

तेषां पुनःपुनरनुष्ठानमभ्यासः, अवशेन यदनुष्ठीयते न सः अभ्यासः किन्तु वीर्यपूर्वकम् अनुष्ठानमेवाभ्यासः ॥ ३२ ॥

स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः १४ ।

आसेवितः ससत्कारं विद्याश्रद्धादिपूर्वकम् ।
अभ्यासो दृढभूमिः स्याद्दीर्घकालं निरन्तरम् ॥ ३३ ॥

दीर्घकालं निरन्तरं ससत्कारं विद्याश्रद्धादिपूर्वकमित्यर्थः आसेवितः अभ्यासः दृढभूमिः स्यात् ॥ ३३ ॥

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् १५ ।

वैराग्यं द्विविधं प्रोक्तमपरं परमेव च ।
यतमानादिभेदेन चतुर्धाऽप्यपरं पुनः ॥ ३४ ॥

यतमान-व्यतिरेक-एकेन्द्रिय-वशीकार-भेदेन अपरं वैराग्यं चतुर्विधम् ॥ ३४ ॥

प्रथमं यतमानश्च व्यतिरेकं ततः परम् ।
एकेन्द्रियं ततोऽभ्यस्तं वशीकारः प्रसिध्यति ॥ ३५ ॥

स्पष्टम् ॥ ३५ ॥

इन्द्रियाणि प्रवृत्तानि मा भूवन् विषयेष्विति ।
यतमानः प्रयत्नः स्यादेवमर्थनिवृत्तये ॥ ३६ ॥

स्पष्टम् ॥ ३६ ॥

एतेभ्यः शमितो रागः कार्यं एषां शमस्तथा ।
द्वितीयं व्यतिरेकेण यत्रावधार्यतेऽरतिः ॥ ३७ ॥

अभ्यासबलाद्-यदा क्वचित् क्वचिद्-रागः निवृत्तो भवति तदा वैराग्यस्य द्वितीयावस्था सिध्यति, एतेभ्यो विषयेभ्यो रागः शमितः एभ्यश्च शमः कार्यं इति यस्यां वैराग्यावस्थायाम् अरतिः वैराग्यं व्यतिरेकेण अवधार्यते तद्द्वितीयं व्यतिरेकसंज्ञकं वैराग्यम् ॥ ३७ ॥

बाह्येन्द्रियप्रवृत्तौ तु शान्तायां विषयेषु हि ।
राग औत्सुक्यमात्रेण तृतीयं यत्र चेतसि ॥ ३८ ॥

रागवशाद्विषयेषु बाह्येन्द्रियप्रवृत्तिः, शान्तायां तस्यां प्रवृत्तौ यदा राग औत्सुक्यमात्रेण चेतसि तिष्ठति इन्द्रियप्रवर्तनसामर्थ्यशून्यो भवतीत्यर्थः तदा तत् तृतीयम् एकेन्द्रियसंज्ञकम् एकेन्द्रिये मनसि स्थितमित्यर्थः वैराग्यम् ॥ ३८ ॥

इहत्य एव यो भोगो दिव्यभोगश्च यो महान् ।
वशीकाराख्यवैराग्यं वैतृष्ण्यं तत्र तत्र यत् ॥ ३९ ॥

पार्थिवविषयभोगे च महति दिव्यविषयभोगे च यत् वैतृष्ण्यम् अनाभोगः चित्तेन्द्रियप्रवृत्तिराहित्यमित्यर्थः तद्वशीकाराख्यं वैराग्यं तच्च अपरवैराग्येषु ॥ ३९ ॥

तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् १६ ।

व्यक्ताव्यक्तात्मगुणेषु वैतृष्ण्यं परसंज्ञकम् ।
पुंसः स्याद्दर्शनाभ्यासात् काष्ठा ज्ञानस्य यत्परा ॥ ४० ॥

पुरुषदर्शनस्य विवेकख्यातेरभ्यासात् यत् व्यक्ताव्यक्तस्वरूपेषु गुणेषु वैतृष्ण्यं तत्परसंज्ञकं वैराग्यम्, तच्च ज्ञानस्य परा काष्ठा ज्ञानप्रसादमात्रा इति यावत्, अपरं विकृतिविषयकं वैराग्यं परञ्च मूलप्रकृतिविषयकमिति विवेच्यम् ॥ ४० ॥

प्रवृत्तेस्तत्परा शान्तिश्च ज्ञानस्य प्रसादता ।
प्रापणीयं तदा प्राप्तं क्लेशाश्च संक्षयं गताः ।

अस्पृश्यो जन्ममृत्युभ्यां प्रज्ञायेति विमुच्यते ॥ ४१ ॥

परस्यां वैराग्यावस्थायां प्रवृत्तेः परा शान्तिरुपशमो भवति, ज्ञानस्य च चरमा प्रसन्नता रजस्तमोमलहीनता भवति, तदा प्रापणीयं प्राप्तं क्लेशाश्च मे सम्यक् क्षीणा जन्ममृत्युभ्यामहम् अस्पृश्य इति प्रज्ञाय प्रान्तभूमिं प्रज्ञामनुभवन् इत्यर्थः विद्वान् विमुच्यते कैवल्यपदमश्नुते ॥ ४१ ॥

वितर्कविचारानन्दाऽस्मितारूपानुगमात् सम्प्रज्ञातः १७ ।

वितर्कविचारानन्दाऽस्मितारूपानुगामिनी ।
एकाग्रभूमिजातत्वात् प्रज्ञा चित्ते प्रतिष्ठिता ।
सम्प्रज्ञातो मतो योगः सालम्बनसमाधिजा ॥ ४२ ॥

वितर्कादीनां स्वरूपानुगामिन्यः सालम्बनसमाधिजाः प्रज्ञाः एकाग्रभूमिजातत्वात् यदा चेतसि प्रतितिष्ठन्ति तदा स योगः सम्प्रज्ञातो मतः, वितर्कः शब्दसहाया चिन्ता, सवितर्कः निर्वितर्क इति द्विविधो वितर्कानुगतः सम्प्रज्ञातः, येन विचारेण ध्यायिनः सूक्ष्मार्थान् अधिगच्छन्ति स विचारः, तदनुगत-सम्प्रज्ञातोऽपि द्विविधः सविचारः निर्विचार इति ॥ ४२ ॥

गृहीतृ-ग्रहण-ग्राह्यं स्थूलसूक्ष्मेन्द्रियाऽस्मिताः ।
साक्षात्कारवती तासां प्रज्ञा ध्रुवा स्मृतिः स वा ॥ ४३ ॥

स्थूलभूतानि सूक्ष्मभूतानि च ग्राह्याणि, ग्रहणानि च बाह्याभ्यन्तरकरणानि ग्रहीता च अस्मितामात्रः, एतानि सम्प्रज्ञातस्य आलम्बनानि, या एषां साक्षात्कारवती प्रज्ञा ध्रुवास्मृतिर्वा या, स सम्प्रज्ञातयोगः ॥ ४३ ॥

ग्रहीता पुरुषाकारा बुद्धिर्वा चरमास्मिता ।
ग्राह्याणि स्थूलभूतानि तन्मात्राख्यास्तथाऽणवः ।
बाह्येन्द्रियाणि च प्राणा मनश्च ग्रहणानि हि ॥ ४४ ॥

चरमास्मिता बुद्धिपुरुषयो-रेकात्मक-संविन्मात्रा, अस्मितायाः सा अग्र्यावस्था, स्पष्टमन्यत् ॥ ४४ ॥

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः १८ ।

सर्ववृत्तिविरामस्य वैराग्यं कारणं परम् ।
तस्याभ्यासादुपायाद्धि निरालम्बो ह्यसत्त्ववत् ॥
संस्कारमात्ररूपस्तु सर्वप्रत्ययहीनतः ।
निर्वीज-योग-भेदो यः सोऽसम्प्रज्ञात उच्यते ॥ ४५ ॥

परं वैराग्यं सर्ववृत्तिविरामस्य प्रशान्तेरित्यर्थः कारणम्, तस्य विरामस्य अभ्यासः पुनः पुनरनुष्ठानम्, यद्रूपादुपायात् यो निरालम्बो निर्विषय इत्यर्थः असत्त्ववत् अभावप्राप्त इव सर्वप्रत्ययहीनत्वात्तु संस्कार-मात्र-स्वरूपः निरोधसंस्कारशेषः व्युत्थानविच्छेदसंस्काररूपो वा, समाधिः सः असम्प्रज्ञात उच्यते, स तु निर्वीजसमाधिभेदः, विदेहप्रकृतिलयानामपि भवप्रत्ययो निर्वीजः समाधिर्जायते, योगिनां कैवल्यभाजाञ्च विवेकख्यातिपूर्वो यो निर्वीजो जायते सोऽसम्प्रज्ञात इति द्रष्टव्यः ॥ ४६ ॥

प्रान्तभूमिविवेकाख्या सम्प्रज्ञानस्य या भवेत् ।
असम्प्रज्ञातनिर्वीज-स्तन्निरोधात् तु योगिनाम् ॥ ४६ ॥

उपायप्रत्ययी भवप्रत्ययश्चेति निर्वीजयोगभेदो विशदीक्रियेते प्रान्तभूमिरित्यादिना, स्पष्टम् ॥ ४६ ॥

भवप्रत्ययो विदेहप्रकृतिलयानाम् १९ ।

भवप्रत्ययनिर्बीजो ह्यनिष्पन्नविवेकानाम् ।
विदेहानाञ्च देवानां स्यात् प्रकृतिलीनानाम् ॥ ४७ ॥

उपायप्रत्ययं निर्बीजमुक्त्वा भवप्रत्ययं निर्बीजमाह, भवो वक्ष्यमाणलक्षणकः प्रत्ययः कारणं यस्य सः, स निर्बीजः अनिष्पन्नविवेकानां विदेहलयानां प्रकृतिलयानां च देवानां स्यात् ॥ ४७ ॥

विवेकख्यातिहीनस्य संस्काराश्चेतसो भवः ।
अशरीरि शरीरि वा प्लवं जन्म यतो भवेत् ॥ ४८ ॥

विवेकख्यातिहीनस्य अतएव साधिकारस्य चेतसः संस्काराः वासनाकर्माशयरूपाः भव इत्युच्यते, यतो भवात् लोकनिवासिनां सत्त्वानां शरीरि जन्म स्यात् विदेहप्रकृतिलयानाञ्च अशरीरि शरीरविहीनम् अलौकिकं प्लवं क्षयि जन्म भवेत्, जन्म किल मरणान्तं विदेहादीनां मग्नस्य पुनरुत्थानमिव पुनरावृत्तिदर्शनात् तेषामपि भवप्रत्ययं जन्म इति ॥ ४८ ॥

भूतेन्द्रियेषु वा व्यक्ते वैराग्याद्यः प्रजायते ।
संस्कारस्तेन जातिः स्याद्‌-भवेनालिङ्गरूपिणी ।
कैवल्यमिव तेषान्तु चावस्था नाऽप्लवा मता ॥ ४९ ॥

विदेहानाञ्च भूतेन्द्रियेषु प्रकृतिलयानाञ्च व्यक्ते निखिलव्यक्तभावेषु इत्यर्थः, वैराग्यम्, तत्तद्वैराग्यस्य यः संस्कारः ग्रहणनिरोधात्मकः स तेषां भवः, तेन भवेन तेषाम् अलिङ्गरूपिणी जातिः स्यात्, चित्तस्य अवच्छिन्नकालं यावत् अव्यक्तपरिणामः स्यादित्यर्थः, तदा तेषां कैवल्यमिव निर्विषया लीना चित्तावस्था भवति, नतु सा अवस्था कैवल्यमिव अप्लवा शाश्वतीत्यर्थः ॥ ४९ ॥

वैराग्यात् करणाऽकार्य-मकार्यात् कारणे लयः ।
संस्कारबलसंक्षयाद्‌-आवृत्तिः स्यान्निसर्गजा ॥ ५० ॥

कथं चित्तलयः पुनरावृत्तिश्च तदाह, वैराग्यात् विषयाप्रवृत्तेर्हेतोः करणानि निष्क्रियाणि भवन्ति, निष्क्रियाणि क्रियात्मकरणानि न स्थातुमुत्सहेरन् इति तेषां स्वकारणे लयः ततः अव्यक्तताप्राप्तिरिति भावः, वैराग्यसंस्कारस्यास्ति मन्दीभावः प्राबल्यञ्च, यदा मन्दीभावः तदा स्वभाववशात् पुनरावृत्तिः चेतसो भवति, वैराग्यं परं यत् पुरुषख्यातेः प्रजायते तदेव चित्तप्रतिसर्गकरम्, अविवेकिनाञ्च वैराग्यं चित्तस्याधिकारं न सम्यक् निवर्त्तयतीति ॥ ५० ॥

श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञापूर्वक इतरेषाम् २० ।

श्रद्धया चैव वीर्येण तथा स्मृत्या समाधिना ।
प्रज्ञया योगिनां मोक्षभाजां निर्बीज ईरितः ॥ ५१ ॥

येनोपायेन कैवल्यभाजां योगिनां निर्बीजः सिध्येत् तमाह, स्पष्टम् ॥ ५१ ॥

साऽभिरुचिमती श्रद्धा या धीः सत्यञ्च धीयते ।
तद्वतः कर्मकौशल्यं वीर्यादुत्साहलक्षणात् ॥ ५२ ॥

या धीः सत्यं धीयते सत्कारपूर्वकमादत्ते सा अभिरुचिमती श्रद्धा, तद्वतः श्रद्धावतोऽस्माद् वीर्यादित्यर्थः कर्मकौशल्य साधनकुशलता तदेव उत्साहलक्षणं वीर्यम् ॥ ५२ ॥

वर्त्ता अहं स्मरिष्यंश्च स्मराणि ध्येयमित्यपि ।
उपातिष्ठेत् स्मृतिर्वीर्यात् सदा या समनस्कता ॥ ५३ ॥

अभिमतं ध्येयं स्मराणि स्मरिष्यन् चापि वर्त्त इत्यात्मिका स्मृतिः वीर्यात् वीर्यवत इत्यर्थः उपातिष्ठेत्, सा च स्मृतिः सदा समनस्कता ध्येयविषयस्य चेतस्युपस्थानमित्यर्थः ५३

ध्रुवा-स्मृति-र्मतैकाग्र्यं समाधिश्च ततो भवेत् ।
समाधेः सम्प्रज्ञानं स्याद्-विवेकख्यातिरूपि यत् ।
ततः संस्कारसंक्षयात् कैवल्यं चेतसो लयः ॥ ५४ ॥

स्मृतिरनुष्ठीयमाना ध्रुवा भवति सैव एकाग्रभूमिः, ततः स्मृत्यभ्यासदार्ढ्यात् समाधिर्जायते, समाधेः सम्प्रज्ञानं मुख्यतो यद्विवेकख्यातिरूपि, तथा विवेकख्यात्या वासनाकर्माशयसंक्षयात् यश्चेतसो लयः प्रतिसर्गस्तदेव कैवल्यम् ॥ ५४ ॥

तीव्रसंवेगानामासन्नः २१ ।

मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः २२ ।

संवेगः पूर्व-वैराग्य-संस्काराद्-वीर्यमीरितः ।
आसन्नः सफलो योग-स्तीव्रसंवेगशालिनाम् ।
मृदुमध्याधिमात्रत्वाद् विशेषोऽस्ति ततोऽपि च ॥ ५५ ॥

पूर्वजन्माभिनिर्वर्त्तितात् वैराग्यसंस्काराज्जातं वीर्यं संवेग इत्युच्यते, तीव्रसंवेगशालिनां योगस्तत्फलेन कैवल्येन सह आसन्नो भवति, तीव्रसंवेगेष्वपि मृदुमध्याधिमात्रत्वात् त्रयो भेदाः सन्ति ॥ ५५ ॥

ईश्वरप्रणिधानाद्वा २३ ।

ईश्वरप्रणिधानाद्वा तस्याभिध्यानतो भवेत् ।
आसन्नः सफलस्यैव लाभो योगस्य योगिनाम् ॥ ५६ ॥

ईश्वरप्रणिधानादावर्जितस्य ईश्वरस्य अभिध्यानात् इच्छयेत्यर्थः योगलाभो भवति, ईश्वराभिध्यानाभावेऽपि प्रशान्तं समाहितम् ईश्वरं विभाव्य चित्तं सुखेन समाधीयते ॥ ५६ ॥

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः २४ ।

क्लेशाः पञ्च च कर्म स्याद्-धर्माधर्माख्य-संस्कृतिः ।
तत्फलं सुखदुःखाद्यं फलानुगुण-वासनाः ॥
त्रैकालिको ह्यसम्बन्धो यस्यैभिः सह विद्यते ।
अनादिपुरुषो मुक्त ईश्वरो योगिभिर्मतः ॥ ५७ ॥

ईश्वरलक्षणमाह, क्लेशादिभिः सर्वदा असम्बद्धः अतएव अनादिमुक्तः पुरुषः ईश्वरो योगिभिः मतः, ईदृशः एव ईश्वरो योगिभिरुपासनीय इत्यर्थः, क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशा इति पञ्च, कर्म धर्माधर्मरूपाः कर्मसंस्काराः, कर्मफलानि त्रिविधानि जातिरायुः सुखदुःखरूपञ्च भोग इति, कर्मफलानुभूतिजन्याः संस्काराः फलानुरूपा वासनाः, एभिः सह यस्य पुरुषस्य सम्बन्धो न भूतत्वेन न भावित्वेन नापि वर्त्तमानत्वेन उपलभ्यते स पुरुषविशेषः ईश्वरः इत्यर्थः, क्लेशादिभिः सर्वदा असम्बन्धदर्शनादीश्वरः पुरुषतत्त्वमात्र इति चेन्न तस्य भूतानुग्रहार्थं विद्यासंयोगदर्शनात् स पुरुषविशेष इति ॥ ५७ ॥

तत्र निरतिशयं सर्वज्ञबीजम् २५ ।

सातिशयञ्च सार्वज्ञ्य-बीजं यदिह दृश्यते ।
तन्निरतिशयं यस्मिन्नाकृमेर्मानवस्थितम् ।
साम्यातिशय-निर्मुक्तः स सर्वज्ञो महेश्वरः ॥ ५८ ॥

ईश्वरसिद्धौ प्रमाणमाह, इह लोके सार्वज्ञ्यबीजम् आकृमेर्मानवस्थितं यत् सातिशयम् अतिशययुक्तं क्रमशः उत्कर्षतामापद्यमानमित्यर्थः दृश्यते तत् यस्मिन् पुरुषे निरतिशयतां प्राप्तं साम्यातिशयनिर्मुक्तः स सर्वज्ञः पुरुषः महेश्वरः ईश्वराणामीश्वर इत्यर्थः ॥ ५८ ॥

समानजातिभावानां क्रमशो गुरुता यदि ।
ते सातिशायिनः स्युश्च यस्मात् सातिशयोऽस्ति न ॥
स निरतिशयः प्रोक्तः असीमे कारणे सति ।
उपादानस्य चानन्त्यात् असीमा गुरुता यतः ॥ ५६ ॥

तदेव स्पष्टयति, समाना जातिर्येषां भावानां तेषां यदि क्रमशो गुरुता गौरवः स्यात् तदा ते भावाः सातिशायिनः स्युः, यथा वितस्ति हस्त-व्याम क्रोश-गव्यूति योजनानीति क्रम-गौरवात् सातिशयानि परिमाणानि, यस्मात् सातिशयो नास्ति स भावः निरतिशयः इति, सजातीयेषु भावेषु मध्ये कश्चिन्निरतिशयं स्याद् यदि तेषां कारणमुपादानम् असीमं स्यात्, उपादानस्य आनन्त्यात् गुरोर्गुरुतरः इति क्रमाः असंख्याः स्युः, एवमसीमा गुरुता स्यात् कस्यचिद्वस्तुनः, तदेव वस्तु निरतिशयम् ॥ ५९ ॥

ज्ञानशक्तेरुपादानम् असीमा प्रकृतिर्मतम् ।
सा निरतिशया स्याच्च कुत्रचिद्-धीर्हि सैश्वरी ॥ ६० ॥

ज्ञानशक्तेरुपादानम् असीमा प्रकृतिः, ज्ञानशक्तिरपि सातिशयेति दृश्यते, ततः सा कुत्र-चिन्निरतिशया स्यात्, यत्र सा निरतिशया सैव ऐश्वरी धीः, ईश्वरसत्त्वं निरतिशयज्ञानसम्प-न्नमित्यर्थः, एवमनुमानप्रमाणात् सामान्यत ईश्वरसत्ता निश्चीयते, विशेषस्तु आगमतो ज्ञात-व्यः, ईदृशः सदामुक्त ईश्वर एव योगिभिर्मुमुक्षुभिरुपास्यः ॥ ६० ॥

स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात् २६ ।

कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ।
सर्वेषामपि सर्वशः कालावच्छेदवर्जितः ॥ ६१ ॥

अनादिमुक्तत्वादीश्वरः अन्येषां मुक्तपुरुषाणां कपिलादीनां कालावच्छेदयुक्तानामपि गुरुः ६१

अकृत्वा शाश्वतीं शान्तिं चेतसः परमेश्वरः ।
कारुण्यात् समधिष्ठाय निर्माणचेतसं विभुः ॥
कदाचिदात्मसंस्थो वा भूतान् संसारपीडितान् ।
ज्ञानधर्मप्रकाशेन ह्यनुगृह्णाति मुक्तये ॥ ६२ ॥

ननु ईश्वरश्चेत् मुक्तः प्रलीनचित्तः कथं तस्य भूतानुग्रहः सङ्गच्छेत् इत्याह, ईश्वरः स्वचे-तसः शाश्वतीं शान्तिमकृत्वा कदाचिद्वा आत्मसंस्थस्तिष्ठति कदाचिद्वा कारुण्यात् निर्माणाच-त्तमधिष्ठाय संसारपीडितान् भूतान् ज्ञानधर्मप्रकाशं कृत्वा मुक्तये परमश्रेयसे अनुगृह्णाति, न हि भगवान् सर्वज्ञ ईश्वरः सर्वदुःखकमूलस्य महामोहस्य विवृद्धिहेतून् भोगान् आपातरमणी-यान् दत्त्वा दु खपीडितानां सत्त्वानां दुःखसन्तानं वर्द्धयेत्, भोगाश्च प्राणिपीडामन्तरेण इह न सम्भवन्ति यदेदमुक्तं "नानुपहत्य भूतानुपभोगः सम्भवतीति", अत ईश्वरः विषयामिष-लुब्धान् अभ्यानन्द विधाय न अनुगृह्णाति किन्तु तदेकशरणेभ्यः मुमुक्षुभ्यो ज्ञानधर्मं परम-श्रेयस्करं दत्त्वा अनुगृह्णाति ॥ ६२ ॥

तस्य वाचकः प्रणवः २७ ।

प्रणवो वाचकस्तस्य प्रदीपस्य प्रकाशवत् ।
यतः शब्दाश्रयं नित्यम् ईश्वरज्ञानमीरितम् ॥ ६३ ॥

ईश्वरस्य सर्वोत्तमो वाचकः प्रणवः, यथा प्रदीपश्च तस्य प्रकाशश्च इति द्वौ सहभुवौ तथा प्रणवश्च ईश्वरज्ञानञ्च, ईश्वरपदार्थज्ञानं सदैव शब्दाश्रयम्, यः क्लेशकर्मादिभिरपरामृष्टः पुरुषः स ईश्वर इत्यादिना शब्दानुगतेन चिन्तनेन ईश्वरज्ञानसम्भवात् अन्यथा चासम्भवात्, प्रण-वस्तु तेषां सर्वेषां वाक्यानां सुखोच्चार्यः चित्तस्थैर्यकरः योगिप्रियः द्विजगिरः सङ्केतः, प्रण व-

स्मरणेन सह यथा ईश्वरविषयिणी धीरुपतिष्ठेत तथा योगिभिः साधनीयम् ॥ ६३ ॥

तज्जपस्तदर्थभावनम् २८ ।

ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च २९ ।

तज्जपस्तस्य चार्थेषु कार्यं चित्तनिवेशनम् ।
अन्तराया विलीयन्ते एवमीश्वरभावनात् ।
चितः स्वात्मभूतस्य च साक्षात्कारः प्रसिद्ध्यति ॥ ६४ ॥

प्रणवाद्-वाचकाद्-वाच्याया ईश्वरविषयधिय उपस्थाने सिद्धे प्रणवजपेन तदर्थभावनेन च चेतः ईश्वरे प्रणिदध्यात् । ततः समाधेरन्तरायाः वक्ष्यमाणा विलीयन्ते । स्वात्मभूतस्य चितः प्रत्यक्चेतनस्येत्यर्थः साक्षात्कारः सिध्यति। यथा ईश्वरो मुक्तः स्वरूपस्थस्तथा अयमपि बुद्धेः प्रतिसंवेदी पुरुष इत्यनया दिशा प्रत्यक्चेतनाधिगमो भवति ॥ ६४ ॥

व्याधि-स्त्यान-संशय-प्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वा-
नवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ३० ।

व्याधिश्च संशयः स्त्यानम् आलस्याविरती तथा ।
अलब्धभूमिकत्वञ्च प्रमादो भ्रान्तिदर्शनम् ।
तथानवस्थितत्वञ्च अन्तरायाः प्रकीर्त्तिताः ॥ ६५ ॥
व्याधो रोगो ह्यकर्मण्यं स्त्यानं भ्रान्तस्य चेतसः ।
इदमेवं न चैवं स्याद्-इति ज्ञानञ्च संशयः ॥ ६६ ॥
अविरागस्तु चित्तस्य विषये भोगलोलता ।
देहगौरव आलस्यं यज्जायेत कफादिना ॥ ६७ ॥
भूम्यलाभः समाधेस्तत् साधनानामभावनम् ।
अलब्धभूमिकत्वं च प्रमादश्च यथाक्रमम् ।
तत्त्वज्ञानं विपर्यस्तं भ्रान्तिदर्शनमुच्यते ॥ ६८ ॥
मधुमत्यादयस्तु याः समाधेः सन्ति भूमयः ।
अनवस्थितता तेषु सा ज्ञेया याऽप्रतिष्ठता ॥ ६९ ॥

अन्तराया उच्यन्ते, व्याधिरित्यादिना, प्रथमकल्पिकमधुप्रतीकाद्याः समाधिभूमयः, तासामलाभः अलब्धभूमिकत्वम्, पुरुषादीनां तत्त्वानां यत् स्वरूपं तत्र विपर्य्ययज्ञानं भ्रान्तिदर्शनम्, लब्धायां भूमौ अस्थितिरनवस्थितत्वम् ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

दुःखदौर्म्मनस्याङ्गमेजयत्व-श्वास-प्रश्वासा विक्षेपसहभुवः ३१ ।

दौर्मनस्यं मनःक्षोभस्त्रिविधं दुःखमेव च ।
प्रश्वासश्च तथा श्वासः स्वाङ्गानाञ्च प्रचालनम् ।
एते सर्वेऽपि सम्प्रोक्ताः पूर्वेषां सहभाविनः ॥ ७० ॥

स्पष्टम् ॥ ७० ॥

तत्प्रतिषेधार्थमेकतत्वाभ्यासः ३२ ।

विक्षेपाः स्युश्च चित्तस्य योगस्यैते विरोधिनः ।
प्रतिषेधार्थमेतेषाम् एकालम्बं चेतोऽभ्यसेत् ॥ ७१ ॥

एते अन्तरायाश्चित्तस्य विक्षेपाः समाधेर्विरोधिन इत्यर्थः, एषां प्रतिषेधार्थम् एकालम्बं चित्तम् ईश्वरादिविषयकमेकचित्ततां, ध्येयस्य नानागुणान् समाहृत्य एक-प्रत्यय-विषयतामित्यर्थः, अभ्यसेत् ॥ ७१ ॥

मैत्री-करुणा-मुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ३३ ।

भाव्या सुखिषु मैत्री हि करुणा दुःखितेषु च ।
अपुण्यकारिषूपेक्षा मुदिता पुण्यकारिषु ॥ ७२ ॥

सुखिषु सत्त्वेषु मैत्रीं भावयेत् यथा मित्रस्य सुखिनः सुखदर्शनात् सुखं तथा च अमित्रादीनामपि सर्वेषां सुखे जाते मैत्रीं भावयेत्, एवम् अमित्रादीनामपि सर्वेषां दुःखे करुणां भावयेत् न पैशुन्यम्, समानतन्त्राणामसमानतन्त्राणां वा पुण्यकारिणां पुण्यं दृष्ट्वा मुदितां भावयेत् न विषीदेत, अपुण्यकारिणमुपेक्षेत न विद्विषेत् ॥ ७२ ॥

ईर्ष्याऽसूयादि-संक्लेशाद्-अपरिष्कृतचेतसः ।
मैत्र्यादीनां प्रजायेत प्रसादो नित्यभावनात् ॥ ७३ ॥

ईर्ष्याऽसूयादेः संक्लेशात् मलाद् अपरिष्कृतस्य चेतसः मैत्र्यादिभावनात् प्रसादः परिष्कृतिर्जायते ॥ ७३ ॥

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ३४ ।

निःसङ्कल्पेन चित्तेन शनैः प्रश्वस्य धारयेत् ।
वायुं बहिर्यथाशक्ति धृतचित्तः सदैव हि ।
हृदाद्याध्यात्मिके देशे लीलया पूरयेत्ततः ॥ ७४ ॥
प्रच्छर्दनविधारण-प्रधानात् प्राणसंयमात् ।
कृताभ्यासादनुक्षणं मनः स्थितिपदं व्रजेत ॥ ७५ ॥

स्थितेरुपायान्तरमाह, सङ्कल्पहीनेन चित्तेन प्रश्वासप्रयत्नगतेनान्वितो भूत्वा प्रश्वसेत् इदं प्रच्छर्दनम्। ततः यथाशक्ति बहिरेव वायुं धारयेत्, इदं विधारणं नाम प्राणायामः, प्रच्छर्दनविधारणकाले सदैव हृदादौ आध्यात्मिके देशे धृतचित्तो भवेत्, विधारणानन्तरं लीलया प्रयत्नान्तरमकृत्वेत्यर्थः वायुं पूरयेत्। एवं प्रच्छर्दनविधारणप्रधानात् प्राणसंयमात अनुक्षणं कृताभ्यासात् चित्तं स्थितिपदं व्रजेत् लीलया पूरणात् नास्ति पूरणे प्राणानामायामः प्रच्छर्दनविधारणाभ्यामस्ति च प्राणसंयमः ॥ ७४ ॥ ७५ ॥

विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी ३५ ।

नासाऽग्रे रसनाग्रे च धारणाच्चैव तालुनि ।
मध्ये मूले च जिह्वायाश्चेतसः सर्वदा दृढात् ॥
गन्धाऽऽस्वादादयो दिव्याः प्रादुर्भूयुर्यथाक्रमम् ।
स्थित्युपाया मता एता अर्थवत्यः प्रवृत्तयः ॥ ७६ ॥

उपायान्तरमाह, नासाग्रादौ सर्वदा दृढात् चित्तधारणात् यथाक्रमम् दिव्यगन्ध-रस-रूप-स्पर्श-शब्दाः प्रादुर्भूयुः, ते विषयवत्यः प्रकृष्टा वृत्तय इत्यर्थः, ता अपि प्रवृत्तयः स्थित्युपाया मताः ॥ ७६ ॥

विशोका वा ज्योतिष्मती ३६ ।

भास्वरञ्च वियत्कल्पं धारणान्मनसो हृदि ।
सत्त्वं योग्यधिगच्छेद्-यदनन्तास्मितालक्षणम् ।
ज्योतिष्मती विशोका वा तत्र विशारदी स्थितिः ॥ ७७ ॥

हृदि हृदयपुण्डरीके मनसः धारणात् भास्वरं प्रकाशशीलं आकाशशीलं आकाशकल्पम् अनन्तास्मितालक्षणं बुद्धिसत्त्वं योगी अधिगच्छेत्, तत्र विशारदी प्रकृष्टा स्थितिर्विशोका वा ज्योतिष्मतीत्युच्यते॥ ७७ ॥

प्रविश्य हृदयाकाशे विश्वक् प्रसार्य्य चास्मिताम् ।
अनन्तव्योमवच्चास्मि सिध्येत् सा इति भावनात् ।
प्रवृत्तिः सा विशोकेति चित्तस्थितिनिबन्धनी ॥ ७८ ॥

विशोकायाः साधनोपायमाह, हार्दाकाशे चेतसा प्रविश्य, अस्मितां च विश्वतः प्रसार्य्य, अनन्तव्योमवदहमस्मीति भावनातः सा सिध्येत्, सा विशोका प्रवृत्तिरपि चित्तस्थितिनिबन्धनी ॥ ७८ ॥

विशोका विषयवती प्रवृत्त्यालोकसंज्ञिका ।
स्वस्वरूपस्थितिमती तथाऽपराऽस्मितामात्रा ॥ ७९ ॥

विषयवती चास्मितामात्रा च द्वयी विशोका, तत्र विषयवती विशोका स्वालोकरूपिणी, तथा प्रवृत्त्यालोकाख्यया भुवनज्ञानं सूक्ष्मव्यवहितविप्रकृष्टविषयविज्ञानञ्च। विषयग्रहणनिवृत्तौ अस्मितामात्रे स्वस्वरूपे स्थितिशीला या विशोका सा अस्मितामात्रेति उच्यते ॥ ७९ ॥

वीतरागविषयं वा चित्तम् ३७ ।

चित्तस्य वीतरागत्वमवधार्य च भावयेत् ।
निःसङ्कल्पं निरिच्छञ्च स्वचित्तं स्थितयेऽथवा ॥ ८० ॥

स्थितेरुपायान्तरमाह, चित्तस्य वीतरागत्वं किम्भूतं तदवधार्य स्वचित्तं निःसङ्कल्पं निरिच्छं यथा तथा भावयेत्। ततोऽपि स्थितिर्भवेत् ॥ ८० ॥

स्वप्ननिद्राज्ञानालम्बनं वा ३८ ।

अन्तःप्रज्ञं बहीरुद्धं स्वप्ने ज्ञानञ्च यद्भवेत् ।
सर्वसंरुद्धनिद्रायां ज्ञानं यत् स्थितये च वा ।
ध्यायेदालम्बनं कृत्वा केषाञ्चित् सिद्धिदञ्च तत् ॥ ८१ ॥

उपायान्तरमाह—स्वप्ने अन्तःप्रज्ञं बहीरुद्धं विज्ञानं कल्पितविषयस्मरणात्मकं भवेत्, अन्तर्बाह्यरुद्धा निद्रा। तदाऽपि अस्फुटं रुद्धचित्तेन्द्रियविषयकं ज्ञानं भवेत्, तत्तज्-ज्ञानम् आलम्बनं कृत्वा ध्यायेत्। एतच्च केषाञ्चिदधिकारिणां सिद्धिदं स्थितिहेतुरित्यर्थः ॥ ८१ ॥

यथाऽभिमतध्यानाद्वा ३९ ।

यदेवाभिमतं ध्येयं ध्यायेद्वा स्थितये हि तत् ।
तत्र लब्धस्थितेश्चित्तं तत्त्वेषु लभतेऽपि च ॥ ८२ ॥

स्पष्टम् ॥ ८२ ॥

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ४० ।

परे सूक्ष्मे महत्त्वे च परमे विनिवेशनात् ।
स्थितिप्राप्तस्य चित्तस्य वशीकारः प्रसिध्यति ॥ ८३ ॥

परे सूक्ष्मे रूपादिपरमाणौ तथा परे महत्त्वे अस्मितामात्रादौ विनिवेशनात् स्थितिप्राप्तस्य चित्तस्य वशीकारः सिध्यति ॥ ८३ ॥

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थ-तदञ्जनता-समापत्तिः ४१ ।

यथोपरञ्जकाद्-द्रव्याद्-विशुद्धः स्फटिको मणिः ।
तत्तद्रूपोपरक्तः सन् तत्तद्रूपेण भासते ॥
तथाऽस्मितेन्द्रियार्थेषु तत्स्थत्वं तत्स्वरूपता ।
चित्तस्योक्ता समापत्तिः क्षीणवृत्तेः प्रजायते ॥ ८४ ॥

वशीकृतस्य चित्तस्य समापत्तिमाह—उपरञ्जकात् जपाकुसुमादिद्रव्यात् यथा विशुद्धः स्फ-

टिको मणिः उपरक्तः सन् उपरञ्जकद्रव्याकारेण भासते, तथा अस्मितेन्द्रियार्थेषु ग्रहीतृग्रहण-ग्राह्येषु इत्यर्थः, तत्स्थत्वं तत्स्वरूपता, अस्मितादिभिः उपरक्तता इत्यर्थः, चित्तस्य समापत्तिरुक्ता, यथा विशुद्ध एव मणिरुपरक्तो भवति तथा क्षीणवृत्ति चित्तसत्त्वमेव ध्येयसमापन्नं भवति। क्षीणवृत्तिता एकाग्रभूमिरूपा वशीकृता स्थितिप्राप्ता वा अवस्था ॥ ८४ ॥

सर्वदा तन्मयी प्रज्ञा ध्येयरूपप्रभासिका।
समाधश्चेत-आभोगः समापत्तिर्मताऽपि वा ॥ ८५ ॥

समापत्तेः स्वालक्षण्यमाह, ध्येयस्वरूपप्रभासिका या सर्वदा तन्मयी ध्येयमयी प्रज्ञा सा समापत्तिः, अपि वा समाधेयेश्चित्तस्य आभोगः ध्येयसंस्था सा समापत्तिः ॥ ८६ ॥

शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः ४२।

शाब्दं पदं तद्भिन्नश्च तस्यार्थो ज्ञानमेतयोः।
विभिन्नं स्याद् विकल्पेन प्रतिभासो ह्यभिन्नवत् ॥ ८६ ॥

समापत्तिभेदं व्याचिख्यासुरादौ शब्दादीनां सम्बन्धं विवृणोति। यत् शब्दमयं पदं तस्य अर्थस्तस्माद्-भिन्नः, शब्दार्थयोर्ज्ञानञ्च मनसि स्थितं शब्दार्थाभ्यां भिन्नम्, विभिन्नानां शब्दार्थज्ञानानां विकल्पेन एकत्वभानम्। विभिन्नानां पदार्थानां व्यावहारिकी एकत्वख्यातिरूपा विकल्पवृत्तिर्भवतीति ॥ ८६ ॥

तद्विकल्पेन संकीर्णा सम्प्रज्ञा वाङ्मयी च या।
सवितर्का समापत्तिः स्थूलार्थविषया मता ॥ ८७ ॥

या तद्विकल्पेन शब्दार्थज्ञानविकल्पेन सङ्कीर्णा अत एव वाङ्मयी सम्प्रज्ञा स्थूलार्थ-विषया स्थूलविषयालम्बना समापत्तिः सा सवितर्का मता ॥ ८७ ॥

स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ४३।

शब्दसङ्केतविज्ञानाद् ज्ञानाच्छब्दानुमानजात्।
वैकल्पिकी स्मृतिर्या स्यात् तस्या अपगमेऽपि या ॥
अर्थरूपोपरक्ता सा त्यक्त्वेव ग्रहणात्मकम्।
स्थूलार्था स्यात् समापत्तिर्निर्वितर्का ह्यवाङ्मयी ॥ ८८ ॥

निर्वितर्कामाह—शब्दसङ्केतविज्ञानाच्च श्रुतानुमानजाद् ज्ञानाच्च या वैकल्पिकी शब्दार्थप्रत्ययानामितरेतराध्यासरूपा स्मृतिः स्यात् तस्याः स्मृत्या अपगमे परिशुद्धौ इत्यर्थः शब्दादीनां प्रविभागं निश्चित्य, शब्दहीनार्थविज्ञानसामर्थ्यादिति भावः, अर्थरूपोपरक्ता अर्थमात्रप्रतिष्ठा, ग्रहणात्मकं विज्ञानरूपं त्यक्त्वा इव, अहं जानामीति विस्मृत्य इत्यर्थः, या अवाङ्मयी अशाब्दचिन्ताऽऽत्मिका स्थूलविषया समापत्तिः स्यात् सा हि निर्वितर्का ॥ ८८ ॥

स्थूलाः स्युः पञ्चभूतानि घटाद्यैर्भौतिकैः सह।
शब्देन चिन्तनं पदार्थव्याकृतिस्त्विति ॥ ८९ ॥

स्थूलाः पदार्थाः पञ्च भूतानि क्षित्यादीनि गन्धादिलक्षणानि सह भौतिकैः, भौतिकानि च घटादीनि विशेषगन्धाद्याश्रयाणि, तर्कः शब्देन शब्दसहायेन, चिन्तनम् अयं घट इयं क्षितिः सर्वं दृश्यं तु कार्यमित्यादिरूपं भावनमिति भावः, वितर्के शब्दार्थप्रत्ययाः इतरेतराध्यस्ताः प्रतीयन्ते यथा अयं घट इत्यत्र यो घटशब्दः यद्-घटद्रव्यं यच्च घटज्ञानं तत्रयम् अविविक्तं प्रतीयते, इति तु वितर्कादि-पदार्थव्याकृतिः ॥ ८९ ॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ४४।

विचारो ध्यायिनां युक्तिः सूक्ष्मार्थाधिगमो यतः।
ततः स्याद्-वाङ्मयी प्रज्ञा सविचारा हि सूक्ष्मिका ॥ ९० ॥

सविचारां समापत्तिं व्याकरोति, विचारो ध्यायिनां युक्तिः न्यायानुसारिणी चिन्ता, यया ध्यानानुगतया युक्त्या सूक्ष्मार्थानां तन्मात्रादीनाम् अधिगमो भवेदिति शेषः, ततो विचारात्, सूक्ष्मिका सूक्ष्मविषया वाङ्मयी शब्दानुविद्धा प्रज्ञा स्यात्, इदं रूपतन्मात्रमेवम् अधिगन्तव्यम् अस्मात् दुःखदं हेयञ्चेत्यादिरूपा प्रज्ञा सविचारेति ज्ञातव्या ॥ ९० ॥

निर्वितर्केव चाशब्दा निर्विचारा समीरिता ।
सूक्ष्मार्थमात्रनिर्भासा विकल्पविहीना तथा ॥ ९१ ॥

निर्विचारामाह, निर्वितर्केव अशब्दा अत एव शब्दादिविकल्पहीना समापत्तिः निर्विचारा, सा तु सूक्ष्मार्थमात्रनिर्भासा, ननु समाधिः ध्येयामात्रनिर्भासः स्वरूपशून्य इव इति चेत् तदा सवितर्का सविचारा च समापत्तिर्न समाधिः स्यादिति, सत्यम्, समापत्तिर्न समाधिमात्रा सा च समाधिजप्रज्ञाभेदः, समाधिनाऽधिगता प्रज्ञा यदा शब्दादिसहाया चेतस्युपावर्तते प्रतितिष्ठति च तदा सा प्रज्ञा सवितर्का सविचारा, वा भवति, यदा तु सा अर्थमात्रनिर्भासा वाचकहीना तदा निर्वितर्का निर्विचारा वा स्यात्, तद्यथा—रूपं दुःखदं रूपतन्मात्रं च दुःखदम् इत्यत्र तत्त्वसाक्षात्कारपूर्वकं समापन्नं चित्तम् आद्ययोर्यथाक्रमं भवति, अन्त्ययोश्च रूपे दुःखमात्रमेव संवेद्यते वाक्यसहायचिन्ताहीनेन चेतसा इति ॥ ९१ ॥

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ४५ ।

तन्मात्राणि च भूतानां सूक्ष्माणामस्मिता तथा ।
अहंकारस्य बुद्धिश्च बुद्धेश्चालिङ्गमेव हि ।
सूक्ष्मो विषय आख्यातः न सूक्ष्मं प्रकृतेः परम् ॥ ९२ ॥

सूक्ष्मविषया सविचारा निर्विचारा चेति सूक्ष्मविषयत्वमाह, भूतानां तन्मात्राणि तन्मात्राणा-मस्मिताख्यः अहंकारः, तस्य च लिङ्गमात्रं बुद्धितत्त्वं, तस्य पुनः अलिङ्गं प्रधानं सूक्ष्मो विषयः, प्रकृतेः परं सूक्ष्मं दृश्यं नास्ति, प्रकृतेः परः सूक्ष्मतरोऽपि पुरुषः न दृश्यः किन्तु द्रष्टा विजातीय इति ॥ ९२ ॥

लिङ्गातीते च तत्रैव ह्यव्यक्ते व्यक्तकारणे ।
समाप्यते समापत्ति-र्न च वै भूतसूक्ष्मके ॥ ९३ ॥

विचारानुगते समापत्ती कुत्र पर्यवसीयेत इत्याह, लिङ्गातीते अव्यक्ते व्यक्तकारणे प्रधान एव सविचारा निर्विचारा च समापत्तिः पर्यवसिता भवति न तु सूक्ष्मभूते, अव्यक्तन्तु सविचाराया विषयः, न निर्विचारायाः अनिर्भास्यत्वात् तत्स्वरूपस्येति ज्ञेयम् ॥ ९३ ॥

ता एव सबीजः समाधिः ४६ ।

निर्विचारवैशारद्येऽध्यात्मप्रसादः ४७ ।

सबीजास्ताश्चतस्रः स्यु-र्निर्विचारस्य तत्र च ।
स्वच्छस्थितिप्रवाहात् स्यादध्यात्मानां प्रसन्नता ।
यस्या जायेत सत्यार्था स्फुटा प्रज्ञा तथाऽक्रमा ॥ ९४ ॥

ताश्चतस्रः समापत्तयः सबीजाः बहिर्वस्तुबीजाः समाधयः, तत्र निर्विचारस्य समाधेयः स्वच्छो व्युत्थानेन अमलिनः स्थितिप्रवाहस्तस्मादध्यात्मानां करणानां बुद्धेरित्यर्थः, प्रसन्नता भवेत्, यस्याः प्रसन्नतायाः सत्यविषया अक्रमा युगपत् सर्वभासिका इत्यर्थः, स्फुटा प्रज्ञा जायते ॥ ९४ ॥

ऋतम्भरा तत्र प्रज्ञा ४८ ।

श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ४९ ।

श्रुतानुमानजातेव सामान्यविषया न सा ।

ऋतम्भरेति सम्प्रज्ञा विशेषं ख्यापयेत् परम् ॥ ९५ ॥

सा प्रज्ञा ऋतम्भरासंज्ञा परम् अन्त्यं विशेषं वैलक्षण्यं ख्यापयेत्, न तु सा सम्प्रज्ञा श्रुतानुमानजाता इव सामान्यविषया, ऋतं सत्यं बिभर्त्तीति ऋतम्भरा ॥ ९५ ॥

तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ५० ।

विशेषतत्त्वविज्ञानं ख्यापयेद्-भोगहेयताम् ।
ततो निवृत्तिसंस्कारात् क्षयो व्युत्थानसंस्कृतेः ॥ ९६ ॥

विशेषं तत्त्वज्ञानं भोगस्य हेयतां ख्यापयेत् चेतसि प्रख्यातां कुर्यादित्यर्थः, ततः भोगहेयताख्यातौ सिद्धायां ज्ञानवैराग्यजनिताः निवृत्तिसंस्काराः जायेरन्, तेभ्यो व्युत्थानसंस्काराणां क्षयो भवति ॥ ९६ ॥

क्षीयमाणे तथा क्लिष्टे संस्कारे तस्य वृत्तयः ।
निरुद्धाः स्युः पुनस्तस्मात् समाधिरुपतिष्ठते ॥ ९७ ॥
एवं प्रज्ञाजसंस्कारः क्षयेद्-व्युत्थानसंस्कृतिम् ।
चरितार्थं मनः कुर्यात् स्वकार्याच्चावसादयेत् ॥ ९८ ॥

क्लिष्टे संस्कारे व्युत्थानसंस्कार इत्यर्थः, क्षीयमाण इति, यथा यथा व्युत्थानसंस्काराः क्षीणाः भवन्ति तथा तथा व्युत्थानप्रत्ययानां निरोधो भवति, ततः पुनः समाधिरुपतिष्ठते समाध्यवस्थाया विवृद्धिर्जायत इत्यर्थः, समाधेः पुनः प्रज्ञाः, प्रज्ञाभ्यः पुनः संस्काराः, एवं प्रज्ञाजसंस्कारो व्युत्थानसंस्कारं क्षयेत्, प्रज्ञासंस्कारस्य वर्द्धमानता व्युत्थानसंस्कारस्य च क्षीयमाणता भवतीत्यर्थः, किञ्च स प्रज्ञासंस्कारः चित्तं स्वकार्यादवसादयेत् न प्रवर्त्तयेत्, चित्तं यथा चरितार्थं तथा च कुर्यात, निष्पन्नख्यातिता भुक्तभोगता च चित्तस्य चरितार्थता, प्रज्ञायाः काष्ठा विवेकख्यातिः ततश्च भोगनिवृत्तिः, अथ ख्यातिसंस्कारः चेतसि विवेकख्याति प्रतिष्ठाप्य भोगञ्च समाप्य चेतसः चरितार्थतां सम्पादयेत् ॥ ९७ ॥ ९८ ॥

तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ५१ ।

पुरुषख्यातिरूपा या प्रज्ञा तस्याश्च संस्कृतिः ।
निरोधः स्यात्तयोः सम्यग् वैराग्येण परेण हि ॥ ९९ ॥

कथं व्युत्थानप्रत्यया व्युत्थानसंस्काराश्च प्रज्ञया निरुद्धा भवेयुः तद्दर्शितम्, व्युत्थानरोधेऽपि प्रज्ञा विवेकख्यातिरूपा तत्संस्काराश्च चेतसि अवतिष्ठेते, अथ तयोः निरोधोपायमाह, पुरुषख्यातिरूपा या प्रज्ञा तस्याः प्रज्ञाया अपि यः संस्कारः तयोः प्रज्ञासंस्कारयोः परेण वैराग्येण निरोधः स्यात्, परं वैराग्यं प्रान्तभूमिविवेकख्यातिरूपम् ॥ ९९ ॥

निरोधः पुरुषख्यातिं समाधिर्निरुणद्धि हि ।
निरोधस्य च संस्कारः तत्र प्रज्ञाजसंस्कृतिम् ॥ १०० ॥
पुंसां केवलिनां चैवं समाधिः सर्वरोधतः ।
निर्बीजोऽविषयः स्याद्-यः शान्तिश्चित्तस्य शाश्वती ॥ १०१ ॥

इति सांख्ययोगाचार्य-श्रीहरिहरानन्द-आरण्य-विरचितायां
योगकारिकायां प्रथमः पादः ।

कथं तन्निरोधस्तद्दर्शयति, निरोधः समाधिः परवैराग्यमूलकः पुरुषख्यातिं पुरुषसम्बन्धीयां प्रज्ञां निरुणद्धि, निरोधस्य च संस्कारः ख्यातिसंस्कारं निरुणद्धि, एवं सर्वनिरोधात् निर्विषयः निर्बीजः समाधिरसम्प्रज्ञातः स्यात् केवलिपुरुषाणाम्, स निर्बीजः चित्तस्य शाश्वती शान्तिः प्रलयाप्तिरित्यर्थः, इति ॥ १०० ॥ १०१ ॥

इति योगकारिकाटीकायां सरलायां प्रथमः पादः ।

# अथ द्वितीयः पादः ।

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः १ ।

समाधिभावनार्थः क्लेशतनूकरणार्थश्च २ ।

## अथ योगकारिका ।

उद्दिष्टः प्रथमे योगो यः समाहितचेतसः ।

युज्येत व्युत्थितं चित्तं यथा तच्चात्र भाषितम् ॥ १ ॥

## अथ सरला ।

प्रथमे पादे समाहितस्य चित्तस्य योगः समाधिभेदादिः इत्यर्थः उद्दिष्टः, अत्र अस्मिन् पादे व्युत्थितं चेतो यथा योगयुक्तं भवेत तद्-विवृतम् ॥ १ ॥

तपः स्वाध्याय ईशे च प्रणिधानं क्रियायोगः ।

भावयेत् स समाधिञ्च तनूकुर्यात्तथा क्लेशान् ॥ २ ॥

क्रियायोगः योगमुद्दिश्य कर्माचरणमित्यर्थः, ये अनुपशान्तचित्ताः अपि योगेच्छवः तेषां धारणादीनामन्तरङ्गाणां सदैव अभ्यासासामर्थ्याद् बाह्यकर्मत्यागासामर्थ्याच्च कर्मरूपः योगः योगयुक्तञ्च कर्म साधनीयम्। तप-आदिः त्रिविधः क्रियायोगः, स समाधिं भावयेद् आनयेत् क्लेशान् च तनूकुर्यात् शातयेदित्यर्थः ॥ २ ॥

चित्तप्रसादकारिणः प्राणायामासनादयः ।

तदभ्यासभवस्य च दुःखस्य सहनं तपः ॥ ३ ॥

तप आह—सुखत्यागः दुःखसहनं वा तपसो लक्षणम्, यथोक्तं "सुखत्यागे तपो योगः सर्वत्यागे समापनम्" इति, न तु योगेच्छुभि मुधा दुःखसहनं कार्यम्, यानि तु प्राणायामासनादीनि चित्तप्रसादकारीणि कर्माणि तेषामभ्यासजातस्य दुःखस्य सहनमेव योगिनां तपः, यथोक्तं "तपो न प्राणायामात् ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्य" इति, बालानां कायक्लेशवैधुर्यं न योगाय कल्पते, श्रूयते च "न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः" इति॥३॥

प्रणवादिपवित्राणां स्वाध्यायो जप उच्यते ।

अथवा मोक्षशास्त्रस्य सदैवाध्ययनं हि सः ॥ ४ ॥

प्रणवादि-पवित्राणां मन्त्राणां—न च कुमन्त्राणां जपः, सदैव मोक्षशास्त्राध्ययनं वा स्वाध्यायः वाक्कर्मयोगः ॥ ४ ॥

ईश्वरेणैव हृत्स्थेन प्रेरितस्य च कर्म मे ।

प्रणिधानं सदा कर्म-योगिनामिति भावनम् ॥ ५ ॥

तपः शरीरस्य स्थैर्यप्रयत्नरूपः कर्मयोगः, स्वाध्यायो वाक्कर्मयोगः, ईश्वरप्रणिधानं पुन मानसः कर्मयोगः, यत्र यत्र मनो गच्छेत् कर्मणि, तत्र तत्र ईश्वरप्रणिधानं कार्यमिति सर्वं कम व्याप्नोति भावनारूपं तत् प्रणिधानम् ।

ईश्वरेण हृत्स्थेन प्रेरितस्य इव न तु वस्तुतः प्रेरितस्य इत्यर्थः मे सर्वं कर्म इति भावनं कर्मयोगिनां, कर्म कुर्वतामपि योगेच्छूनां, प्रणिधानम् ईश्वरप्रणिधानम्, यथोक्तं "कामतोऽकामतो वापि यत् करोमि शुभाशुभम्, तत्सर्वं त्वयि सन्यस्तं त्वत् प्रयुक्तः करोम्यहम्" इति ॥ ईश्वरप्रणिधियुक्तेन फलाकाङ्क्षाशून्येन चेतसा क्रियायोगिनां कर्म कार्यम्, ततः कर्म निवृत्तिः स्यात्, अन्तरङ्गसाधने सामर्थ्यञ्च प्रजायेत, अथ निवृत्तबाह्यकर्मा योगी प्रथमपा-

दोक्ताद्-भावनाप्रधानात् ईश्वरप्रणिधानात् स्थितिं लभेत कर्मार्पणरूपं भावनारूपञ्चेति द्विविधम् ईश्वरप्रणिधानम् इत्यवगन्तव्यम् ॥ ५ ॥

अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः ३ ।

अविद्या चास्मिता रागो द्वेषश्चाभिनिवेशकः ।
एते विपर्ययाः पञ्च क्लेशा दुःखस्य हेतवः ॥ ६ ॥

दुःखहेतवः विपर्ययवृत्तिभेदा एव पञ्च अविद्यादयः क्लेशाः ये क्रियायोगेन तनवो भवेयुरित्यर्थः ॥ ६ ॥

अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ४ ।

प्रसुप्त-तनु-विच्छिन्ना उदारा ये ह्यवस्थिताः ।
उत्तरेषां तथाऽविद्या क्षेत्रं तेषामिति स्मृता ॥ ७ ॥

प्रसुप्ता तनुः विच्छिन्ना उदारा चेति क्लेशानाम् अवस्था, उत्तरेषामस्मिताऽऽदीनाञ्च अविद्या क्षेत्रम् प्रसवभूमिः ॥ ७ ॥

प्रसुप्तिर्बीजभावः स्यात् शक्तिरूपेण या स्थितिः ।
सा च संसारिणां सुप्तिर्वासना कर्मसंस्कृतिः ॥ ८ ॥

तत्र प्रसुप्तावस्थामाह, प्रसुप्तिः बीजभावः स्यात्, सा च शक्तिरूपेण स्थितिः, सा हि वासनारूपा च कर्माशयरूपा च क्लेशावस्था संसारिणां सत्त्वानां प्रसुप्तिर्न तु क्षीणक्लेशानां योगिनामित्यर्थः ॥ ८ ॥

प्रसुप्तिः कर्महीनानां प्रसंख्यानवतां च या ।
दग्धबीजत्वमापत्तिः साऽवस्थोक्ता हि पञ्चमी ॥ ९ ॥

योगिनां प्रसंख्यानवतां कर्माशयशून्यानां क्लेशप्रसुप्तिः दग्धबीजतापत्तिः, यथा दग्धं बीजम् अप्रसवधर्म तथा स्थिता अपि क्लेशा यदा क्लेशसन्तानस्य हेतवो न भवन्ति तदा सा क्लेशावस्था दग्धबीजकल्पा इत्युच्यते, सा च पञ्चमी क्लेशावस्थेति वक्तव्या ॥ ९ ॥

क्षीणाश्च कर्मयोगेन क्लेशास्तनव ईरिताः ।
योगाङ्गाभ्यासिनां सा हि क्लेशावस्था प्रकीर्त्तिता ॥ १० ॥

क्रियायोगेन क्षीणाः क्लेशास्तनवो भवन्ति, योगाङ्गाभ्यासिषु क्लेशस्य तन्ववस्था ॥१०॥

यदा विच्छिद्य विच्छिद्य ह्यतिभोगादिकारणात् ।
क्लेशा उद्यन्ति साऽवस्था विच्छिन्नेति प्रकल्पिता ॥ ११ ॥

अतिभोगाद् आलम्बनाभावाद्वा अभिभूताः क्लेशा यदा विच्छिद्य विच्छिद्य उद्यन्ति यदा सा अवस्था विच्छिन्नेति प्रकल्पिता, यथा रागकाले द्वेषः विच्छिन्नावस्थः ॥ ११ ॥

विषये लब्धवृत्तिश्च क्लेशावस्था मतोदारा ॥ १२ ॥

रागकाले राग उदारावस्थाः इत्यर्थः ॥ १२ ॥

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ५ ।

अनित्याशुचिदुःखेषु तथाऽनात्मसु वस्तुषु ।
नित्य-पूत-सुखात्मत्वधीरविद्या प्रकीर्त्तिता ॥ १३ ॥

अनित्येषु वस्तुषु नित्यधीः, अशुचिषु शुचिधीः, दुःखेषु सुखधीः, अनात्मसु च आत्मत्वधीरित्येवं विपरीतं ज्ञानमविद्या ॥ १३ ॥

ते चास्मितादयस्तस्या-श्चतुर्भेदा विपर्ययाः ।
लक्षणेषु चतुर्ष्वेव व्युत्क्रमेण समन्विताः ॥ १४ ॥

ते अस्मितादयो विपर्ययस्य चत्वारः भेदाः तस्या अविद्यायाः चतुर्षु लक्षणेषु व्युत्क्रमेण विपरीतक्रमेण समन्विता युक्ताः, तत्र अस्मितया अनात्मनि आत्मधीः, रागेण अशुचौ पुत्र-कलत्रादौ शुचिधीः, द्वेषेण द्वेषजनिते तापे सुखधीः, अभिनिवेशेन अनित्ये देहादौ नित्यधीः ॥ १४

विषयेषु ह्यनित्येषु दुःखप्रदेषु सर्वदा ।
अशुचौ पुत्रदेहादौ स्वशरीरे ह्यनात्मनि ।
ज्ञेया विपर्ययं ज्ञानमविद्या वस्तुरूपिणी ॥ १५ ॥

अविद्यायाः सोदाहरणं विवरणं विषयेष्वित्यादौ, अविद्या न अवस्तु ज्ञानत्वात्, न हि चित्तवृत्तिरवस्तु, यथोक्तं "यथा नामित्रो न मित्राभावो न मित्रमात्रं किन्तु तद्विरुद्धः सपत्न इति, एवमविद्या न प्रमाणं न प्रमाणाभावः किन्तु विद्याविपरीतं ज्ञानान्तरमविद्या" इति ॥१५॥

दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ६ ।

एकस्वरूपताख्यातिरात्मबुद्ध्योर्मताऽस्मिता ।
करणेष्वात्मताख्यातिर्द्रष्टृश्रोत्रादिकारणम् ॥ १६ ॥

आत्मनो बुद्धेश्च एकताख्यातिरूपः प्रत्ययः अस्मिता, सा च अहं द्रष्टेति अहं श्रोतेत्यादि करणेष्वात्मताख्यातिरूपस्य विपर्यस्तप्रत्ययस्य कारणम्, तादृशा विपर्यस्तप्रत्यया एव अस्मिताभेदा इत्यर्थः ॥ १६ ॥

सुखानुशयी रागः ७ ।

अनुभूतसुखस्यैव सुखस्मरणपूर्विका ।
गर्द्धो लोभश्च तृष्णेति रागोऽवस्था हि चेतसः ॥ १७ ॥

सुखानुभवात् सुखस्मृतिः तत्पूर्विका चेतसः अवस्था रागः, स च रागः गर्द्धः लोभः तृष्णा चेति त्रिरूपः ॥ १७ ॥

गर्द्ध इन्द्रियलौल्यं स्यादभावानुभवः सदा ।
तृष्णा च सुखभोग्यानां लोभो ज्ञेयस्तथाऽर्थिता ॥ १८ ॥

गर्द्ध इन्द्रियाणामवशानां लौल्यं विषयेषु लोलीभावः, तृष्णा च सुखानां भोग्यानां सदा अभावानुभवः यथा पिपासार्त्तस्य पानीयाभावानुभवः, लोभश्च अर्थिता विषयस्पृहा, निःसङ्गस्य पुंस इन्द्रियैः सह सङ्गप्रत्ययजननात् रागो विपर्ययवृत्तिभेदः ॥ १८ ॥

दुःखानुशयी द्वेषः ८ ।

दुःखाभिज्ञस्य चावस्था तस्य चानुस्मृतेर्भवा ।
जिघांसा प्रतिघा मन्युः क्रोधो द्वेष इतीरितः ॥ १९ ॥

दुःखानुभवात् दुःखवासना, ततः तदनुस्मृतेर्जाता चित्तावस्था द्वेषः, स च जिघांसा प्रतिघो मन्युः क्रोधश्चेति चतुर्विधः, रागवत् सोऽपि विपर्ययभेदः स्यात्, जिघांसा हन्तुमिच्छा, प्रतिहन्तुमुद्वेजयतीति प्रतिघः, मन्युर्मानसः क्रोधः ॥ १९ ॥

स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ९ ।

आत्मभावप्रणाशस्य शङ्कया जनितं भयम् ।
क्लेशो योऽभिनिवेशः स्यात् प्रवहेद् वासनावशात् ।
अयोगिविदुषश्चैव प्रसिद्धोऽविदुषोऽपि सः ॥ २० ॥

आत्मभावप्रणाशस्य शङ्कया जनितं, मा न भूवं भूयासमित्याशिषः विपर्ययसम्भवे, इत्यर्थः वासनावशात् स्वतः प्रवाहि, भयं त्रासः, प्राधान्यात् मरणत्रासः, अभिनिवेशः क्लेशः । अयोगिनः विदुषः न सम्प्रज्ञातवतः विदुष इत्यर्थः, तथा अविदुषोऽपि यः क्लेशः प्रसिद्धो रूढः । अमरस्य पुंसः मरताख्यातिरत्र विपर्ययः ॥ २० ॥

ते प्रतिप्रसवहेयाः सूक्ष्माः १० ।

**ते दग्धबीजकल्पाः स्युः सूक्ष्माः क्लेशाश्च चित्तस्य ।**
**विवेकचरितार्थस्य प्रतिसर्गेण हातव्याः ॥ २१ ॥**

ते अविद्यादयः क्लेशा दग्धबीजकल्पाः सूक्ष्मा इति स्युः, सूक्ष्माः क्लेशाः चित्तस्य प्रतिसर्गेण प्रतिलोमपरिणामेन प्रलयेन इत्यर्थः । हातव्याः, विवेकेन चरितो भोगापवर्गरूपोऽर्थो येन चित्तेन तदेव चित्तं प्रलीयते, विवेकेऽपि बुद्धेः सद्भावात् तदा क्लेशानां सूक्ष्मावस्था ॥ २१ ॥

ध्यानहेयास्तद्वृत्तयः ११ ।

**प्रसंख्यानेन हातव्या ध्यानेन वृत्तयः स्थूलाः ।**
**यावत् सूक्ष्मीकृता दग्ध-बीजकल्पाः प्रजायेरन् ॥ २२ ॥**

क्लेशानां स्थूला वृत्तयः याः क्लेशसन्तति जनयन्ति ताः प्रसंख्यानेन ध्यानेन विवेकख्यात्या, हातव्या, यावत् सूक्ष्मीभूता दग्धबीजकल्पाः प्रजायेरन् ॥ २२ ॥

क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः १२ ।

**सर्वा चेष्टा भवेत् कर्म हृषीकाणाञ्च चित्तस्य ।**
**कर्माशयस्तु संस्कारो योऽनुभूतेर्भवस्तस्याः ॥ २३ ॥**

इन्द्रियाणां चित्तस्य च स्वेच्छाधीना चेष्टा कर्म पुरुषकाररूपम् । यद् वयं कर्तुं नवाकर्तुं शक्नुयाम तत् कर्म पुरुषकाररूपं मुख्यमुत्कर्षापकर्षकरम् । यदा अवशैरस्माभिश्चेष्टते तदा तत् कर्म पूर्वपूर्व-कर्माधीनत्वाच्च उत्कर्षापकर्षकरं किन्तु सदृशचेष्टासन्तानकरमेव । तदेतस्य द्विविधस्य कर्मणः अनुभवसञ्जातः संस्कारः कर्माशय इत्युच्यते ॥ २३ ॥

**कर्मणां क्लेशपूर्वाणां दृष्टेऽदृष्टे च वाऽऽशयाः ।**
**जन्मन्येव विपच्येरन् वेदनीयास्ततस्ततः ॥ २४ ॥**

क्लेशपूर्वाणां क्लेशाधिकृतानां न विद्याधिकृतानामित्यर्थः कर्मणाम् आशया दृष्टे जन्मनि अदृष्टे वा जन्मनि विपच्येरन्, तस्मात् ते आशयाः ततस्ततः दृष्टेऽदृष्टे वा जन्मनि वेदनीया भवन्ति, प्रसंख्यानवतां कर्माशया नोत्पद्यन्ते तस्माद् नास्ति तेषां कर्मविपाकः ॥ २४ ॥

सति मूले तद्विपाको जात्यायुर्भोगाः १३ ।

**देही जातिस्तथायुश्च भोगो दुःखसुखात्मकः ।**
**क्लिष्टकर्माशयानाञ्च त्रिविपाका मता अमी ॥ २५ ॥**

कर्माशयस्य विपाकानाह—देहरूपा जातिः, तथा च आयुर्देहस्थितिकालः, तथा दुःखसुखरूपभोग इत्यमी क्लेशमूलानां कर्माशयानां त्रयो विपाकाः ॥ २६ ॥

ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् १४ ।

**पुण्यकर्माशयात् सौख्यमपुण्याद् दुःखवेदना ।**
**पुण्यं धृतिः क्षमाद्यञ्च तस्यापुण्यं विरुद्धकम् ॥ २६ ॥**

कर्मसु यत् पुण्यं कर्म तस्याशयात् सुखं तथा अपुण्यकर्माशयाद्-दुःखं वेदनम्, धृतिः क्षमा दमोऽस्तेयं शौचमहिंसा इत्याद्यं कर्म पुण्यं, तद्विपरीतमपुण्यम् ॥ २६ ॥

परिणामताप-संस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः १५ ।

**हेयञ्च हेयहेतुश्च हानञ्च पारमार्थिकम् ।**
**हानोपाय इति व्यूहाः सम्यक् स्यात् तत्त्वदर्शनम् ॥ २७ ॥**

क्लेशान् व्याकृत्य क्लेशप्रहाणोपायं व्याचिख्यासुः पारमार्थिकं चतुर्व्यूहं व्याकरोति, हेयं हेयहेतुः पारमार्थिकं हानम् एकान्ततोऽत्यन्ततो दुःखहानमित्यर्थः, तथा हानोपाय इति

चत्वारो व्यूहा मोक्षशास्त्रस्य, रोगो रोगहेतुरारोग्यं भैषज्यमिति चत्वारो यथा चिकित्साशास्त्रस्य व्यूहास्तद्वत्, तेषाञ्च विज्ञानं सम्यक् तत्त्वदर्शनम् ॥ २७ ॥

रागे दुःखं परीणामाद् द्वेषे तापोऽनुभूयते ।
संस्कारे भाविदुःखञ्च जननाद् द्वेषरागयोः ॥
सुखादिगुणवृत्तानां च विरुद्धस्वभावतः ।
अवश्यंभावि दुःखन्तत् दुखं सर्वं विवेकिनाम् ॥ २८ ॥

तत्र हेयं तावन्निरूपयितुमारभते, रागे सति स्वचित्तस्य विषयस्य च परिणामाद् दुःखमुपतिष्ठते, प्रियस्याप्राप्तिरप्रियस्य च प्राप्तिरेव दुःखकारणम्, स्वचित्तस्य परिणामाद् अप्रियो भवति सुखदोऽपि विषयः, विषयस्य च परिणामात् प्रियवियोगजं दुःखम्, अतः सुखानुशयी अपि रागो दुःखाय भवेत्, द्वेषे तापदुःखम् अनुभूयमानं भवति, रागद्वेषयोः संस्कारात् पुनः रागद्वेषोत्पादस्ततो भाविदुःखं दुःखसन्ततिरित्यर्थः, एवं विषयस्य परिणामतापसंस्कारदुःखत्वम्, दृश्यस्वभावोऽयमेव दुःखं यतः सुखदुःखमोहरूपाणां गुणवृत्तीनाम् अभिभाव्याभिभावकस्वभावाद् दुःखमवश्यम्भावि, तत् तस्माद् विवेकिनां सर्वमेव दुःखम्, भोगसुखमपि तान् दुःखयति ॥ २८ ॥

हेयं दुःखमनागतम् १६ ।

अक्षिपात्रमिव स्वान्तं प्रज्ञया कोमलं यतः ।
योगिनश्च ततस्तेषां हेयं दुःखमनागतम् ॥ २९ ॥

योगिनां विवेकिनां स्वान्तम् अक्षिपात्रमिव प्रज्ञया कोमलं ततः अनागतमपि दुःखं तान् क्लिश्नाति यथा लूतातन्तुः सूक्ष्मोऽपि अक्षिपात्रं क्लिश्नाति तद्वद्, अत एव हेयं दुःखमनागतम् इति निरूपितं हेयम् ॥ २९ ॥

द्रष्टृदृश्ययोः संयोगो हेयहेतुः १७ ।

दुःखाधारस्य दृश्यस्य द्रष्ट्रा संवेदनं भवेत् ।
दुःखस्य कारणं तस्मात् संयोगो द्रष्टृदृश्ययोः ॥ ३० ॥

दृश्यं चित्तं दुःखाधारं तच्च द्रष्ट्रा संवेद्यते ततो दुःखी अहमिति संवेदनं भवति, द्रष्टृदृश्ययोः संयोगमन्तरेण न दुःखसंवेदनं जायेत, तस्माद् द्रष्टृदृश्ययोः संयोगः हेयस्य दुःखस्य हेतुरिति निरूपितः हेयहेतुः ॥ ३० ॥

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् १८ ।

रजःसत्त्वतमोरूपं यद्-ग्राह्यग्रहणात्मकम् ।
द्रष्टुर्भोगापवर्गौ च तद् दृश्यं यत् प्रसाधयेत् ॥ ३१ ॥

दृश्यं विवृणोति । सत्त्वरजस्तमोरूपं यद् विषयकरणरूपं भूतेन्द्रियात्मकमित्यर्थः । वस्तु द्रष्टुर्भोगापवर्गौ साधयेत् तद्दृश्यम् ॥ ३१ ॥

बोधमात्रः प्रकाशः स्यादवस्थान्तरता क्रिया ।
शक्तिभावः स्थितिः शीलं सत्त्वादीनां यथाक्रमम् ॥ ३२ ॥

सर्वज्ञानेषु यो बोधांशः स प्रकाशो नाम, अवस्थान्तरभावः क्रिया, शक्तिभावः क्रियायाः पूर्वावस्था स्थितिः, इत्येताः प्रकाशक्रियास्थितयः येषां यथाक्रमं शीलं स्वभावः ते सत्त्वादयः गुणाः, तत्र प्रकाशशीलं सत्त्वं क्रियाशीलं रजः स्थितिशीलञ्च तम इति ॥ ३२ ॥

शक्तेः क्रिया ततो बोधः पुनर्बोधस्य शक्तिता ।
एतावन्मात्रलाभाच्च दृश्ये दृश्यं तदात्मकम् ॥ ३३ ॥

ग्राह्यग्रहणात्मशक्तितः क्रिया, क्रियातः बोधः, बोधस्य च पुनः शक्तिता संस्काररूपताप-

त्तिः, ग्राह्यग्रहणात्मकेषु सर्वेषु दृश्येषु एतावन्मात्रशाभाद् दृश्यं सत्त्वरजस्तमःस्वरूपमित्यवधारितं दृश्यस्वरूपम् ॥ ३३ ॥

अविवेकान्-मतो भोग इष्टानिष्टावधारणम् ।
द्रष्टृदृश्यविवेकस्य ह्यपवर्गोऽवधारणम् ।
दृश्यस्य चेष्टितं सर्वमर्थौ तावेव साधयेत् ॥ ३४ ॥

दृश्यकार्य्यमाह, बुद्धिपुंसोरविवेकाद् यद् इष्टानिष्टत्वेन गुणस्वरूपावधारणं स भोगः, पुंबुद्ध्योरन्यतावधारणमपवर्गः, सर्वं दृश्यस्य चेष्टितं तावेव द्वौ अर्थौ साधयेद् नान्यत् ॥ ३४ ॥

विशेषाविशेष-लिङ्गमात्रालिङ्गानि गुणपर्वाणि १९ ।

तन्मात्राण्यस्मिता षट् चाविशेषाः प्रकृतेर्गणाः ।
तेषां भूतेन्द्रियाण्येव विशेषाः षोडश्थूलाःश स्र ।
एतानि बुद्ध्यलिङ्ग च विद्यात् त्रिगुणपर्वाणि ॥ ३५ ॥

दृश्यस्य व्यवस्थितिमवधारयति, पञ्च तन्मात्राणि च अस्मिता चेति षट् प्रकृतयः अविशेषाः, तेषां पञ्चभूतानि चैकादशेन्द्रियाणीति षोडश स्थूला विशेषाः, एतानि च बुद्धिश्च अलिङ्गञ्चेति त्रिगुणपर्वाणि विद्यात् ॥ ३९ ॥

षड्जर्षभ-हरिद्रक्ता इत्यादि गुणभेदाश्च ।
शब्दादीनां विशेषाः स्युस्तेषाञ्चैव विशेषाणाम् ।
आश्रया बाह्यभावा ये तत्त्वतस्तानि भूतानि ॥ ३६ ॥

भूतानि लक्षयति, षड्जर्षभादयः शीतोष्णादयः हरिद्रक्तादयः मधुराम्लादयः सुगन्धदुर्गन्धादयश्च शब्दादीनां गुणानां भेदा विशेषाः स्युः, तेषाञ्च विशेषाणां गुणानामाश्रया ये बाह्यभावा बाह्यवस्तूनि तानि भूततत्त्वानि, तत्र षड्जर्षभादिविशेषगुणवद्वस्तु आकाशतत्त्वम्, शीतोष्णादिगुणवद् वायुतत्त्वमित्यादीनि भूततत्त्वलक्षणानि तत्त्वदर्शि ग्राह्याणि, यथोक्तं "शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः, तेजसो लक्षणं रूपमापश्च रसलक्षणाः, धारिणी सर्वभूतानां पृथिवी गन्धलक्षणा" इति ॥ ३६ ॥

या च सूक्ष्मतमावस्था शब्दस्पर्शादिधर्म्माणाम् ।
षड्जादयः सुखादीनि चास्तं यायु-र्यत्र भेदाः ॥
तन्मात्राणि च तान्याहु-रणुशब्दादिरूपाणि ।
कारणानि च भूतानां शब्दस्पर्शादिसंज्ञाश्च ॥ ३७ ॥

भूतकारणं तन्मात्रं विवृणोति, शब्दस्पर्शादिभूतगुणानां या सूक्ष्मतमा अवस्था यत्र षड्जादयः सुखदुःखमोहाश्च विशेषगुणभेदा अस्तं यायुः अविशेषा भूयुः इत्यर्थः, विभिन्नाः शब्दगुणा यत्र एकाकारः सूक्ष्मो भवति तथा स्पर्शादयश्च भवति यत्र च सुखदुःखमोहजननगुणो नास्ति इत्यर्थः । तादृश्यः पञ्च भूतावस्थाः तन्मात्राणि च शब्दादिगुणानाम् अणवः परमसूक्ष्मा भावाः, भूतानां च कारणानि प्रकृतयः, तानि शब्दस्पर्शादिसंज्ञाः चेति, तद् यथा शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्र गन्धतन्मात्रमिति ॥ ३७ ॥

सर्वेन्द्रियगतश्चात्मभावश्चञ्चल्यते यो हि ।
अहंकारोऽस्मिता वा स इन्द्रियाणामुपादानम् ॥ ३८ ॥

पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चान्तरेन्द्रियभूतं सर्वसाधारणैः प्राणैः सह एतानि एकादश इन्द्रियाणि । तेषु य आत्मभावः येन मम इन्द्रियाणीति अहमिन्द्रियवानिति वा प्रत्ययः सम्भवेत् यश्चात्मभावः चञ्चल्यते सदैव अवस्थान्तरतां प्राप्नोति क्रियाशीलत्वात् सः अहंकारः अस्मिता चेति आख्यायते, स चाहंकार इन्द्रियाणामुपादानम् इन्द्रियाणि

तस्य व्यूहभेदा इत्यर्थः, तस्य षष्ठस्याऽविशेषस्य इन्द्रियाणि विशेषाः ॥ ३९ ॥

सत्तामात्रात्मभावो यश्चाहमस्मीतिलक्षणः ।
आत्मनिश्चयबुद्धिर्वा लिङ्गमात्रं महानिति ।
बुद्धितत्त्वं तथाऽऽख्यातं तत् षट्प्रकृतिकारणम् ॥ ३६ ॥

अहमस्मीतिलक्षणो यः सत्तामात्रात्मभावः आत्मनिश्चयबुद्धिर्वा तद् बुद्धितत्त्वं तथा महानिति लिङ्गमात्रञ्चेति आख्यातम्, तच्च षण्णामविशेषाणामस्मितादीनामुपादानम्॥३९॥

पुरुषार्थक्रियाशून्यां तत्क्रियाशक्तिरूपिणीं ।
अमूलां प्रकृतिं सूक्ष्मां विद्याच्चालिङ्गसंज्ञकाम् ॥ ४० ॥

या पुरुषार्थक्रियाहीना, किन्तु तत्क्रियायाः शक्तिरूपिणी तां सर्वोपादानत्वाद् अमूलां प्रकृतिं सूक्ष्मतमाम् अलिङ्गसंज्ञकां विद्यात् ॥ ४० ॥

अनुभूतं क्रियाभिः सत् सत्ता स्यादनुभूतता ।
तथा चागृह्यमाणाऽपि शक्तिर्वाच्या सतीति हि ॥
ततो निःसदसद्-वाच्यं निःसत्तासत्तमेव च ।
शक्तिश्चालिङ्गरूपेति प्रधानं सर्वकारणम् ॥ ४१ ॥

क्रियाभिरनुभूतः पदार्थः सन्, सत्ता हि अनुभूतता, शक्तिपदार्थः अविज्ञायमानोऽपि सन्निति वाच्यः क्रियारूपेण लिङ्गेन तस्य सत्तानिश्चयात्, तस्मात् सर्वकारणं प्रधानं निःसदसद् निःसत्तासत्तम् अलिङ्गरूपा शक्तिरिति च वाच्यम् यत् शक्तिरूपेण सत् पुरुषार्थक्रियाशून्यत्वादसत् तन्निःसदसत्, यस्य गृह्यमाणतारूपा सत्ता नास्ति शक्तिरूपा सत्ता चास्ति तन्निःसत्तासत्तम्, यत्तु कस्यचित् स्वकारणस्य लिङ्गं न भवति निष्कारणत्वात् तदलिङ्गम्, अलिङ्गरूपा मूला शक्तिः प्रधानम् ॥ ४१ ॥

अहेतुकं चलं नित्यमव्यक्तं त्रिगुणं जडम् ।
पुमर्थहेतुकं व्यक्तं प्रतिसंविदितश्च यत् ।
चरिते पुरुषार्थे तु व्यक्तमव्यक्ततामियात् ॥ ४२ ॥

व्यक्ताव्यक्ते आह, चलं परिणामशीलम्, नित्यं, यस्मिन् "परिणम्यमाने तत्त्वं न विहन्यते तन्नित्यम्" इति नित्यलक्षणम्, त्रिगुणं, जडं दृश्यत्वादचेतनम्, तत्र अहेतुकं न च पुरुषार्थेन हेतुना लब्धसत्ताकं वस्तु, अव्यक्तम्, यत् पुरुषार्थेन हेतुना लब्धसत्ताकं चलत्वादिगुणकं पुंसा प्रतिसंवेद्यमानं तद्वस्तु व्यक्तम्, निवृत्ते पुरुषार्थे व्यक्तो भावः अव्यक्ततामियात् ॥ ४२ ॥

द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः २० ।

ज्ञातृनिष्ठस्वबोधो यः सोऽदृश्यो वस्ततो दृशिः ।
तन्मात्रश्चिन्मयो द्रष्टा सद्वृत्तिमनुपश्यति ॥ ४३ ॥

व्याख्यातं दृश्यं द्रष्टा व्याख्यायते, यो ज्ञातृनिष्ठः ज्ञातेतिप्रत्ययगतः स्वबोधः स्वतः स्वच्छः बोधः न प्रकाशशीलः, यश्च वस्तुतः स्वरूपतः अदृश्यः दर्शनायोग्यः द्रष्टृत्वात्, स दृशिः चित्, दृशिमात्रः चिन्मयः शुद्धचिद्रूपो द्रष्टा, सर्वा वृत्तिः द्रष्ट्रा अनुदृश्यते प्रतिसंवेद्यते ॥४३॥

तदर्थ एव दृश्यस्यात्मा २१ ।

सुखदुःखादिसंयुक्तं दृश्यं शब्दादिकं ज्ञानम् ।
भोग्यत्वात् पुरुषस्यार्थस्तस्मादात्मा तु दृश्यस्य ।
सोऽर्थः स्याद् दृश्यतायाश्च समाप्तेऽर्थे यतो नाशः ॥ ४४ ॥

द्रष्टुरर्थः एव दृश्यस्यात्मा, कथं तद्दर्शयति, सुखादियुक्तं शब्दादिज्ञानं दृश्यम्, तत्तु भोग्यत्वात्, पुरुषवेद्यत्वात् पुरुषस्यार्थः, सोऽर्थस्तस्माद् दृश्यस्यात्मा स्वरूपम्, यतः अर्थे समाप्ते दृश्यतायाः नाशस्ततोऽपि पुरुषार्थं एव दृश्यस्यात्मा, भोगापवर्गावन्तरेण नास्ति दृश्यस्य दृश्यता, चरितेऽर्थे दृश्यं न पुरुषेण दृश्यत इति ॥ ४४ ॥

कृतार्थं प्रतिनष्टमप्यनष्टं तदन्यसाधारणत्वात् २२ ।

कृतार्थं प्रतिनष्टञ्च नापि दृश्यं विनश्यति ।
अन्येषामकृतार्थानां पुंसां दृश्यत्वदर्शनात ॥ ४५ ॥

कृतार्थं पुरुषं प्रति अदृश्यं नाशप्राप्तमपि दृश्यं न विनश्यति अन्येषामकृतार्थानां पुरुषाणां दृश्यत्वेन वर्त्तमानत्वात् ॥ ४५ ॥

स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः २३ ।

द्रष्ट्राख्यस्वामिशक्तेश्च दृश्यशक्तेः स्वभूतायाः ।
मोक्षभोगार्थसंवित्तिर्यावत्तावत्तु संयोगः ॥ ४६ ॥

दृश्यं द्रष्टारञ्च विवृत्य संयोगपदार्थं विवृणोति, द्रष्टा स्वामिशक्तिः दृश्यं स्वशक्तिः तयोः संवित्तिरुपलब्धिर्यावत तावदेव तयोः संयोगः, तत्र दृश्यस्य स्वरूपोपलब्धिर्भोगः द्रष्टुश्च स्वरूपोपलब्धिर्मोक्षः, भोगापवर्गरूपस्य अर्थद्वयस्य उपलब्धेर्हेतुः संयोग इत्यर्थः। संयोगमन्तरेण न तौ विद्येताम् ॥ ४६ ॥

तस्य हेतुरविद्या २४ ।

प्रत्ययो योऽविविक्तः स्याद् बुद्धिपुंसोः स संयोगः ।
विद्यया तद्वियोगात्तु कारणं तस्य चाऽविद्या ॥ ४७ ॥

तदेव स्पष्टयति, बुद्धिपुरुषयोर्यो-विविक्तः प्रत्ययः एकताख्यातिः स संयोगः, स संयोगो विद्यया विवेकख्यात्या विनश्यति ततः विद्याविपरीता अविद्यैव संयोगस्य हेतुः ॥४७॥

तदभावे संयोगाभावो हानं तद्दृशेः कैवल्यम् २५ ।

अविद्याया अभावाद्धि संयोगस्यापि चाभावः ।
हानं दृश्यस्य तत्सम्यग् दृशेरुक्तञ्च कैवल्यम् ॥ ४८ ॥

हानमाह, अविद्याभावे संयोगाभावः तद्दृश्यस्य हानं सम्यक् त्यागः । द्रष्टुश्च तत् कैवल्यं दृश्यसङ्गहीनतेति वक्तव्यम् ॥ ४८ ॥

विवेकख्यातिरविप्लवा हानोपायः २३ ।

बुद्धिपुंसोर्यदन्यत्वं तन्मयः प्रत्ययो मुख्यः ।
विवेकख्यातिरेव स्यात् प्लवस्तस्या विपर्य्ययात् ॥ ४९ ॥

हानोपायं निरूपयति, बुद्धिपुरुषयोर्यत् परस्परवैलक्षण्यं तन्मयो मुख्यः।प्रख्यातः प्रत्ययो बुद्धिवृत्तिः विवेकख्यातिः स्यात् सा च ख्यातिर्विपर्ययेण विप्लुता भवति ॥ ४९ ॥

वशीकारविरागेण सत्त्वेन च विशुद्धेन ।
स्यान्निर्मलाऽप्लवा ख्याति-र्हानोपायो मतः सा हि ॥ ५० ॥

वशीकारवैराग्येण विशुद्धेन रजस्तमोमलहीनेन प्रज्ञासंस्कृतेन ऐकाग्रययुक्तेन चेत्यर्थः । सत्त्वेन विवेकख्यातिर्निर्मला अप्लवा अभग्ना स्यात्, सा हि अविप्लवा विवेकख्यातिः हानोपायः ॥ ५० ॥

तस्य सप्तधा प्रान्तभूमिः प्रज्ञा २७ ।

प्रज्ञा सप्तविधा प्रोक्ता योगिनां प्रविवेकिनाम् ।
स्वार्थस्य चरमख्यातेः प्रान्तभूमिरिति स्मृता ॥ ५१ ॥

विवेकख्यातियुक्तानां सप्तविधाः प्रज्ञाः जायन्ते, स्वार्थस्य स्वस्वविषयस्य चरमख्यातेः ज्ञातव्यस्य चरमज्ञाननिष्पादनात् सा प्रान्तभूमिरुच्यते, प्रान्तभूमिं प्राप्य प्रज्ञा पर्यवसीयते, ततः प्रज्ञानिरोधः ततश्च कैवल्यम्, अतो विवेकख्यातिरविप्लवा हानोपायः ॥ ५१ ॥

ज्ञातं मयाऽखिलं हेयं ज्ञेयमन्यन्न विद्यते ।
हेयस्य हेतवः क्षीणाः क्षेतव्यन्नास्ति मे पुनः ॥ ५२ ॥

सप्त प्रान्तभूमीः प्रज्ञाया विवृणोति, ज्ञातं मयाऽखिलं हेयं ज्ञेयमन्यन्न विद्यते इति प्रथमा प्रान्तभूमिः, अनया ज्ञातव्यता निवर्तते, हेयस्येति द्वितीया प्रान्तभूमिरनया क्षेतव्यता निवर्तते ॥ ५२ ॥

साक्षात्कृतं परं हानं साक्षात्कार्यं न विद्यते ।
हानस्य भावितो हेतुर्भावनीयं न विद्यते ॥ ५३ ॥

साक्षात्कृतमिति तृतीया, निरोधसमाधिना साक्षात्कृतमित्यर्थः, अनया परां गतिं दृष्ट्वा गतिविषया जिज्ञासा गन्तव्यता वा निवर्तते, हानस्येति चतुर्थी, विवेकख्यातिरेव हानोपायः, अनया उपायभावनानिवृत्तिः ॥ ५३ ॥

एताः कार्यविमुक्त्याख्याश्चतुःप्रज्ञासमाप्तयः ।
वक्ष्यमाणा मताः प्रज्ञास्तिस्रश्चित्तविमुक्तयः ॥ ५४ ॥

एताः कार्यविमुक्तयो नाम चतस्रः प्रज्ञायाः परिसमाप्तिः, आभिः चित्तं कर्तव्यात् विमुच्यते, वक्ष्यमाणास्तिस्रः चित्तविमुक्तयः, ताभिः चित्तस्य प्रतिसर्गः स्वरूपनिरोधो वेति ॥५४॥

चरितार्था च मे बुद्धिर्गुणाधिकृतिताऽस्ति न ॥ ५५ ॥

चरितार्थेति पञ्चमी प्रान्तभूमिः, अनया अधिकारसमाप्तिः ॥ ५५ ॥

आगच्छेयुः स्वभूमिं न कूटभ्रष्टोपला यथा ।
मत्तश्च्युता गुणास्तद्वद् न पुनर्दृश्यतामियुः ॥ ५६ ॥

गिरिकूटविच्युता ग्रावाणः यथा पुनर्न स्वभूमिम् आगच्छेयुः तथा गुणा मत्तः च्युताः पुनर्न दृश्यतामियुः, अनया षष्ठ्या प्रान्तभूम्या गुणसंयोगो निवर्तते ॥ ५६ ॥

सप्तम्यां प्रान्तभूमौ च प्रज्ञाया विषयः पुमान् ।
स्वस्वरूपो गुणातीतो विमलः केवलीव च ॥ ५७ ॥

केवलीव इत्यत्र इवशब्दः प्रज्ञाविषयस्य पौरुषप्रत्ययस्य अविषयस्य च पुरुषस्य भेदं द्योतयति, पुरुषः स्वस्वरूपो गुणातीतो विमलः, केवली इति पुरुषस्वभावमात्रं सप्तम्यां प्रान्तभूमौ प्रज्ञा विजानाति, नान्यत्किञ्चित्, अनया शाश्वती चित्तनिवृत्तिः ॥ ५७ ॥

जीवन्मुक्तश्च ताः पश्यन् प्रज्ञाः कुशल उच्यते ।
ताभिश्चित्ते विलीने तु मुक्तः कुशल उच्यते ॥ ५८ ॥

ताः प्रज्ञाः पश्यन् जीवन्नेव विद्वान् मुक्तः कुशल इत्युच्यते, ताभिश्च चित्ते प्रलीने मुक्तः कुशल इत्युच्यते ॥ ५८ ॥

हेयहाने तयोर्हेतू व्यूहानुक्त्वा यथाक्रमम् ।
साधनं कथ्यते यस्मान्न सिद्धिः साधनं विना ॥ ५९ ॥

स्पष्टम् ॥ ५९ ॥

योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः २८ ।

योगाङ्गानां सदाऽभ्यासात् क्लेशे क्षीणे हि चेतसः ।
विवेकख्यातिपर्यन्तो ज्ञानोत्कर्षः प्रजायते ॥ ६० ॥

विवेकख्यातिरेव ज्ञानस्य चरमोत्कर्षः ॥ ६० ॥

यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि २९ ।

यमो नियम आसनं प्राणायामस्तथैव च ।
प्रत्याहारश्च धारणा ध्यानञ्चेति समाधिकः ॥ ६१ ॥
अष्टावङ्गानि योगस्य तदनुष्ठानमीरितम् ।
क्लेशाशुद्धेर्वियोगे च ख्यातेः प्राप्तौ च कारणम् ॥ ६२ ॥

यमादीनि अष्टौ योगाङ्गानि, स्मर्यते च "वेदेषु चाष्टगुणिनं योगमाहुर्मनीषिणः" इति मोक्षधर्मे, योगानुष्ठानं क्लेशरूपायाः अशुद्धेर्वियोगकारणम् यथा परशुश्छेद्यस्य, विवेकख्यातेस्तु प्राप्तिकारणम् यथा धर्मः सुखस्य ॥ ६१ ॥ ६२ ॥

अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः ३० ।

जाति-देश-काल-समयानवच्छिन्नाः सार्वभौमा महाव्रतम् ३१ ।

अहिंसा सत्यमस्तेयो ब्रह्मचर्य्योऽपरिग्रहौ ।
एते यमाः समीर्य्यन्ते ते देशकालजातिभिः ।
समयेनानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ६३ ॥

अहिंसाऽऽदयो यमाः, ते देशादिभिरनवच्छिन्ना सार्वभौमा भूता महाव्रतम् इत्याख्याते, तत्र देशावच्छिन्ना अहिंसा यथा तीर्थे न हनिष्यामि, कुत्रापि न हनिष्यामीति देशानवच्छिन्ना अहिंसा, कदापि न हनिष्यामीति कालेनानवच्छिन्ना अहिंसा, केषु चिदेव जातिषु कश्चिदेव प्राणिनं न हनिष्यामीति जात्यनवच्छिन्ना अहिंसा, कस्मिंश्चिदेवार्थे न हनिष्यामीति समयानवच्छिन्ना अहिंसा, तथा सत्यादयो वेदितव्याः ॥ ६३ ॥

कायेन मनसा वाचा प्राणिपीडनवर्जनम् ।
मूलं यत् सर्वधर्माणां साऽहिंसा योगिभिर्मता ॥ ६४ ॥

कायेन हस्तादिना, मनसा सङ्कल्पेन, परुषया मर्म्मच्छिदा वाचा ॥ ६४ ॥

तत्त्वानुशीलनं नित्यं यथार्थहितभाषणम् ।
एवं सत्यं यथार्थे च वाक्चित्ते करणं भवेत् ॥ ६५ ॥

तत्त्वानुशीलनेन चित्तं यथार्थविषयं भवति, यथार्थहितभाषणेन वाग् यथार्थविषया भवति, एवं वाङ्मनसे यथार्थं करणं सत्यसाधनम् , आकारेङ्गितैरपि न अनृताभिनयः कर्तव्यः नापि द्व्यर्थवाक्यप्रयोगः ॥ ६९ ॥

अस्तेयो ह्यस्पृहारूपः स्तेयस्यापि प्रवर्जनम् ॥ ६६ ॥

अस्पृहारूपो मानसः अस्तेयः, स्तेयवर्जनं कायिकम् ॥ ६६ ॥

सर्वेन्द्रियेषु गुप्तेषु चोपस्थेन्द्रियसंयमः ।
ब्रह्मचर्य्यं समाख्यातमष्टाङ्गमपि तद्भवेत् ॥ ६७ ॥

श्रोत्रादिषु सर्वेन्द्रियेषु गुप्तेषु रक्षितेषु च उपस्थस्य संयमः तद् ब्रह्मचर्य्यम् । तच्चाष्टाङ्गं स्मृतम् । यथोक्तं "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्य्यमेतदनुष्ठेयं मुमुक्षुभिः" इति ॥ ६७ ॥

देहरक्षाऽतिरिक्तानां पञ्चधा दोषदर्शनात् ।
अस्वीकारश्च भोग्यानामपरिग्रह उच्यते ॥ ६८ ॥

अर्जन-रक्षण क्षय-सङ्ग-हिंसा इति पञ्चधा दोषदर्शनात् देहरक्षातिरिक्तानां भोग्यानां विषयाणाम् अस्वीकारः अपरिग्रहः ॥ ६८ ॥

किञ्चित् क्वचित् कदाचिद्वा चार्थे कस्मिंश्चिदेव वा ।
सिध्येदकरणादेव हिंसाऽऽदीनां महाव्रतम् ॥ ६९ ॥

किञ्चिदकरणं जात्याऽनवच्छिन्नता, क्वचिदिति देशानवच्छिन्नता, कदाचिदकरणं कालानवच्छिन्नता, कस्मिंश्चिदेवार्थे अकरणं समयानवच्छिन्नता । एवमननुष्ठिता सर्वथा यदा हिंसादयः हिंसाऽनृतं स्तेयम् अब्रह्मचर्य्यं परिग्रहश्चेति पञ्च तदा यमा महाव्रतमित्युच्यन्ते ॥ ६९ ॥

शौच–सन्तोष–तपः–स्वाध्यायेश्वरप्रणिधानानि नियमाः ३२ ।

बाह्यमाभ्यन्तरं शौचं लब्धार्थादधिकस्य सः ।
सन्तोषो याऽनुपादित्सा तपः स्वाध्याय एव च ।
ईश्वरप्रणिधानञ्च नियमा इति पञ्चकाः ॥ ७० ॥

शौच–सन्तोष–तपः स्वाध्यायेश्वर–प्रणिधानानि नियमाः, तत्र शौचं द्विधा बाह्यमाभ्यन्तरञ्च, मृज्जलादिभिः देहस्य देहोपकरणानाञ्च शुद्धिः पूतिता–निराकरणरूपा तथा मेध्याहारश्च बाह्यं शौचम्, सत्त्वशुद्धिराभ्यन्तरं शौचम्, प्राप्तार्थाद् अधिकस्य या अनुपादित्सा स सन्तोषः, तपःस्वाध्यायेश्वरप्रणिधानानि प्राग्व्याख्यातानि ॥ ७० ॥

वितर्कबाधने प्रतिपक्षभावनम् ३३ ।

वितर्का हिंसादयः कृतकारितानुमोदिता क्रोधलोभमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ३४ ।

हिंसादयो वितर्काः स्यु–स्ते कृताः कारिताश्च वा ।
तथाऽनुमोदिता वाऽपि चीर्णाः क्रोधेन ते पुनः
अथवा लोभमोहाभ्यां ते पुनर्मृदुमध्यमाः ।
अधिमात्रास्तथा सन्तः कीर्त्तिताः सप्तविंशतिः ॥ ७१ ॥

हिंसादयः यमनियमप्रतियोगिनः वितर्काः, ते कृताः स्वयंकृताः, कारिताः यथा आमिषक्रेतॄणां कारिता पशुहिंसा, अनुमोदिताः यथा सर्पश्वापदादीनां हननस्यानुमोदनम्, ते पुनर्वितर्काः क्रोधेन लोभेन मोहेन वा अनुष्ठिता भवन्ति, क्रोधपूर्वा हिंसा यथा अपकृतमनेनेति हन्तव्यम्, लोभपूर्वा मांसचर्मार्थेन हिंसा, मोहपूर्वा यथा मनुजानामुपभोगार्थं धात्रा पशवः सृष्टा अत एव नास्ति तत्पीडने दोष इत्यादिबुद्ध्या या हिंसा, तथा च ते वितर्का मृदुमध्याधिमात्राः, मृदुहिंसा यथा पतङ्गानां पीडनम्, आततायिवधो वेत्यादि, मध्या हिंसा यथा पशुपीडनं पुरुषवधा इत्याद्या, अधिमात्रा हिंसा यथा मनुजपीडनं स्वजनवध इत्याद्या, एवं दश वितर्काः प्रत्येकं सप्तविंशतिर्ज्ञेयाः ॥ ७१ ॥

एवंविधवितर्काणां बाधने तु विभावयेत्
अनन्तदुःखदा एते चानन्ताज्ञानहेतवः ॥ ७२ ॥

वितर्कबाधितेषु अहिंसादिषु वितर्कप्रतिपक्षं भावयेत्, हिंसादयः वितर्का अनन्तदुःखदाः अनन्ताज्ञानहेतव इति भावनया हिंसादीनां निवर्तनं प्रतिपक्षभावनम् ॥ ७२ ॥

अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ३५ ।

वितर्कहीनता सम्यक् प्रतिष्ठा स्याद् यमादीनाम् ॥ ७३ ॥

अहिंसादि-साधनानि यदा सम्यक् वितर्कशून्यानि भवन्ति तदा तेषां प्रतिष्ठेति उच्यते ७३

अहिंसायाः प्रतिष्ठायां योगिनः सन्निधौ तदा ।
जन्तवः शाश्वतं वैरं त्यजेयुस्तत्प्रभावतः ॥ ७४ ॥

अहिंसाप्रतिष्ठायां सति योगिनः सन्निधौ तत्प्रभावादभिभूतहिंसाबुद्धयः जन्तवः शाश्वतं वैरं त्यजन्ति ॥ ७४ ॥

सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ३६ ।

अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ३७ ।

क्रियाफलप्रदाऽमोघा सत्यस्थैर्ये च वाग् भवेत् ।
रत्नानि चोपतिष्ठन्तेऽस्तेयस्थैर्येऽप्ययाचिते ॥ ७५ ॥

क्रियया धर्माद्याचरणेन यत् सुखादि फलमाप्यते सत्यप्रतिष्ठस्य योगिनो वाचा एव तत्फलासिर्भवति, सुखी भव अज्ञातहीनो भव इत्याद्यया योगिनां वाचा श्रोतॄणाम् अहं सुखीत्यादि बुद्धिः प्रादुर्भवतीत्येवं सत्यप्रतिष्ठायां वाचः क्रियाफलाश्रयत्वम्, अस्तेयस्थैर्ये सिद्धे अयाचितेऽपि रत्नानि उत्कृष्टद्रव्याणि सत्त्वैराकृष्टबुद्धिभिः योगिनः सन्निधौ उपस्थाप्यन्ते ॥७५॥

ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ३८ ।

ब्रह्मचर्य-प्रतिष्ठायां वीर्यलाभस्ततस्तु च ।
शिष्येषु ज्ञानमाधातुं क्षमो सिद्धीश्च विन्दति ॥ ७६ ॥

वीर्यलाभात् शिष्येषु ज्ञानमाधातुं क्षमो भवति योगी, सिद्धीः अणिमादींश्च लभते ॥७६॥

अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः ३९ ।

कोऽहमासं कथं वापि शरीरं किमिदं कथम् ।
क्वाहं कथं भविष्यामि चेति सर्वं विबुध्यते ।
विषयाकृष्टिशून्यत्वात् स्थिरे जातेऽपरिग्रहे ॥ ७७ ॥

अपरिग्रहप्रतिष्ठायां विषयाकृष्टिशून्यता, ततः पाशमुक्त इव शकुनः स्वाधीना बुद्धिः कोऽहमित्यादि-जन्मकथन्तां विजानाति ॥ ७७ ॥

शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ४० ।

सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ४१ ।

देहे बाह्याद् जुगुप्सा स्यादसंसर्गः परैः सह ।
आभ्यन्तरात् तथा शौचाद्- बुद्धिर्भवति निर्मला ॥ ७८ ॥
ततश्च मानसं सौख्यं परमेकाग्रता तथा ।
इन्द्रियाणां जयश्च स्याद्-योग्यता चात्मदर्शने ॥ ७९ ॥

बाह्यशौचात् स्वदेहे जुगुप्सा जुगुप्सिततमैः परदेहैः सह च संसर्गालिप्सा, आभ्यन्तरात् शौचात् सत्त्वशुद्धिः, ततः सौमनस्यरूपं परं मानसं सौख्यम्, ऐकाग्र्यम्, इन्द्रियजयः, आत्मदर्शनयोग्यता च प्रजायते ॥ ७८ ॥ ७९ ॥

सन्तोषादनुत्तमः सुखलाभः ४२ ।

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
सन्तोषजसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ८० ॥

सन्तोषस्थैर्ये अनुत्तमः सुखलाभः, यच्चेति स्पष्टम् ॥ ८० ॥

कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ४३ ।

शरीरेन्द्रियसिद्धयो येऽणिमाप्रातिभादयः ।
प्रादुर्भूयुः तपःस्थैर्य्ये हि योगिनि मलक्षयात् ॥ ८१ ॥

अणिमादयः शरीरसिद्धयः प्रातिभादयः ज्ञानोत्कर्षरूपाः इन्द्रियसिद्धयः । तपसा अशुद्धिक्षयात् ताः सिद्धयः प्रादुर्भूयुः ॥ ८१ ॥

स्वाध्यायादिष्टदेवतासम्प्रयोगः ४४ ।

अ॰रा ऋषयः सिद्धाः स्वाध्यायस्थितयोगिनः ।
द॰र्शनं ह्यधिगच्छन्ति वर्त्तन्ते चास्य कर्म्मणि ॥ ८२ ॥

देवा ऋषयः सिद्धाश्च स्वाध्यायप्रतिष्ठस्य योगिनो दर्शनमधिगच्छन्ति । कर्म्मणि चास्य वर्त्तन्ते कार्य्याणि साधयेयुरित्यर्थः ॥ ८२ ॥

समाधिसिद्धिरीश्वरप्रणिधानात् ४५ ।

ईश्वरप्रणिधानस्य प्रकर्षेण हि योगिनः ।
ईश्वरार्पितचित्तस्य समाधिः सम्प्रसिध्यति ॥ ८३ ॥

समाधिसिद्धिरीश्वरप्रणिधानादिति सूत्रम् ॥ ८३ ॥

स्थिरसुखमासनम् ४६ ।

प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ४७ ।

ततो द्वन्द्वानभिघातः ४८ ।

पद्मासनादयः स्युश्चेत् सुनिश्चलसुखावहाः ।
तदा भवन्ति योगाङ्गं द्वन्द्वजाशातनाशनम् ॥ ८४ ॥

सिद्धिभिः सह यमनियमा विवृताः । आसनमुच्यते । पद्मसिद्धस्वस्तिकादीनि आसनानि चेत् सुनिश्चलानि सुखावहानि स्युः तदा योगाङ्गभूतानि आसनानि स्युः । नान्यथा । चित्तविक्षेपकरत्वात् । आसनञ्च सुसिद्धं शीतोष्णक्षुत्पिपासादिद्वन्द्वजातम् अशातम् असुखम् अभिघातमित्यर्थः नाशयेत् ॥ ८४ ॥

अनन्ताकाशमस्मीति भावनाद् मृतवत्तथा ।
सर्वप्रयत्नशैथिल्यादासन ह्येति सिद्धताम् ॥ ८५ ॥

अनन्ताकाशमहमस्मीति अनन्तसमापत्त्या च मृतवत्शरीरप्रयत्नशैथिल्याच्च आसनं सिद्धतामेति । शरीरं काष्ठवत् स्थिरं निश्चेष्टं शून्यवच्च भावयित्वा आसनं साधनीयम् ॥८५॥

तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ४९ ।

सत्यासने सुसिद्धे च प्रश्वासश्वासयोस्ततः ।
योऽन्तर्बहिर्गतिच्छेदः प्राणायामः स उच्यते ॥ ८६ ॥

आसने सुसिद्धे सति । श्वासः वायोः पूरणं, प्रश्वासः रेचनं तयोर्यो गतिविच्छेदः स प्राणायामः । श्वासस्य अन्तर्गतिच्छेदः प्रश्वासस्य बहिर्गतिच्छेदः । कियत्कालं यावत् श्वासप्रश्वासयोर्गतिविच्छेदकरणमेकः प्राणायाम इत्यर्थः ॥ ८६ ॥

बाह्याभ्यन्तर-स्तम्भवृत्ति देश-काल-संख्याभिः परिदृष्टो दीर्घसूक्ष्मः ५० ।

रेचकान्तो गतिच्छेदः पूरकान्तस्तथैव च ।
बाह्याभ्यन्तरवृत्ती तौ रेचपूरौ विना तथा ॥
विधारकप्रयत्नेन श्वासप्रश्वासयोः सकृत् ।
गत्यभावे सुनैश्चल्यं स्तम्भवृत्तिर्निगद्यते ॥ ८७ ॥

प्राणायामस्य तिस्रो वृत्तयः बाह्यवृत्तिराभ्यन्तरवृत्तिः स्तम्भवृत्तिश्चेति । कौष्ठ्यं वायु रेचयित्वा बहिरेव धारणं बाह्यवृत्तिः प्राणायामः । बाह्यं वायुम् आचम्य अन्तर्धारणरूपो गतिविच्छेद आभ्यन्तरवृत्तिः । आचमननिःसारणौ अकृत्वा सकृद् विधारकप्रयत्नेन यत् श्वासप्रश्वासयोर्गत्यभावं कृत्वा सुनिश्चलेन शरीरेण चेतसा चावस्थानं कियत्कालं यावत् सदेक स्तम्भवृत्तिः प्राणायामः । श्वासप्रश्वासयोर्गत्यभावः प्राणायामः । तत्र श्वासपूर्व्वकः प्रश्वास-

पूर्व्वकस्तथा प्रयत्नविशेषेण सकृच्चेति य एष त्रिविधः श्वासप्रश्वासयोर्गत्यभावः स त्रिविधः प्राणायामः। तत्र बाह्याभ्यन्तरवृत्त्योर्यो निःसारणापूरण-प्रयत्नस्तमकृत्वा सकृद्विधारणं स्तम्भवृत्तौ कार्य्यम्। त्रीन् एव प्राणायामान् निःसङ्कल्पेन मनसा आध्यात्मिके देशे विधृतेन शून्यवत्-शरीरमनोभावेन च युक्तः समभ्यसेत्। तत एव प्राणायामः चित्तस्थैर्य्यकरं योगाङ्गं भवति नान्यथा ॥ ८७ ॥

स देश-काल-संख्यानां परिदृष्ट्या प्रसाधितः।
त्रिविधः प्राणरोधः स्याद् दीर्घो वा सूक्ष्म एव च ॥ ८८ ॥

देशपरिदृष्टिः कालपरिदृष्टिः संख्यापरिदृष्टिश्चेति त्रिभिः परिदर्शनैः साधितः प्राणायामो दीर्घः सूक्ष्मश्च भवति। देशः हृदादिः आध्यात्मिकः प्रदेशः, तत्र धृतचित्तता देशपरिदर्शनम्। इयत्कालावच्छिन्नप्राणायामः कार्य्य इति कालपरिदर्शनम्। स्वस्थस्य पुरुषस्य सुप्तस्य श्वासप्रश्वासकालः मात्रा। द्वादशमात्राभिः प्रथम उद्घातः चतुर्विंशतिमात्राभिर्द्वितीय उद्घातः षट्त्रिंशन्मात्राभिस्तृतीय उद्घातः। उद्घातः प्राणरोधकालविशेषः। यावत्कालं रुद्धाः प्राणा उद्वेगं जनयन्ति तावदेव कालः उद्घातः। श्वासप्रश्वाससंख्याभिः उद्घातकालस्य निश्चेयत्वाद् उद्घातः संख्यापरिदर्शनम्। संख्यापरिदर्शनं कालपरिदर्शनभेद एव। एवं देशकालसंख्याभिः परिदृष्टाः प्राणायामा अभ्यस्ता दीर्घाः सूक्ष्माश्च भवन्ति ॥ ८८ ॥

देशेनालोचिताः सर्वे लोचिताः कालसंख्ययोः।
आधिक्येन मता दीर्घाः सूक्ष्मा नैपुण्यसाधिताः ॥ ८९ ॥

सर्वे प्राणायामा देशेन आलोचनीयाः। ते कालस्य संख्यायाश्च आधिक्येन परिदृष्टा दीर्घा भवन्ति। षट्त्रिंशन्मात्रावच्छिन्नकालव्यापी दीर्घ इत्यर्थः। तत्र प्राणवृत्तयः सूक्ष्मा धाराकारप्रवाहिन्यः भवन्ति ॥ ८९ ॥

बाह्यान्तरविषयाक्षेपी चतुर्थः ५१।

देशादिविषयाणाञ्च परिदृष्ट्या प्रसाधनात्।
बाह्ये चाभ्यन्तरे जाते दीर्घे सूक्ष्मे ततः पुनः।
स्तम्भवृत्तिरतिक्रम्य परिदृष्टिं हि तुर्य्यकः ॥ ९० ॥

बाह्यान्तरवृत्तिप्राणायामयोः देशकालादिविषयाणां परिदर्शनपूर्वकः तृतीयः स्तम्भवृत्तिः प्राणायामः सकृत्प्रयत्नेन साधनीयः। तथा साधनाद् बाह्ये चाभ्यन्तरे प्राणायामे दीर्घे सूक्ष्मे च जाते ततश्च विषयपरिदर्शनमतिक्रम्य आक्षिप्य त्यक्त्वेत्यर्थः, यः स्तम्भवृत्तिः प्राणायामः स तुर्य्यकः चतुर्थसंज्ञकः तृतीया स्तम्भवृत्तिः सकृत्प्रयत्नाद् विधारणं चतुर्थी च अभ्यासनैपुण्यात्पूर्वभूमीः अतिक्रम्य सूक्ष्मीभूतानां प्राणानां विधारणमिति भेदः द्रष्टव्यः ॥ ९० ॥

ततः क्षीयते प्रकाशावरणम् ५२।

धारणासु च योग्यता मनसः ५३।

सत्त्वस्यावरणं तस्मात् क्षीयते च प्रतिक्षणम्।
स्याद् धारणासु योग्यत्वमाध्यात्मे चित्तबन्धनात् ॥ ९१ ॥

प्राणायामफलमाह, प्राणायामाद् बुद्धिसत्त्वस्यावरणं प्रतिक्षणं क्षीयते आध्यात्मिके देशे चित्तस्थापनाद् देशबन्धचित्ततारूपासु धारणासु योग्यता भवति ॥ ९१ ॥

स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ५४।

सन्त्यज्य विषयं स्वं स्वं यदा वश्येन्द्रियाणि हि।
अनुकुर्वन्ति चित्तन्तु प्रत्याहारस्तदा भवेत् ॥ ९२ ॥

प्रत्याहारमाह, वश्यानि इन्द्रियाणि यदा स्वं स्वं विषयं सन्त्यज्य चित्तमनुकुर्वन्ति यत्र चित्तं तत्रैव तिष्ठन्तीत्यर्थः तदा इन्द्रियाणां प्रत्याहारः भवति ॥ ९२ ॥

ततः परमा वश्यतेन्द्रियाणाम् ५५ ।

विषयाप्रतिपत्तौ वै ऐकाग्र्यादिन्द्रियाणि हि ।
वश्यतां परमां चेयुः प्रत्याहारेण योगिनाम् ॥ ९३ ॥

इति सांख्ययोगाचार्य श्रीहरिहरानन्द-आरण्यविरचितायां
योगकारिकायां द्वितीयः पादः ।

प्रत्याहारफलमाह, चेतस ऐकाग्र्यात् प्रत्याहारेण चित्तानुकारिणा विषयाप्रतिपत्तौ सम्प्रयोगाभावे विषयज्ञानराहित्यादित्यर्थः, इन्द्रियाणि परमां वश्यतामियुः, सर्वेषु इन्द्रियविजयेषु श्रेष्ठः प्रत्याहारेण यो विजय इति ॥ ९३ ॥

इति योगकारिकाटीकायां सरलायां द्वितीयः पादः ।

---

# अथ तृतीयः पादः ।

देशबन्धश्चित्तस्य धारणा १ ।

## अथ कारिका ।

उक्तानि बहिरङ्गानि त्रयमत्रान्तरङ्गकम् ।
योगस्य सहभाविन्यः कथ्यन्तेऽपि विभूतयः ॥ १ ॥

धारणाध्यानसमाधय इत्येतत्त्रयमन्तरङ्गं सिद्धयश्च तत्सहभाविन्यः अत्र पादे कथिताः ॥१॥

आध्यात्महृद्‌पद्मादौ देशे प्रत्याहृतेन्द्रिये ।
बाह्ये वा वृत्तिमात्रेण चित्ते बन्धस्तु धारणा ॥ २ ॥

प्रत्याहृतेन्द्रियचित्ते सति हृत्पद्मादौ आध्यात्मिके देशे, तथा वृत्तिमात्रेण वा बाह्ये देशे यश्चित्तबन्धः सा धारणा, न तु हृत्पद्मादौ भावनामात्रं धारणा, यदा चित्तमभिमतदेश एव तिष्ठति न विषयान्तरं गृह्णाति प्रत्याहृतत्वादिन्द्रियाणाञ्च न विषयसंयोगेन लोलं भवति तदैव धारणारूपं योगाङ्गमिति ज्ञेयम्, अप्रत्याहृतस्य योगाङ्गं धारणा न स्यात् ॥ २ ॥

तत्र प्रत्ययैकतानता ध्यानम् २ ।

देशे च धारणाऽऽयत्ते ज्ञानवृत्त्येकतानता ।
तैलधारावदच्छिन्ना ध्यानं तद्योगिनो विदुः ॥ ३ ॥

विषयान्तराप्रतिपत्तौ सत्यां कस्मिंश्चिद् देशे बन्ध एव धारणा तदा प्रत्यया एकताना न भवन्ति किन्तु जलबिन्दुधारावत् सदृशाः भवन्ति, यस्तु सदृशानां प्रत्ययानामेकतानतासम्पादनं तद्ध्यानम्, तैलधारावद् एकतानता, तदा सदृशानां प्रत्ययानां प्रवाहो नानुभूयते यथा धारणायां, किन्तु एकप्रत्यय इव उदित इत्यनुभूयते, तादृशो प्रत्ययस्य एकतानता ध्यानम् ॥ ३ ॥

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ३ ।

ध्येयार्थमात्रनिर्भासं ध्यातृध्यानविहीनवत् ।
यदा भवति वै ध्यानं समाधिस्तत् तदा भवेत् ॥ ४ ॥

यदाध्यानं ध्येयार्थमात्रनिर्भासं ध्येयस्वरूपमात्रोपरक्तम्, अहं ध्यायामीति ग्रहीतृग्रहणस्वरूपस्य विस्मरणस्वभावकञ्च भवति, तदा तद् ध्यानं समाधिर्भवेत्, तत्र च चित्तस्य सम्यक् स्थैर्यम्, तदा हि ध्येयविषयस्य प्रख्यातिः स्वस्वरूपस्य चाख्यातिः ॥ ४ ॥

त्रयमेकत्र संयमः ४ ।

तज्जयात् प्रज्ञाऽऽलोकः ५ ।

एकालम्बानि च त्रीणि साधनानि हि संयमः ।
प्रज्ञायास्तज्जयादेव वैशारद्यं परं भवेत् ॥ ५ ॥

एकस्य विषयस्य सर्वतः धारणादीनि साधनानि पुनः पुनः क्रियमाणानि संयम इति परिभाष्यते, संयमजयात् प्रज्ञाया आलोकः जायते ॥ ५ ॥

ज्ञानशक्तेर्मलं विद्यादस्थैर्यं तेन चाज्ञता ।
शरीरनिरपेक्षं स्यात् स्थेष्ठं सम्यक् समाधिना ।
तथा ध्येयगतं ज्ञानं तस्मात् प्रज्ञा हि संयमात् ॥ ६ ॥

कथं प्रज्ञाऽऽलोकः तदाह, ज्ञानशक्तेरस्थैर्यं मलं, तेन मलेन च अज्ञता, अस्थिरा ज्ञानशक्ति ज्ञेयविषये स्थितिमलभमाना न तं विषयं सम्यक् प्रद्योतयति, समाधिना ज्ञानं शरीरनिरपेक्षं शारीराभिमानेनासंकीर्णं सम्यक् स्थेष्ठं स्थिरतमं तथा ध्येयविषयगतं तत्रैव पर्यवसितमित्यर्थं स्यात्, तस्मात् संयमात् प्रकृष्टं ज्ञानं जायते, देहाभिमानेनाऽनियमिता स्थिरतमा ध्येयविषयपर्यवसिता ज्ञानशक्तिर्विषयं सम्यग्विजानीयात् ॥ ६ ॥

तस्य भूमिषु विनियोगः ६ ।

त्रयमन्तरङ्गं पूर्वेभ्यः ७ ।

तदपि बहिरङ्गं निर्बीजस्य ८ ।

संयमो विनियोगाख्यः पौर्वापर्येण भूमिषु ।
जित्वा पूर्वेऽधरां भूमिं जिगीषेदुत्तरां ततः ॥ ७ ॥
सम्प्रज्ञातस्य पञ्चभ्यो ह्यन्तरङ्गमिदं त्रयम् ।
निर्बीजस्य च तत् त्रयं बहिरङ्गं समीरितम् ॥ ८ ॥

स्पष्टम् ॥ ७ ॥ ८ ॥

व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ९

गुणवृत्तं चलं नित्यं तस्मात् व्युत्थानवद्भवेत् ।
परिणामी निरोधो हि तस्यापि व्ययदर्शनात् ॥ ९ ॥

चित्तेन्द्रियभूतानां परिणामत्रयं व्याख्यातुमुपक्रमते, गुणेत्यादिना, चलत्वाद् गुणवृत्तानां सर्वे प्राकृता भावाः परिणामशीलाः, अतः अलक्ष्याऽपि निरोधावस्था परिणामिनी व्युत्थानवत्, निरोधस्य भङ्गदर्शनात् तदनुमीयते ॥ ९ ॥

संस्कारा अवतिष्ठन्ते निरुद्धे प्रत्यये चापि ।
व्युत्थानसंस्कृतेस्तत्र निरोधः स्याच्च निर्बीजः ॥ १० ॥

सर्वप्रत्यये निरुद्धेऽपि, संस्कारा अवतिष्ठन्ते, तैरेव निरोधस्य भङ्गः स्यात्, तत एव संस्कारसत्ताऽनुमीयते, तत्र संस्कारेषु मध्ये व्युत्थानसंस्काराणां निरोधसंस्कारेणाभिभवः व्युत्थानसंस्काररोधनमेव निर्बीजसमाधिरिति वक्तव्यम् ॥ १० ॥

सम्प्लवे तु निरोधाख्ये समाधौ तस्य संस्काराः ।
आधीयन्ते च संस्कारा व्युत्थानस्य प्रहीयन्ते ॥ ११ ॥
संस्कारस्यान्यथाभाव एवं चित्तस्य धामणः ।
निरोधक्षणयुक्तस्य निरोधपरिणामकः ॥ १२ ॥

कथं-तद्दर्शयति, सप्लवे प्लवयुक्ते निरोधसमाधौ तु निरोधस्य संस्कारा आधीयन्ते, व्युत्थानस्य सम्प्रज्ञातस्येत्यर्थः । च संस्काराः प्रहीयन्ते क्षीयन्त इत्यर्थः, सम्प्रज्ञातोऽपि निरोधापेक्षया व्युत्थानम् । निरोधाभ्यासकाले एवं संस्काराणाम् अभिभवप्रादुर्भावौ भवतः, तत एव निरोधकालवृद्धिर्व्युत्थानकालहानिः, एवं निरोधरूपप्रत्ययावकाशयुक्तस्य धर्मिणश्चित्तस्य यः संस्काराणां चित्तधर्माणाम् अन्यथाभावः स निरोधपरिणामः, चित्तस्य धर्मपरिणामश्चानेनापि उक्तः ॥ ११ ॥ १२ ॥

तस्य प्रशान्तवाहिता संस्कारात् १० ।

प्रशान्तिर्निरोधः सम्यक् प्रशान्तेश्च प्रवाहिता ।
निरोधाभ्यासनैपुण्यजातसंस्कारतो भवेत् ॥ १३ ॥

प्रशान्तभावस्य प्रवाहो निरोधसंस्काराद् भवतीत्यर्थः ॥ १३ ॥

सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ११ ।

सर्वार्थताख्यधर्मस्य चैकाग्रयस्य क्षयोदयौ ।
समाधिपरिणामः स्याच्चित्तस्य यत्तु वैकृतम् ॥ १४ ॥

चित्तस्य समाधिपरिणाम उच्यते, सर्वार्थता चित्तधर्मः, सा च चित्तस्य अलातचक्रवत् सर्वेन्द्रियेषु युगपदिव सञ्चरणशीलता, ऐकाग्र्यमपि चित्तधर्मः, तच्च एकस्मिन्नेव विषये स्थितिशीलता, तयोः चित्तधर्मयोः क्षयोदयौ सर्वार्थतायाः क्षय एकाग्रताया उदय इत्यर्थः, तद्रूपं यत् चित्तस्य वैकृतं परिणामः स एव समाधिपरिणामः ॥ १४ ॥

ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः १२ ।

यः पुनश्च समाधौ हि वृत्त्योरुत्तरपूर्वयोः ।
ऐकाग्र्यपरिणामः स सर्वतस्तुल्यता द्वयोः ॥ १५ ॥

एकाग्रतापरिणाम उच्यते, समाधिकाले चित्तस्य यः परिणामः स ऐकाग्र्यपरिणामः, तत्र पूर्वायाः शान्ताया उत्तरायाः उदितायाश्चेति द्वयोर्वृत्त्योः सर्वतस्तुल्यता, सदृशीनां वृत्तीनां प्रवाह एकाग्रतापरिणाम इत्यर्थः ॥ १५ ॥

यौ धर्माश्रयभावस्य धर्माणां हि लयोदयौ ।
पूर्वोत्तरक्रमेण च परिणामः स ईरितः ॥ १६ ॥

परिणामपदार्थं लक्षयति, धर्माश्रयभावस्य धर्मिणः धर्माणां पूर्वोत्तरक्रमेण यौ लयोदयौ पूर्वस्य लय उत्तरस्य चोदय इत्यर्थः, स परिणाम ईरितः ॥ १६ ॥

विक्षेपे प्रत्ययानाञ्च ह्यतुल्यानां लयोदयौ ।
समाधौ प्रत्ययानां हि तुल्यानां विलयोदयौ ॥ १७ ॥

निरोधादिषु कथं परिणामः तद्विवृणोति, विक्षेपावस्थायाम् अतुल्यानां प्रत्ययानां लयोदयप्रवाहः, समाधौ च तुल्यानां प्रत्ययानां लयोदयौ, स हि एकाग्रतापरिणामः ॥ १७ ॥

संस्काराणाञ्च वृत्तीनां सम्प्रज्ञाते लयोदयौ ।
सार्वार्थ्यैकाग्र्यरूपाणां योगे चैकाग्र्यभूमिके ॥ १८ ॥

ऐकाग्र्यभूमिके सम्प्रज्ञाते योगे संस्काराणां वृत्तीनाञ्च लयोदयौ, तत्र व्युत्थानसंस्काराणां व्युत्थानप्रत्ययाणाञ्च लयः प्रज्ञासंस्काराणां प्रज्ञाप्रत्ययानां विवेकादीनाञ्च उदयः, अयं समाधिपरिणामः ॥ १८ ॥

तथा संस्कारमात्राणां व्युत्थानरोधनात्मनाम् ।
स्यातां लयोदयौ योगेऽसम्प्रज्ञात इतीष्यते ॥ १९ ॥

असम्प्रज्ञाते योगे संस्कारमात्राणां लयोदयौ, तत्र व्युत्थानस्य सम्प्रज्ञातस्य इत्यर्थः, सं-

स्काराणां लयः रोधमस्य निरोधस्य संस्काराणामुदयः, व्युत्थाननिरोधात्मके निरोधे पुत्र संस्कारमात्राणां लयोदयौ स्याताम्, अयं निरोधपरिणामः ॥ १९ ॥

एतेन भूतेन्द्रियेषु धर्मलक्षणाऽवस्थापरिणामा व्याख्याताः १३ ।

भूतेन्द्रियेषु चैतेनोक्ताश्चित्तपरिणामेन ।

धर्मश्च लक्षणावस्थे इत्याख्याः परिणामा हि ॥ २० ॥

एतेन चित्तपरिणामेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा उक्ताः ॥ २० ॥

सदृशां वाऽसदृक्षाणां धर्माणां विलयोदयौ ।

स धर्मपरिणामो यौ अक्षभूतेषु वर्ततः ॥ २१ ॥

सदृशानाम् असदृशानां वा धर्माणां लयोदयौ यौ भूतेन्द्रियेषु वर्तेते स धर्मपरिणामः, यथा निश्चलदीपशिखायां तैलस्य धर्मिणः प्रतिक्षणं सदृशधर्माणां लयोदयौ ॥ २१ ॥

पिण्डत्व-परिहारेण मृद्रूपस्य च धर्मिणः ।

घटत्वपरिणामः स्याद् धर्माख्यपरिणामकः ॥ २२ ॥

इदम् असदृशधर्मपरिणामस्योदाहरणम्, मृद्धर्मिणो धर्मपरिणामः इत्यर्थः ॥ २२ ॥

भविष्य उदितः शान्तः कालभेदो हि लक्षणम् ।

लक्षणैः परिणामः स भेदो यः काललक्षितः ॥ २३ ॥

हित्वाऽनागतमध्वानमुदितश्च ततः परम् ।

तत्रैवं भिन्नता बुद्धि-रतीताध्वपरिग्रहः ॥ २४ ॥

अतीतानागतोदिता इति त्रिविधः कालभेदो लक्षणम्, काललक्षितो यो भेदः स लक्षण-परिणामः, तद्यथा अतीतो घटः वर्तमानो घटः, भविष्यो घटः, एवं काललक्षित भेदबुद्धिः लक्षणपरिणामः ॥ २३ ॥ २४ ॥

धर्मलक्षणभिन्नत्वबुद्धौ कुत्रापि चासत्याम् ।

पुराणनवताद्यापि भेदबुद्धिर्भवेत्तत्र ।

सोऽवस्थापरिणामो यदेवं कल्पितभिन्नत्वम् ॥ २५ ॥

धर्मलक्षणरूपायां भिन्नत्वबुद्धौ कुत्रचिद् असत्यां तत्रापि अयं नवः पुराणोभूत इत्यादि भेदबुद्धिर्दृश्यते । आदिशब्देन देशावस्थानभेदोऽपि ग्राह्यः । एवं कल्पितभेदः अवस्थापरिणामः । तत्र वास्तवभिन्नता न गृह्यते किन्तु अवस्थाभिरारोपितवस्तुभेदः कल्पित इति । यत्र पुराणतायां जीर्णताऽऽदिधर्मपरिणामो गृह्यते न सः अवस्थापरिणाम इति विवेचयम्॥२५॥

धर्माणां विकारस्तत्र परिणामो हि वास्तवः ।

लक्षणादिविकारौ च व्यवहारार्थकल्पितौ ॥ २६ ॥

लक्षणावस्थापरिणामयोर्या भिन्नता न सा वास्तवी ॥ २६ ॥

विकारो धर्मिणां धर्मैर्धर्माणां लक्षणैस्तथा ।

लक्षणानामवस्थाभिः सत्या स्याद् धर्मविक्रिया ॥ २७ ॥

धर्मिणां धर्मैर्विकारः यथा मृद्रूपस्य धर्मिणः पिण्डत्वघटत्वचूर्णत्वादिधर्मैर्विकारः । धर्माणां लक्षणैः परिणामः यथा घटो मृद्धर्मः अतीतः चूर्णो मृद्धर्म उदित इत्यादि । लक्षणानामवस्थाभिः परिणामः यथा वर्तमानघटयोरयं पुराणः अयं नव इति अत्रुकत्र घटो वर्तत इति वा । परिणामेषु धर्मपरिणाम एव सत्यः वास्तव इति ॥ २७ ॥

शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी १४ ।

शान्तस्तथोदितश्चेति तथा चाव्यपदेश्यकः ।

ज्ञातशक्तिर्भवेद्-धर्मो धर्मी धर्मान्वयी मतः ॥ २८ ॥

अतीतानागतं ज्ञानं व्याविख्यासुरुपक्रमते शान्तेत्यादिना। धर्माः शान्ता उदिता अव्यपदेश्याश्च त्रिविधा भवन्ति। द्रव्यगता या शक्तिर्ज्ञाता, प्रमाणैर्ज्ञेयत्वमुपगता इत्यर्थः, स धर्मः। धर्मैरेव धर्मी विज्ञायत इत्यतः धर्मा ज्ञातशक्तयः। धर्मीति पदार्थः त्रिविधधर्मान्वयी सूक्ष्माणामव्यक्तानामतीतानागतानां तथा च व्यक्तानाम् उदितानाम् धर्माणां समाहारः धर्मीत्यर्थः ॥ २८ ॥

व्यापारोपरतः शान्तः सव्यापारस्तथोदितः।
सर्वप्रजननी शक्तिर्या च धर्मिण्यनागता।
विद्यते सूक्ष्मरूपेण सा स्यादव्यपदेश्यकः ॥ २९ ॥

कृतव्यापारः शान्तो, व्यापारयुक्त उदितः। सर्वस्मात् सर्वं प्रजायत इत्यनया दिशा सामान्यतः प्रमिता शक्तिर्या धर्मिणि सूक्ष्मरूपेण विद्यमाना स अव्यपदेश्यसंज्ञकः धर्मः ॥ २९ ॥

सर्वभौतिकरूपेषु भौतिकत्वाद्धि धर्मिणाम्।
सम्भूतियोग्यता चास्ति सर्वं सर्वात्मकं ततः ॥ ३० ॥
असंख्यानागता धर्माः सिद्ध्येयुरिति धर्मिणि।
तत्र कश्चिद् यथायोग्यनिमित्तेनोदितो भवेत् ॥ ३१ ॥

भौतिकानां धर्मिणां सर्वेषु भौतिकरूपेषु, स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेषु चेत्यर्थः, सम्भूतियोग्यता अस्ति। अभौतिकेष्वपि समानश्चर्चः तस्मात् सर्वं सर्वात्मकं सर्वकारणं भवेदित्यर्थः। इति हेतोः असंख्याता अनागता धर्मा धर्मिणि सिध्येयुः वर्तन्त इत्यर्थः। तेषु मध्ये कश्चित् कतिचिद्वापि धर्मः यथा योग्येन निमित्तेन उदितः अभिव्यक्तो भवेत् ॥३०॥३१॥

क्रमान्यत्वं परिणामान्यत्वे हेतुः १५।

पूर्वस्यानन्तरो धर्मो धर्मस्य क्रम उच्यते।
सूक्ष्मक्रमेण वै भावाः सदा परिणमन्ति हि।
परिणामान्यताहेतुः क्रमाणां भिन्नता ततः ॥ ३२ ॥

एवमुद्यत्सु धर्मेषु मध्ये उत्तरो धर्मस्तत्पूर्वस्य क्रम इत्युच्यते, सूक्ष्मेण क्षणावच्छिन्नेन क्रमेण सर्वे भावाः परिणमन्ति, तस्मात् क्रमाणां भिन्नता परिणामस्यान्यत्वे हेतुः, यथा शरीरस्य जरारूपः परिणामः स च सूक्ष्मेण प्रतिक्षणं सम्भवता क्रमेण भवति ॥ ३२ ॥

धर्मिष्ववस्थिता धर्माः सदा सन्तः स्वरूपतः।
व्यञ्ज्युः क्रमेण सूक्ष्मेण सन्निमित्तप्रणोदिताः ॥ ३३ ॥

अत एव धर्मिषु अवस्थिताः सदा स्वरूपतः सन्तः धर्माः सद्भिश्च निमित्तैः प्रणोदिता उद्घाटिताः अभिव्यञ्ज्युः, मृद्धर्मिणि घटत्वादिधर्माः सदा अतीतानागतत्वेन वर्तन्ते कुम्भकारादिनिमित्तैः तेऽभिव्यञ्ज्युः, अभिव्यक्तिस्तु क्रमेण भवति न युगपत्, क्रियारूपेण नियमेन सत्त्वरूपस्य धर्मिणः धर्मादेशादिनिमित्तापेक्षया च अभिव्यञ्जन्ति ॥ ३३ ॥

परिणामत्रयसंयमादतीतानागतज्ञानम् १६।

भेदक्रमनिमित्तानां साक्षात्कारेण संयमात्।
अतीतानागतं ज्ञानं परिणामत्रये भवेत् ॥ ३४ ॥

परिणामत्रये संयमात् परिणामक्रमाणां निमित्तानाञ्च साक्षात्कारेण अतीतानागतं ज्ञानं भवेत्, सतां क्रियादिरूपनिमित्तानां तथा च सत्त्वरूपाणां धर्मिणां सम्यग्विज्ञानात् धर्मव्यवस्थितिविज्ञानमेव अतीतानागतं ज्ञानमित्यर्थः ॥ ३४ ॥

नासतो विद्यते भावो नाभावो विद्यते सतः ।
अतीतानागतं वस्तु तस्मादेवावतिष्ठते ॥ ३५ ॥

अतीतानागतं वस्तु कथं सत् तद्दर्शयति । स्पष्टम् ॥ ३५ ॥

अतीतानागतं ज्ञानं स्वप्नादौ सम्भवेत्ततः ।
सत्त्वं तज्ज्ञेयवस्तूनां लोकदृष्ट्याऽपि गम्यते ॥ ३६ ॥

यतः निर्विषयं ज्ञानं न सम्भवेत् ततः अतीतानागतज्ञानस्य विषयः सन्, लौकैरपि स्वप्नादौ अतीतोऽनागतश्च विषयः कदाचिद् विज्ञायते ॥ ३६ ॥

अतीतानागते ज्ञाने ज्ञायन्ते विषयाः सन्तः ।
ज्ञेयस्याप्यतिवैचित्र्ये सत्त्वशुद्ध्या प्रसिध्येत्तत् ॥ ३७ ॥

यतः अतीतानागतं वस्तु सत् ततः सतामेव विषयाणां विज्ञानम् अतीतानागतं ज्ञानम् तत्र ज्ञेयस्य अतिवैचित्र्येऽपि सत्त्वशुद्धौ तज्ज्ञानं सिध्येत्, उक्तञ्च भगवता सूत्रकृता "तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम्" इति ॥ ३७ ॥

शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् १७

अर्थाश्चाप्रत्ययाः शब्दा असंकीर्णाः स्वभावतः ।
व्यवहारात्तु सांकर्यं तेषां सङ्केतपूर्वकात् ॥ ३८ ॥

सर्वभूतरुतार्थज्ञानं व्याख्यातुमुपक्रमते, शब्दाः पदानि अर्था गवादयः, प्रत्यया मनोगताः एते स्वभावतः असंकीर्णाः पृथग्भूताः, सङ्केतपूर्वकाद् व्यवहाराद् अयं प्राणी गौरिति गोशब्देन सङ्केतीकृतं गोपदं व्यवह्रियते, एवम् अभेदेन व्यवहारात् शब्दार्थप्रत्ययानां परस्पर साङ्कर्यम् ॥ ३८ ॥

प्रयुक्ताः कैश्चिदेवार्थैः सर्वे शब्दा हि वाग्भवाः ।
असङ्कीर्णान् समालम्ब्य शब्दान् संवेत्ति संयमात् ॥
यद्यदर्थः प्रयुक्तास्तेऽर्थान् तान् वक्तुर्मनोगतान् ।
सर्वभूतरुतार्थानां ज्ञानमेवं प्रसिध्यति ॥ ३९ ॥

सर्वे वाग्भवा उच्चारिताः शब्दाः कैश्चिदेवार्थैरुच्चारिता भवेयुः, शब्दार्थप्रत्ययानां प्रविभागज्ञः असंकीर्णान् शब्दान् आलम्बनीकृत्य संयमाद् यद्यदर्थेषु ते शब्दाः प्रयुक्ताः तान् वक्तुर्मनोगतान् अर्थान् संवेत्ति, एवं सर्वभूतरुतार्थज्ञानं प्रसिध्यति ॥ ३९ ॥

संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् १८ ।

कर्माशया वासनाश्च संस्कारा द्विविधा मताः ।
विपाकहेतवश्चाद्याः स्मृतिमात्रफलाऽपरा ॥ ४० ॥

वासना स्मृतिफला यतः सा जात्यायुःसुखदुःखानामनुभवात् जाता, सा चैव तान् स्मारयति ॥ ४० ॥

साक्षात्कारेण तेषां हि संस्काराणाञ्च संयमात्
विज्ञानं पूर्वजातीनां संस्कारा यत्र सञ्चिताः ॥ ४१ ॥

यासु जातिषु संस्काराः सञ्चितास्ताः जातीः विजानाति ॥ ४१ ॥

प्रत्ययस्य परचित्तज्ञानम् १९ ।

न च तत् सालम्बनं तस्याविषयीभूतत्वात् २० ।

रागादींश्च स्वकान् साक्षात्कृत्वा प्रत्ययमात्रकान् ।

परचित्तं विजानीयात् पश्चात्तत् सावलम्बनम् ॥ ४२ ॥

प्रत्ययमात्रान् चित्तावस्थारूपान् स्वकान्, रागादीन् साक्षात्कृत्य परचित्तस्थरागादीनपि विजानाति, एवं प्रत्ययमात्रं जानाति न तेषामालम्बनम्, यतो रागादयो वासनानुशयाः सुखादिस्मरणरूपाः ततः स्वरूपतस्ते आलम्बनभूतविषयैरननुविद्धा, अतस्तेषां विज्ञानेऽपि यदालम्ब्य ते जाताः तन्न जानाति, आलम्बनाऽवर्जनाच्च तद्विजानाति ॥ ४२ ॥

कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्द्धानम् २१ ।

रूपे कायस्य संयमात् स्तभ्नाति ग्राह्ययोग्यता ।
अग्राह्यत्वं ततश्चाक्ष्णो रूपान्तर्द्धानमीरितम् ॥ ४३ ॥

स्पष्टम् ॥ ४३ ॥

सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा २२ ।

फलोपक्रमयुक्तञ्च तथा च निरुपक्रमम् ।
आयुष्करं भवेद् द्वेधा कर्म्म तत्र च संयमात् ।
वेत्ति कालं प्रायणस्य वाऽरिष्टेभ्यो हि वेत्ति तत् ॥ ४४ ॥

आयुर्विपाकः कर्मसंस्कारः द्विविधः फलोपक्रमयुक्तः निरुपक्रमश्च । यत् फलोन्मुखं कर्म्म तत् सोपक्रमं, यत् चिरेण फलिष्यति तन्निरुपक्रमम् । तत्र संयमात् प्रायणकालं विजानाति । अरिष्टेभ्यो वा तद्विजानीयात् । अरिष्टानि मृत्युचिह्नानि । दैहिकक्रियायाम् अवहितो भूत्वा तन्मूलभूतः संस्कारः साक्षात्कर्तव्यः ॥ ४४ ॥

मैत्र्यादिषु बलानि २३ ।

बलेषु हस्तिबलादीनि २४ ।

करुणा मुदिता मैत्री विभाव्याथ च संयमात् ।
बलं मैत्र्यादि चाप्नुयाद्–बलेष्विभबलादीनि ॥ ४५ ॥

करुणादिभावनाः प्राग्व्याख्याताः, ताः विभाव्य अथ अनन्तरं तस्यां भावनायां संयमात् मैत्रीबलादीनि लभते, इभादीनां बलेषु संयमाच्च इभबलादीनि लभते ॥ ४५ ॥

प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् २५ ।

ज्योतिष्मत्याः प्रवृत्त्याश्च विन्यस्यालोककं सूक्ष्मे ।
अथ व्यवहिते दूरे तमर्थमधिगच्छति ॥ ४६ ॥

ज्योतिष्मत्या प्रवृत्त्या य आलोकः प्रकाशो या आलोक इव द्योतिका ज्ञानशक्तिरित्यर्थः । तम् आलोकं सूक्ष्मे परमाणुषु पर्वतादिव्यवहिते दूरे च विषये विन्यस्य तमर्थं विजानाति ॥४६॥

भुवनज्ञानं सूर्य्ये संयमात् २६ ।

ज्योतिष्मत्या हृदो यो वै ऊर्द्ध्वमालोक उद्गतः ।
सूर्य्यद्वारं स सौषुम्णं तत्र संयमतो भवेत् ।
भुवनानां हि विज्ञानं स्वालोकनिशमात्मकम् ॥ ४७ ॥

ज्योतिष्मत्या प्रवृत्त्या यः आलोकः हृदयात् ऊर्द्ध्वमुद्गतः स सौषुम्णं सूर्य्यद्वारम्, यथोक्तम् "अनन्ता रश्मयस्तस्य दीपवद् यः स्थितो हृदि । ऊर्द्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्य्यमण्डलम्, ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम्" इति, तत्र सूर्य्यद्वारे संयमं कृत्वा त्रिभुवनविज्ञानं भवति, तच्च विज्ञानं स्वालोकेन दर्शनस्वरूपम्, न तस्मिन् दर्शने द्योतकस्य सूर्यादेरपेक्षाऽस्तीति भावः, तत्र विभुः ज्ञानशक्तिः शब्दस्पर्शादिविषयेषु स्वयं संयुज्य अर्थं प्रकाशयतीति ॥ ४७ ॥

चन्द्रे ताराव्यूहज्ञानम् २७ ।

अर्थवत्याः प्रवृत्त्या यद्-द्योतकेन हि दर्शनम् ।
इन्द्रियोत्कर्षरूपं तच्चन्द्रद्वारं समीरितम् ।
ताराणां व्यूहविज्ञानं चन्द्रद्वारे हि संयमात् ॥ ४८ ॥

अर्थवत्याश्च प्रवृत्त्याः यद् दर्शनम् तद् द्योतकेन दर्शनं विज्ञानम्, तस्मिन् ज्ञाने विषया इन्द्रियप्रणालिकया चित्तमुपरञ्जयन्ति चित्तस्य विभुताया अनधिगतत्वात्, द्योतकेन विज्ञानं द्विविधं लौकिकमलौकिकञ्च, तत्र अर्थवत्या प्रवृत्त्या इन्द्रियोत्कर्षजातं प्रत्यक्षविज्ञानमलौकिकम्, सूर्य्यद्वारं सुषुम्णा चन्द्रद्वारञ्च विज्ञानं द्वारमिन्द्रियरूपं, तत्र संयमं कृत्वा इन्द्रियोत्कर्षं सम्पाद्य ताराणां व्यूहान् विजानाति योगी ॥ ४८ ॥

ध्रुवे तारागतिज्ञानम् २८ ।

ध्रुवे चोद्ध्र्वविमानेषु कृत्वा निश्चलसंयमम् ।
तारागतिं विजानीयात् स्वस्थैर्य्यस्य ह्यपेक्षया ॥ ४७ ॥

ध्रुवे निश्चलतारके ऊद्ध्र्वविमानेषु च निश्चलं यथा तथा संयमं कृत्वा स्वस्थैर्य्यस्य अपेक्षया तारागतिं विजानीयात् ॥ ४९ ॥

नाभिचक्रे कायव्यूहज्ञानम् २९ ।

कण्ठकूपे क्षुत्पिपासानिवृत्तिः ३० ।

कायस्य व्यूहविज्ञानं नाभिचक्रे हि संयमात् ।
क्षुत्पिपासानिवृत्तिः स्यात् कण्ठकूपे च संयमात् ॥ ५० ॥

कण्ठगता नाडी या वाग्यन्त्रीयतन्तूनामधस्ताद् यया च पुप्फुसः वायुना आपूर्य्यते स कण्ठकूपः, तत्र संयमेन नैश्चल्यात् क्षुधादिबोधयोः पीडाकरं चाञ्चल्यं निवर्त्तते ॥ ५० ॥

कूर्मनाड्यां स्थैर्यम् ३१ ।

क्लोममध्यगता नाडी कूर्माख्या तत्र संयमात् ।
चित्तस्थैर्यं भवेदेव शारीरस्थैर्य्यपूर्वकम् ॥ ५१ ॥

कूपादधः उरसि क्लोमस्य पुप्फुसस्य मध्यगता नाडी कूर्माख्या, कूर्मनाड्यां स्थैर्यमिति सूत्रम्, स्थैर्यमत्र चित्तस्थैर्यम्, ज्ञानरूपाभिः सिद्धिभिः सह उक्तत्वात् ॥ ५१ ॥

मूर्द्धज्योतिषि सिद्धदर्शनम् ३२ ।

ज्योतिः शिरःकपालेऽन्त-र्भास्वरं तत्र संयमात् ।
दर्शनं स्याच्च सिद्धानामन्तरीक्षविचारिणाम् ॥ ५२ ॥

स्पष्टम् ॥ ५२ ॥

प्रातिभाद्वा सर्वम् ३३ ।

प्रातिभं नाम तारकं सर्वं जानाति तेन तत् ।
पूर्वरूपं विवेकज-ज्ञानस्योषा यथा रवेः ॥ ५३ ॥

यथा रवेः उषा पूर्वरूपं तथा विवेकजज्ञानस्य पूर्वरूपं प्रातिभं स्वप्रातिभोत्थमित्यर्थः ज्ञानम्, तच्च तारकं नाम, प्रातिभात् सर्वविज्ञानम् ॥ ५३ ॥

हृदये चित्तसंवित् ३४ ।

हृदये पुण्डरीकं यद्-ब्रह्मवेश्मेति कथ्यते ।
विज्ञाननिलये तत्र बुद्धिसंविद्धि संयमात् ॥ ५४ ॥

बुद्धिसंवित् चित्तसत्त्वस्थितिरूपं ज्ञानम्, बुद्धितत्त्वसाक्षात्कारात् पुरुषज्ञानप्राप्तिर्भवति ॥ ५४ ॥

सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात् स्वार्थसंयमात् पुरुषज्ञानम् ३५ ।

द्रष्टाऽत्यन्तविधर्मा स्याद्-दृश्यात् सत्त्वाच्च पुरुषः ।
एकत्वप्रत्ययस्तयोर्ज्ञाताऽहमितिरूपकः ।
स भोगः स्यात् परार्थश्च सोऽर्थस्तु ग्रहीतुर्भवे ॥ ५५ ॥
प्रत्ययः पुरुषाकारो ग्रहीता स्वार्थ एव सः ।
पुरुषाकारसंप्रज्ञा जायते तत्र संयमात् ॥ ५६ ॥

द्रष्टा पुरुषः दृश्याद् बुद्धिसत्त्वाद् अत्यन्तविधर्मा, तयोर्द्रष्टृदृश्ययोः, अर्थानां ज्ञाताऽहमित्यात्मकः य एकत्वप्रत्ययः स भोगः, भोगप्रत्ययः परार्थः परस्य ग्रहीतुरर्थः, अतः ग्रहीता स्वार्थः, स च ग्रहीता पुरुषाकारः प्रत्ययः, तत्र ग्रहीतृमात्रे संयमात् पुरुषविषया पुरुषसम्बन्धिनी प्रज्ञा प्रजायते, न च पुरुषः प्रज्ञायाः साक्षाद्-विषयो भवति किन्तु चित्तं साक्षात्कृत्य चित्तात्परः चित्तप्रतिसंवेदी पुरुष इत्यादि पुरुषसम्बन्धिनी अथवा बुद्धिरुपतिष्ठते, तस्मात्स्थितिरेव पुरुषज्ञानम्, तस्यापि निरोधे द्रष्टुः स्वरूपप्रतिष्ठारूपं कैवल्यम् ॥ ५६ ॥

ततः प्रातिभ-श्रावणवेदनाऽऽदर्शास्वादवार्ता जायन्ते ३६ ।

ततश्च प्रातिभं ज्ञानं ततः श्रावणवेदने ।
आदर्शाऽऽस्वादवार्ताश्च पञ्च दिव्यार्थसंविदः ॥ ५७ ॥

पुरुषदर्शनात् सिद्धयः प्रातिभादयः स्वत एव प्रवर्तन्ते, प्रातिभं प्राग् व्याख्यातं श्रावणवेदनादर्शाऽऽस्वादवार्ताः यथाक्रमं दिव्य-शब्द-स्पर्श-रूप-रस-गन्ध-विषयाः पञ्च संविदः ॥५७॥

ते समाधावुपसर्गा व्युत्थाने सिद्धयः ३७ ।

उपसर्गाः समाधौ हि ते सर्वे प्रातिभादयः ।
व्युत्थितेनैव चित्तेन मन्यन्ते खलु सिद्धयः ॥ ५८ ॥
ज्ञानरूपा विभूतिश्च व्याख्यातैताः समासतः ।
क्रियारूपं तथैश्वर्यं समाख्यातमतःपरम् ॥ ५९ ॥

स्पष्टम् ॥ ५८ ॥ ५९ ॥

बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ३८ ।

कर्माशयवशाद्-बन्धः शरीरे लोलचेतसः ।
समाधिशिथिले बन्धे नाडीषु मनसो गतिम् ।
बुद्ध्वा च परदेहेषु सिध्येदावेशयोग्यता ॥ ६० ॥

चित्तं लोलस्वभावं न कुत्रचित् चिरमाबद्धं तिष्ठति, शरीरे पुनस्तस्य कर्माशयवशाद् बन्धः, यतः कर्माशयस्य विपच्यमानता एव शरीरस्थितिहेतुः, समाधिना शरीरनिरपेक्षतायां जातायां देहचित्तयोः बन्धशैथिल्याद् नाडीमार्गेषु मनसः प्रचारस्य विज्ञानाच्च परशरीरावेशः६०

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ३९ ।

ऊर्द्धस्रोत उदानः स्यात् तत्र देहधातुस्थिते ।
ऊर्द्धगे वेदनारूपे संयमाल्लघुता भवेत् ॥
तस्माच्च स्वेच्छया योगी मार्गेण ह्यर्चिरादिना ।
उत्क्रमेच्च सजेन्नैव कण्ट-पङ्क-जलादिषु ॥ ६१ ॥

उदान ऊर्द्ध्वस्रोतः प्राणभेदः, तस्माजाता देहधातुगता सर्वदेहव्यापिनी ऊर्द्ध्वगा स्पर्शवेदना ध्यायिभिरालम्ब्यते, तत्रालम्बने संयमात् कायस्य लघुता भवेत्, तस्माच्च योगी स्वेच्छया अर्चिरादिमार्गेण उत्क्रमणक्षमो भवति तथा जलपङ्ककण्टकादिषु न सजति ॥६१॥

समानजयाज्ज्वलनम् ४० ।

अन्नादीन् सर्वगात्रेषु समानो हि नयेत् समम् ।
संयमात् समानं जित्वा प्रज्वलन्निव लक्ष्यते ॥ ६२ ॥

श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ४१ ।

अभिमानो य आकाशप्रतिष्ठः कर्ण एव सः ।
दिव्यं ख-श्रुति-सम्बन्ध-जयाच्छ्रोत्रं प्रवर्त्तते ॥ ६३ ॥

आकाशभूतप्रतिष्ठोऽभिमानः कर्णेन्द्रियम्, आकाशकर्णयोस्तादृशे सम्बन्धे संयमात् दिव्यं श्रोत्रं प्रवर्त्तते ॥ ६३ ॥

कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ४२ ।

आधाराधेयसम्बन्धं जित्वा चाकाशदेहयोः ।
लघुतूलसमापत्त्या सम्पद्याव्याहतां गतिम् ।
रश्म्यादीनपि चालम्ब्य गतिर्नभसि सिध्यति ॥ ६४ ॥

आकाशदेहयोराधाराधेयसम्बन्धं जित्वा संयमेन, ततः अव्याहतां गतिं सम्पद्य तथा च लघुतूलादौ समापन्नो लघुर्भूत्वा रश्म्यादीनपि आलम्ब्य नभसि गतिः सिध्यति ॥ ६४ ॥

बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ४३ ।

शरीराद्-बहिरस्मीति या देहापेक्षधारणा ।
सा कल्पिता तथा देह-निरपेक्षा ह्यकल्पिता ॥ ६५ ॥
वृत्ति-र्महाविदेहाख्या तत्र याऽकल्पिता ततः ।
क्लेशकर्मविपाकाख्यं सत्त्वस्य क्षीयते मलम् ॥ ६६ ॥

देहापेक्षा देहधर्मैरभिजातयोग्या विदेहधारणा कल्पिता, देहनिरपेक्षा धारणा अकल्पिता, सा हि महाविदेहा वृत्तिः शरीराद्बहिरस्मीति भावे संयमाद् भवति, ततः बुद्धिसत्त्वस्य क्लेशादिमलं क्षीयते ॥ ६५ ॥ ६६ ॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्-भूतजयः ४४ ।

स्थूल-स्वरूप-सूक्ष्मेषु चान्वयित्वार्थवत्त्वयोः ।
पञ्चरूपेषु भूतानां संयमादेव तज्जयः ॥ ६७ ॥

वक्ष्यमाणलक्षणेषु स्थूलादिभूतरूपेषु संयमात् भूतजयः ॥ ६७ ॥

षड्जादिभिर्विशेषैश्च तथाऽऽकारादिभिर्युताः ।
शब्दस्पर्शादयः स्थूलशब्देन परिभाषिताः ॥ ६८ ॥

षड्जर्षभ-शीतोष्ण-नीलपीत-मधुराम्लादयः शब्दादिगुणानां भेदाः । तद्भेदयुक्तं तथा आकारत्व-स्थावरत्व-जङ्गमत्वधर्मयुक्तं भूतरूपं स्थूलशब्देन परिभाषितम् ॥ ६८ ॥

भूतानाञ्च स्वरूपं स्यात् काठिन्यं स्नेह उष्णता ।
नोदना सर्वगामित्वं क्षित्यादीनां यथाक्रमम् ॥ ६९ ॥

येन येन धर्मेण प्राधान्यादिन्द्रियैः भूतानि गृह्यन्ते स तेषां प्रत्येकं स्वरूपम् । क्षितेः काठिन्यं स्वरूपं सूक्ष्मचूर्णसंयोगेन गन्धज्ञानसम्भवात् । अब्भूतस्य स्नेहस्वरूपं यतो रस्याः विषयाः तरलिताः सन्तः रसज्ञानमुत्पादयन्ति । तेजस उष्णतास्वरूपम् उष्णतानिष्ठत्वात् सर्वरूपस्य । उष्णत्वधर्मकस्य रवेः रूपेणैवास्माकं रूपज्ञानम् । त्वक्श्लिष्टेन प्रणामिना वायुना स्पर्शज्ञानमिति वायुभूतस्य स्पर्शमात्रलक्षणस्य प्रणामित्वं स्वरूपम् । शब्दज्ञानम् इतरज्ञानेभ्योऽव्याहतमिति शब्दलक्षणस्य आकाशभूतस्य सर्वगामित्वं स्वरूपम् ॥ ६९ ॥

सूक्ष्मरूपाणि पञ्च स्युस्तन्मात्राण्यथवाऽणवः ॥ ७० ॥

तन्मात्राणि अथवा शब्दादीनाम् अणवः भूतानां सूक्ष्मं रूपम् ॥ ७० ॥

क्रिया-स्थिति-प्रकाशात्म-गुणधर्मानुसारिणी ।

त्रेधाऽवस्था हि भूतानामन्वयित्वमितीरितम् ॥ ७१ ॥

क्रियादयः सत्त्वादिगुणधर्माः तदनुसारिणी या त्रेधा भूतानाम् अवस्थितिः सा अन्वयित्वं नाम चतुर्थं भूतरूपम्, तद्यथा ज्ञानेन्द्रियाधिष्ठानरूपेण भूतानां सात्त्विकी अवस्था कर्मेन्द्रियाधिष्ठानरूपेण राजसी अवस्था, प्राणाधिष्ठानरूपेण तामसी अवस्था, यथा वा प्रकाश्यता सात्त्विकी, कार्यता राजसी, हार्यता तामसी चावस्थितिर्भूतानामिति ॥ ७१ ॥

भोगापवर्गयोग्यत्वमर्थवत्त्वं तथारूपम् ॥ ७२ ॥

सर्वाणि भूतानि भोगार्थानि तथा च अपवर्गार्थानि इत्येवं मत्वा परमार्थदृशि अवधारणं तेषाम् अर्थवत्त्वं नाम पञ्चमं रूपम् ॥ ७२ ॥

ततोऽणिमादिप्रादुर्भावः कायसम्पत् तद्धर्मानभिघातश्च ४५ ।

गावो वत्सानुसारिण्य इव भूतान्यनेन च ।

सङ्कल्पानुविधायीनि स्युस्तन्मात्राणि योगिनाम् ॥ ७३ ॥

पञ्चसु भूतरूपेषु संयमात् तज्जयेन भूतानि च भूतप्रकृतितन्मात्राणि च योगिनः सङ्कल्पानुविधायीनि स्युः, यथा सङ्कल्पयति तथा भूत-तत्प्रकृतयो व्यवतिष्ठन्ते इत्यर्थः, यथा वत्सानुसारिण्यः गावः तथा योगिसङ्कल्पानुसारिण्यः भूत-तत्प्रकृतयः ॥ ७३ ॥

अणिमा लघिमा चैव महिमा प्राप्तिरेव च ।

स्थूलादेताः स्वरूपाच्च प्राकाम्यं याऽहतेच्छता ॥ ७४ ॥

सूक्ष्मं जित्वा वशित्वञ्च येनावश्यो वशी भवेत् ।

अन्वयादीशितृत्वञ्च येनेष्टे प्रभवाप्ययौ ॥ ७५ ॥

अस्माच्च अणिमादयः प्रादुर्भवन्ति, अणिमादयः अष्टौ सिद्धयः, तत्र "अणिमा भवत्यणुः, लघिमा लघुर्भवति, महिमा महान् भवति, प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रमसम्" इति, एताश्चतस्रः सिद्धयः स्थूलरूपजयात् प्रवर्त्तन्ते, स्वरूपाच्च अविहतेच्छतारूपं प्राकाम्यम्, सूक्ष्मरूपजयाद् वशित्वं, येन वशी योगी परेषामवश्यः भवति, अन्वयित्वजयाद् ईशितृत्वं येन भूतानां प्रभवाप्ययौ ईष्टे ॥७४ ॥ ७५ ॥

यत्र कामावसायित्वमर्थवत्त्वजयात्ततः ।

भूत-तत्प्रकृतीनाञ्च स्यात् सङ्कल्पानुगा स्थितिः ॥ ७६ ॥

यत्र कामावसायित्वं सर्वोत्तमा, अस्या अन्तर्गता इतराः, ततः यत्र कामावसायित्वे भूत-तन्मात्राणां योगिसङ्कल्पानुगामिनी व्यवस्थितिः ॥ ७६ ॥

एता अष्टौ भवेयुश्च कायसम्पत्तथा भवेत् ।

भूतैश्च कायधर्माणां भवेदनभिघातता ॥ ७७ ॥

भूतजयादेता अष्टौ सिद्धयः सम्भवेयुस्तथा च वक्ष्यमाणलक्षणा कायसम्पत् तथा च कायधर्मानभिघातो भवेत ॥ ७७ ॥

रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ४६ ।

सुरूपता च लावण्यं वज्रवद् दृढसंहतिः ।

शरीरावयवानाञ्च कायसम्पत् तथा बलम् ॥ ७८ ॥

कायसम्पदुच्यते, स्पष्टम् ॥ ७८ ॥

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ४७ ।

ग्रहणे च स्वरूपे च ह्यस्मितायां तथाऽन्वये ।
चार्थवत्त्वे हृषीकाणां जयो रूपेषु संयमात् ॥ ७६ ॥

इन्द्रियजय उच्यते, ग्रहणादिषु इन्द्रियाणां रूपेषु संयमात्तज्जयः ॥ ७९ ॥

ग्रहणं चेन्द्रियाणां स्यात् शब्दस्पर्शादिवृत्तिर्या ।
स्वरूपं शब्दस्पर्शादिः प्रत्येकं सात्त्विकी ख्यातिः ॥ ८० ॥

तत्र ग्रहणं शब्दादिषु पञ्चसु विषयेषु वृत्तिः ज्ञायमानतेत्यर्थः, विषयग्रहणव्यापार इन्द्रियाणामाद्यं रूपं ग्रहणम्, स्वरूपं कर्णस्य शब्दरूपा सात्त्विकी ख्यातिः त्वगिन्द्रियस्य स्पर्शरूपेत्यादिः प्रकाशभावः प्रातिस्विक इन्द्रियाणां प्रत्येकं स्वरूपम् ॥ ८० ॥

अस्मिता तदुपादानं तानि तद्व्यूहभेदाः स्युः ।
अन्वयित्वार्थवत्त्वे च विज्ञेये भूतवद्रूपे ॥ ८१ ॥

अस्मिताख्यमिन्द्रियरूपम् इन्द्रियाणामुपादानम्, इन्द्रियाणि अस्मितायाः व्यूहभेदाः, इन्द्रियगतमहिमानमालम्ब्य संयमः प्रवर्त्तनीयः, भूतवत् प्रकाश-क्रिया-स्थिति-धर्मानुसारिरूपमन्वयः, भूतानि व्यवसेयात्मकानि इन्द्रियाणि तु व्यवसायात्मकानि, भोगापवर्गसाधनस्य करणता तेषाम् अर्थवत्त्वं रूपम् । ॥ ८१ ॥

ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ४८ ।

अनुत्तमो मनस्तुल्यो गतिलाभश्च खानि च ।
स्युर्देहनिरपेक्षाणि दूरार्थे वृत्तिमन्त्यपि ॥
सर्वासां प्रकृतीनाञ्च विकृतीनां जयस्ततः ।
मधुप्रतीकसंज्ञाः स्युरेतास्तिस्रो हि सिद्धयः ॥ ८२ ॥

इन्द्रियरूपजयाद् मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ८२ ॥

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वञ्च ४९ ।

पुम्बुद्ध्योरन्यताख्यातौ प्रतिष्ठस्य च चेतसः ।
सर्वाधिष्ठातृता सिध्येत् सर्वज्ञातृत्वमेव च ॥ ८३ ॥
सर्वे भावा गुणात्मानो दृश्यत्वेनोपतिष्ठन्ते ।
त्रैकालभावविज्ञानं ज्ञाने तत्र विवेकजे ॥ ८४

येन शक्तिज्ञानयोः परा काष्ठा तदुच्यते, बुद्धिपुरुषयोर्विवेकप्रत्यये स्थितचित्तस्य योगिनः सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वञ्च, सर्व गुणात्मानः भावास्तस्य योगिनो युगपद् दृश्यत्वेनोपवर्त्तन्ते, एतत् सर्वभावाधिष्ठातृत्वम्, भूतभवद्भविष्यद्विषयाणां सर्वेषां सर्वथा ज्ञानं सर्वज्ञातृत्वम् ॥ ८३ ॥८४॥

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ५० ।

विवेकजे तु सार्वज्ञ्ये ऐश्वर्ये चापि वैराग्यात् ।
संक्षये क्लेशबीजानां भूतिमार्गेण कैवल्यम् ॥ ८५ ॥

विवेकजे सर्वज्ञातृत्वे सर्वभावाधिष्ठातृत्वे चापि वैराग्यात् परवैराग्यादित्यर्थः, क्लेशबीजानां क्लिष्टसंस्काराणां सम्यक् क्षये कैवल्यम्, एवं विभूतिमार्गेण कैवल्यम्, प्रथमे पादे सूत्रकृता समाधिदृशा कैवल्यं प्रदर्शितं, द्वितीये हेयादि-चतुर्व्यूहदृशा, अत्र च विभूतिदृशा, चतुर्थे पुनर्बुद्धिपुरुषयोर्विभेदे विचारदृशा कैवल्यं न्यायेन सङ्गमय्य प्रदर्शितमिति ॥ ८५ ॥

स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ५१ ।

प्रवृत्तो यस्य चालोको योगी प्रथमकल्पिकः ।

ऋतम्भरा यस्य प्रज्ञा स योगी मधुभूमिकः ॥ ८६ ॥

आलोकः अलौकिकं ज्ञानम्, स्पष्टमन्यत् ॥ ८६ ॥

प्रज्ञाज्योतिस्तृतीयः स्याद् भूतेन्द्रियवशी योगी ।
चित्तहानिरतिक्रान्तभावनीयस्य कार्यन्तु ॥ ८७ ॥

भूतेन्द्रियजयी तृतीययोगभूमौ स्थितः योगी प्रज्ञाज्योतिः संज्ञकः, चतुर्थयोगभूमौ स्थितः अतिक्रान्तभावनीयसंज्ञकः तस्य चित्तहानिः चित्तस्य प्रतिसर्ग एव एकं कार्यमवशिष्यत इत्यर्थः ॥ ८७ ॥

स्थानिभिर्दिव्यभोगार्थं देवैरुपनिमन्त्रितः ।
योगी कुर्वीत कैवल्यं लिप्सुः सङ्गस्मयौ हि न ॥ ८८ ॥

तत्र स्थानिनो देवा मधुभूमिकान् उपनिमन्त्रयन्ते, तदा कैवल्यं लिप्सुः योगी दिव्यभोग्यैः सह सङ्गं न कुर्वीत, सङ्गमकृत्वा स्मयमपि न कुर्वीत, अहो अहं देवानामपि प्रार्थनीय इत्यादिः स्मयः ॥८८॥

संसाराग्नौ मयाऽहो विपचनमनिशं वेद्यमानेन घोरे
जन्मापायान्धकारे महति विपरिवर्त्तं मयाऽऽप्तेन दिष्ट्या ।
प्राप्ता क्षेमा महाक्लेशतिमिरहरणा योगदीपस्य दीप्ति-
र्लब्धालोकः पतेयं न विषयमृगतृष्णाद्रुशा वञ्चितोऽहम् ॥८९॥

एवं मत्वा न कुर्वीत स्मयं सङ्गञ्च योगवित् ।
यतोऽनिष्टप्रसङ्गः स्यात् तृट्प्रमादादिभिः पुनः ॥९०॥

संसाराग्नावित्यादि । सङ्गस्मययोः प्रतिपक्षभावनम्, अहो घोरे संसाराग्नौ अनिशं निरन्तरं विपचनं वेद्यमानेन तथा महति मृत्युजन्मान्धकारे विपरिवर्त्तमानेन मया दिष्ट्या क्षेमा महाक्लेशतिमिरहरणा योगप्रदीपदीप्तिः प्राप्ता, लब्धालोकः सोऽहं विषयमृगतृष्णिकया वञ्चितो न पुनस्तत्रैव पतेयम्, एवं मत्वा दिव्यविषयसङ्गं स्मयञ्च न कुर्वीत, यतः तृष्णाप्रमादादिभिः पुनरनिष्टप्रसङ्गः स्यात् ॥ ८९ ॥ ९० ॥

क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम् ५२ ।

क्षणतत्क्रमयोर्ज्ञानं तारकाख्यं विवेकजम् ।
विवेकख्यातिहीनस्य योगिनः संयमादपि ॥ ९१ ॥

तारकाख्यं विवेकजं ज्ञानं विवेकख्यातिहीनस्यापि योगिनः सम्भवेत् क्षणक्षणक्रमयोः संयमात् ॥ ९१ ॥

परमाणुर्हि कालस्य क्षणो ज्ञेयश्च विक्रियाः ।
सम्भवेयुः क्षणं व्याप्य क्रमः पूर्वस्य चोत्तरः ॥ ९२ ॥

क्षणः कालस्य परमाणुः परमापकर्षपर्यन्तः काल इत्यर्थः, सर्वा विक्रियाः परिणामाः क्षणं व्याप्य सम्भवेयुः, उत्तरक्षणं पूर्वक्षणस्य क्रमः, क्षणतत्क्रमयोः संयमात् सूक्ष्मतमान् परिणामान् विजानाति योगी ततः चरमविशेषविज्ञानात्मकं विवेकजं ज्ञानम् ॥ ९२ ॥

क्षणाश्च भाविनो भूता न वर्त्तन्ते हि वस्तुतः ।
तस्मादविद्यमानास्ते पदार्था बुद्धिनिर्मिताः ॥ ९३ ॥

क्षणं समासतः विवृणोति, ये नो वर्त्तमानाः क्षणास्ते एव भूता वा भाविनो वा क्षणाः, अतो भूतभाविनः क्षणा बुद्धिनिर्मिता वैकल्पिकाः पदार्था अविद्यमानत्वात्, ते भूतभाविनः क्षणा यथार्थतः कल्पितवस्त्वधिकरणभूता अविद्यमानपदार्थाः ॥ ९३ ॥

अतीतानागतं वस्तु यस्मादस्ति स्वरूपतः ।
वर्त्तमानः क्षणस्तस्मात् सत्त्वाधिकरणं मतम् ।

विवेकजेऽक्रमे ज्ञाने स क्षणो ह्यनुभूयते ॥ ९४ ॥

अतीतानागतं वस्तु यस्मात् स्वरूपतः स्वकारणे अविभागापन्नमस्ति, तस्माद् अतीतानागतानामपि वस्तूनां वर्त्तमानलक्षणयोग्यत्वादित्यर्थः, वर्त्तमान एक एव क्षणः सत्त्वानामधिकरणं वस्तुपतित इत्यर्थः, विवेकजे अक्रमे ज्ञाने यत्र अतीतानागतान्यपि वस्तूनि वर्त्तमानत्वेन विज्ञायते तत्र स एक एव वर्त्तमानः क्षणः अनुभूयते योगिभिः, तदा सर्वमेव वर्त्तमानं, नास्ति किञ्चिदतीतमनागतं वा, तदा च कालाख्य-विकल्पज्ञानंनिवृत्तिः ॥ ९४ ॥

जातिलक्षणदेशैरन्यताऽवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ५३ ।

तारकं सर्वविषयं सर्वथाविषयमक्रमञ्चेति तद्-विवेकजं ज्ञानम् ५४ ।

जातिलक्षणसाम्याच्च तुल्ये देशे च संस्थितेः ।
द्रव्ययोर्भेदविज्ञानं तुल्यं विज्ञायमानयोः ॥ ९५ ॥
ज्ञानं स्वप्रतिभोत्थं तत् तारकं यद्विवेकजम् ।
युगपत् सर्वथा सर्वं ख्यापयेत्तदनुत्तमम् ॥ ९६ ॥

विवेकजज्ञानस्य स्वरूपमुच्यते, यद्विवेकजं ज्ञानं तत् तारकं स्वप्रतिभोत्थमनौपदेशिकम् सर्वथाविषयं सर्वविषयम् अक्रमम्, तेन च जातिदेशलक्षणसाम्यात् तुल्यं प्रतीयमानयोर्द्रव्ययोरपि भेदविज्ञानम्, द्वौ सर्वतस्तुल्यौ सुवर्णगोलौ जात्या लक्षणैश्च तुल्यौ, तयोर्मध्ये पूर्वगोलश्चेदुत्तरगोलस्थितिदेशे अवस्थाप्यते तदा न शक्यं तदुत्तरं वा पूर्वं वेति अवधारयितुम्, योगिभिस्तु विवेकजज्ञानवद्भिः शक्यं जातिदेशलक्षणसाम्यात् । तुल्यं प्रतीयमानयोर्द्रव्ययोः भेदमवधारयितुम्, एवं सूक्ष्मं तत्त्वविज्ञानम् ॥ ९५ । ९६ ॥

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ५५ ।

संक्लेशहीनता चैव पौरुषप्रत्यये स्थितिः ।
बुद्धेः शुद्धिस्तथा साम्यं पुरुषेण सहेरितम् ॥ ९७ ॥
औपचारिकभोगस्य ह्यभावः शुद्धिरुच्यते ।
सत्त्वसाम्यं तथा पुंसः स्वरूपख्यातिरिष्यते ।
शुद्धिसाम्ये च पुंबुद्ध्योः कैवल्यमथ सिध्यति ॥ ९८ ॥

इति सांख्ययोगाचार्यश्रीहरिहरानन्दारण्यविरचितायां
योगकारिकायां तृतीयः पादः ।

अप्राप्तविवेकजज्ञानस्यापि यथा कैवल्यं तन्निरूपयति, बुद्धिपुरुषयोः शुद्धिसाम्ये कैवल्यमिति, तत्र रजस्तमोमलहीनता बुद्धेः शुद्धिः, पौरुषप्रत्यये स्थितिश्च बुद्धेः साम्यं पुरुषेण सह, पुरुषस्य शुद्धिस्तु न वास्तवी किन्तु औपचारिकभोगाभाव एव, पुरुषस्य बुद्धिसत्त्वे न सह साम्यमपि भवति स्वरूपख्यातिरूपे पौरुषप्रत्यये, एवं बुद्धिपुरुषयोः शुद्धिसाम्ये सिद्धे चित्तप्रतिसर्गद्वारेण कैवल्यं भवति प्राप्तविवेकजज्ञानस्याप्राप्तविवेकजज्ञानस्य चेति ॥९७॥९८॥

इति योगकारिकाटीकायां सरलायां तृतीयः पादः ।

---

# अथ चतुर्थः पादः ।

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः १ ।

ससाधनः समाधिस्तदवान्तरफलानि च ।
सम्प्रोक्तान्यत्र कैवल्यं फलं मुख्यं विचार्यते ॥ १ ॥

स्पष्टम् ॥ १ ॥

जन्मौषधि-तपोजाश्च मन्त्रजाश्चैव सिद्धयः ।
व्यञ्जिता व्यञ्जकैस्तैस्तैः पञ्चेति च समाधिजाः ॥ २ ॥

जन्मजा औषधिजा मन्त्रजास्तपोजाश्चेति सिद्धयः जन्मादिभिर्व्यञ्जकैर्व्यञ्जिताः, एताश्चतुर्विधास्तथा च समाधिजा इति पञ्चविधाः सिद्धयः, तत्र जन्मजादिचतस्रः सिद्धयः वासनास्थितानां सिद्धप्रकृतीनां पूर्वानुभूतानां प्रकृतीनां जन्मादिनिमित्तैरभिव्यक्तः प्रवर्तन्ते ॥२॥

जात्यन्तरपरिणामः प्रकृत्यापूरात् २ ।

सिद्ध्यां देहेन्द्रियाणाञ्च परिणामोऽन्यजातिषु ।
प्रकृत्यनुप्रवेशात् स्यादिन्धनेऽग्निप्रवेशवत् ॥ ३ ॥

जन्मजाऽऽदिषु पञ्चसु सिद्धिषु देहेन्द्रियाणां जात्यन्तरपरिणामः सिद्धप्रकृतीनामापूरणादेव भवति । यथा इन्धने अनुप्रविष्टः अग्निः इन्धनमग्नित्वेन परिणामयति तद्वत् । प्रकृतयस्तु करणापादानभूतायामस्मितायां निहितास्तिष्ठन्ति । तासु समाधिजसिद्धप्रकृतिव्यतिरिक्ताः सर्वा अन्या देवादिजातौ प्रागनुभूताः । समाधिजा सिद्धप्रकृतिस्तु अननुभूतपूर्वा । विनिष्पन्नसमाधेः पुनर्मनुष्यजन्माभावात् ॥ ३ ॥

सन्ति प्रकृतयोऽसंख्या अन्तर्निष्ठा उदित्वराः ।
निमित्तैस्तास्वभिव्यक्ता काचिदापूर्य्यते च तत् ॥ ४ ॥

अन्तःकरणे स्थिताः उदित्वराः उदयशीलाः असंख्याः प्रकृतयः सन्ति तासु प्रकृतिषु काचित् प्रकृतिः निमित्तैरभिव्यक्ता तद् देहेन्द्रियम् आपूर्य्यते । प्रकृत्यापूरणाद्देहेन्द्रियाणां जात्यन्तरपरिणतिः ॥ ४ ॥

निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ३ ।

कर्माण्येव निमित्तं स्यात् प्रकृतेर्व्यञ्जकं च तत्
न तत् प्रकृतिकार्य्यत्वात् प्रकृतीनां प्रयोजकम् ॥ ५ ॥
प्लावयत्यालिभेदाच्च निम्नं क्षेत्रं यथा जलम् ।
स्वयमेव प्रवर्तन्ते तथा प्रकृतयः क्षये ।
स्वस्वानिमित्तभावानां यथायोग्येन हेतुना ॥ ६ ॥

कर्माणि पुरुषकाररूपाणि धर्माधर्मरूपाणि अदृष्टकर्माणि च प्रकृत्यभिव्यक्तेर्निमित्तम् । निमित्तं प्रकृतीनां व्यञ्जकमपि न तत् तासां प्रयोजकं निर्मापकमित्यर्थः, प्रकृतिकार्य्यत्वात् न खलु कार्य्यं स्वकारणं प्रयोजयति । प्रकृतयस्तु स्वयमेव प्रवर्तन्ते । यथा आलिभेदात् स्वयं प्रवर्तितं जलं निम्नं क्षेत्रमाप्लावयति तथा स्वकीयानाम् अनिमित्तभूतानां भावानां क्षये प्रकृतयः स्वयं देहेन्द्रियमनुप्रविशन्ति । अनिमित्तक्षयस्तु यथायोग्येन निमित्तेन भवति । अस्मिन्नुदाहरणे प्रकृतिर्जलम् अनिमित्तमालिः निमित्तमालिभेदः क्षेत्रं देहेन्द्रियम् ॥ ५ ॥ ६ ॥

आर्द्रत्वे विगते चाग्निः काष्ठेऽनुप्रविशेद् यथा ।
विधर्मविगते तद्वत् प्रकृतिः सम्प्रवर्तते ॥ ७ ॥

आर्द्रत्वं काष्ठे वह्न्यनुप्रवेशस्यानिमित्तं तस्य विगम एव वह्न्यनुप्रवेशस्य निमित्तम् । निमित्तेनानिमित्तस्यापगमे वह्निर्यथा स्वयमेव काष्ठमनुप्रविशति तथा प्रकृतिः स्वकीयानां विधर्माणां विगमे स्वयमेव प्रवर्तते ॥ ७ ॥

मूर्तिषूपलनिष्ठासु वियोगेऽवयवानां हि ।
यथाऽभिव्यज्यते काचित् तथा स्यात् प्रकृतेर्व्यक्तिः ॥ ८ ॥

दृष्टान्तान्तरेण तदेव स्फोरयति । यथा उपलखण्डे असंख्याताः मूर्तयो निहितो विद्यन्ते उपलावयवानाञ्च वियोगे तासु काचिदभिव्यनक्ति तथा अन्तःकरणे असंख्याताःकरणप्रकृतयः विद्यन्ते तासु काचित् निमित्तेनाभिव्यज्यते ॥ ८ ॥

निर्माणचित्तान्यस्मितामात्रात् ४ ।

कारणं ह्यस्मितामात्रं तदुपादाय चेतसः ।
तिष्ठेदाप्रतिसर्गाद् यद् योगी निर्माणचेतसम् ।
हेतौ भूतानुकम्पादेः करोति स्वेच्छया वशी ॥ ६ ॥

अस्मितामात्रं चित्तस्य कारणमुपादानम् । तत् कारणमुपादाय वशी योगी भूतानुकम्पादेः हेतौ स्वेच्छया न तु परवश्येन आप्रतिसर्गात् स्थायीनि निर्माणचित्तानि करोति । यावच्च योगी निर्माणचित्तस्य प्रतिप्रसवमिच्छति तावत् तत् तिष्ठति । तत्प्रतिसर्गस्य स्वेच्छाधीनत्वाच्च निर्माणचित्तं बन्धहेतुर्भवति ॥ ९ ॥

प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ५ ।

योगी निर्माणचित्तानां बहूनाञ्च प्रयोजकम् ।
निर्मिमीते मनश्चैकं ततो भिन्नाः प्रवृत्तयः ॥ १० ॥

यदा योगी बहूनि चित्तानि निर्मिमीते तदा तत्सर्वेषां प्रयोजकमेकं चित्तं निर्मिमीते ततः बहूनां चित्तानां विभिन्नाः प्रवृत्तयः इति सङ्गच्छते ॥ १० ॥

तत्र ध्यानजमनाशयम् ६ ।

संस्कारसहितान्याद्यानि सिद्धचित्तेषु पञ्चसु ।
ध्यानजं योगिचित्तञ्च न स्यादाशयमूलकम् ॥ ११ ॥

पञ्चसु जन्मजादिषु सिद्धेषु साधनजातेष्वित्यर्थः, चित्तेषु मध्ये आद्यानि चत्वारि संस्कारसहितानि, वासनाकर्माशयौ तेषां मूलं सञ्चेयौ च भवत इत्यर्थः, ध्यानजं योगिचित्तञ्च वासनारहितम्, न हि तद् वासनाभावं समाधेरननुभूतपूर्वत्वात्, नापि च तद् वासनाकर्माशयौ सञ्चिनुते॥ ११ ॥

कर्माशुक्लाकृष्णं योगिनां त्रिविधमितरेषाम् ७ ।

अशुक्लाकृष्णकर्म स्यान्मुमुक्षोर्योगिनो यतः ।
कृष्णं शुक्लं तथा मिश्रं कर्मान्येषां त्रिधा भवेत् ॥ १२ ॥

कथं ध्यानजमनाशयं सिद्धचि तदुच्यते, यतः यस्माद् मुमुक्षोः कैवल्यमिच्छोर्योगिनः कर्म अशुक्लाकृष्णं तस्माद् न तत् कर्माशयं जनयेत्, इतरेषान्तु अयोगिनां कर्म त्रिविधं कृष्णं शुक्लकृष्णं शुक्लञ्चेति ॥ १२ ॥

कृष्णं दुःखफलं कर्म शुक्लं ध्यानादिशालिनाम् ।
परानुग्रहपीडे स्तः कृष्णशुक्लमुभे यतः ॥ १३ ॥

तत्र पापकृतां दुःखफलं कृष्णं कर्म, तपोध्यानादिपुण्यकृतां शुक्लं सुखफलं कर्म, यतः कर्मणि परानुग्रहपीडे उभे स्तः तत् कर्म कृष्णशुक्लं मिश्रफलम् ॥ १३ ॥

पुण्यपापविनाशि स्यादशुक्लाकृष्णकर्म च ।
यद्दग्धक्लेशबीजेन क्रियते योगिचेतसा ॥ १४ ॥

यत् कर्म विवेकाभ्यासादिरूपं दग्धक्लेशबीजेन योगिचित्तेन क्रियते तद् अशुक्लाकृष्णं पुण्यपापविनाशि कर्म, धर्माधर्मसंस्कारनाशित्वात् ॥ १४ ॥

ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ८ ।

जन्मादीनां विपाकानां संस्कारा वासना मताः ।
शुक्लादिकर्मभिर्व्यञ्ज्युः स्वस्वानुगुणवासनाः ॥ १५ ॥

जात्यायुर्भोगानां कर्मविपाकानां संस्काराः स्मृतिमात्रफलाः वासना व्यञ्ज्युः, तद्यथा शुक्लकर्माशयः तदनुरूपां दैवादिवासनां व्यनक्ति, तद्वासनामाश्रित्य पुनः शुक्लकर्माशयः दैवा-

दिदेहश्च सुखश्च चिरायुश्चेति स्वीयं विपाकं प्राप्नुयात् ॥ १६ ॥

जाति-देश-काल-व्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ९ ।

जन्मयोजनकल्पानां शतैर्व्यवहिता अपि ।
निरन्तरा अभिव्यञ्ज्युर्वासना व्यञ्जकाञ्जनाः ॥ १६ ॥

जाति-देश-काल-व्यवहितानामप्यानन्तर्यं वासनानाम्, यत्र देहे यत्र देशे यस्मिन् च काले वासना सञ्चिता यत्र च देहादौ तस्याः अभिव्यक्तिः तत् सञ्चयाभिव्यक्तयोः जात्यादीनां शतैर्व्यवधानेऽपि आनन्तर्यम्, स्वव्यञ्जकाञ्जना वासना अव्यवहिता एव अभिव्यञ्ज्युः ॥१६॥

यतः परस्परं जन्यजनकत्वं हि विद्यते ।
स्मृतिसंस्कारयोस्तस्माद्-वासनास्मरणे खलु ।
वासना-तदभिव्यक्तिरिति स्याच्च निरन्तरम् ॥ १७ ॥

संस्कारात् स्मृतिः स्मृतेः पुनः संस्कार इत्यस्ति स्मृतिसंस्कारयोः परस्परं जन्यजनकत्वम्, तस्माद् वासनास्मरणरूपे वासनाभिव्यक्ती वासना तदभिव्यक्तिश्चेति यथा निरन्तरं तथा स्यात्, अपरिदृष्टाया एव वासनाया अनुभूतिः स्मृतिः, तस्माद् वासनायाः स्मृतिर्देहान्तरे देशान्तरे कालान्तरे च सम्भवन्त्यपि न तत्तद्व्यवधानैर्व्यवधीयत इत्यर्थः ॥ १७ ॥

तासामनादित्वं चाशिषो नित्यत्वात् १० ।

न मा भूवं हि भूयासमित्याशीर्न स्वाभाविकी ।
अनुभूतिनिमित्तेन भयस्योत्पत्तिदर्शनात् ॥ १८ ॥
जातेषु जायमानेषु चात्माशीः सर्वदेहिषु ।
दर्शनात् सा च नित्येति सामान्येनानुमीयते ।
नित्यत्वादाशिषः सिद्धा वासनानामनादिता ॥ १९ ॥

मा न भूवं भूयासमित्या स्माशीर्मरणत्रासमूला न स्वाभाविकी, यतः न स्वाभाविकं वस्तु निमित्ताज्जायेत, भयन्तु अनुभवाज्जायते, तस्माद् मरणभयं न स्वाभाविकं किन्तु पूर्वमरणानुभवनिमित्तम्, आशिषो मरणभयसहभावित्वात् साऽपि न स्वाभाविकी, किन्तु सा नित्या सर्वत्र सर्वदा दर्शनात्, यथा शरीरं मरणधर्मकमिति सामान्यतोऽनुमीयते तथा आशिषो नित्यत्वमपि सामान्यतोऽनुमीयते । जातेषु जायमानेषु च प्राणिषु तद्दर्शनाद्, यत आशीर्नित्या ततः तत्सहभूमरणभयमपि नित्यम्, मरणानुभवजातां वासनामन्तरेण तु न भवेद् मरणभयम्, तस्माद्-वासना अनादिः ॥ १८ ॥ १९ ॥

हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ११ ।

हेतुभिश्च फलैश्च ता आश्रयेण चालम्बनैः ।
संगृहीता हि वासना अभावे तदभावता ॥ २० ॥

हेत्वादिभिर्वक्ष्यमाणैर्वासना संगृहीता अवतिष्ठन्ते, हेत्वादीनामभावे वासनानामभावः ॥२०॥

धर्माधर्मौ भवेतां हि हेतू च सुखदुःखयोः ।
तथा दुःखसुखे स्यातां हेतू च द्वेषरागयोः ॥
रागद्वेषौ पुनर्हेतू धर्माधर्मस्य कर्मणः ।
हेतुभिर्वासना एवं संगृहीता भवन्ति हि ॥ २१ ॥

धर्माधर्माभ्यां सुखदुःखे सुखदुःखाभ्यां रागद्वेषौ रागद्वेषाभ्यां पुनः धर्माधर्मौ एवं हेतुभिर्वासनाः फलन्त्यश्च जायमानाश्च वर्तन्त इति हेतुभिर्वासनासंग्रहः ॥ २१ ॥

वासनानां फलं स्मृतिः स्मृतेश्च वासना पुनः ।

साधिकारं तथाऽऽश्रयो वासनानां मतं मनः ।
चरितार्थे हि चेतसि वासनाऽवस्थितिः कुतः ॥ २२ ॥
आलम्बनानि तासां स्युर्विषया वस्तुरूपकाः ।
फलादिभिर्भवन्त्येवं संगृहीता हि वासनाः ॥ २३ ॥

वासनानां फलं सुखादिस्मृतिः स्मृतेः पुनर्वासना एवं फलेन वासनासंग्रहः, साधिकारं मनः वासनानामाश्रयः, यतः चरितार्थेऽधिकारशून्ये चित्ते वासनाः न स्थातुमुत्सहन्ते, एवमाश्रयेण वासनासंग्रहः, वासनानामालम्बनं बाह्यो वस्तुरूपो विषयः, विषयेणोपलक्षणेन रागादीनां स्मरति चित्तम्, एवमालम्बनेन वासनासंग्रहः ॥ २२ ॥ २३ ॥

अविद्या कारणं भावे हेत्वादीनाञ्च विद्यया ।
तत्प्रणाशे तथा तासामव्यक्ते प्रलयो भवेत् ॥ २४ ॥

हेत्वादीनां मूलकारणमविद्या तस्याः अभावे निरवस्थानाः वासनाः प्रलीयन्ते ॥ २४ ॥

अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद् धर्माणाम् १२ ।

अतीतानागतं वस्तु विद्यते च स्वरूपतः ।
धर्माणामध्वभेदाच्च व्यवहारस्तथा तथा ॥ २५ ॥

सतीनां वासनानां नास्त्यभावः किन्तु शाश्वतः अतीताध्वपरिग्रह एव तासां प्रलयः इत्यतीतानागतं वस्तु विवृणोति, अतीतानागतं वस्तु स्वरूपतः स्वकारणे संसृष्टं विद्यते, धर्माणाम् अध्वभेदात् कालभेदाद् इदमतीतमिदमनागतमिति व्यवहारः वैकल्पिककाललक्षितः २५

उदितानागतातीता अध्वानस्तेषु हि त्रयः ।
एकस्य बहवो धर्मा धर्मिणः प्रत्यवस्थिताः ॥ २६ ॥

उदितः अनागतः अतीतश्चेति त्रयः अध्वानः तेषु अध्वसु एकस्य धर्मिणो बहवो धर्माः प्रत्यवस्थिताः ॥ २६ ॥

तत्र चोदितधर्माणां स्वरूपमनुभूयते ।
व्यक्ता व्यङ्ग्याऽनुभूतिश्च द्वयोरपि सतोर्मता ॥ २७ ॥

तत्र वर्त्तमानाध्वगतानां धर्माणां स्वरूपं गृह्यते, अतीताध्वगतधर्मस्य अनागताध्वगतधर्मस्य चेति द्वयोः सतोरनुभूतिर्व्यक्ता वा व्यङ्ग्या वा भवति, अनुभूतिव्यक्तिकः अतीतः व्यङ्ग्यानुभूतिकः अनागतः इत्यर्थः ॥ २७ ॥

ते व्यक्तसूक्ष्मा गुणात्मानः १३ ।

ते धर्मा उदिता व्यक्ता अतीतानागतास्तथा ।
अविशेषात्मकाः सूक्ष्मा गुणात्मानः परार्थतः ॥ २८ ॥

उदिताः गृह्यमाणा धर्मा व्यक्ता इत्युच्यन्ते, अतीतानागताश्च धर्माः सूक्ष्माः, परमार्थतश्च सर्वे धर्मा गुणात्मानः ॥ २८ ॥

परिणामैकत्वाद् वस्तुतत्त्वम् १४ ।

कारणानां गुणानां हि त्रित्वेऽपि ह्येकया दिशा ।
संहत्य परिणामित्वादेकत्वेनोपलभ्यते ।
वस्तुतत्त्वं ततश्चैकः शब्द इत्यादिका च धीः ॥ ६ ॥

त्रयः गुणाः सर्वकारणानि । कारणानां त्रित्वे कथमेकः शब्द इति एकं चक्षुरित्यादि वस्तुतत्त्वस्य एकत्वधीरिति । त्रित्वेऽपि गुणानाम् एकया दिशा संहत्य परिणामित्वाद् वस्तुतत्त्वमेकमित्युपलभ्यते ॥ २९ ॥

वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः १५ ।

शब्दादिविषयाणाञ्च वस्तु मूलमितीष्यते ।
वस्तु चित्तनिरपेक्षं स्वतन्त्रं चित्ततः पृथक् ।
वस्तुसाम्येऽपि चित्तानां भेदाद् बोधः पृथग् यतः ।
धर्मादेश्च सुखं दुःखं वस्तुनैकेन वै यथा ॥ ३० ॥

वस्तुतत्त्वमेकमिति किं वस्तु तद् विवृणोति । शब्दादिविषयाणां यन्मूलं प्रकाशक्रियास्थितिधर्मकं बाह्यं द्रव्यं तद्वस्तु । वस्तु चित्तनिरपेक्षं स्वतन्त्रं चित्तात् पृथक् । कस्मात् । यतः वस्तुसाम्येऽपि चित्तभेदाद् बोधस्य पृथक्त्वम् । चित्तभेदाद् बोधस्य पृथक्त्वे उदाहरणं यथा एकेनैव वस्तुना धर्मयुक्तस्य चित्तस्य सुखं भवति अधर्मयुक्तस्य च दुःखं भवति । यतः एकेनैव वस्तुना चित्तभेदापेक्षः पृथक् सुखदुःखादिबोधस्ततः चित्तं पृथग् वस्तु च पृथगिति सिद्धम् ॥ ३० ॥

ज्ञानात्मग्रहणस्यैवं तथा च ग्राह्यवस्तुनः ।
स्वतन्त्रा हि पृथक् सत्ता निरपेक्षा परस्परम् ॥ ३१ ॥

एवं ज्ञानात्मकस्य ग्रहणस्य तथा च ग्राह्यस्य वस्तुनः स्वतन्त्रः परस्परनिरपेक्षः पृथग्भावः ॥ ३१ ॥

न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् १६ ।

ग्राह्यं नैकमनस्तन्त्रं भवेद्वस्तु यतश्च तत् ।
तेनाप्यज्ञायमानञ्च सर्वसाधारणं भवेत् ।
प्रवर्तते तथाऽऽत्मीयं ग्रहणं प्रतिपुरुषम् ॥ ३२ ॥

ग्राह्यं वस्तु न एकचित्ततन्त्रं भवेत् । यतस्तत् तेन चित्तेन अज्ञायमानमपि अन्यसर्वपुरुषसाधारणं स्यात् । ग्रहणञ्च प्रतिपुरुषं प्रवर्तते । तस्मादपि ते पृथग् वस्तुनी इत्यर्थः ॥ ३२ ॥

तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् १७ ।

वस्तु स्वेनात्मना चास्ति यदा तदुपरञ्जयेत् ।
चित्तं तदा भवेद् ज्ञातं तिष्ठेदज्ञातमन्यदा ।
ज्ञाताज्ञातार्थताबुद्धेर्विकारमनुमापयेत् ॥ ३३ ॥

सिद्धं ग्राह्यग्रहणयोः पृथक्त्वम् । ग्रहीतृग्रहणयोर्भेदं दर्शयितुमुपक्रमते । ग्राह्यं वस्तु स्वेनात्मना अस्ति । यदा तत् चित्तमुपरञ्जयेत् तदा तद् विषयीभूतं ज्ञातं भवेत् । अन्यदा वर्तमानमपि अज्ञातं तिष्ठेत् । एवं विषयस्य ज्ञाताज्ञातत्वेन चित्तस्य वैषयिकप्रकाशरूपस्य विकारशीलता अनुमीयते ॥ ३३ ॥

सदाज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् १८ ।

निद्राऽऽदिसर्ववृत्तीनां ज्ञातरूपत्वदर्शनात् ।
पुंसो या विषयास्ताः स्युः सदाज्ञाता हि वृत्तयः ॥ ३४ ॥

द्रष्टुः पुरुषस्य विषयाश्चित्तवृत्तयः सदाज्ञाताः । निद्राऽऽदिसर्ववृत्तय एव ज्ञातस्वभावाः ज्ञातत्वमन्तरेण नास्ति वृत्तिता । अतः पुंसः या वृत्तयः विषयाः ताश्चित्तवृत्तयः सदाज्ञाताः ३४

चित्तवद्-यदि तत्प्रभुः पर्य्यणंस्यत् तु पूरुषः ।
ज्ञाताज्ञातताऽभविष्यच्च वृत्तिः पुंविषया तदा ।
सदैव ज्ञातता ज्ञातुः कौटस्थ्यमनुमापयेत् ॥ ३५ ॥

विषयभूतचित्तवद् विषयी पुरुषो यदि पर्य्यणंस्यत् तदा पुरुषविषयाः वृत्तयः ज्ञाताज्ञा-

ताः अभविष्यन्। वृत्तीनां सदाज्ञातता ज्ञातुः अपरिणामित्वमनुमापयति। ज्ञाता चेत् परिणामशीलः अभविष्यत् तदा स कदाचित् ज्ञाता कदाचिदज्ञाता इत्यात्मकः अभविष्यत् तदा तद्विषयाश्चित्तवृत्तयोऽपि ज्ञाताऽज्ञाताः अभविष्यन्॥ ३५॥

न तत् स्वाभासं दृश्यत्वात् १९।

क्रुद्धोऽहं मेऽमुतः क्रोध इत्यादेर्बुद्धिवेदनात्।
चित्तं दृश्यं जडश्च स्यात् स्वाभासं न च तद्भवेत्॥ ३६॥

क्रुद्धोऽहममुत्र मे क्रोधः इत्यादि-बुद्धीनां प्रतिवेदनाद् दृश्यभूता क्रोधादिबुद्धयो, न द्रष्टृभूताः। अत एव चित्तं दृश्यम्। दृश्यत्वाच्च न स्वाभासं किन्तु जडम्॥ ३६॥

एकसमये चोभयानवधारणम् २०।

स्वाभासं विषयाभासं न चित्तं स्याद् यतः क्षणे।
अवधारणमेकस्मिन् न स्यात् स्वपररूपयोः॥ ३७॥
व्यापारेण मनो येन स्वरूपमवधारयेत्
अन्येन विषयं चापि व्यापारेणावधारयेत्॥ ३८॥
स्वाभासं विषयाभासश्चाभविष्यन्-मनो यदि।
एकक्षणेऽभविष्यत्तद्-रूपयोरवधारणम्॥ ३९॥

चित्तस्य अस्वाभासत्वे युक्त्यन्तरमुच्यते। विषयाभासं चित्त यदि स्वाभासमपि अभविष्यत् तदा एकस्मिन् एव क्षणे स्वरूपविषयरूपयोरवधारणमभविष्यत्। न तद्दृश्यते। यतो येन व्यापारेण चित्तं स्वरूपमहमस्मीत्यादिकम् अवधारयेत् तद्भिन्नेनान्येन व्यापारेण विषयमवधारयेत्। चित्तं तु स्वाभासं विषयाभासञ्च यद्यभविष्यत् तदा स्वरूपपररूपयोरवधारणम् एकस्मिन् क्षणे युगपदभविष्यत्। यतः तन्न भवति ततः चित्तं विषयाभासमेव न स्वाभासमित्यर्थः॥ ३७॥ ३८॥ ३९॥

चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च २१।

चित्तान्तरं तु चित्तस्य द्रष्टृ यदि तदा च स्यात्।
अशेषबुद्धिबुद्धीनां कल्पना चानवस्था च॥ ४०॥

मा भूत् चित्तं स्वाभासं तदेव चित्तान्तरस्य दृश्यमिति प्राप्ते तन्मतस्यापि अयुक्ततां दर्शयति। चित्तान्तरस्य चेत् चित्तं दृश्यं तदा तदपि अन्यचित्तस्य दृश्यं स्यादेवमशेषाणां बुद्धिबुद्धीनां बुद्धेर्द्रष्ट्रीणां बुद्धीनामित्यर्थः, कल्पना प्रसजेत्, ततश्च अनवस्थादोषः॥ ४०॥

तत्रापि बुद्धिबुद्धीनाम् अनुभूतेरसंख्याताः।
जायेरन् स्मृतयस्तस्माद् न च काचिदसङ्कीर्णा।
स्मृतिरेकावधार्येत नातोऽस्ति चित्तचित्तं हि॥ ४१॥

अन्यश्चापि दोषप्रसङ्गस्तत्र स्यात्, तत्र असंख्यानां बुद्धिबुद्धीनाम् अनुभवाद् असंख्याताः स्मृतयो जायेरन्, ततः काचिदेका असङ्कीर्णा स्मृतिर्नानुभवयोग्या भवेत्, अतो नास्ति चित्तचित्तम्, चित्तद्रष्टृचित्तकल्पना अयुक्ता इत्यर्थः॥ ४१॥

द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् २२।

चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् २३।

प्रत्ययाच्च ग्रहीताहमिति शब्दादिरूपाच्च।
द्रष्टृदृश्योपरक्तं स्यात् चित्तसत्त्वं हि सर्वार्थम्॥ ४२॥

अहं ग्रहीता इति प्रत्ययात् शब्दादिप्रत्ययाच्च चित्तसत्त्वं द्रष्टृदृश्योपरक्तं सर्वार्थम्,

द्रष्टृपरागादहं ग्रहीता इति प्रत्ययस्तथा दृश्योपरागात् शब्दादिप्रत्ययः, अतः चित्तं सर्वार्थम् द्रष्टृदृश्यं विशिष्य प्रत्यया जायन्त इति भावः ॥ ४२ ॥

ग्रहीतृप्रत्यये तत्र चितिरप्रतिसंक्रमा ।
बुद्ध्याकारमिवाप्नोति स्वबुद्धिवेदनं ततः ॥ ४३ ॥
संवेदनं स्वबुद्धेस्तु ज्ञातुमे प्रत्ययाः सर्व ।
विज्ञान-ज्ञेय-रूपाश्च इति भानमुदाहार्यम् ॥ ४४ ॥

तत्र द्रष्टृदृश्यप्रत्ययेषु मध्ये ग्रहीतृप्रत्यये अप्रतिसंक्रमा प्रतिसञ्चारशून्या चितिशक्तिः बुद्ध्याकारतामिव प्राप्नोति, ततः स्वबुद्धिवेदनं स्वस्वरूपाया बुद्धेः संवेदनम्, मम ज्ञातुर्ज्ञानज्ञेयरूपाः सर्वे प्रत्यया इति स्वबुद्धिसंवेदनस्योदाहरणम्, अत्र शुद्धो निःसङ्गोऽपि ज्ञाता प्रत्ययवान् बुद्ध्याकार इव भवति ॥ ४३ ॥ ४४ ॥

तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् २४ ।

संहत्यकारिणः सर्वे परार्था हि गृहादिवत् ।
परार्थश्च तच्चित्तमसंख्यवासनात्मकम् ।
नानाशक्तेश्च संघातात् कर्मभोगादि यस्य तु ॥ ४५ ॥

यस्य भोगादिकर्म नानाशक्तेरिन्द्रियादिशक्तेः संघातात् सिद्ध्यति तत् चित्तं संहत्यकारि, संहत्यकारिणः सर्वे परार्थाः यथा गृहादयः, तस्मात् चित्तं परार्थम्, न तेन स्वार्थेन भवितव्यम्, यथा नानाऽवयवानां संघातरूपं गृहं न स्वावयवानां वासार्थं भवति किन्तु अन्यस्य वासार्थं तथा सुखादिचित्तं न सुखाद्यर्थं भवेत् किन्तु भोक्तुः परस्य भोगार्थं तत्, यश्च परो यस्यार्थं चित्तं स पुरुष इति चित्तस्य संहत्यकारित्वात् सिद्धः परः पुरुषः इति ॥ ४५ ॥

विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः २५ ।

किंस्विदिदं कथंस्विद्वा कोऽहमासं कथञ्च वा ।
कथं को वा भविष्यामीत्यात्मभावस्य भावना ॥ ४६ ॥

सिद्धः द्रष्टृदृश्ययोर्भेदः, अथ तदवधारणक्षमं चित्तं निर्दिशति, किंस्विदिदं शरीरम्, स्पष्टमन्यत् ॥ ४६ ॥

अज्ञानादविशिष्टयोर्भिन्नताया महच्छिदा ।
विशिष्यदर्शनाच्च सा भावना विनिवर्तते ॥ ४७ ॥

अविवेकाद् अविशिष्टयोरभिन्नप्रतीयमानयोः बुद्धिपुरुषयोः विशिष्यदर्शनाद् विवेकख्यातेरित्यर्थः ।सा आत्मभावभावना विनिवर्तते ॥ ४७ ॥

तदा कैवल्यप्राग्भारं विवेकनिम्नं चित्तम् २६ ।

विशेषदर्शने चित्तं विवेकख्यातिरूपके ।
विवेकमार्गसञ्चारि कैवल्यश्च तदग्रतः ॥ ४८ ॥

कैवल्यप्राग्भारावधिः ।विवेकनिम्नमार्गः, विशेषदर्शनकाले चित्तनदी तस्मिन्नेव मार्गे वहति इत्यर्थः ॥ ४८ ॥

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः २७ ।

हानमेषां क्लेशवदुक्तम् २८ ।

ख्यातिप्रवाहच्छिद्रेषु चाविवेकजवृत्तयः ।
संस्कारेभ्यः प्रजायेरन् हातव्याः क्लेशवच्च ताः ॥ ४९ ॥

विवेकख्यातिप्रवाहच्छिद्रेषु अविवेकजप्रत्यया अहं-ममादयः संस्कारेभ्यः प्रजायन्ते, ते क्लेशवद् हातव्याः ॥ ४९ ॥

प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः २९ ।

व्युत्थानस्य प्रसंख्यानं हानोपायो विवेकाख्यः ।
किञ्चित्ततोऽपि सिद्ध्यादि योगी प्रार्थयते नो हि ॥
तदा स्याद्-धर्ममेघाख्यः समाधिर्यत्र सर्वथा ।
विवेकख्यातिरातिष्ठेद्-धर्मान् वर्षेत् पराँश्च यः ।। ५० ।।

प्रसंख्यानं नाम व्युत्थानस्य विवेकाख्यः हानोपायः, तस्मात् प्रसंख्यानादपि यदा योगी किञ्चित् सिद्ध्यादि न प्रार्थयते तदा धर्ममेघाख्यः समाधिर्भवति, यत्र समाधौ सर्वथा विवेकख्यातिरातिष्ठेद् यश्च धर्ममेघः परान् धर्मान् सार्वज्ञ्यमात्मदर्शनं चेत्यर्थ. वर्षेत्, आत्मदर्शनरूपपरमधर्मसेचनाद् धर्ममेघ इत्याख्यायते ।। ६१ ॥

ततः क्लेशकर्मनिवृत्तिः ३० ।

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ३१ ।

क्लेशकर्मनिवृत्तिः स्यात् ततस्तन्मलहीनस्य ।
ज्ञानस्यानन्त्यतो ज्ञेयमल्पं ख इव खद्योतः ।। ५१ ।।

स च धर्ममेघः क्लेशकर्म समूलघातं हन्ति, ततश्च क्लेशकर्ममलहीनस्य ज्ञानस्यानन्त्याद् ज्ञेयमल्पं भवति यथा खे खद्योतः ॥ ६१ ।।

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ३२ ।

ततः स्वबुद्धिरूपाश्च परिणामक्रमान् गुणाः ।
कृतभोगापवर्गा हि जह्युस्तं पुरुषं प्रति ।। ५२ ।।

ततः निष्पादितभोगापवर्गा गुणाः स्वबुद्धिरूपान् परिणामक्रमान् जह्युः तं पुरुषं प्रति न तु अचरितार्थबुद्धिमन्तं प्रति ।। ६२ ।।

क्षणप्रतियोगी परिणामोऽपरान्तनिर्ग्राह्यः क्रमः ३३ ।

वस्त्वन्यत्वं क्षणव्यापि परिणामोऽस्य च क्रमः ।
पौर्वापर्येण निर्ग्राह्यः भवेदाप्रलयाद् सदा ।।५३।।

कोऽयं परिणामक्रमः तदुच्यते । क्षणव्यापि यत् वस्त्वन्यत्वं स परिणामः । परिणामस्य च क्रमः पौर्वापर्येण निर्ग्राह्यो भवति आप्रलयाद् आ-पुनरुत्थानहानलयात् । ये क्षणव्यापिनः परिणामा यावत् परिणामसमाप्तिस्तावद् गृह्यते पूर्वोत्तररूपेण ते परिणामक्रमाः । धर्ममेघाद् बुद्धेः परिणामक्रमसमाप्तिः ॥ ६३ ॥

पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ३४ ।

प्रलयो गुणकार्य्याणां करणानां स्वकारणे ।
पुमर्थरहितानां वा कैवल्यं स्वस्थता चितेः ॥ ५४ ॥
इति सांख्ययोगाचार्य्यश्रीहरिहरानन्दारण्यविरचितायां
योगकारिकायां कैवल्यपादश्चतुर्थः ।

अध्यात्मभूतानि ये गुणकार्य्याणि करणरूपाणि तेषां पुरुषार्थरहितानां स्वकारणे प्रलयः चितेः स्वरूपस्थितिर्वा कैवल्यमिति ॥ ६४ ॥

इति योगकारिकाटीकायां सरलायां कैवल्यपादश्चतुर्थः ।

समाप्तश्चायं ग्रन्थः ।

## परिशिष्टम् २

श्रीगणेशाय नमः ।

पूज्यपाद भगवत्पतञ्जलिमहामुनिकृतं—

# योगसूत्रम् ।

## समाधिपादः प्रथमः ॥ १ ॥

अथ योगानुशासनम् ॥ १ ॥
योगश्चित्तवृत्तिनिरोधः ॥ २ ॥
तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥
वृत्तिसारूप्यमितरत्र ॥ ४ ॥
वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ५ ॥
प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥
प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥
विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥
शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥
अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥
अनुभूतविषयासम्प्रमोषः स्मृतिः ॥ ११ ॥
अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥
तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥
स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥
दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५
तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥
वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ॥ १७ ॥
विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥
भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥
श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥
तीव्रसंवेगानामासन्नः ॥ २१ ॥
मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥
ईश्वरप्रणिधानाद्वा ॥ २३ ॥
क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥
तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥
स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥
तस्य वाचकः प्रणवः ॥ २७ ॥
तज्जपस्तदर्थभावनम् ॥ २८ ॥
ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शना-
लब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥
दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥
तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥
मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्य-
विषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥
प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥
विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी ॥ ३५ ॥
विशोका वा ज्योतिष्मती ॥ ३६ ॥
वीतरागविषयं वा चित्तम् ॥ ३७ ॥
स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥
यथाऽभिमतध्यानाद्वा ॥ ३९ ॥
परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥
क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ४१
तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः ॥ ४२ ॥
स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥
एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥४४ ॥
सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम ॥ ४५ ॥
ता एव सबीजः समाधिः ॥ ४६ ॥
निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥
ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥।
श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥
तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥
तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥
इति पातञ्जलयोगसूत्रपाठे समाधिपादः प्रथमः ॥ १ ॥

## अथ साधनपादो द्वितीयः ॥ २ ॥

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥
समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥
अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ॥ ३ ॥
अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥
अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥
दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥
सुखानुशयी रागः ॥ ७ ॥
दुःखानुशयी द्वेषः ॥ ८ ॥
स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः ॥ ९ ॥

ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥
ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥
क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥
सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥
ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥
परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः १५
हेयं दुःखमनागतम् ॥ १६ ॥
द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥
प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम ॥१८॥
विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥
द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥
तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥
कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥
स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥
तस्य हेतुरविद्या ॥ २४ ॥
तदभावात्संयोगाभावो हानं तद् दृशेः कैवल्यम् ॥ २५ ॥
तस्य सप्तधा प्रान्तभूमि प्रज्ञा ॥ २६ ॥
विवेकख्यातिरविप्लवा हानोपायः ॥ २७ ॥
योगाङ्गानामनुष्ठानादशुद्धिक्षये ज्ञानादीप्तिराविवेकख्यातेः ॥ २८ ॥
यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥२९॥
अहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहा यमाः ॥ ३० ॥
जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम ॥ ३१ ॥
शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥
वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥
वितर्का हिंसाऽऽदयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका-
मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥
अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः ॥ ३५ ॥
सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥
अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥
ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥
अपरिग्रहस्थैर्ये जन्मकथंतासम्बोधः ॥ ३९ ॥
शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥
सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ ४१ ॥
सन्तोषादनुत्तमसुखलाभः ॥ ४२ ॥
कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥
स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥
समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

तत्र स्थिरसुखमासनम् ॥ ४६ ॥
प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥
ततो द्वन्द्वानभिघातः ॥ ४८ ॥
तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥
स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ५०
बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥
ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥
धारणासु च योग्यता मनसः ॥ ५३ ॥
स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ।५४।
ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥
इति पाञ्जलयोगसूत्रपाठे साधननिर्देशो नाम द्वितीयः पादः ॥ २ ॥

---

## अथ विभूतिपादः तृतीयः ॥ ३ ॥

देशबन्धश्चित्तस्य धारणा ॥ १ ॥
तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥
तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि : ॥ ३ ॥
त्रयमेकत्र संयमः ॥ ४ ॥
तज्जयात् प्रज्ञाऽऽलोकः ॥ ५ ॥
तस्य भूमिषु विनियोगः ॥ ६ ॥
त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥
तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥
व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्ष-
णचित्तान्वयो निरोधपरिणामः ॥ ९ ॥
तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥
सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥
शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥
एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥
शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥
क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥
परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥
शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्र-
विभागसंयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥
संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥ १८ ॥
प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥
न च तत् सालम्बनं तस्याविषयीभूतत्वात् ॥ २० ॥
कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रका-

शासम्प्रयोगेऽन्तर्द्धानम् ॥ २१ ॥
सोपक्रमं निरुपक्रमञ्च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥२२॥
मैत्र्यादिषु बलानि ॥ २३ ॥
बलेषु हस्तिबलादीनि ॥ २४ ॥
प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥ २५ ॥
भुवनज्ञानं सूर्ये संयमात् ॥ २६ ॥
चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥
ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥
नाभिचक्रे कायव्यूहज्ञानम् ॥ २९ ॥
कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥
कूर्मनाड्यां स्थैर्यम् ॥ ३१ ॥
मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥
प्रातिभाद्वा सर्वम् ॥ ३३ ॥
हृदये चित्तसंवित् ॥ ३४ ॥
सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो-
भोगः परार्थत्वात्स्वार्थसंयमात्पुरुषज्ञानम् ॥ ३५ ॥
ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ ३६ ॥
ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥
बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥
उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥
समानजयाज्ज्वलनम् ॥ ४० ॥
श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४१ ॥
कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४२ ॥
बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४३ ॥
स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः ॥ ४४ ॥
ततोऽणिमादिप्रादुर्भावः कायसम्पत् तद्धर्मानभिघातश्च ॥ ४५ ॥
रूपलावण्यबलवज्रसंहननत्वानि कायसंपत् ॥ ४६ ॥
ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥
ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥
सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥४९॥
तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥५० ॥
स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥ ५१ ॥
क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५२ ॥
जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥
तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥
सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ ५५ ॥

इति पातञ्जलयोगसूत्रपाठे विभूतिपादस्तृतीयः ॥ ३ ॥

## अथ कैवल्यपादः चतुर्थः ॥ ४ ॥

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥
जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥
निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥
निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥
प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥
तत्र ध्यानजमनाशयम् ॥ ६ ॥
कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥
ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥
जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥९॥
तासामनादित्वं चाशिषो नित्यत्वात् ॥ १० ॥
हेतुफलाश्रयालम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः ॥ ११ ॥
अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ ११ ॥
ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥
परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥
वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥ १५ ॥
न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥
तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥
सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ १८ ॥
न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥
एकसमये चोभयानवधारणम् ॥ २० ॥
चित्तान्तरदृश्यत्वे बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २१ ॥
चितेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥
द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥
तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ २४ ॥
विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५ ॥
तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥
तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥
हानमेषां क्लेशवदुक्तम् ॥ २८ ॥
प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥
ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥
तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥
ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥
क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥
पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं-
स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥

इति श्रीपातञ्जले योगशास्त्रे कैवल्यपादश्चतुर्थः सम्पूर्णः ॥ ४ ॥

समाप्तञ्च योगसूत्रम् ।

# परिशिष्टम् ३

॥ श्रीः ॥

# वर्णानुक्रमसूत्रसूची ।

अ

## वर्णानुक्रमसूत्रसूची ।

# वर्णानुक्रमसूत्रसूची।

## वर्णानुक्रमसूत्रसूची ।

# वर्णानुक्रमसूत्रसूची ।

इति ।

परिशिष्टम् ४

# अथ पाश्वशिखसूत्रपाठः ।

एषु सूत्रेषु कतमत्सूत्रं योगभाष्यकारेण कतमस्य योगसूत्रस्य व्याख्यायामुद्धृतमेतत्सूचना च ।

| पा० | यो०सू० | |
|---|---|---|
| १ | २५ | आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच ॥ १ ॥ |
| २ | १८ | अयन्तु खलु त्रिषु गुणेषु कर्त्तृष्वकर्त्तरि च पुरुषे तुल्यातुल्यजातीये च तुर्थे तत्क्रियासाक्षिण्युपनीयमानान् सर्वभावानुपपन्नाननुपश्यन् न दर्शनमन्यच्छङ्कते ॥ २ ॥ |
| १ | ४ | एकमेव दर्शनं ख्यातिरेव दर्शनम् ॥ ३ ॥ |
| २ | ६ | बुद्धितः परं पुरुषमाकारशीलविद्याऽऽदिभिर्विभक्तमपश्यन् कुर्यात् तत्रात्मबुद्धिं मोहेन ४ |
| २ | ५ | व्यक्तमव्यक्तं वा सत्त्वमात्मत्वेनाभिप्रतीत्य तस्य सम्पदमनुनन्दत्यात्मसम्पदं मन्वानस्तस्य व्यापदमनुशोचत्यात्मव्यापदं मन्यमानः स सर्वोऽप्रतिबुद्धः ॥ ५ ॥ |
| २<br>२ | ६<br>५२ | महामोहमयेनेन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाकार्ये नियुङ्क्ते ॥ ६ ॥ |
| २ | २० | अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते ॥ ७ ॥ |
| २ | २२ | धर्मिणामनादिसंयोगाद् धर्ममात्राणामप्यनादिः संयोगः ॥ ८ ॥ |
| २ | १७ | तत्संयोगहेतुविवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः ॥ ९ ॥ |
| २ | २३ | प्रधानं स्थित्यैव वर्त्तमानं विकाराकरणादप्रधानं स्यात् तथा गत्यैव वर्त्तमानं विकारनित्यत्वादप्रधानं स्याद् उभयथा चास्य प्रवृत्तिः प्रधानव्यवहारं लभते नान्यथा कारणान्तरेष्वपि कल्पितेष्वेष समानश्चर्चः ॥ १० ॥ |
| ३ | १४ | जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टं तथा स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेषु ॥ ११ ॥ |
| ३ | ५३ | मूर्त्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्वमिति वार्षगण्यः ॥ १२ ॥ |
| २ | २३ | प्रधानस्यात्मख्यापनार्था प्रवृत्तिः ॥ १३ ॥ |
| १ | ३६ | तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत् सम्प्रजानीते ॥ १४ ॥ |
| ३ | ४१ | तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति ॥ १५ ॥ |
| ३ | ४४ | एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिः ॥ १६ ॥ |
| ४ | २५ | स्वभावं मुक्त्वा दोषाद् येषां पूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति ॥ १७ ॥ |
| २<br>३ | १५<br>१३ | रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते सामान्यानि त्वतिशयैः सह प्रवर्त्तन्ते ॥ १८ ॥ |
| २ | १३ | स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः कुशलस्य नापकर्षायालं कस्मात् कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यति ॥ १९ ॥ |
| ४ | १० | ये चैते मैत्र्यादयो ध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहात्मानः प्रकृष्टं धर्ममभिनिर्वर्त्तयन्ति ॥ २० ॥ |
| २ | ३० | स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्योहिंसाऽऽदिनिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपामहिंसां करोति ॥ २१ ॥ |

इति पाञ्चशिखं सूत्रम् ।

## परिशिष्टम् ५

# वर्णानुक्रमेण पाञ्चशिखसूत्रसूची ।

अ—अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते ॥ ७ ॥

अयन्तु खलु त्रिषु गुणेषु कर्तृष्वकर्तरि च पुरुषे तुल्यातुल्यजातीये चतुर्थे तत्क्रियासाक्षिण्युपनीयमानान् सर्वभावानुपपन्नाननुपश्यन् न दर्शनमन्यच्छङ्कते ॥ २ ॥

आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच ॥ १ ॥

ए—एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिः ॥ १६ ॥

एकमेव दर्शनं ख्यातिरेव दर्शनम् ॥ ३ ॥

ज—जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टं तथा स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेषु ॥ ११ ॥

त—तत्संयोगहेतुविवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः ॥ ९ ॥

तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत् सम्प्रजानीते ॥ १४ ॥

तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति ॥ १५ ॥

ध—धर्मिणामनादिसंयोगाद् धर्ममात्राणामप्यनादिसंयोगः ॥ ८ ॥

प—प्रधानं स्थित्यैव वर्त्तमानं विकाराकरणादप्रधानं स्यात् तथा गत्यैव वर्त्तमानं विकानित्यत्वादप्रधानं स्याद् उभयथा चास्य प्रवृत्तिः प्रधानव्यवहारं लभते नान्यथा कारणान्तरेष्वपि कल्पितेष्वेष समानश्चर्चः ॥ १० ॥

प्रधानस्यात्मख्यापनार्था प्रवृत्तिः ॥ १३ ॥

ब—बुद्धितः परमपुरुषमाकारशीलविद्याऽऽदिभिर्विभक्तमपश्यन् कुर्यात् तत्रात्मबुद्धिं मोहेन ॥ ४ ॥

म—महामोहमयेनेन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाकार्ये नियुङ्क्ते ॥ ६ ॥

मूर्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्वमिति वार्षगण्यः ॥ १२ ॥

य—ये चैते मैत्र्यादयो ध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहात्मानः प्रकृष्टं धर्ममभिनिर्वर्त्तयन्ति ॥ २० ॥

र—रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते सामान्यानि त्वतिशयैः सह प्रवर्त्तन्ते ॥ १८ ॥

व—व्यक्तमव्यक्तं वा सत्त्वमात्मत्वेनाभिप्रतीत्य तस्य सम्पदमनुनन्दत्यात्मसम्पदं मन्वानस्तस्य व्यापदमनुशोचत्यात्मव्यापदं मन्यमानः स सर्वोऽप्रतिबुद्धः ॥ ५ ॥

स—स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसाऽऽदिनिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपामहिंसां करोति ॥ २१ ॥

स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः कुशलस्य नापकर्षायालं कस्मात् कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यति ॥ १९ ॥

स्वभावं मुक्त्वा दोषाद् येषां पूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति ॥ १७ ॥

परिशिष्ट ६

## पातञ्जलदर्शनभाष्यादिष्वागतानां विशिष्ट-पदादीनामकाराद्यनुक्रमः—

॥ इति ॥



परिशिष्टम् ७

श्रीः

# भाष्यशुद्धिपत्रम्

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| वृत्ति | वृत्ति | १७ | २ |
| ठ्वप | ठ्यप | ६५ | ३ |
| स्वानु | स्वात्मानु | ९.५ | १ |
| भूतपि | भूतमपि | २३१ | १ |
| ताति | तीति | २६८ | १ |
| सयमा | संयमो | २८६ | ४ |
| र्य्याधिका | र्य्याधिको | २९८ | ४ |
| तजया | तजयो | ३६९ | १ |
| तिक्षण | तिलक्षण | ३८५ | ३ |
| प्रययो | प्रत्ययो | ३८६ | ४ |
| चित्तं | चित्तं तदेवा- नाशयं | ३९९ | ३ |
| कृष्ण । | कृष्णा | ,, | ७ |
| त्वाद | स्वाद् | ४०० | ३ |
| नमित्ति | नैमित्ति | ४०४ | २ |
| प्वाम | त्वाम | ४२७ | ४ |
| नभूत | ननुभूत | ४५० | २ |

परिशिष्टम् ८

# भास्वत्याः शुद्धिपत्रम्

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| पञ्चविंशति- स्तत्त्वानि | ज्ञानयोगश्च पञ्चविं- शतिस्तत्त्वानि | १ | १८ |
| विवृतः | क्रियायोगश्च विवृतः | १ | १९ |
| वृत्तिस्वरूप | पुरुषो वृत्तिसरूप | १९ | ६ |
| योगा | भोगा | २१ | २ |
| प्रधानम् | प्रमाणम् | २३ | २ |
| क्लिष्टं | द्विष्टं | २७ | २ |
| धर्म्मः | वाऽर्थः | ३२ | १ |
| भावने | साधने | ३२ | ५ |
| तज्ज्ञात | तज्जात | ३२ | १९ |
| इतरवद् | इतरवृत्तिवद् | ३८ | १० |
| धारणा | धारण | ४० | १ |
| धाररणाद् | धानाद् | ४० | ५ |
| नाधिक- स्मृतिः | नाधिकमित्यर्थः स्मृतिः | ४१ | १ |
| घट | घटोऽयम् | ४३ | २ |
| वैराग्याधीनो | वैराग्याधीना । | ४५ | ५ |
| तदेकेन्द्रियेण तादृस्यापि | तदैकेन्द्रियं, ता- दृशस्यापि | ४७ | ६ |
| विदेहस्य | विदेहस्य चित्तस्य | ४८ | १ |
| योगलाभे | भोगलाभे | ४८ | ७ |
| दोषदर्शी | विषयदोषदर्शी | ४९ | ६ |
| कर्माश्रय | कर्माशय | ५० | ६ |

| अशु॰ | शु॰ | पृ॰ | पं॰ |
|---|---|---|---|
| स्थूल | स्थूलः स्थूलभूतेन्द्रियरूपध्येयाविषय इत्यर्थः | ५१ | ५ |
| स वितर्कः | स सवितर्कः | ५१ | ५ |
| वितर्कविचारा | वितर्कविचाराख्याना | ५४ | ३ |
| वाष्ठ | जात्यायुर्भोगरूपाः कर्म्मविपाकास्तदनुगुणाः विपाकानुगुणा वासः— | ६५ | १ |
| तत्र | ते च | ६५ | २ |
| धर्मिणां | मूलधर्म्मिणां | ६६ | ८ |
| ऐश्वर्येऽविद्यमाने | एश्वर्ये विद्यमाने | ७२ | ४ |
| प्रणवरूपेण | प्रवाहरूपेण | ८२ | ५ |
| तथाऽयमध्यात्मा बुद्धेः | तथाऽयमध्यात्मबुद्धेः | ८७ | २ |
| मधुमती मधु प्रतीका | प्रथमकल्पिको मधुमती | ८९ | ३ |
| न हि | न हि उपमारूपो | ९६ | ८ |
| तदुत्पादयेत् | तदुत्पाटयेत् | ९७ | ७ |
| प्रत्यनुक्रम्यां | प्रत्यनुक्रमां | ९७ | ८ |
| पैशुन्यनैर्घृण्य | पैशुन्यं निर्घृण | ९८ | १ |
| समानसमान् | समानतन्त्रान् असमानतन्त्रान् | ९८ | १ |
| महान्तमा | महदा— | १०३ | १ |
| चम्बकेनापरागः | रञ्जकेनोपरागः | १०७ | ४ |
| चक्षुस्त्वगिन्द्रिय | चक्षुरादीन्द्रिय | १०९ | ६ |
| प्रज्ञा= | प्रज्ञा | ११२ | ५ |
| चान्यधर्मवानेव | चान्यधर्मवानेवमपि | ११६ | १ |
| अणुभ्योऽभिन्नोऽयं | अणुभ्यो भिन्नोऽयं | ११६ | ३ |
| किञ्च | एवं स्वकारणादभेदः किञ्च | ११६ | ३ |
| अनेन | अन्येन | ११६ | ५ |
| आयातं | आयात | ११७ | ४ |
| महा | महद् | १२१ | ५ |
| विद्यते | भिद्यते | १३४ | ७ |
| जायेत, | जायेत, तथा निरोधभंगरूपस्य प्रत्ययस्य संस्कारा जायेत | १३४ | १ |
| तथा= | तथा | १४१ | १ |
| अनुभूयमाने विषयाभावे | अनुभूयमाना ईप्सारूपा | १५५ | २ |
| सम्यग् | सम्प्र | १५८ | २ |
| क्लेशा एव | क्लेशास्तेन | १५८ | ६ |
| ततस्तु | ततस्ते | १६० | १० |
| परपीडाऽऽदिकञ्च | धर्म्म परपीडाद् कर्म्मअधर्म्मं | १६१ | ४ |
| कर्म्मण | कर्म्मणि | १६१ | ६ |
| नास्ति | नास्ति पौरुष | १६२ | ६ |
| नापि | नापि तादृशः | १६८ | ७ |
| तुभ्यं | युस्माकं | १७२ | १ |
| परिणम- | परिणम्य | १८३ | २ |
| कारणादि | करणादि | ०८८ | ६ |
| द्विरूप | विरूप | १९३ | ५ |
| द्वैरूपयं | वैरूपय | १९३ | ६ |
| तदयुक्तं | एतदुक्तं | १९६ | ४ |
| चैतन्ये | चैते | २०१ | ११ |
| याऽयोग्यता | याहीनता | २०५ | २ |
| पुरुषार्थतया | पुरुषार्थता | २०८ | ५ |
| विशेषाविशेषा- | विशेषाविशेष | २०८ | ६ |
| दृशि | प्रति | २१४ | ४ |
| कस्माद् ? | तस्माद् | २१४ | ५ |
| भवतीति | अतः अगोज्ञानरूपा भवतीति | २१५ | १ |
| कारिणः | कारिण्यः | २१७ | २ |
| ज्ञानवृत्तिः=यद्वा | ज्ञानवृत्तिः=चित्तवृत्तिरित्याख्यायतेऽविवेकिभिरिति । यद्वा | २१९ | ४ |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| चिद्वृत्तिरिति | (अपसार्यमिदं) | २१९ | ५ |
| साक्षाज्जायमानं | साक्षाज् ज्ञायमानं | ,, | ७ |
| ब्रह्मा तस्या | ब्रह्माण्डस्या | २२२ | १ |
| यदा | यद्वा | २२५ | ५ |
| यद्दर्शनस्या | यद् अर्थद्वयस्या | २२६ | ९ |
| तथा दर्शन | तथा दर्शनं | २२६ | ११ |
| यदेव | सदेव | २२८ | ३ |
| प्रवृत्तिरिति | प्रवृत्तिरित्याकूतम् | २२९ | ३ |
| शक्तिरूपा·वस्थैवा | शक्तिरूपावस्थैव प्रवृत्तिसामर्थ्य·मेववा | २३० | १ |
| स्वभाव | प्रवृत्तिस्वभाव | २३० | ३ |
| ज्ञानं तस्मात्त | शब्दादिज्ञानं, त·स्मात्त तज् | २३१ | ३ |
| हेय हेतुदर्शन | हेयहेतुदर्शनं | २३२ | ५ |
| स्वबुद्धि | यः स्वबुद्धि | २३३ | ३ |
| अन्यच्च | अन्यच्च सर्वं | २४३ | १ |
| वृत्तियुक्तः | तृप्तियुक्तः | २५४ | ३ |
| कारणरूपम् | करणरूपम् | २५८ | ३-४ |
| मनुमिष्टं | मनुम् अनिष्टं | २५९ | २ |
| शक्तिरुत् कर्षयति | शक्तीरुत्कर्षयति उद्रिच्यत इत्यर्थः | २६१ | २ |
| सिद्धौ | सिद्धो | २६१ | २ |
| प्रत्यक्षेषु | प्रत्यगेषु | २७० | ८ |
| मलम् | मलाः | २७५ | ६ |
| चक्षुर्घ्राणा दीन्यपि | चक्षुःश्रोत्रादी·न्यपि | २७७ | ३ |
| तदवस्था | तदवस्थानक्ष·णेऽपि | २८९ | ३ |
| न ते | न ते प्रत्ययात्म·काः प्रत्ययस्वरू·पा इति हेतोः प्रत्ययनिरोधेते | २९० | २ |
| तत्रादौ | तत्रादौ-यद | २९३ | ३ |

| अशुद्धं | शुद्धं | पृ० | पं० |
|---|---|---|---|
| एष | एषु | २९४ | ३ |
| वर्धमानत्वस्य | धर्मान्यत्वस्य | २९६ | १ |
| अपेतः—लीनः | अपेतं—लीनम् | २९९ | ८-१ |
| ते | ये | ३०४ | २ |
| एवं | एव | ३०७ | ८ |
| जननशक्ति | विशिष्टाशक्ति | ३०८ | ३ |
| अव्यापारकृताः | व्यापारकृतः | ३०९ | ३ |
| समन्वागताः | समन्वागताः—अन्तर्गताः | ३१० | १ |
| त्रयमिति॥२४॥ | त्रय इति | ३१० | ३ |
| उद्भिज्जेषु | उद्भिदमुक्षु | ३११ | २ |
| जातेर्वर्त्तमानत्वं | जाते यद् वर्त्त·मानत्व | ३११ | ४ |
| आश्रयरूपो | आश्रयरूपेण | ३१३ | ८ |
| पिण्डेत्यस्य | पिण्डत्वस्य | ३१५ | ३ |
| व्यक्तिः= | व्यक्तिः=त्रिवार्षि·कोऽयं घट इत्यादिरूपेण | ३१६ | २ |
| तेषां भूतधर्म्मास्तु | भूतानि तेषां | ३१७ | १ |
| आपन्नमिव | आपन्न इव | ३२२ | ३ |
| विशषणाव | विशेषणाव | ३२२ | ३ |
| येदशाधा | येदशा | १११ | १ |
| सूक्ष्मा | सुखा | ३३२ | ३ |
| शुद्धता | शुष्कता | ३३७ | २ |
| ऽवष्टम्भे | ऽवष्टब्धे | ,, | ६ |
| तेऽमरलोक | ते मरलोक | ३४२ | ३ |
| सूक्ष्मावस्थां | सूक्ष्मावस्थं | ३४३ | २ |
| मनसः कार्य्यं | कार्य्यं मनसो | ३५५ | ५ |
| सप्नाधि | समाधि | ३५६ | ३ |
| अबाध्ययान | अबाध्यमान | ३६० | ३ |
| आकाश | शब्दगुणाकाश | ३६२ | २ |
| स्वजाति | एकजाति | ३६५ | २ |
| प्रमाथा | प्रमथा | ३६१ | ६ |
| कम्पनादि | कल्पनादि | ३७३ | |

| अशु॰ | शु॰ | पृ॰ | पं॰ |
|---|---|---|---|
| प्रतिकाय | प्रतिकार्य | ३८० | ३ |
| तदर्थयति | तद्दर्शयति | ३८३ | १ |
| तदेकधर्म्माणो यत्र साम्यं | भेदकधर्माणो यत्र साम्यं | ३८४ | १० |
| इत्यथः | इत्यर्थः | ३८६ | ४ |
| स्वरूपं | सरूपं | ३८१ | ४ |
| जान्ता | जाता | ३९२ | ४ |
| पूर्वेति | अपूर्वेति | ३९४ | १ |
| हीनाथा | हीनाया | ३९७ | २ |
| युगपदि | युगपदि | ३९८ | ३ |
| भागीयसमा | भागीयसमा | ३९९ | ३ |
| कर्म्माकरणं | कर्म्माचरणं | ४०० | ३ |
| परिपाकानु | विपाकानु | ४०१ | १ |
| विपाकोरूपो | विपाकरूपा | ४०३ | ४ |
| सर्वत्रा | सर्वदा सर्वत्रा | ४०४ | ३ |
| किन्तु | वस्तु | ४०६ | ७ |
| सहोत्पन्नो | सहोत्पन्नः सहभावी | ४०६ | ४ |
| त्युत्पन्न | प्रत्युत्पन्न | ४१० | १ |
| फलमुत्पत्स्यमान फलमित्यर्थ | फलम्—उत्पत्स्यमान फलमिच्छुः | ४१२ | ५ |
| रूपाणा | त्रयाणा | ४१३ | ५ |
| चैकारम्भ | चैकविपाकारम्भ | ४१७ | ४ |
| अतद्रूप | अतद्रूप | ४१९ | १ |
| जन्मान्धस्य | जनुषान्धस्य | ,, | ३ |
| निवर्त्तते | निर्वर्त्तते | ,, | ३ |
| ज्ञानम् | विषयज्ञानम् | ४२५ | १ |
| परिमाणित्वं | परिणामित्वं | ४२६ | १ |
| चिदु | चिद् | ४२६ | ३ |
| दृष्टप्र | दृष्टूटप्र | ,, | ५ |
| प्रत्येतव्यम् | प्रत्येतव्यं वेदितव्यम् | ४२७ | ३ |
| धर्म्मभृ | धर्म्मभू | ४२८ | २ |
| रूपप्रकाशं | रूपमप्रकाशं | ४२९ | १ |
| शब्दमाहं…सम्म तथा शब्दमहं | | | ४ |
| वेत् | ज्ञानामीत्यनुभवस्य ज्ञातृविषयकस्यानुव्यवसायात्मकत्वात् नैकक्षणे सम्भवः | ४३० | ६ |
| एकेति। स्वाभावे | एकेति। किञ्च चित्तं स्वाभासमित्युक्ते तद्द्वयाभासं स्यात् स्वाभासे | ४३० | ८ |
| अथेति। | अथेति। न हि भविष्यचित्तेनवर्त्तमानचित्तस्य साक्षाद् आभासनं युक्तं तस्मात् चित्तस्य चितान्तरदृश्यत्वे वर्त्तमानस्यैव असंख्यचित्तस्य सत्ताकल्पनीया स्यात्। | ४३१ | ४ |
| नैव संज्ञान | नैवसंज्ञानाऽसंज्ञानः | ४३२ | ३ |
| उक्तं | उत्तरं | ४३४ | २ |
| दृष्ट | दृष्ट्ट | ४३७ | १ |
| सिद्ध्येत | सिध्येत् ( एवमन्यत्र ) | ४३९ | ४ |
| परार्थः | पदार्थः | ४४० | ५ |
| विवे गज | विवे कज | ४४३ | ३–४ |
| विज्ञानत | विजानत | ४४५ | ११ |
| विज्ञानतो विवेकतो | विजानतो विवेकवतो | ४४६ | ४ |
| विमुक्तेः | विमुक्तस्य | ,, | ८ |
| भवित्व | भवत्व | ४४८ | १ |
| बुद्द्वा | बुद्ध्वा | ४४९ | १ |
| अप्रतिप्रसवानो | आ प्रतिप्रसवात् | ४५० | ३ |

* श्रीः *

## परिशिष्टम् १ ।

# तत्त्ववैशारद्याः शुद्धिपत्रम् ।

| अशु० | शु० | पृ. | पं. |
|---|---|---|---|
| शव्य | शक्य | ७ | ९ |
| षति | शति | ११ | २ |
| वेवृत्ति | वेचित्तवृत्ति | " | ४ |
| निमित्त | निर्मित | १२ | ६ |
| रलो | रजो | १४ | ६ |
| ततमो | स्तमो | " | ७ |
| शत्ति | शक्ति | १५ | ४ |
| रूयस्य | रूपस्य | १८ | ११ |
| दार्शित | दर्शित | १९ | ५ |
| र्पर्ण | र्पण | " | १० |
| क्षेषो | शेषो | २० | ४ |
| भिन | भिन | २१ | १ |
| योगो | गोगो | २३ | ५ |
| दिति | दिरिति | " | " |
| स्वरुप | स्वरूप | २४ | ३ |
| क्लिष्टाः | क्लिष्टाऽक्लिष्टाः | " | ४ |
| क्लिष्ठा | क्लिष्टा | " | ८ |
| इति । | इति । अक्लिष्टा उपायाय क्लिष्टा निरोद्धव्यास्ता अपि परेण वैराग्येणेति | " | " |
| सङ्कीर्ण | सङ्कीर्णे | २६ | १ |
| क्लिष्ठा | क्लिष्टा | " | २ |
| विर्यय | विपर्यय | २७ | १ |
| धिरण्या | धिकरण्या | २९ | ४ |
| विक्षेषः | विशेषः | ३३ | ३ |
| तदूबाधा | तदपबाधा | ३४ | ३ |
| सिद्धे; | सिद्धेः; | " | ११ |
| पा०ः | पाठः | ३७ | ९ |
| तपक्ष | तिपक्ष | ४० | ९ |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| णम्= | णम् अञ्जनम्= | ४२ | ३ |
| न्तरानन्तु | न्तरानुभूतस्याननु | " | ११ |
| यितव्पे | यितव्ये | ४४ | ४ |
| विमला | विमलता | ४५ | ३ |
| निमा | नियमा | ४६ | ४ |
| विपयेषु | विषयेषु | ४८ | ६ |
| पक्ष्यन्ते | पश्यन्ते पक्ष्यन्ते | " | ८ |
| नन्त्याञ्ज्ञे | नन्त्याज्ञे | ५१ | ४ |
| विवयं | विषयं | ५२ | ४ |
| अ ह्लादः | अ ह्लादः | " | ५ |
| शीतूल | शील | " | " |
| ह्ल द | ह्लाद | " | ६ |
| विष्ठं | विष्टं | ५४ | ३ |
| विदेहानां | विदेहानां देवानां | ५७ | ५ |
| वेत्याह | वेत्यत आह | ६० | १ |
| षाति | पाति | " | ४ |
| नय | नव | ६१ | ४ |
| शाब्दः | शाब्दः | ६३ | १ |
| द्वाऽऽर्जितः | द्वाऽऽवार्जितः | " | ३ |
| मुत्री | मुखी | " | " |
| प्रहारद्वा | प्रहा | ६५ | १ |
| धर्मा | इति धर्मा | " | २ |
| घूर्व | पूर्व | ६६ | ३ |
| प्रकृत | प्रकृति | ६७ | १ |
| रेषां | रेषा | " | ३ |
| सम्बन्थः | सम्बन्धः | ६८ | ३ |
| प्रकृष्ठ | प्रकृष्ट | " | " |
| तदुष | तदुप | ६९ | १ |
| पुनरवि | पुनर | " | ३ |
| मारोप्य | मारोप्य | " | ४ |

# शुद्धिपत्रम् ।

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| भ्रान्तो | भ्रान्तो | ,, | ,, |
| पुरुप | पुरुष | ,, | १४ |
| दार्नां | दानां | ७० | ६ |
| योविं | योर्वि | ,, | ९ |
| दृष्ठा | दृष्टा | ,, | ११ |
| निर्मुत्ति | निर्मुक्ति | ७१ | ९ |
| किश्वि | किञ्चि | ७४ | ४ |
| काश्चिद् | कश्चिद् | ,, | ५ |
| रित्यत्र | रित्यत | ७६ | १ |
| भोगाश्र | भोगवि | ७७ | २ |
| चष्ठे | चष्टे | ८० | १ |
| दार्थन | दार्थेन | ,, | २ |
| मतव | मतमव | ८१ | ८ |
| ससये | समये | ८२ | ३ |
| चष्ठ | चष्ट | ८३ | २ |
| राया, | रायाः, | ८९ | ९ |
| कोष्ठयं | कोष्ठय | ९० | ५ |
| तदुषदे | तदुपदे | ९१ | ६ |
| कस्मिद् | कस्मिन् | ,, | ८ |
| षथोपा | यथोपा | ९२ | ३ |
| नीयका | नीयैका | ९३ | २ |
| षथति | षयति | ,, | ३ |
| देयु | देषु | ,, | ४ |
| सता | सत्ता | ,, | ८ |
| कार्यं | कार्थं | ,, | १० |
| घीन | धीय | ९४ | ६ |
| कार्यं | कार्यं | ९५ | ४ |
| ततोऽस्य | ततोऽप्य | ,, | ७ |
| पूर्वोक्ते | पूर्वोक्त | ,, | १२ |
| मतयो | मनसो | ९७ | ३ |
| स्य व्युत्थि | स्यावस्थि | ,, | ४ |
| मषका | मर्षका | ९८ | ३ |
| पुटाभ्यां | पुटाभ्यां | ,, | ११ |
| विपय | विषय | ९९ | ४ |
| विषाया | विषया | १०० | २ |
| मिमतं | मिमतं | १०२ | ७ |
| षरम | परम | १०६ | १ |
| चष्ठे | चष्टे | १०७ | २ |
| भिन्नेपु | भिन्नेषु | १०९ | ७ |
| मृर्त्त | मूर्त्त | ११० | ३ |
| जवितुं | जयितुं | १११ | २ |
| तत्पूर्वो | तत्पूर्वा | ,, | ४ |
| ज्ञावा | ज्ञाथा | ,, | ७ |
| वतत् | वैतत् | ११२ | २ |
| तर्हि | तर्हि | ११३ | ६ |
| घढा | घटा | ११४ | ३ |
| तच्चत | तच्चैत | ,, | ,, |
| वयव | वयव | ११६ | ६ |
| व्यायक | व्यापक | ,, | ,, |
| स्थूलत्व | स्थूलत्व | ११७ | ३ |
| रन्य | रन्य | ,, | ५ |
| चतुस्त्रि | चतुस्त्रि | १२० | १ |
| नुमानान | नुमान | ,, | ३ |
| वासनत्व | वसानत्व | १२२ | ३ |
| पुरुषो | पुरुषो | ,, | ६ |
| लिङ्गस्य | लिङ्गस्यैव | ,, | ,, |
| दोचर | द्वाचर | १२९ | ६ |
| किञ्चिच | किञ्चि | १३२ | ४ |
| व्युप | प्युप | १३७ | ५ |
| भूंःमा | भूर्मा | १४० | ५ |
| सूत्रव | सूत्रमव | ,, | ६ |
| माचि | माधि | १४२ | ८ |
| रनुग्रह | रानुग्रह | १४३ | ४ |
| पुरु | पुरु | १४६ | ८ |
| सर्वेपु | सर्वेषु | १४७ | ५ |
| कार्य्यते | कार्य्यते | ,, | ६ |
| पष्ठम्भः | पष्टम्भः | १४९ | २ |
| स्पश | स्पर्शो | ,, | ३ |
| मद्ग | मग्द | ,, | ७ |
| अनात्म | तथा अनात्म | ,, | १० |

| अशु० | शु० | पृ० | पं० | अशु० | शु० | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| प्रवानो | प्रधानो | १५० | ५ | स्वरूषं | स्वरूपं | २०९ | ३ |
| ।हे | हि | १५१ | ४ | मुवजना | मुपजना | २१० | २ |
| दाथ | दार्थ | ” | ५ | न्यग्रीव | न्यग्रोध | ” | ३ |
| पदार्व | पदार्थ | ” | ११ | चतन्य | चैतन्य | २१४ | ७ |
| दार्ष्ठा | दार्ष्टा | १५२ | ४ | तोऽस्या | तोऽस्याः | २१५ | ४ |
| पुरुप | पुरुष | १५३ | ३ | उक्ते | उक्तं | २१६ | २ |
| काङ्कत | काङ्क्षत | १५७ | ८ | कलेश | क्लेश | ” | ७ |
| युर्मो | युभा | १६१ | ४ | योगश्व | योगश्च | २१७ | १ |
| ध्रवस्य | ध्रुवस्य | १६१ | ८ | पीणा | परिणा | २१८ | ३ |
| श्वादष्ठ | श्वादष्ट | ” | १० | कर्म | कर्म | २२० | १ |
| रम्षरा | रम्परा | १६३ | ४ | पितृणी | यितृणी | ” | ४ |
| प्यनतो | प्यनन्तो | १६५ | ३ | मप्या | मप्य | २२१ | ४ |
| उत्त | उक्त | ” | ४ | भुत्त | भुक्त | २२३ | ९ |
| ध्रुवं | ध्रुवं | १६६ | ४ | शत्तयो | शक्त्यो | ” | ११ |
| माचाद् | भावाद् | १६७ | ३ | इपि | इति | २२७ | १ |
| तत्रक | तत्रैक | १६८ | ९ | अहो | आहो | २२७ | ३ |
| त्वष्ठ | त्वष्ट | १६९ | ३ | चतुर्थी | तादर्थ्ये चतुर्थी | २२९ | १ |
| कर्मा | कर्मा | १७१ | ५ | चास्य | चास्य | ” | ४ |
| धन्मनः | जन्मनः | १७३ | ६ | दशन | दर्शन | ” | ८ |
| पुण्था | पुण्या | १७५ | २ | शत्ति | शक्ति | २३० | ४ |
| मुह्यति | मुह्यति | १७८ | २ | शत्तया | शत्तया | ” | ” |
| द्वेष्ठि | द्वेष्टि | ” | ३ | भृष्या | मृष्या | ” | ५ |
| प्रार्य | प्रार्थ | १७९ | ९ | साघा | साधा | २३२ | ३ |
| हविपा | हविषा | १८० | ४ | चतुर्त | चतुर्थ | २३३ | १ |
| ताभ्र्या | ताभ्यां | १८१ | ४ | प्नत्यक् | प्रत्यक् | ” | २ |
| संज्ञा | संज्ञा | १८६ | ७ | स्यककया | स्यैककया | ” | ३ |
| पार्य | पार्थ | ” | ८ | वचित्र्य | वैचित्र्य | ” | ” |
| ताद | तदि | १९४ | २ | प्रोत्ते | प्रोक्ते | २३४ | ८ |
| शत्ती | शक्ती | १९६ | १ | दशना | दर्शना | २३५ | ३ |
| शक्येयु | शक्येषु | ” | ५ | नुवृतेः | नुवृत्तेः | २३६ | ५ |
| काय्र्यो | कार्य्यो | ” | ९ | धिजा | धिगता | २३७ | ३ |
| ।शिष्ठं | शिष्टं | २०३ | ५ | वारणं | वावरणं | २३८ | १ |
| विष्ठं | विशिष्टं | ” | ६ | मुक्तः | मुक्तः | २४१ | ४ |
| शोपेभ्य | शेषेभ्य | २०५ | ४ | नुष्ठा | नुष्ठा | २४३ | १ |
| व्यसत | व्यसत | २०६ | ७ | वेक्षया | वक्षया | २४५ | ५ |

